अगूढगन्ध न० ब० गूढो गन्धो यस्य इव०। हिङ्गुद्रव्ये। अगुरुसौरभे द्रव्यमात्रे त्रि०।

अग्नायी स्त्री० अग्नि+ऐङ्-ङीप्। अग्नेर्योषिति स्वाहाख्यायाम्।

अग्नि पु० अङ्गति ऊर्द्ध्वं गच्छति अगि-नि नलोपः। अग्नौ स्वनामप्रसिद्धे तेजोभेदे।

अग्निक पु० अग्निवत् कायति प्रकाशते कै-क। इन्द्रगोपकीटे।

अग्निकण पु० अग्नि-कण इत०। अग्निच्युतसूक्ष्मांशे।

अग्निकारिका स्त्री अग्नि-कारिका इत०। अग्निकार्ये होमाधानादौ, अग्न्युद्दीपकौषधिभेदे च।

अग्निकार्य्य न० अग्नि-कार्य्य (कृ-ण्यत्) इत०। अग्निकार्ये होमाधानादौ।

अग्निकाष्ठ न० अग्नेः (उद्दीपनाय) काष्ठम् तादर्थ्यषष्ठ्या त०। अगुरुकाष्ठे।

अग्निकुक्कुट पु० अग्नेः कुक्कुटइव रक्तवर्णस्फुलिङ्गत्वात्। ज्वलदग्निव्याप्ततृणपुञ्जे लुडा इति ख्याते।

अग्निकोण न० अग्नेः कोणः इत०। पूर्व्वदक्षिणयोर्मध्ये दिग्भागे तस्य वह्निदैवत्यप्रसिद्धेः।

अग्निगर्भ पु० अग्निर्गर्भे यस्य ब०। सूर्य्यकान्तमणौ आगणीति प्रसिद्धे काचे च।

अग्निचयन पु० अग्निश्चीयतेऽनेन चि-ल्युट्। मन्त्रभेदे, काष्ठे च।

अग्निचित् पु० अग्निं चितवान् चि-भूतार्थे क्विप्। मन्त्रपूर्व्वकृतवह्निस्थापने अग्निहोत्रिणि।

अग्निज पु० अग्नि-जन-ड। अग्निजारवृक्षे। स्वर्णे न०। अग्निजातद्रव्ये त्रि०।

अग्निजात पु० अग्नेर्जातः जन-क्त। अग्निजारवृक्षे स्वर्णे न०। वह्निजातमात्रे त्रि०

अग्निजार पु० अग्निं जारयति जॄ-अण्। अग्निजारनामकवृक्षे

अग्निज्वाल पु० अग्निं ज्वालयति ज्वल अण् लत्वम्। अग्निजारवृक्षे। इत०। अग्निशिखायाम्।

अग्निजिह्वा स्त्री० अग्नेर्जिह्वेव। लाङ्गलीवृक्षे। इत०। अग्निजिह्वायाम्। अग्निर्जिह्वा येषां ब०। देवे

अग्निज्वाला स्त्री० अग्नेर्ज्वालेव। गजपिप्पलीवृक्षे।

अग्निदमनी स्त्री० अग्निं दमयतीति दमि-ल्यु। गणिकारीनामक्षुपभेदे।

अग्निदेवा स्त्री० अग्निर्देवो यस्याः। कृत्तिकाख्यतारायां तस्या अग्निदैवतत्वात्। अग्निदैवतमात्रे त्रि०।

अग्निनिर्य्यास पु० अग्नेर्निर्यासः (क्षीरवत् निष्यन्दः)। उपचारात् तज्जाते अग्निजारवृक्षे। स्वर्णे न०।

अग्निप्रस्तर पु० अग्निं प्रस्तृणाति स्तृ-अच् अग्नेर्वा प्रस्तरः। चकमकीति ख्यातेऽग्न्युत्पादके प्रस्तरखण्डे।

अग्निबाहु पु० अग्नेर्बाहुरिव दीर्घशिखत्वात्। धूमे।

अग्निभ न० अग्निरिव भाति भा-क। स्वर्णे। अग्निवत् प्रकाशवति त्रि०।

अग्निभू पु० अग्नेर्भवति भू-क्विप्। कार्त्तिकेये। स्वर्णे न०। अग्निजातमात्रे त्रि०।

अग्निमणि पु० अग्नेः-मणिः। अग्निसाधने आतशीति प्रसिद्धे काचे। सूर्य्यकान्ते मणौ च।

अग्निमथन पु० आनये मथ्यतेऽसौ मन्थ-ल्युट् नलोपः। गणियारीति ख्याते गणिकारीवृक्षे। तत्काष्ठयोर्घर्षणे हि झटिति वह्निरुद्दीप्यते। अग्निमन्थनमन्त्रे च।

अग्निमन्थ पु० आनये मथ्यतेऽसौ मन्थ अच्। गणिकारीवृक्षे।

अग्निमारुति पु० अग्निमारुत+इञ् ह्रस्व कल्पभेदे: अग्निवायुरूपयोर्द्वयोः पुत्रे अगस्त्यमुनौ।

अग्निमुख पु० अग्निर्मुखमिव यस्य। देवे, हुतद्रव्यं हि देवैरग्निद्वारैवाश्यते। अग्निर्मुखे यस्य तस्मिन्। विप्रे, शापरूपाग्नेस्तस्य मुखे स्थितत्वात्। अग्निर्मुखः प्रधानमुपास्यो यस्य तस्मिन् वा। विप्रे। अग्नेर्मुखे त न०।

अग्निमुखी स्त्री अग्निरिव मुखमस्य यस्याः गौरादित्वात् ङीप्। (भेला) भल्लातकवृक्षे, पाकशालायाम्, गायत्रीमन्त्रे च।

अग्निरक्षण न० अग्निः रक्ष्यतेऽनेन रक्ष-ल्युट्। रक्षणादि ओऽग्निरक्षाकारके मन्त्रभेदे, अग्निहोत्रे च।

अग्निरजस पु० अग्निरिव रज्यते दीप्यते रन्ज असु नलोपः। रक्तवर्णे इन्द्रगोपनामककीटे। अग्निवीर्य्ये, स्वर्णे च।

अग्निवल्लभ पु० अग्नेर्वल्लभः सुखेन दाह्यत्वात्। सालवृक्षे। अग्निप्रिये त्रि०।

अग्निवाह पु० अग्निं वाहयति गमयति बोधयति वा वाहिः अण्। धूमे, छागे च। वह्निवाहकमात्रे त्रि०।

अग्निवित् पु० अग्निं विन्दते विन्द-क्विप्। अग्निहोत्रिणि साग्निके।

अग्निवीज न० अग्नेर्वीजम् तद्रेतोजातत्वात् उपचारात्। स्वर्णे, वह्निरेतसि च।

अग्निवीर्य्य न० अग्नेर्वीर्य्यं, तद्वीर्य्यजातत्वादुपचारात् स्वर्णे वह्निरेतसि, तत्पराक्रमे च। ब०। अग्नितुल्यपराक्रमवति त्रि०

अग्निशिख पु० अग्निरिव शिखा यस्य। कुङ्कुमवृक्षे, कुसुम्भवृक्षे, अग्नितुल्यशिखे लाङ्गलीवृक्षे च। अग्नितुल्यजटावति त्रि०

अग्निशेखर पु० अग्निरिव शेखरमस्य यस्य। कुङ्कुमवृक्षे कुसुम्भवृक्षे लाङ्गलीवृक्षे च। अग्नितुल्याग्रवति त्रि०।

अग्निष्टोम पु० अग्नेः स्तोमः स्तु मन् षत्वम्। यागविशेषे।

अग्निष्ठ पु० अग्नौ स्थातमर्हति स्था-क षत्वम्। वह्नौ स्थितियोग्ये लौहमये कटाहादिपात्रे।

**अग्निसम्भव** पु० अग्नेः सम्भवति भू अच् । अरण्यकुसुम्भे। अग्निसम्भूतमात्रे त्रि० ।

**अग्निसहाय** पु० अग्निना सह अयते अय-अच् । वायौ, अग्निसहायधूमवद्वेगवत्त्वात् ग्रीष्मगतिलाभ वनकपोते च ।

**अग्निसार** न० अग्नौ सारो यस्य अत्यन्ताग्नावुत्तापनेऽपि सारांशादहनात् । रसाञ्जने । अग्नेर्मध्ये तु अस्त्री० ।

**अग्निष्वात्त** (ष्वात्त) पु० ब०व० अग्नितः (श्राद्धीयविप्रकरकृपाग्नेः) सुष्ठु आत्तं मधुरं येषां आ-दा-क्त पत्वमिति बहुवः । मरीचिपुत्रे पितृगणविशेषे ।

**अग्निहोत्र** पु० अग्नौ-हूयतेऽत्र हु-त्र । मन्त्रकरणकवह्निस्थापनपूर्वकहोमादौ । अग्निहोत्रसंबन्धित्वात् वह्नौ च ।

**अग्निहोत्रिन्** त्रि० अग्निहोत्र+इनि । अग्निस्थापनपूर्वके सायंप्रातरादिकाले होमकर्त्तरि साग्निके ।

**अग्नीध्** पु० अग्निरिध्यतेऽनेन अग्नि इन्ध-क्विप्। अग्निप्रज्वालनमन्त्रे ।

**अग्नीध्र** पु० अग्निरिध्यतेऽनेन कर्त्तौ अग्नि-इन्ध-रक् । अग्निरक्षणकारके ब्रह्मापरपर्याये ऋत्विग्भेदे । अग्निं धारयत्यत अग्निध्र इत्यपि ष्ट-क । अग्निकार्ये, होमादौ च ।

**अग्नीन्धन** त्रि० अग्निरिध्यतेऽनेन अग्नि-इन्ध-ल्युट् । मन्त्रभेदे । स्त्रियां टित्त्वात् ङीप् । भावे ल्युटि । अग्निकार्ये न०।

**अग्न्याधान** न० अग्नेराधानम् आ-धाञ्-ल्युट् इत०। वेदमन्त्रद्वारा वह्निस्थापने । बहु० । अग्निहोत्रयागे ।

**अग्न्यालय** पु० अग्नेरालयः अग्नि-आ-ली-अच् इत० । वेदमन्त्रद्वारा वह्निस्थापनयोग्ये स्थले, तदाधारे-कुण्डे, स्थण्डिले च ।

**अग्न्याहित** पु० अग्निराहितो येन अग्नि-आ-धाञ् कर्म्मणि क्त, वा परनिपातः । अग्निहोत्रिणि साग्निके ।

**अग्न्युत्पात** पु० अग्निना कृत उत्पातः (अग्निसूचकोपद्रव) उत्-पत-घञ् इत० । आकाशस्थाग्निकृतविकारसूचितोपद्रवे, उल्कापाताद्युपसूचके, धूमकेतुकृतविकारे च ।

**अग्न्युपस्थान** त्रि० अग्निरुपस्थीयतेऽनेन अग्नि उप-स्था ल्युट् । वह्न्युपस्थानमन्त्रे । स्त्रियां ङीप् । इत० वह्न्युपस्थाने न० ।

**अग्र** न० अङ्ग्-रक् नलोप । उपरिभागे, शेषभागे, आलम्बने, पूर्वभागे, पलपरिमाणे, समूहे च । प्रधाने, अधिके, प्रथमे च त्रि० ।

**अग्रकाय** अस्त्री० अग्रः-कायः अवयवावयविनोरभेदात् अग्रहस्तवत् कर्म० । देहपूर्वभागे ।

**अग्रग** त्रि० अग्रे गच्छतीति अग्र-गम-ड । प्रथमगामिनि । स्त्रियामग्रगा । [प्रधाने च ।

**अग्रगण्य** त्रि० अग्रे गण्यते अग्र-गण यत् ७त०। अग्रगणनीये,

**अग्रगामिन्** त्रि० अग्रे गच्छति अग्र-गम-णिनि ७त० । अग्रसरे । स्त्रियामग्रगामिनी ।

**अग्रज** पु० अग्रे जायते अग्र जन-ड । ज्येष्ठभ्रातरि । अग्रजातमात्रे त्रि० । ज्येष्ठभगिन्यां स्त्री० ।

**अग्रजङ्घा** स्त्री० अग्रा जङ्घा अवयवावयविनोरभेदात् क० स० । जङ्घाग्रभागे ।

**अग्रजन्मन्** पु० अग्रे जन्म यस्य अग्र जन् मनिन् अधि० बहु० । ज्येष्ठभ्रातरि, विप्रे च । अग्रजातमात्रे त्रि० ।

**अग्रजात** पु० अग्रे जात: अग्र-जन् क्त ७त० । ज्येष्ठभ्रातरि, विप्रे च । ज्येष्ठभगिन्यां स्त्री० । पूर्वजातमात्रे त्रि० ।

**अग्रजाति** पु० अग्रा श्रेष्ठा जातिर्यस्य,अग्र-जन-क्तिन् । विप्रे ।

**अग्रजिह्वा** स्त्री० अग्रा जिह्वा अग्रहस्तवत् क० । जिह्वाग्रभागे । [श्रेष्ठे च ।

**अग्रणी** त्रि० अग्रे नीयतेऽसौ अग्र नी क्विप् णत्वम् । प्रभौ

**अग्रतस्** अव्य० अग्रे अग्रात् वा अग्र-तसिल् । पूर्वभागे, पूर्वभागावधिके च । [अग्रगामिनि । स्त्रियां ङीप् ।

**अग्रतःसर** त्रि० अग्रतः सरति गच्छति अग्रतस् सृ-ट ७त० ।

**अग्रदानिन्** पु० अग्रे दानं यस्य अग्र-दान+इनि । प्रेतोद्देशेन यद्दानं दीयते तत्प्रतिग्राहिणि अग्रदानीति ख्याते विप्रे ।

**अग्रनख** अस्त्री० अग्रं नखं अग्रहस्तवत् क० । नखाग्रे ।

**अग्रनासिका** स्त्री० अग्रा नासिका अग्रहस्तवत् क० । नासिकाग्रभागे । [मोति ख्याते वृक्षे ।

**अग्रपर्णी** स्त्री० अग्रे पर्णं यस्याः जातित्वात् ङीप् । आलकु-

**अग्रभाग** पु० भज्यते इति भागः एकदेशः अग्रः पूर्वः भागः भज-घञ् क० । श्राद्धादौ प्रथमसङ्कल्प्य देये द्रव्ये अवयवस्य अग्रदेशे च । यथा शरस्य शल्यादम् ।

**अग्रभुक्** त्रि० अग्रे देवपित्रादिभ्योऽदत्त्वा भुङ्क्ते अग्र-भुज-क्विप् । औदरिके ।

**अग्रमांस** न० अग्रं प्रधानं भक्ष्यत्वेन मन्यते मन्-स, दीर्घः क० । हृदयस्थे पद्माकारे (कुलका) इति नामके मांसे । केचित् यकृद्ग्रमांसमेकं नामेत्याहु० । अग्रमास इति प्रसिद्धे रोगभेदे च ।

**अग्रमुख** न० अग्रं मुखं अग्रहस्तवत् क० । मुखाग्रे ।

**अग्रयान** न० अग्रे यानं यस्य या-ल्युट् संज्ञात्वेऽप्यणत्वम् । पुरोगामिनि सैन्ये । अग्रगामिमात्रे त्रि०।

**अग्रलोहिता** स्त्री॰ अग्रभागः लोहितं यस्याः ब॰। चिल्लीति प्रसिद्धे शाकभेदे।

**अग्रबीज** पु॰ अग्रं शाखाग्रं बीजमुत्पादकं यस्य। छिन्नाग्र-तस्य वट्टकलम इति प्रसिद्धे काण्डजाते कुरुण्टकादिवृक्षे

**अग्रसन्धानी** स्त्री॰ अग्रे फलोत्पत्तेः प्राक् सन्धानं कार्यस्य ज्ञानं यस्याः ङीप्। यमपञ्जिकायाम्। यत्र हि प्राणिवर्गस्य प्राग्भवीयकर्मानुसारेण शुभाशुभसूचनं सर्वं लिख्यते सा यमपञ्जिका, केचित् यमपट्टिकेति सा कथ्यते। अग्र-सन्धानकारिणि तु त्रि॰।

**अग्रसन्ध्या** स्त्री॰ अग्रं सन्ध्यायाः सर्वोऽप्येकदेशः कालवाचिना समस्यते इत्युक्तेः एक॰ष॰त॰। सन्ध्यापूर्वसमये। अग्रा पूर्वा सन्ध्या इति क॰। प्रातःसन्ध्यायाम्।

**अग्रसर** त्रि॰ अग्रे सरति गच्छति अग्र-सृ-ट ७त॰। अग्र-गामिनि। स्त्रियां ङीप्।

**अग्रह** पु॰ ग्रह (परिग्रह) न॰त॰। परिग्रहाभावे। नञ्॰। परिग्रहशून्ये वन्याश्रिमप्रस्थे त्रि॰।

**अग्रहर** पु॰ अग्रे ह्रियते दीयतेऽसौ अग्र-हृ अच्। अग्रदेये वस्तुनि, भागाग्रे च। अग्र-हृ-ट। अग्रहारिणि तु त्रि॰।

**अग्रहस्त** पु॰ अग्र हस्तः अवयवावयविनोरभेदात् क॰। हस्ताग्रे।

**अग्रहायण**ः अस्त्री॰ हय ब्रीहिकालयोरिति काले वाच्ये हा-ल्युट् युक् च भाव स्वभावं जहाति हायनो वर्ष अग्र पूर्व हायन क॰ णत्वम्। मार्गशीर्षे मासि तस्य च वर्षादित्वम् अमरकोषादौ मार्गादिमारभ्य कार्त्तिकान्त मासकीर्तनात् स्पष्टमवगतम्।

**अग्रहायणी** स्त्री॰ अग्राणि जहातीति हायनो ब्रीहि॰ अग्राः श्रेष्ठा हायना ब्रीहयो यस्यां संज्ञात्वात् णत्वं गौरादि-त्वात् ङीप्। मृगशीर्षनक्षत्रे। तस्य च नक्षत्रस्य रात्रौ प्रथमसुदयकाले श्रेष्ठव्रीहीणां धान्यानामुत्पत्तिर्लोके दृश्यते। तद्युक्तनक्षत्रसौरावयहायणे मासि रात्रौ प्रथमसुदेति।

**अग्रहार** पु॰ अग्रे ह्रियतेऽसौ हृ-घञ्। अग्रहरे (पूर्वोक्तार्थे) ब्रह्मचारिणे देये क्षेत्रादौ च। अग्र हृ अण्। अग्रहा-रिणि त्रि॰। स्त्रियां ङीप्।

**अग्राह्य** त्रि॰ न-ग्रह-ण्यत्। ग्रहणायोग्ये शिवनिर्माल्यादौ प्रतिग्रहायोग्ये तिलाद्यदानादौ च।

**अग्रिम** पु॰ अग्रे भव अग्र+डिमच्। ज्येष्ठभ्रातरि। श्रेष्ठे उत्तमे च त्रि॰। [च त्रि॰।

**अग्रिय** पु॰ अग्रे भव अग्र+घ। ज्येष्ठभ्रातरि। श्रेष्ठे उत्तमे

**अग्रीय** पु॰ अग्रे भवः अग्र+छ। ज्येष्ठभ्रातरि। श्रेष्ठे उत्तमे च त्रि॰। [गामिनि।

**अग्रेगा** त्रि॰ अग्रे गच्छति अग्र-गम-क्विप् अलुक्स॰। अग्र

**अग्रेगू** त्रि॰ अग्रे गच्छति अग्र-गम-डू+अलुक्स॰। अग्रसरे-सेवके।

**अग्रेदिधिषू** पु॰ दिधिं धैर्यं स्यति निरस्यति, दिधिषूः द्विरूढा पुनर्भूः योषित् दिधि-षो-कू-षत्वम् अग्रे प्रधाना दिधिषूर्यस्य अलुक्स॰ कप्रभावाच्छसत्वे। पुनर्भूविवाहकारिणि। निपा-तनात् अस्य ह्रस्वान्ततापीष्यते। प्रागूढकनिष्ठभगिन्याः अनूढ-ज्येष्ठभगिन्यां च। ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽ-नुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूः स्मृतेति मनूक्तेः। एतत्पक्षे च अग्रे स्वविवाहात् पूर्वं दिधिषूः ज्येष्ठाविवाहकालासहनरूपधैर्यलोपकारिणी अनुजा यस्य इति विग्रहः।

**अग्रेवण** न॰ अग्रे वनस्य ७त॰ अलुक्स॰ णत्वम्। वनाग्रदेशे

**अग्रेसर** त्रि॰ अग्रे सरति गच्छति अग्रे सृ-ट अलुक्स॰ ७त॰ अग्रगामिनि स्त्रियां ङीप्। [च त्रि॰

**अग्र्य** पु॰ अग्रे भवः अग्र+यत्। ज्येष्ठभ्रातरि। प्रधाने श्रेष्ठे

**अघ** इदित् गतौ भ्वादि॰ आत्मने॰ सक॰ सेट्। अङ्घते। आङ्घिष्ट

**अघ** पापकरणे अदन्तचुरादि॰ उभय॰। अघयति-ते।

**अघ** न॰ चुरा॰ अघ अच्। पापे, व्यसने, दुःखे च।

**अघमर्षण** त्रि॰ अघं पापं मृष्यतेऽनेन अघ-मृष ल्युट्। सर्व-पापनाशार्थे जप्ये मन्त्रादौ। स्त्रियां ङीप्।

**अघोर** पु॰ घुर-अच्। न घोरः (शान्तः) न॰त॰। महादेवे। घोरभिन्ने त्रि॰। भाद्रकृष्णचतुर्दश्यान्तु स्त्री॰।

**अघोष** पु॰ घुष-घञ् न॰ त॰। वर्णोच्चारणबाह्यप्रयत्नविशेषे। स च खया यम खय+क ×पौ विसर्गः शर एव च। एते श्वासानुप्रदाना अघोषाश्च विवृण्वते इति शिक्षोक्त दिशा खयादिवर्णानामुच्चारणप्रयत्न।

**अघ्न्य** पु॰ न हन्ति वधकर्तृत्वात् न-हन-यक् निपातनात् साधु। प्रजापतौ। न हन्यते स्त्रीहत्याया निषिद्धत्वात्। स्त्रियां गवि तु स्त्री॰।

**अङ्क** (लक) संख्याकरणे चिह्नयुक्तकरणे अदन्तचुरादि॰ उभ॰ सक॰ सेट्। अङ्कयति ते आङ्किक-त्-त। अङ्कापयति ते इति केचित्।

**अङ्क** पु॰ अङ्क-घञ्। दृश्यकाव्यविशेषे अङ्क इति प्रसिद्धे नाट-कपरिच्छेदे, पर्वते, चिह्ने, रेखायां, युद्धभूषणे, समीपे च। क्रोडे तु अस्त्री॰।

**अङ्कति** पु० अनुच-(गतौ) अति कुत्वम् । वाते । पूजनार्थत्वे कर्मणि अति । ब्रह्मणि अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्कती च ।

**अङ्कन** त्रि० अङ्क-ल्युट् । अङ्कनसाधनद्रव्ये दागनीति प्रसिद्धे स्त्रियामङ्कनी । चिह्नकरणमात्रे न० ।

**अङ्कपालि** (ली) स्त्री० पा अलि अङ्क-पालि इत० वा ङीप् । क्रोडप्रान्ते । अङ्केन पालयतीति अङ्क-पालि-इ । उपमातरि (धाइमा) इति प्रसिद्धायाम् । अङ्कस्य पालिरिव त० । आलिङ्गने च ।

**अङ्कपालिका** स्त्री० अङ्कपालि+क । धात्र्याम्, वेदिकायां, क्रोडप्रान्तभागे, आलिङ्गने च ।

**अङ्कस्** न० अनज-असुन् कुत्वम् । चिह्ने, शरीरे च ।

**अङ्कित** त्रि० अङ्क-क्त । चिह्निते, चित्रिते, लतसंख्यायाञ्च ।

**अङ्किन्** त्रि०अङ्क (आलिङ्गनस्थानत्वेन) अस्यास्ति अङ्क+इनि । अङ्केनालिङ्ग्य-मृदङ्गादिवाद्यभेदे, क्रोडविशिष्टे च । स्त्रियामङ्किनी ।

**अङ्कुर** अस्त्री० अङ्क उरच् । बीजादभिनवोत्पन्ने, मृत्तिकाद्युद्भिद्य जाते च तरुपल्लवादौ, जले च । रोमप्रसूतलघते इति साधर्म्यात् रुधिरे, लोम्नि च ।

**अङ्कुरक** पु० अङ्क्यते यत्नेन सञ्चीयतेऽसौ अनुच-घुरच् तत क । पक्ष्यादीनां वासस्थाने वासा इति ख्याते ।

**अङ्कुश** अस्त्री० अङ्क उशच् । हस्तिचालनोपयोगिनि वक्राग्रे लौहास्त्रभेदे डाङ्श इति ख्याते ।

**अङ्कुशदुर्द्धर** पु०दु खेन धार्यते व्यवस्थाप्यते दुर-धारि खल् हस्त अङ्कुश-दुर्द्धर इत० । दुर्दान्तहस्तिनि ।

**अङ्कूर** पु० अङ्क-खर्जूरादित्वात् ऊरच् । अभिनवोत्पन्ने तरुपल्लवादौ । [लौहमयेऽस्त्रभेदे ।

**अङ्कूष** अस्त्री० अङ्क ऊषच् । हस्तिचालनोपयोगिनि वक्राग्रे

**अङ्कोट** (ठ) (ल) पु० अङ्क्यते लक्ष्यते कीलकैः । अङ्क ओट (ओठ) (ओल) । पीतवर्णसारे गन्धयुक्तपुष्पे दीर्घकण्टकयुक्ते रक्तवर्णफले आकोड इति ख्याते वृक्षे ।

**अङ्कोलक** पु० अङ्कोल+क । आकोड इति ख्याते वृक्षे ।

**अङ्कोलसार** पु० अङ्कोलस्य सार इत० । अङ्कोटवृक्षजाते विषभेदे ।

**अङ्कोलिका** स्त्री० अङ्क-वल् अच् सम्प्रसारणं अङ्कोला+क । आलिङ्गनक्रियायाम् ।

**अङ्क्य** पु० अङ्के क्रोडे स्थापयित्वा वाद्यतेऽसौ अङ्के साधु अङ्क-यत् । सार्द्धतालनवयामं चतुर्दशाङ्गुलाननं । हरीतक्याकृतिर्यः स्यादङ्क्योऽङ्के स हि वाद्यते इत्युक्ते क्रोडे स्थापनपूर्वकं वादनीये मृदङ्गादौ । अङ्कनीये त्रि० ।

**अङ्ग** विहृयुक्तकरणे अदन्तचुरादि उभय० सकर्मक० सेट् । अङ्कय ति ते आञ्जिग-त त । मतान्तरे अङ्गापयति ते ।

**अङ्ग** न० अङ्ग-अच् । देहे, अवयवे, अप्रधाने, उपाये, मनसि च ।

**अङ्गग्रह** पु० अङ्ग-ग्रह इत० । देहवेदनायाम् ।

**अङ्गज** न० अङ्गात् जायते अङ्ग जन-ड । रुधिरे । पुत्रे, केशे च पु० । देहजातमात्रे त्रि० ।

**अङ्गण** (न) न०अङ्गत्यत्र अङ्ग ल्युट् पृषोदरादित्वात् वा णत्वम् । (उठान) इति प्रसिद्धे प्राङ्गणे ।

**अङ्गति** पु० अनक्ति यात्यनेन करणेन । अनज-अति कुत्वम् । वाहने । अज्यते पूज्यते कर्मणि अति । ब्रह्मणि, अग्नौ च । अग्निहोत्रिणि त्रि० । स्त्रियाम् अङ्गती च ।

**अङ्गद** न० अङ्गं द्यति शोधयति दै-क । ताड्,बाजु इति च प्रसिद्धे बाहुभूषणे । वालिपुत्रे-वानरे पु० । अङ्गदानकर्त्तरि त्रि० । दक्षिणदिग्गजकरिण्यां स्त्री० ।

**अङ्गना** स्त्री०प्रशस्तमङ्गमस्ति यस्याः अङ्ग+न । अङ्गसौष्ठववत्यां योषिति,योषिन्मात्रे, उत्तरदिग्गजकरिण्याञ्च ।

**अङ्गनाप्रिय** पु०प्री-क अङ्गना-प्रिय इत० । अशोकवृक्षे तत्पुष्पेण स्त्रिय स्वाङ्गं भूषयन्तीति । योषित्प्रियमात्रे तु त्रि० । [आलिङ्गने ।

**अङ्गपालि** स्त्री० अङ्गं पाल्यते सवध्यतेऽत्र अङ्ग-पाल-इ ।

**अङ्गपालिका** स्त्री० अङ्गं देहं पालयतीति अङ्गपालिण्वुल् । धाइमा इति ख्यातायाम् उपमातरि । अङ्गपालनकारके त्रि० ।

**अङ्गमर्द** पु० अङ्गं मर्द्दयति संवाहयति अङ्ग-मर्द-णिच् अण् । देहसंवाहके-सेवके । अङ्गमर्द्दनकारके त्रि० ।

**अङ्गमर्द्दक** पु० अङ्गं मर्द्दयति अङ्ग-मर्द-णिच् ण्वुल् । देहसंवाहके-सेवके ।

**अङ्गमर्द्दिन्** पु० अङ्गं मर्द्दयति अङ्ग-मर्द-णिच्-णिनि । अङ्गमर्दके सेवके । अङ्गमर्द्दनकारके त्रि० स्त्रियां ङीप् ।

**अङ्गरक्त** पु० अङ्गेन रक्त रञ्ज क्त इत० । कम्पिल्लदेशजातेरक्तवर्णचूर्णवति-गुडारोचनीति वणिजेषु वैद्येषु च प्रसिद्धे वृक्षभेदे । रक्ताङ्गमात्रे त्रि० ।

**अङ्गरक्षणी** स्त्री० अङ्गं रक्ष्यतेऽनया अङ्ग-रक्ष-ल्युट् ङीप् । आङ्राखा इति प्रसिद्धे वस्त्रे । अङ्गरक्षणकारके त्रि० ।

**अङ्गराग** पु० अङ्गं रज्यतेऽनेन अङ्ग रञ्ज-करणे घञ् । अङ्गलेपने कुङ्कुमादौ । भावे घञ् । अङ्गस्य विलेपने ।

**अङ्गराज्** पु० अङ्गेषु तन्नामकदेशेषु राजते राज-क्विप् ७त०। अङ्गदेशाधिपे कर्णे ।

**अङ्गव** न० अङ्गे स्वावयवे वाति अन्तर्भवति अतिशोषणात् अङ्गं चेताङ्गमिव भवति अङ्ग-वा-ड । शुष्कफले ।

**अङ्गविकृति** पु० वि-कृ-क्तिन् अङ्गस्य विकृतिश्चालनादि-र्यस्मात् ५त० । मृगीवाडा इति ख्याते अपस्माररोगे । ६त० । अङ्गस्य विकारे स्त्री० ।

**अङ्गविक्षेप** पु० वि-क्षिप-घञ् अङ्गस्य विक्षेपः चालनं यत्र ब० । अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये । ६त० । अङ्गस्य चालनमात्रे ।

**अङ्गवैकृत** न० विकृतस्य भावः विकृत+अण् अङ्गेन अङ्ग-चेष्टया वैकृतं हृदयभावो ज्ञायते यत्र ब० । आकार इति ख्यातायाम्-हृदयगतभावावेदकचेष्टायाम् । ६त० । अङ्गस्य विकारे न० ।

**अङ्गस्** पु० अनज-असुन् कुत्वञ्च । पक्षिणि उज्ज्वलदत्तः ।

**अङ्गसंस्कार** पु० अङ्गं संस्क्रियतेऽत्र अङ्ग-सम्-कृ आधारे घञ् । देहसंशोधनादिसंस्कारकारके स्नाने गोधूमचूर्णा-दिनाङ्गमर्दने च । भावे घञ् ६त० । अङ्गस्य संस्कारे विलेपनादौ । अङ्गं संस्करोति अङ्ग-सम्-कृ-कर्त्तरि-अण् । कुङ्कुमादौ त्रि० ।

**अङ्गहार** पु० अङ्गं ह्रियते चाल्यतेऽत्र अङ्ग-हृ आधारे घञ् । अङ्गुल्यादिविन्यासभेदेन त्रिंशद्विधे नृत्ये । भावे घञ् ६त० । अङ्गस्य हरणमात्रे ।

**अङ्गाङ्गिभावः** पु० अङ्गस्य अङ्गिनश्च भावः । गौणमुख्यभावे ।

**अङ्गाधिप** पु० अधि पा-क अङ्ग-अधिप ६त० । अङ्गदेशपतौ कर्णे । अत्र अङ्गाधिपतिरित्यपि ।

**अङ्गार** अस्त्री० अङ्ग-आरन् । अर्द्धदग्धे-अग्निसंक्रान्ते अग्निशून्ये वा आङार इति प्रसिद्धे-काष्ठखण्डे । मङ्गल ग्रहे पु० । रक्तवर्णे त्रि० ।

**अङ्गारक** पु० अङ्गार+स्वार्थे क । रक्तवर्णत्वात् मङ्गलग्रहे, कुरण्टकवृक्षे, भीमराज इति ख्याते-भृङ्गराजवृक्षे च । अल्पार्थे क । स्फुलिङ्ग इति विख्याते-अङ्गारक्षुद्रांशे ।

**अङ्गारक** न० तैलमङ्गारकं नाम सर्वज्वरविनाशनमिति वैद्यकपरिभाषिते तैलविशेषे ।

**अङ्गारकमणि** अस्त्री० अङ्गारकस्य मणिः ६त० । प्रवाले तस्य मङ्गलग्रहस्वामिकत्वस्य ज्योतिषे प्रसिद्धिः ।

**अङ्गारधानिका** स्त्री० अङ्गाराणि धीयन्तेऽस्याम् अङ्गार-धा-आधारे ल्युट् टित्त्वात् ङीप् ततः स्वार्थे कप् टाप् । अङ्गाराधारे (आङ्टा) इति (धुनची) इति च प्रसिद्धे पात्रभेदे ।

**अङ्गारपरिपाचित** न० अङ्गारे (अत्यग्निव्याप्तकाष्ठखण्डे) परिपाच्यते परि-पच स्वार्थे णिच् क्त । काबाब इति प्रसिद्धे-पक्वमांसादौ ।

**अङ्गारपुष्प** पु० अङ्गारमिव लोहितवर्णं पुष्पं यस्य ब० । जियापुति, इति ख्याते इङ्गुदीवृक्षे ।

**अङ्गारमञ्जरी** स्त्री० अङ्गारमिव रक्तवर्णा मञ्जरी यस्याः ब० समासान्तकबभावाद्ध्रस्वत्वे संज्ञात्वात् । रक्तवर्ण-(करमचा) इति ख्याते करञ्जवृक्षे ।

**अङ्गारवल्ली** स्त्री० अङ्गारमिव रक्तफलत्वात् रक्ता वल्ली क० । रक्तवर्णफलवत्यां-कुँच इति प्रसिद्धायाम्,-गुञ्जालतायां करञ्जवृक्षे च ।

**अङ्गारशकटी** स्त्री० शक्नोति वोढुं शकटम्, अल्पं शकटं, शकटी, गौरादिवत् अल्पार्थे ङीप् अङ्गारस्य शकटी ६त० । (आङ्टा) धुनाचीति च प्रसिद्धे अङ्गाराधारे पात्रभेदे ।

**अङ्गारि** स्त्री० अङ्गार+मत्वर्थे ठन् पृषोदरादित्वात् कलोपः । अङ्गाराधारे आङ्टा इति प्रसिद्धे पात्रविशेषे ।

**अङ्गारिका** स्त्री० अङ्गारं विद्यतेऽस्याः अङ्गार+मत्वर्थे ठन् टाप् । आङ्टा इति ख्याते अङ्गारपात्रे ।

**अङ्गारिणी** स्त्री० अङ्गार+इनि । अङ्गारधानिकायां (आङ्टा इति ख्यातेपात्रे) । अङ्गारवति त्रि० ।

**अङ्गारित** पु० अङ्गारमिवाचरतीति अङ्गार+क्विप् ततः कर्त्तरि क्त । पलाशकलिकोद्गमे । अङ्गारं करोतीत्यर्थे णिचि क्त । दग्धमात्रे त्रि० ।

**अङ्गिका** स्त्री० अङ्गम् आच्छादयति अङ्ग+इनि-कै क्विया टाप् । आङराखा इति प्रसिद्धे कञ्चुकवस्त्रे ।

**अङ्गिन्** त्रि० अङ्ग+इनि । प्रधाने, अवयवविशिष्टे, देहवति च ।

**अङ्गिरस्** पु० अङ्ग-असि इरागमः । स्वनामख्याते ऋषिभेदे ब्रह्मणोमुखजाते पुत्रे ।

**अङ्गीकार** पु० अनङ्गम् अस्वीयम् अङ्गं क्रियते अङ्ग-च्वि-कृ-घञ् । स्वीकारे अभ्युपगमे ।

**अङ्गीकृत** त्रि० अङ्ग-च्वि-कृ कर्मणि क्त । अभ्युपगते स्वीकृते ।

**अङ्गुरि (री)** स्त्री० अङ्ग-उलि-रलयोरैक्यत्व स्मरणात् रत्वम् । आङुल इति प्रसिद्धायाम् हस्तपादशाखायाम् वा ङीप् अङ्गुरीयोरगतेति रघुः ।

**अङ्गुरीय** न० अङ्गुरौ भवम् अङ्गुलि-छ । बाहुलकादित्वात् वा रत्वम् । अङ्गुलिभूषणे आङुटीति प्रसिद्धे ।

**अङ्गुरीयक** न० अङ्गुलौ भवम् अङ्गुलि-छ । बाहुलकादित्वात्

वा रत्ने स्वार्थे क । अङ्गुलिभूषणे आङ्गटीति ख्याते ।

अङ्गुल पु॰ अङ्ग-उल । हस्तपदशाखायां आंगुल इति ख्यातायाम् वात्स्यायनमुनौ अङ्गुष्ठे च । यवोदरैरङ्गुलमष्टसंख्यैरिति भास्कराचार्योक्तेः अष्टयवोदरपरिमाणे तु न॰ ।

अङ्गुलि (ली) स्त्री॰ अङ्ग-उलि । हस्तपदशाखायाम् आङ्गुल इति ख्यातायाम् । वा ङीपि अङ्गुली च । हातशुंडा इति ख्याते गजकर्णिकारवृक्षे च ।

अङ्गुलितोरण न॰ अङ्गुल्याः तोरणमिव कृतम् । चन्दनादिद्वारा कृते ललाटस्थार्द्धचन्द्राकारतिलके ।

अङ्गुलित्र न॰ अङ्गुलिं त्रायते अङ्गुलि+त्रै-क । चामाटीति प्रसिद्धे ज्याकर्षणजातखेदवारणार्थम् अङ्गुलिबद्धे चर्म्मणि बद्धगोधाङ्गुलित्र इति भट्टिः ।

अङ्गुलित्राण न॰ अङ्गुलिस्त्रायतेऽनेन त्रै-क ६त॰ । चामाटीति प्रसिद्धे ज्याकर्षणजातखेदनिवारणार्थम् अङ्गुलिबद्धे चर्म्मणि ।

अङ्गुलिमुद्रा स्त्री॰ अङ्गुल्या मुदं राति अङ्गुलि+मुद रा-क ६त॰ । धारयितुर्नामाक्षरमुद्रायुक्ते आङ्गटीति प्रसिद्धे अङ्गुलीभूषणे ।

अङ्गुलिमोटन न॰ अङ्गुल्योर्मोटनं मर्दनं यत्र ब॰। अङ्गुलिद्वयमर्दनजाते तुड़ि इति प्रसिद्धे शब्दे ।

अङ्गुलिषङ्गा स्त्री॰ अङ्गुलौ षङ्गो यस्याः यत्नम् ब॰। (याउ) इति प्रसिद्धे अङ्गुलिसंलेपकारके यवागूद्रव्ये ।

अङ्गुलिसन्देश पु॰ अङ्गुल्या अङ्गुलिध्वनिना सन्दिश्यते सं-दिश-घञ् । अङ्गुलिध्वनिद्वारा समाह्वाने, अङ्गुलिस्फोटनमात्रेऽपि ।

अङ्गुलिस्फोटन न॰ अङ्गुल्योः स्फोटनं ताडनं यत्र ब॰ । (तुड़ि) इति प्रसिद्धे अङ्गुलिद्वयमर्दनजाते शब्दे ।

अङ्गुलीपञ्चक न॰ अङ्गुलीनां पञ्चकम् पञ्चसंख्या । हस्तस्थानामङ्गुलीनां समुदाये ताश्च अङ्गुष्ठतर्ज्जनीमध्यमानामिका कनिष्ठानामिका । [प्रसिद्धे अङ्गुलिभूषणे ।

अङ्गुलीयक न॰ अङ्गुरीयकवत् वा रत्नाभावः । आंगटीति

अङ्गुलीसम्भूत पु॰ अङ्गुलौ सम्भूतः सम्-भू-क्त ७त॰ । नखे । अङ्गुलिसम्भूतमात्रे त्रि॰।

अङ्गुष्ठ पु॰ अङ्गौ पाणौ प्राधान्येन तिष्ठति अङ्ग-स्था-क अम्बाम्बेत्यादिना षत्वम् । वृद्धाङ्गुलौ । अम्बाम्बेति सूत्रेऽङ्गुशब्दप्रयोगात् अङ्गुशब्दोऽपि हस्तवाचीति ज्ञापितम् ।

अङ्गुष्ठमात्र त्रि॰ अङ्गुष्ठ+परिमाणार्थे मात्रच् । अङ्गुष्ठमध्यपर्व्वपरिमिते । अङ्गुष्ठमात्रोऽस्य शरीरेऽपि दृष्ट इति श्रुतौ ।

अङ्गूष पु॰ अङ्ग-ऊष । नकुले बाणे च ।

अङ्गूस न॰ अङ्ग-असि । बाणे ।

अङ्घि पु॰ अघि गतौ इ । चरणे वृक्षमूले च ।

अङ्घ्रि पु॰ अघि गतौ क्रि । चरणे वृक्षमूले च ।

अङ्घ्रिप पु॰ अङ्घ्रिणा मूलेन पिबति सिक्तजलादिकम् पा-क ३त॰ । वृक्षमात्रे ।

अङ्घ्रिपर्णिका स्त्री॰ अङ्घ्रौ मूले पर्ण्णमारभ्य वा पर्णमस्याः ब॰ जातित्वात् ङीप् ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति ख्याते वृक्षे । अङ्घ्रिपर्णीत्यपि नाम ।

अङ्घ्रिवल्लिका स्त्री॰ अङ्घ्रिरारभ्य वल्लीव पर्णवत्त्वेन ततः स्वार्थे के ह्रस्वे टाप् । सिंहपुच्छाकारपुष्पवति चाकुलिया, इति प्रसिद्धे वृक्षे । अङ्घ्रिवल्लीत्यपि नाम ।

अच अविस्पष्टकथने उभय॰ भ्वादि॰ सक॰ सेट् । अचति ते । आचीत् आचिष्ट ।

अच पूजने गतौ च इदित् पर॰ भ्वादि॰ सक॰ सेट् । अञ्चति आञ्चीत् आनञ्च । अञ्च्यात् गतौ तु अच्यात् ।

अच अव्यक्तकथने इदित् उभय॰ भ्वादि॰ सक॰ सेट् । अञ्चति ते । आञ्चीत् आञ्चिष्ट । [चक्षुर्भिन्ने न॰ ।

अचक्षुस् त्रि॰ नञ्-चक्षि उसि ब॰ । मन्दनेत्रे नेत्रहीने च । न॰त॰।

अचण्डी स्त्री॰ चडि कोपने अच् गौरादित्वात् ङीष् न॰ त॰ । शान्तस्वभावायां गवि । कोपनभिन्ने त्रि॰ ।

अचर न॰ न चरति चलति-चर-अच् न॰ त॰ । स्थावरे स्थितिशीले पृथिव्यादौ चराणामन्नमचरमिति मनुः । चलनशून्ये त्रि॰ ।

अचल पु॰ न चलति चल-अच् न॰त॰। पर्व्वते, गोंज इति ख्याते शङ्कौ, शिवे, ब्रह्मणि च । पृथिव्यां स्त्री॰ । चलनशून्ये त्रि॰ ।

अचलत्विष् पु॰ अचला शतधा प्रक्षालनेनापि मालिन्यानपगमात् स्थिरा त्विट् कान्तिर्यस्य ब॰ । कोकिले । स्थिरकान्तिमति त्रि॰ । कर्म्म॰। स्थिरायां कान्तौ स्त्री॰ ।

अचिन्त्य न॰ चिन्ति-कर्म्मणि यत् न॰त॰ । चिन्तयितुमियत्तया परिच्छेत्तुमशक्ये परब्रह्मणि । चिन्तयितुमशक्ये वस्तुमात्रे त्रि॰ । अचिन्त्याः खलु ये भावा इति स्मृतौ ।

अचिर न॰ चि-रक् न॰त॰ । अल्पकाले । अल्पकालस्थायिनि द्रव्यमात्रे त्रि॰ ।

अचिरद्युति स्त्री॰ अचिरा अल्पकालस्थायिनी द्युतिर्यस्याः ब॰ । विद्युति । अल्पकालस्थायिद्युतिमति त्रि॰ । कर्म्म॰। अल्पकालस्थायिन्यां कान्तौ स्त्री॰ ।

**अचिरप्रभा** स्त्री॰ प्रभा अह्न अचिरा अचिरस्थायिनी प्रभा यस्या ब॰ । विद्युति । च्युता दिव स्वाम्बुरवा चरप्रभेति भट्टि । अल्पकालस्थायिप्रभावति त्रि॰ । कर्म॰ अचिराया दीप्तौ स्त्री॰ ।

**अचिररोचिस्** स्त्री॰ अचिरं रोचिर्यस्या ब॰ । विद्युति । अचिरप्रभावति त्रि॰ । कर्म॰ । अचिरप्रभायाम् न॰ ।

**अचिरांशु** स्त्री॰ अचिरा अंशवोऽस्या ब॰ । विद्युति । अल्पकालस्थायिकिरणवति त्रि॰ । कर्म॰ । अचिरकिरणे पु॰ ।

**अचिरात्** अव्य॰ अचिर अव्ययेति क्विप् । शीघ्रे, अविलम्बे च ।

**अचिराभा** स्त्री॰ अचिरप्रभावत् । आ-भा-अङ् । विद्युति

**अचेतन** त्रि॰ चित णिच्-युच् चेतना ज्ञानम् ब॰ । चेतनाशून्ये । चित-ल्यु न॰त॰ । ज्ञानविशिष्टभिन्ने ।

**अचेतस्** त्रि॰ चित-असि ब॰ । विवेकशून्ये, दुष्टचित्ते, चित्तशून्ये च । अव्ययी॰ । चित्ताभावे अव्य॰ ।

**अचैतन्य** त्रि॰ चेतनस्य भाव चेतन+ष्यञ् ब॰ । चैतन्यरहिते, ज्ञानशून्ये च । न॰त॰ । ज्ञानभिन्ने न॰ ।

**अच्छ** अव्य॰ छो-क न॰त॰ । आभिमुख्ये ।

**अच्छ** त्रि॰ न छ्यति दृष्टिम्, न+छो क॰ । स्वच्छे निर्मले च । भल्लूके, स्फटिके च पु॰ ।

**अच्छभल्ल** पु॰ अच्छ आभिमुख्येन भल्लते गच्छति अच्छ+भल्ल-अच् । भालूके । अत भल्ल इत्यपि पृथक् नाम ।

**अच्छम्** अव्य॰ न-छो कमुन् । आभिमुख्ये ।

**अच्छिद्र** त्रि॰ छिद-रक् ब॰ । छिद्रशून्ये, अङ्गहानि छिद्रं तच्छून्ये वैदिककर्मणि च ।

**अच्छिद्रावधारण** न॰ अच्छिद्रतया साङ्गतयावधारणम् अव धारि-ल्युट् । क्रतस्य वैदिककर्मणोऽच्छिद्रतया अवधारणे क्रतैतत्कर्माच्छिद्रमस्त्वित्यभिलापरूपे ।

**अच्छोद** त्रि॰ अच्छम् उदकं यस्य उदकस्योदभाव । निर्मल जलवति तडागादौ । तन्नामकप्रसिद्धे सरसि न॰ ।

**अच्युत** पु॰ च्योतते च्युत-क न॰त॰ । विष्णौ । च्युतिशून्ये त्रि॰

**अच्युताग्रज** पु॰ अच्युतस्य कृष्णस्य अग्रे जायते अग्र+जन ड हृत॰ । बलभद्रे ।

**अच्युताङ्गज** पु॰ अच्युतस्याङ्गात् जायते अङ्ग+जन-ड । हृत॰ । कामदेवे । तदङ्गजातमात्रे त्रि॰ ।

**अच्युतात्मज** पु॰ आत्मनोऽङ्गात् जायते जन-ड हृत॰ । कामदेवे ।

**अच्युतावास** पु॰ आ-उष्यते सेव्यतेऽत्र आ वस-घञ् हृत॰ । अश्वत्थवृक्षे । अश्वत्थ सर्ववृक्षाणामित्युक्तेस्तस्य तत्रोपास्यतास्यावासत्वम् ।

**अच्युति** स्त्री॰ च्यु-क्तिन् न॰त॰ । चरणाभावे । बहु॰ । नाशशून्ये त्रि॰ ।

**अज** गतौ क्षेपणे च भ्वादि॰ पर॰ सक॰ सेट् । अजति । अवैषीत् आजीत् । अजिता वेता ।

**अज** दीप्तौ इदित् चुरादि॰ उभय॰ सेट् अक॰ । अञ्जयति ते । आञ्जिजत् त ।

**अज** पु॰ न जायते जन-ड न॰त॰ । ब्रह्मणि, विष्णौ, हरे, जीवात्मनि ईश्वरे, छागे, मेषराशौ, सूर्यवंशीयराजभेदे दशरथपितरि, आत् विष्णोर्जाते कामदेवे च । जन्मरहिते त्रि॰ । जगत्कारणे सत्त्वरजस्तमोगुणात्मके प्रधाने अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानामिति श्रुतेः । छागयाञ्च स्त्री॰ ।

**अजकर्ण** पु॰ अजस्य कर्ण इव कर्णो यस्य ब॰ । छागतुल्य लम्बायमानपत्रयुक्ते पियाशाल इति ख्याते छागकर्णे, वृक्षे सरिवपत्रे च ।

**अजकर्णक** पु॰ अजकर्ण इव कायति पत्रद्वारा प्रकाशते कै-क । पियाशाल इति ख्याते वृक्षे ।

**अजकव** अस्त्री॰ अजो विष्णु को ब्रह्मा च वाति शरत्वेनात्र वा+अधिकरणे क हृत॰ । शिवधनुषि । बाबुइ इति ख्याते वर्वरीवृक्षे पु॰ ।

**अजकाव** अस्त्री॰ अजकौ विष्णुब्रह्माणौ अवतीति अण् उप॰स॰ । शिवधनुषि ।

**अजक्षीर** न॰ अजाया क्षीरं पुंवद्भाव । छागदुग्धे ।

**अजग** पु॰ अज छागं यत्नाद्वाहनेन गच्छति गम ड हृत॰ । विष्णौ । अजेन गमनादि वह्नौ च ।

**अजगन्धा** स्त्री॰ अजस्य गन्ध इव गन्धोऽस्या । जोयानोति ख्यातायां वनयमान्याम् ।

**अजगन्धिका** स्त्री॰ अजस्य गन्ध इव गन्धो यस्या ब॰ तत स्वार्थे के टाप् । बावुइ इति प्रसिद्धे वर्वरीशाके ।

**अजगन्धिनी** स्त्री॰ अजस्य मेषस्य गन्धो येन एकदेश शृङ्गमिति यावत् तदस्या फलाकारेणास्तीति अजगन्ध+इनि ङीप् । गाडरशिङ्गा इति प्रसिद्धे अजशृङ्गीवृक्षे ।

**अजगर** पु॰ अजं छाग गिरति गिलति गृ अच् । शयुसर्पे ।

**अजगव** पु॰ अजगो विष्णु शरत्वेन त्रिपुरासुरवधकाले ऽस्यास्ति अजग+व । शिवधनुषि । [धनुषि ।

**अजगाव** पु॰ अजग विष्णुमवति अव-अण् उप॰स॰ । शिव-

**अजघन्य** त्रि॰ न जघन्य (अधम) न॰त॰ । अधमभिन्ने श्रेष्ठे च ।

**अजजीविक** त्रि॰ जीव्यतेऽनया जीवयतीति वा जीव-

मुष्-ण्वुल् वा अजएव क्रयविक्रयादिभ्यां पालनादिना वा जीविका जीवनोपायोऽस्य ब० । छागक्रयविक्रयादिना जीविकावति ।

**अजटा** स्त्री० नास्ति जटा शिफा यस्याः ब० । (भुंइआमला) इति प्रसिद्धे शिफारहिते वृक्षभेदे ।

**अजडा** स्त्री० अजडयति स्पर्शमात्रादङ्गमर्द्दनार्थं चालयति न+जड-णिच् ततः अच् । आलकुशीति प्रसिद्धे वृक्षभेदे ।

**अजथ्या** स्त्री० अजानां समूहः । अज+थ्यन् स्त्रीत्वात् टाप् । अजसमूहे । तदङ्गनानावर्णत्वात् स्वर्णयूथिकायाञ्च ।

**अजदण्डी** स्त्री० अजस्य ब्रह्मणोदण्डोऽस्याः ब० गौरा० ङीष् । ब्रह्मदण्डीवृक्षे ब्रह्मणो यज्ञार्थदण्डस्य तदीयकाष्ठेन करणात्तथात्वम् ।

**अजननि** स्त्री० न+जन-आक्रोशे अनि । आक्रुश्यमाने जन्माभावे । अर्थाभावे अव्ययी० । जनन्या अभावे अव्य० ।

**अजन्य** क्ली० लौकिकहेतुभिर्न जन्यते न+जन-णिच्-यत् । शुभाशुभसूचके दैवकृते भूकम्पादावुत्पाते । जन्यभिन्ने त्रि०

**अजप** पु० असत् जपति निन्दार्थे नञ्, जप-अच् । कुपाठके । अजं पाति रक्षति अज+पा-क । छागपालके त्रि० ।

**अजपा** स्त्री० प्रयत्नेन जपितुमशक्या अयत्नोच्चारिता जप-अच् । श्वासप्रश्वासयोः बहिर्गमनागमनाभ्याम् उच्चार्यमाणादनरूपे जपे, हंसः, सोऽहमिति वा मन्त्रभेदे च । जपशून्ये त्रि० ।

**अजपात्** (द) पु० अजस्य पाद इव पादोऽस्य वा अन्त्याकार लोपः । रुद्रभेदे तद्देवताकत्वात् पूर्व्वभाद्रपदनक्षत्रे च ।

**अजभक्ष** पु० अजैर्भक्ष्यतेऽसौ भक्ष घञ् ६त० । बाबुइ इति प्रसिद्धे बर्बरीवृक्षे तत्पत्रमजैरतिप्रीतितो भक्ष्यते ।

**अजमीढ** पु० अजो मीढ यत्र सिक्त यत्र ब० । आजमीर इति प्रसिद्धे देशे । तद्देशाधिपे राजनि अस्ति । आजमीढ युधिष्ठिरे ।

**अजमोदा** स्त्री० अजस्य मोद इव मोदो गन्धो यस्या अजं मोदयति वा । मुद-घञ् ६त० । मोदि-अन् वा । उग्रगन्धवत्यां वनयमान्याम् यमानीमात्रे च ।

**अजम्भ** पु० नास्ति जम्भो दन्तोऽस्य ब० । भेके तस्य दन्ताभावात् । दन्तशून्ये त्रि० ।

**अजय** पु० जि-अच् न०त० । धीरभूमिनगरसन्निधाने अजय इति नामके नदविशेषे च । अजेन छागेन याति-या-क ३त० । छागवाहने वह्नौ पु० । अजेये जयशून्ये त्रि० । अव्य० जयाभावे । नास्ति जयो मादकत्वेनास्याम् सिद्धि, भाङ्ग, इति च प्रसिद्धनामिकायाम् विजयायाम् स्त्री० ।

**अजय्य** त्रि० जि-शक्यार्थे यत् । जेतुमशक्ये दुर्जये शत्रौ ।

**अजरा** स्त्री० जृ-अङ् न०ब० । (घृतकुमारी) इति प्रसिद्धे वृक्षे तस्य जराभावात् । जराशून्ये त्रि० । जराभावे अजरसम् अव्य० ।

**अजर्य्य** न० न जीर्य्यति जृ-यत् न०त० । सौहार्द्दे ।

**अजलोमन्** पु० अजस्य लोमेव लोम (मञ्जरी) यस्य उपमान ब० । (शूकशिम्बी) इति ख्याते अजलोमवन्मञ्जरीविशिष्टे वृक्षभेदे ।

**अजवीथी** स्त्री० अजेन ब्रह्मणा निर्म्मिता वीथी पदं ३त० । गगनस्थितरूपे(यमनाला) इति ख्याते, छायापथे । याभारभ्य अगस्त्यस्थानपर्य्यन्तं पितृयानपथः ।

**अजशृङ्गी** स्त्री० अजस्य मेषस्य शृङ्गमिव फलमस्याः ब०। (गाड़लसिङ्गा) इति प्रसिद्धे मेषशृङ्गतुल्यफलवति वृक्षे ।

**अजस्र** न० । न-जष र । सन्तते विच्छेदरहिते । तथाभूतकालस्थायिनि वस्तुमात्रे त्रि० ।

**अजहत्स्वार्था** स्त्री० न जहत् स्वार्थोयाम् न+हा-शतृ ४ब०। स्वार्थापरित्यागेन परार्थविबोधिकायां लक्षणायाम् । यथा श्वेतो धावतीत्यादौ श्वेतगुणापरित्यागेन तद्वति लक्षणा ।

**अजहल्लिङ्ग** पु० न जहत् लिङ्गं यम् हा-शतृ ४ब० । नियतलिङ्गके विशेष्यस्यान्यलिङ्गकत्वेऽपि स्वलिङ्गायागेन विशेषणे शब्दे । तथा चान्यत्र विशेषणस्य विशेष्यानुसारिलिङ्गत्वनियमेऽपि अस्य न तथा नियमः । यथा वेदः श्रुतिर्वा प्रमाणम् ।

**अजहा** स्त्री० न जहाति शूकान् । न+हा-श । आलकुशीति ख्याते वृक्षे ।

**अजागर** पु० जागृ णिच्-अच् न जागरो यस्मात् ५ब० । सेवनेन निद्राराहित्यकारके यदभेक्षणात्यस्मिन् जागरणकर्तृत्वं नास्ति तादृशे (भीमराज) इति ख्याते भृङ्गराजे । भृङ्गराजः स्यजागर इति रभसवाक्यात् तस्य अनिद्राराहित्यकारित्वम् ।

**अजाजी** स्त्री० अजेन छागेन आजोविशेषो गन्धोत्कटत्वात् त्यागो यस्याः अज-घञ् वीभावाभावः ब० । सर्व्वभक्षेण पि छागेन गन्धोत्कटतया त्यज्यमाने, जीरा इति प्रसिद्धे जीरके वृक्षे ।

**अजाजीव** पु० अजैस्तद्दुग्धदोहादिना तत्क्रयविक्रयादिना वा आजीवति । आ-जीव-अच् ३त० । छागपालके तत्क्रयविक्रयाभ्यामाजीविनि च ।

**अजातककुद्** पु० न जातं ककुदंसकूटं यस्य अन-क्त ब० ककुदशब्दस्यान्त्याकारलोपः। अपूर्णककुदवति अल्पवयस्के गवादिवत्से।

**अजातशत्रु** पु० जातस्य जन्मवतस्य न: शत्रुः यस्मान्नृपो-जीव्यादिवत् नञोव्यवहितेन शत्रुशब्देनान्वयात् असमर्थसमासः। युधिष्ठिरे राजनि। एवमजातारिरपि तत्रैव।

**अजाति** स्त्री० जन-क्तिन् न०त०। अनुत्पत्तौ। ब०। जातिशून्ये जात्यादौ जन्मशून्ये च नित्ये त्रि०।

**अजादनी** स्त्री० अजैर्कृयादाधतेऽसौ अन्यस्य दुःखर्गलेनाजैरेवाद्यते इति या अद-कर्मणि ल्युट् ङीप्। दुरालभा इति विचिति इति च प्रसिद्धे कर्णेन दुःखदायके वृक्षभेदे।

**अजानि** पु० नास्ति जाया यस्य ब० जायाया निङादेशः। जायारहिते।

**अजानेय** पु० अजेऽपि विक्षेपेऽपि आनेयो यथास्थानं प्रापणीयो आरोही येन अज-विक्षेपे अप् वीभावाभावः आ-नी-कर्मणि यत् ततः ब०। वज्रयस्त्रप्रहारेऽपि निर्भयेन यथास्थानमारोहिणः प्रापके अश्वे, उत्तमाश्वे च।

**अजाप्रिया** स्त्री० अजानां प्रिया। कुल इति ख्याते बदरीवृक्षे।

**अजि** पु० अज-इ। तेजसि। गतिमति त्रि०। तेन पदाजिः।

**अजिन** न० अज-इनन् वीभावाभावः। चर्मणि।

**अजिनपत्रा** (त्री) (त्रिका) स्त्री० अजिनं चर्मेव सुश्लिष्टं पत्रं पक्षो यस्याः ब०। चार्मचिका इति प्रसिद्धे पक्षिभेदे (त्री) इत्यत्र गौरादित्वात् ङीष्। तत स्वार्थे के ह्रस्वे टापि पत्रिका इत्यपि।

**अजिनफला** स्त्री० अजिनं (चर्मविकारत्वात् भस्त्रा) इव फलं यस्याः अजिनपूर्वकत्वेन जातिलक्षणं ङीषं बाधित्वा टाप्। टेपारी इति प्रसिद्धे भस्त्राकारफले वृक्षभेदे।

**अजिनयोनि** स्त्री० अजिनस्य चर्मणः योनिः कारणं ६त०। हरिणमात्रे। [चत्वरे।

**अजिर** न० अज-किरन् वीभावाभावः। उठानइति ख्याते

**अजिह्म** त्रि० ह्रा-मन् हिलालोपौ ततः न०त०। सरले

**अजिह्मग** पु० अजिह्मं सरलं गच्छति गम-ड। बाणे। सरलगामिनि त्रि०।

**अजिह्व** पु० जि-वन् हुक् च जिह्वा रसना सा नास्ति यस्य ब०। भेके। जिह्वाशून्ये त्रि०।

**अजीर्ण** न० जॄ-भावे क्त न०त०। जठरानलमान्द्येन भुक्तान्नादेरपाके, रोगभेदे च। कर्त्तरि क्ते जीर्णभिन्ने त्रि०।

**अजीव** त्रि० जीव-भावे घञ् ब०। जीवनरहिते मृते शवे च।

**अजीवनि** स्त्री० न जीव्यात् नञ्+जीव-आक्रोशे अनि। धर्मिशापविषये जीवनाभावे।

**अजेय** त्रि० जेतुमशक्ये नञ्+जि-यत्। जयायोग्ये।

**अजैकपाद्(द)** पु० अजस्य छागस्य एकः पादइव पादो यस्य उपमा०ब० वा पादस्यान्त्याकारलोपः। रुद्रविशेषे, तद्देवताके पूर्व्वभाद्रपदनक्षत्रे च।

**अज्झूका** स्त्री० अर्जयति या सा अर्ज्जि-ऊक रकारस्य जत्वम्। मार्षे नटकर्म तद्विषयकथने वेश्यायाम्।

**अञ्झटा** स्त्री० अञ्चति दीर्घं गमयति अञ्च-क्विप् झटति संहन्यते झट-अच् ततः कर्म्म०। (भुंइ आमला) इति प्रसिद्धे वृक्षे।

**अज्ञ** त्रि० न जानाति नञ्+ज्ञा-क। ज्ञानशून्ये,मूर्खे, अचेतने च

**अज्ञान** न० ज्ञा-भावे ल्युट् न०त०। ज्ञानविरोधिनि ज्ञाननाश्ये (अविद्या) इति वेदान्तप्रसिद्धे जगत्कारणे, ज्ञानाभावे च। ब०। ज्ञानशून्ये त्रि०।

**अञ्चति** पु० अन्च-अति। वायौ।

**अञ्चल** पु० अन्च-अलच्। प्रान्तभागे वस्त्रप्रान्ते च।

**अञ्चित** त्रि० अन्च-क्त। पूजिते,आकुञ्चिते च। अञ्चितसव्यपादमिति भट्टिः।

**अञ्चितभ्रू** स्त्री० अञ्चिता पूजिता वक्रीकृता वा भ्रूर्यया। सुन्दरयोषिति,वक्रीकृतभ्रुवि च स्त्रियाम्। कर्म्म० (भ्रू) तथा भूतभ्रूलतायाम् स्त्री०।

**अञ्ज** (ञ्ज) मिश्रणे गतौ व्यक्तीकरणे च रुधादि० पर० सक० वेट्। अनक्ति। आञ्जीत्। अञ्जिता अङ्क्ता। वि-व्यक्तीकरणे व्यनक्ति कालनितयेऽपि योग्यतामिति भावः।

**अञ्जन** न० अञ्ज्यतेऽनेन करणे ल्युट्। कज्जले। भावे ल्युट्। मिश्रीकरणे, गमने,वालिम्पे, व्यक्तीकरणे च। कर्त्तरि ल्यु। उत्तरदिग्गोहस्तिन्या हनुमतो-मातरि च स्त्री०। णिचि युच्। गतिलक्षणाभिन्ने शक्यलक्ष्यात्यार्थबोधके शब्दव्यापारे,स्त्री०। अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनेति काव्यप्रकाशः।

**अञ्जनकेशी** स्त्री० अञ्जनमिव केशो यस्याः ५त०। केशसंस्कारके हट्टविलासिनीनामके गन्धद्रव्ये। यत्संयोगात् केशस्य कृष्णता स्यात्।

**अञ्जनाधिका** स्त्री० अञ्जनादधिका कृष्णत्वात् ५त०। (आजनाइ) इति ख्याते कीटभेदे।

**अञ्जनावती** स्त्री० अञ्जनं विद्यतेऽस्याः अधिकतत्त्ववर्णत्वात् अञ्जन+मतुप् वत्वं दीर्घश्च। ईशानकोणस्य हस्तिन्याम्।

**अञ्जनिका** स्त्री० अञ्जना स्वार्थे के टाप् कापि पूर्व्वाकारस्य

इत्वम् । (आजनाइ), इति प्रसिद्धे अञ्जनाख्ये कीटभेदे ।

**अञ्जनी** स्त्री० अज्यते चन्दनकुङ्कुमादिभिरसौ अनज-कर्मणि ल्युट् ङीप् । कुङ्कुमाद्यनुलिप्तायाम् स्त्रियाम् । करणे ल्युटि कटुकावृक्षे, कालाञ्जनवृक्षे च ।

**अञ्जलि** पु० अनज-अलि । संयुतकरपुटे, कुडवपरिमाणे च ।

**अञ्जलिका** स्त्री० अञ्जलिरिव कायति प्रकाशते अञ्जलि+कै-टाप् । बालमूषिकायाम् ।

**अञ्जलिकारिका** स्त्री० अञ्जलेः कारिका करणं कृ-भावे-र्थनिर्द्देशे ण्वुल् । अञ्जलिकरणे अञ्जलेरिवकारिका स्पर्शमात्रेण पत्रपुटस्य संपुटीकरणात् कृ-ण्वुल् इत० । लज्जालु इति ख्यातायाम् लज्जाशीललतायाम् सा हि स्पर्शमात्रात् सङ्कोचेन पत्रपुट संपुटं कुर्व्वती अञ्जलिमिव करोति । अञ्जलेः कारः करणं नित्ययोगेन अस्त्यस्याः । कृ-भावे घञ् इत० ततः नित्ययोगे मत्वर्थीयः ठन् ठस्येकः टाप् । प्रतिमायां तस्या हि यत् निर्म्माणसमये अञ्जलिकरणं तत् नित्ययोगेन तिष्ठति । अञ्जलि+कृ-कर्त्तरि ण्वुल् । विनयेनाञ्जलिकारके त्रि० ।

**अञ्जस** त्रि० अनज-असच् । सरले ।

**अञ्जसा** अव्य०अनज-भावे अच् अञ्जं गतिं विलम्बं वा स्यति सो-क्विप् । विलम्बाक्षमे शैघ्र्ये याथार्थ्ये च ।

**अट** गतौ भ्वादि० सक० पर० सेट् । अटति आटीत् ।

**अटनि** (नी) द्वि० अटति मौर्व्वीम् अट-अनि वा ङीप् । धनुरग्रे गुणारोपणस्थाने ।

**अटरूष** पु० अटति भ्रमति अट-अच् तं रोषति हिनस्ति रुष-क अटद्भिर्वा रुष्यते न युज्यते रुष-क । (वासक) इति ख्याते वृक्षे । [ङीपि दीर्घता । वने ।

**अटवि** (वी) स्त्री० अटन्ति चरन्ति वयसि यत्र अट-अवि वा

**अटाट्या** स्त्री० अट-यङ्-भावे अ स्त्रीत्वात् टाप् । परिभ्रमणे इष्टागमने च ।

**अट्ट** अतिक्रमे वधे च भ्वादि० आत्म० सक० सेट् । अट्टते । आट्टिष्ट । [आट्टिटत् त ।

**अट्ट** अनादरे चुरादि० उभय० सक० सेट् । अट्टयति ते ।

**अट्ट** पु० अट्टयति अनाद्रियतेऽन्यद्यत्र अट्ट-चु० घञ् । प्रासादस्योपरिगृहे, प्राचीरोपरिस्थसैन्यगृहे, तत्र स्थिता हि नरा अन्यान् हीनतया नाद्रियन्ते, अतिशये च । तस्मिन् सति च अन्योत्कर्षेऽनादरः ।

**अट्टट्ट** अव्य० अट्टप्रकारः अट्टस्य गुणवाचितया प्रकारे द्वित्वम् शकन्ध्वादि० पररूपम् । अत्युत्कटे हासे ।

**अट्टहास** पु० अट्टेनातिशयेन हासः हस-घञ् ३त० । उच्चहासे ।

**अट्टहासक** पु० अट्टहास इव कायते कै-क । अट्टहासेन दन्तानां बहिर्निर्गमादतिशुभ्रत्वं तद्वत् शुभ्रे कुन्दवृक्षे ।

**अट्टालक** पु० अट्ट इव प्रासादोपरिगृहमिव अलति पर्य्याप्तो भवति अल-ण्वुल् । प्रासादोपरिस्थे इष्टकादिगृहे ।

**अट्टालिका** स्त्री०अट्टाल+स्वार्थे क । इष्टकादिनिर्मिते राजगृहे

**अठ** गतौ भ्वादि० पर० सक० सेट् । अठति । आठीत् ।

**अठि** गतौ इदित् आत्म० भ्वादि० सक० सेट् । अण्ठते ।

**अड** उद्यमे भ्वादि० पर० सक० सेट् । अडति । आडीत् ।

**अड** व्याप्तौ स्वादि० पर० सक० सेट् वेदएवास्य प्रयोग । अड्णोति । आडीत् । [ अड्डति । आड्डीत् ।

**अड्ड** अभियोगे समाधाने च भ्वादि० पर० सक० सेट् ।

**अण** शब्दे भ्वादि० पर० अक० सेट् । अणति । आणीत् ।

**अण** जीवने दिवा० आत्मने० अक० सेट् । अण्यते आणिष्ट ।

**अण(न)क** त्रि०अणति यथेच्छम् नदति अण-अच् तत० कुत्सायाम् क । अधमे, निन्दिते च । दन्त्यमध्यश्चायम् ।

**अणव्य** त्रि० अण-उन् अणुत्वस्य सूक्ष्मशस्यस्य भवनं क्षेत्रम् अणु+यत् । सर्षपादिसूक्ष्मशस्योत्पत्तियोग्ये (सुनाभूमि) ख्याते क्षेत्रे

**अणि** पु०स्त्री०अणति शब्दायते अण-इन् । आरा इति ख्याते रथचक्राग्रस्थिते कीलके सूच्याद्यग्रभागे च । स्त्रीत्वे वा ङीप् । अत्वादेर्दीर्घतापीष्यते । तेन आणि' आणी ।

**अणिमन्** पु० अणोर्भावः अणु+इमनिच् । सूक्ष्मत्वे सूक्ष्मपरिमाणे, ऐश्वर्य्यभेदे च यद्वशात् सूक्ष्मीभूय सर्व्वत्र गन्तुं शक्नोति । ऐश्वर्य्याणि च । अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिता इत्युक्तानि । एतेषां स्वरूपाणि ऐश्वर्य-पदार्थनिरूपणे वक्ष्यन्ते ।

**अणीयस्** त्रि० अणु+ईयसु । अतिसूक्ष्मे अणोरणीयान् महतो महीयानिति श्रुतिः । स्त्रियाम् (सी) ।

**अणु** त्रि०अण-उन् । क्षुद्रे, सूक्ष्मपरिमाणवति,द्रव्ये,लेशे च । स्त्रियाम् अण्वी च । (चिना, काङनी, श्यामा) प्रभृति सूक्ष्मधान्ये पु० ।

**अणुक** त्रि० अणु+निपुणार्थे क । निपुणे । स्वार्थे क । सूक्ष्मे अल्पे क । क्षुद्रे ।

**अणुभा** स्त्री० अण्वी सूक्ष्मा भा दीप्तिर्यस्याः ब० । विद्युति ।

**अण्ड** न० अमन्ति संप्रयोगं यान्ति अनेन अम-ड टवर्गादित्वेऽपि डस्य नेत्त्वम् । मुष्कोऽङ्गावयवे, पक्षिडिम्बे, वीर्य्ये च ।

**अण्डज** पु० अण्डात् डिम्बात् जायते जन-ड । अण्डजाते

पक्षिणि, सर्पे, मत्स्ये, कांकडाम इति ख्याते शकलाशे च। अण्डजातमात्रे त्रि०। मृगनाभिकस्तूर्य्यान्तु स्त्री०।

**अण्डालु** पु० अण्ड+आलु। डिम्बविशिष्टे मत्स्ये।

**अण्डीर** पु० अण्डः पुंस्त्वावयवभेदः अस्यास्तीति अण्ड-ईरन्। पुरुषे, समर्थे च।

**अत** बन्धने इदित् भ्वादि० पर० सक० सेट्। अन्तति। आन्तीत्

**अत** बन्धने भ्वादि० पर० सक० सेट्। अतति। आतीत्।

**अत** प्रापणे, सातत्ये, गतौ च भ्वादि० पर० सक० सेट्। अतति। आतीत्। क्त अतितः।

**अतट** पु० तट्यते आहन्यतेऽम्भसा इति तटं जलाघातस्थानं तन्नास्ति यस्य ब०। आड़रीति प्रसिद्धे आलम्बनस्थानशून्ये, पर्व्वताद्युच्चस्थाने, भूमेरधोभागे च।

**अतल** न० अस्य भूखण्डस्य तलं पृषोदरात् इदमोऽत्वम्। सप्तपातालमध्ये प्रथमखण्डे, भूमेरधोभागे। तलशून्ये त्रि०।

**अतलस्पर्श** त्रि० न तलस्याधोभागस्य स्पर्शो यत्र ब०। अतिगभीरे।

**अतस** पु० अत-गतौ असच्। वाते। सातत्यार्थात् अत-असच्। आत्मनि। गौरादित्वात् ङीषि। तिसि, मसिना इति ख्याते अतसीवृक्षे। तत्सूत्रजाते क्षौमवस्त्रे न०।

**अति** अव्य० अत-इ। पूजायाम्, उत्कर्षे, अतिक्रमणे, अतिशये च।

**अतिकथ** त्रि० अतिक्रान्तः कथाम्। कथनायोग्ये, अश्रद्धेये, नष्टे च। [मके वृक्षे।

**अतिकन्दक** पु० अतिरिक्तः कन्दः यस्य ब०। हस्तिकन्दना-

**अतिकेशर** पु० अतिरिक्तानि केशराण्यस्य ब०। कुब्जकवृक्षे।

**अतिक्रम** पु० अति-क्रम-घञ् ह्रस्वः। उल्लङ्घने। अतिक्रान्तः क्रममिति प्रादि स०। क्रमोल्लङ्घने त्रि०।

**अतिगण्ड** पु० परिभाषया विष्कुम्भावधि षष्ठे योगे।

**अतिगन्ध** पु० अतिशयितो गन्धो यस्य ब०। चम्पकवृक्षे। अतिशयितगन्धवति त्रि०।

**अतिचरा** स्त्री० अतिक्रम्य चरति दुर्गभूमिजातत्वात् दुःप्रापत्वाच्च अति+चर-अच्। पद्मचारिणीवृक्षे उत्तरदेशभवे, तत्पर्य्याये पद्माभेतिशब्ददर्शनात् स्थलपद्मिन्यामिति केचित्

**अतिचार** पु० अतिशयेन चारः अतिक्रम्य वा चारः अति+चर-घञ्। अतिशयितगमने, ज्योतिःशास्त्रप्रसिद्धे मङ्गलादिग्रहपञ्चकस्य सूर्य्यसंपर्कविशेषात्तत्तेजोऽसहिष्णुतया वक्रशीघ्रादिगत्या स्वस्वभोग्यकालमुल्लङ्घ्य राश्यन्तरगमने, अस्य विशेषस्तु बृहदभिधाने दर्शयिष्यते।

**अतिचारिन्** पु० अति+चर-णिनि। पूर्व्वोक्तातिचारवति ग्रहे। अतिक्रम्य अतिशयेन वा गन्तृमात्रे त्रि०।

**अतिच्छत्र** पु० अतिक्रान्तश्छत्रम् प्रादि० स०। छातिया इति प्रसिद्धे तृणविशेषे, तालमाखना इति प्रसिद्धे जलतृणभेदे च। स्वार्थे क। अत्र अतिच्छत्रकोऽपीति नाम। छत्राकारपत्रपुष्पवति शुलुफा इति प्रसिद्धे शाकभेदे स्त्री०। क्षीरस्वामिमते छत्रा इत्येव नाम।. छत्रातिक्रमकारिणि त्रि०। अतिक्रमेऽव्ययी०। छत्रातिक्रमे अव्य०।

**अतिजगती** (ति) स्त्री० अतिक्रान्ता जगतीं द्वादशाक्षरपादां वृत्तिं प्रा०स०। त्रयोदशाक्षरपादके छन्दोभेदे। जगतीं भुवनमतिक्रान्तवति त्रि०। तत्र पुंसि क्लीबे च (अतिजगति)।

**अतिजव** त्रि० अतिशयितो जवोयस्य ब०। अतिवेगवति। द्रुतगामिनि च।

**अतिजागर** पु० अतिशयितो जागरो निद्राराहित्यं यस्य ब०। नीलवके पक्षिणि तस्य सर्व्वदा जागरूकत्वात्। निद्राराहित्यवति त्रि०। [पक्षिणाम् अतिदीर्घगमने।

**अतिडीन** न० अतिक्रान्तं डीनं पक्षिगतिभेदं प्रा० स०।

**अतितराम्** अव्य० अति+तर-तमः आमु। अत्यन्तातिशये।

**अतितीक्ष्ण** त्रि० अतिशयेन तीक्ष्णः कटुरसो यस्य ब०। मरीचादौ। सजना इति प्रसिद्धे शोभाञ्जने पु०।

**अतितीव्रा** स्त्री० अतिशयेन तीव्रा पाकादौ दुर्ज्जरत्वात् प्रा०स०। ग्रन्थिमत्यां गांटदूर्व्वा इति ख्यातायां दूर्व्वायाम्। अतितीव्रगुणके त्रि०।

**अतिथि** पु० अतति गच्छति न तिष्ठति अत इथिन्। अध्वयोगेन आगन्तुके गृहागते, विषये च तस्य इन्द्रियेषु संसर्गमात्रकाले एव चेतसि स्थितिर्नोत्तरकालमिति गतिरनुमीयते।

**अतिथिसपर्य्या** स्त्री० अतिथीनां सपर्य्या पूजनम् सपरधातुः कण्ड्वादिः तेन यक् ततो अङ्। प्रत्यहं गृहस्थस्य कर्त्तव्यपञ्चयज्ञमध्ये मनुष्ययज्ञेऽतिथिपूजनादौ।

**अतिदिष्ट** त्रि० अति-दिश-क्त। अतिदेशस्य कर्म्मणि। यथा प्रकृतिवत् विकृतिः कर्त्तव्येति वाक्येन प्रकृतिभूतदर्शयागादे रङ्गकार्य्याणि प्रयाजादीनि विकृतौ पश्वादियागेऽतिदिश्यन्ते। अतिदेशोनाम इतरधर्म्मस्य इतरस्मिन् प्रयोगाय प्राप्तिः इति मीमांसायां स्थितम्। [illegible] तदुपदेशवाक्यमपि तथा।

**अतिदीप्य** पु० अतिशयेन दीप्यते अति-दीप-कर्त्तरि यत्। रक्तचित्रके लालचिता इति ख्याते वृक्षे।

**अतिदेश** पु० अति-दिश-घञ् । अतिदिष्टशब्दार्थे व्याख्यात रूपेऽर्थे । अतिदिश्यतेऽनेनेति करणे घञि तत्प्रतिपादक-वाक्येऽपि ।

**अतिधन्वन्** पु० अतिरिक्तं धनुर्यस्य ब० धनुषोऽनङ् । उत्कृष्ट-धनुर्युक्ते योधे । मरुस्थलातिक्रमकारिणि त्रि० ।

**अतिधृति** स्त्री० अतिक्रान्ता धृतिम् अष्टादशाक्षरपादिका वृत्तिं प्रा० स० । ऊनविंशत्यक्षरपादके छन्दोभेदे । धृतिर्धैर्यं सन्तोषो वा तदतिक्रमकारिणि त्रि० ।

**अतिनु (नौ)** त्रि० अतिक्रान्तो नावम् प्रा० स० क्लीबे ह्रस्वः । नौकातिक्रमकारिणि । पुंसि स्त्रियां च अतिनौ ।

**अतिपतन** न० अति-पत-ल्युट् । अतिक्रमे, अत्यये च । पातातिक्रान्तरि त्रि० ।

**अतिपत्ति** स्त्री० अति-पद क्तिन् । अनिष्पत्तौ, अतिक्रमे च । पत्तिं सेनामतिक्रान्ते त्रि० ।

**अतिपन्न** त्रि० अति+पद क्त । अतिक्रान्ते ।

**अतिपथिन्** पु० अतिशयितः सुन्दरः पन्थाः प्रा०स० अतेः पूजार्थत्वात् न समासान्तः । सत्पथे ।

**अतिपातक** न० अतिक्रान्तोऽत्यन्तदुष्टत्वेनान्यत् पातकं प्रा० स० । पुंसां मातृस्नुषादुहितृगमनजन्ये स्त्रीणाञ्च पुत्रपितृ-श्वशुरगमनजन्ये पातकविशेषे । पातकमतिक्रान्तवति पुण्यशीले त्रि० ।  [ प्रातःकाले ।

**अतिप्रगे** अव्य० अति प्रगीयतेऽस्मिन् काले गै-के । अत्यन्त

**अतिप्रश्न** पु० अति+प्रच्छ नङ् । निरुत्तरप्रश्ने ।

**अतिप्रसक्ति** स्त्री० अति-प्र-सन्ज-क्तिन् । अत्यन्तासक्तौ, प्रसङ्गमतिक्रम्यान्यत्र सबन्धे अतिप्रसङ्गे च । लक्ष्ये लक्षणसंबन्धः प्रसङ्गः अलक्ष्ये तत्सम्बन्धोऽतिप्रसङ्गः । प्रसङ्गमतिक्रान्तवति त्रि० ।

**अतिप्रसङ्ग** पु० अति-प्र-सन्ज घञ् । अतिप्रसक्तिशब्दार्थे ।

**अतिबल** त्रि० अतिशयितं बलं यस्य ब० । अतिशयितबलवति । अतिशयितं बलं यस्याः ५ब० । अत्यन्तबलाधायिकायां पीतवर्णायां बेडियाला इति ख्यातायां लतायां, विश्वामित्रेण लक्ष्मणाग्रजनितः शिक्षिते रामाय दत्ते अस्त्रविद्याभेदे च स्त्री० । अतिशयितं बलम् प्रा०स० । अत्यन्ते बले, सामर्थ्ये, सैन्ये च न० ।

**अतिभूमि** स्त्री० अतिशयिता भूमिर्मर्य्यादा प्रा० स० । अतिमर्य्यादायाम्, आधिक्ये च । अतिक्रमेऽव्ययी० । मर्य्यादातिक्रमेऽव्य० । भूमिं भुवं मर्य्यादां वाऽतिक्रान्तवति त्रि० ।

**अतिमङ्गल्य** पु० अतिमङ्गलाय हितम् अतिमङ्गल+यत् । बिल्वटक्षे । अतिमङ्गल्याढ्ये अतिमङ्गलयुक्ते च त्रि० ।

**अतिमर्य्यादं** अव्य० । अतिक्रमे अव्ययी० । मर्य्यादातिक्रमे । प्रा० स० । मर्य्यादामतिक्रान्तवति त्रि० ।

**अतिमात्र** त्रि० अतिक्रान्तो मात्रामत्र प्रा० स० । अतिशयिते, मात्रातिक्रमकर्त्तरि च ।

**अतिमुक्त** त्रि० अतिशयेन मुक्तः विदेहकैवल्यं गतः अति मुच-कर्त्तरि क्त । निर्व्वाणमुक्तिमति । अतिक्रान्ता मुक्तां शौभ्रत्वात् प्रा० स० । माधवीलतायां पु० ।

**अतिमुक्तक** त्रि० अतिमुक्त-स्वार्थे क । निर्व्वाणमुक्तिमति । अतिशयितमुक्ते च । अतिशयेन मुक्तं विस्तारोऽस्य मुच-भावे क्त ब० । कप् । अतिविस्तृते तिन्दुकवृक्षे पु० ।

**अतिमोदा** स्त्री० अतिशयितो मोदो यस्याः ब० । नवमल्लिकायाम् । अत्यन्तमोदवति त्रि० ।

**अतिरथ** पु० अतिक्रान्तो रथं रथिनम् प्रा० स० । योध विशेषे " अमितान् योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः " इत्युक्तलक्षणे । रथातिक्रमकारके त्रि० ।

**अतिरसा** स्त्री० अतिशयितो रसो यस्याः ब० । रास्ना इति ख्यातायां मूर्व्वालतायाम् ।  [ यज्ञविशेषे ।

**अतिरात्र** पु० अतिक्रान्तो रात्रिम् प्रा०स० अच्-समासान्तः ।

**अतिरिक्त** त्रि० अति-रिच्-क्त । अतिशयिते, श्रेष्ठे, भिन्ने, शून्ये च । भावे क्त । अतिशये आधिक्ये न० ।

**अतिरूक्ष** त्रि० अतिशयित रूक्ष प्रा० स० । अत्यन्तरूक्षे स्नेहशून्ये । तथाभूते कङ्गुकोद्रवादिधान्ये पु० । अतिक्रान्तो रूक्षम् । अतिशयस्निग्धे त्रि० ।  [आधिक्ये च ।

**अतिरेक** पु० अति-रिच् घञ् । अतिशये, भेदे, प्राधान्ये,

**अतिरोग** पु० अतिशयितो रोगः रुज घञ् । क्षयरोगे ।

**अतिरोमश** पु० अतिशयितः रोमशः अतिरोमन्+श । वनजाते छागे । अत्यन्तरोमाढ्ये त्रि० ।

**अतिवक्तृ** त्रि० अति-वच तृच् । वावदूके, वाग्मी युक्तिदक्षे च ।

**अतिवर्णाश्रमिन्** पु० अतिक्रान्तो वर्णानाश्रमिणश्च प्रा० स० । ब्राह्मणादिवर्णभिन्ने ब्रह्मचर्य्याद्याश्रमिभिन्ने च परमाश्रमिणि "यो वेदान्तमहावाक्यश्रवणेनैव केशव । आत्मानमीश्वरं वेद सोऽतिवर्णाश्रमी भवेदित्या" द्युक्तलक्षणे ।

**अतिवर्त्तिन्** त्रि० अति-वृत-णिनि । अतिक्रमकारके ।

**अतिवर्त्तुल** पु० अतिशयित वर्त्तुल इव उव । वाटुलाकलाइ इति ख्याते वर्त्तुलाकारके कलाये । अत्यन्तवर्त्तुले त्रि० ।

**अतिवाद** पु० अति-वाद-घञ् । अत्युक्तौ, कठोरवाक्ये, अप्रियवाक्ये च ।

**अतिवादिन्** त्रि॰ सर्व्वानतीत्य वदतीति अति वद-णिनि। सर्व्वानतिक्रम्य वदनशीले, सर्व्वमतखण्डनेन स्वमतव्यवस्थापके च। [क्रान्ते च।

**अतिवाहित** त्रि॰ अति+वह-णिच्-क्त। यापिते, अति-

**अतिविकट** पु॰ अतिशयेन विकटः वि+कटच्। दुष्टहस्तिनि। अतिकराले त्रि॰।

**अतिविषा** स्त्री॰ अतिक्रान्ता विषम् प्रा॰ स॰। आटरुष इति ख्यातायां लतायाम्। विषातिक्रमकारके त्रि॰।

**अतिवृत्ति** स्त्री॰ अति-वृत-क्तिन्। अतिक्रमे। वृत्तिर्जीविका तामतिक्रान्ते त्रि॰।

**अतिवृष्टि** स्त्री॰ अति-वृष-क्तिन्। अत्यन्तवृष्टौ शस्योपघातकोपद्रवरूपे ईतिभेदे।

**अतिवेल** त्रि॰ अतिक्रान्तो वेलां मर्य्यादाम् कूलं वा प्रा॰स॰। अतिशयिते, निर्म्मर्य्यादे, समुद्रकूलातिक्रमकारके च। (अतिक्रमे अव्ययी॰। वेलातिक्रमे अव्य॰)

**अतिव्याप्ति** स्त्री॰ अतिशयेन लक्ष्यमलक्ष्यञ्चाविशिष्य व्याप्तिः व्यापनम् अति-वि-आप्-क्तिन्। अतिशयव्यापने 'लक्ष्यस्येवालक्ष्यस्यापि व्यापने'। तथाच यत्र यस्य स्थितिरुचिता ततोऽन्यत्रापि तस्य सम्बन्धे अतिव्याप्तिः। यथा पृथिव्याः गन्धो लक्षणं तत्रैव तस्य स्थितिरुचिता तस्य वाय्वादौ सत्त्वप्रसङ्गे अतिव्याप्तिः। यथा वा धूमे वह्नेर्व्याप्तिः कृता न तु जले, तस्याः जले प्रसक्तौ अतिव्याप्तिः।

**अतिशक्ति** स्त्री॰ अतिशयिता शक्तिः कर्म्मसाधनसामर्थ्यम् देहबलं धनम् वा प्रा॰स॰। अतिशयिते सामर्थ्ये, अधिकवीर्य्ये च। अतिक्रान्तः शक्तिम् प्रा॰स॰। सामर्थ्यातिक्रमकारके त्रि॰। अतिशयिता शक्तिर्यस्य ब॰ अतिशयबलवति त्रि॰। अतिक्रमेऽव्ययी॰। शक्त्यतिक्रमे अव्य॰।

**अतिशक्करी** स्त्री॰ अतिक्रान्ता शक्करीम् चतुर्द्दशाक्षरपादिकां वृत्तिम् प्रा॰स॰। पञ्चदशाक्षरपादके छन्दोभेदे।

**अतिशय** पु॰ अति-शीङ्-अच्। आधिक्ये, अतिरेके, च। अतिक्रान्तः शयं हस्तं प्रा॰ स॰। हस्तातिक्रमकारके त्रि॰।

**अतिशयित** त्रि॰ अति-शीङ्-क्त। अधिके, अतिक्रान्ते च।

**अतिशयोक्ति** स्त्री॰ अतिशयेन उक्तिः निर्द्देशः वच-क्तिन्। अर्थालङ्कारविशेषे अलङ्कारशास्त्रप्रसिद्धे। सा॰द॰परि॰

**अतिशायन** न॰ अति-शीङ् ल्युट् अतिशायने महविति सूत्रनिर्द्देशात् दीर्घः। आधिक्ये, प्रकर्षे च।

**अतिशीत** न॰ अतिशयितं शीतम् प्रा॰ स॰। अत्यन्तशीतस्पर्शे। तद्विशिष्टे त्रि॰।

**अतिशोभन** त्रि॰ अति+शुभ-ल्यु। अत्यन्तशोभान्विते, श्रेष्ठे च।

**अतिसन्ध्या** स्त्री॰ अत्यासन्ना सन्ध्या प्रा॰ स॰। पूर्व्वदिवसीयरात्रिशेषदण्डादिसूर्य्योदयपर्य्यन्तः, सूर्य्यास्तात् पूर्व्वोत्तरदण्डात्मकश्च कालः सन्ध्या तस्याः आसन्ने काले।

**अतिसर्ग** पु॰ अति+सृज-घञ्। दाने, कामचारानुज्ञायां यथेष्टं क्रियतामित्याद्यभिलापरूपायाञ्च। सर्गं सृष्टिमतिक्रान्तरि त्रि॰।

**अतिसर्ज्जन** न॰ अति+सृज-ल्युट्। दाने, बधे, विप्रलम्भे च।

**अतिसायम्** अव्य॰ अत्यासन्नं सायम् प्रा॰स॰। सूर्य्यास्तकालः सायम् तदासन्ने काले।

**अति(ती)सार** पु॰ अतिशयेन सारयति रेचयति अति+सृ-णिच् अच्। बहुद्रवीभूतमलनिःसारके उदरामये रोगे। अतेर्दीर्घतापि वा।

**अति(ती)सारकिन्** त्रि॰ अतिसारो रोगोऽस्यास्ति अतिसार+इनि कुक् च। अतिसाररोगवति। अतेर्दीर्घतापि वा।

**अतिसृष्ट** त्रि॰ अति+सृज-क्त। दत्ते, प्रेरिते।

**अतिसौरभ** पु॰ सुरभेर्भावः स्यञ् सौरभम्, अतिशयितं तदस्य ब॰। अत्यन्तामोदवति आम्रे। सौरभान्विते वस्तुमात्रे त्रि॰।

**अतीत** त्रि॰ अति+इन्-क्त। अतिक्रम्य गते, नाशप्रतियोगिनि भूते काले तत्कालवृत्तिपदार्थमात्रे च।

**अतीन्द्रिय** त्रि॰ अतिक्रान्तमिन्द्रियं तदविषयत्वात् प्रा॰स॰। इन्द्रियायोग्ये अप्रत्यक्षे, नेत्रश्रोत्रनासिकारसनात्वक्चेतांसीन्द्रियाणि तैर्ग्राह्यत्वाभावके विषये। [त्यन्ताशये च।

**अतीव** अव्य॰ अत्येव-इव अवधारणे प्रा॰स॰। अत्यन्तात-

**अतुल** त्रि॰ तुल-णिच् अ तुला सा नास्ति यस्य ब॰। उपमाशून्ये, अत्यन्तशोभाढ्ये च। तिलवृक्षे पु॰।

**अतुल्य** त्रि॰ तुलां सादृश्यमर्हति तुला+यत् न॰त॰। अनुपमे, सौन्दर्य्यातिशयशालिनि च।

**अतृप्ति** स्त्री॰ तृप क्तिन् अत्यन्ताभावार्थे न॰त॰। तृप्तिराहित्ये। ब॰। तृप्तिरहिते, असन्तोषिणि, लोलुपे, च त्रि॰।

**अतृट** बधे भ्वा॰ आत्म॰सक॰सेट्। अट्टते आट्टिट। णिचि अट्टयति ते आतिट्टत् त।

**अत्ता** स्त्री॰ अतति संबध्नाति अत-तक् इडभावः। मातरि श्वश्र्वाञ्च। स्वार्थे के कापि अत इत्त्वे। अत्तिका च।

**अत्यन्त** न॰ अतिक्रान्तोऽन्तं सीमाम् प्रा॰स॰। अतिशये। तद्युक्ते सर्व्वपरिच्छेदानि क्रान्ते त्रि॰। अतिक्रमेऽव्ययी॰। परिच्छेदातिक्रमे नाशातिक्रमे च अव्य॰।

अमेध्य न० मेध्यं पवित्रं न०त०। पुरीषे। पवित्रभिन्ने त्रि०।

अमोघ त्रि० मोघो निष्फलः न०त०। सफले, अव्यर्थे च। नद-भेदे पु०। पटोललतायां, हरितक्यां विडङ्गे च स्त्री०।

अम्ब गतौ भ्वादि० पर०सक०सेट्। अम्बति आम्बीत्।

अम्बक न० अम्बति योग्यं नक्षत्रस्थानपर्यन्तं गच्छति अम्ब-ण्वुल्। नेत्रे। अम्ब्यते स्नेहेनोपगम्यते घञ् स्वार्थे क। पितरि।

अम्बर न० अबि शब्दे घञ् अम्बं शब्दं रा त धत्ते अम्ब+रा-क। शब्दाश्रये आकाशे, मर्मरशब्दयुक्ते वस्त्रे, स्वनाम ख्याते गन्धद्रव्ये, अभ्रकधातौ च।

अम्बरि(री)ष न० अम्ब्यते पच्यतेऽत्र अम्ब-अरिष नि० वा दीर्घ०। भाजनाखोला इति ख्याते भर्ज्जनपात्रे। अम्ब रीषमपि। दीर्घयुक्तस्तु विष्णौ, शिवे, भास्करे, बालके, आम्रातकवृक्षे, नरकभेदे, अनुतापे, सूर्य्यवंश्यनृपभेदे च पु०।

अम्बष्ठ पु० अम्बाय चिकित्सकशब्दाय तत्ख्यापनार्थं तिष्ठते-ऽभिप्रैति स्था क षत्वम्। चिकित्सके, विप्रात् वैश्यकन्यायां जाते सङ्कीर्णवर्णे, देशभेदे, हस्तिपके च। यूथिकायां स्त्री० स्वार्थे के ह्रस्वे अतइत्वे अम्बष्ठिकाप्यत्रैव वामनहाटीति प्रसिद्धायां आम्रातलतायाञ्च।

अम्बष्ठकी स्त्री० अम्बष्ठं कायति आदानार्थमाह्वयति कै-क गौरा० ङीप्। (पत्राखड्) इति ख्यातायां लतायां पाठायाञ्च।

अम्बा स्त्री० अम्ब्यते स्नेहेनोपगम्यते अम्ब-कर्म्मणि घञ्। मातरि, नाट्योक्तावपि तत्रैव, अम्बष्ठलतायां, काशीराज कन्यायाञ्च।

अम्बाला स्त्री० अम्बेति शब्दं लाति धत्ते ला-क। मातरि।

अम्बालिका स्त्री० अम्बालैव स्वार्थे के ह्रस्वे अत इत्वम्। मातरि, पाण्डुराजमातरि च।

अम्बिका स्त्री० अम्बैव स्वार्थे के ह्रस्वे अत इत्वम्। मातरि, धृतराष्ट्रराजमातरि, जगदुत्पादकत्वात् दुर्गायाम्, अम्बष्ठ लतायाम् कट्फी न ख्यातायां लतायाञ्च। [स्त्री०।

अम्बु न० अबि शब्दे-उ। जले। राश्ना इति ख्यातायां लतायां

अम्बुकण्टक पु० अम्बुनि कण्टकमिव। कुम्भीरे, शृङ्गाटके च।

अम्बुकिरात पु० अम्बुनि किरात इव हिंस्रः। कुम्भीरे।

अम्बुकीश पु० अम्बुनि कीश वानर इव। शुशक इति ख्याते शिशुमारे जलजन्तुभेदे।

अम्बुचामर न० अम्बुनि चामरमिव। शैवले।

अम्बुज न० अम्बुनि जायते। पद्मे। चन्द्रे हिज्जल् इति ख्याते वृक्षे च पु०। शङ्खे पु०न०।

अम्बुद पु० अम्बु ददाति दा-क। मेघे, मुस्तके च।

अम्बुधि पु० अम्बूनि धीयन्तेऽत्र धा-आधारे कि। समुद्रे।

अम्बुवाची स्त्री० "यस्मिन् वारे सहस्रांशुर्यत्कालं मिथुनं व्रजेत्। अम्बुवाची भवेन्नित्यं पुनस्तत्कालवारयोरिति" ज्योतिषोक्ते "रजोयुक् क्ष्माम्बुवाची स्यादि"ति रू तेय सूर्य्याक्रान्तार्द्रानक्षत्रप्रथमचरणे जातरजस्कायां भूमौ।

अम्बुधिस्रवा स्त्री० अम्बु धरिव स्रवति स्रु-अच्। मत्तालवृक्षरुकायां घृतकुमार्य्याम्।

अम्बुपत्रा स्त्री० अम्बूनि पत्रे यस्याः। उच्चटावृक्षे।

अम्बुप्रसाद पु० अम्बूनि प्रसीदन्त्यनेन प्र+सद-घञ्। निर्म्मलीति प्रसिद्धे कतकवृक्षे। [च।

अम्बुभृत् पु० अम्बूनि बिभर्त्ति भृञ्-क्विप्। मेघे समुद्रे मुस्तके

अम्बुमात्रज पु० अम्बुमात्रे जलमात्रे जायते जन-ड। शामुक इति ख्याते शम्बूके। [झिन्व्यां स्त्री०।

अम्बुरुह न० अम्बुनि रोहति जायते रुह-क। पद्मे। स्थलप-

अम्बुवासिनी स्त्री० अम्बुनि जलप्रधाने वसति वस-णिनि। पाटलावृक्षे। [मुस्तके च।

अम्बुवाह पु० अम्बूनि वहति वह-अण्। मेघे, तन्नामनामके

अम्बुवाहिनी स्त्री० अम्बूनि वाहयति नौकातो बहिरपसारयति वह+णिच्-णिनि। काष्ठादिरचिते नौकाजलसेचनीपात्रे।

अम्बुवेतस पु० अम्बुजातो वेतसः शाक०त०। जलवेतसे।

अम्बुशिरीषिका स्त्री० अल्पः शिरीषः अल्पार्थे के स्त्रीत्वम्। जलशिरीषे। [इति ख्यातायां जलौकायाम्।

अम्बुसर्पिणी स्त्री० अम्बुनि सर्पति सृप-णिनि ७त०। (जोंक)

अम्बूकृत त्रि० अनम्बु अम्बु कृत अम्बु श्लेष्मात्मकाम्बु सपूत्कारात्तद्युक्तं कृत च्वि-कृ-क्त। निष्ठीवनयुक्ते वचसि।

अम्भस् न० अभि-शब्दे असुन्। जले, बालाख्यौषधौ च।

अम्भःसार न० अम्भस सार वा सत्वीति वा विसर्गः। मुक्तायाम्। षत्वे अम्भस्सारमपि।

अम्भोज न० अम्भसि जायते जन-ड ७त०। पद्मे। चन्द्रे पु०। शङ्खे पु०न०। जलजातमात्रे त्रि०। [पद्मसमूहे।

अम्भोजख(ष)ण्ड न० अम्भोजानां समूहः अम्भोज+ख(ष)ण्ड

अम्भोजयोनि पु० अम्भोजं हरिनाभिपद्मं योनिः उत्पत्तिस्थानं यस्य। विधातरि।

अम्भोजिनी स्त्री० अम्भोज+अस्त्यर्थे, अदति देशे वा इनि। पद्मसमूहे, पद्मयुक्तदेशे लतारूपे च।

अम्भोद पु० अम्भो ददाति दा क। मेघे, मुस्तके च। जलदातरि त्रि०।

श्चार॰। तथाच ज्योतिषोक्तगणितरीत्या मेषादित पश्चादेकविंशांशे मीनादीनवमांशे एवेदानीं विषुवादिसंक्रान्तिर्भवति एवं विष्णुपदादीनामपि तत्तदंश एव ग्रह प्रभासञ्चार। अयञ्चायमानुसारेण ग्रहप्रभासञ्चारस्वीकार दिनमानविशेषस्य लग्नपरिमाणस्य, छायापदविशेषस्य, च बोधार्थमिति सिद्धान्ते प्रसिद्धम्। करणे ल्युट्। उक्ताय नज्ञानसाधने शास्त्रे, "ज्योतिषामयनञ्चैवेति" सैन्यनिवेश विशेषरूपव्यूहप्रवेशमार्गे च "अयनेषु च सर्व्वेषु यथाभागमव स्थिता" इति गीता। आधारे ल्युट्। पथि, ग्रहे, आश्रये, स्थाने, "ता यदस्यायनं पूर्व्वमिति" मनु॰। प्रागुक्तराशि चक्रस्य अंशरूपे गतिस्थानविशेषे च "तत्काले सायनार्क स्येति" नीलकण्ठ॰।

**अयनसंक्रान्ति** स्त्री॰ अयनेन राशिचक्रस्य पश्चात्, प्राग्वा-गत्या छता संक्रान्तिर्ग्रहाणां प्रभापुञ्जस्य सञ्चार सम्+क्रम-क्तिन्। चलसंक्रान्तौ, मेषादिभिर्द्वादशस्य स्थानेषु विभक्तस्य राशिचक्रस्य प्राक् पश्चाद्वा दोलायमानतया निर्द्दिष्टमेषादिस्थानात् पश्चात् पूर्व्वं वा ग्रहप्रभापुञ्जसंचार आक्रान्तराशिं विहाय राश्यन्तरे गमनं चलसंक्रान्ति अनियतस्थानतया चलत्वात्। निर्द्दिष्टराशिस्थानेषु ग्रहाणां मण्डलसञ्चारः अचलसंक्रान्ति राशिसंक्रान्तिरिति चोच्यते नियतमेकस्थाने एव जायमानत्वादचलत्वम्। अनयैव संक्रान्त्या यथा मासादिव्यवहारे न दोष चलसंक्रान्त्या तु बहवो दोषास्तथा ग्रहदभिधाने वक्ष्यते।

**अयस्** न॰ इण-असुन्। लौहे, तद्धि स्थावरमप्ययस्कान्तसान्निध्यात् चलति।

**अयस्कान्त** पु॰ अयसा मध्ये कान्त रमणीय कस्कादित्वात् सत्वम्। कान्तिलौह इति ख्याते लौहभेदे। ६त॰। तत्सन्निधिमात्रेण लौहाकर्षके चुम्बक इति ख्याते प्रस्तरभेदे च।

**अयस्कार** पु॰ अयस्-कृ-अण् उप॰स॰। लौहकारे।

**अयाचित** न॰ याच-क्त न॰त॰। अमृताख्यवृत्तौ "अमृतं स्यादयाचित"मिति मनु। अप्रार्थिते त्रि॰।

**अयि** अव्य॰ इण-इन्। प्रश्ने, अनुनये, संबोधने, अनुरागे च

**अयुक्छद** पु॰ अयुज विषम छदा यस्य। इत्तौ संख्या-या चौप्पार्धत्वम् (छातिम) इतिख्याते सप्तपर्णवृक्षे।

**अयुक्त** त्रि॰ न+युज-क्त। विषयासक्ततया कर्म्मयोगरहिते, अनुचिते, आपद्गते च।

**अयुग्म** न॰ न युग्मात्मकम्। विजोड़ इति ख्याते विषमे।

**अयुग्मच्छद** पु॰ अयुग्मानि सप्त सप्त छदा यस्य। सप्तपर्णवृक्षे

तस्य हि प्रत्येकपल्लवे सप्त सप्त पर्णानि विद्यन्ते।

**अयुत** त्रि॰ यु-क्त न॰त॰। असंयुक्ते। दशसहस्रसंख्यायां न॰।

**अये** अव्य॰ इण-एच्। कोपे, विषादे, संभ्रमे, स्मृतौ, सबुद्धौ च

**अयोग** पु॰ युज-घञ् न॰त॰। योगाभावे, कुयोगे, वियोगे च। न॰ब॰। विधुरे, कूटे, कठिनोद्यमे च।

**अयोगव** पु॰ अय इव कठिना गौर्वाणी यस्य नि॰ अच्। शूद्रात् वैश्याया जाते प्रतिलोमजे सङ्कीर्णवर्णे।

**अयोगवाह** पु॰ अक्षरसमाम्नायसूत्रेषु अइउण् इत्यादिषु चतुर्दशसु नास्ति योग पाठादिरूपःसंबन्धो येषां ते तथापि वाहयन्ति सत्वणत्वादिकार्य्यादिकं निष्पादयन्ति वाहि अच् कर्म्म॰। अनुस्वारविसर्गादिषु, "अनुस्वारो विसर्गश्च+क प्पौ चैव पराश्रितौ। अयोगवाहाविज्ञेया इति शिक्षाकृदुपदिष्टेषु।

**अयोगुड** पु॰ गुड गोलाकार अयसा निर्म्मितोगुडः। गोलीति ख्याते लौहगुटिकायाम्। [इत्वात्।

**अयोऽग्र** न॰ अयोऽग्रे मुखे यस्य। मुषले तस्य मुखे लौहव-

**अयोघन** पु॰ अयांसि हन्यन्तेऽनेन हन-अप् घनादेशश्च नि॰। हातुडीति ख्याते लौहमुद्गरे।

**अयोध्या** स्त्री॰ युध ण्यत् न॰त॰। सरयूतीरे स्वनामख्यातायां नगर्य्याम्। योधनानर्हे त्रि॰।

**अयोनिज** पु॰ योनौ उपचारात् मातरि न जायते। परमेश्वरे। सीतायां स्त्री॰। [मले।

**अयोमल** न॰ अयसो मलइव। लौहगुंध इति ख्याते लौह-

**अर** न॰ ऋ-अच्। चक्रस्य नाभिनेम्योर्मध्यस्थे काष्ठे, शीघ्रे च शीघ्रतादिगुणवति त्रि॰। स्वार्थे के। शैवाले। पर्पटे मापडीति ख्याते पु॰।

**अरघट्ट(क)** पु॰ अरं शीघ्रं घट्टते चाल्यतेऽसौ। महाकूपे, तदुपरिनिबद्धजलोत्तोलनकाष्ठे च। स्वार्थे क। तत्रैव

**अरजस्** त्रि॰ रञ्ज असुन् नलोप न॰त॰। रजोगुणकार्य्य-

मर्म्मपीडके, हृदयग्रन्थिरूपमर्म्मस्थानस्पर्शकारके च ।
अरुन्धती स्त्री० अरुन्धती । वशिष्ठपत्न्याम् ।
अरुष्क पु० अरुर्मर्म्मस्थानं कायति पीडयति कै-क । स्पर्शमात्रेण
व्रणकारके भल्लातकवृक्षे ।
अरुष्कर पु० अरुर्व्रणं करोति अरुस्+कृ+अच् । भल्ला-
तकवृक्षे । व्रणकारिणि त्रि० ।
अरुस् पु० ऋ-उसि । अर्के, रक्तखदिरे च । मर्म्मणि न० ।
व्रणे, क्षते च पु० न० ।
अरूढा स्त्री० न किञ्चिन्मूलमाश्रित्य रोहति आकाश एव
रोहति । रुह+क । भूम्यामलक्याम् ।
अरे अव्य० ऋ-ए । रोषाह्वाने, नीचसम्बोधने, असूयायाञ्च ।
अरेऽरे अव्य० अरे+वीप्सायां द्विरुक्तिः । नीचसंबोधनादौ ।
अरोक त्रि रुच-दीप्तौ घञ् रोकश्छिद्रं दीप्तिश्च । न०ब० ।
छिद्रशून्ये दीप्तिशून्ये च । [र्कत् त ।
अर्क तापे, स्तुतौ च चुरा०उभ०सक०सेट् । अर्कयति ते आर्चि-
अर्क पु० अर्च-कर्म्मणि घञ् कुत्वम् । सूर्य्ये, इन्द्रे, ताम्रे,
स्फटिके, विष्णौ, पण्डिते, आकन्द इति ख्याते वृक्षे,
आरक इति ख्याते क्वाथविशेषे च ।
अर्ककान्ता पु० अर्कोऽर्ककिरणः कान्तोऽनुकूलो यस्याः कम-
क्त । हुड्हुडिया इति ख्याते वृक्षे । ६त० । सूर्य्यप्रियायाम्
अर्कचन्दन पु० अर्कस्य प्रियचन्दनं शाक०त० । रक्तचन्दने ।
अर्कतनय पु० ६त० । सुग्रीवे, कर्णे, यमे, शनौ, वैवस्वतमनौ
च । यमुनायां स्त्री० । द्विवचनान्त । अश्विनीकुमारयोः पु० ।
अर्कपत्र पु० अर्कं सूर्य्यइव तीक्ष्णं पत्रं यस्य । अर्कवृक्षे ।
अर्कपर्णोऽप्यत्र । ६त० । अर्कवृक्षस्य पत्रे न० ।
अर्कपादप पु० अर्क अर्कवृक्षइव तीक्ष्णः पादपः । निम्बे ।
अर्कपुष्पी स्त्री० अर्कस्यार्कवृक्षस्य पुष्पमिव पुष्पमस्याः ।
कुटुम्बिनीवृक्षे । [सूर्य्यप्रियायां, छायायाञ्च ।
अर्कप्रिया स्त्री० अर्कं प्रीणाति प्री-क० । जवायाम् । ६त० ।
अर्कबन्धु पु० अर्कस्य बन्धुरिव । गौतमे सूर्य्यवंश्ये बौद्धे ।
अर्कभक्ता स्त्री० अर्कस्य भक्ता तत्किरणसंपर्क एव तस्याः
सौन्दर्य्यम् हुड्हुडिया इति ख्यातायां लतायाम् ।
अर्कमूला पु० अर्कस्य सर्पाणां दुष्प्रसह्यं मूलं यस्याः । इशेरमूल
इति ख्यातायां लतायाम् ।
अर्कवल्लभ पु० अर्कस्य वल्लभः समानवर्णपुष्पत्वात् । रक्तपुष्प
त्वेन अर्कप्रियपुष्पे बन्धूकवृक्षे ।
अर्कव्रत पु० अर्कस्याराधनार्थं व्रतम् । माघशुक्लसप्तम्यादौ
कर्त्तव्ये अर्काराधनार्थे व्रते । अर्कस्येव व्रतं नियम

"सहस्रगुणमुत्स्रष्टुमादत्ते हि रसान् रवि"रित्युक्ते यथा
रविणा लोकहितार्थं रसस्य ग्रहणमेवं प्रजापालनार्थमेव
राज्ञा प्रजाभ्यो यत्करस्य ग्रहणं तादृशे "अष्टौ मासान्
यथादित्यस्तोयं हरति रश्मिभिः । तथा हरेत् करं
राष्ट्रान्नित्यमर्कव्रतं हि तदिति" मनूक्ते व्रते च ।
अर्काश्मन् पु० अर्कस्य अनुगतः, अश्मा । सूर्य्यकान्तमणौ, स
हि सूर्य्यरश्मिसंपर्कादुज्ज्वलति ततस्तस्यार्कसम्बन्धित्वम् ।
अर्कोपल पु० अर्कस्यानुगत उपलः । सूर्य्यकान्तमणौ ।
अर्गल स्त्री० न० अर्ज-कलच् कुत्वम् । कपाटमध्यस्थे रोधके
काष्ठादिदण्डे, सप्तशतीस्तोत्रस्यादौ पाठ्ये स्तोत्रविशेषे च
"अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् । जपेत् सप्त-
शतीं चण्डीमित्युक्ते । कल्लोले, कपाटे च न० । क्षुद्रार्गले स्त्री०
गौरा० ङीष् अर्गली, स्वार्थे के, अर्गलिकाप्यत्रार्थे ।
अर्घ मूल्ये भ्वादि० पर० सक० सेट् । अर्घति आर्घीत् ।
अर्घ पु० अर्घ-घञ् । क्रेयवस्तुनो ग्रहणार्थं तत्स्वरूपे देये
रजतादिद्रव्यरूपे मूल्ये । सामगैरयं सवकार ह्रस्वान्तस्य
प्रयोक्तव्य । अर्ह-करणे घञ् न्यङ्क्वादित्वात् कुत्वम् ।
पूजोपचारे दूर्वाक्षतादौ ।
अर्घ्य अर्घ+देयार्थे यत् । अर्घार्थे दीयमाने जलादौ । अर्घदान
योग्ये मन्त्ये त्रि० । [आर्चिष्ट ।
अर्च पूजायाम् उभ०भ्वादि० सक०सेट् । अर्चति ते आर्चीत्
अर्च पूजायां चुरा० उभ० सक० सेट् । अर्चयति ते आर्चिचत् त
अर्चा स्त्री० अर्च-आधारे अङ् । प्रतिमायाम् । भावेऽङ् पूजायाम्
अर्चि स्त्री० अर्च इन् । वह्न्यादिशिखायाम् । [ त्रि० ।
अर्चिष्मत् पु० अर्चिर्विद्यतेऽस्य मतुप् । सूर्य्ये, वह्नौ च । दीप्ते
अर्चिस् न० पु० अर्च-इसि । वह्न्यादेः शिखायां, मयूखे च ।
अर्ज अर्ज्जने भ्वादि० पर०सक०सेट् । अर्जति, आर्जीत् ।
अर्ज्ज संस्कारे चुरा०उभ०सक०सेट् । अर्ज्जयति ते आर्जिजत् त ।
अर्ज्जक पु० अर्ज्जयति रज्जुम् अर्ज्ज-ण्वुल् । वावुइ इति ख्याते
वृक्षे, तत्त्वक्तन्तुना हि रज्जुर्निर्म्मीयते । अर्ज्जनकर्त्तरि त्रि०
अर्ज्जन न० अर्ज्ज ल्युट् । स्वामित्वसम्पादके व्यापारभेदे
सम्पादने च ।
अर्ज्जुन पु० अर्ज्ज-उनन् । स्वनामख्याते वृक्षे, मध्यमपाण्डवे,
हैहयाधिपे कार्त्तवीर्य्ये, करवीरे, मयूरे, धवले च । शुभ्र
तद्गुणवति त्रि० । आर्जुनि इति ख्याते नेत्ररोगे न० ।
अर्ज्जुनी स्त्री० गौरा० ङीष् । उषायां, बाहुदायां नद्यां,
स्त्रियां गवि, कुट्टन्याञ्च ।
अर्ज्जुनोपम पु० अर्ज्जुनः स्वनामख्यातः वृक्ष उपमा यस्य ।

**अर्द्धयाम** पु० अर्द्धं यामस्य । अष्टधा विभक्तस्य दिनस्य रात्रेर्वा अष्टमे भागे यत्र वारवेलाकालवेलाव्यवहारः ।

**अर्द्धरथ** पु० अर्द्धं रथस्य रथनामकयोधविशेषस्य । निकृष्टयोधे

**अर्द्धरात्र** पु० अर्द्धं रात्रेः । द्वितीयप्रहरशेषदण्डे निशीथे ।

**अर्द्धवीक्षण** न० अर्द्धमसम्पूर्णं वीक्षणम् वि+ईक्ष-ल्युट् । कटाक्षदर्शने । [इति ख्याते मत्स्यभेदे ।

**अर्द्धशफर** पु० अर्द्धं भक्षतशफराद्दीनं शफरः । टाङ्का

**अर्द्धासन** न० अर्द्धमासनं यत्र । स्नेहव्यञ्जके सम्मानभेदे । अर्द्धमसनं क्षेपो यत्र । निन्दायाम् ।

**अर्द्धोदय** पु० माघमासीयामातिथिनक्षत्रवारविशेषयुक्ते "माघे मासि सिते पक्षे अमा स्यादर्कसंयुता । नक्षत्रे श्रवणे देवि ! व्यतीपातो यदा भवेत् । अर्द्धोदयः सविज्ञेय" इत्युक्ते योगे ।

**अर्द्धोरुक** न० अर्द्धमूरोः अर्द्धोरु तत्र कायते काश ड । ऊर्द्धोरधरपर्य्यन्ताङ्गाच्छादने वस्त्रे उत्तमस्त्रीणामर्द्धोरुपर्य्यन्ते चोलकाकारे परिधेयवस्त्रे च ।

**अर्पण** न० ऋ णिच्-पुक् ल्युट् । निक्षेपे,स्वत्वत्यागे च । करणे ल्युटि । मन्त्रादौ । जुहूप्रभृतौ स्त्री० । सम्प्रदाने ल्युटि । देवादिषु । अधिकरणे ल्युटि । त्यागाधिकरणे वह्न्यादौ । कर्मणि ल्युटि । हविरादौ त्याज्यद्रव्ये ।

**अर्पिस** पु० ऋ-णिच् पुक् च इसन् । हृदये,अग्रमांसे च ।

**अर्व्व** (र्ब) हिंसने, भ्वादि० पर०सक० सेट् । अर्वति आर्वीत् ।

**अर्व्वु(र्बु)द** न० अर्व्व (र्ब) क्विप् तस्मै उदेति अर्व्व(र्ब)+उद्+इण-ड । आब् इति ख्याते मांसपिण्डाकारे रोगभेदे, दशकोटिसंख्यायां तत्संख्यातेषु च । पर्व्वतभेदे पु० ।

**अर्भ** पु० ऋ-भ । बालके । [च ।

**अर्भक** पु० अर्भ एव स्वार्थे क । बालके, मूर्खे,कृशे,अल्पे,सदृशे

**अर्य्य** त्रि० ऋ-यत् । स्वामिनि । वैश्ये पु० । स्त्रियां टाप् । अर्य्या वैश्यजातिस्त्रियां स्वामिन्याञ्च । वैश्यपत्न्यान्तु ङीष् । अर्य्यी । वैश्यजातीयायां स्त्रियाम् आनुक् ङीष् च । अर्य्याणीत्यपि ।

**अर्य्यमन्** पु० अर्य्यं श्रेष्ठं मिमीते मा कनिन् । सूर्य्ये तद्देवताके उत्तरफल्गुनीनक्षत्रे अर्कद्रुमे पितॄणां राजनि च ।

**अर्व्वन्** पु० ऋ वनिप् । घोटके इन्द्रे, गोकर्णपरिमाणे च । स्त्रियामर्व्वती वडवायां कुट्टिन्यामपि ।

**अर्व्वाक्** अव्य० अवरे काले देशे वा अञ्चति अनुप क्विन् । पृषो० अर्वादेशः । पश्चात्काले मध्यगते । विपर्य्यस्ते च अर्व्वाक्+असि तस्य लुक् । अवरकालादौ मध्ये च त्रि० तद्भवे अर्व्वाक्तन इत्यादि ।

**अर्व्वाचीन** त्रि० अर्व्वाक्काले पश्चात्काले भव ख । पश्चाद्भवे

**अर्शस्** न० ऋ-असुन् शुक् च । वलिकाकारे गुह्यस्थरोगभेदे वा पृषो० सलोपे । अर्शमप्यत्र ।

**अर्शस** त्रि० अर्शस्+अस्त्यर्थे अच् । वलिकाकारकगुह्यव्याधियुक्ते

**अर्शोघ्न** पु० अर्शांसि हन्ति हन ट । (ओल) शूरणे भल्लातके च ।

**अर्शोघ्नी** स्त्री० अर्शस् हन ठ टित्त्वात् ङीप् उप०स० । ताल मूल्याम् भल्लातक्याञ्च । [भल्लातके ।

**अर्शोऽहित** पु० अर्शसोऽहितः सेवनेन तन्नाशकत्वात् । इत०।

**अर्ह** पूजने, योग्यत्वे च भ्वादि०पर०सक० सेट् । अर्हति, आर्हीत् आनर्ह । [शक्ते च । योग्ये त्रि० ।

**अर्ह** पु० अर्ह कर्मणि घञ् । पूजाप्रशंसादिभिराराध्ये ईश्वरे,

**अर्हण** पु० अर्ह-ल्यु । बुद्धभेदे । भावे ल्युट् । पूजने न० । करणे ल्युटि । पूजोपकरणे पुष्पादौ उपायने च न० ।

**अर्हणा** स्त्री० अर्ह-युच् । पूजायां, योग्यतायाञ्च ।

**अर्हत्** पु० अर्ह कर्मणि शतृ । बुद्धभेदे । पूज्ये त्रि० ।

**अर्हन्त** पु० अर्ह झच् । बुद्धभेदे ।

**अर्हा** स्त्री० अर्ह-अङ् । पूजायाम् ।

**अल** भूषणे वारणे, पर्य्याप्तौ च भ्वा० उभ०सक० पर्य्याप्तौ अक० सेट् । अलति ते आलीत् आलिष्ट ।

**अलक** पु० अलति भूषयति मुखम् अल-क्वुन् । ललाटस्थे छिन्नाग्रे कुटिलकेशे, अङ्गलिप्तकुङ्कुमे च । क्षिपकादित्वात् कापि नेत्त्वम् । कुवेरपुर्य्याम् अष्टमेऽब्दप्रविष्टदशमवर्षपर्य्यन्तवयस्कायां कन्यायाञ्च स्त्री० ।

**अलकनन्दा** स्त्री० अलति पर्य्याप्नोति क्वुन् अलका नन्दयतीति अच् नन्दा कर्म०। गङ्गायाम् । अलकैः नन्दति अच् । कन्यायाम् । सा हि अलकैस्तुष्यति [(पियासाल) पीतसालवृक्षे ।

**अलकप्रिय** पु० अलकान् प्रीणाति चक्रणीकरोति प्री-क ।

**अलकाधिप** पु० अलकाया अधिपः इत० । कुवेरे ।

**अलक्त** पु० न रक्तोऽस्मात् ५ब० रस्य लत्वम् । लाक्षारसे, स्वार्थे के । अलक्तकोऽप्यत्र तद्धेतौ लाक्षायाञ्च ।

**अलक्षण** त्रि० नास्ति लक्षणमनुमापकं सुचिह्नं वा यस्य । अननुमेये,सुचिह्नशून्ये च । न०त० । दुर्लक्षणे न०ब० । तद्वति त्रि० ।

**अलक्षित** त्रि० लक्ष-क्त न०त० । अज्ञाते,लक्षणेनाननुमिते च ।

**अलक्ष्मी** स्त्री० विरोधार्थे नञा त० । लक्ष्मीविरुद्धायां निर्ऋतौ आलक्ष्मीति ख्यातायाम् ।

**अलगर्द** पु० लगति स्पृशति क्विप् लग् अर्द्दयति अर्द्द-अच् लग् स्पृशन् सन् अर्द्दः न भवति । विषशून्ये जलसर्पे पृषो० अलम् अर्द्धयति वा अर्द्ध-अण् वा । अलगर्द्दोऽप्यत्र ।

**अलङ्करण** न० अलम्-कृ-भावे ल्युट् । भूषायाम् । करणे ल्युटि । वलयादौ भूषणे ।

**अलङ्करिष्णु** त्रि०अलम् कृ-इष्णुच् । भूषके मण्डनकरणशीले

**अलङ्कर्मीण** त्रि० अलं समर्थः कर्मणे ख । कर्मक्षमे ।

**अलङ्कार** पु० अलम्+कृ-घञ् । भूषायाम् । करणे घञि हारादौ भूषणे, साहित्यविषयदोषगुणप्रतिपादके ग्रन्थे, शब्दभूषणे-अनुप्रासादौ, शब्दार्थभूषणे-उपमादौ च ।

**अलङ्क्रिया** स्त्री० अलम्+कृ-श । भूषायाम् ।

**अलम्** अव्य० अल+अम् । भूषणे, पर्याप्तौ, निवारणे, निषेधे निरर्थे, शक्तौ,अल्पार्थे, अवधारणे च । [योधसमर्थे ।

**अलम्पुरुषीण** त्रि० अलं समर्थः प्रतिपुरुषाय । प्रतिमल्लादि-

**अलम्बुष** पु० अलं पुष्णाति पुष-क पृषो० मस्य वत्वम् । प्रहस्ते, • दमने,राक्षसभेदे च । मज्जालुकायां स्वर्वेश्यायाञ्च स्त्री० ।

**अलवाल** न०लवमालाति ला-क न०त० । वृक्षसेकार्थं वृक्षमूले मृदादिकृते जलाधारे वेष्टने स्वार्थेऽपि । आलवालमपि ।

**अलस** त्रि० न लसति व्याप्रियते लस अच् । अवश्यकर्त्तव्येषु शरीरापाटवमभिनीय कृतप्रवासे, क्रियामन्दे च । पाद-रोगभेदे, वृक्षभेदे च पु० । हंसपदीलतायां स्त्री० ।

**अलसक** पु० अलसं करोति कृ-ड । उदरामयरोगभेदे ।

**अलात** पु० न० । ला-क्त न०त० । कोयाला इति ख्याते ,आङ्गार इति ख्याते च अर्द्धदग्धकाष्ठे ।

**अलाबू** स्त्री० न लम्बते न+लबि-ऊ णित् नलोपश्च वृद्धिः । (लाउ), तुम्ब्याम् । वा ह्रस्वः । अलाबुरप्यत्र ।

**अलि** पु० अलति दंशे, कूजिते, शब्दिते, वा समर्थो भवति अल-इन् । भ्रमरे,वृश्चिके, काके, कोकिले, सुरायाञ्च ।

**अलिक** न० अल्यते भूष्यते अल-कर्म्मणि इकन् । ललाटे ।

**अलिङ्ग** त्रि० नास्ति लिङ्गमनुमापकचिह्नादि यस्य । कार्य्यादि रूपलिङ्गरहिते अननुमेये ।

**अलिञ्जर** पु० अलममलिः अल-इन् तं जरयति जृ-अच् पृषो० मुम् । (जाला) इति ख्याते वृहत्ये जलाधारे पात्रभेदे मणिके । [वृश्चिके, भ्रमरे च ।

**अलिन्** पु० अलं पर्य्याप्तः अर्थात् गतिर्विद्यतेऽस्य अल+इनि ।

**अलिन्द** पु० अल्यते भूष्यते अल कर्म्मणि किन्दच् । द्वारपको-ष्ठाद्बहिर्द्वारदेशस्थितप्रकोष्ठे, द्वारबहिर्भागे च ।

**अलिपत्रिका** स्त्री० अलेर्वृश्चिक इव पत्रमस्याः ब० कपि अत इत्वम् । वृश्चिकपत्राख्यलतायाम् । वृश्चिपर्ण्याम् ।

**अलिप्रिय** न० अलीनां प्रियमधिकमादकत्वात् । रक्तोत्-पले । पाटलावृक्षे स्त्री० । अलिवल्लभाप्यत्र ।

**अलिमोदा** स्त्री० अलीन् मोदयति मुद-णिच्-अच् । (गणि-यारी), गणिकारीवृक्षे ।

**अलीक** न० अल-ईकन् । अप्रिये, ललाटे, स्वर्गे च । अलति गच्छत्यधोऽनेन । असत्ये । मिथ्याकथने हि नरकपातः ।

**अलौकिक** त्रि० लोके विदितः ठक् न०त० । लौकिकप्रत्यक्षा-गम्ये, लोकातीते, चमत्कारिणि च ।

**अल्प** त्रि० अल-प । क्षुद्रे,ईषदर्थे, सूक्ष्मे, गर्ह्ये च । स्वार्थे के । अल्पकमप्यत्र । यवासे पु० । [त्रि० ।

**अल्पगन्ध** न० अल्पो गन्धोऽस्य । रक्तकैरवे । स्वल्पगन्धयुक्ते ।

**अल्पतनु** त्रि० अल्पा क्षुद्रपरिमाणा तनुः शरीरं यस्य । खर्व्वे, दुर्बले, स्वल्पास्थियुक्ते च ।

**अल्पप्रमाणक** पु० अल्पं प्रमाणमस्य ब० कप् । (तरमुज) (तरमुज) वा इति ख्याते वृक्षे । अल्पप्रमाणयुक्ते त्रि० ।

**अल्पमारिष** पु० अल्प मारिष० शाकः कर्म्म० । (नटिया) इति ख्याते शाके । [प्रमाणे सरसि ।

**अल्पसरस्** न० अल्पं सरः कर्म्म० । डोबा इति ख्याते अल्प

**अल्पायुस्** पु० अल्पमायुः जीवनकालो यस्य । छागे तस्य पशु-तया तस्यैवाल्पायुष्कत्वात् । अल्पायुष्कमत्ये त्रि० ।

**अल्पिका** स्त्री० अल्पैव स्वार्थे के अत इत्वम् । महापश्याम् ।

**अल्पिष्ठ** त्रि० अतिशयेनाल्पः अल्प+इष्ठ । क्षुद्रतरे ।

**अल्पीयस्** त्रि० अल्प+ईयसु । अत्यन्ताल्पे । स्त्रियां ङीप् ।

**अल्ला** स्त्री० अल्पते इत्यल् क्विप् अले भूषायै अल्लाति शक्नोति अल्+ला क । मातरि । अलतीति अल् पर्य्याप्तः लाति सर्वान्तिः आदत्ते जानाति वा । अव्यक्तायां सर्वभक्षिकायां परमात्मदेवतायाम् सा च अथर्ववेदे अल्ला-द्युपनिषदि प्रसिद्धा ।

**अव** रक्षणे, गतौ, स्पृहायां, तृप्तौ, शोभायां श्रवणे, व्याप्तौ, आलिङ्गने, याचने, प्रवेशे, समायां, इच्छौ, आहणे, वधे, सामर्थ्ये, अवगमे, करणे, इच्छोत्पादने च यथायथं सक० अक० च भ्वादि० सेट् पर० । अवति आवीत् ।

**अव** अव्य० अव-अप् । निश्चये, व्याप्तौ अनादरे, अल्पार्थे, आलम्बने, शुद्धौ, परिभवे, नियोगे, विस्तृतायां च ।

**अवकर** पु० अवकीर्य्यते संमार्ज्जन्यादिभिः अव-कॄ-अप् । सम्मार्ज्जन्यादिभिः क्षिप्ते धूल्यादौ ।

**अवकाश** पु० अव+काश-घञ् । अवस्थितियोग्यताकल्पके काले, देशे च । तत्र कालिकोऽवकाशः क्रियान्तराव्यवस्थितियो-ग्यताकल्पकः समयः अवसर इत्युच्यते, "इन्द्रावकाशे रवि-मंशुम" इति भट्टिः । इच्छान्तरावस्थितियोग्यताकल्पकः

दैशिक स चावकाश इत्येव "अवकाशं किलोदन्वानिति" रघु

**अवकीर्ण** त्रि॰ अव-कॄ कर्म्मणि क्त । चूर्णिते, ध्वस्ते च ।

**अवकीर्णिन्** त्रि॰ अवकीर्णं ध्वस्तं व्रतमस्यस्य इनि । चतव्रते ।

**अवकृष्ट** त्रि॰अव+कृष क्त । दूरोत्सृते,अपसारिते,वहिष्कारिते च

**अवकेशिन्** त्रि॰ अवच्युतं क सुखं यस्मात् ५ब॰अवकं शून्यतां फलशून्यतामीशितु शीलमस्य अवक+ईश-णिनि । अफले वृक्षे । अवसन्ना केशा विद्यन्ते अस्य इनि । अल्पकेशयुक्ते ।

**अवक्रय** पु॰ अवक्रीयते प्रतिरूपदानेन स्वाधीनं क्रियतेऽनेन अव+क्री-अच् । ग्राह्यस्य प्रतिरूपत्वेन देये मूल्ये, भाटके च

**अवक्षुत** त्रि॰ अव-क्षु-क्त । उपरि क्षतच्युते । [भर्त्सने च न॰ ।

**अवक्षेप** पु॰अव+क्षिप-घञ् । निन्दायाम् । ल्युटि अवक्षेपणमप्यत्र

**अवगणित** त्रि॰ अव+गण-क्त । तिरस्कृते, अवज्ञाते च ।

**अवगण्ड** पु॰ अव+गम-ड डकारस्य नेत्वम् । गण्डस्थव्रणे ।

**अवगत** त्रि॰ अव+गम-क्त । निम्नगते, ज्ञाते च ।

**अवगाढ** त्रि॰ अव+गाह-क्त । निविडे अन्तःप्रविष्टे,निमग्ने च

**अवगाह** पु॰अव+गाह-घञ् । स्नाने,अन्तःप्रवेशे च । आधारे घञ् । स्नानस्थाने । वा अल्लोपे वगाहोऽप्यत्र । ल्युटि अवगाहनमप्यत्र । [च ।

**अवगीत** त्रि॰ अव+गै-क्त । निर्व्वादे जनापवादे,दुष्टे, गर्हिते

**अवगुण** पु॰ अव+गुण-क । दोषे ।

**अवगुण्ठन** न॰ अव+गुण्ठ-ल्युट् । योषितां शिर प्रावरण क्रियायाम् । करणे ल्युटि । मुखाच्छादने वस्त्रे ।

**अवगुण्ठिका** स्त्री॰ अव+गुण्ठ-ण्वुल् स्त्रीत्वात् टापि अत इत्वम् । स्त्रीणां मुखावरणशाट्याम्, जवनिकायाञ्च ।

**अवगुण्ठित** त्रि॰ अव+गुण्ठ क्त । कृतावगुण्ठने, चूर्णिते च

**अवग्रह्य** न॰अव+ग्रह-क्यप् । व्याकरणे सिद्धे प्रगृह्यसंज्ञके पदे

**अवगोरण** न॰ अव+गुर-उद्यमे ल्युट् । वधायास्त्राद्युद्यमे ।

**अवग्र(ग्रा)ह** पु॰ अव+ग्रह-अप् घञ् वा । वृष्टिजलप्रतिबन्धे ।

**अवग्रहण** न॰ अव+ग्रह-ल्युट् । प्रतिरोधे ।

**अवघट्ट** पु॰अव+घट्ट-अच् । गर्त्ते, (जाता) घरट्टे च । [च ।

**अवघात** पु॰ अव+हन-घञ् । अवहनने,तण्डुलादेर्वितुषीकरणे

**अवचय** पु॰अव+चि अच् । पुष्पफलाद्यादाने । [वस्त्रे ।

**अवचूड(ल)** पु॰अवनता चूडाग्रं यस्य वा डोल । ध्वजाधोवद्धे

**अवचूर्णित** त्रि॰ अव+चूर्ण-क्त । पिष्टे,क्षिप्ते, चूर्णीकृते च ।

**अवचूलक** अवनता चूडा यस्य डस्य लत्वम् स्वार्थे कन् । चामरे । [अवच्छेदकतानिरूपके च ।

**अवच्छिन्न** त्रि॰ अव+छिद-क्त । खण्डिते, विशिष्टे,न्यायमते

**अवच्छुरित** न॰ अव+छुर-क्त । अट्टहासे । मिश्रिते त्रि॰ ।

**अवच्छेद** पु॰ अव+छिद घञ् । विरामे,परिच्छेदे एकदेशे च ।

**अवच्छेदक** त्रि॰अव+छिद-ण्वुल् । एकदेशे,व्यावर्त्तकविशेषणे च

**अवच्छा** स्त्री॰ अव+छा अङ् । अनादरे ।

**अवट** पु॰अव-अटन् । गर्त्ते, कूपे,ऐन्द्रजालिकजीविकावति च ।

**अवटि** स्त्री॰अव-अटि । गर्त्ते, कूपे च । वा ङीप् अवटीत्यपि ।

**अवटीट** त्रि॰ अवनता नासिका प्रा॰स॰ । नतार्थे नासाया टीटादेश अर्शआदित्वादच् । (खादा) नतनासिके जने ।

**अवटु** पु॰ अव+टीक-डु । गर्त्ते, वृक्षभेदे,कूपे च । ग्रीवापश्चाद्भागे, ग्रीवाया उन्नतभागे च स्त्री॰ । [गतिभेदे

**अवडीन** न॰ अव+डी-ल्युट् । अवरोहणरूपे पक्षिणां

**अवतंस** पु॰न॰ अव+तंस-घञ् । कर्णपूरे, शिरोभूषाभेदे च ।

**अवतमस** न॰अवकृष्टं हीनं तम प्रा॰स॰ अच् । अल्पान्धकारे ।

**अवतार** पु॰ अव+तॄ करणे घञ् । तीर्थे, (पुष्करिण्यादे सोपानपद्धतौ) । भावे घञ् । अवरोहणे, देवानामंशावेश वशेन प्रादुर्भावे च ।

**अवतारण** न॰ अव+तॄ-णिच्-ल्युट् । भूतादीनामावेशनेन प्रादुर्भावने, अवरोपणे, ग्रन्थप्रस्तावने च । अवतारणाप्यत्र ।

**अवतोका** स्त्री॰ अवपतितं तोकमस्याः । स्रवद्गर्भायां स्त्रियाम्

**अवदंश** पु॰अव+दन्श-घञ् । भर्जिते चर्व्वणद्रव्ये, (मद्यपानोत्साहादिकारके चर्व्वणद्रव्ये) । [मनोज्ञे च त्रि॰ ।

**अवदात** पु॰ अव दै-क्त । शुभ्रे, पीते च वर्णे । तद्वति,विशुद्धे

**अवदान** न॰ अव+दो ल्युट् । खण्डने, पराक्रमे, अतिक्रमे, शुद्धिकरणे,वीरणमूले च । [ण्वुल् । भेदनकर्त्तरि त्रि॰ ।

**अवदारक** पु॰अवदारयति दृ णिच्-ण्वुल् । (खोनता) खनित्रे

**अवदारण** न॰ अव+दृ-णिच् करणे ल्युट् । खनित्रे ।

**अवदाह** न॰ अव+दह्यते दह कर्म्मणि घञ् । वीरणमूले ।

**अवद्य** त्रि॰ वद यत् न॰त॰ । अधमे,पापिनि, निन्द्ये, कथना योग्ये च । [विषयान्तरतो मनोनिवर्त्तने ।

**अवधान** न॰ अव+धा-ल्युट् । मनोयोगविशेषे, यद्वशात्

**अवधारण** न॰ अव+धृ-णिच्-ल्युट् । इयत्तापरिच्छेदे, अयमेवेति विषयपरिच्छेदके निश्चये च । [त्रिके ।

**अवधि** पु॰ अव+धा कि । सीमायां,काले च । आधारे कि ।

**अवधीर** अवज्ञायाम् अद॰चुरा॰ उभय॰सक॰सेट् । अवधीरयति ते आववधीरत् त । मतान्तरे अवादधीरत् त ।

**अवधूत** त्रि॰ अव+धू-क्त । अभिभूते निर्भर्त्सिते, चालिते, अनादृते च । "यो विलङ्घ्याश्रमान् वर्णान् आत्मन्येव स्थित पुमान् । अतिवर्णाश्रमी योगी अवधूत स उच्यते" इत्युक्तलक्षणे वर्णाश्रमधर्मत्यागिनि सन्न्यासिनि पु॰ ।

**अवध्वंस** पु० अव+ध्वंस-घञ् । परित्यागे, चूर्णिते, निन्दायाञ्च
**अवन** न० अव-ल्युट् । प्रीणने, रक्षणे, प्रीतौ च ।
**अवनत** त्रि० अव+नम-क्त । अधोभूते, आनते च ।
**अवनति** स्त्री० अव+नम-क्तिन् । औद्धत्याभावे, विनये, अधो-
नमने च । [वाद्ये न० ।
**अवनद्ध** त्रि० अव+नह-क्त । खचिते, रोपिते च । मृदङ्गादि-
**अवनय** पु० अव+नी-अच् । अधोनयने ।
**अवनाट** त्रि० अवनता नासिका प्रा०स० नतार्थे नासिकाया ना-
टादेशः अर्श आद्यच् (खांदा) अवनतनासिके जने ।
**अवनि** (नी) स्त्री० अव-अनि । भूमौ । वा ङीप् अवनीत्यपि ।
**अवनेजन** न० अव+निज-ल्युट् । प्रक्षालने, श्राद्धे पिण्ड-
प्रदानार्थमास्तृतकुशस्याभिषेचने च ।
**अवन्ति** (न्ती) पु०स्त्री० अव-झि । मालवदेशे ।
**अवन्तिका** स्त्री० अवन्तिषु कायति प्रकाशते । मालवदेशीय-
राजधान्यामुज्जयिन्याम् । [काञ्जिके ।
**अवन्तिसोम** न० अवन्तिषु अभिषुतं सोममिव शाक०त० ।
**अवपात** पु० अव+पत-घञ् । बिले, अधःपतने, निपाते च ।
**अवप्लुत** त्रि० अव+प्लु-क्त । सहसाऽवतीर्णे ।
**अवभास** पु० अव+भास-घञ् । साक्षात्कारे, अन्यधर्मस्या-
न्यस्मिन्नारोपेण भाने च ।
**अवभृथ** पु० अव+भृ-क्थन् । मुख्ययज्ञसमाप्तौ क्रियमाणे यज्ञ
शेषे कर्मणि, यज्ञाङ्गभूते यज्ञान्ते स्नाने च ।
**अवभ्रट** त्रि० अवनता नासिका प्रा०स०नतार्थे नासिकाया भ्र-
टादेशः अर्शआद्यच् । अवनतनासिके (खांदा) जने ।
**अवम** त्रि० अवत्यस्मादात्मानम् अव-अम् । कदाचारादौ,
कुत्सिते, नीचे च । ज्योतिषप्रसिद्धे एकतिथिद्वयान्तवर्ति
एकस्मिन् दिनवारे न० । अवमदिनमप्यत्र ।
**अवमत** त्रि० अव+मन-क्त । अनादृते ।
**अवमर्द** पु० अव+मृद-घञ् । पीडने । [गर्भेदे च ।
**अवमर्श** पु० अव+मृश-घञ् । आलोचनायाम्, नाटकस्य सन्ध्यं
**अवमानना** त्रि० अव+चुरा०-मन-युच् । अपमानकरणे ।
**अवमानित** त्रि० अव+चुरा० मन-क्त । कृतापमाने ।
**अवमोटन** न० अव+मुट्-णिच्-ल्युट् । (मोचड़ान) परिवर्त्त-
नेनान्यथापादनरूपे परिमोटने ।
**अवयव** पु० अव+यु-अच् । देहादावङ्गे, उपकरणे, न्यायमते
प्रतिज्ञाहेतूदाहरणादिषु पञ्चसु वाक्येषु च ।
**अवर** त्रि० अव+रा-क । चरमे, अधमे, कार्य्ये च । पश्चाद्वर्त्तिनि
देशे काले पु० तद्वर्त्तिनि त्रि० । हस्तिजङ्घायाः पश्चाद्देशे न० ।
**अवरज** पु० अवरस्मिन् काले जातः । कनिष्ठसोदरे भ्रातरि,
शूद्रे च । कनिष्ठसोदरभगिन्यां, शूद्रायाञ्च स्त्री० टाप् ।
**अवरति** स्त्री० अव+रम-क्तिन् । विरामे, निवृत्तौ च ।
**अवरवर्ण** पु० कर्म० । शूद्रे,
**अवरीण** त्रि० अव+रीङ-क्त । तिरस्कृते ।
**अवरुद्ध** त्रि० अव+रुध-क्त । आच्छादिते, बन्धादिना प्रतिरुद्धे च
अन्तःपुरवासिन्यां भोग्यायां दास्या, राजयोषिति च स्त्री० ।
**अवरूढ** त्रि० अव+रुह-क्त । अवतीर्णे, स्वस्थानाद्गलिते ।
**अवरोध** पु० अव+रुध-भावे घञ् । निरोधे । कर्मणि घञ् ।
राजान्तःपुरस्थायां योषिति, राजदारेषु च । आधारे
घञ् । राजान्तःपुरे । ल्युट् । अवरोधनमप्यत्र न० ।
**अवरोधिक** पु० अवरोधे रक्षणादौ नियुक्तः ठन् । राजान्तः-
पुररक्षणार्थं नियुक्ते वामनादौ ।
**अवरोपित** त्रि० अव+रुह-णिच्-पुक् च क्त । उत्पाटिते ।
**अवरोह** पु० अव+रुह-घञ् । अवतरणे, ऊर्द्ध्वदेशान्निम्न-
देशगमने, आरोहे च । पचाद्यच् । तरोर्मूलादग्रपर्य्यन्त-
मारूढायां गुडूच्यादिलतायां । अपादाने घञ् । स्वर्गे,
ततो हि भोगावसाने सर्व्वेऽवतरन्ति ।
**अवरोहशाखिन्** पु० अवरोहति छिन्नोऽपि पुनः प्ररोहति
अव+रुह-अच् कर्म०, अवरोहति अधोगच्छति मूलमस्या
तादृशी शाखा कर्म० ततः बाहुल्ये मत्वर्थीय इनिः ।
वटवृक्षे, तस्य छेदनेऽपि पुनः प्ररोहः च । शाखातोऽपि
सहस्राणि मूलान्यवतरन्ति ।
**अवरोहिका** स्त्री० अव-रोहति अत्यन्तमधोगच्छति रुह-
ण्वुल् टाप् कापि अतइत्त्वम् । अश्वगन्धालतायाम् ।
**अवरोहिन्** पु० अव+रुह-णिनि । वटवृक्षे । अवरोहिशाखोऽप्यत्र
**अवर्ण** पु० वर्ण-घञ् विरोधे नञ्त० । प्रशंसाविरोधिनि अपवादे
**अवलक्ष** अव+लक्ष घञ् श्वेतवर्णे । तद्वति, मूर्खे च त्रि० ।
अर्शआदेरतो योगे, वलक्षोऽप्यत्रैवार्थे ।
**अवलग्न** पु० अव+लग-क्त नि० इडभावः । (माजा) देह-
मध्यभागे । संबद्धमात्रे त्रि० ।
**अवलम्ब** पु० अव+लबि-आधारे घञ् । आश्रये । करणे घञि ।
अवलम्बसाधने दण्डादौ । अवलम्बनमप्यत्र ल्युट् ।
**अवलम्बित** त्रि० अव+लबि-क्त । आश्रिते, वस्त्रादिना बद्धे च
**अवलिप्त** त्रि० अव+लिप-क्त । गर्विते, कृतलेपने च ।
**अवलीढ** त्रि० अव+लिह-क्त । भक्षिते, कृतावलेहे च ।
**अवलीला** स्त्री० अवरा लीला । अनायासे, अनादरे च ।
**अवलेप** पु० अव+लिप-घञ् । गर्वे, लेपने, दूषणे, सम्बन्धे च ।

**अवलेपन** न० अव+लिप-भावे ल्युट् । विलेपे, गर्व्वे, सङ्गले च । करणे ल्युटि । चन्दनादौ ।
**अवलेह** पु० अव+लिह-घञ् । जिह्वायेण स्वादने । कर्म्मणि घञि । तथास्वाद्ये औषधादौ च ।
**अवलोकन** न०अव+लुक-ल्युट् । दर्शने,अनुसन्धाने च । करणे ल्युट् । आलोके, नेत्रे च । [लतायाम् ।
**अवल्गुज** पु० अवल्गोरशोभनाज्जायते जन-ड । सोमराजी
**अववाद** पु०अव+वद-घञ् । निन्दायाम्, विश्वासे,आज्ञायाम्, अवालम्बने च । [परवशे, पराधीने च ।
**अवश** त्रि० नास्ति वशमायत्तत्वं यस्य । अस्वाधीने, कामादि-
**अवशिष्ट** त्रि०अव+शिष-क्त । अतिरिक्ते, परिशिष्टे, अधिके च
**अवश्यम्** अव्य०अव+श्यै-डम् । निश्चये, अवश्यनिवारणे च ।
**अवश्याय** पु०अव-श्यै ण । कुज्झटिकायाम्, अभिमाने च ।
**अवश्रयण** न० अव+श्री-अच् । चुल्लीतोऽवतार्य्य स्थापने ।
**अवष्टब्ध** त्रि० अव+स्तम्भ-क्त । आसन्ने, आक्रान्ते, अवलम्बिते,प्रतिरुद्धे च ।
**अवष्टम्भ** पु० अव+स्तम्भ-घञ् । स्वर्णे,स्तम्भे,प्रारम्भे, रोधने, गर्वे च "रघोरवष्टम्भमयेन पत्त्रिणा" इति रघु ।
**अवस्** अव्य० अवर+प्रथमायाः पञ्चम्याः सप्तम्या वाऽर्थे असि अवादेशः । वाह्ये पश्चादर्थे च ।
**अवसथ** पु० वस-अथच् न०पू ब० । निलये,ग्रामे च ।
**अवसथ्य** पु० अवसथ+स्वार्थे यत् । आवासे, ग्रामे च ।
**अवसर** पु० अव+सृ-अच् । प्रस्तावे, जिज्ञासानिवृत्तयेऽवश्य वक्तव्ये, वत्सरे, मन्त्रभेदे, वर्षणे, क्रियास्थितियोग्यतासम्पादककाले कालिकेऽवकाशे च । [कामचारानुज्ञायां च ।
**अवसर्ग** पु०अव+सृज-घञ् । अप्रतिबन्धे, यथेष्टं क्रियतामिति
**अवसर्प** पु० अव+सृप-अच् । चरे । [स्वपरसन्नतायाञ्च ।
**अवसाद** पु० अव+सद-घञ् । नाशे, विषादे, स्वकार्य्याक्षमत्व
**अवसादन** न० अव+सद-णिच्-ल्युट् । कार्य्याक्षमत्वापादने, नाशने च । [स्तौ च ।
**अवसान** न० अव+सो-ल्युट् । विरामे, समाप्तौ, सीमायां,
**अवसाय** पु० अव+सो-घञ् । समाप्तौ, शेषे, निश्चये च ।
**अवसित** त्रि० अव+सो-क्त । समाप्ते, ऋद्धे, ज्ञाते, परिपक्वे, निश्चिते, गृहीतधान्ये च । अव+षि-क्त । संबद्धे ।
**अवस्कन्द** पु०अव+स्कन्द-आधारे घञ् । जिगीषूणां सैन्यनिवेशस्थाने शिबिरे, आक्रमणे च । [तरणे,आक्रमणे च ।
**अवस्कन्दन** न० अव+स्कन्द-ल्युट् । सर्व्वाङ्गावगाहने,अव
**अवस्कर** पु०अव+कॄ-अप् सुट् । विष्ठादिमले । अपादाने अपि गुह्यदेशे उपस्थादौ । [अवादेशः । अवरकालादौ ।
**अवस्तात्** अव्य० अवरस्मिन् अवरस्मात् अवरमित्यर्थे अस्ताति
**अवस्तार** पु० अव+स्तॄ-घञ् । परदा इति ख्यातायां जवनिकायाम्, आस्तरणे च । [अवस्थाने च ।
**अवस्था** स्त्री० अव+स्था-अङ् । कालकृतायां देहादेर्दशायाम्,
**अवस्थान** न० अव+स्था-ल्युट् । स्थितौ । आधारे वञि । आवासे, प्रतिष्ठायाञ्च ।
**अवस्यन्दन** न० अव+स्यन्द-ल्युट् । हिंसने ।
**अवस्रंसन** न० अव+स्रन्स-ल्युट् । अधःपतने, च्युतौ च ।
**अवहार** पु०अव+हृ-कर्त्तरि ण । चौरे,ग्राहनामके, जलजन्तुभेदे च । भावे घञि । युद्धादिविश्रामे । कर्म्मणि घञि । निमन्त्रितविप्रादिभ्यो देये द्रव्ये । [भावे ।
**अवहित्था** स्त्री० न० न बहिस्तिष्ठति स्था-क इष्टो० । छन्नत-
**अवहेल** न०स्त्री० । अव+हेल-अच् घञर्थे क वा । अनादरे ।
**अवाक्पुष्पी** स्त्री० अवाक् अधोमुखं पुष्पमस्याः । (मुलफा) इति ख्यातायाम् शतपुष्पिकायाम् ।
**अवाक्शिरस्** त्रि० अवाक् शिरोऽस्य ब० । अधोमुखे ।
**अवाग्र** त्रि० अवनतमग्रमस्य । नम्रमुखे ।
**अवाङ्मुख** त्रि० अवाक् मुखमस्य । अधोमुखे ।
**अवाच्** त्रि० अवाञ्चति अव+अञ्च-क्विप् । अधोमुखगते, अवरे-देशे, काले च । दक्षिणस्यां दिशि स्त्री० ङीप् । नास्ति वाक् यस्य ६ब० । वाक्यरहिते त्रि० । पूर्व्वार्थे अवाङ्, अवाञ्चौ,अवाचौ इत्यादिभेदः । कालाद्यर्थे प्रथमादीनां स्थानेऽस्ताति तस्य लुक् । अवरकालादावर्थे अव्य० ।
**अवाच्य** न० वच-ण्यत् कुत्वम् न०त० । दुष्टवचने, वचनानर्हे,निन्दनीये च अवाच्+यत् । अवरकालादौ भवे त्रि० ।
**अवान्तर** त्रि० अवगतमन्तरं मध्यम् प्रा०स० । प्रधानान्तःपातिनि अङ्गादौ, सामान्यस्य विशेषे च ।
**अवार** न० न वारमत्र । नद्यादेर्जलानतिक्रमेण प्राप्ये तीरे ।
**अवारपार** पु० अवारं पारञ्च स्तो यस्य अर्शआद्यच् । उभयकूलवति समुद्रे ।
**अवारपारीण** त्रि०अवारपारे गच्छति+ख । पारगामिनि ।
**अवारिका** स्त्री० नास्ति वारि यत्र । धन्याके, तस्य अतिशुष्कफलत्वेन जलशून्यत्वात् ।
**अवासस्** त्रि० न वासोऽस्य । वस्त्ररहिते नग्ने ।
**अवि** पु० अव-इन् । सूर्य्ये, मेषे, छागे, पर्व्वते, मूषिककम्बले, प्रभौ च । ऋतुमत्यां स्त्रियां लज्जायाञ्च स्त्री० वा ङीप् ।
**अविकट** पु० अवि+समूहे कटच् । मेषसंघाते । विकट उप

न॰त॰ । उग्रभिन्ने सौम्ये । [अजगन्धाहृक्षे ।

**अविगन्धा** स्त्री॰ अवेश्छागस्य गन्ध इव गन्धः पुष्पादावस्याः ।

**अविग्न** पु॰ विज-क्त न॰त॰ । (करमचा) करमर्दकवृक्षे ।

**अवितथ** न॰ न वितथं मिथ्या न॰त॰ । सत्ये ।

**अविद्या** स्त्री॰ विद-क्यप् न॰त॰ । विद्याभावे, अहङ्कारहेतौ अज्ञाने, विद्याविरोधिन्याम् अयथार्थबुद्धौ च । वेदान्तमते भावाभावाभ्यामनिर्वाच्यायामचेतनायां मायायाम् ।

**अविद्धकर्णी** स्त्री॰न विद्धः अच्छिद्रः पर्णरूपः कर्णोऽस्याः । पाठालतायाम् ।

**अविनाभाव** पु॰ विना व्यापकम्वृते न भावः स्थितिः । व्यापकस्थित्यनुरोधिसत्ताकमायां व्याप्तौ ।

**अविनीत** त्रि॰ अव+नी-क्त । उद्धते । कुलटायां स्त्री॰ ।

**अविप्रिय** पु॰ अवीन् मेषान् प्रीणाति प्री-क । श्यामाकतृणे । विप्रियमपकारः न॰त॰ । प्रतिकूलभिन्ने । न॰ब॰ । अपकारशून्ये त्रि॰ । श्वेतानन्तायां स्त्री॰ ।

**अविभक्त** पु॰ वि+भज-क्त । संसृष्टे, विभागरहिते द्रव्ये-स्वामिनि च । अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समाः इति, अविभक्तं स्थावरं यत्सर्व्वेषामेव तद्भवेदिति च स्मृतिः ।

**अविमुक्त** न॰ "न विमुक्तं शिवाभ्यां यदविमुक्तं ततो विदुः"-रित्युक्तलक्षणे काशीक्षेत्रे । वि+मुच-क्त न॰त॰ । मुक्तभिन्ने त्रि॰

**अविरत** त्रि॰ वि+रम भावे-क्त न॰ब॰ । विरामशून्ये, अनवरते द्रव्यादौ च क्रियाविशेषणत्वे न॰ ।

**अविरति** स्त्री॰ विरामो विरतिः भावे क्तिन् न॰त॰ । विषयादौ स्थिरचित्ततायाम्, विरामाभावे च ।

**अविरल** त्रि॰ न विरलं न॰त॰ । घने, निबिडे ।

**अविलम्बित** त्रि॰ वि+लबि-क्त न॰त॰ । विलम्बशून्ये त्वरायुक्ते द्रव्यादौ । क्रियाविशेषणत्वे न॰ ।

**अविवेक** पु॰ वि+विच-घञ् न॰त॰ । सदसद्विवेकाभावे, सम्भूयैककार्य्यकरणे, भ्रमे च । न॰ब॰ । विवेकशून्ये त्रि॰ ।

**अविवेकिन्** त्रि॰ वि+विच-घिनुण् न॰त॰ । विवेचकभिन्ने, मूर्खे, शास्त्राद्युपदेशशून्ये, विवेको भेदस्तद्रहिते च । साङ्ख्यमते प्रधाने, महदादौ च । प्रधानं महदादिभ्यः, महदादयश्च प्रधानात् न विविच्यन्ते (भिद्यन्ते) इत्युक्तम् तत्रैव ।

**अविशेष** पु॰ वि+शिष-घञ् न॰त॰ । विशेषाभावे, अभेदे च । न॰ब॰ । विशेषशून्ये तुल्ये त्रि॰ । साङ्ख्यादिमतसिद्धेषु तन्मात्राख्येषु सूक्ष्मभूतेषु तानि च इदमेतद्देवंगुणकमिति व्यावृत्ततया नानुभूयन्ते इत्यविशेषाः ।

**अविश्रान्त** त्रि॰ वि+श्रम-क्त न॰त॰ । विरामरहिते द्रव्ये ।

**अविष** पु॰ अव-टिषच् । समुद्रे, नृपे च । ङीप् । नद्यां स्त्री॰ । विषशून्ये त्रि॰ । (आतइच्) विषायां स्त्री॰ टाप् ।

**अविसोढ** न॰ अवेर्दुग्धम् अवि+सोढ न पत्वम् । मेष्यादुग्धे ।

**अविस्पष्ट** न॰ विस्पष्टं श्रुतमात्रेणार्थावबोधकं सुखेन श्रवणायोग्यञ्च वि+स्पश-क्त न॰त॰ । अस्पष्टवाक्ये । [व्यक्त ।

**अवीचि** पु॰ नास्ति वीचिः सुखमत्र । नरकभेदे अवीचिमयोऽ-

**अवीजा** स्त्री॰ ईषदर्थे नञा ब॰ । अल्पवीजवत्यां द्राक्षायाम् । वीजशून्ये त्रि॰ । [प्रवर्त्तमाने निषेधके अनुमाने ।

**अवीत** न॰ वि+इण्-क्त न॰त॰ । न्यायप्रसिद्धे व्यतिरेकरूपेण

**अवीर** त्रि॰ वीरः पुत्रादि र्नास्ति यस्य । पुत्रादिशून्ये । न॰त॰ वीर्य्यवद्भिन्ने । पतिपुत्ररहितायां स्त्री॰ । "अजातपुत्रा-विधवा साऽवीरा परकीर्त्तितेति" स्मृतेः । [धाने च ।

**अवेक्षण** न॰ अव+ईक्ष-ल्युट् । दर्शने, प्रतिजागरणे, अव-

**अव्यक्त** पु॰ वि+अनुज-क्त न॰त॰ । विष्णौ, कामे, शिवे, सांख्यमते सर्व्वकारणे, प्रधाने, रूपाद्यहीनतया चक्षुराद्यगोचरत्वात्तस्य, वेदान्तमते सूक्ष्मशरीरे सन्नावस्थायां शब्दप्रवृत्तिनिमित्तैर्ज्जातिगुणादिभिर्व्वर्ज्जिते निराकारे ब्रह्मणि च न॰ । अस्पष्टे वर्त्तमाने त्रि॰ । [ईषद्रक्ते अरुणवर्णे ।

**अव्यक्तराग** पु॰ न व्यक्तोऽस्पष्टोरागोऽरुणिमा यस्य ।

**अव्यङ्गा** स्त्री॰ अवेरङ्गं व्यङ्गमिवाङ्गमस्याः । शूकशिम्ब्याम् । न विकलमङ्गमस्य इ॰स॰ । विकलाङ्गभिन्ने पूर्णाङ्गे त्रि॰ ।

**अव्यञ्जन** पु॰ नास्ति व्यञ्जनं शुभलक्षणं शृङ्गं यस्य । शृङ्गहीनपशौ, सुलक्षणशून्ये, चिह्नशून्ये च त्रि॰ ।

**अव्यण्डा** स्त्री॰ न विगतमण्डं वीजमस्याः । शूकशिम्ब्याम् ।

**अव्यथ** पु॰ न व्यथते पद्भ्यां न सञ्चलति व्यथभयचलनयोः अच् । सर्पे । व्यथाशून्ये त्रि॰ । नास्ति व्यथा यस्याम् ७ब॰ । हरितक्याम् सुखाङ्गे स्त्री॰ । [व्यथाशून्ये त्रि॰ ।

**अव्यथिन्** पु॰ बहुचलनेऽपि न व्यथते व्यथ-इनि । अश्वे,

**अव्यभिचारिन्** त्रि॰ वि+अभि+चर-णिनि न॰त॰ । केनापि प्रतिकूलहेतुना निवारयितुमशक्ये । न्यायमते व्यभिचारो व्याप्तेरभावस्तच्छून्ये हेतौ पु॰ ।

**अव्यय** पु॰ न॰ वि+इण्-अच् न॰त॰ । "सर्व्वासु विभक्तिषु सर्व्ववचनेषु च एकरूपे शब्दवृत्तिधर्म्मविशेषे, यथा स्वरादयोऽव्ययाः सर्व्वदैकरूपाः शिवे, विष्णौ च पु॰ । आद्यन्तरहिते विकारशून्ये त्रि॰ । परब्रह्मणि न॰ । "सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु । वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययमिति श्रुतिः ।

**अव्ययीभाव** पु॰ अनव्ययमव्ययं भवत्यनेन अव्यय+च्वि-भू

**आध्मान** पु० "आध्मानमिति जानीयाद्घोरं वातनिरोधज"-मित्युक्ते वातव्याधौ । आ+ध्मा-भावे ल्युट् । स्फीततायाम् । नलिकानामगन्धद्रव्ये स्त्री० ङीप् ।

**आध्यात्मिक** त्रि० आत्मानं मन शरीरादिकमधिकृत्य भव । ठञ् । शोकमोहज्वरादिरूपे दुःखे । [स्मरणे च ।

**आध्यान** न० आ+ध्यै-ल्युट् । चिन्तायाम्, उत्कण्ठापूर्वक-

**आध्वर्य्यव** न० अध्वर्य्योः कर्म्म, भावो वा अञ् । यजुर्वेद-विहिते अध्वर्युसम्बन्धिनि कर्म्मणि, तद्भावे च ।

**आन** पु०अन-घञ् । अन्त स्थितस्य प्राणवायोर्नासिकयोच्छ्वासे

**आनक** पु० आनयति सोत्साहान् करोति अन-णिच् ण्वुल् । पटहे, मृदङ्गे, सशब्दमेघे च । उत्साहके त्रि० ।

**आनकदुन्दुभि** पु० आनक भोत्साहक दुन्दुभिर्देववाद्य-विशेषो यस्य कृष्णजन्मोत्सवे तथा वाद्यं तद्ध्वनेर्जातम् । कृष्णपितरि वसुदेवे । तदुद्धृतकायां स्त्री०ङीप् ।

**आनत** त्रि० आ+नम-क्त । कृतप्रणामे,अधोमुखे, विनयनते च

**आनति** स्त्री० आनमति प्रवणीभवत्यनया आ+नम क्तिन् । सन्तोषे । भावे क्तिन् । नम्रीभावे, अधोभवने, नम्रतायाञ्च

**आनद्ध** न० आ+नह क्त । चर्म्मणा बद्धमुखे पटहमुरजादौ वाद्ये वेशभूषादिके च । ग्रथिते, व्याप्ते, बद्धे च त्रि० ।

**आनन** न० आ अनित्यनेन आ+अन ल्युट् । मुखे ।

**आनन्तर्य्य** न० अनन्तरमेव चतुर्वर्णादित्वात् स्वार्थे ष्यञ् । अनन्तरे व्यवहिते । अनन्तरस्य भाव ष्यञ् । अव्यवधाने

**आनन्त्य** न० अनन्त+भावे स्वार्थे वा ष्यञ् । बाहुल्ये "आनन्त्यात् कुलधर्म्माणामि"ति स्मृति देशकालाद्यपरिच्छिन्ने "तदानन्त्यं समश्नुते इति श्रुति । अनन्तं सुखमित्यर्थ ।

**आनन्द** पु० आ+नन्द-घञ् । हर्षे,सुखे,दुःखाभावे,ब्रह्मणि च । आनन्दवति त्रि० सत्यज्ञानमानन्दं ब्रह्म त श्रुतिः ।

**आनन्दथु** पु०आ+नन्द-अथुच् । आनन्दे ।

**आनन्दन** न० आ+नन्द-णिच् ल्युट् । गमनागमनसमये कुशलप्रश्नेनानन्दोत्पादने ।

**आनन्दमय** पु० आनन्देन प्रचुर तत्प्रकृतवचने मयट् । जीवे, वेदान्तोक्ते सुषुप्तिसाक्षिणि प्राज्ञे च ।

**आनन्दार्णव** पु० आनन्दस्यार्णव इव । परमेश्वरे "सोम्या-मृतविकोणस्था सौम्या. पापविवर्ज्जिता आनन्दार्णवयो-गोऽयमित्युक्ते यात्रालग्नभेदे च । इत० । अत्यन्तानन्दे ।

**आनन्दि** पु० आ+नन्द-इन् । हर्षे,कौतुके च । कौशल्यानन्दिवर्द्धनोराम इति रामायणम् ।

**आनर्त्त** पु० आ+नृत्यन्त्यत्र आ+नृत-घञ् । नृत्यशालायाम् रसे, जले, द्वारकाप्रान्तस्थदेशे, तद्देशवासिनि च ।

**आनाम्य** त्रि० आ+नम-णिच् अभिभवे, यत् । अभिभवनीये

**आनाय** पु० आनयति मत्स्यानेन आ+नी-घञ् । जाले । भावे घञ् आनय । आनयने ।

**आनाय्य** पु० आनाय्यते गार्हपत्यादानीय संस्क्रियतेऽसौ नी-ण्यत् आयादेश ।वैदिकप्रसिद्धे दक्षिणाग्नौ । [भेदे च

**आनाह** पु० आ+नह-घञ् । दैर्घ्ये विण्मूत्ररोधके वैद्यकोक्तेरोग

**आनुपूर्व्वी** स्त्री० पूर्व्वमनुक्रम्य अनुपूर्व्वं तस्य भाव ष्यञ् ततो वा ङीषि यलोप । परिपाट्याम् मूलावधिके क्रमे ङीषभावपक्षे, आनुपूर्व्यमप्यत्र न० ।

**आनुमानिक** त्रि० अनुमानेन प्राप्त ठक् । अनुमानमात्रसिद्धे साङ्ख्योक्ते प्रधाने ' आनुमानिकमि"ति वेदान्तसूत्रम् ।

**आनुश्रविक** पु० गुरुपाठादनुश्रूयते अनुश्रवोवेदस्तत्र विहित ठक् । स्वर्गादिसाधनतया वेदविहिते कर्म्मसमूहे ' दृष्ट-वदानुश्रविक" इति साङ्ख्यकारिका ।

**आनृत** त्रि०अनृतं शीलमस्य अण् । असत्यस्वभावे । [अक्रौर्य्ये च

**आनृशंस्य** न० नृशंसो घातक न०त० भावे ष्यञ् । दयाया,

**आन्तर** त्रि०अन्तर्मध्ये भव' अण् । आभ्यन्तरे । [चौराख्ये

**आन्तरतम्य** न० अन्तरतमस्य अत्यन्तसदृशस्य भाव ष्यञ् ।

**आन्त्र** न०अमत्यनेन अम इन् उपधादीर्घ ।नाडीभेदे । अन्त्र स्येदम् अण् । अन्त्रसम्बन्धिनि त्रि० । स्त्रियां ङीप् ।

**आन्दोल** दोलने अद०चुरा० उभय०सक० सेट् । आन्दोलय" ति ते आन्दुदोलत् त । [अनुसन्धाने च ।

**आन्दोलन** न० आन्दोल ल्युट् । पुन पुनर्दोलने, सञ्चालने,

**आन्धसिक** त्रि० अन्धो भक्त शिल्पमस्य ठक् । पाचके ।

**आन्वयिक** त्रि० अन्वये प्रशस्तकुले भव ठञ् । प्रशस्तकुलजाते

**आन्वाहिक** त्रि० अहनि अहनि अन्वहम् तत्र भव ठञ् । प्रतिदिनसाध्ये पाकादौ ।

**आन्वीक्षिकी** स्त्री० अनु वेदश्रवणानन्तरमीक्षा परीक्षणम-न्वीक्षा सा प्रयोजनमस्य । तत्र साधु वा ठञि ङीप् । तर्क-विद्यायाम् अध्यात्मविद्यायाञ्च । [भेदे पु० ।

**आप** न० अपां समूह अण् । अपां समूहे । आप अच् वसु-

**आपगा** स्त्री० आपं जलसमूहं गच्छति प्राप्नोति । नद्याम् ।

**आपण** पु० न० आपण्यन्ते विक्रीयन्तेऽत्र पण-घ । हट्टे, क्रयविक्रयद्रव्यशालायाञ्च । भावे च । क्रयविक्रयव्यवहारे पु०

**आपणिक** त्रि० आपणो व्यवहारोऽस्यास्ति ठन् । मर्यादि-कर्त्तरि वाणिजे । [प्रसङ्गरूपे तर्कदोषे च ।

**आपत्ति** स्त्री० आ+पद क्तिन् । आपदि, प्राप्तौ, अनिष्ट-

आपद् स्त्री॰ आ+पद-क्विप् । विपत्तौ ।
आपन न॰ आप-ल्युट् । प्राप्तौ,मरीचे च। कर्मणि ल्युट्। क्लेशे
आपन्न त्रि॰ आ+पद क्त । विपद्युक्ते, प्राप्ते च ।
आपन्नसत्त्वा स्त्री॰ आपन्नं सत्त्वं यया । गर्भिण्याम् ।
आपमित्यक न॰ अपमित्य परीवर्त्य निर्वृत्तम् अप+मे-क्त्वा
ल्यप् ततो निर्वृत्तेऽर्थे कक् किच्चात् वृद्धि । तुल्यरूपद्रव्य
विनिमयेन ग्रहणे । [नस्य तृतीयभागभवे पितृश्राद्धादौ
आपराह्णिक त्रि॰ अपराह्णे भव ठञ् । त्रिधा विभक्तस्य दि-
आपस् न॰ आप-असुन् । जले,'आपोभिर्मार्ज्जनं'मित्यस्मृति
'सर्व्वमापोमयं जगदि'ति देवीभागवतम् । [लतायाम् ।
आपस्तम्भिनी स्त्री॰ आप स्तभ्नाति स्तम्भ-णिनि । शिङ्गिन्या
आपाक पु॰ आपच्यतेऽत्र आ+पच+घञ् । (पोयान्) कुम्भ
कारस्य मृत्पात्रपाकस्थाने । [घञ् । तत्काले, भर्गे च ।
आपात पु॰ आ+पत-भावे घञ् । सहसा पतने, । आधारे
आपाततस् अव्य॰ आपात+तसिल् । अनिश्चये विनेत्यर्थे
"आपाततोयदर्थस्ये"ति साहित्यदर्पणे ।
आपान न॰ आ सम्भूय पिबन्त्यत्र । सुरापानार्थं सम्भूयोपवे-
शने, (मजे) मद्यपानसभायाञ्च ।
आपानभूमि स्त्री॰ आपानस्य भूमि । सुरापानस्थाने ।
आपिञ्जर न॰ ईषत् पिञ्जरवर्णम् । स्वर्णे ।
आपीड पु॰ आ+पीड-अच् । शिखामाल्ये शिरोभूषणे, स्वङ्ग
बर्हिणि खतकाले च । [पीते त्रि॰ ।
आपीत न॰ आपीयते आ+पा-क्त । माक्षिकधातौ । ईषत्-
आपीन न॰ आ+प्याय-क्त पीभावः तस्य नत्वम् । (बेड)
ऊधसि । कूपे पु॰ । ईषत्स्फीते त्रि॰ ।
आपूपिक न॰ अपूपानां पिष्टकानां समूहः ठक् । पिष्टकसमूहे
पिष्टकसम्पादनेन जीवतीत्याद्यर्थे ठक् । पिष्टकाजीवे,तद्-
भक्षणकारके, तद्रचयितरि, तद्भक्षणशीले च त्रि॰ ।
आपूप्य पु॰ अपूपार्थं पिष्ट अन्न। सक्तुषु, गोधूमचूर्णादौ च । [च।
आपृच्छा स्त्री॰ आ+प्रच्छ-अङ् । आलापे जिज्ञासायामभाषणे
आप्त त्रि॰ आप-क्त । विश्वस्ते, प्राप्ते, लब्धे, सत्ये, रागद्वेषा-
दिवर्ज्जिते, यथार्थोपदेष्टरि भ्रमादिशून्ये यथार्थज्ञातरि च।
आप्तकाम त्रि॰ आप्त प्राप्त काम कामनाविषयो येन ।
सम्पूर्णकामे निस्पृहे । परमेश्वरे पु॰ ।
आप्ति स्त्री॰ आप-क्तिन् । संबन्धे, योगे, लाभे प्राप्तौ च ।
आप्तोक्ति स्त्री॰ आप्तस्य उक्तिः वच-क्तिन् । अतीन्द्रियविषय
निर्णयार्थं सिद्धान्तवाक्ये, यथार्थवाक्ये च ।
आप्य न॰ आप स्वार्थे ष्यञ् । (कुड) कुष्ठघ्ने । जलोद्भूते मत्स्यादौ
प्राप्तव्ये च त्रि॰। अपां विकार ष्यञ् । जलविकारे फेनादौ
त्रि॰ । [ल्युट् । तर्पणे प्रीणने च। ल्यु । तत्कर्त्तरि त्रि॰।
आप्यायन न आ+प्याय-ल्युट् । तृप्तौ, प्रीतौ च । णिच्-
आप्रच्छन न॰ आ+प्रच्छ-ल्युट् । आनन्दने गमनागमनसमये
बन्धूनामन्योन्यकुशलजिज्ञासयानन्दसम्पादने ।
आप्रपद अव्य॰प्रपदं पादाग्रं तत्पर्य्यन्तम् अव्ययी॰। पादाग्रपर्य्यन्ते
आप्रपदीन त्रि॰आप्रपदं पादाग्रान्तं प्राप्नोति ख। पादाग्रान्तं
लम्बमाने वस्त्रादौ । [जलाभा सर्व्वत यङ्कुल्लने च ।
आप्ल(प्ला)व पु॰ आ+प्लु-घञ्-अप् वा । स्नाने । (छपलाप) ।
आप्लुत त्रि॰ आ+प्लु-क्त । स्नाते । भावे क्त । स्नाने न॰ ।
आप्लुतव्रत पु॰ आप्लुत वेदाध्ययनानन्तरं स्नानं व्रतमस्यस्य ।
अधीतवेदे, अकृतदारगृहस्थाश्रमे ब्रह्मचारिभेदे स्नातके ।
आबद्ध न॰ आ सम्यक् बद्धम् बन्ध-भावे क्त । दृढबन्धने ।
आधारे क्त । प्रेम्णि । कर्मणि क्त । भूषणे । करणे क्त ।
योक्त्रे पु॰ । बद्धे आप्ते प्रतिरुद्धे च त्रि॰ ।
आबन्ध पु॰ आ+बन्ध-घञ् । दृढबन्धे, योक्त्रे च ।
आबाधा स्त्री॰ आ+बाध-अङ् । पीडायां क्लेशे च । लीलाव-
त्युक्ते प्रसिद्धे । त्रिकोणक्षेत्रे लम्बोभयपार्श्वस्थे तलमध्ये
रज्जुनिक्षेपाज्जायमाने भूखण्डे ।
आबिल त्रि॰ आ+बिल भेदने, क । कलुषे, अस्वच्छे च ।
आबुत्त पु॰ आप्नवनात् क्विप् आपस्तनोति उद्+तन-ड ।
नाट्योक्तौ भगिनीपतौ ।
आभरण न॰आ+भृ-ल्युट् । भूषणे । [माने,स्वरोगभेदे च।
आभा स्त्री॰आ+भा-अङ् । दीप्तौ, शोभायाम्, कान्तौ उप
आभाषण न॰ आ+भाष-ल्युट् । आलापे, परस्परकथने च
आभाषित त्रि॰ आ+भाष-क्त । अभिमुखीकृत्य कथिते ।
आभास पु॰ आ+भास घञ् । प्रतिबिम्बे, दीप्तौ,पश्वादेरादौ
मनुष्यतिदर्शनोत्पादने अवतारणे च ।
आभास्वर पु॰ आ+भास-वरच् । चतुःषष्टिमिते, द्वादशमिते
वा गणदेवताभेदे । दीप्ते त्रि॰। [पाण्डित्ये च।
आभिजात्य न॰ अभिजातस्य भाव ष्यञ् । कौलीन्ये
आभीक्ष्ण न॰-ार्थेऽण् । आधिक्ये । तद्वति त्रि॰। क्रियाविशेषणे न॰
आभीक्ष्ण्य न॰ अभीक्ष्णस्य भाव ष्यञ् । पौनःपुन्ये ।
आभीर पु॰आ समन्तात् भियं राति रा-क। आ ईर ईरितृजाते
ब्राह्मणादम्बष्ठायामुत्पन्ने वर्णसङ्करभेदे गोपे, देशभेदे च ।
आभीरपल्लि(ल्ली) स्त्री॰ आभीराणां पल्लि । गोपग्रामे,घोषे पुं॰
आभील न॰ आ समन्तात् भियं लाति आभी+ला+क । कष्टे
महति, भयानके च त्रि॰ ।

**आभोग** पु॰ आ-भुज-भावे आधारे वा घञ् । वरुणस्य छत्रे परिपूर्णतायां, यत्ने, गानसमाप्तौ (भणिता) कविनामख्यापने च । [कर्माणि तद्‌द्रव्यं कर्तव्ये श्राद्धे ।
**आभ्युदयिक** त्रि॰ अभ्युदयार्थं इष्टार्थं वि हितं ठक् । चूडादि
**आम** त्रि॰ आ ईषत् अम्यते पच्यते आ+अम-घञ् । अपक्वे वैद्यकोक्ते अजीर्णत रसे रोगभेदे पु॰ ।
**आमगन्धि** न॰ आमस्यापक्वस्य गन्ध इव गन्धो यत्र इत् समा॰ । अपक्वमांसादिगन्धवाच्ये ।
**आमनस्य** न॰ अप्रशस्तं मनो यस्य तस्य भावः ष्यञ् । दुःखे ।
**आमन्त्रण** न॰ आ+मन्त्र-ल्युट् । अभिनन्दने, संबोधने, कामचारानुज्ञाकृमे स्वनामख्याते च । अवश्यकर्तव्ये नियोगो निमन्त्रणं यथा श्राद्धादौ भोजने, अकरणे प्रत्यवायाभावे नियोग आमन्त्रणं यथा स्थलविशेषे शयने ।
**आमन्त्रित** त्रि॰ आ+मन्त्र-क्त । आमन्त्रिते, संबोधिते च । व्याकरणे संबोधने या प्रथमा तस्यां न॰ ।
**आमय** पु॰ आमं रोगं यात्यनेन या-ड । रोगे ।
**आमयाविन्** त्रि॰ आमयोऽस्यास्ति विनि दीर्घश्च । रोगयुक्ते ।
**आमर्शन** न॰ आ+मृश ल्युट । स्पर्शे । [निर्दीर्घमित्युक्त ।
**आमर्ष** पु॰ न+मृष-घञ् दीर्घः । क्रोधे, "निरुद्योगं निरामर्षं
**आमलक** पु॰ आ+मल वुन् । शाकवृक्षे । ङीप् । धात्र्याम् तिष्यफलायां च स्त्री॰ । तस्याः फलं फले लुग्विधि तद्धितस्य लुक् । धात्रीफले न॰ । [स्वनामख्याते वातरोगभेदे ।
**आमवात** पु॰ आमयति पीडयति अम-णिच्-अच् कर्म॰ ।
**आमातीसार** पु॰ कर्म॰ । स्वनामख्याते रोगभेदे । [स्थाने
**आमाशय** पु॰ आमस्याशय । नाभिस्तनयोर्मध्यभागे अपाक
**आमिक्षा** स्त्री॰ आमिष्यते सिच्यते मिष-सक् । तप्ते पक्वे दुग्धे दधियोगजायां (छाना) विकृतौ । [ख आमिक्षीयमप्यत्र ।
**आमिक्षीय** न॰ आमिक्षायै हितं छ । आमिक्षोपकरणे दधि
**आमिष** न॰पु॰ आ+मिष-क । मांसे, भोग्यवस्तुनि, उत्कोचे, रूपरसादौ, लोभवस्तुनि, लाभे, कामगुणे, भोजने, विषये च
**आमिषप्रिय** पु॰ ६त॰ । कङ्कपक्षिणि । मांसाभिलाषिणि त्रि॰
**आमिषाशिन्** त्रि॰ आमिषमश्नाति अश-णिनि । मांसभक्षके
**आमिषी** स्त्री॰ आमिषमात्मैकदेशनासिकायां जटामांस्याम् ।
**आमुक्त** त्रि॰ आ+मुच परिधाने क्त । परिहिते । कर्तरि क्त । परिहितकवचे जने । [मुक्तायां नाटकाङ्के प्रस्तावनायाम्
**आमुख** न॰ "आमुखं तद्विजानीयात् बुधैः प्रस्तावना मते"
**आमुष्मिक** त्रि॰ अमुष्मिन् परलोके भवः ठञ् टिलोपश्च । परलोके जन्मान्तरे भवे वस्तुनि । स्त्रियां ङीप् ।

**आमुष्यायण** त्रि॰ अमुष्याप्रत्ययीकृतस्यापि सद्वंशत्वेन सच्चरितत्वेन च प्रख्यातस्यापत्यं फक् षष्ठ्या अलुक् । सद्वंशोद्भवे ।
**आमोद** पु॰ आ समन्तात् मोदयति आ+मुद+णिच्-अच् । अतिदूरव्यापके गन्धे, गन्धमात्रे च । आ+मुद भावे घञ् हर्षे
**आमोदिन्** त्रि॰ आमोदोऽतिदूरगोगन्धोऽस्त्यस्मिन् । मुखसुगन्धितापादके कर्पूरादौ, हर्षवति च ।
**आम्नाय** पु॰ आम्नायते अभ्यस्यते आ+म्ना-घञ् । वेदे, आगमे निगमे, गुरुपरम्परागते, सदुपदेशे, वंशे, कुलक्रमस्य कथने च । भावे घञ् । अभ्यासे ।
**आम्र** पु॰ अम-रक् दीर्घश्च । स्वनामख्याते वृक्षे । तत्फलादौ न॰
**आम्रातक** पु॰ आम्रं तद्रसम् आ ईषत् अतति याति आ+अत ण्वुल् । आमडा इति ख्याते वृक्षे ।
**आम्रावर्त्त** पु॰ आम्र इव आ ईषत् तुल्यरसतया वर्तते आ +वृत अच् । आम्रातकवृक्षे ।
**आम्रेडित** न॰ आ+म्रेड-उन्मादे अच् उन्मत्तेनैवार्थ्यते । आम्रेड+आधारे क्विप् मत क्त । उन्मत्तेन यथाकथितस्य पुनः पुनः कथनं क्रियते एवं कथितस्य द्विस्त्रिःकथने ।
**आम्ला** स्त्री॰ आ सम्यक् अम्लो रसो यस्याः । तिन्तिड्याम् स्वार्थे कनि आम्लिकाप्यत्र ।
**आय** पु॰ आ-इण्-अच् । लाभे । प्राप्तौ, धनागमे, ज्योतिषोक्ते एकादशस्थाने, धामादौ स्वामिग्राह्यभागे वनितागाररक्षके च
**आयःशूलिक** त्रि॰ अयः शूलेनार्थानन्विच्छति । तीक्ष्णोपायेनाभीष्टसाधके जने । [श्चितयत्नशालिनि
**आयत** त्रि॰ आ+यम-क्त । दीर्घे, आकृष्टे च । आ+यत-अच् ।
**आयतच्छदा** स्त्री॰ आयतः छदोऽस्याः । कदल्याम् ।
**आयतन** न॰ आयतन्तेऽत्र यत-आधारे ल्युट् । देवादिवन्दन स्थाने, आश्रये, विश्रामस्थाने, यज्ञस्थाने च ।
**आयति(ती)** स्त्री॰ आ+या डति वा ङीप् । उत्तरकाले, प्रभावे, फलदानकाले च । आ+यम क्तिन् । सङ्गमे, दैर्घ्ये, प्रापणे च ।
**आयत्त** त्रि॰ आ+यत-कर्तरि क्त । अधीने, वशीभूते ।
**आयत्ति** स्त्री॰ आ+यत-क्तिन् । स्नेहे, वशित्वे, सामर्थ्ये, सीमनि, शयने, प्रभावे च । [लौहकाष्ठे स्त्री॰ ङीप् ।
**आयस** न॰ अयसा निर्मितं तद्विकारो वा अण् । लौहपात्रादौ
**आयस्त** त्रि॰ आ+यस-क्त । क्षिप्ते, क्रोधिते, हते तीक्ष्णीकृते
**आयाम** पु॰ आ+यम-घञ् । दैर्घ्ये ।
**आयास** पु॰ आ+यस घञ् । परिश्रमे, अतियत्ने च ।
**आयु** पु॰ इण्-उण् । जीवनकाले, "आ वधिरा जटायुः स्वामिनि"ति

भट्टिः । [कर्म्माध्यक्षे,कुशले च ।

**आयुक्त** त्रि० आ+युज-क्त । व्यापारिते, ईषद्युक्ते, नियुक्ते,

**आयुध** न० आ+युध-करणे घञर्थे क । प्रहरणमात्रे ।

**आयुधिक** पु० आयुधं शिल्पमस्य ठक् । शस्त्राजीवे । तदर्थे छ आयुधीययात्र । [सोपाङ्गे ।

**आयुर्वेद** पु० आयुर्विन्दतेऽनेन घञ् । चिकित्साशास्त्रे वेद-

**आयुर्वेदिन्** त्रि० आयुर्वेदोवेद्यत्वया विद्यतेऽस्य इनि । आयुर्वेदज्ञे चिकित्सके । [आवधिके तृतीये योगे पु० ।

**आयुष्मत्** त्रि० आयुर्विद्यतेऽस्य मतुप् । चिरजीविनि । विष्कु

**आयुष्य** त्रि० आयुषे हितम् यत् । आयुषोहितकारके पथ्ये । स्वार्थे यत् आयुषि न० । [रघुः ।

**आयुस्** न० इण-अभि-णिच् । जीवनकाले 'आयुषः क्षये' इति

**आयोग** पु० आ+युज-घञ् । गन्धमाल्योपहारे, व्यापारे,रोधे च

**आयोगव** पु०शूद्राद्वैश्यायामुत्पन्ने प्रतिलोमवर्णसङ्करजे जातिभेदे

**आयोजन** न० आ+युज ल्युट् । उद्योगे, आहरणे च ।

**आयोधन** न० आ+युध-आधारे ल्युट् । युद्धस्थाने । भावे ल्युट् । योधने, तत्फले वधे च ।

**आर** पु० ऋ-घञ् । मङ्गलग्रहे, शनिग्रहे,मधुराम्लफले वृक्षभेदे च । पित्तले, कोणे, प्रान्तभागे, सुवर्णलोहे च न० ।

**आरकूट** पु०न० । आरं पित्तलं कूटयति रूपीकरोति अच् । पित्तलाभरणे । 'किमारकूटाभरणेन न श्रियं'इति नैषधम् ।

**आरक्ष** पु० आ+रक्ष-अच् । हस्तिकुम्भाधःस्थले, हस्तिमस्तक सन्धौ, सैन्ये च । रक्षके त्रि० । भावे घञ् । रक्षायाम् ।

**आरग्वध** पु० रुजं-मन्त्राया क्विप् आरगं रोगमन्त्रामपि हन्ति वध् अधादेशश्च । सोंदाल इति ख्याते वृक्षे ।

**आरट्ट** पु० आरट्यते विख्याप्यते आ+रट टच् टस्य नेत्त्वम् । अश्वोत्पत्तिस्थाने (आरब) देशभेदे । [घोटके ।

**आरट्टज** पु० आरट्टे देशे जायते जन-ड । (आरब) स्थानजाते

**आरणि** पु०आ+ऋ अनिच् । आवर्त्ते पयसां स्रतोभ्रमे ।

**आरण्य** त्रि० अरण्ये भवः यक् । वनजाते मृगसिंहादौ ।

**आरण्यक** पु० अरण्ये भवः ततः स्वार्थे क । पथि, अध्याये, न्याये, विहारस्थाने मनुष्ये, हस्तिनि च । वेदस्यांशविशेषे न० । "आरण्यकमधीत्य चेति" मनुः ।

**आरति** स्त्री० आ-रम क्तिन् । उपरमे, निवृत्तौ च ।

**आरनाल** न० ऋच्छतीति आर० ऋ+ण, नल-गन्धे घञ् । आरो नालो गन्धो यस्य । काञ्जिके । वा अच् । आरनालकमप्यत्र

**आरभटी** आरभ्यतेऽनया आ+रभ-अटि ङीप् । नाट्यरचनाभेदे

**आरम्भ** पु० आ+रभ घञ् नुम् च । तत्राम्भ वेगे-उद्यमे,दर्पे, उपक्रमे, प्रस्तावनायाञ्च । कर्म्मणि-घञ् । आरभ्यमाणे ।

**आरम्भवाद** पु० आरम्भस्य वादो यत्र । न्यायमते वैशेषिक मते च "पृथिव्यप्तेजोवायूनां क्रियासंयोजितायव० द्वाणु कादिक्रमेणैवमारभन्ते इदं महदिति" तयोः स्वीकारात्

**आर(रा)व** पु० आ+रु-घञ् अप् वा । शब्दमात्रे ।

**आरा** स्त्री० आ+ऋ अच् । चर्म्मभेदकास्त्रभेदे । टेको इति ख्याते लौहास्त्रे च ।'आरासमानो ह्यवरोऽपीति" श्रुतिः

**आरात्** अव्य० आ+रा-आति । दूरे, समीपे च ।

**आरात्रिक** न० अरात्रावपि निर्वृत्तं ठञ् दीपो हि रात्रावेव प्रदर्श्यते इदं दिनेऽपि दर्श्यते । (आरति) नीराजनकर्म्मणि ।

**आराधन** न० आ+राध-ल्युट् । पाके, साधने, पूजने, तोषणे, प्राप्तौ च ।

**आराधना** स्त्री० आराध-युच् स्त्रीत्वात् टाप् । सेवायाम् ।

**आराम** पु० आ+रम-आधारे घञ् । उपवने, कृत्रिमवने, क्रीडार्थवने च । [वक्रगामिनि त्रि० ।

**आरालिक** पु० अरालं कुटिलं शिल्पमस्य ठक् । पाचके ।

**आरु** पु० ऋ-उण् । वृक्षभेदे, कर्कटे, शूकरे च ।

**आरेवत** पु० आरेवयति रेवयति मलं रेव-णिच्-विच् ततः अच् । अत्यन्तसारके (सोन्दाल) आरग्वधवृक्षे ।

**आरोग्य** न०अरोगस्य भावः ष्यञ् । रोगराहित्ये अनामये ।

**आरोग्यशाला** स्त्री० आरोग्यार्थं शाला । चिकित्सागृहे ।

**आरोप** पु० आ रुह-णिच्-पुक् घञ् । अतद्वति तद्धर्म्मा-वभासे यथा रज्ज्वां सर्पज्ञानम् । रूपकालङ्कारादौ च सत्यपि बाधज्ञानेऽभेदावबोधः यथा० न प्रतिरुध्यते ।

**आरोह** पु० आ+रुह-घञ् । दैर्घ्ये । उत्तमस्त्रीणां नितम्बे, आरोहणे, उच्छ्राये, परिमाणभेदे च ।

**आरोहण** न० आ+रुह-करणे ल्युट् । पाषाणादिरचिते उच्चप्रासादारोहणसाधने (सिंढि) सोपाने । भावे घञ् । निम्नस्थानादूर्द्ध-गमने ।

**आर्चिक** पु० ऋचां व्याख्यानं ठक् । ऋचां व्याख्याने । ऋक्षु भवः ठक् । ऋग्वेदभवे त्रि० । ऐकिक आर्चिकइत्यादय त्रि०

**आर्जव** पु० ऋजोर्भावः अण् । सरलतया परमतानुरोधाद्यहिंसे

**आर्त्त** त्रि० आ+ऋ-क्त । पीड़िते, दुःखिते, अप्रस्थे च ।

**आर्त्तव** न० ऋतौ भवम् अण् । स्त्रीपुष्पे, पुष्पे च । ऋतुरस्य प्राप्तः अण् । ऋतुजे फलपुष्पादौ त्रि० । स्त्रीधरणाम् स्त्री० ङीप् । [त्रिवृक्षाधात्र ।

**आर्त्ति** स्त्री० आ+ऋ-क्तिन् अर्ति भावे इति । पीडायाम्

**आर्त्विज्य** न० ऋत्विजः कर्म्म यत् । ऋत्विग्योग्ये कर्म्मणि ।

**आर्थिक** त्रि॰ अर्थं गृह्णाति अर्थात् आगच्छति वा ठक्। अर्थ-ग्राहके दूर्थागते च। [आरभ्य षष्ठे नक्षत्रे च स्त्री॰न॰।

**आर्द्र** न॰ अर्द्द-रक् दीर्घश्च। क्लिन्ने, सजलवस्तुनि। अश्विनीत

**आर्द्रक** न॰ आर्द्रायां भूमौ जातं वुन्। (आदा) ख्यनाम-ख्याते मूलभेदे।

**आर्य्य** पु॰ ऋ-ण्यत्। स्वामिनि, गुरौ, सुहृदि च। श्रेष्ठकुलो-त्पन्ने पूज्ये, श्रेष्ठे, सङ्गते, नाट्योक्तौ मान्ये, उदारचरिते, शान्तचित्ते "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। तिष्ठ-ति प्रकृताचारे स वा आर्य्य इति स्मृतः" इत्युक्तलक्षणे जने च त्रि॰।

**आर्य्यक** पु॰ अतिशयेनार्य्यः पितुरपि पूज्यत्वात् प्राशस्त्ये कन्। पितामहे, मातामहे च। स्वार्थे कन्। श्रेष्ठे त्रि॰।

**आर्य्यपुत्र** पु॰ आर्य्यः श्वशुरो गुरुश्च हृत॰। पत्यौ, गुरुपुत्रे च।

**आर्य्यावर्त्त** पु॰आर्य्याणामावर्त्तो देशः। 'आ समुद्रात्तु वै पूर्व्वा-दा समुद्रात्तु पश्चिमात्। हिमवद्विन्ध्ययोर्मध्यमार्य्यावर्त्तं प्रच-क्षते' इति मनूक्ते देशभेदे।

**आर्ष** त्रि॰ ऋषिभिः प्रोक्तम् स्मृतं वा अण्। ऋषिप्रणीते धर्म्मशास्त्रे, तत्स्मृते वेदे च। "आर्षं धर्म्मोपदेशञ्चेतिमनुः।" आर्षं आदाय गोयुगमित्युक्ते विवाहभेदे पु॰।

**आर्हत** पु॰अर्हन्नेव स्वार्थे अण्। बुद्धविशेषे। तत्सम्बन्धिनि त्रि॰।

**आर्हन्ती** स्त्री॰ अर्हतोभावः ष्यञ् नुम् च ङीप् यलोपः। योग्यतायाम्। [मङ्गुषु च त्रि॰।

**आल** न॰ आलयन्ति भूषयन्ति अच्। हरिताले। अनल्पे,

**आलभन** न॰ आ+लभ-ल्युट्। स्पर्शे।

**आलम्ब** पु॰ आ+लबि घञ्। अवलम्बे, आश्रये च।

**आलम्बन** न॰ आ+लबि-ल्युट्। आश्रये, अलङ्कारमते रसा-श्रये विभावे च। [लम्भमिति श्रुति" स्पर्शे च।

**आलम्भ** पु॰ आ+लभ घञ् नुम् च। वधे, "अश्वालम्भं गवा-

**आलय** पु॰ आलीयतेऽस्मिन् अच्। गृहे। अव्ययी॰ लयपर्य्य-न्ते। अव्य॰। "पिबत भागवतं रसमालयमि" ति भागव॰।

**आलयविज्ञान** न॰ आलयं विज्ञानम्। बौद्धमते लयपर्य्यन्त स्थायिनि अहङ्कारास्पदे विज्ञाने तन्मते हि सर्व्वज्ञानाना क्षणिकतयाऽनुभवजन्यसंस्कारस्य तस्मिन् ज्ञाने एव सङ्क-लनात् पूर्व्वानुभूतस्य स्मृतिसम्भवः।

**आलवाल** न॰ आ समन्तात् जललवमालाति आ+ला-क। वृक्षमूले सेकार्थं मृदादिघटिते जलाधारे सेतौ।

**आलस्य** न॰ अलसस्य भावः ष्यञ्। सत्यपि सामर्थ्येऽवश्य-कर्त्तव्येऽनुत्साहरूपेऽस्वभावे। अलस एव ब्राह्मणादित्वात् स्वार्थे ष्यञ्। अलसत्वयुक्ते। [रज्ज्वां, बन्धनमात्रे च।

**आलान** न॰ आलीयतेऽत्र आ+ली-ल्युट्। गजबन्धनस्तम्भे

**आलाप** पु॰ आ+लप-घञ्। कथोपकथने, सम्भाषणे च।

**आलाबू** स्त्री॰ आ+लबि ऊङ् नलोपश्च। तुम्ब्याम्।

**आलावर्त्त** न॰ आ समन्तात् अलमत्यर्थं वर्त्तते चाल्यते आ+अल+वृत-णिच् घञ्। वस्त्रनिर्म्मिते व्यजने।

**आलि(ली)** स्त्री॰ आ+अल इन्। आगन्तुकजलवारणार्थे शस्यसेकजलधारणार्थे च कृत्रिमे सेतौ, सख्यां सम-वयस्कायां, पङ्क्तौ, आरामादिष्वचन्द्रेशयाम्, सन्ततौ च। वा ङीप् आलीत्यप्यत्र। शुद्धान्तःकरणे अनर्थे च त्रि॰। भ्रमरे, वृश्चिके च पु॰।

**आलिङ्गन** न॰ आ+लिगि-ल्युट्। प्रीतिपूर्व्वकमन्योन्यदेह संश्लेषणे, परिरम्भे च। [मृदङ्गे च।

**आलिङ्ग्य** त्रि॰ आ+लिगि-ण्यत्। आलिङ्गनीये, यवाकृति-

**आलिञ्जर** पु॰ अलिञ्जर एव अण्। जाला इति ख्याते मृन्मये जलपात्रे मणिके।

**आलिम्पन** न॰ आ+लिप-ल्युट् मुम् च। मङ्गलार्थे लेपने।

**आलीढ** न॰ "नमिता पूर्व्वजङ्घा तु पश्चिमा प्रगुणा भवेत्। असमोमध्यकाय' स्यादालीढस्य च लक्षणमित्युक्तलक्षणे "आलीढं दक्षिणं पादमित्युक्तलक्षणे च धन्विनां पादविन्यास विशेषेणावस्थाने। आ+लिह-क्त। भुक्ते, क्षते च त्रि॰। 'सेनान्यमालीढमिवासुरास्त्रैरि ति रघु। भावे क्त लेहने न॰

**आलीनक** न॰ आईषत् प्रयासेन अग्निसंबन्धमात्रेण लीयते द्रवीभवति आ+ली-क्त संज्ञायां कन्। (राँ) इतिख्याते रङ्गे

**आलु** पु॰ आ+लु-डु। स्वनामख्याते कन्दभेदे, भेलके, पेचके मणिरि च। झारी इति ख्यातायां क्षुद्रघटिकायां स्त्री॰।

**आलुक** न॰ आलुरेव स्वार्थे कन्। मूलभेदे, काष्ठालुशङ्खालु प्रभृतिकन्दमात्रे च। शेषे भागे पु॰। आ-लू-क्विप् संज्ञायां कन् ङीप्। आलूकी रक्तालुभेदे स्त्री॰।

**आलेख्य** न॰ आ-लिख-आधारे-ण्यत्। चित्रपटादौ।

**आलेख्यशेष** त्रि॰ आलेख्यं चित्रमेव शेषो यस्य ब॰। मृते, तस्य चित्रे एव प्रतिकृतिरूपेण अवस्थानात्।

**आलोक** पु॰आ+लुक-घञ्। दर्शने, उद्द्योते, बन्दिनामालोकटे-त्यादि स्तुतिवाक्ये। "आलोकमर्कं वयसां विरावैरिति रघुः

**आलोचन** न॰ आ+लुच-ल्युट्। कर्त्तव्यतयाऽवधारणे, विवेचने च। "अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विक-ल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्। ततः परं पुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया। बुद्ध्याऽवसीयते सापि

प्रत्यक्षत्वेन सम्मते'ति सांख्योक्ते निर्द्धर्मके शुद्धवस्तुविषयके प्राथमिके ज्ञाने च ।
आवपन न० आउप्यते स्थाप्यतेऽत्र ल्युट् । धान्यस्थापनपात्रे (घड़ा इति ख्याते । वप-णिच्-भावे ल्युट् । सर्व्वमुण्डने ।
आवरक न० आ+वृ-करणे अप् संज्ञायां वुन् । अपवरके, आच्छादके वस्त्रादौ ।
आवरण न० आ+वृ-करणे ल्युट् । (ढाल) चर्म्ममयफलके । भावे ल्युट् । आच्छादने, वेदान्तमतेऽविद्यादिना ज्ञानप्रकाशाच्छादने च । [मिते च ।
आवर्जित त्रि० आ+वर्ज-क्त । आहृते, क्षिप्ते, दत्ते, आन-
आवर्त्त पु० आ+वृत-घञ् । चक्राकारेण जलस्य स्वयं भ्रमणे, भुजाख्ये रोमसंस्थानभेदे घोटकचिह्ने वामावर्त्तनामके मणौ आवर्त्तने, चिन्तने च । अच् । मेघाधिपभेदे माक्षिकधातौ च न०
आवर्त्तन न० आ+वृत-णिच् ल्युट् । (आवदान) दुग्धादेरालोडने । आवर्त्तते परिवर्त्तते यस्मिन् काले । मध्याह्नोत्तरं यदा पश्चिमतः पूर्व्वस्यां दिशि सूर्य्यच्छाया पतनं गच्छति, तस्मिन् काले 'आवर्त्तनसमीपे वेति स्मृतिः । धातुद्रव्यस्य द्रवीकरणे च ।
आवर्त्तनी स्त्री० आवर्त्त्यते द्रवीकृत्य आलोड्यतेऽत्र आ+वृत णिच्-आधारे ल्युट् । ताम्रादिधातुद्रव्यस्य द्रवीकरणाधारे मृण्मये (मुची) पात्रभेदे, मूषायाम् ।
आवर्त्तित त्रि० आ+वृत-णिच् क्त । अभ्यस्ते, गुणिते च ।
आवर्ह पु० आ+वृह-घञ् । उत्पाटने । [स्त्रियां ङीप् ।
आवश्यक त्रि० अवश्यं भव्यः मनोज्ञा० वुञ् । नियतकार्य्ये
आवसथ पु० आवसत्यत्र, वस-अथच् । वसतिस्थाने, विश्रामस्थाने, व्रतभेदे च । [नपनीतरूपे रागीकृते धान्ये च ।
आवसित त्रि० आ+अव+सो-क्त । पक्वधान्ये, मर्द्दनानन्तर
आवहमान त्रि० आ+वह शानच् । क्रमागते ।
आवाप पु० आ+वप-घञ् । आलवाले, (थल्या) पात्रभेदे, प्रक्षेपे, भाण्डे, वलये, शत्रुचिन्तने परराष्ट्रचिन्तने, निम्नोन्नत भूमौ, प्रधानहोमे च । [आभरणे वलयादौ ।
आवापक पु० आ+वप-कर्म्मणि घञ् संज्ञायां कन् । प्रको-
आवापन न० आ+वप-णिच्-ल्युट् । (तांत) सूत्रयन्त्रे ।
आवास पु० आ+वस आधारे घञ् । वासस्थाने गृहादौ ।
आवाहन न० आ+वह-णिच् ल्युट् । सान्निध्याय देवानामाह्वाने
आविक न० अविना मेषलोम्ना निर्म्मितं ठक् । कम्बले । अर्श-आद्यच् अवि सम्बन्धिनि त्रि० । [इति ख्याते करमर्द्दवृक्षे च ।
आविग्न पु० आ+विज कर्त्तरि क्त । उद्विग्ने (पाणिआमला)
आविद्ध त्रि० आ+व्यध-क्त । विद्धे, वक्रे, प्रेरिते, क्षिप्ते, अभिभूते, मूर्खे च ।
आविध पु० आविध्यतेऽनेन व्यध-घञर्थे क । काष्ठादिवेधनसाधने (भमर) (तुरपिन) सूच्याकाराग्रे अस्त्रे । [व्याप्ते च ।
आविष्ट त्रि० आ+विश-क्त । भूतादिग्रस्ते, आवेशयुक्ते, निविष्टे,
आविस् अव्य० आ+अव-इसुन् । प्रकाशे । एतच्छब्देन सह भूधातुः प्रकाशार्थे यथा आविर्भावः । कृञ्धातुः प्रकाशकरणेऽर्थे यथा आविष्कारः ।
आवीरचूर्ण पु० आ समन्तात् विशेषेण ईर्य्यते क्षिप्यते आ+वि+ईर-घञ् कर्म्म० । आवीर इति ख्याते फल्गुनि 'आवीरचूर्णं रुचिरं ददतां परमेश्वरे'ति पुराणम् ।
आवुक पु० आवति पालयति उण् संज्ञायां कन् । नाट्योक्तौ जनके
आवृत् स्त्री० आ+वृत-संपदादित्वात् क्विप् । परिपाट्यामनुक्रमे ।
आवृत त्रि० आ+वृ-क्त । वेष्टिते कृताच्छादने ।
आवृत्त त्रि० आ+वृत-क्त । निवृत्ते, 'आवृत्तानां गुरुकुलादि'ति स्मृतिः अभ्यस्ते, गुणिते च ।
आवृत्ति स्त्री० आ+वृत-क्तिन् । अभ्यासे, पुनःपुनर्गुणने 'चण्ड्याः शतावृत्तिपाठादि'ति पुराणम् । [टङ्कदारकवृक्षे ।
आवेगी स्त्री० आवेगोऽस्त्यस्याः अर्श आद्यच् गौरा० ङीप् ।
आवेश पु० आ+विश-घञ् । अहङ्कारभेदे, संरम्भे, अभिनिवेशे, आटोपे, अनुप्रवेशे, यथा भूतावेशः । ग्रहभये, भूतादिना रोगे च । [भूतावेशे रोगे, सूर्य्येन्दुपरिधौ च
आवेशन न० आ+विश-आधारे ल्युट् । शिल्पशालायाम्
आवेशिक त्रि० आवेशे गृहे भवः आगतो वा ठञ् । अतिथौ असाधारणे स्वकीये धान्यवाटौ च । [०(पिंडा) ।
आवेष्टक पु० आवेष्टयति ण्वुल् । आवरणकारके प्राचीरादौ
आशंसा स्त्री० आ+शंस-अ । अप्राप्तस्य प्राप्तीच्छायाम्, इष्टार्थाशंसने च । [क्त । कथने न० ।
आशंसित त्रि० आ+शंसि-क्त । वाञ्छिते, कथिते च । भावे
आशंसु त्रि० आ+शंस-उ । इच्छावति, इष्टार्थमाभेच्छौ, कथयितरि च ।
आशङ्का स्त्री० आ+शकि-अ । त्रासे, सन्देहे, ईषदितर्के च
आशय पु० आ+शी-अच् । अभिप्राये, आधारे, विभवे, पनसवृक्षे वैद्यकोक्ते अजीर्णे स्थाने च । आ फलविपाकात् चित्तभूमौ शेते इति कर्त्तरि अच् कर्म्मजन्ये धर्म्माख्ये संस्कारे, धर्म्माधर्म्मरूपे अदृष्टे च । आधारे अच् । आशयशति चित्ते । भावे अच् । शयने स्थाने च ।
आशर पु० आशृणाति आ+शृ-अच् । अग्नौ, राक्षसे च ।

**आशा** स्त्री० आ समन्तात् अश्नुते अश-अच् । दिशि, अप्राप्यो पायार्थविषयायाम् दीर्घाकाङ्क्षायाम् अनधिगतविषयायां तृष्णायां च । [धृत० । तृष्णासम्बन्धे दिशा बन्धे च ।

**आशाबन्ध** पु० आशा दिश बध्नाति अच् । मर्कटजाले, बन्ध-घञ्

**आशास्य** त्रि० आ+शास-ण्यत् । आशीःसाध्ये, आशंसनीये च "आशास्यमन्यत् पुनरुक्तमि"ति रघुः ।

**आशित** त्रि० आ+क्र्यादि० अश-क्त । भुक्ते, अशनेन तृप्ते च ।

**आशितङ्गवीन** अशितङ्गवीनवत् सर्व्वम् । दीर्घादिरिति बह्व

**आशितम्भव** पु० अशितम्भववत् सर्व्वम् । दीर्घादिरिति बह्व

**आशिस्** स्त्री० आ+शास-क्विप् इत्वम् । हितप्रार्थने अभीष्ट वृद्धिप्रार्थने, सर्पतालुस्थदन्ते, सर्पदंष्ट्रायामाशीरित्यपि रूपो० ।

**आशीर्व्वाद** पु० आशिषोवाद वद-घञ् । मङ्गलप्रार्थने आशीर्व्वचने च ।

**आशीविष** पु० आशिषि आश्यां वा विषोऽस्य रूपो० । सर्पे ।

**आशु** अव्य० अश-उण् । शीघ्रत्वे । वर्षाभवे षष्टिकादौ धान्ये, पाटले व्रीहौ च पुंस्० । क्षिप्रे त्रि० । क्रियाविशेषणत्वे न० ।

**आशुग** पु० आशु+गम-ड । वायौ, बाणे, सूर्य्ये च । शीघ्रगामिनि त्रि०

**आशुपत्री** स्त्री० आशु पत्रं यस्याः । शल्लकीलतायाम् ।

**आशुशुक्षणि** पु० आ+शुष सन्+अनि । अग्नौ, वायौ च ।

**आशौच** न० अशौचमेव स्वार्थेऽण् । अशौचशब्दार्थे वैदिककर्म्मानर्हत्वस्थायाम् ।

**आश्चर्य्य** न० आ इति चर्य्यतेऽभिनीयते आ+चर-ण्यत् सुट् च । अपूर्व्वे अद्भुते चित्ते, विस्मये च । अद्भुतवति त्रि० ।

**आश्मन** पु० आ+अश-मनन् । सूर्य्यसारथौ अरुणे । [रघुः

**आश्यान** त्रि० आ+श्यै-क्त । ईषद्घनीभूते 'पयशाश्यानकर्द्दमानि'ति

**आश्रम** पु० न० आ+श्रम-आधारे घञ् अवृद्धिः । ब्रह्मचर्य्यादिके शास्त्रोक्ते धर्म्मभेदे, मुनीनां वासस्थाने, मठे वने च कलौ तु ब्रह्मचर्य्यवानप्रस्थौ न स्तः गृहस्थभिक्षुकाश्रमावेव "गृहस्थो भिक्षुकश्चैव आश्रमौ द्वौ कलौ युगे" इति स्मरणात् सर्व्वक्लेशहानेन विश्रामस्थाने परमेश्वरे च ।

**आश्रमधर्म्म** पु० आश्रमेषु विहितो धर्म्मः । ब्रह्मचर्य्यादीनां शास्त्रविहिते धर्म्मे ।

**आश्रय** पु० आ+श्रि-अच् । सामीप्ये, आधारे, गृहे, राज्ञां सन्धिप्रभृतिषु षट्सु गुणेषु मध्ये प्रबलशत्रोराश्रयणरूपे गुणे च

**आश्रयाश** पु० आश्रयमाधारं काष्ठमश्नाति अश-अण् । वह्नौ ।

**आश्रव** पु० आ+श्रु-अप् । अङ्गीकारे, क्लेशे च । आशृणोति वाक्यमुपपादाय । प्रवर्त्तयितुं निवर्त्तयितुं वा यस्य वचनं स्थिते

**आश्रित** त्रि० आ+श्रि क्त । आश्रयप्राप्ते, शरणागते, आधेये च

**आश्रुत** त्रि० आ+श्रु-क्त । अङ्गीकृते, आकर्णिते च ।

**आश्लेष** पु० आ ईषदेकदेशेन श्लेष सम्बन्ध आ+श्लिष-घञ् । एकदेशसंबन्धे । [ऽण् । रथादौ त्रि० ।

**आश्व** न० अश्वानां समूहः अण् । अश्वसमूहे । अश्वैरुह्यते

**आश्वत्थ** न० अश्वत्थस्य फलमित्यणि तस्य न लुक् । अश्वत्थफले ।

**आश्वयुज** पु० आश्वयुजी अश्विनीनक्षत्रयुक्ता पौर्णमासी यस्मिन् मासेऽण् । शुक्लप्रतिपदादिके दर्शान्ते चान्द्रे आश्विने मासे

**आश्वयुजी** स्त्री० अश्वयुजा अश्विनीनक्षत्रेण युक्ता पौर्णमासी 'नक्षत्रेण युक्तः काल' इत्यण् । आश्विनमासीयपौर्णमास्याम्

**आश्वास** पु० आ+श्वस्-घञ् । निर्वृतौ आश्रयदाने भीतस्य भयनिवारणार्थं सान्त्वने च । [चान्द्रे मासि ।

**आश्विन** पु० आश्विनी पूर्णिमा यस्मिन् मासे । स्वनामख्याते

**आश्विनी** स्त्री० अश्विना अश्वाकारवता नक्षत्रेण युक्ता पूर्णिमा नक्षत्राण् । आश्विनमासिकपौर्णमास्याम् ।

**आश्विनेय** पु० द्वि० अश्विन्या अश्वाकारवत्याः सूर्य्यपत्न्याः संज्ञाया अपत्ये ढक् । स्वर्वैद्ययोः । [गम्ये स्थाने ।

**आश्वीन** त्रि० अश्वेनैकाहेनातिक्रम्यते खञ् । अश्वस्य एकाह

**आषाढ** पु० आषाढी पूर्णिमाऽस्मिन् मासेऽण् । स्वनामख्याते मासे

**आषाढी** स्त्री० आषाढया नक्षत्रेण युक्ता पूर्णिमा 'नक्षत्रेण युक्तः काल' इत्यण् । आषाढमासीयपौर्णमास्याम् ।

**आस** उपवेशने अदादि० आत्म० अक० सेट् । आस्ते आसिष्ट

**आस्** अव्य० आस क्विप् । स्मरणे, अपाकरणे, कोपे, सन्तापे, पीडायां, सगर्व्वतर्जने च ।

**आसक्त** त्रि० आ+सन्ज-क्त । आसङ्गे युक्ते विषयान्तरनिष्ठस्य तत्परे च । नित्ये सतते च न० । तद्वति त्रि० ।

**आसङ्ग** न० आ+सन्ज-घञ् । अभिनिवेशे, प्राप्यस्योपस्थितस्यापि नाशतो रक्षणाभिलाषे, भोगाभिलाषे, कर्त्तृत्वाभिमाने च । तद्युक्ते त्रि० । सौराष्ट्रमृदि स्त्री० ।

**आसत्ति** स्त्री० आ+सद क्तिन् । संसर्गे, लाभे, सन्निधौ । न्यायादिमते यत्पदार्थेन यत्पदार्थस्यान्वयापेक्षा तयोरव्यवधानेन पदेनोपस्थापने च ।

**आसन** न० आस-ल्युट् । उपवेशने । आधारे ल्युट् पीठादौ, हस्तिस्कन्धदेशे, सन्ध्यादिषु षट्सु नृपगुणेषु शत्रुदुर्गादिन्य बध्य स्थितौ, यात्रानिवृत्तौ, अष्टाङ्गयोगमध्ये स्वस्तिकपद्मासनादौ । आस्यते स्त्रु ण्यर्थेऽण् । जीरकवृक्षे पु० । युच् टाप् । स्थितौ ।

**आसन्न** त्रि० आ+सद-क्त । निकटस्थे, उपस्थिते च ।

**आसव** पु० आ+सु-अप् । मद्यमात्रे "मैरेयसुरासवैः मधे-

रपके रासभो भवेदि"त्युक्तप्रकारे मद्ये च । [तालवृक्षे

**आसवद्रु** पु० आसवस्य (ताडी) मद्यस्य कारणं द्रुः शाक० त०।

**आसादन** न० आ+सद-णिच्-ल्युट् । सन्निधापने, स्थापने च

**आसादित** त्रि० आ+सद्-णिच्-क्त । लब्धे, सन्निधापिते, आयोजिते च ।

**आसार** पु० आ+सृ घञ् । धारासम्पाते वेगवृष्टौ, प्रसरणे, सैन्यानां सर्वतो व्याप्तौ च । करणे घञ् । सुहृद्बले ।

**आसीनप्रचलायित** न० आसीनेन उपविष्टेनैव प्रचलवत् आचरितम् प्रचल-क्यच् क्त । उपविश्य निद्रावशेन प्रचलन रूपे (ढोला) दोलने । [घ्रादने (चोयान) इति ख्याते पाके

**आसुति** स्त्री० आ+सु-क्तिन् । सोमादिनिष्पीडने अभिषवे, मद्यनि-

**आसुतीवल** पु० आसुतिरस्यास्ति वलच् दीर्घः । शौण्डिके । सोमाभिषवशालिनि याज्ञिके त्रि० ।

**आसुर** पु० 'आसुरो द्रविणादाना'दित्युक्तलक्षणे धनदानेन कन्याविवाहे । असुरस्येदम् अण् । असुरसंबन्धिनि त्रि० । स्त्रियां ङीप् 'आसुरी रात्रिरन्यत्रे'ति स्मृतिः ।

**आसुरस्व** न० ष्ठत० । "अयज्वनान्तु यद्द्रव्यमासुरस्वं तदु- च्यते" इति मनूक्ते अयाज्ञिकधने ।

**आसेचन** त्रि० असेचन+स्वार्थेऽण् । असेचनार्थं यदतृप्तिकारकं यस्य दर्शनं तत्र । स्वार्थे कन् आसेचनकमप्यत्र ।

**आसेध** पु० आ+सिध-घञ् । राजाज्ञयाऽन्यत्र गमनादेः प्रति- षेधरूपेऽवरोधे ।

**आसेवा** स्त्री० आ+सेव-अ । अभिलाषपूर्वकं पौनःपुन्येन प्रवृत्तौ । [आधारे घञ् । रणे ।

**आस्कन्दन** न० आ+स्कन्द्-ल्युट् । शोषणे, आक्रमणे च ।

**आस्कन्दित** न० आ+स्कन्द्-स्वार्थे णिच्-क्त । अश्वगतिभेदे त्वरितगमने च । स्वार्थे कन् । आस्कन्दितकमप्यत्र ।

**आस्तर** पु० आ+स्तॄ-करणे अप् । हस्तिपृष्ठस्थकम्बले कुथ इति ख्याते । ल्युट् । आस्तरणमप्यत्र न० ।

**आस्तिक** त्रि० अस्ति परलोक इति मतिर्यस्य ठक् । परलोका- स्तित्ववादिनि "अस्तीत्युक्ता गतो यस्मादास्तिकस्तेन कथ्यते इति सिद्धान्तसंग्रहे सत्कारपूर्वकविश्वासे । आस्तीकोऽप्यत्र ।

**आस्तिक्य** न० आस्तिकस्य भावः कर्म वा । वैदिकधर्मे श्रद्धायाम्

**आस्तीकजननी** स्त्री० ष्ठत० । जरत्कारुमुनिपत्न्यां जरत्कारु- नाम्न्यां वासुकिभगिन्यां मनसादेव्याम् ।

**आस्था** स्त्री० आ+स्था-अङ् । आलम्बने, अपेक्षायां, श्रद्धा- यां, स्थितौ, यत्ने च । आधारे अङ् । प्रतिष्ठायां, स्थाने च ।

**आस्थान** न० आ+स्था-आधारे ल्युट् । सभायां, विश्रामस्थाने च । स्त्रीत्वमपि तत्र ङीप् । आस्थानीत्यप्यत्रैवार्थे ।

**आस्थित** त्रि० आ+स्था-क्त । आरूढे प्राप्ते, अङ्गीकृतवति च

**आस्पद** न० आ+पद-घ सुट् च । प्रतिष्ठायाम्, पदे, स्थाने, कृत्ये, प्रभुत्वे च । ["ऐरावतास्फालनकर्कशेने"ति कुमारः

**आस्फालन** न० आ+स्फुर-णिच् ल्युट् स्फालादेशः । चालने

**आस्फोट** पु० आ+स्फुट-अच् । स्वयं फलस्य स्फोटनात् अर्कवृक्षे (तालठोका) मल्लादेर्बाहुादेर्हस्ततालेन शब्दकरणे च । (हाप- रमाली) वनमल्लयां स्त्री० । ल्युट् आस्फोटनमप्यत्र न० ।

**आस्फोटक** पु० आस्फोटोऽर्कस्येव इव । (आखरोट) शैलपीलौ

**आस्फोटनी** स्त्री० आस्फोट्यते विदार्यतेऽनया आ+स्फुट-णिच्- करणे ल्युट् स्त्रीत्वात् ङीप् । (तुरपन) वेधनास्त्रे ।

**आस्फोत** पु० आ+स्फुट-अच् पृषो० टस्य तत्वम् । अर्कवृक्षे कोविदारवृक्षे, भूपलाशवृक्षे च । स्वार्थे कन् । आस्फोतकोऽर्कवृक्षे

**आस्फोता** स्त्री० आ+स्फुट-अच् पृषो० । अपराजितायां, वनमल्लयाम् (हापरमाली) लताभेदे च ।

**आस्य** न० अस्यते ग्रासोऽत्र+अस-आधारे ण्यत् । मुखे । मुखमध्ये च । आस्ये भवः यति यलोपः । मुखभवे त्रि० ।

**आस्यपत्र** न० आस्यमेव पत्रमस्य । पद्मे ।

**आस्यलाङ्गल** पु० आस्यं लाङ्गलमिव भूविदारकं यस्य । शूकरे

**आस्यलोमन्** न० ष्ठत० । पुरुषमुखजाते लोम्नि (दाड़ि) ।

**आस्या** स्त्री० आस-ण्यत् टाप् । स्थितौ, आसने च ।

**आस्यासव** पु० आस्यस्यासव इव प्रभवः ष्ठत० । लालायाम् (थुथु) (लाल) इति ख्यातायाम् । [अप् । निरन्तरास्रवणे ।

**आस्रव** पु० आस्रवति मनोऽनेन करणे अप् । क्लेशे । भावे

**आस्वाद** पु० आ+स्वद-कर्मणि घञ् । रसे । भावे घञ् । रसानुभवे

**आह** अव्य० आ+हन-ड । आक्षेपे, नियोगे, दृढसम्भाषणे, उवाचेत्यर्थे 'अथाह वर्णी विदितो महेश्वर'इति कुमारः ।

**आहत** त्रि० आ+हन-क्त । गुणिते, ताडिते, अभ्यस्तेऽभी- त्यादौ मृषार्थके वाक्ये च । ढक्कायाम् पु० । पुरातने नूतने च वस्त्रे न० ।

**आहतलक्षण** पु० आहतमभ्यस्तं लक्षणं यस्य । गुणैः प्रथिते

**आहर** पु० आ+हृ-अप् । उपहारे, अन्तःस्थितस्य वायोर्मु- खेन वहिर्गतौ ।

**आहव** न० आहूयन्तेऽस्मिन्योद्धारः आ+ह्वे-अप् संप्रसारणे गुणः । युद्धे । आहूयतेऽत्र आ+हु अप् । यज्ञे ।

**आहवनीय** पु० आहवनमर्हति छ । गार्हपत्यादग्नेरुद्धृत्य हो- मार्थं कृतसंस्कारे वह्नौ । आ+हु-अनीयर् । हवनीये ।

**आहार** पु० आ+हृ घञ् । आहरणे, द्रव्यमात्रस्य भक्षण-क-

रणकृपे भोजने च। 'नीराहाराश्च ये जीवा' इति स्मृतौ जलपानेऽप्याहारशब्दः। कर्म्मणि घञ्। अन्नादौ भक्ष्ये।

**आहार्य्य** त्रि० आ+हृ-ण्यत्। आहरणीये, आगन्तुके, कृत्रिमे, आरोपे नाट्ये रचिते रसादिव्यञ्जकभूषादौ च।

**आहाव** पु० आ+ह्वे-घञ् संप्रसारणे वृद्धिः। कूपसमीपे गवादीनां जलपानाय प्रस्तरादिना रचिते(खाल)जलाशये, युद्धे, आह्वाने च। [कृते, कृताधानसंस्कारे च।

**आहित** त्रि० आ+धाञ्-क्त। न्यस्ते, स्थापिते, अर्पिते,

**आहितुण्डिक** त्रि० अहितुण्डेन दीव्यति ठक्। व्यालग्राहिणि

**आहुत** त्रि० उद्देश्यस्य आभिमुख्येन साक्षादेव हुतं हु-क्त। गृहस्थकर्त्तव्येषु पञ्चसु यज्ञेषु। मनुष्ययज्ञे भूतयज्ञे चेत्यन्ये।

**आहुति** स्त्री० आ+हु-क्तिन्। देवोद्देशेन मन्त्रेणाग्नौ हविः क्षेपे

**आहेय** न० अहेरिदम् ढक्। सर्पसंबन्धिनि चर्म्मविषादौ।

**आहो** अव्य० आ+हन-डो। प्रश्ने, विकल्पे, विचारे च।

**आहोपुरुषिका** स्त्री० अहमेव पुरुषः शूरः मयू० अहो पुरुष-तस्य भाव० वुञ् स्त्रीत्वात् टाप्। दर्पजन्ये आत्मनि उत्कर्षसम्भावने।

**आहोस्वित्** अव्य० आहो च स्विच्च द्व०। विकल्पे, प्रश्ने च।

**आह्निक** त्रि० अह्ना साध्यं ठञ्। दिनसाध्ये, स्नानसन्ध्यातर्प णादौ च। इदमर्थे ठञ्। दिनसम्बन्धिनि। अध्याया-न्तर्गते ग्रन्थस्य प्रकरणसमूहे न०।

**आह्लाद** पु० आ+ह्लद घञ्। आनन्दे। [च।

**आह्वय** पु० आ+ह्वे श। नामनि संज्ञायाम् प्राणिसाधने द्यूते

**आह्वान** न० आ+ह्वेञ् ल्युट्। आकारणे आहूतौ च।

## इ

**इ** पु० अस्य विष्णोरपत्यम् अ+इञ्। कामे। अस्येदम् अ+इञ्। भेदे, रोषोक्तौ, निराकरणे, अनुकम्पायाम्, खेदे, विस्मये, निन्दायाम्, सम्बोधने च। [उद्राभञ्जन इत्युद्भट'।

**इ** गतौ भ्वादि० पर० सक० अनिट्। अयति ऐषीत्। अयमुदयति

**इक्** स्मरणेऽधिपूर्व्वक एव कित् अदादि० पर० सक० अनिट्। अध्येति अध्यैषीत् इण इव तिङि न क्ङिति। अधीयन्।

**इक्षु** पु० इष-क्सु। मधुररसयुते अभिपर्व्वे स्वनामख्याते वृक्षे।

**इक्षुकाण्ड** पु० इक्षोः काण्ड इव काण्डोऽस्य। काशतृणे।

**इक्षुकुट्टक** पु० इक्षुं कुट्टयति कुट्ट-ण्वुल्। गुडकारके तृणी-बलादौ। [क्षुद्रगोक्षुरे च।

**इक्षुगन्ध** पु० इक्षोरिव गन्ध एकदेशावयवो यस्य। काशतृणे,

**इक्षुगन्धा** स्त्री० इक्षोर्गन्ध इव गन्धोऽस्याः। क्षीरविदार्याम्, कृष्णभूमिकुष्माण्डे, काशे, गोक्षुरे च। स्वार्थे के अत इत्वम्। इक्षुगन्धिका भूमिकुष्माण्डे। [धान्यविशेषे।

**इक्षुतुल्या** स्त्री० इक्षुणा तुल्या पत्रादिना। (जनार)।

**इक्षुनेत्र** न० इक्षुर्नीयते पुनरुत्पादनायारोप्यतेऽनेन नी-ष्ट्रन्। इक्षोर्नेत्रमिव वा इक्षूत्पादके इक्षुनेत्राकारे तद्ग्रन्थौ।

**इक्षुपत्र** पु० इक्षोः पत्रमिव पत्रमस्य। (जनार) धान्यभेदे।

**इक्षुभ** पु० इक्षुरिव भूयते भू कर्म्मणि घञर्थे क। शरवृक्षे।

**इक्षुमती** स्त्री० इक्षुरसद्रवोऽस्त्यस्यां मतुप्। नदीभेदे।

**इक्षुमूल** पु० इक्षोर्मूलं ग्रन्थिरिव मूलं ग्रन्थिर्यस्य। वंशवृक्षे। ६त०। इक्षुमूले तद्ग्रन्थौ न०। [इक्षुनिष्पीडने यन्त्रे।

**इक्षुयन्त्र** न० इक्षोस्तन्निष्पीडनस्य यन्त्रम्। (गह्वाशाल)

**इक्षुर** पु० इक्षुमिक्षुगन्धं राति रा-क। (तालमाखना) कोकिलाख्ये वृक्षे, काशे च। ततः स्वार्थे क। तत्रार्थे, स्थूलशरे च।

**इक्षुरस** पु० इक्षो रस इव रसो यस्य। (नड़ा) इति ख्याते तृणभेदे। ६त०। इक्षोः रसे।

**इक्षुरसक्काथ** पु० इक्षुरसस्य क्काथः पाकभेदः। गुडे।

**इक्षुवल्ली(ल्लरी)** स्त्री० इक्षुरिव सुस्वादा वल्ली वल्लरी वा लता। क्षीरविदार्याम्। [इक्षुक्षेत्रे।

**इक्षुव(टि)टीका** स्त्री० इक्षोर्वाटीव इवाऽर्थे के वा ह्रस्वः।

**इक्षुवालिका** स्त्री० इक्षुरिव वलति ण्वुल्। तालमाखना इति ख्याते वृक्षे, काशे च।

**इक्षुशर** पु० इक्षुरिव शृणाति शॄ-अच्। काशभेदे तद्वने गन्तगोमिक्षेतेर्दष्टत्वात् तस्येक्षुरत् हिंसकत्वम्।

**इक्षुशाकट** पु० इक्षूणां भवनं क्षेत्रम् इक्षु+शाकटच्। (दो) (कल्प) इति ख्याते इक्षुभवनयोग्ये क्षेत्रे। तदर्थे शाकिन्। इक्षुशाकिन्शब्दोऽप्यत्रार्थे।

**इक्षुसार** पु० ६त०। गुडे। [वंशाम् सूर्य्यवंशे आदिराजे च।

**इक्ष्वाकु** पु० इक्षुमिच्छामाकरोति इक्षु+आ+कृ-डु। कटुतु-

**इक्ष्वारि** पु० इक्षुरिवाक्रमणादृच्छति आ+ऋ-इन्। काशतृणे

**इक्ष्वालिका** पु० इक्षुरिव अलति आप्नोति ण्वुल्। काशे।

**इख** गतौ भ्वादि० पर० सक० सेट्। एखति ऐखीत्।

**इखि** गतौ इदित् भ्वादि० पर० सक० सेट्। इङ्खति ऐङ्खीत्।

**इगि** गतौ इदित् भ्वादि० पर० सक० सेट्। इङ्गति ऐङ्गीत्।

**इङ्** अध्ययने अधिपूर्व्व एव ङित् अदा० आत्म० सक० अनिट्। अधीते अध्यैष्ट अध्यगीष्ट। अधिजगे, अध्येष्यत अध्यगीष्यत।

**इङ्गित** न० इगि-क्त। अभिप्रायव्यञ्जकदेहचेष्टायाम्।

**इङ्गुद** पु० इं० उ इङ्गुः रोगस्तम् द्यति दो-क। तापसतरौ

गौरा० ङीप् इङ्गुदीत्यप्यत्र । [त्रि०।

**इच्छुक** पु० इष-शक । टाबालेबु इति ख्याते वृक्षे । इच्छायुक्ते

**इच्छा** स्त्री० इष-श । इदं मे भूयादिति मनोधर्मभेदे सुखे तत्साधने च चित्तवृत्तौ न्यायमते,"निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते । इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि" इत्युक्तदिशा सुखादिज्ञानेन तत्साधनत्वज्ञानेन च जायमाने इदं मे भूयादित्येवं रूपे आत्मधर्मे अभिलाषे च ।

**इच्छावती** स्त्री० इच्छाऽस्त्यस्याः मतुप् मस्य वत्वम् । मैथुनेच्छावत्यां कामुकायाम् इच्छामात्रयुक्तायाञ्च ।

**इच्छु** त्रि० इष-उ नि० । इच्छायुक्ते, इच्छाशीले च । [वृक्षे ।

**इज्जल** पु० इष्-क्विप् तुक् इत् जलं यस्य । (हिजल) निचुल

**इज्य** पु० इज्यतेऽसौ यज-क्यप् । सुरगुरौ, नारायणे च । पूज्ये त्रि०

**इज्या** स्त्री० यज-भावे क्यप् स्त्रीत्वात् टाप् । यज्ञे, यज्ञेऽर्थदानाद्यर्थत्वात् दाने, सङ्गमे च । कर्मणि क्यप् । प्रतिमायां, गवि, कुट्टन्याञ्च । [यच् । पुनःपुनर्यज्ञकारके ।

**इज्याशील** त्रि० इज्यां यज्ञं शीलयति पुनः पुनराचरति शील-

**इट** गतौ भ्वादि० पर० सक० सेट् । एटति ऐटीत् ।

**इड़ा** स्त्री० इल अच् वा लस्य डत्वम् । गवि, वाचि, भूमौ, स्वर्गे, वामपार्श्वस्थायाम् वक्रायां नाड्याञ्च ।

**इण्** गतौ चित् अदादि० पर० सक० अनिट् । एति ऐषीत् ।

**इतर** त्रि० इना कामेन तर० तॄ-अ । नीचे भिन्ने पामरे च ।

**इतरेतर** त्रि० इतर+द्वित्वम् । अन्योन्यार्थे परस्परार्थे ।

**इतरेतरयोग** पु० इतरेतरस्य परस्परस्य योग एकपदार्थान्वयित्वेन संबन्धः । सार्थविशेषे, व्याकरणे यत्र द्वन्द्वसमासे समस्यमानानां पदानां प्राधान्यं तदर्थे ।

**इतरेद्युस्** अव्य० इतर-एद्युस् । अन्यस्मिन्नहनीत्यर्थे ।

**इतस्** अव्य० इदम्+तसिल् । अस्मिन्नित्यर्थे ।

**इतस्ततः** अव्य० इतश्च ततश्च । अस्मिन् तस्मिन्नित्यर्थे ।

**इति** अव्य० इण-क्तिच् । हेतौ, प्रकाशने, निदर्शने, प्रकारे, अनुकर्षे, समाप्तौ, प्रकरणे, स्वरूपे, सान्निध्ये, विवक्षानियमे, मते, प्रत्यक्षे, अवधारणे, व्यवस्थायाम्, परामर्शे, माने, इत्थमर्थे, प्रकर्षे, उपक्रमे च ।

**इतिकर्त्तव्यता** स्त्री० इति इदं कर्त्तव्यं तस्य भावः । इदं कृत्वा इदं कुर्यादित्येवं परिपाटीरूपे कर्मानुष्ठानक्रमे ।

**इतिह** अव्य० इति एवं ह किल द्व० । उपदेशपरम्परायाम् यथाऽत्र वटे यक्ष इत्युपदेशपरम्परैव न तु केनापि दृष्टा तथा कथितम् ।

**इतिहास** पु० इतिह पारम्पर्योपदेश आस्तेऽस्मिन् इतिह+आस घञ् । "धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् । पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" इत्युक्तलक्षणे पुरावृत्तप्रकाशके भारतादिग्रन्थे ।

**इत्थम्** अव्य० इदम्+थमु । इदंप्रकारे अनेन प्रकारेणेत्यर्थे

**इत्थम्भूत** त्रि० इदंप्रकारं भूतः प्राप्तः भू-क्त । एवं प्रकारमाप्ते

**इत्वर** त्रि० इण् क्वरप् । पथिके, नीचे, क्रूरकर्मणि च । षण्ढे पु० । अभिसारिकायां स्त्री० ।

**इद** ऐश्वर्ये इदित् भ्वादि० पर० अक० सेट् । इन्दति ऐन्दीत्

**इदम्** त्रि० इदि कमि नि० । पुरोवर्त्तिनि दृश्ये चराच

**इदानीम्** अव्य० इदम्+दानीम् इश् च । सम्प्रत्यर्थे ।

**इद्ध** न० इन्ध-भावे क्त । आतपे, दीप्तौ, आश्चर्ये च । कर्त्तरि क्त । इद्धे, निर्मले च त्रि० ।

**इध्म** न० इन्ध-मक् । समिधि, अग्निसन्दीपने काष्ठे च ।

**इन** पु० इण-नक् । सूर्य्ये, प्रभौ, नृपविशेषे च ।

**इन्दिरा** स्त्री० इदि इरच् । लक्ष्म्याम् । [नीलोत्पले ।

**इन्दि(न्दी)वर** न० इन्दिरिन्दी वा लक्ष्मीस्तस्या वरमभीष्टम् ।

**इन्दीवरिणी** स्त्री० इन्दीवर+समूहे देशे वार्थे इनि । उत्पलसमुदाये, तद्युक्तलतायाञ्च । [शतमूल्याम् ।

**इन्दीवरी** स्त्री० इन्दी लक्ष्मीं वृणाति वृ-अच् गौरा० ङीष् ।

**इन्दु** पु० उनत्ति चन्द्रिकया भुवं क्लिन्नां करोति उन्द-उ आदेरिच्च । चन्द्रे, तद्देवताके मृगशिरोनक्षत्रे तत्क्रमसंख्ये एकसंख्यायुक्ते, कर्पूरे च ।

**इन्दुकलिका** स्त्री० इन्दुरिव शुभ्रा कलिका यस्याः । केतक्याम्

**इन्दुकान्तः** पु० इन्दुः कान्तोऽभीष्टोऽस्य । चन्द्रकान्ते मणौ ।

**इन्दुजनक** पु० ६त० । समुद्रे । [नद्याम् ।

**इन्दुजा** स्त्री० इन्दोर्जायते जन ड । सोमोद्भवायां नर्म्मदायां

**इन्दुपुत्र** पु० ६त० । बुधग्रहे । [जाङ्गलीवृक्षे ।

**इन्दुपुष्पिका** स्त्री० इन्दुरिव शुभ्रं पुष्पमस्याः । (विषलाङ्गला

**इन्दुभृत्** पु० इन्दुं बिभर्त्ति भृ-क्विप् । शिवे । [राजपत्न्याञ्च ।

**इन्दुमती** स्त्री० इन्दु+मास्त्यस्य मतुप् । पूर्णिमायाम्, अज-

**इन्दुरत्न** न० ६त० । मुक्तायां तस्याश्चन्द्रदेवताकत्वात् ।

**इन्दुलेखा** स्त्री० इन्दोर्लेखेव । चन्द्रकलायाम् । तदंशनामक सोमलतायाम्, तदंशत्वाप्यायनकारिण्यामृतायां, तदङ्कलगुणत्वात् यमानिकायाञ्च ।

**इन्दुलोहक** न० ६त० । इन्दुदेवताके लोहके, रौप्ये धातौ ।

**इन्दुवल्ली** स्त्री० ६त० । चन्द्रनामिकायां सोमलतायाम् ।

**इन्द्र** पु० इदि+रन् । देवाधिपे, परमेश्वरे, इन्द्रदैवते ज्येष्ठानक्षत्रे,

द्वादशार्कमध्ये अर्कभेदे, इन्द्रतुल्यसंख्याके चतुर्दशसंख्यान्विते, विष्कुम्भादितः षड्विंशे योगे, कुटजवृक्षे च ।

इन्द्रक न० इन्द्रस्य कं सुखमिव कं यत्र । सभागृहे ।

इन्द्रकील पु० इन्द्रस्य कील इव अत्युच्चत्वात् । मन्दरपर्वते ।

इन्द्रकोष पु० इन्द्रस्य कोष इव सुखदायकत्वात् । मञ्चे, खट्वायाञ्च

इन्द्रगोप पु० इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात् । इन्द्रर-क्षिते रक्तवर्णे कीटभेदे ।

इन्द्रजाल न० इन्द्रेण कौशलादैश्वर्येण जालं दृष्टेर्नैवावरणम् यथास्थितवस्तुदर्शनाचमत्कसाधनात् । मन्त्रौषधादिना अन्य-थास्थितस्य वस्तुनोऽन्यथात्वेन दर्शनसाधने कुहके (वाजी)।

इन्द्रजालिक त्रि० इन्द्रजालं शिल्पमस्य ठन् । कुहककारिणि

इन्द्रजित् पु० इन्द्रं जितवान् जि-भूते क्विप् । रावणसुते मेघनादे

इन्द्रतूल न० इन्द्रस्येव तूलमाकाशे उड्डीयमानत्वादिन्द्र-स्वामिकत्वम । आकाशे मरुता चाल्यमाने कार्पासे सूत्रे ।

इन्द्रदारु पु० इन्द्रस्य नन्दनवनस्य दारु अत्युच्चायततयाकाश-गामित्वादिन्द्रभुवनदारुत्वम् । देवदारुवृक्षे ।

इन्द्रद्रु पु० इन्द्रस्य द्रुरिव । अर्ज्जुनवृक्षे, कुटजवृक्षे च ।

इन्द्रधनुस् न० इन्द्रस्य धनुरिव । 'रविकिरणा बहुवर्णा वातेन विलोडिता नभसि'। शक्रायुधसंस्थाना दृश्यन्ते तत्तु इन्द्रधनुरि'त्युक्ते नभसि वायुचालिते शक्रधनुरा-कारेण परिणते रविकिरणे ।

इन्द्रध्वज पु० न० इन्द्रस्य ध्वज । भाद्रशुक्लद्वादश्यां नृपैः प्रजावृद्ध्यर्थं पूज्यमाने उच्छ्रिते शक्रदेवताके ध्वजे ।

इन्द्रनील पु० इन्द्र इव नील । "चीरमध्ये विपेदीश चौरं चेतनीलता नयेत् । इन्द्रनीलमि"ति ख्यातमित्युक्तलक्षणे (पान्ना) मरकतमणौ ।

इन्द्रपुष्पा स्त्री० इन्द्र इव नीलं पुष्पमस्याः (विषलाङ्गला) लाङ्गलीवृक्षे । ब० वा कपि । इन्द्रपुष्पिकाप्यत्र । [पुरे ।

इन्द्रप्रस्थ न० इन्द्रस्य तत्स्थानमेरौ प्रस्थ इव (दिल्लीति) ख्याते

इन्द्रभेषज न० इन्द्र इव भेषजं श्रेष्ठत्वात् । (शुट्) शुण्ठ्याम् ।

इन्द्रमहकामुक पु० इन्द्रमहं कामयते कम उक । कुक्कुरे ।

इन्द्रयव न० पु० इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यवो बीजम् । कुटजवृक्षस्य यवाकारे तिक्तरसे बीजे स्व-नामख्याते । [रोगे । इन्द्रेण लुप्तं । त्रि०।

इन्द्रलुप्त न० ३त०। (टाक) इति ख्याते मस्तकोपरि केशनाशके

इन्द्रलुप्तिक त्रि० इन्द्रलुप्तमस्यास्ति ठन् । (टाक) रोगयुक्त शीर्षके (टेको) इतिख्याते जने ।

इन्द्रवंशा स्त्री० वर्णवृत्तेषु द्वादशाक्षरपादके छन्दोभेदे ।

इन्द्रवज्रा स्त्री० वर्णवृत्तेषु एकादशाक्षरपादके छन्दोभेदे ।

इन्द्रवारुणी स्त्री० इन्द्रं वारयति वृ० णिच् उनन् । (राखाल शसा) तिक्तरसायां श्वेतमूलायां पीतपुष्पायां लतायाम् ।

इन्द्रवृक्ष पु० ६त० । देवदारुवृक्षे ।

इन्द्रवृद्धा स्त्री० ३त०। व्रणरोगभेदे ।

इन्द्रव्रत न० इन्द्रस्येव वर्षणे व्रतम् । 'वार्षिकांश्चतुरो मासान् यथेन्द्रोऽप्यभिवर्षति । तथाभिवर्षेत् स्वं राष्ट्रं कामैरिन्द्र-व्रतं चरन्नि'ति स्मृत्युक्ते प्रजापालने राज्ञोव्रतभेदे ।

इन्द्रशत्रु पु० इन्द्रः शत्रुः घातयिता यस्य । वृत्रासुरे ।

इन्द्रसावर्णि पु० चतुर्दशे मनौ । [वालिनामके वानरे च ।

इन्द्रसुत पु० ६त० । जयन्ते मध्यमपाण्डवे पार्थे, अर्ज्जुनवृक्षे,

इन्द्रसुरस पु० इन्द्रः कुटजवृक्ष इव सुरसः पथ्यरसः । (निसिन्दा) सिन्धुवारे ।

इन्द्राणिका स्त्री० इन्द्रं कुटजमिव आनयति शोधनेन जीवयति अन णिच् ण्वुल् स्वार्थे कन् गत्वम् । निर्गुण्ड्याम्(निसिन्दा)

इन्द्राणी स्त्री० इन्द्रस्य पत्नी ङीप् आनुक् च । शचीनाम्न्या मिन्द्रपत्न्याम् । इन्द्रं कुटज इव आनयति अन णिच्-अण् (निसिन्दा) सिन्धुवारे वृक्षे स्थूलैलायां, सूक्ष्मैलायां, गौर्य्यादिषु षोडशमातृकासु मध्ये षष्ठ्यां मातृकायाञ्च ।

इन्द्रानुज पु० ६त०। विष्णौ, स हि कश्यपाददितौ वामनरूपेण इन्द्रस्य पश्चात् जातः । इन्द्रावरजोऽप्यत्र ।

इन्द्रायुध न० इन्द्रस्यायुधं धनुरिव । इन्द्रधनुःशब्दार्थे ।

इन्द्राशन पु० इन्द्रेण अश्यते भुज्यते कर्म्मणि ल्युट् । (सिद्धि) भङ्गायाम् ।

इन्द्रिय न० इन्द्रस्य आत्मनः लिङ्गमनुमापकम्, तेन दृष्टं मम चक्षुः मम श्रोत्रमित्येवमभिमतम इन्द्रेण ईश्वरेण सृष्टं, 'घोषितं वेत्याद्यर्थे इन्द्र+घ । आत्मनो विषयोपलब्धिकरण-तयेश्वरसृष्टेषु ज्ञानकर्मसाधनेषु चक्षुरादिषु । [मतिवन्धे

इन्द्रियनिग्रह पु० ६त०। स्वस्वविषयेभ्यश्चक्षुरादीनां प्रवृत्ति

इन्द्रियवध पु० ६त०। इन्द्रियाणां स्वस्वकार्य्याक्षमत्वरूपे "बा-धिर्य्यं कुष्ठतान्धत्वं जडताऽजिघ्रता तथा । मूकता कौण्य पङ्गुत्वक्लैव्योदावर्त्तमत्तता" इत्युक्तप्रकारे एकादशेन्द्रि-याणां क्रमेणैकादशविधे घाते ।

इन्द्रियवृत्ति स्त्री० ६त०। "शब्दादिषु पञ्चानामालोचनमात्र मिष्यते वृत्तिः । वचनादानविहरणोत्सर्गानन्दाश्च पञ्चाना-मि'ति सांख्योक्ते श्रोत्रादीनां शब्दादिषु प्रकाशनार्थं व्यापारे।

इन्द्रियसंप्रयोग पु० इन्द्रियाणां संप्रयोगः स्वस्वविषयेषु प्र-योगः व्यापारणम् । इन्द्रियसम्बन्धे । इन्द्रियसन्निकर्षोऽप्यत्र

**इन्द्रियार्थ** पु॰ इन्द्रियाणामर्थो विषय । शब्दस्पर्शरूपरस-
गन्धात्मके इन्द्रियवेद्ये विषये ।

**इन्द्रियायतन** न॰ ६त॰ । शरीरे ।

**इन्द्रियार्थसन्निकर्ष** पु॰ इन्द्रियाणामर्थैः स्वस्वविषयैः सह
सन्निकर्षः सम्बन्धः । प्रत्यक्षज्ञानहेतौ इन्द्रियविषयसंयोगे ।

**इन्ध** दीप्तौ भ्वादि॰आत्म॰अक॰ सेट् । इन्धते, ऐन्धिष्ट ।

**इन्धन** न॰ इध्यतेऽग्निरनेन इन्ध-करणे ल्युट् । काष्ठे ।

**इभ** पु॰ इण्-भ किच्च । हस्तिनि, तत्तुल्यसंख्यके अष्टसंख्यान्विते च

**इभकणा** स्त्री॰ इभोपपदा कणा शाक॰त॰ । गजपिप्पल्याम् ।

**इभदन्ता** स्त्री॰ इभस्य दन्त इव शुभ्रं पुष्पमस्याः । शुभ्र
पुष्पवत्या नागदन्त्याम्, विषौषधौ च ।

**इभनिमीलिका** स्त्री॰ इभं हस्तिनमपि निमीलयति सेवनात्
निद्रापयति । भङ्गायाम् ।

**इभपालक** पु॰ इभं पालयति । (माहुत) हस्तिपके ।

**इभया** स्त्री॰ इभैर्यायते भक्ष्यतया प्राप्यते या कर्म्मणि क ।
स्वर्णक्षीरीवृक्षे । [न्टपे च ।

**इभ्य** त्रि॰ इभं हस्तिनमर्हति यत् । प्रचुरधनवति आढ्ये,

**इभ्या** स्त्री॰ इभाय हिता इभ+यत् । शल्लकीवृक्षे । [ङीप्

**इयत्** त्रि॰ इदं परिमाणमस्य इदम् वतुप् । एतावदर्थे स्त्रियां

**इयत्ता** स्त्री॰ इयतो भावः तल् । सीमायां, परिमाणे, संख्यायाञ्च

**इरम्मद** पु॰ इरया जलेन माद्यति वर्द्धते इरा-मद खश्
ह्रस्व मुम् च । वज्राग्नौ वाडवानले च ।

**इरा** स्त्री॰ इण् रक् इ कामं राति रा-क वा । भूमौ, वाचि,
सुरायाम्, जले, अन्ने च । [जलचरे, भूचरे च त्रि॰

**इराचर** न॰ इरायां चरति चर ट । (शिल) करकायाम् ।

**इराज** पु॰ इरया सुरया वीयतेऽसौ अज घञ् । कन्दर्पे ।

**इरावती** स्त्री॰ इरा भूमिम् अवति अव-शतृ ङीप् । वट-
पत्त्रीवृक्षे, सा हि पाषाणभेदनेनापि भूमिमागच्छति ।

**इरिण** न॰ ऋ इन किच्च । ऊषरभूमौ, निरालम्बे, शून्ये च

**इरेश** पु॰ ६त॰ । वरुणे, वागीशे, भूमिपतौ, विष्णौ च ।

**इर्वारु** स्त्री॰ उर्व्व आरु पृषो॰ । (काँकुड) कर्क्कट्याम् । आलु ।
इर्व्वालुरप्यत्र । [फुटी (स्वयं भिन्नपक्वकर्क्कट्याम्) ।

**इर्व्वारु(लु)शुक्तिका** स्त्री॰ इर्वारुः शुक्तिकेव स्वयं स्फोटनात्

**इल** गमने अक॰गतौ क्षेपे च सक॰ तुदा॰ पर॰सेट् । इलति

**इल** क्षेपणे चुरा॰ उभ॰सक॰ सेट् । एलयति ते ऐलिलत् त ।

**इलविला** स्त्री॰ पुलस्त्यमुनिपत्न्याम् कुबेरजनन्याम् । एतस्य-
स्यापत्यत्वेनैव कुबेरस्य ऐलविल इति नाम ।

**इला** स्त्री॰इल-क । भूमौ, गवि, वाचि, जम्बुद्वीपस्थनववर्षमध्ये
वर्षभेदे तत्सीमा चेलावृतशब्दार्थे वक्ष्यते । वैवस्वतमनुक-
न्यायां बुधपत्न्याम् । सा हि विष्णुवरात् पुंस्त्वमासाद्य
पुनः शङ्करशापात् स्त्रीत्वं गता बुधस्तु तामुपयम्य पुरूरवस-
मुत्पादयामासेति पुराणे प्रसिद्धम् ।

**इलावृत** न॰इला पृथिवी वृता येन । नववर्षात्मकजम्बुद्वीपस्य
वर्षभेदे तच्च वर्षं "पश्चान्माल्यवतः प्राच्यां गन्धमादन-
शैलतः । इलावृतं नीलगिरेर्याम्यतो निषधादुदक्" इत्यु-
क्त यत् सीमावच्छिन्ने देशेऽस्ति ।

**इल्ली** स्त्री॰ इल-इन् ङीप् । (छालकुरी) करवालिकायाम् ।

**इल्लीश** ॰ इल्लीव करवालिकेव शोभते शुभ-ड । करवालिका
सदृशावयवे स्वनामख्याते मत्स्यभेदे ।

**इल्वल** पु॰ इल वलच् नि॰ गुणाभावः अत्यन्तचञ्चले मत्स्यभेदे,
वथिवनाशिते दैत्यभेदे च मृगशिरोदेशस्थपञ्चताराशिर
स्थासु तारासु स्त्री॰ ब॰व॰ ।

**इव** व्याप्तौ इदित् भ्वा॰पर॰सेट् सक॰ । इन्वति ऐन्वीत् ।

**इव** अव्य॰ इण्-क्वन् । सादृश्ये, उत्प्रेक्षायाम्, ईषदर्थे, वाक्यालङ्कारे च

**इष** गतौ सर्पणे च दिवा॰पर॰सक॰सेट् । इष्यति, ऐषीत् ।

**इष** वाञ्छायाम् तुदा॰पर॰सक॰सेट् । इच्छति, ऐषीत् एषिता
एष्टा एषित्वा इष्ट्वा । इष्ट । [एषित एषित्वा ।

**इष** पौन पुन्ये क्र्यादि॰ पर॰ अक॰ सेट् । इष्णाति ऐषीत् ।

**इष** पु॰ इष-गतौ क्विप् यात्रा जिगीषूणा याज्ञस्मिन् अर्थं
आद्यच् । आश्विने मासि ।

**इषि(षी)का** स्त्री॰ ईष गत्यादिषु (इ) ईकन् किच् ह्रस्वश्च ।
गजनेत्रगोलके । दीर्घमध्यस्थ काण्डे, मुञ्जामध्यवर्त्तितृणे च

**इषु** पु॰ स्त्री॰ ईष्यते हिंस्यतेऽनेन ईष उ किच् ह्रस्वश्च । बाणे
तत्तुल्यसंख्ये पञ्चसंख्यान्विते च ।

**इषुधि** पु॰ स्त्री॰ इषवो धीयन्तेऽत्र धा-कि । बाणाधारे तूणे ।

**इषुपुङ्खा** स्त्री॰ इषोः पुङ्खमिव पुष्पमस्याः । शरपुङ्खावृक्षे ।

**इष्ट** त्रि॰ इष क्त । पूजिते अभिलषिते, प्रिये च । यज-क्त ।
यज्ञादौ धर्म्मणि, एरण्डवृक्षे च पु॰ । संस्कारे न॰ ।
"एकाग्निकर्म्म हवनं त्रेतायां यच्च हूयते । अन्तर्वेद्याञ्च
यद्दानमिष्टं तदभिधीयते । अग्निहोत्रं तपः सत्यं वेदाना-
ञ्चार्थपालनम् । आतिथ्यं वैश्वदेवञ्च प्राङ्कुरिष्टमित्युक्तलक्षणे
धर्म्मकार्य्ये च ।

**इष्टका** स्त्री॰ इष-तकन् । (इट्) मृदादिनिर्म्मिते वस्तुखण्डभेदे

**इष्टकापथ** न॰ इष्टकाभिनिर्म्मितः पन्थाः । इष्टकानिर्म्मिते
पथि । इष्टकापथमपानं यस्य । अधोवायुहेतौ उशीरे ।

**इष्टगन्ध** त्रि॰ इष्टो गन्धो यस्य । सुगन्धिद्रव्ये । वालुकायां न॰

इयम् । उपाध्यायस्य पत्न्यर्थे ङीष् आनुक् वा उपाध्यायानी उपाध्यायी च । [कायाम् ।

उपाग्रह स्त्री० उप+आ+ग्रह-क्विप् उपसर्गदीर्घः । चर्मपादुकायाम्

उपान्त पु० उपमितमन्तेन प्रा०स० । निकटे, प्रान्ते च ।

उपान्त्य त्रि० उपान्ते भवः यत् । अन्तसमीपभवे ।

उपाय पु० उप+अय+घञ् । साधने, उपगमे, रिपु-निराकरणहेतुषु सामादिषु च । [गमने च ।

उपायन न० उप+अय-ल्युट् । तोषकारके उपहारे, समीप-

उपारत त्रि०उप+आ+रम-क्त । निवृत्ते 'उपारताः पश्चिमरात्रगोचरादि'ति भारविः ।

उपालम्भ पु० उप+आ+लभ-घञ् मुम् च । निन्दापूर्वकदुष्टवचने, परस्परदूषणे च ।

उपावृत्त त्रि० उप+आ+वृत-क्त । श्रमापनयनाय पुनःपुनर्भूमिलुठितेऽश्वे, प्रतिनिवृत्ते च । [त्रि० ।

उपासक त्रि० उप+आस-ण्वुल् । उपासनकर्त्तरि, सेवके च

उपासङ्ग पु० उपासज्यते शरा अत्र । उप+आ+सन्ज-घञ् । तूणे । [सेवने । युच् । देवतादाराधने स्त्री० ।

उपासन न० उप+आस-क्षेपे ल्युट् । शराभ्यासे । आस+ल्युट्

उपासित त्रि०उप+आस-क्त । सेविते, कृतोपासने देवादौ च ।

उपास्ति स्त्री० उप+आस-क्तिन् । उपासनायाम् 'यदुपास्तिमसावलेति' कुसुमाञ्जलिः ।

उपाहित पु० उप आसन्नमाहितं यतः । उल्कापातादौ अग्न्युत्पातजन्ये उपद्रवे । उप+आ+धा क्त । आरोपिते, योजिते च त्रि० ।

उपेक्षक त्रि० उप+ईक्ष ण्वुल् । विवादिनोर्जयपराजयासंदर्शके, तत्तद्दर्शविषादशून्ये, उदासीने, प्रतीकाराद्युदासते च

उपेक्षा स्त्री० उप+ईक्ष-अ । त्यागे "इदं न मम स्यादिति" ज्ञानभेदे, औदासीन्ये, अनपेक्षणे च ।

उपेन्द्र पु० उपगत इन्द्रम् अनुजत्वात् । विष्णौ । स हि कश्यपात् अदितौ इन्द्रादपरं वामनरूपतया संजातः ।

उपेन्द्रवज्रा स्त्री० एकादशाक्षरपादके छन्दोभेदे ।

उपेय त्रि० उप+इण्-यत् । उपायसाध्ये, प्राप्ये च ।

उपोढ त्रि० उप+वह-क्त । सन्निवेशविशेषयुक्ते व्यूढे सैन्ये निकटे, ऊढे कृतविवाहे च ।

उपोत्तम त्रि० उपगतमुत्तममन्त्यम् । अन्त्यसमीपे उपान्त्ये ।

उपोदकी स्त्री० उपगतमुदकमत्र । पूतिकायाम् (पुइशाक ।

उपोद्घात पु० उप+उद्+हन-घञ् । प्रकृतोपपादके उदाहरणे प्रकृतार्थं वर्णयितुमर्थान्तरवर्णने, "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधा" इत्युक्तलक्षणायां चिन्तायाञ्च ।

उपोषण न० उप+उष-ल्युट् । उपवासे अहोरात्राभोजने ।

उपोषित न० उप+वस+भावे-क्त । उपवासे । कर्त्तरि क्त । उपवासकर्त्तरि त्रि० । [धान्यादौ क्षेत्रे ।

उप्त त्रि० वप-क्त । कृतवापे धान्यादौ । अधिकरणे क्त । उप्त-

उप्तकृष्ट त्रि० पूर्वमुप्तं पश्चात् कृष्टं पूर्वकालेत्यादि स० । बीजवपनानन्तरं कृष्टे क्षेत्रे (बीजाकृते क्षेत्रे) । (काड़ान) ।

उब्ज आर्जवे तुदा० पर० सक० सेट् । उब्जति औब्जीत् ।

उभ त्रि० द्वित्व० । उ-भक् । द्वित्वविशिष्टार्थे । अस्य समासादिवृत्तौ प्रयोगो नास्ति । [र्थे ।

उभय त्रि० उभौ अवयवौ यस्य उभ+अयट् । द्वित्वविशिष्टे-

उभयतस् अव्य० उभ-तसिल् वृत्तौ अयः । उभयपार्श्वे ।

उभयथा अव्य० उभ+थाल् । वृत्तौ अयः । उभयप्रकारेणेत्यर्थे

उभयद्युस् अव्य० उभ-द्युस् वृत्तौ अयः । उभयदिनयोः । एद्युस् । उभयेद्युरप्यत्र ।

उम् अव्य० उ-डुम् । रोषे, स्वीकारे, प्रश्ने च ।

उमा स्त्री० ओ: शिवस्य मा लक्ष्मीः । दुर्गायाम् 'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगामे'ति निरुक्तायां पार्वत्याम् । उं शिवं माति मतिलेन मन्यते मा+क । शिवपत्नीत्वम् । वे-मक् संप्रसारणम् । हरिद्रायाम् अतसीवृक्षे (मसिना) कीर्त्तौ, कान्तौ, शान्तौ च ।

उमाकट पु० उमाया अतस्या हरिद्राया वा रज कटच् । अतस्या हरिद्रायाश्च रजसि । [भिशादयोऽप्यत्र ।

उमाधव पु०उमाया धवः पतिः ६त० । महादेवे । उमाकान्तो-

उमासुत पु० ६त० । कार्त्तिकेये । उमापुत्रादयोऽप्यत्र ।

उम्भ पूर्त्तौ तुदा० पर०सक० सेट् । उम्भति औम्भीत् ।

उर गतौ (सौत्रः) पर० सक० सेट् । ओरति औरीत् ।

उरग पु० उरसा गच्छति उरस्+गम-ड सलोपश्च । सर्पे, तद्देवताके अश्लेषानक्षत्रे च ।

उरगाशन पु० उरगानश्नाति उरग+अश् ल्यु उप० स० । गरुडे । ल्युट् । उरगाशनम् सीसके न० ।

उरण पु० ऋ० क्यु, धातोरुत्वञ्च । मेषे । [(दादमर्दन) वृक्षे ।

उरणाक्ष पु०उरणस्य मेषस्य अक्षीव अक्षि पुष्पं यस्य । दद्रुघ्ने

उरभ्र पु० उरु उत्कटं भ्रमति भ्रम-ड पृषो०उलोपः । मेषे ।

उररी अव्य० वे ररीक् । अङ्गीकारे, विस्तारे च ।

उररीकृत त्रि० उररी+कृ-क्त । अङ्गीकृते, विस्तृते च ।

उरश्छद पु०उरश्छाद्यतेऽनेन छद-णिच्-घ ह्रस्वः । कवचे ।

उरस् न० ऋ-असुन् धातोरुत्वञ्च । वक्ष स्थले ।

उरसिज पु० उरसि जायते जन-ड त० सप्तम्या अलुक् ।

क्लीबवीजाते स्तने । [प्रशस्तवक्षोयुते ।
उरसिल त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मत्वर्थीय इलच् ।
उरस्कट पु० उरः कथ्यते व्याप्रियतेऽनेन कट-घञर्थे क ।
बालानामुत्तरीयभेदे तदीये यज्ञोपवीताकारे वस्त्रभेदे च ।
(बुकधाऴा) । [उरस्त्राणमप्यत्र न० ।
उरस्त्र न० उरस्त्रायते त्रै-क । वक्षोरक्षके कवचे । ल्युट् ।
उरस्य पु० उरसा निर्म्मितः उरस्+यत् । स्वजाते औरसे पुत्रे
उरस्वत् त्रि० प्रशस्तमुरोऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः ।
प्रशस्तवक्षोयुते ।
उरी अव्य० वेञ् रीक् । अङ्गीकारे, विस्तारे च ।
उरीकार पु० उरी+कृ-घञ् । स्वीकारे, विस्तारे च ।
उरीकृत त्रि० उरी+कृ-क्त । अङ्गीकृते, विस्तृते च । [वा ङीप्
उरु त्रि० ऊर्णु-कु नुलोपो ह्रस्वश्च । विशाले, महति च स्त्रियां
उरुक्रम पु० उरुर्महान् क्रमः पादोविक्रमो वा यस्य । विष्णौ
उरुबूक पु० उरु-वै-ऊक आलोपश्च । एरण्डवृक्षे रक्तैरण्डे च
उरोज पु० उरस् जन-ड त० । स्त्रीस्तने । [(माकडशा) मर्कटके
उर्णनाभ पु० ऊर्णेव सूत्रं नाभौ गर्भेऽस्य अच् समा० ह्रस्वः ।
उर्णा स्त्री० ऊर्णूयते आच्छाद्यते ऊर्णु-ड ह्रस्वश्च । मेषादिलोम्नि
उर्द माने स्वादे च सक० क्रीडायाम् अक० भ्वा० आत्म० सेट् । ऊर्दते
उद्र पु० उर्द-रक् । जलबिडाले (उद्बिराल)
उर्व हिंसायां भ्वा० पर० सक० सेट् । ऊर्वति और्वीत् ।
उर्वरा स्त्री० उरु-ऋ-अच् । सर्वशस्ययुतायां भूमौ ।
उर्वशी स्त्री० उरून् अश्नुते वशीकरोति उरु+अश-क गौरा०
ङीष् । स्वर्गवेश्यायाम् ।
उर्वशीरमण पु० ६त० । चन्द्रवंश्ये बुधपुत्रे पुरूरवोनामके राज्ञि
उर्वारु पु० उरु-ऋ-उण् । कर्कट्याम् । स्वार्थे कन् तत्रैव ।
उर्वी स्त्री० उरु+स्त्रियां गुणवचनत्वात् ङीष् । भूमौ ।
उल दाने (चौल:) पर० सक० सेट् । ओलति औलीत् ।
उलप पु० न० वल-कपच् संप्रसारणम् । शाखापत्रप्रचययुतायां
लतायाम् । कोमले तृणभेदे न० (उलुखड़) ।
उलूक पु० वल-समवाये ऊक संप्रसारणम् । पेचके, इन्द्रे, दुर्य्यो
धनामात्यशकुनिपुत्रे च । तृणभेदे न० । (उलुखड़)
उलूखल न० ऊर्द्ध्वं खम् उलूखं पृषो० तत् लाति गृह्णाति
ला-क । धान्यादिकण्डनसाधने काष्ठमये पात्रे (उखरी)
गुग्गुलौ च । [शिशुके, (शोशक) मत्स्यभेदे च
उलूपिन् पु० स्त्री० शम्भोरिव रूपमस्यास्ति इनि रस्य लत्वम् ।
उलूलु पु० उरु उरु इति रस्य लत्वम् । हर्षसूचके माङ्गल्यादौ
स्त्रीध्वनिभेदे "उच्चैरुलूलुध्वनिरुच्चचार"इति नैषधम् ।

उल्का स्त्री० उष-दाहे क नि० षस्य लः । रेखाकारे गगनात्
पततेजःपुञ्जे । [भेदे (ख्याकशियाली)
उल्कामुखी स्त्री० उल्केव रात्रौ ज्वलत् मुखं यस्याः । शृगाली
उल्मुक न० उष-दाहे मुक, षस्य लः । अङ्गारे ।
उल्लल त्रि० उद्-लल-अच् । बहुरोमयुक्ते ।
उल्ललित त्रि० उद्-लल-क्त । तरलिते, आन्दोलिते च । [पु०
उल्लाघ त्रि० उद्+लाघ-क्त नि० । रोगनिर्मुक्ते, दक्षे, शुचौ, च । मरिचे
उल्लाप पु० उद्+लप-घञ् । काकुवाक्ये, शोकरोगादिना
ध्वनेर्विकारे च । [स्थानीये परिच्छेदे च
उल्लास पु० उद्+लस+घञ् । प्रकाशे, आह्लादे, ग्रन्थस्याध्याय
उल्लिखित त्रि० उद्+लिख-क्त । उत्कीर्णे तनूकृते उपरि
लिखिते, घर्षिते च ।
उल्लेख पु० उद्+लिख-घञ् । उच्चारणे, अलङ्कारभेदे साहि० द०
उल्लेखन न० उद्+लिख-ल्युट् । वमने, खनने, उच्चारणे च
उल्लोच पु० उद्+लोच-घञ् । चन्द्रातपे विताने ।
उल्लोल पु० उद्+लोड़-घञ् डस्य लत्वम् । महातरङ्गे ।
उल्व न० वल-वन् संप्रसारणञ्च । गर्भवेष्टनचर्म्मणि जरायौ ।
उल्वण त्रि० उद्+वण-अच् पृषो० दस्य लः । व्यक्ते, स्पष्टे ।
उ(ष)शती स्त्री० उष-शतृ, वश-शतृ संप्रसारणम् वा ।
स्त्रियां ङीप् । अकल्याणायां वाचि ।
उशनस् पु० वश-कनसि । भार्गवे शुक्रे । सौ उशना संबुद्धौ
उशनन् उशन, उशनः ।
उशीर पु० न० वश-ईरन् किच्च । (खस खस्) वीरणमूले ।
उष वधे, दाहे च भ्वादि० पर० सक० सेट् । ओषति, औषीत् ।
उष वधे दाहे च भ्वादि० पर० सक० वेट् । ओषति औषीत्, औक्षीत्
उष पु० उष-क दिने गुग्गुलौ, रात्रिशेषे, क्षारमृत्तिकायां च
कामनायुक्ते त्रि० । [च (चर) ।
उषण न० उष-क्युन् । मरिचे । पिप्पल्यां, शुण्ठ्यां चविके
उषर्बुध पु० उषसि संध्यायां बुध्यते होमार्थं प्रज्वालने प्रकाशते
उषस्+बुध-क अहरादित्वात् रः । अग्नौ, रक्तचित्रके च ।
उषस् न० उष-असि किच्च । प्रत्यूषे, पञ्चपञ्चाशद्घटिकोत्तरकाले
उषसी स्त्री० उषं तापकत्वात् दिवसं स्यति उष+सो-क गौरा०
ङीष् । सायं सन्ध्यायाम् ।
उषा स्त्री० उष-क टाप् । "तेजःपरिहानिरुषा भानोरर्द्धोदयं
यावदि"ति वराहोक्ते काले बाणराजसुतायाञ्च ।
उषाकल पु० उषायां कलः शब्दोऽस्य । कुक्कुटे ।
उषापति पु० उषाया बाणराजसुताया पतिः । अनिरुद्धे
कन्दर्पात्मजे कृष्णपौत्रे । उषाकान्तादयोऽप्यत्र ।

उषित त्रि॰ उष-क्त । पर्य्युषिते दग्धे च । वस-क्त । स्थिते ।
उष्ट्र पु॰ उष-ष्ट्रन् कित्व । स्वनामख्याते पशुभेदे, वाह्यरथे च ।
उष्ण पु॰ उष-नक् । ग्रीष्मे ऋतौ, आतपे, पलाण्डौ नरकभेदे, शीतभिन्ने स्पर्शे च । तद्वति, आलस्यरहिते दक्षे च त्रि॰।
उष्णक त्रि॰ उष्णमिव करोति कन् । अनलसे, क्षिप्रकारिणि च उष्णं करोति उष्ण+णिच् । ण्वुल् ज्वरे पु॰ ।
उष्णगु पु॰ उष्णा गावः किरणा अस्य । सूर्य्ये । उष्णरश्मिरप्यत्र
उष्णनदी स्त्री॰ कर्म॰ “यमद्वारे महाघोरे नम्रा वैतरणी नदी”त्युक्तायाम् उष्णनद्यां वैतरण्याम् ।
उष्णवारण न॰ उष्णं वारयति वृ-णिच्-ल्यु । आतपत्रे, छत्रे
उष्णवीर्य्य पु॰ उष्णमुग्रं वीर्य्यमस्य । शिशुमाराख्ये जलजन्तौ । उष्णवीर्य्यवति त्रि॰ ।
उष्णांशु पु॰ उष्णा अंशवो यस्य । सूर्य्ये ।
उष्णागम पु॰ उष्णस्यागमोऽस्मिन् । निदाघकाले ।
उष्णासह पु॰ उष्णम् आसह्यतेऽत्र आ+सह-अच् । हेमन्ते ऋतौ । उष्णं न सहते अच् । असह्योष्णे त्रि॰ ।
उष्णिका स्त्री॰ अल्पमन्नमस्याम् अल्पार्थे कन् नि॰ अन्नस्य उष्णादेशः । यवागवाम् (याउ) । उष्णकशब्दात् टाप् । दत्तायाम्
उष्णिह् स्त्री॰ उत्स्निह्यति क्विन् नि॰ षत्वम् । सप्ताक्षरपादके छन्दोभेदे । सादौ उष्णिक् उष्णिग्भ्याम् ।
उष्णीष पु॰ न॰ उष्णमीषते हिनस्ति ईष-क शक॰ पररूपम् । शिरोवेष्टनवस्त्रे, (पागडी) किरीटे च ।
उष्णोपगम पु॰ उष्णस्य उपगमोऽत्र । निदाघकाले ।
उष्म पु॰ उष-मक् । निदाघे, आतपे, ग्रीष्मे ऋतौ च ।
उष्मपा पु॰ उष्मं पिबन्ति पा-क्विप् । भृगोः पुत्रे पितृगणभेदे।
उस्र पु॰ वसन्ति रसा अत्र वस रक् । किरणे, सूर्य्यकिरणाना जलहेतुत्वात् रसवत्त्वम् । वृषे च । सुरभ्यां उपचित्रा लतायां च स्त्री॰ । [उपरि च
उह वधे भ्वादि॰पर॰सक॰सेट् । ओहति औहत्, औहीत्,
उहू अव्य॰ उ च हु च द्व॰ । संबोधने, एवार्थे च ।
उहूहु अव्य॰ उहु च हु च । सम्बोधने । [कर्म्मणि च ।
उह्यमान त्रि॰ वह-कर्म्मणि शानच् । आकृष्यमाणे, वहन-

## ऊ

ऊ अव्य॰ वेञ् क्विप् । संबोधने, वाक्यारम्भे, दयायां, रक्षायाञ्च
ऊ पु॰ अवतीति अव-क्विप् ऊठ् । महादेवे चन्द्रे च । पालके त्रि॰
ऊत त्रि॰ वेञ्-तन्तुसन्ताने क्त । स्यूते, स्नेहेन पायिते च ।
ऊति स्त्री॰ वेञ्-क्तिन् । स्यूतौ । अव-क्तिन् नि॰ । रक्षणे, लीलायां, शरणे च । [स्त्रीराधारे आपीने (बेंड)
ऊधस् न॰ उन्द-असुन् नि॰ उतो दीर्घः । स्त्रीगव्यादेः
ऊधस्य न॰ ऊधसि भवम् ऊधस्+यत् । दुग्धे ।
ऊन परिहाणे अदन्तचुरा॰ उभ॰ अक॰ सेट् । ऊनयति ते औनिनत् त औनयीत् औनयिष्ट ।
ऊन त्रि॰ ऊन-हानौ अच् । हीने, असंपूर्णे च ।
ऊम् अव्य॰ ऊय-मुक् । रोषोक्तौ, प्रश्ने, निन्दायां, स्पर्द्धायाञ्च
ऊय तन्तुसन्ताने भ्वा॰ आत्म॰सक॰सेट् । ऊयते औयिष्ट ।
ऊररी अव्य॰ ऊय-ररीक् । अङ्गीकारे, विस्तारे च ।
ऊरव्य पु॰ ऊरु+भवार्थे यत् । वैश्ये । तस्य ब्रह्मण ऊरुतो जन्म ‘ऊरू वैश्य’ इति श्रुतेः प्रसिद्धम् । ऊरुसम्भवे त्रि॰।
ऊरी अव्य॰ ऊय-रीक् । अङ्गीकारे, विस्तारे च ।
ऊरु पु॰ ऊर्णूयते आच्छाद्यते ऊर्णु-कर्म्मणि कु नुलोपश्च । जानूपरिभागे ।
ऊरुज पु॰ ऊरोर्ब्रह्मण ऊरोर्जायते जन-ड । वैश्ये ।
ऊरुपर्व्वन् पु॰ ऊरोः पर्व्वेव । जानुनि (हांटु)
ऊरुस्तम्भ पु॰ ऊरुं स्तभ्नाति अण् । स्वनामख्याते रोगे ।
ऊरुस्तम्भा स्त्री॰ ऊरोरुपमानभूत स्तम्भो यस्याः । कदलीवृक्षे ।
ऊर्ज्ज जीवने बले च चु॰ उभ॰ अक॰ सेट् । ऊर्ज्जयति, ते और्ज्जिजत् त ।
ऊर्ज्ज पु॰ ऊर्ज्ज-आधारे अच् । कार्त्तिके मासि । भावे घञ् । बले, उत्साहे च । असुनि सान्तोऽप्ययमत्रार्थे ।
ऊर्ज्जस्वल त्रि॰ ऊर्ज्जस्+अस्त्यर्थे वलच् । बलवति । विनि । ऊर्ज्जस्वीत्यप्यत्र ।
ऊर्ज्जित त्रि॰ ऊर्ज्ज-क्त । बलातिशययुक्ते, वृद्धियुक्ते च ।
ऊर्णनाभ पु॰ ऊर्णेव तन्तुर्नाभावस्य अच् समा॰ ह्रस्व॰ । मर्कटे (माकड़सा) अजभावे ऊर्णनाभिरप्यत्र भ्रुवोर्मध्यस्थे महापुरुषचिह्ने आवर्त्ताकारे लोमसङ्घये च ।
ऊर्णा स्त्री॰ ऊर्णु-करणे ड । मेषलोमनि ।
ऊर्णायु पु॰ ऊर्णा॰ मत्वर्थे युस् । मेषे, कम्बले, ऊर्णनाभे, मत्स्यभङ्गुरे च ।
ऊर्णु आच्छादने अदा॰ उभ॰ सक॰ सेट् । ऊर्णोति, ऊर्णुते, और्णावीत् और्णुवीत् और्णवीत् और्णविष्ट और्णुविष्ट ।
ऊर्द्ध त्रि॰ उद् ह्वाड्-ड पृषो॰ ऊरादेशः । उच्चे उपरि च
ऊर्द्धक पु॰ ऊर्द्धं सन् कायति शब्दायते । मृदङ्गभेदे स च गोपुच्छवदाकारस्त्रितालपरिमितः सोऽङ्गुल ऊर्द्ध कृत्वा वाद्यते । [उच्चे उपरि च
ऊर्द्ध त्रि॰ उत् उपरि ध्मायते ध्मा-ड आदेरूरादेशः । उच्चे

**ऊर्द्धकण्ठी** स्त्री० ऊर्द्धं कण्ठः मुखमस्याः ब० गौरा० ङीष्। महाशतावरीलतायाम् ।

**ऊर्द्धजानु** त्रि० ऊर्द्धे जानुनी यस्य। उपरिभागे स्थूलजानुयुते

**ऊर्द्धज्ञु** त्रि० ऊर्द्धे जानुनी यस्य जानुनो वा ज्ञु। उपरिभागे स्थूलजानुयुते। [गजारातौ मधुभेदे

**ऊर्द्धपाद** पु० ऊर्द्धाः पृष्ठस्थाः चत्वारः पादा यस्य। शरभाख्ये

**ऊर्द्धपुण्ड्र** पु० ऊर्द्धं ऊर्द्धमुखं पुण्ड्रं इक्षुयष्टिरिव। ललाटस्थे ऊर्द्धमुखे पुण्ड्रेक्षुवत् रेखाद्वयात्मके तिलकभेदे। तद्धारणे विधिनिषेधादिकं वृहदभिधाने वक्ष्यते।

**ऊर्द्धम्** अव्य० उद्-ह्वेञ् डम आदेरूरादेशश्च। ऊर्द्धशब्दार्थे।

**ऊर्द्धमान** न० ऊर्द्धमारोप्य मीयते येन मा-ल्युट्। पलकर्षादिमिते माषपादौ (बाटखारा)। तेन हि तुलादावारोपितेन स्वर्णादेर्गुरुत्वमुन्नीयते। उन्नताप्रस्थैकपरिमाणे च।

**ऊर्द्धरेतस्** पु० ऊर्द्धं न पतत् रेतो यस्य। महादेवे, सनकादौ सन्न्यासिनि, भीष्मे च।

**ऊर्द्धलिङ्ग** पु० ऊर्द्धमुत्कृष्टं लिङ्गं चिह्नमस्य। महादेवे ऊर्द्धं लिङ्गं विरूपाक्षमिति सन्ध्याङ्गमन्त्र।

**ऊर्द्धलोक** पु० कर्म्म०। स्वर्गे।

**ऊर्द्धासित** पु० ऊर्द्धमुपरिभागे असित इव्य० आसितो वा। कारवेल्ले (करला) ऊर्द्धोपविष्टे त्रि०।

**ऊर्म्मि** पु० स्त्री० ऋ-मि अर्त्तेरुच्च। तरङ्गे, प्रकाशे, वेगे, वस्त्रसङ्कोचरेखायाम्, पीडायाम्, उत्कण्ठायाम् बुभुक्षादिषु, षट्सु च 'यथा बुभुक्षा च पिपासा च प्राणस्य, मनसः स्मृतौ। शोकमोहौ, शरीरस्य जरामृत्यू षडूर्म्मयः' इति। "षड्भिरूर्म्मिभिरस्पृष्टं नमनोविमनाकृति। अतिवेग समायुक्ता गतिरूर्म्मिरुदाहृत'त्युक्तलक्षणायामश्वगतौ स्त्री०

**ऊर्म्मिका** स्त्री० ऊर्म्मिरिव कायति कै-क। तरङ्गवत्प्रकाशमाने अङ्गुरीयके। स्वार्थे कन्। तरङ्गादौ च।

**ऊर्म्मिमत्** त्रि० ऊर्म्मिरिव वक्रतास्त्यस्य मतुप् यवा० मस्य न व। वक्रे तरङ्गवति च।

**ऊर्म्मिमालिन्** पु० ऊर्म्मिमालाऽस्त्यस्य इनि। समुद्रे।

**ऊष** पु० ऊष रुजायां क। क्षारमृदि, प्रभाते, रन्ध्रे कर्णमाडौ च

**ऊषण** न० ऊष-ल्युट्। मरिचे, पिप्पलीमूले, शुण्ठ्याञ्च। (चिता) चित्रके पु०। पिप्पल्या चव्ये च (चई) स्त्री०।

**ऊषर** त्रि० ऊष+मत्वर्थीयो र। ऊषवति क्षारमृत्तिकायुक्ते देशे यत्रोप्तं बीजं न प्ररोहति।

**ऊषरज** न० ऊषराज्जायते जन-ड। (पाङ्गा) लवणभेदे।

**ऊषवत्** त्रि० ऊष-मतुप् मस्य व। ऊषरभूमौ।

**ऊष्मन्** पु० ऊष-मनिन्। घोषे व्याकरणोक्तेषु घोषवायुनोच्चार्यमाणेषु शषसहरूपेषु वर्णेषु।

**ऊह** वितर्के भ्वादि० आत्म० सक० सेट्। ऊहते औहिष्ट।

**ऊह** पु० ऊह-घञ् वितर्के आगमाविरोधिना तर्केण आगमार्थस्य संशयपूर्वपक्षनिवारणेन, उत्तरपक्षव्यवस्थापनेन निर्णयरूपे परीक्षणे, अनन्वितार्थकविभक्तिलिङ्गत्यागपूर्वके अन्वययोग्यविभक्त्यादिकल्पने, यथा पार्व्वणे सौम्यास इति बहुवचनमन्वितमपि एकोद्दिष्टे अनन्वितत्वात् सौम्य इत्येकवचनान्ततया कल्पनम् पदान्तरेणाकाङ्क्षापूरणे च। [च।

**ऊहा** स्त्री० ऊह अ स्त्रीत्वात् टाप्। अध्याहारे ऊहशब्दार्थे

## ऋ

**ऋ** गतौ भ्वा० पर० सक० अनिट्। ऋच्छति। आरत् आर्षीत्।

**ऋ** गतौ जुहोत्यादि० पर० सक० अनिट्। इयर्त्ति आरत्।

**ऋ** हिंसायां स्वा० पर० सक० अनिट्। ऋणोति। आर्षीत।

**ऋक्थ** न० ऋच-थक्। धने स्वर्णे, स्मृतिप्रसिद्धे दायरूपे धने च

**ऋक्ष** पु० ऋष-स किच्च। भल्लूके। नक्षत्रे मेषादौ च पु० न०।

**ऋक्षगन्धा** स्त्री० ऋक्षान् गन्धयति हिनस्ति गन्ध-अच्। अधि जाङ्गलीहक्षे. महाश्वेतायां, क्षीरविदार्याञ्च।

**ऋक्षगिरि** पु० कर्म्म०। कुलाचलभेदे ऋक्षनामके पर्व्वते।

**ऋक्षराज** पु० ऋक्षाणां राजा त० टच्। जाम्बवति, चन्द्रे च

**ऋक्षवत्** पु० ऋक्षा सन्त्यस्मिन् मतुप् मस्य व। नर्म्मदातीरस्थे पर्व्वतभेदे।

**ऋग्वेद** पु० ऋक्प्रधानो वेद। देवदैवत्ये स्वनामख्याते वेदभेदे

**ऋच** स्तुतौ तुदा० पर० सक० सेट्। ऋचति आर्चीत्।

**ऋच्** स्त्री० ऋच क्विप्। अर्थवशेन नियताक्षरपादयुते वेदांशे।

**ऋच्छ** मोहे मूर्त्तौ गमने च तुदा० पर० सक० अक० च। सेट्। ऋच्छति आर्च्छीत्। आनर्च्छ। [आनृजे

**ऋज** गतौ अर्जने च भ्वा० आत्म० सक० सेट्। अर्जते आर्जिष्ट

**ऋजीष** न० ऋज-ईषन् किच्च। भर्ज्जनपात्रे कटाहादौ। धने, नरकभेदे च।

**ऋजु** त्रि० ऋज-कु। सरले। स्त्रियां वा ङीष् ऋज्वी ऋजु।

**ऋण** गतौ तना० उभ० सक० सेट्। अर्णोति ऋणोति, ऋणुते आर्णीत् आर्णिष्ट।

**ऋण** न० ऋ-क्त नि० नत्वम्। अधमर्णेन उत्तमर्णात् पुनर्देयत्वेनाभ्युपगम्य गृहीते धने, (धार) जले, दुर्गे, दुर्गभूमौ च। देवर्षिपितृगणोद्देशेन यथाक्रमं यज्ञवेदाध्ययनपुत्रोत्पादनरूपे ऽवश्यकार्य्ये तत्ते ऋणमन्त्यमवेहीति रघुः।

ऋणमत्कुण पु० इदम् ऋणं मम देयमिति कुणति अभ्युपगम्य शब्दायते ऋण+अस्मद् कुण क। लग्नके प्रतिभुवि (जामिन)
ऋणमार्गण ऋणं परकीयमृणमात्मीयत्वेन मार्गयति चुरा० मार्ग-ल्युट्। प्रतिभुवि। (जामिन)।
ऋणमुक्ति स्त्री० मुच क्तिन् ६त०। ऋणशोधने।
ऋणादान न० ऋणस्यादानम्। उत्तमर्णेनाधमर्णात् दत्तधनतुल्यधनस्य सवृद्धिकग्रहणे अष्टादशव्यवहारमध्ये व्यवहारभेदे। "तेषामाद्यमृणादान"मित्यादि स्मृतिः।
ऋणिन् पु० त्रि० ऋण+मत्वर्थीय इनि। ऋणवति अधमर्णे ऋणयुक्ते 'ऋणी न स्याद् यथा पिते'ति स्मृतिः। [थ लिट्
ऋत गतौ (सौत्र) पर० सक० सेट्। ऋतीयते आर्त्तीयिष्ट
ऋत न० ऋ-क्त। 'ऋतमुञ्छशिलं ज्ञेय'मित्युक्ते ब्राह्मणस्य उपजीव्यवृत्तौ मोक्षे, जले, कर्म्मफले "ऋतं पिबन्ता"विति श्रुतिः सुप्रिये वाक्ये मानसादिसत्ये च। दीप्ते, सत्ये, पूजिते च त्रि०।
ऋतधामन् पु० ऋतं सत्यं धाम यस्य। परमेश्वरे, विष्णौ च।
ऋतम् अव्य० ऋत कमि। सत्यमित्यर्थे।
ऋतम्भरा स्त्री० ऋतम् बिभर्त्ति ऋतम्+भृ-खच्। योगशास्त्रप्रसिद्धे विपर्य्यासशून्ये यथार्थज्ञानरूपे चित्तवृत्तिभेदे।
ऋति स्त्री० ऋ क्तिन्। गतौ स्पर्द्धायाम् निन्दायाञ्च। कर्म्मणि क्तिन्। वर्त्मनि मङ्गले च।
ऋतु पु० ऋ तु किच्च। शिशिर पुष्पसमयौ ग्रीष्मो वर्षा शरद्धिम। माघादिमासयुग्मैस्तु ऋतव षट् क्रमादिति इत्युक्ते कालभेदे। शोणितदर्शनयुक्ते गर्भधारणयोग्ये स्त्रीणामवस्थाभेदे "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः" इति मनुः। दीप्तौ मासे च। [अभ्यङ्के।
ऋतुप्राप्त त्रि० ऋतुमत्त्वयोग्य पुष्पादि प्राप्तोऽनेन, फलेग्रहौ
ऋतुमती स्त्री० ऋतु+मतुप्। रजस्वलायां स्त्रीधर्म्मिण्याम्।
ऋतुराज पु० ऋतूनां राजा ६त० टच् समा०। वसन्ते ऋतौ।
ऋतुवृत्ति पु० ऋतूनां वृत्तिः पर्य्यायेणावर्त्तना यत्र। वत्सरे।
ऋते अव्य० ऋत (सौत्र) के। वर्ज्जने विनार्थे च।
ऋत्विज् ऋतु+यज-क्विन्। याजके, 'अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्। यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते" इति मनूक्ते स्मार्त्तवैदिकादिकर्म्मकरे।
ऋद्ध न० ऋध-क्त। सम्यक्सिद्धधान्ये विज्ञाने च। समृद्धे सम्पन्ने च त्रि०।
ऋद्धि स्त्री० ऋध क्तिन्। वृद्धौ, देवभेदे, ओषधिभेदे च।
ऋध वृद्धौ दिवा० स्वा० च पर० अक० सेट्। ऋध्यति ऋध्नोति आर्द्धीत् आर्द्धत्। [तुदा० पर० सेट्। ऋफति आर्फीत्।
ऋफ दाने हिंसायां निन्दायां युद्धे च सक० श्लाघायां अक०
ऋभु पु० आरि स्वर्गे अद्दतौ वा भवति ऋ+भू-डु। देवे।
ऋभुक्ष पु० ऋभवो देवा क्षियन्ति वसन्त्यत्र क्षि+ड। स्वर्गे वज्रे इन्द्रे च। [स्वादौ ऋभुक्षा ऋभुक्षाणौ।
ऋभुक्षिन् पु० ऋभुक्ष वज्रं स्वर्गो वाऽस्यास्ति इनि। इन्द्रे
ऋष गतौ तुदा० पर० सक० सेट्। ऋषति आर्षीत्।
ऋषभ पु० ऋष अभक्। वृषभे, ओषधिभेदे, मुनिभेदे च।
ऋषभतर पु० तनु ऋषभ तनुत्वे ष्टरच्। भारवहने मन्दशक्तौ वृषभे। जातित्वेन स्त्रियां ङीप् वृषभतरी।
ऋषभध्वज पु० ऋषभो ध्वजो यस्य। शिवे। वृषभध्वजोऽप्यत्र
ऋषभी स्त्री० ऋषभ इवाचरति ऋषभ+क्विप्-अच्। पुमाकारायां स्त्रियां, शूकशिम्ब्याम् शिरालतायाञ्च।
ऋषि पु० ऋष-इन् किच्च। वेदे, मन्त्रद्रष्टरि मुनौ, अनुष्ठेयकर्म्मज्ञापकसूत्रकर्तृदाचार्य्ये, गोत्रप्रवरप्रवर्त्तके मुनौ च।
ऋषियज्ञ पु० ऋष्युद्देश्यको यज्ञः। ब्रह्मयज्ञे वेदाध्ययने।
ऋष्टि स्त्री० ऋष-करणे क्तिन्। उभयतो धारायुक्ते खड्गे।
ऋष्य पु० ऋष, क्यप्। मृगभेदे। [इवे
ऋष्यगन्धा स्त्री० ऋष्यस्य गन्ध इव गन्धो यस्याः। वृद्धदारके
ऋष्यप्रोक्ता स्त्री० ऋषिभिःप्रोक्ता। शतावर्य्याम्, अतिबलायाम्, शूकशिम्बीवृक्षे च।
ऋष्यमूक पु० ऋष्यो मृगो मूको यत्र। 'ऋष्यमूकस्तु पम्पायाः पुरतः पुष्पितद्रुम' इति रामायणोक्ते पर्वतभेदे।
ऋष्यशृङ्ग पु० ऋष्यस्य मृगभेदस्य शृङ्गमिव शृङ्गमस्य। विभाण्डकपुत्रे लोमपादराजकन्यायाः शान्तायाः पत्यौ।

## ॠ

ॠ गतौ जुहो० पर० सक० सेट्। आर्त्ति आरीत्। आर आरतुः।

## ए

ए अव्य० इण्-विच्। दयायां, स्मृतौ आमन्त्रणे, असूयायां, आह्वाने च। विष्णौ पु०।
एक त्रि० इण् कन्। एकशब्दप्रथमसंख्यान्विते, केवले, मुख्ये, अन्यार्थे श्रेष्ठे, अद्वितीये, समाने, अल्पे च।
एकक त्रि० एक+कन्। असहाये। [परस्परकारके [illegible] च।
एककार्य्य त्रि० एकं कार्य्यं प्रयोजनमस्य। एकवदेककार्य्यकरे,
एकगुरु पु० एकोऽभिन्नो गुरुर्यस्य। समानाचार्य्यके सतीर्थ्ये।
एकचक्र न० एकं चक्रं यस्य। [illegible]। सूर्य्यरथे पु०।

दित एकादशपूरणया तिथौ । यत्र हि हरिवासरव्रतम्

**एकान्नविंशति** स्त्री० एकेन न विंशति एक+नञ् आदुक् । एकोनविंशतिसंख्यायां तद्युक्ते च । एवमेकान्नत्रिंशदादय ।

**एकान्त** त्रि० एक अन्तो निश्चयो यत्र । अत्यन्ते ।

**एकान्ततस्** अव्य० एकान्त+तसिल । अव्यभिचारिणि ।

**एकान्न** त्रि० एकमेवान्नं भक्ष्यं यत्र । एकभक्तव्रते ।

**एकान्नविंशति** स्त्री० एकेन न विंशति । एक+न+आदुक् दस्य व० न । एकोनविंशतिसंख्यायां, तद्युक्ते च । एवमेकान्नत्रिंशदादय

**एकाब्दा** स्त्री० एक अब्दो वयोमानं यस्याः । एकहायन्यां [गवि ।

**एकायन** त्रि० एकमयनं विषयो यस्य । विषयान्तरव्यावृत्तचित्ते एकाग्रमनस्के । कर्म० एकस्थाने । [एकाग्रचित्ते ।

**एकायनगत** त्रि० एकायनमेकविषयं मनोद्वारा गत ।

**एकावली** स्त्री० एका अद्वितीया आवली माला मणिश्रेणी । (एकनर) हारभेदे अर्थालङ्कारभेदे च ।

**एकाश्रय** त्रि० एक आश्रयो यस्य । अनन्यगतिके ।

**एकाष्ठील** पु० एकमस्थि काण्डं तत्तुल्यं लाति ला-क षत्व दीर्घश्च । वकवृक्षे पाठायां स्त्री० । [पुरुषम् । एकदिने ।

**एकाह** पु० एकमहः द्विगु० अच् । अह्नाहान्ताः पुंसीति

**एकाहगम** त्रि० एकाहेन गम्यते गम घञ् । एकाहगम्ये देशे

**एकाहार** पु० एकस्मिन् दिवसे एक आहारो भोजनम् । एकदिनस्थैकवारभोजने । व० । तद्वति त्रि० । [एकत्वे

**एकीभाव** पु० अनेकस्य एकस्य भाव एक+च्वि भू-उप० घञ् ।

**एकीय** त्रि० एक+छ । एकपक्षभवे, एकसम्बन्धिनि च ।

**एकोद्दिष्ट** न० एक उद्दिष्टो यत्र । एकोद्देशेन विहिते श्राद्धे "एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते" इति स्मृति । तच्च प्रेतश्राद्धं तत्तुल्यविधिकं सांवत्सरिकं श्राद्धमिति ।

**एज** कम्पने भ्वादि० आत्म०अक० सेट् । एजते ऐजिष्ट ।

**एज** दीप्तौ भ्वादि० पर०सक० सेट् । एजति ऐजीत् ।

**एठ** बाधने भ्वादि०आत्म०सक० सेट् । एठते ऐठिष्ट ।

**एड** पु० इल स्वप्ने अच् डस्य ल मेषे । बधिरे त्रि० ।

**एडक** पु० इल ण्वुल् डस्य ल । वनच्छागले स्थूलशृङ्गे मेषे मेषमात्रे च जातित्वात् स्त्रीत्वे अजादित्वात् टाप् एडका ।

**एडगज** पु० एडो मेषो गजो भयजनकत्वादस्य । दद्रुघ्ने (दादमर्द्दन)

**एडमूक** त्रि० श्रुतिरहितएडोबधिरश्चासौ मूक । वाक्श्रुतिशक्तिरहिते ।

**एडु(डू)क** न० ईड (ज)उक नि० गुण । हिंसायाम् । अन्तर्न्यस्तास्थियुक्ते कुड्ये, भित्तौ च ।

**एण** पु० इ-ण तस्य नेत्वम् । कृष्णवर्णे मृगे । स्त्रियाम् एणी

**एणतिलक** पु० एण तिलकमिव चिह्नं यस्य । मृगाङ्के चन्द्रे ।

**एत** त्रि०पु० इण् तन् । कर्बुरवर्णे । तद्वति त्रि० । स्त्रियामेनी च

**एतद्** त्रि० इण्-अदि तुक् च । पुरोवर्त्तिनि बुद्धिस्थे ।

**एध** वृद्धौ भ्वा० आत्म०अक० सेट् । एधते ऐधिष्ट । [काष्ठे

**एध** पु० इध्यतेऽग्निरनेन इन्ध-करणे घञ् नि० नलोप गुणौ ।

**एधस्** न० इध्यतेऽग्निरनेन इन्ध असि नि० नलोप गुणौ । काष्ठे

**एधित** त्रि० एध-क्त । वृद्धियुक्ते 'मधुमत्स्वेधितमेधत'ति भाव ।

**एनस्** न० इण असुन् नुट् च । पापे, अपराधे च ।

**एरका** स्त्री० इण-रक । निर्ग्रन्थितृणभेदे ।

**एरण्ड** पु० ईरयति वायुम् मल वा ईर-अण्डच् नि० गुणश्च । वृक्षभेदे (एरण्डी) । (भेरण्डा)

**एरण्डपत्रिका** स्त्री० एरण्डस्य पत्रमिव पत्रमस्याः ब० सञ्ज्ञायां कन् अत इत्वम् । दन्तीवृक्षे ।

**एला** स्त्री० इल-अच् । एलालतायाम् (एलाची) ।

**एलापर्णी** स्त्री० एलाया पर्णमिव पर्णमस्याः । रास्नायाम् (कांटा यामरुल) ।

**ए(लु)लावालुक** न० एलेव वलत वल उण् सञ्ज्ञायां कन् । वा ह्रस्व । गन्धद्रव्यभेदे ।

**एव** अव्य० इण्-वन् । सादृश्ये अनियोगे, अवधारणे चार्थनियोगे, विनिग्रहे, परिभवे ईषदर्थे च । विशेष्यसङ्गत अन्ययोगव्यवच्छेदे । यथा 'पार्थ एव धनुर्द्धर' इत्यादौ पार्थान्यपदार्थे प्रशस्तधनुर्द्धरत्वम् व्यवच्छिद्यते । विशेषणसङ्गत अयोगव्यवच्छेदे यथा शङ्खः पाण्डुर एवेत्यादौ शङ्खे पाण्डुरत्वायोगो व्यवच्छिद्यते । क्रियासङ्गत अत्यन्तायोगव्यवच्छेदे यथा नीलं सरोजं भवत्येवेत्यादौ सरोजे नीलत्वात्यन्तायोगो व्यवच्छिद्यते । गत्वरि त्रि० ।

**एवम्** अव्य० इण् वमु । सादृश्ये, इत्थम्प्रकारे, 'एवंवादिनि देवर्षाविति' कुमार अवधारणे, स्वीकारे, प्रश्ने च ।

**एष** गतौ भ्वा० आत्म० सक० सेट् । एषते ऐषिष्ट ।

**एषण** पु० एष ल्यु । लौहमये बाणे । युच् । इच्छायां पुत्रलोकधनकामनायां स्त्री० । ल्युट् । स्वर्णकारादीनां तुलासाधने न० । विस्फोटभेदके अस्त्रभेदे स्त्री० ङीप् । स्वार्थे कन् । एषणिकाप्यत्र ।

## ऐ

**ऐकागारिक** त्रि० एकमसहायमगारं प्रयोजनमस्य ठक् । चौरे

**ऐकाग्र** त्रि० एकाग्र+स्वार्थेऽण् । एकाग्रचित्ते अनन्यासक्तचित्ते

ऐकात्म्य न० एक आत्मा स्वरूपं यस्य तस्य भावः ष्यञ्। ऐक्ये एकस्वरूपत्वे।

ऐकान्तिक त्रि० एकान्तं व्याप्नोति ठञ्। अव्यभिचारिणि, अवश्यं भाविनि। स्त्रियां ङीप्। ऐकान्तिकी हरेर्भक्तिरु-त्पातायैव कल्पते इति पुराणम्।

ऐकाहिक त्रि० एकाहे भवः कालात् ठञ्। एकदिननिष्पन्ने। एकाहमतीत्य भवः। एकाहानन्तरं जायमाने ज्वरे दिने दिने एकसमये जायमाने ज्वरे च पु०। ऐकाहिकं ज्वरं हन्ति तस्य नामानुकीर्त्तनमिति ज्वरनाशकमन्त्रः।

ऐक्य न० एकस्य भावः एक+ष्यञ्। अभेदे एकरूपतायाम्।

ऐक्षव त्रि० इक्षोर्विकारः इक्षु-अण्। इक्षुविकारे गुडादौ। 'ऐक्षवं गुडवर्जित'मिति स्मृतिः।

ऐक्ष्वाक पु० इक्ष्वाकोर्गोत्रापत्यम् अण् नि०। सूर्य्यवंश्ये नृपे

ऐङ्गुद न० इङ्गुद्याः फलम् फले अण् तस्य न लुक्। इङ्गुदीवृक्षफले।

ऐण त्रि० एणस्य कृष्णमृगस्येदम् अण्। कृष्णमृगचर्म्मादौ।

ऐणेय त्रि० एण्या इदम् ढक्। कृष्णमृगीचर्म्मादौ।

ऐतिह्य न० इतिह पारम्पर्य्योपदेशः अनिर्दिष्टप्रवक्तृकोप-देश इति यावत् स्वार्थे ष्यञ्। पारम्पर्य्योपदेशे। यथात्र वटे यक्षः प्रतिवसतीत्यादि परम्परोपदेशमात्रम्। न तु केनाप्येतदुपलभ्य कथितम्।

ऐन्दव न० इन्दुर्देवताऽस्य। मृगशिरोनक्षत्रे चन्द्रसम्बन्धिनि त्रि०। सोमराज्याम् स्त्री० ङीप्।

ऐन्द्र त्रि० इन्द्रस्येदम् इन्द्र+अण्। शक्रसम्बन्धिनि। ज्येष्ठानक्षत्रे न०। स्त्रियां ङीप्। 'ऐन्द्री त्वमसुरेश्वर'मिति दुर्गा-देवतार्थेऽण्। इन्द्रदेवताके त्रि०। प्राच्यां दिशि स्त्री०।

ऐन्द्रजालिक त्रि० इन्द्रजालेन चरति। मायाकारके। (बाजिकर)

ऐन्द्रि पु० इन्द्रस्यापत्यम् इञ्। इन्द्रपुत्रे, जयन्ते, अर्ज्जुने, सुग्रीववानरे, काके च। [प्रकाश्ये।

ऐन्द्रियक त्रि० इन्द्रियेण प्रकाश्यः वुञ्। इन्द्रियजन्यप्रत्यक्षेण

ऐर न० इरा अन्नं तद्विकारः। अन्नमये ब्रह्मलोकस्थे सरसि च।

ऐरावण पु० इरा सुरा वमथुरुदकं यत्र पूर्व्वपदादिति णत्वम् तत्र भवः अण्। इन्द्रगजे ऐरावते।

ऐरावत पु० इरा जलानि सन्त्यस्य इरा+मतुप् मस्य वः इरावान् समुद्रस्तत्र भवः अण्। समुद्रजाते इन्द्रगजे।

ऐरावती स्त्री० इरा सन्त्यस्य मतुप् मस्य वः इरावान् तत्र समुद्रे भवा अण्। विद्युति।

ऐरिण न० इरिणे ऊषरे भवः। लवणभेदे। (पाङ्गा)।

ऐरेय न० इरा अन्नम् तत्र भवः ढक्। अन्नभवे मद्ये।

ऐल पु० इलाया अपत्यम्। बुधपुत्रे पुरूरवोनामके नृपतौ।

ऐलविल पु० इलविलाया अपत्यम् अण्। कुबेरे।

ऐशानी स्त्री० ईशानो देवताऽस्याः। उत्तरपूर्व्वदिशि।

ऐश्वर्य्य न० ईश्वरस्य भावः। अणिमाद्यष्टविधविभूतिभेदे।

ऐषमस् अव्य० अस्मिन् वत्सरे नि०। वर्त्तमानवत्सरे। [ज्ञात

ऐहलौकिक त्रि० इह लोके भवः ठञ् द्विपदवृद्धिः। इहलोक

ऐहिक त्रि० इह भवः कालाट्ठञ्। इहलोकभवे स्वर्गेतर परेतरसम्बन्धिनि स्रक्चन्दनादिसुखानुभवादौ च।

## ओ

ओक पु० उच-क नि० चस्य कः। पक्षिणि वृषले च।

ओकस् न० उच असुन् न्यङ्क्वादित्वात् कुत्वम्। गृहे आश्रयमात्रे च। [(उकुण) केशकीटे।

ओकोदनी स्त्री० ओक आश्रयः मूर्द्धरूपम् अदनं भक्ष्यं यस्याः।

ओखृ शोषणे, भूषणे, निवारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट्। ओखति औखीत्। [द्रुतनृत्ये च।

ओघ पु० उच-घञ् पृषो० वः। समूहे, जलवेगे, परम्परायां

ओङ्कार पु० अव मन् तस्याकारलोपः, ऊठ् गुणः ओम् तत्स्वरूपे कारः। प्रणवे। [ओजित-त

ओज बले अद० चुरा० उभ० अक० सेट्। ओजय-ति-त

ओजस् न० उब्ज असुन् बलोपे गुणः। दीप्तौ अवष्टम्भे, प्राणबले, प्रकाशे, सामर्थ्ये, ज्योतिषोक्ते प्रथमतृतीयादौ विषमराशौ, शस्त्रादिकौशले, धातुतेजसि, ज्ञानेन्द्रियाणां पाटवे, काव्यगुणभेदे, गौडरीत्याम्, वैद्यकोक्ते 'भ्रमरैः फलपुष्पेभ्यो यथा सम्भ्रियते मधु। तद्वदोजः शरीरेभ्यो धातुः सम्भ्रियते नृणाम्' इति लक्षणे धातुरसपोषक वस्तुभेदे च। अत्। ओजशब्दोऽप्यत्र।

ओजिष्ठ त्रि० अतिशयेनोजस्वी ओजस्विन् इष्ठन् मतो लुक्। अतितेजस्विनि सारतमे च। [(उड़िधान) नीवारे।

ओडिका स्त्री० उ-ड तस्य नेत्त्वम् गौरा० ङीष् स्वार्थे क ह्रस्वः।

ओडी स्त्री० उ-ड तस्य नेत्त्वम् गौरा० ङीष्। (उडीधान) नीवारे

ओड्र पु० न० आ+ईषत् उनत्ति उन्द-रक् दस्य डः। जवापुष्पे

ओड्रपुष्प पु० ओड्रं पुष्पमस्य। जवावृक्षे।

ओण अपनयने भ्वा० पर० सक० सेट्। ओणति औणीत्।

ओत त्रि० आ+वेञ्+क्त। सन्तत्यांशे 'ओतश्च प्रोतश्चेति' श्रुतिः। पटे दीर्घतन्तौ च।

**ओतु** त्रि० अव-तन् ऊठ् गुण । विड़ाले ।

**ओदन** पु० उन्द-युच् नलोपो गुणश्च । भक्ते सिद्धान्ने ।

**ओदनपाकी** स्त्री० ओदनस्य पाक इव पाको यस्याः ङीप् । नीलझिण्टिकायाम् ओषधिभेदे च ।

**ओदनी** स्त्री० ओदन इवाचरति ओदन+क्विप्-तत अच् गौरा० ङीष् । (बेलेड़ा) बलायाम् ।

**ओम** अव्य० अव-मन् तस्यातोलोप गुण । प्रणवे, आरम्भे, स्वीकारे, ओमित्युक्तवतोऽथेति माघ । अनुमतौ, अपाकृतौ, अस्वीकारे मङ्गले, शुभे, ध्येये, ब्रह्मणि च ।

**ओल** पु० आ-उनत्ति आ+उन्द क नलोपे पृषो० ह्रस्व नत्वम् । भूरणे (ओल) इति ख्याते कन्दे । आर्द्रे त्रि०

**ओलज** क्षेपे इदित् भा०पर०सक०सेट् । ओलञ्जति औलञ्जीत्

**ओलड** क्षेपे वा चुरा० उभ० पक्षे भ्वादि० पर०सक० सेट् । ओलडयति ते ओलडति औलिलडत् त औलडीत् ।

**ओष** पु० उष घञ् । दाहे ।

**ओषण** पु० उष-ल्यु । कटुरसे (झाल) इति ख्याते रसभेदे ।

**ओषधि** स्त्री० ओषोदाहो धीयतेऽत्र । ओष+धा-कि जातिविषयत्वात् स्त्रीत्वे वा ङीप् ओषधी च । फलपाकान्ते व्रीहियवादौ । [हिमालयपुरे ।

**ओषधिप्रस्थ** पु० न० । ओषधप्रधान प्रस्थ शाक० ।

**ओषधिपति** पु० ६त० । चन्द्रे । ओषधीशोऽप्यत्र । [क्लेदे ।

**ओष्ठ** पु० उष्यते उष्णाहारेण उष कर्मणि थन् । (ओंठ) दशन-

**ओष्ठपुष्प** पु० ओष्ठोपमानं पुष्प यस्य । बन्धूकवृक्षे ।

**ओष्ठी** स्त्री० ओष्ठ इवाचरति ओष्ठ+क्विप् तत अच् गौरा० ङीष् । बिम्बफलनामके (तेलाकुचा) वृक्षे ।

**ओष्ठोपमफला** स्त्री० ओष्ठ उपमीयतेऽनेन ओष्ठोपमं फल यस्याः । बिम्बिकालतायाम् ।

# औ

**औक्ष** न० उक्ष्णां वृषाणां समूह अण् टिलोप वृषसमूहे । वुञ् । औक्षकमप्यत्र ।

**औख्य** त्रि० उखायां पक्वम् ष्यञ् । स्थालीपक्वे माषादौ ।

**औचिती** स्त्री० उचितस्य भाव ष्यञ् स्त्रीत्वपक्षे षित्वात् ङीष् यलोप । न्याय्यत्वे उचितत्वे च ।

**औचित्य** न० उचितस्य भाव ष्यञ् । उचितस्य भाव न्याय्यत्वे

**औडुम्बर** पु० चतुर्दशसु यमेषु मध्ये यमभेदे, कुष्ठरोगभेदे च ।

**औत्कण्ठ्य** पु० उत्कण्ठाया भाव ब्राह्म० ष्यञ् । उत्कण्ठायाम्

**औत्तानपादि** पु० उत्तानपादस्य नृपभेदस्यापत्यम् इञ् ऐहिकभोगसाधनकर्मान्ते ज्योतिर्मण्डले निश्चलतया तारकारूपेण स्थिते ध्रुवनामके त्वपत्ये ।

**औत्सर्गिक** त्रि० उत्सर्गं सामान्यविधिमर्हति ठञ् । सामान्य विधियोग्ये । [क्वचिन्न ख्यातरीति रत्नावली' ।

**औत्सुक्य** न० उत्सुकस्य भाव ष्यञ् । उत्कण्ठायाम् औत्सु-

**औदनिक** त्रि० ओदन शिल्पमस्य ठञ् । सूपकारे ।

**औदरिक** त्रि० उदरे प्रसित ठक् । आद्यूने, (पेटुक) उदर-मात्रपूरणाभिलषके ।

**औदश्वित** न० उदश्विति अर्द्धजलमथिते तक्रे संस्कृतम् अण् । उदश्वित्संस्कृते द्रव्ये । तदर्थे ठकि औदश्वित्कमप्यत्र ।

**औदार्य्य** न० उदारस्य भाव गुणवचनत्वात् ष्यञ् । उदारतायाम्

**औदासीन्य** न० उदासीनस्य भाव ष्यञ् । शुभाशुभयोरुपे-क्षायाम् ताटस्थ्ये ।

**औदास्य** न० उदासे उद्+आस-अच् भावार्थे ष्यञ् । वैराग्ये अनुरागशून्यतायाम् मनोयोगविरहे ।

**औद्दालक** न० 'प्रायो वल्मीकमध्यस्था कपिला स्वल्पकीटका । कुर्व्वन्ति कपिलं स्वल्प तत् स्यादौद्दालक मधु इत्युक्ते मधुनि

**औद्भिद** न० 'उद्भिद पांशुलवणं यज्जात भूमित स्वयमि'त्युक्ते पांशुलवणे, विदार्य्य भूमि निस्सृत यत् महत्या धारया स्रवेत् । तत्तोयमौद्भिदं नामे'त्युक्तलक्षणे जले च । उद्भिदा जायते जन ड उद्भिज्ज तत स्वार्थेऽणि औद्भिज्जमप्यत्र ।

**औद्वाहिक** न० उद्वाहकाले लब्धं ठञ् । विवाहकाले लब्ध धनादौ । 'भैत्रमौद्वाहिकञ्चैवे'ति स्मृति ।

**औपचारिक** पु० उपचार एव विनयादित्वात् स्वार्थे ठक् । उपचारार्थे ।

**औपनिषद** पु० उपनिषत्स्वेव वेद्य अण् । वेदान्तमात्रवेद्ये परमात्मनि 'तं त्वौपनिषदं पुरुषमि'ति श्रुति ।

**औपनीविक** त्रि० नीविसमीपे व्याप्तं ठञ् । नीविसमीपे व्या-प्ते । 'औपनीविकमरुन्ध किल स्त्री'ति माघ ।

**औपम्य** न० उपमैव चतुर्वर्णा० स्वार्थे ष्यञ् । सादृश्ये ।

**औपयिक** त्रि० उप+अय घञ् उपायस्तेन लब्ध ठक् हुस्वश्च । उपायलब्धे, युक्ते न्यायागतवस्तुनि च ।

**औपसर्गिक** पु० उपसर्गेण निष्पादित ठञ् । वातादिसन्नि-पातजाते रोगभेदे ।

**औरभ्र** न० उरभ्रस्य मेषस्येदम् अण् । मेषादिलोमजाते कम्बले

**औरभ्रक** न० उरभ्राणां समूह वुञ् । मेषसमूहे ।

**औरस** पु० उरसा निर्मितः अण् । "सवर्णायां संस्कृतायां स्वय-मुत्पादयेत्तु यम् । औरस त विजानीयादि"त्युक्तलक्षणे पुत्रे ।

और्द्ध्वदेहिक त्रि० ऊर्द्ध्वो देहः प्रेतदेहः तत्र भवं तस्मै देयं वा श्राद्धादि ठक्। मृतदिनमारभ्य सपिण्डीकरणान्तं क्रियमाणे जलदानश्राद्धादिरूपे कर्म्मकलापे। अनुशतादित्वात् द्विपदवृद्धौ और्द्ध्वदैहिकमप्यत्र।

और्व पु० ऊर्वस्यापत्यम् अण्। वाडवानले तस्यौर्वमुनिजातत्वात् तत्स्थानस्य भूगोलस्य दक्षिणसीमायाम्। उर्व्यां भवः। पांशुलवणे।

औलूक न० उलूकानां समूहः अण्। पेचकसमूहे।

औलूक्य पु० वैशेषिकदर्शनकारके कणादमुनौ तच्छास्त्रवेत्तरि च।

औशनस न० उशनसा शुक्रेण प्रोक्तम् अण्। शुक्रप्रोक्ते उपपुराणादौ दण्डप्रणयनरूपे शास्त्रे च।

औशीर न० वश-ईरन् किच्च ततः प्रज्ञाद्यण्। सशुदितयोः शय्यापीठयोः।

औषध न० ओषधौ भवं अण्। रोगनाशके ओषधिभवे द्रव्ये, रोगहारके द्रव्यमात्रे च।

औष्ट्र न० उष्ट्रस्येदम् अण्। उष्ट्रदुग्धादौ।

औष्ट्रक न० उष्ट्राणां समूहः वुञ्। उष्ट्रसमूहे।

औष्ठ्य त्रि० ओष्ठे भवः यत्। ओष्ठस्थानोच्चार्य्यमाणे उवर्णपव- [र्गादौ

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिते शब्दस्तोममहानिधौ स्वरवर्णादिकाः शब्दाः समाप्ताः।

औंतत्सत्।

## क

क पु० कै शब्दे कव दीप्तौ वा ड। ब्रह्मणि, वायौ आत्मनि, यमे दक्षप्रजापतौ सूर्य्ये अग्नौ विष्णौ, काले कामग्रन्थौ, राजनि, मयूरे देहे मनसि, धने, प्रकाशे, शब्दे च। सुखे शिरसि, जले रोगे च न०।

कंस पु० कम स। उग्रसेनसुते नृपे श्रीकृष्णमातुले। तैजसद्रव्ये, कांस्ये (ताम्ररङ्गमिश्रणजनितधातुद्रव्ये। (कासा) स्वर्णरजतादिनिर्मितपानपात्रे। व्याढक इति प्रसिद्धे परिमाणे च अस्त्री०। पृषो० तालव्यान्त इति केचित्।

कंसक न० कंसादिव क जलं यस्मात् ५ ब०। (हीराकस) इति प्रसिद्धे नेत्रौषधौ तत्प्रयोगाद्धि अग्निसंयोगेन कंसादिव चक्षुरादितो जलं स्रवति। [जातिभेदे

कंसकार पु० कंस+कृ-अण् उप०। (कासारी) इति प्रसिद्धे

कंसजित् पु कंस+जि-क्विप् ६त०। कंसन्दपजयकारिणि श्रीकृष्णे

कंसहन् पु० कंस+हन् क्विप् ६त०। कंसदैत्यघातके श्रीकृष्णे।

कंसाराति पु० कंस+अराति ६त०। कंसन्दपशत्रौ श्रीकृष्णे।

कंसास्थि न० कंस अस्थीव उपमितसमास। शुक्लतयाऽस्थिसदृशे (कासा) इति प्रसिद्धे धातुभेदे।

कक इच्छायाम् भ्वादि०आत्म०सक०सेट। ककते। अककिष्ट।

ककि गतौ भ्वा० इ०इदित आत्म०सक०सेट्। कङ्कते। अकङ्किष्ट।

ककुत्स्थ पु० ककुदि असुरवधार्थमिन्द्रेण प्रार्थित सन् वृष रूपधरस्य इन्द्रस्य ककुदि पृष्ठभागे तिष्ठतीति ककुत्+स्था-क। सूर्य्यवंशीयनृपभेदे यदपत्यतया काकुत्स्थेति संज्ञा भाज सूर्य्यवंशीया अभवन्।

ककुद् अस्त्री० क सुखं कौति कुशब्दे क्विप् तुक् च तस्य द। वृषस्कन्धस्थमांसपिण्डाकारे (भुड) इति ख्यात वृषाङ्गे, श्वेतच्छत्रादौ नृपचिह्ने प्रधाने पर्व्वताग्रभागे च।

ककुद अस्त्री० कस्य देहस्य सुखस्य वा कुं भूमिं ददाति दा क। (भुड) इति ख्याते वृषाङ्गे, प्रधाने, नृपचिह्ने, छत्रादौ पर्व्वताग्रभागे च।

ककुद्मत् पु० ककुदस्यास्तीति मतुप् झयन्तत्वेऽपि यवादित्वात् न मस्य व। वृषे, वृषोषधिविशेषे च। ककुदिव मांसपिण्डमस्यास्तीति मतुप् ङीप्। कन्याम् स्त्री०।

ककुन्दर न० कस्य शरीरस्य (पृष्ठदेशस्य) कुं भूमिं दारयतीति कक् दृ-णिच-अच पृषो०। पृष्ठवंशाधःस्थगर्त्ताकारे कूपके

ककुभ् स्त्री० कं वातं स्कुभ्नाति स्कुम्भ क्विप् पृषो०। दिशि, शोभायाम्, चम्पकमालायाम्, शास्त्रे, रागिणीभेदे च।

ककुभ पु० कं वातं स्कुभ्नातीति क पृषो०। वीणाङ्गे, स्वरगाम्भीर्य्यसम्पादनार्थमधोवद्धालाबूमयभाण्डे। कस्य वातस्य कुं भूमिं भात्यऽस्मात् ककु+भा क। विस्तीर्णशाखत्वात् वातभूमिप्रकाशके अर्ज्जुनवृक्षे, रागभेदे च। दिशि रागिणीभेदे च स्त्री०।

कक्ख हासे भ्वादि०पर०अक०सेट्। कक्खति। अकक्खीत्।

कक्कोल पु० ककते गच्छतीति क्विप कक् कोलति सस्त्यायति अच् कोल कक् चासौ कोलश्चेति कर्म्म०। गन्धद्रव्यभेदे (काकोल) इति वङ्गभाषाख्याते धनकपूर. इति पाश्चात्त्यख्याते।

कक्कोलक न० इदमर्थे कन्। कक्कोलवृक्षजाते गन्धद्रव्ये धनकपूर इति ख्याते। तस्य कोषे फलवत्त्वात् कोषफल इति प्रसिद्धि

कक्ष पु० कष-हिंसायां स। स्त्रीणाम् उत्तरीयवस्त्रस्य पश्चाद्भागस्थे अञ्चले (आँचल) लतायाम्, शुष्कतृणे, शुष्कवने च। पार्श्वभागे, राजान्तःपुरे, वाहोर्मूले पृष्ठप्रदेशनिहित धोटांशुकस्यैकदेशे (काछा) वस्त्राञ्चले, हस्तिबन्धनरज्ज्वाम्, काञ्च्याम्, प्रकोष्ठके, गृहभित्तौ, साम्ये स्पर्द्धास्पदे कक्षरोगभेदे च (काकविरालो) स्त्री०।

कक्षावेक्षक पु० कक्षं वनमुपवनं साम्य स्त्रीबाहुमूलं वा कक्षां राजशुद्धान्तं वावेक्षते अव-ईक्ष ण्वुल्। शुद्धान्तपालके, उद्यानपाले, रङ्गाजीवे, कवौ, जारे च। [भित्तिकुल्यायाम।

कक्षोत्था स्त्री० कक्षात् शुष्कतृणात् उत्तिष्ठति उद्+स्था-क।

कक्ष्या स्त्री० कक्षे भवा यत्। बृहतिकायाम् हर्म्यादिप्रकोष्ठे, साद्दृश्ये, वस्त्रग्रन्थौ, मेखलायाम् गजबन्धनरज्जौ उद्योगे, परार्धबद्धकक्ष्याणां नाड्यासद्वव पुत इति, उत्तरीय वस्त्रे च। [अकागीत्।

कग क्रियामात्रे भ्वादि०पर०सक०अक०च सेट्। कगति

कङ्क पु० ककि गतौ अच्। (काक) पक्षिभेदे यस्य पक्षेण शरपुङ्खं क्रियते। युधिष्ठिरे च स हि विराटनगरे तां संज्ञा लेभे।

कङ्कट पु० कं देहं कटति क+कट खश् च, ककि लौल्ये अटन् वा। कवचे। स्वार्थे कन्। कङ्कटकोऽप्यत्र। [माल्ये च।

कङ्कण न० कं शुभं कणति कम् कण अच्। करभूषणे भूषणा-

कङ्कत न० ककि-अतच्। केशप्रसाधन्याम् (कांकुइ)।

कङ्कतिका स्त्री० ककि-अतच् गौरा० ङीष् स्वार्थे कनि ह्रस्वे टाप्। प्रसाधन्याम् (कांकुइ) नागवल्लायाञ्च।

कङ्कती स्त्री० ककि अतच् गौरा० ङीष्। प्रसाधन्याम्।

कङ्कत्रोटि पु० कङ्कस्य त्रोटिरिव चञ्चुरस्य। मत्स्यभेदे (काकिला) अच् समा०। कङ्कत्रोटीऽप्यत्र।

कङ्कपत्र पु० कङ्कस्य पत्रेण पत्रं पक्षोऽस्य। पुङ्खे तत्पत्रयुक्ते शरे

कङ्कमुख पु० कङ्कस्य मुखमिव मुखमस्य। (साडाशि) संदंशे

**कटायन** न० कटस्य तृणासनस्य अयनमुत्पत्तिस्थानम्। वीरणमूले

**कटाह** पु० कटमाहन्ति आ-हन ड। महिषीशिशौ, तैलादे पाकसाधनपात्रे, खर्परे, नरके च।

**कटि(टी)** स्त्री० कट-इन्। श्रोणिदेशे (काकाल)। कृदिकारा-न्तत्वात् वा ङीप्। [वर्त्मनि च।

**कटित्र** न० कटिं त्रायते त्रै-क। काञ्च्याम् कटिवस्त्रे कटि-

**कटिल्ल** पु० कट-इल्ल। कारवेल्ले (करेला)।

**कटिसूत्र** न० कट्यां धार्य्यं सूत्रं शाक०। कटिधार्य्ये कार्पास-रचिते धातुमये वा सूत्रे (धुनसी गेंट)। [यद्वा धार्य्यते

**कटीतल** पु० कट्या तलमास्पदमस्य। वक्रखड्गे यतोऽसौ कटिदेशे

**कटीर** पु० कट-ईरन्। जघने कन्दरे, च। कट्याः न०।

संज्ञायां कन् नितम्बे। तद्वत, तीक्ष्णे, मत्सरिणि च त्रि०

**कटु** न० कट-उ। दूषणे, दुष्कार्य्ये, रसभेदे (झाल) तद्वति त्रि०।

चम्पके, चीनकर्पूरे, पटोले, कटुकीलतायाञ्च स्त्री० वा ङीप्।

**कटुक** पु० कटु स्वार्थे संज्ञायां वा कन्। पटोले, सुगन्धितृणे,

अर्कवृक्षे (आकन्द) कुटजवृक्षे, (कुरची) राजसर्षपे (राइ

सरिषा) शुण्ठीपिप्पलीमरिचरूपे त्रिकटौ न०। [लशुने च

**कटुकन्द** पु० कटु कन्दो मूलं यस्य। शिग्रुवृक्षे (सजना) आर्द्रके,

**कटुकफल** पु० कटुकं फलमस्य। कक्कोले।

**कटुका** स्त्री० कटु+संज्ञायां कन्। (कट्की) कटुरोहिण्याम्,

ताम्बूल्यां राजिकायां, (राइसरषा) तिक्तालाबुके च (तितलाउ)

**कटुकी** स्त्री० कटु+स्वार्थे कन् गौरा० ङीष्। (कट्की) कटुकायाम्

**कटुकीटक** पु० कटु कीट स्वार्थे कन्। मशके। [पक्षिणि।

**कटुक्वाण** पु० कटुस्तीव्रः क्वाणो यस्य। (तितिर) टिट्टिभ-

**कटुग्रन्थि** पु० न०। कटुः ग्रन्थिरस्य। पिप्पलीमूले, शुण्ठीमूले च

**कटुच्छद** पु० कटु च्छदं पत्रं यस्य। तगरवृक्षे (टगर)

**कटुतिक्तक** पु० कटुश्चासौ तिक्तश्चेति स्वार्थे कन्। भूनिम्बे, शणवृक्षे च कटुतुम्ब्याम् स्त्री०। टाप् अत इत्वम्।

**कटुतुम्बी** स्त्री० कर्म०। (तितलाउ) लताभेदे। कटु तुण्डं मुखमस्याः ङीप् कटुतुण्डीत्यप्यत्र। [त्रिकमप्यत्र।

**कटुत्रय** न० कटूनां त्रयम्। शुण्ठीपिप्पलीमरिचानां त्रये। कटु-

**कटुदला** स्त्री० कटु दलं यस्याः। (काकुड) कर्कट्याम्।

**कटुफल** पु० कटु फलं यस्य। पटोले। श्रीवल्लीवृक्षे स्त्री०।

**कटुभद्र** पु० कटु भद्रं एकदेशो यस्य। शुण्ठ्याम्। कटुरपि भद्रः हितकारी कर्म० कटुभद्रोऽप्यत्र।

**कटुमञ्जरिका** स्त्री० कटुर्मञ्जरी यस्याः। अपामार्गे।

**कटुर** न० कटु विपाके कटुरसं राति रा-क। तक्रे।

**कटुरस** पु० कटुस्तीक्ष्णो रसो ध्वनिर्यस्य। भेके।

**कटुरोहिणी** स्त्री० कटु सती रोहति रुह-णिनि कटुकायाम्

**कटुवार्त्ताकी** स्त्री० कर्म०। श्वेतकण्टकारिकायाम्।

**कटुवीजा** स्त्री० कटु वीजं यस्याः। पिप्पल्याम्।

**कटुस्नेह** पु० कटुः स्नेहः तैलादिरूपो निर्य्यासो यस्य। सर्षपे

**कट्टार** पु० कटौ कटिप्रदेशे वा आवरणम् ऋच्छति कट-अण्। (काटार) अस्त्रभेदे। कट-ण्वुल् कट्टारकोऽप्यत्र।

**कट्फल** पु० कट-क्विप् कट् फलं यस्य। (कायफल) श्रीपर्णी-वृक्षे गाम्भार्य्याम् (गाभार) बृहत्याम्, काकमाच्याम्, वार्त्ताक्याञ्च

**कट्वर** न० कट ष्वरच्। तक्रे, दधिसरे व्यञ्जने च।

**कट्वी** स्त्री० कटु+गुणवचनत्वात् ङीप्। (कट्की) कटुकायाम्।

**कठ** आध्याने (उत्कण्ठापूर्व्वकस्मरणे) वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। कण्ठयति ते कण्ठति। अचकण्ठत् त अकण्ठीत्। [अकाठीत्।

**कठ** कृच्छ्रजीवने भ्वादि० पर० अक० सेट्। कठति अकठीत्

**कठ** आध्याने उत्कण्ठापूर्व्वकस्मृतौ इदित् भ्वा० आत्म० सक० सेट्। प्रायेणोत्पूर्व्व। उत्कण्ठते उदकण्ठिष्ट। [हरि च।

**कठ** पु० कठ-अच्। मुनिभेदे ऋग्वेदीयशाखाभेदाम् तच्छाखाध्ये

**कठाकु** पु० कठ आकु। पक्षिभेदे।

**कठिञ्जर** पु० कट-इन् कठिं कठिनं जरयति जॄ+णिच् अच्। पृषो० मुम् च। तुलस्याम् पर्णासवृक्षे बर्बरायाञ्च। [स्त्री०

**कठिन** त्रि० कट-इनच्। क्रूरे निष्ठुरे कठोरे स्तब्धे च स्थाल्याम्

**कठिनपृष्ठ** पु० कठिनं पृष्ठमस्य। कच्छपे।

**कठिनी** स्त्री० कठिन+गौरा० ङीष्। वर्णलेखनसाधने द्रव्ये। खटिकायाम्। कठिनो विद्यतेऽस्येति नैषधम् स्वार्थे कन् अल्पार्थे। [ताञ्छीच्छविरिति माघ।

**कठोर** त्रि० कठ-ओरन्। कठिने, पूर्णे च। कठोरताराधिप

**कड** भेदने रक्षणे च चुरा० इदित् उभ० सक० सेट्। कण्ड-यति ते अचकण्डत् त। [-डीत् अकण्डिष्ट।

**कड** हर्षे भ्वा० उदित् उभ० सक० सेट्। कण्डति ते अक-

**कड** मदे तुदा० पर० सक० सेट्। कडति अकाडीत् अकडीत्।

**कडक** न० कड-अच् संज्ञायाम् कन्। (करकच) लवणभेदे।

**कडङ्गर** न० कड गिरति गृणाति वा अच् नि० मुम्। माषमुद्गादिकाष्ठे (च्यागडा) बुसे।

**कडङ्गरीय** त्रि० कडङ्गरमर्हति। बुसभक्षणयोग्ये गवादौ।

**कडम्ब** पु० कड-अम्बच्। शाकनाडिकायाम्, (डाट) कोणे, प्रान्तभागे च।

**कडम्बी** स्त्री० कडम्बो भूयसा विद्यतेऽस्याः अर्श आद्यच् गौरा० ङीष्। (कलमी) शाकभेदे तस्याः कडम्बभूयस्त्वात्।

कठार पु० कड मेचने आरन् गत्सपकादेश । पिङ्गलवर्णे । तद्वति त्रि० । करभकण्टकठारभासा इति माघ ।

कडु कार्कश्ये भ्वा० पर० अक० सेट् । कडुति अकडुीत् ।

कण आर्त्तस्वरे भ्वा० पर० अक० सेट् । कणति अकाणीत् अकणीत् । णिचि अचीकणत् त अचकाणत् । [णति ते

कण गतौ भ्वा०पर०सक०सेट् । कणति अका(क)णीत् । णिचि कण-

कण पु० कण निमीलने अच् । धान्यादेरतिसूक्ष्मांशे, लेशे च गौरा० ङीष् वनजीरके स्त्री० । अल्पार्थे टाप् । क्षुद्रांशे, जीरके पिप्पल्याम्, श्वेतजीरके च । [कणात् अचकाणत त

कण निमीलने चुरा० उभ०सक०सेट् । काणयति ते । अची-

कणजीरक न० कर्म० । क्षुद्रजीरके ।

कणभक्ष पु० भक्ष-अण् उप० । श्यामचटके कणादे मुनौ 'कण भक्षपक्षानुकारिणा मिति प्रकाशिका । ण्वुल् कणभक्षकोऽप्यत्र

कणिक पु० कणो विद्यतेऽस्य अस्त्यर्थे ठन् । गोधूमचूर्णे,(मयदा) अतिसूक्ष्मांशे, अग्निमन्थवृक्षे च स्त्री० ।

कणित न० कण आर्त्तस्वरे क्त । पीडितानां शब्दे ।

कणिश न० कणो विद्यतेऽस्य इति कणो तं श्यति शो क । शस्यमञ्जर्यां धान्यादिशीर्षे च ।

कणीयस् त्रि० कण+ईयसु । अत्यन्ताल्पे ।

कणे अव्य० कण-के । अभिलाषातिशये ।

कणेर पु० कण एर । कर्णिकारवृक्षे । वेश्यायां हस्तिन्याञ्च स्त्री०

कण्टक पु०न० कटि ण्वुल् । क्षुद्रशत्रौ, क्षुद्रशत्रौ रोमाञ्चे, मत्स्याद्यस्थ्नि द्रुमाङ्गे (काटा) 'लग्नाम्बुद्यूनकर्माणि केन्द्र-मुक्तञ्च कण्टकमि ति ज्योतिषोक्ते लग्ने, तत्र चतुर्थसप्त-मदशमस्थानेषु च । [(शिमुल) ।

कण्टकद्रुम पु० मयडकान्वितो द्रुम शाक० । शाल्मलीवृक्षे

कण्टकप्रावृता स्त्री० ३त० । घृतकुमार्य्याम् ।

कण्टकफल पु० कण्टकान्वितं फलं यस्य । पनसवृक्षे (काटाल) कण्टकिफलोऽप्यत्र । [वैगुण) तस्याप्यत्रे कण्टकान्वितत्वात्

कण्टकहल्लाकी स्त्री० कण्टका यता हल्लाकी । वार्त्ताक्याम्

कण्टकश्रेणी स्त्री० कण्टकानां श्रेणी यत्र । कण्टकार्य्याम् ।

कण्टकारिका स्त्री० कण्टकान् इयर्त्ति कण्टक+ऋ-ण्वुल् स्वनामख्याते वृक्षे । फलेऽपि लुक् हरितक्यादित्वात् स्त्री०

कण्टकारी स्त्री० कण्टक+ऋ-अण् । इत्यमाम् । फलेऽपि तस्य लुक् हरितक्यादित्वात् स्त्री० ।

कण्टकाशन पु० कण्टकमश्नाति अश-ल्यु । उष्ट्रे ।

कण्टकित त्रि० कण्टको रोमाञ्चो जातोऽस्य इतच् । जात-पुलके 'पीतिकण्टकितत्वच' इति कुमार ।

कण्टकिन् पु० कण्टक+इनि । मत्स्यभेदे, खर्जूरवृक्षे विक-ङ्कतवृक्षे (दइची) गोक्षुरे, खदिरवृक्षे बदरवृक्षे वंशभेदे (वेड वाश) । वार्त्ताक्यां गोक्षुरकण्टाञ्च स्त्री० ।

कण्टकिल पु० कण्टक+इलच् । (वेडाश) । वंशभेदे । [याम्

कण्टकिलता स्त्री० कण्टकिनी लता कर्म० । (शसा) त्रपुषीलता

कण्टकी स्त्री० कण्टक+अर्शआदित्वात् गौरा० ङीष् । वार्त्ताकीभेदे । [इच्छन्ताम् ।

कण्टतनु स्त्री० कटि अच् कण्टा कण्टकान्विता तनुर्यस्या ।

कण्टदला स्त्री० कटि-अच् कण्टं दलं यस्या । केतक्याम् ।

कण्टपत्र पु० कण्ट कण्टकान्वितं पत्रं यस्य । विकङ्कतवृक्षे ।

कण्टपत्रफला स्त्री० कण्ट कण्टकान्वितं पत्रं फलञ्च यस्या । ब्रह्मदण्ड्याम् । [ङ्कतवृक्षे । (वइची)

कण्टपाद पु० कण्ट कण्टकान्वितं पादो मूलं यस्य । विक-

कण्टफल पु० कण्टं कण्टकान्वितं फलं यस्य । गोक्षुरे पनसे धुस्तूरे. लताकरञ्जे, एरण्डभेदे च ।

कण्टल पु० कण्ट+मत्वर्थीयो लच् । वब्बुले (वाबला)

कण्टवल्ली स्त्री० कण्टा कण्टकान्विता वल्ली कर्म० । श्रीवल्लीवृक्षे

कण्टार्त्तगला स्त्री० कण्टा अर्त्तं गला कर्म० । नीलझिण्ट्याम्

कण्टालु पु० कटि+आलु । इह्यां, वंशभेदे वार्त्ताक्याञ्च ।

कण्ठ पु० कण-ठ तस्य नेत्वम् कठि अच वा । ग्रीवापुरोभागे, मदनवृक्षे, समीपे, होमकुण्डाद्वहिर्ऽङ्गुलिमितस्थाने च ।

कण्ठतलासिका स्त्री० कण्ठतले अश्वकण्ठप्रदेशस्थाने आस्ते आस ण्वुल् । अश्वपोशाबन्धकचर्मादौ ।

कण्ठाग्नि पु० कण्ठे अग्नि पाकानलोऽस्य । पक्षिणि, तस्य कण्ठाध करणमात्रेणैवाहारादे पाकाद्यग्नित्वात् कण्ठा-ग्नित्वम् । [अरिले च । जने गोणीभेदे च स्त्री० ।

कण्ठाल पु० कटि-आलच् । शूरणे (ओल) युद्धे, उष्ट्रे, नौकायां,

कण्ठिका स्त्री० कठि-ण्वुल् । (एकनर) कण्ठाभरणभेदे ।

कण्ठी स्त्री० क्षुद्र कण्ठ अल्पार्थे ङीप् । अश्वकण्ठबन्धनरज्ज्वाम्

कण्ठीरव पु० कण्ठेन रवो यस्य । सिंहे, मत्तगजे, कपोते च

कण्ठेकाल पु० कण्ठे कालः सप्तम्या अलुक् । महादेवे ।

कण्डन न० कडि-ल्युट् । मुषलादिना तण्डुलादेर्निस्तुषता सम्पादने (काडान) । [कण्डनी चोदकुम्भश्चे ति मनु ।

कण्डनी स्त्री० कण्ड्यतेऽनेन कडि ल्युट् । मुषले उदूखले च

कण्डिका स्त्री० कडि ण्वुल् । वेदैकदेशे ।

कण्डु स्त्री० कडि-उ । गात्रघर्षणे, तत्कारके रोगे च (चुलकान) ।

कण्डु(ण्डू)र पु० कण्डुं कण्डूं वा राति रा क । कारवेल्ल-लतायाम् (करेला) शूकशिम्ब्याम् (आलकुशी) स्त्री० ।

कण्डू स्त्री० कण्डूञ् गात्रविघर्षणे कण्ड्वादित्वात् क्विप् । कण्डूयने गात्रघर्षणे । 'कपोलकण्डू'मिति कुमार ।

कण्डूकरी स्त्री० कृ-टक् उप० । शूकशिम्बाम् (आलकुशी) ।

कण्डूघ्न पु० कण्डू हन टक् । आरग्वधे गौरसर्षपे च ।

कण्डूति स्त्री० कण्डूय क्तिन् । कण्डूयने गात्रघर्षणे ।

कण्डूयन स्त्री० कण्डू यक् ल्युट् । कण्डूाम् गात्रघर्षणे ।

कण्डूया स्त्री०कण्डू यक् कण्डूय-अ-स्त्रीत्वात् टाप् । कण्डूम्

कण्डूल पु० कण्डू+लच् । कण्डुकारके शूरणे । कण्डूयुक्ते त्रि०

कण्डोल पु० कडि-ओल । वंशादिरचिते धान्यस्थापनपात्रे । (डोल) उष्ट्रे च । [पोका)

कण्ड्वोघ पु० कण्डूनामोघो यस्मात् ५ब० । शूककीटे (शूया-

कण्व पु० कण-क्वन् । मुनिभेदे । पापे न० ।

कतक पु०तक हासे कस्य जलस्य तको हास प्रकाशो यस्मात् ५ब०(निर्मली) वृक्षभेदे । यस्य फलसम्पर्कात् जलप्रसाद

कतम त्रि० किम्+डतमच् । बहूनां मध्ये एकस्य जातिप्रश्नेऽर्थे डतमच् । बहूनां मध्ये एकस्मिन् ज्ञातुमिष्टे विशेषधर्म्म ज्ञानाय पृष्टे । द्वयोर्मध्ये तदर्थे डतरच् । कतर ।

कति त्रि० किम्+डति । सङ्ख्याभेदपरिज्ञानाय पृष्टे ।

कतिपय त्रि०कति+अयच् पुक् च । कतिपयार्थे ।

कत्तृण कुत्सितं तृणं कोः कदादेश । तृणे (पाकुलिया) सुगन्धि काया (पाना) सुगन्धितृणे च ।

कत्तोयं न० कुत्सितमीषद्वा तोयं यत्र । मद्ये ।

कत्थ श्लाघायां भ्वा०आत्म०अक० सेट् । कत्थते अकत्थिष्ट ।

कत्र शैथिल्ये अद०चुरा०उभ०अक० सेट् । कत्रयति ते अचकत्रत् त । [अचीकथत् त अचकथत् त ।

कथ वाक्यरचनायां अद० चुरा०उभ०सक० सेट् । कथयति ते

कथक त्रि० कथ ण्वुल् । तत्त्वनिर्णयार्थं वादरूपकथाकर्त्तरि, कथोपजीविनि नाटकवर्ण०कर्त्तरि च । [रमनात्वमि ति माघ

कथङ्कारम् अव्य०कथम्+कृ णमुल् । कथं कृत्वेत्यर्थे । 'कथङ्का-

कथञ्चन अव्य० कथम्+चन । केनाप्येनेत्यर्थे ।

कथञ्चित् अव्य० कथम्+चित् । कथञ्चनार्थे अतियत्नेनेत्यर्थे च भाषान् कथञ्चिदपि धारयितुमिति रसमञ्जरी ।

कथम् अव्य० किम्+प्रकारार्थे थमु कादेश । केन प्रकारेणेत्यर्थे

कथमपि अव्य०कथम् च अपि च द्व० । अतियत्नेनेत्यर्थे अति-गौरवेणेत्यर्थे च । [यत्न । २त० । किंप्रकारप्राप्ते ।

कथम्भूत त्रि० कं प्रकार भूत प्राप्त किम्+द्वितीयान्तादपि

कथा स्त्री० कथ-अ । कथने, 'प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञा कथां विदुः । परम्पराश्रया या स्यात् सा मताख्यायिका पुनः'रित्युक्तलक्षणे वाक्ये प्रबन्धरचनायां कादम्बर्यादिग्रन्थे, पक्षप्रतिपक्षोपन्यासेन विचारणायां, वादरूपे वाक्ये च ।

कथाप्रसङ्ग पु० कथायां प्रसङ्गो यस्य । वावदूके । गोष्ठीवचने वातुले, विषवैद्ये 'कथाप्रसङ्गेन जनैरुदाहृतादि'ति भारवि

कद रोदने, वैक्लव्ये अक० आह्वाने सक० भ्वा० इदित् पर० सेट् । कन्दति अकन्दीत् । [अकादिष्ट । णिच्-कादयति ते ।

कद विह्वलीभावे दिवा० आत्म० अक० सेट् घटादि । कद्यते

कदध्वन् पु०कुत्सितोऽध्वा कदादेश र्गात०।कुपथे । [ल्युट् । युद्धे

कदन न० कद णिच्-ल्युट् । पापे, मर्द्दने,मारणे च । आधारे

कदम्ब पु० कद-अम्बच् । स्वनामख्याते वृक्षे । सर्षपे देवताड वृक्षे । समूहे च न० । स्वार्थे कन् । तत्रैव न० ।

कदम्बगोलकन्याय पु० कदम्बपुष्पस्य गोलके यथा सर्व्वावय वेषु युगपत्पुष्पाणामुत्पत्तिस्तादृशे एकदोत्पत्तौ दृष्टान्तभेदे

कदर पु० क जलं दृणाति पचाद्यच् । श्वेतखदिरे (काटाबाव-ला) वृक्षभेदे च । [क्त । विडम्बिते, दूषिते च ।

कदर्थित त्रि० कुत्सितोऽर्थः कदर्थस्तत् करोतीति णिच् कर्म्मणि

कदर्य्य त्रि० कुत्सितोऽर्य्यः स्वामी कुगति० । सति विभवे अदा-तरि, क्षुद्रे । 'आत्मानं धर्म्मकृत्यञ्च पुत्रदारांश्च पातयन् । यो लोभात् सञ्चिनोत्यर्थान् स कदर्य्य इति स्मृत' इत्युक्त लक्षणेऽर्थसञ्चयकारके च ।

कदल पु० कद-कलच् । रम्भावृक्षे । अजा दृत्वात् टाप् । पृश्नी लतायां (चाकुलिया) शाल्मलीवृक्षे च । [पताकायां,मृगभेदे च

कदली स्त्री०काय दल्यते त्वगादौ ज्वलवाहुल्यात् । रम्भावृक्षे,

कदलीकुसुम न० ६त० । (मोचा) कदलीपुष्पे ।

कदलीदण्ड पु०६त० । कदलीमध्यस्थे दण्डाकारे पदार्थे (थोड)

कदा अव्य०कस्मिन् काले किम्+दा कादेश । कस्मिन् काले इत्यर्थे

कदाख्य पु० कुत्सिता आख्या यस्य कदादेश । (कुड) वृक्षे

कदाचन अव्य० कदा+चन । अनिर्द्धारिते कस्मिंश्चित् कालेऽर्थे चित् । कदाचित् अव्य० कदा+चित् कदाचनार्थे कदा-पीत्यर्थे च । [तद्वति त्रि० ।

कदुष्ण न०कुत्सितम् ईषदुष्णं कोः कदादेश । ईषदुष्णे स्पर्शे ।

कद्रु पु० कद-रु । पिङ्गलवर्णे । तद्वति त्रि० नागमातरि स्त्री० ।

कद्रू स्त्री० कद्रु+संज्ञायामूङ् । नागमातरि कश्यपपत्नाम् ।

कद्रू(द्रु)पुत्र पु० ६त० । सर्पे । कद्रु(द्रू) सुतादयोऽप्यत्रार्थे ।

कद्वद त्रि० कुत्सितं वदति कु+वद-अच् कदादेश । गर्हितवा-क्यवादिनि । [अकानीत्

कन प्रीतौ अक० गतौ सक० भ्वा०पर० सेट् । कनति अकनीत्

कनक न० कन-वुन् । स्वर्णे,किंशुकवृक्षे,नागकेशरे धुस्तूरे धुस्तूरे च

कनकक्षार पु० कनकस्य तद्द्रावणाय क्षारः । (सोहागा) टङ्कणे तत्सम्पर्कात् हि झटिति कनकं द्रवति ।
कनकच्छत्र न० कनकदण्डं छत्रं यस्य शाक० । राजच्छत्रे ।
कनकप्रसवा स्त्री० कनकमिव प्रसवः पुष्पं यस्याः । स्वर्णकेतक्याम् ।
कनकरस पु० कनकमिव रसो यस्य । हरिताले ।
कनकलोद्भव पु० कनतीति कना दीप्ता कला अवयवः तया उद्भवति उद्+भू-अच् । (धूना) शालनिर्यासे ।
कनकाचल पु० कर्म० । सुमेरुपर्वते, धान्यचलादिषु दशसु दानीयपर्व्वतेषु मध्ये दानीये स्वर्णपर्व्वते च ।
कनकाध्यक्ष पु० ६त० । सुवर्णरक्षणादावधिकृते ।
कनकारक पु० कनकं दीप्तं यथा तथा अर्च्छति सर्व्वतो व्याप्नोति ऋ-ण्वुल् । कोविदारवृक्षे ।
कनकालुका स्त्री० कनकनिर्म्मिता आलुः संज्ञायां कन् । भृङ्गारे (झारी) सौवर्णकलसे च ।
कनखल पु० तीर्थभेदे ।
कनिष्ठ त्रि० अयमेषामतिशयेन अल्पो युवा वा इष्ठन् कनादेशः । अतियूनि, अत्यल्पे, अनुजे च । अनुजायां सर्व्वाभ्यः क्षुद्राङ्गुलौ च स्त्री० टाप् । कनिष्ठभ्रातः पत्नीमपि अजादित्वात् टाबेव ।
कनी स्त्री० कन-अच् गौरा० ङीष् । दुहितरि ।
कनीनिका स्त्री० कन-ईन संज्ञायां कन् टाप् अत इत्वम् । अक्षितारायाम्, कनिष्ठाङ्गुलौ च ।
कनीयस् त्रि० अयमनयोरतिशयेन युवा अल्पो वा ईयसुन् कनादेशः । द्वयोर्मध्ये अल्पतरे युवतरे, अनुजे च । स्त्रियां ङीप् ।
कनीयस न० कनी दीप्तिं तया यस्यति यस-अच् । ताम्रे ।
कन्तु पु० कम-तु । कामदेवे । हृदये न० । कं सुखमस्त्यस्य कम्+अस्त्यर्थे तु । सुखवति त्रि० । [धान्यागारे । (काथा)
कन्था स्त्री० कम थन् । [illegible] (काथा) [illegible]-
कन्थारी स्त्री० अतिकण्टकवत्त्वात् कन्थामपि आर्च्छति वेधनेन प्रविशति ऋ-अण् । [illegible] वृक्षे ।
कन्द पु० न० कन्दति कन्दयति कन्द्यते वा कदि-अच् णिच् अच्, घञ् वा । शूरणे (ओल) मूलमात्रमूले, लशुने च (रसुन) मेघे पु० । [(गुग्गुली) इति ख्याते कन्दे च ।
कन्दगुडूची स्त्री० कन्दोद्भवा गुडूची शाक० । गुडूचीभेदे,
कन्दट न० कदि-अटन् । श्वेतोत्पले । [(कन्दरा)
कन्दफला स्त्री० कन्दात् फलं यस्याः । [illegible] ।
कन्दर पु० स्त्री० कम् जलेन दीर्यते कम्+दॄ-अप् । कृत्रि-
कारे गिरिनितम्बदेशे गुहायाम्, स्त्रीत्वे टाप् ङीप् वा अङ्कुशे पु० । आर्द्रके न० ।
कन्दराकर पु० ६त० । पर्व्वते ।
कन्दराल पु० कन्दरा+मत्वर्थे लच् । गर्द्दभाण्डवृक्षे प्लक्षवृक्षे (पाकुड) आक्षोटवृक्षे च । [पाषाणभेदवृक्षे ।
कन्दरोद्भवा स्त्री० कन्दरे उद्भवति उद्+भू-अच् । क्षुद्र-
कन्दर्प पु० कम् सुखं तेन तत्र वा दृप्यति कम्+दृप+अच्, कम् कुत्सितो दर्पोऽस्मात् वा । कामदेवे ।
कन्दर्पकूप पु० कन्दर्पस्य कूप इव । स्त्रीचिह्नभेदे ।
कन्दर्पजीव पु० कन्दर्पं जीवयति उद्दीपयति जीव णिच् अण् । कामवर्द्धननामकवृक्षे ।
कन्दर्पमुषल पु० कन्दर्पस्य मुषल इव । पुरुषचिह्नभेदे ।
कन्दल न० कदि-कलच् । कपाले नवाङ्कुरे, कलध्वनौ अपवादे, कन्दलीतरुपुष्पे च । कनके, युद्धे कलापे च पु० ।
कन्दली स्त्री० कन्दे लीयते ली-ड, कदि-कलच् वा गौरा० ङीष् । मृगभेदे गुल्मभेदे, पताकायाम्, पद्मबीजे, भूमिकदल्याञ्च ।
कन्दलीकुसुम न० ६त० । भूमिकदलीपुष्पे, छत्राके च
कन्दवर्द्धन पु० कन्देन वर्द्धते वृध-ल्यु । शूरणे (ओल)
कन्दवल्ली स्त्री० कन्दादारभ्य वल्ली । वन्ध्याकर्कोट्याम् ।
कन्दशूरण पु० कन्दप्रधानः शूरणः शाक० (ओल) शूरणे
कन्दु पु० स्त्री० स्कन्द उ सलोपः । (ताओया) स्वेदनीपात्रे 'कन्दुपक्वं तैलपक्वमिति' स्मृतिः तण्डुलादेः भर्ज्जनपात्रभावे च गोकुले कन्दुशालायामिति भरतः । [ति कुमारः ।
कन्दुक पु० कदि उक । गेन्दुके, 'सा कन्दुकैः ललितपुलकैर्
कन्दुपक्व त्रि० स्नेहोपसेकं विना कन्दुपात्रे पक्वं तण्डुलादि । शुष्कतया भृष्टतण्डुलादौ । कन्दुपक्वानि तैलेनेत्यादिस्मृतिः
कन्दोट पु० कदि-ओटन् । श्वेतोत्पले । नीलोत्पले न० ।
कन्दोत पु० कन्दे मूले उत वेञ्-क्त । कुमुदे ।
कन्धर पु० कम् जलम् धारयति धृ-अच् । मेघे । कम् शिरः धरा । ग्रीवायाम् स्त्री० ।
कन्धि पु० कम् शिरो धीयतेऽस्मिन् कम्+धा कि । ग्रीवायाम् ।
कन्न न० कद-क्त । पापके, मूर्च्छायाञ्च ।
कन्यका स्त्री० अल्पा कन्या कन्या+अल्पार्थे कन् क्षिपकादित्वात् नेत्वम् । 'कन्यका दशमे प्रोक्ता' इत्युक्तायां दशवर्षीयां कुमार्याम् ।
कन्या स्त्री० कन-यक् [illegible] । अनूढायां कुमार्याम्, मेषादितः षष्ठे राशौ च ।

**कन्याकुब्ज** पु० कन्याः कुब्जा यत्र । कान्यकुब्जदेशे तत्र हि वायुना 'कन्याशतस्य कुब्जत्वं कृतमि'ति रामायणकथा ।

**कन्याट** पु० कन्या अटयत्र घञ् । वासभवने ।

**कप** चलने (सौत्र) पर०अक०सेट् । कपति अकपीत् अकापीत्

**कप** चलने भ्वादि० इदित् आ०त्म०अक०सेट् । कम्पते अकम्पिष्ट

**कपट** पु न० के मूर्द्धनि अपि पट इवाच्छादक । अन्यथास्थितस्य वस्तुनोऽन्यथात्वेनाच्छादने ।

**कपटिन्** त्रि० कपट+इनि । छलयुक्ते । चीनानामगन्धद्रव्ये पु० ।

**कपर्द्द** पु० पर्द्द पूरणे क्विप् रात् वलोपे पर् पर्त्ति० कस्य गङ्गाजलस्य परा पूर्त्तिं दायति शुध्यति क+पर्+दैप्-क । हरजटायाम् । केन सुखेन पूर्त्तिं ददाति दा-क । वराटके अल्पार्थे कन् स्त्रीत्वे टाप् अत इत्त्वम् । कपर्द्दिकाप्यत्र ।

**कपर्द्दिन्** पु० कपर्द्द+अस्त्यर्थे इनि । महादेवे ।

**कपाट** स्त्री० न० कं वातं पाटयति वहिर्गमयति पट णिच् अण् । द्वारावरणेन वातरोधके स्वनामख्याते काष्ठादौ । अणन्तत्वात् स्त्रियां ङीप् । कपाटीत्यप्यत्र ।

**कपाल** पु० न० कं जलं पालयति अण् । घटादेरवयवे शिरोऽस्थ्नि, यतीनां भिक्षापात्रे, कर्परे च । सौत्रकप-कालन् । समूहे, कुष्टरोगभेदे च ।

**कपालभृत्** पु० कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति भृ-क्विप् । शिवे । [शिवे । दुर्गायां स्त्री० ङीप् ।

**कपालमालिन्** पु० कपालानां माला विद्यतेऽस्य इनि ।

**कपालिका** स्त्री० क्षुद्रं कपालमल्पार्थे कन् अत इत्त्वम् । भग्नमृण्मयखण्डे (खापरा) । [च । तद्वति त्रि० ।

**कपि** पु० सौत्र कप-इ । वानरे, रक्तचन्दने वराहे, कपिलवर्णे

**कपिकच्छु** स्त्री० कपीनामपि कच्छू यस्याः ५ब० । (आल्कुषी) कपिकण्डूहेतौ शूकशिम्ब्याम् ।

**कपिका** स्त्री० कप-वुन् । नीलसिन्धुवारवृक्षे ।

**कपिकेतन** पु० कपिः केतनं ध्वजरूपं चिह्नं यस्य । अर्ज्जुने कपिध्वजोऽप्यत्र । [तथात्वात्

**कपिचूडा** स्त्री० कपीनां चूडेव । आम्रातकवृक्षे तस्य तदाकारत्वात् (?) तस्य तत्कुलेन

**कपिचूत** पु० कपीनां चूत इव प्रियः । आम्रातकवृक्षे ।

**कपिञ्ज** पु० कं जलमिव पिञ्जते वर्ण्यते पिजि क नलोपः । (तित्तिर) भिल्लके ।

**कपिञ्जल** पु० कमिव पिञ्जते पिजि-कलच् । गौरतित्तिरौ, चातके च 'कपिञ्जलमालभेते'ति श्रुतिः ।

**कपित्थ** पु० कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् स्था क पृषो० । (कयतवेल) वृक्षभेदे कपित्थवदासन' इति भागवतम् ।

**कपित्थत्वक्** पु कपित्थस्य त्वगिव त्वक् वल्कलमस्य । एलवालुकवृक्षे

**कपित्थास्य** पु० कपित्थमिवास्यं यस्य । गोलाङ्गलाख्ये वानरभेदे

**कपिप्रभा** स्त्री० कपावपि प्रभा स्वगुणप्रसारोऽस्याः । (आलकुषी) कपिकच्छाम् ।

**कपिप्रिय** पु० ६त० । आम्रातकवृक्षे कपित्थे च ।

**कपिरथ** पु० कपि हनुमान् रथ इव वाहनम् यस्य । रामचन्द्रे कपीरथे यस्य । अर्ज्जुने ।

**कपिल** पु० कव-इलच् पादेशः । अग्नौ, वासुदेवे, सांख्यशास्त्रकारके मुनिभेदे, स च कर्द्दमप्रजापतितो देवहूत्यां भगवदंशेन जात' । कुक्कुरे, दानवभेदे, पिङ्गलवर्णे च तद्वति त्रि० । स्वर्णवर्णायां गवि, नदीभेदे, रक्तपुष्पयोगात् शिंशपायां पुण्डरीकनामदिग्गजकरिण्याञ्च स्त्री० ।

**कपिलधारा** स्त्री० कपिलेव शुभ्रा धारा यस्याः । गङ्गायां स्वर्गनद्याम् । कपिलानां धारा दुग्धधारा यत्र । काश्यां प्रसिद्धे तन्नामकतीर्थे ।

**कपिलशिंशपा** स्त्री० कर्म० । पीतपुष्पयुतायां शिंशपायाम् ।

**कपिलाक्षी** स्त्री० कपिलमक्षिवत् पुष्पमस्याः । पीतपुष्पायां शिंशपायाम् । [इन्द्रे ।

**कपिलाश्व** पु० कपिलरूपैरश्वैर्वहनात् कपिलवर्णाश्वयोगाच्च

**कपिलोमफला** स्त्री० कपिलोमन्यपि फलं कण्डूयनमस्याः । (आलकुषी) दुरालभायाम् ।

**कपिलोह** न० कपितुल्यं पिङ्गलं लोहं धातु । पित्तले ।

**कपिवक्त्र** पु० कपेर्वक्त्रमिव वक्त्रमस्य । नारदे तस्य शापकृतकपितुल्यास्यत्वं पुराणे प्रसिद्धम् । [आम्रातकवृक्षे ।

**कपिवदान्य** पु० कपिषु वदान्यो मधुफलवत्त्वेन तत्प्रदानात् ।

**कपिवल्ली** स्त्री० कपिरिव तल्लोमतुल्या वल्ली । गजपिप्पल्याम्

**कपिश** पु० कपि कपिलवर्णोऽस्त्यस्मिन् अस्त्यर्थे श । (शिलारस) सिह्लके । कृष्णपीतमिश्रे वर्णे च । तद्वति त्रि० । नदीभेदे, कपिशा तीर्त्वे'ति रघुः । माधव्यां लतायाञ्च स्त्री० ।

**कपिशी** स्त्री० कपिश+गौरा० ङीष् । माधव्याम् मदिराभेदे च

**कपिशीर्ष** न० कपीनां प्रियं शीर्षमत्र श०क० । प्राकाराग्रे ।

**कपिशीर्षक** न० कपेः शीर्षमिव कायति कै+क । हिङ्गुले ।

**कपीज्य** पु० कपिभिरिज्यते यज-क्यप् । क्षीरिकावृक्षे ।

**कपीतन** पु० कपेर्नाम् ई लक्ष्मीं तनोति तन-अच् । आम्रातकवृक्षे, शिरीषवृक्षे च ।

**कपीन्द्र** पु० कपिरिन्द्र इव । हनुमति । कपीनामिन्द्रः । सुग्रीवे ।

**कपीष्ट** पु० कपीनामिष्टः । राजादने कपित्थे च ।

**कपूय** त्रि० कुत्सितं पूयते पूयी-विसरणे अच् पृषो० टलोपः ।

कुत्सिते। 'कपूयचरणाः कपूययोनिमापद्यन्ते इति श्रुतिः।

**कपोत** पु० कोवातः पोत इव यस्य। पारावते पक्षिमात्रे च।

**कपोतक** न० कपोत इव कायति प्रकाशते कै-क। सौवीराञ्जने

**कपोतपालिका** स्त्री० पालयति पाल+ण्वुल्-उप०। स्तम्भाग्र प्रसारितदारुभेदे सौधादिप्रान्ते काष्ठादिरचिते पक्षिवास-स्थाने विटङ्के (पायराखोप)।

**कपोतपाली** स्त्री० कपोतान् पालयति कर्मण्यण् उप०। प्रासादप्रान्ते दारुनिर्म्मिते पक्षिस्थाने विटङ्के (पायराखोप)

**कपोतवर्णी** स्त्री० कपोतस्य वर्ण इव वर्णो यस्याः गौरा० ङीप्। सूक्ष्मैलायाम्।

**कपोताङ्घ्रि** पु० कपोतस्याङ्घ्रिरिव रक्तवर्णत्वात्। नलीनामद्रव्ये

**कपोतारि** पु० कपोतस्यारिः ६त०। श्येनपक्षिणि।

**कपोल** पु० कबृ-वर्णे-ओलच्। गण्डे। गल्ले (गाल)।

**कफ** पु० केन जलेन फलति फल-ड। शरीरस्थे धातुभेदे श्लेष्मणि। [ण्वुन्। लालायाम् आस्यासवे (थुथु)।

**कफकूर्चिका** स्त्री० कफं कूर्चति विकरोति कुर्च-विकारे

**कफणि** पु०स्त्री० केन जलेन फणति स्फुरति इन्। भुजमध्य-पर्व्वणि। कूर्परे (कनुइ) स्त्रीत्वे वा ङीप्। [हृद्विकारके त्रि०।

**कफवर्द्धन** पु०कफं वर्द्धयति वृध-णिच्-ल्यु। पिण्डारकवृक्षे। कफ-

**कफविरोधिन्** पु०न०कफं विरुणद्धि वि+रुध-णिनि। मरिचे, कफविरोधकारके त्रि०। [वर्व्वूरवृक्षे, कफनाशके त्रि०।

**कफान्तक** पु०कफमन्तयति तत्करोतीति अन्त+णिच्-ण्वुल्।

**कफारि** पु० ६त०। शुण्ठ्याम्।

**कफिन्** त्रि० कफोऽस्त्यस्य कफ+इनि। श्लेष्मप्रधाने जने।

**कफोणि** पु० स्त्री० केन जलेन फणति इन् पृषो० ओत्वम्। भुजमध्यपर्व्वणि कूर्परे (कनुइ) स्त्री० वा ङीप्।

**कबन्ध** पु० कं सुखं बध्नाति बन्ध-अण्, कं बध्यते छिद्यतेऽस्मात् बन्ध-घञ्, केन वायुना बध्यते, कोवायुर्बन्धो वा यस्य यथायथं वाक्यम्। उदरे, धूमकेतौ, राहौ, राक्षसभेदे च। जले न०। 'भवत्यायां यकस्तेन कृतेषु कृतमूर्द्धसु। मदा-वेगात् कबन्धः स्यादेकोऽनुद्धो क्रियान्वित इत्युक्तलक्षणे शिर-शून्यक्रियायुक्तदेहे अस्त्री०। [बः। कपित्थवृक्षे।

**कपित्थ** पु० कपयस्तिष्ठन्त्यत्र तत्प्रियत्वात् स्था-क पृषो० षत्व

**कम्** अव्य० कम-णिङ्भावधर्मे विच्। पादपूरणे, जले, मस्तके, रक्षे, मङ्गले, निन्दादाञ्च।

**कम** वाञ्छायां भ्वादि० आत्म० सक० सेट्। कामयते अची-कमत अचकमत। [अचकमत।

**कम** कामनायाम् चुरा०आत्म०सक०सेट्। कामयते अचीकमत

**कमठ** पु० कम अठन्। कच्छपे। यतीनां जलपात्रे न०।

**कमण्डलु** पु०न० मण्डनं मण्डं कस्य जलस्य मण्डं लाति ला-कु। करङ्के, संन्यासिनां जलपात्रभेदे, प्लक्षवृक्षे, चतुष्पाद-जातौ च। [अशोकवृक्षे पु०।

**कमन** त्रि० कामयते कम-ल्यु। कामुके, अभिरूपे, सुन्दरे च।

**कमनच्छद** पु० कमनः सुन्दरः छदोऽस्य। कङ्कपक्षिणि।

**कमनीय** त्रि० कम-अनीयर्। मनोहरे, कामनायोग्ये च।

**कमल** न० कं जलमलति भूषयति कम्+अल-अच्। पद्मे। कम-कलच्। ताम्रे, क्लोमनि, औषधे, जले च न०। मृग-भेदे, सारसविहगे च पु०। [पद्मसमूहे

**कमलखण्ड(षण्ड)** न० कमलानां समूहः कमल+(ष)खण्डच्।

**कमला** स्त्री० कमलं विद्यतेऽस्याः अर्श्चआदित्वात् अच्। लक्ष्म्याम्। कम कलच्। वरस्त्रियाम्।

**कमलालया** स्त्री० कमलमालयो यस्याः। लक्ष्म्याम्।

**कमलासन** पु० कमलमासनं यस्य। चतुरानने ब्रह्मणि।

**कमलिनी** स्त्री० कमलानां समूहः देशो वा कमल+इनि। पद्मसमूहे पद्मयुक्तलतायाञ्च।

**कमलोत्तर** न०कमलमिवोत्तरमुत्कृष्टम्। कुसुम्भपुष्पे।

**कमितृ** त्रि० कम-णिङभावपक्षे तृच्। कामुके स्त्रियां। कमित्री

**कम्प** पु० कपि-चलने घञ्। गात्रादिकम्पे वेपथौ। [चलने

**कम्पन** त्रि०कपि युच्। कम्पयुक्ते। शिशिरे ऋतौ पु०। भावे ल्युट्

**कम्पिल(ल्ल)** पु० कपि-इलच्। (कमलागुंडा) रोचन्याम्। कपि-इल्लच् करञ्जे, 'देवीं कपिल्लवासिनी'मिति श्रुतिः।

**कम्पिल्लक** पु० कम्पिल्ल एव स्वार्थे कन्। (करमचा) करञ्जभेदे।

**कम्प्र** त्रि० कपि-र। कम्पान्विते।

**कम्ब** गतौ भ्वा० पर० सक० सेट्। कम्बति अकम्बीत्।

**कम्बल** पु० कम्ब कलच्। नागभेदे सास्नायां, प्रावारे, कृमौ च। स्वनामख्याते मेषलोमनिर्म्मिते वस्त्रासनादौ, जले च न०

**कम्बलिन्** पु० कम्बलः गलरोमरूपसास्नास्त्यस्य इनि। वृषभे कम्बलवति त्रि०। [वृषभवाह्ये शकटे गन्त्र्यां च।

**कम्बलिवाह्य** न० कम्बलिना वृषेण वाह्यम् वह-ण्यत्।

**कम्बि** स्त्री०कम-इन् बुक् च। दर्व्व्याम् (हाता) वा ङीप्। कम्बी

**कम्बु** पु०न०कम-उ बुक्। शङ्खे गजे च। शम्बूके, वलये, नलके च न०। ग्रीवायां स्त्री०। [स्वार्थे कन् कम्बुकशङ्खाद्यत्र

**कम्बुकण्ठी** स्त्री० कम्बुरिव कण्ठोऽस्याः। कम्बुग्रीवायाम्।

**कम्बुपुष्पी** स्त्री० कम्बु शङ्ख इव पुष्पमस्याः। शङ्खपुष्प्याम्

**कम्बुमालिनी** स्त्री० कम्बूनां तत्पुष्पाणां माला अस्त्यस्या इनि। शङ्खपुष्प्याम्।

कम्बोज पु० कवि ओज। हस्तिभेदे, शङ्खभेदे "पञ्चनदं समारभ्य म्लेच्छादिविषयपूर्वतः कम्बोजदेश" इत्युक्तदेशे च।

कम्वार्तायिन् पु० कम्बुरिवार्तायी। शङ्खतुल्यश्वेतपूर्वकाये शङ्खचिल्ले। [र्याम् (गांभार)।

कम्भारी स्त्री० कं जलं बिभर्ति क+भृ अण् उप०। गाम्भा-

कम्र त्रि० कम-णिङभावपक्षे र। मैथुनेच्छावति कामुके मनोहरे च

कर पु० कृ-अप्, कृ अच् वा। हस्ते, किरणे, राजग्राह्ये राजस्वे, वर्षोपले, प्रत्यये, हस्तिहस्ते, हस्तनक्षत्रे च। किञ्चित्कर्म्मोपपदे तत्कर्म्मकारके। यथा कर्म्मकर यशस्कर

करक पु० कृ वुन्। करञ्जवृक्षे, पक्षिभेदे, दाडिमवृक्षे, कोविदारवृक्षे, वकुलवृक्षे, करीरे, नारिकेलास्थ्नि च (नारिकेलेर खोल)। कमण्डलौ पु०न०। कर-स्वार्थे कन्, वर्षोपले (शिल) पु०स्त्री०। स्त्रियां गौरा०ङीष् करकी।

करकङ्कणन्याय पु० कङ्कणशब्दस्य करभूषणार्थकत्वेऽपि यथा करशब्दप्रयोगस्तत्र तत्संलग्नताद्योतनार्थं तद्रूपे दृष्टान्ते।

करकण्टक पु० करस्य कण्टक इव। नखे।

करकाजल न० करकाया जलम् ६त०। (वरफ) करकास्यन्दिजले

करकाम्भस् पु० करकाया अम्भ इवाम्भो यस्य। नारिकेले।

करग्रह पु० करस्य वधूकरस्य वरेण पाणेर्ग्रहणं यत्र। विवाहे

करग्रहारम्भ पु० करस्य राजग्राह्यस्य ग्रहणं प्रजाभ्य आदानं तस्यारम्भः। वार्षिककरस्य प्रथमादानारम्भे (पुण्याह)

करङ्क पु० कीर्य्यते द्रव्यमत्र कृ-अप् करोऽङ्को गर्भोऽस्य शक०। नारिकेलास्थ्नि (खोल), मस्तकखर्परे (माथारखुली), कमण्डलौ पात्रभेदे च 'ताम्बूलकरङ्कवाहिनी'ति कादम्बरी।

करच्छद पु० कर इवावरकश्छदोऽस्य। शाखोटवृक्षे (सिहोडा)

करज पु० करे जायते जन-ड। नखे व्याघ्रनखाख्यगन्धद्रव्ये (नखी) च। कं शिरः जलं वा रञ्जयति रञ्ज णिच्-अण् नि०। (करमचा) करञ्जवृक्षे। [ख्याते वृक्षे।

करञ्ज पु० कं शिरः जलं वा रञ्जयति अण्। (करमचा) इति

करञ्जफल पु० करञ्जस्य फलमिवाम्लं फलं यस्य। कपित्थे (कयतवेल)। [दुःखेन दोह्यायां गवि स्त्री० टाप्।

करट पु० कृ-अटन्। गजगण्डे, काके, कुसुम्भवृक्षे च।

करटिन् पु० करट गजगण्ड तत्र अस्त्यर्थे इनि। हस्तिनि।

करटु पु० कृ-अटु। (करकटिया) इति नामके विहगे।

करण न० कृ-ल्युट्। क्रियानिष्पत्तौ साधकतमे प्रधानेन साधने व्याकरणोक्ते कारकभेदे, कर्म्मे, देहे, क्षेत्रे, इन्द्रिये, गात्रे च, करणं यत्र वाजिमत्तादि कुमार। भावे ल्युट्। क्रियायाम् न०। ज्योतिषोक्ते बवबालवादिभेदे, कायस्थ तिर्य्यक्षु, वश्येन शूद्रायामुत्पादिते जातिभेदे च (करणकायस्थ) पु०।

करणाधिप पु० करणानामिन्द्रियाणामधिपः। जीवे आत्मनि।

करण्ड पु० कृ-अण्डन्। मधुचक्रे (मौचाक), खड्गे, कारण्डवे विहगे, वंशादिरचिते पुष्पपात्रे (साजी), समुद्गे च (कौटा), शकति रोगे स्त्री० टाप्।

करतल पु० ६त०। हस्तस्य तले, हस्ते च।

करताल न० तल-प्रतिष्ठायां घञ् करे तालो यस्य। वाद्यभेदे (करताल), तद्धि करे स्थापयित्वैव वाद्यते।

करताली स्त्री० करौ ताड्येते यत्र ताड-घञ् ६त० गौरा० ङीष् डस्य लः। करतलध्वनौ।

करतोया स्त्री० करस्य गौरीविवाहकाले शिवकरस्य तोयात् सम्प्रदानवारित प्रभूतं तोयं यस्याः। कामरूपदेशे ख्याताख्यातायाम् नद्याम्।

करपत्र न० करात् पतति-पत ष्ट्रन्। (करात) क्रकचे दारुभेदके अस्त्रभेदे। करावेव पत्रं वाहनं यत्र। जलक्रीडायाम्। तत्र हि हस्ताभ्यां परस्परजलोत्क्षेपं क्रीड्यते।

करपत्रवत् पु० करपत्रमिव पत्राण्यस्त्यस्य मतुप्। ताल वृक्षे। [रक्तैरण्डे च।

करपर्ण पु० कर हस्त इव पर्णं यस्य। (भेंट) भिण्डातकवृक्षे

करपल्लव पु० करस्य हस्तस्य पल्लव इव। अङ्गुलौ।

करपात्र न० कर एव पात्रं जलनिक्षेपपात्रं यत्र। हस्ताभ्यामुत्क्षिप्य परस्परजलदानक्रीडने। कर्म०। हस्तरूपे पात्रे

करपाल पु० करं पालयति पाल अण्। खड्गे। स्वार्थे कन् टाप् अत इत्वम्। कृपाणी। (सोंटा) स्त्री० ङीप्।

करपीडन न० करस्य वधूकरस्य वरेण पीडनं ग्रहणेन मर्द्दनं यत्र। विवाहे। [गतिर्यस्य। खड्गे।

करवाल पु० करस्य बाल इव शिशुरिव। नखे। करे वालो

करभ पु० कृ अभच् कर भाति भा क वा। मणिबन्धात् कनिष्ठापर्य्यन्ते करस्य बाह्यदेशे, करिशावके, उष्ट्रशिशौ (नखी) नामगन्धद्रव्ये, उष्ट्रे च। 'करभकण्ठकठोर'मिति माघ

करभप्रिया स्त्री० करभस्य उष्ट्रस्य प्रिया। दुरालभायाम्। (धावकुषी)।

करभवल्लभ पु० ६त०। उष्ट्रप्रिये पीलुवृक्षे, कपित्थवृक्षे च।

करभादनी स्त्री० करभैः उष्ट्रैरद्यते अद-कर्म्मणि ल्युट् टित्वात् स्त्रियां ङीप्। दुरालभायाम्। (धामनी)

करमर्द्द पु० कर मृद्नाति मृद-अण्। (करमचा) वृक्षभेदे। ढुम् करमर्द्दकोऽप्यत्र। तद्धर्म्मो हि करस्फूर्त्तिरिति तस्य तथात्वम्

**करमर्द्दन** पु० करं मृद्नाति मृद-ल्यु। (करमचा) करमर्द्दवृक्षे।

**करमाला** स्त्री० कर· कराङ्गुलिपर्व्व मालेव जपसंख्याहेतु-त्वात्। 'आरभ्यानामिकामध्यं दक्षिणावर्त्तयोगतः। तर्ज्जनीमूलपर्य्यन्तं करमाला प्रकीर्त्तितेत्युक्तलक्षणायां जपसंख्यार्थं कराङ्गुलिपर्व्वदशकरूपायां मालायाम्। [वृक्षभेदे।

**करमुक्त** न० करेण मुच्यते यत्तु प्रति क्षिप्यते मुच-क्त। (मुडगी)

**करम्ब** त्रि० कृ-अम्बच्। मिश्रिते। मिश्रणे पु०।

**करम्बित** त्रि० करम्बो मिश्रणं जातोऽस्य इतच्। मिश्रिते मधुकरनिकरकरम्बितेति जयदेवः। [दधिमिश्रितसक्तुषु।

**करम्भ** पु० केन जलेन रभ्यते मिश्र्यते रभ-घञ् मुम् च।

**कररुह** पु० करे रोहति रुह-क। नखे। [पाणे (तरवार)

**करवाल** पु० करं वालयति रक्षति चु० वल-पालने अण्। ख-

**करवीर** पु० करं वीरयति चु० वीर-विक्रान्तौ अच्। कृपाणे खड्गे, स्वनामख्याते वृक्षे, श्मशाने, देशभेदे च।

**करवीरक** पु० करवीर इव कायति कै क। अर्ज्जुनवृक्षे। स्वार्थे कन्। करवीरार्थे। [(अरहर)

**करवीरभुजा** स्त्री० करवीरस्येव भुजा यस्याः। आढक्याम्।

**करशाखा** स्त्री० करस्य शाखेव। अङ्गुलौ। [निर्गते जलकणे

**करशीकर** पु० करस्य हस्तिहस्तस्य शीकरः। हस्तिहस्तात्

**करशूक** पु० करस्य शूक शूचीव। नखे।

**करसूत्र** न० ६त०। विवाहादौ हस्ते मङ्गलार्थं बध्यमाने सूत्रे।

**करहाट** पु० करं हाटयति दीपयति हट-दीप्तौ णिच्-अण्। पद्मादिमूले, मदनद्रुमे, पिण्डीतरौ, देशभेदे च।

**करहाटक** पु० करं हाटयति हट-दीप्तौ णिच् ण्वुल्। मदन वृक्षे। ६त०। हस्ताभरणे सुवर्णे। [(करमचा)

**करामर्द्द** पु० करमामृद्नाति आ+मृद-अण् उप०। करमर्द्दे

**कराल** त्रि० कृ-अण् करो विक्षेप तस्मै अलति पर्य्याप्नोति अल पर्य्याप्तौ-अच्। विकटे भयानके। तैलभेदे (गर्ज्जनतैल)। सर्ज्जरसयुक्ततैले, (तेजपुना) च न०। दन्तुरे, उच्चे च त्रि०। (अनन्तमूल) वृक्षभेदे पु०।

**करास्फोट** पु० करेण आस्फोट शब्दो यत्र। वक्षस्थले सङ्कुचितरूपेण स्थापिते एकबाहौ इतरकरस्याघातेन शब्दकरणे (तालठोका)। ६त०। बाह्वास्फोटे।

**करिक** पु० कृ-इक। विट्खदिरे। [च।

**करिणी** स्त्री० करिन्-ङीप्। हस्तिन्याः धेनुकायाम् देवताभेदे

**करिदारक** पु० करिणं दारयति हिनस्ति दृ ण्वुल्। सिंहे।

**करिन्** पु० कर शुण्डादण्ड अस्त्यर्थे इनि। हस्तिनि।

**करीर** पु० कॄ ईरन्। घटे। वंशाङ्कुरे, हिमालयवंशस्य करीर-मिवेति नैषधम्। भिल्लाम्, हस्तिदन्तमूले च स्त्री०।

**करीष** पु० न०। कॄ-ईषन्। शुष्कगोमये। [वात्यायाम्।

**करीषङ्कषा** स्त्री० करीषं कषति कष-हिंसायाम् खच् मुम् च।

**करुण** पु० कृ-उनन्। करुण रसे रसभेदे करुणाख्ये वृक्षे च। 'दयासुदङ्गुतकरुणे' इति नैषधम्। दीने, अन्यैर्दु खिते करुणायति च त्रि०। दयायां स्त्री० टाप्।

**करुणविप्रलम्भ** पु० करुणरसान्वितो विप्रलम्भः। अलङ्कार प्रसिद्धे शृङ्गाररसमध्ये विप्रलम्भभेदे साहि० ३ परि०।

**करुणापर** त्रि० करुणायां परः आसक्तः करुणा परा वा यस्य। अत्यन्तकरुणायुक्ते। [स्त्रियां करुणामयी।

**करुणामय** त्रि० करुणा+प्राचुर्य्ये मयट्। प्रचुरकरुणावति

**करूष** पु० कॄ+ऊष। देशभेदे। [गते।

**करेटु** पु० के जले रेटति रेट-कु। (करकटिया) इति ख्याते

**करेणु** पु० कृ-एनु। गजे। हस्तिन्यां स्त्री०।

**करोट** पु० न०। के शिरसि रोटते रुट-द्युतौ अच्। शिरोऽस्थि। इन्। करोटिरप्यत्र स्त्री० वा ङीप्।

**कर्क** हासे भ्वा० पर० अक० सेट्। कर्कति अकर्कीत्।

**कर्क** पु० करोति लपोति क्रियते वा यथायथं बाहुलकात् क-तस्य नेत्त्वम्। वह्नौ, श्वेताश्वे, दर्पणे, कुलीरे, कर्कटवृक्षे, कण्टके, मेषादितश्चतुर्थे राशौ च। घटे पु० स्त्री० वा ङीप्।

**कर्कट** पु० कर्क-अटन्। क्षुद्रामलके, षट्फले, कर्करे, पक्षिणि, जलजन्तुभेदे कुलीरे, (काकडा) मेषादितश्चतुर्थे राशौ, शाल्मलीवृक्षे च। स्वार्थे कन् कर्कटकोऽप्यत्रार्थेषु, इक्षुभेदे च।

**कर्कटशृङ्गी** स्त्री० कर्कट इव शृङ्गं यस्याः। (काकडाशिङ्गा) वृक्षभेदे। स्वार्थे कन् कर्कटशृङ्गिकाप्यत्र।

**कर्कटि** स्त्री० कर्कं कण्टकमटति इन् शक०। (काकुड) इर्व्वारौ शाल्मलीवृक्षे च। वा ङीप् अत्रार्थे, कर्कटीत्यप्यत्र।

**कर्कटु** पु० सौत्र-कर्क-अटु। करेटुपक्षिणि (करकटिया)। [(कुल)

**कर्कन्धू** स्त्री० कर्कं कण्टकं दधाति धा-कू नि० मुम्। बदर्य्याम्

**कर्कर** पु० कर्क-हासे-अरन्। दर्पणे चूर्णपाषाणखण्डे कङ्करे (काकर) मुद्गरे च। घञ्। कर्कं हासं राति रा-क दृढे कठिने त्रि०।

**कर्कराङ्ग** पु० कर्करं कठिनमङ्गं यस्य। खञ्जने पक्षिणि।

**कर्करान्धुक** पु० कर्कर कठोर अतिशयितान्धकारवत्त्वात् अन्धु कूप संज्ञाया कन्। अत्यन्तान्धकारवति कूपे।

**कर्करी** स्त्री० कर्कं हासं राति रा-क गौरा० ङीष्। (झारी) सनालजलपात्रे, कन्दोऽभूतादिपक्वनिष्काशनसाधने (झाजरा)

पात्रे च। कर्क+रा-ईक। कर्करीकोऽप्यत्र।

**कर्करेटु** पु० कर्केति शब्दं रेटते भाषते रेट-भाषणे उ। (करकटिया) इति ख्याते खगे।

**कर्कश** पु० करे काशते काश-शब्दे अच् पृषो०, कर्क कादिन्वम् अस्त्यर्थे श । कृ क्षेपे विच् कर् कश-हिंसायाम् अच् कर्म्म० वा। करञ्जे (करमचा) कासमर्द्दे, इक्षौ, खड्गे, खरस्पर्शे च। साहसिके, क्रूरे, निर्द्दये, खरस्पर्शवति च त्रि०।

**कर्कशच्छद** पु० कर्कशः छदः पत्रमस्य। (सिहोडा) शाखोट वृक्षे पटोले च। कर्कशदलोऽप्यत्र। कोषातक्यां स्त्री० टाप्

**कर्कसार** न० कर्कं शुभ्रं श्वेततां सरति गच्छति सृ-अण्। करम्भे (दधिमिश्रितशक्तु)। [कुष्माण्डा स्त्री० वा ङीप्।

**कर्कारु** पु० कर्कं शुभ्रं श्वेततामृच्छति ऋ-उण्। कुष्माण्डे।

**कर्कोट** पु० कर्क-ओट। सर्पभेदे, स्वार्थे कन्। 'कर्कोटको नाम सर्पो यो दृष्टिविष उच्यते' इत्युक्तलक्षणे सर्पे, बिल्ववृक्षे, इक्षौ, (काकरोल) ख्याते वृक्षे च। [घोषातक्याम्।

**कर्कोटकी** स्त्री० कर्क-ओट-संज्ञायां कन् गौरा० ङीष्। पीत

**कर्कोटी** स्त्री० कर्क-ओट गौरा० ङीष्। (काकुड) कर्कट्याम् कुष्माण्डायाञ्च। स्वार्थे कन्। कर्कोटिकाप्यत्र।

**कर्चूर** पु० कर्ज-ऊर पृषो०। (कचूर) गन्धद्रव्ये, शट्यां च।

**कर्ज** पीडायाम् भ्वा०पर०सक० सेट्। कर्जति अकर्जीत्।

**कर्ण** भेदने अदन्त चुरादि-उभ०सक० सेट्। कर्णयति ते अच कर्णत् त। आ श्रवणे आकर्णयति ते।

**कर्ण** पु० ऋ-नन्, कर्ण-भेदने, अच्, कीर्य्यते शब्दग्रहणाय कृ-नन् वा। श्रोत्रेन्द्रिये अरित्र केनिपातके, अङ्गदेशाधिपे पृथासुते सूर्य्यात्मजे, त्रिभुजक्षेत्रे भुजकोटिभिन्नायां तिर्य्यग्रेखायाञ्च

**कर्णकीटी** स्त्री० कर्णयति भिनत्ति अच् कर्णः स्वल्प कीट अल्पार्थे ङीप् कोटी कर्म्म०। (कानकोटारी) शतपद्याम्।

**कर्णगूथ** न० ६त०। कर्णमले।

**कर्णजलौका** स्त्री० कर्णे जलौकेव। शतपद्याम् (कानकोटारी) कर्णजलौकस् इत्यप्यत्र। [आङ्गविलोचनेति भट्टि।

**कर्णजाह** न० कर्णस्य मूलम्। कर्ण+जाह। कर्णमूले 'कर्ण-

**कर्णधार** पु० कर्णं नौकागतिनियामकदण्ड (हाल) धारयति धृ-णिच्-अण्। नाविके (काण्डारि)। [कर्णभूषणभेदे।

**कर्णपाली** स्त्री० कर्णं पालयति पाल अण्। (कानबाला)

**कर्णपुष्प** पु० कर्ण इव पुष्पं यस्य। मोरटालतायाम्।

**कर्णपूर** पु० कर्णं पूरयति पूर-अण्। कर्णाभरणे, नीलोत्पले, शिरीषवृक्षे अशोकवृक्षे च एतदाऽपि स्त्रीकर्णस्य भूषा।

**कर्णपूरक** पु० कर्णं पूरयति ण्वुल्। कदम्बवृक्षे।

**कर्णमल** न० ६त०। कर्णस्थे मलाकारे पदार्थे (कानेर खल)

**कर्णवर्ज्जित** त्रि०३त०। बधिरे (काला) श्रोत्रशून्ये। सर्पे पु०

**कर्णवेध** पु० विध-घञ् ६त०। कर्णवेधनकर्म्मणि संस्कारभेदे।

**कर्णवेष्ट** पु० कर्णौ वेष्ट्येते अनेन। कुण्डले। ण्वुल् कर्णवेष्टको-ऽप्यत्रैव। भावे ल्युट्। कर्णावरणे न०।

**कर्णशष्कुली** स्त्री० कर्णस्य शष्कुलीव। कर्णगोलके, तन्मध्या-काशे च 'अवलम्बितकर्णशष्कुली'ति नैषधम्।

**कर्णशूल** न०६त०। कर्णरोगभेदे। [लताभेदे।

**कर्णस्फोटा** स्त्री० कर्णे स्फोटो विदारणं यस्याः। (कानफाटा)

**कर्णाट** पु० 'रामनाथं समारभ्य श्रीरङ्गान्तं शिवेश्वरि! कर्णाटदेश इत्युक्तदेशे' काव्यरीतिभेदे, स्त्री० ङीप्।

**कर्णाभरणक** पु० कर्णाभरणमिव कायति पुष्पद्वारा। आरग्वधे वृक्षे। (सोन्दाल) [कर्णचालने।

**कर्णास्फाल** पु०आ+स्फुर-णिच् स्फालादेश ६त०। करिणां

**कर्णि** पु० कर्ण इन्। शरभेदे कण्टकारिकायां स्त्री० वा ङीप्।

**कर्णिका** स्त्री० कर्ण-ण्वुल्। करमध्याङ्गुल्यां, करमध्याङ्गुल्यां, बीजकोषे पद्मवराटे, लेखन्यां, कुट्टिन्याम् अग्निमन्थवृक्षे, अजशृङ्गीवृक्षे च। कर्ण+भूषणे इकन्। कर्णभूषणभेदे।

**कर्णिकार** पु० कर्णिकामृच्छति ऋ-अण् उप०। (कणियारी) वृक्षभेदे, आरग्वधवृक्षभेदे च (छोट सोन्दाल)।

**कर्णीरथ** पु० कर्णः सामीप्येनास्त्यस्य कर्णी स्कन्धः तत्र ईद् शोभा यस्य न सत्यासत्य कप् अत्वाभो रथोऽयनस्य वाहनं कर्म्म०। स्कन्धवाह्ये याने (पालकी) इत्यादौ।

**कर्णीसुत** पु० कर्ण्याः कन्यायाः सुतः। कंसासुरे।

**कर्णेजप** पु० कर्णे जपति जप-अच् सप्तम्या अलुक्। सूचके पिशुने, खले च। [अकर्त्तत् त।

**कर्त्त** शैथिल्ये अद० चुरा० उभ० अक० सेट्। कर्त्तयति त

**कर्त्तन** न० कृती छेदने कृत-ल्युट्। छेदन। तूलपिण्डात् सूत्रनिष्काशनव्यापारे (काटनाकाटा)

**कर्त्तरी** स्त्री० कृत-घञ् कर्त्तं राति रा-क गौरा० ङीष्। कृपाण्याम्, पत्रीकृतहिरण्यादे छेदनसाधने (कातारी), केशादिकर्त्तनसाधने (काचि) अस्त्रे, 'क्रूरमध्यगतयन्दो लग्नं वा क्रूरमध्यगम्। कर्त्तरी नाम योगोऽयमिति ज्योतिषोक्ते योगभेदे च।

**कर्त्तृ** त्रि० कृ-तृच्। कारके व्याकरणोक्ते कारकान्तरयोरादि क्रियाश्रये स्वतन्त्रे, तत्प्रयोजके च। परमात्मनि पु०।

**कर्त्तृका** स्त्री० कृत-तृच् इत्भाव संज्ञायां कन्। अस्त्रभेदे।

**कर्द** वैदिल्यकरणे अद० चुरा० उभ०सक० वैदिल्ये अक०

सेट्। कर्त्तयति ते अचकर्त्तत् त। क्त कर्त्तितः।

**कर्त्तरी** स्त्री० कर्त्त-अच् गौरा० ङीष्। (कातारि) इति ख्याते अस्त्र भेदे। कृ-त्वच् कारिकाया स्त्रियां स्त्री० ङीप्। [अकर्द्दीत्

**कर्द्द** कुत्सितरवे उदरशब्दे च भ्वा०पर०अक०सेट्। कर्द्दति

**कर्द्द** पु० कर्द्द-अच्। कर्द्दमे।

**कर्द्दट** पु० कर्द्द-अटन्। पद्मकेशरे, पङ्के च।

**कर्द्दम** पु० कर्द्द-अम्। पङ्के,पापे, मह्यणच्छायायामुत्पन्ने प्रजापतिभेदे। मांसे न०, पङ्कवति त्रि०। [पङ्क एव हि प्ररोह-

**कर्द्दमक** पु० कर्द्दमे कायति प्रकाशते कै-क। शालिभेदे, तस्य

**कर्पट** पु०न० कृ-कर्म्मणि विच्-पट्-पटः कर्म्म०। लत्तको जीर्णवस्त्रे (नातार्कानि), मलिनवस्त्रे च। करस्य पट। शक०। धर्म्मादिमार्ज्जनार्थं कृसन्यस्ते धस्त्रखण्डे कषायरक्ते वस्त्रे च।

**कर्पटधारिन्** त्रि०कर्पटं मलिनं जीर्णं रक्तं वा वस्त्रं धारयति णिनि। मलिनादिवस्त्रधारके भिक्षुकादौ। [कर्पटोत्थपात्र

**कर्पटिक** त्रि० कर्पट-ठन्। कर्पटवस्त्रयुक्ते भिक्षुकादौ। रश्मि

**कर्पर** पु० कृप्-अरन् लत्वाभाव। कपाले शीर्षोर्द्धास्थनि, (माथारखुली), शस्त्रभेदे (कात), कटाहे च।

**कर्पराश** पु० कर्परस्याश। (खापरा) शर्करायाम्।

**कर्पराल** पु०कर्परमलति अल-अण्। कन्दराले,अक्षोटवृक्षे च

**कर्परी** स्त्री० कृप-अरन् लत्वाभाव गौ० ङीष्। दारुहरिद्राक्वाथभवे तुत्थे (तुते)। [जातित्वे ङीष्। कर्पासीत्यपि।

**कर्पास** पु०न०कृ-पास। वस्त्रयोनौ (कापास) वृक्षभेदे।

**कर्पासफल** न० ६त०। (माकाटी) कर्पासीबीजे।

**कर्पूर** पु०न० कृप-ऊर लत्वाभाव। घनसारख्याते गन्धद्रव्ये

**कर्पूरमणि** पु० कर्पूरवर्णो मणि। रत्नभेदे, कर्पूराश्मान्यत्र

**कर्पूररस** पु० कर्पूर एव रस। रसकर्पूरे।

**कर्ब्ब** गतौ भ्वा०पर०सक सेट्। कर्बति अकर्बीत्।

**कर्बुर** पु० कर्ब-उर। राक्षसे,शठ्याम्। स्वर्णे,हरिताले च न०।

**कर्म्मकर** पु० कर्म्म करोति कृ-ट। यमे। भृत्ये त्रि०। स्त्रियां ङीप्। [कर्म्मसमूहे,तत्प्रतिपादके वेदभागे च।

**कर्म्मकाण्ड** पु० कर्म्मणा समूह दूर्व्वादित्वात् काण्डच्।

**कर्म्मकार** पु०कर्म्म+कृ-अण्। लौहकारके जातिभेदे,(कामार) वेतनं विना (बेगार) कर्म्मकारके, वाहके च।

**कर्म्मक्षेत्र** न० कर्म्मणां तद्विधानयोग्यं क्षेत्रम्। भारतवर्षे।

**कर्म्मठ** त्रि० कर्म्मणि कुशल कर्म्मन्+ठ। क्रियाकुशले।

**कर्म्मण्य** त्रि० कर्म्मणि साधु कर्म्मन्+यत्। कर्म्मणि योग्ये,तत्र प्रवीणे च। वेतने स्त्री०।

**कर्म्मदेवता** स्त्री० कर्म्मणा यागादिना देवता। यतेन देवत्वं प्राप्ते 'अस्मिन् कल्पेऽश्वमेधादि कर्म्म कृत्वा महत्पदम्। अवाप्य देवैर्याः पूज्यास्ततस्ताः कर्म्मदेवता' इत्युक्तलक्षणे देवे

**कर्म्मधारय** पु० व्याकरणोक्ते अभेदान्वयिना समानविभक्तिकेन पदेन घटिते समासभेदे। [कृमे कारके च।

**कर्म्मन्** न० कृ मनिन्। क्रियायाम्, व्याकरणोक्ते कर्त्तुरिष्टतम

**कर्म्मफल** न०कर्म्मण फलम्। कर्म्मविपाकजनिते सुखदुःखादौ, कमरङ्गफले च (कामराङ्गानेबु)

**कर्म्मभू** स्त्री० कर्म्म कर्षणादि परिकर्म्म,पुण्यादिकर्म्म वा तत्र भूः। कृष्टभूमौ,आर्य्यावर्त्ते, भारतवर्षे च विहितकर्म्माण्यत्रैव सर्व्वे क्रियन्ते नान्यत्र। [जैमिनिप्रणीते ग्रन्थे।

**कर्म्ममीमांसा** स्त्री० ६त०। कर्म्मकाण्डप्रधानवेदभागविचाररूपे

**कर्म्ममूल** न० कर्म्मणा मूलम्। कुशतृणे। तेन हि वैदिकादि सर्व्वं कर्म्म निष्पाद्यते।

**कर्म्मरङ्ग** पु०न० कर्म्मणि भोजनादौ रङ्गो रतिर्यस्मात् रञ्ज-घञ् (कामराङ्गा) जम्बीरभेदे,तद्भोजने हि भोजनादौ रुचिर्भवति

**कर्म्मविपाक** पु० विपच्यते वि पच-कर्म्मणि घञ् कर्म्मणो विपाक। शुभाशुभकर्म्मजन्ये तत्फलभूते सुखदुःखादौ।

**कर्म्मव्यतिहार** पु० वि-अति-हृ घञ्। कर्म्मणा व्यतिहार ३त०। परस्परैकजातीयक्रियाकरणे,क्रियाविनिमये च यथा य कश्चित् येन कर्म्मणा इतरं संबध्नाति,इतरोऽपि तज्जातीयेनैव कर्म्मणा तं संबध्नाति, तयोः कर्म्मविनिमयो भवति। यथा च योन्यं ताडयत इत्यादौ। [लौहयं कर्म्मकारिणि'

**कर्म्मशूर** पु०कर्म्मणि शूर। प्रयत्नेन प्रारब्धकर्म्मसम्पादके,काम-

**कर्म्मसङ्ग** पु० कर्म्मणि सङ्ग आ०क्लि' सञ्ज घञ्। इदमहं करोमि अनेनैतत् फलं भोक्ष्ये इत्याकारकेऽभिनिवेशे।

**कर्म्मसंन्यासिन्** पु० विहितकर्म्माणि विधानेन संन्यस्यति सं+नि+अस्-णिनि। सर्व्वकर्म्मत्यागिनि यतौ।

**कर्म्मसाक्षिन्** पु० साक्षात् पश्यति त्रि० साक्षी ६त०। 'सूर्य्य सोमो यम कालो महाभूतानि पञ्च च। एते शुभाशुभस्येह कर्म्मणो नव साक्षिण' इत्युक्तेषु सूर्य्यादिषु नवसु।

**कर्म्मसिद्धि** स्त्री० ६त०। इष्टानिष्टफलप्राप्तौ "अकर्म्मसिद्धि पुनराशशंस" इति कुमार।

**कर्म्माध्यक्ष** पु० ७त०। क्रियामात्रस्यैव तत्तत्साक्षिके।

**कर्म्मार** पु०कर्म्म ऋच्छति ऋ अण्। कर्म्मकारे (कामार) जातिभेदे, वंशभेदे (बेंरवांश), कर्म्मरङ्गवृक्षे च।

**कर्म्मिष्ठ** त्रि० अतिशयेन कर्म्मी इष्ठन् इनेर्लुक्। क्रियादक्षे कर्म्मे

**कर्म्मेन्द्रिय** न० कर्म्मणा क्रियायां साधनभूतमिन्द्रियम्। हस्तपादादौ, तेषां हि गमनादानादिक्रिया निष्पद्यते।

**कलाद** पु० कलामंशमादत्ते आ-दा-क। स्वर्णकारे तेन हि अलङ्कारगठनार्थं गृहीतधनस्यांशोऽपह्रियते।

**कलादक** पु० कलामत्ति कला+अद-ण्वुल्। स्वर्णकारे गठनार्थं दत्तद्रव्यांशस्य भोजनं तेन हि क्रियते।

**कलानिधि** पु० कला निधीयन्तेऽत्र। कला+नि+धा कि। चन्द्रे

**कलानुनादिन्** पु० कलमनुनदति णिनि। भ्रमरे, चटके च

**कलान्तर** पु० अन्या कला अंश० मयू०। वृद्धिभेदे 'मासे शतस्य यदि पञ्च कलान्तरं स्यादिति लीलावती, अन्यस्यां चन्द्रकलायाञ्च, 'ज्योत्स्नान्तराणीव कलान्तराणी'ति कुमारः।

**कलाप** पु० कलामाप्नोति कला-आप्-अण्। समूहे, मयूरपिच्छे, भूषणे, काञ्च्याम्, तूणे, चन्द्रे, व्याकरणभेदे ग्रामभेदे च।

**कलापक** पु० कलाप+क स्वार्थे कन्। कलापार्थे, हस्तिकण्ठबन्धे, एकवाक्यतापन्ने श्लोकचतुष्के न० कलापकं चतुर्भिः स्यादित्युक्तेः। [शाखावति वटे च। कल+आप-णिनि। कोकिले

**कलापिन्** पु० कलापो बर्होऽस्यास्ति इनि। मयूरे तदर्हत्वल्य-

**कलाभृत्** पु० कलां बिभर्त्ति कला+भृ-क्विप्। चन्द्रे। [र्यां स्त्री०

**कलाय** पु० कलमयते अय-अण्। (मटर) धान्यभेदे। गण्डदूर्वा-

**कलालाप** पु० कलमालपति आ+लप-अण्। भ्रमरे। [त्रि०

**कलावत्** पु० कला+अस्त्यर्थे मतुप् मस्य वः। चन्द्रे। कलावति

**कलि** पु० कल-इन्। विभीतकवृक्षे, विवादे, युद्धे, शूरे, अन्त्ययुगे च। कोरके स्त्री० वा ङीप् कली च।

**कलिक** पु० कल+मत्वर्थे ठन्। बकभेदे (कोंचबक्) [मूले च

**कलिका** स्त्री० कल-इन् स्वार्थे कन्। (कलि) कोरके, वीणा-

**कलिकापूर्व** न० कलिकेव अपूर्वमदृष्टं पुण्यापुण्यम्। प्रधानकर्मजन्य प्रधानापूर्वस्य हेतुभूतप्रधानान्तरकर्मजन्ये पुण्यादौ

**कलिकार** पु० कलिं करोति कृ-अण्। भूम्याटपक्षिणि, पूतिकरञ्जे च।

**कलिकारक** पु० कलिं करोति कृ-ण्वुल्। नारदे। कलहकारके त्रि०। कलिकार+स्वार्थे क। भूम्याटपक्षिणि पु०। [हल्याम्।

**कलिकारी** स्त्री० कलिकामृच्छति ऋ-अण्। (विषलाङ्गलिया) ला-

**कलिङ्ग** पु० कलिं गच्छति गम-खच् मुम् डिच्च। पूतिकरञ्जे धूम्याटे, कुटजवृक्षे, शिरीषवृक्षे, प्लक्षवृक्षे, 'जगन्नाथात् पूर्वभागे कृष्णातीरान्तरं शिवे!। कलिङ्गदेशः संप्रोक्त' इत्युक्तदेशे, 'अकूलादर्शितपथः कलिङ्गाभिमुखो ययौ'इति रघुः। इन्द्रयवे च। योषिति लिङ्गायाञ्च (लेटकि) स्त्री०

**कलित** त्रि० कल-क्त। विदिते प्राप्ते, भेदिते, गृहीते, उक्ते। संख्याते, [illegible], बद्धे च।

**कलिद्रुम** पु० कलेराश्रयः द्रुमः। विभीतकवृक्षे तत्र हि नलस्य राज्यच्छिद्रावाप्तये कलिना सुचिरं स्थितमिति भारतकथा।

**कलिन्द** पु० कलिं ददाति द्यति वा खच् मुम् च। अद्रिविशेषे, यतो यमुनानदी निःसृता, विभीतकवृक्षे, सूर्ये च।

**कलिन्दकन्या** स्त्री० ६त०। यमुनायां, कलिन्दजादयोऽप्यत्र।

**कलिप्रिय** पु० कलिः कलहः प्रियो यस्य। नारदे, वानरे च। ६त० विभीतके। ६ब० प्रियविवादे जने त्रि०।

**कलिल** त्रि० कल-इलच्। गहने, मिश्रे च। [लाङ्गल्याम्।

**कलिहारी** स्त्री० कलिं हरति हृ-अण्। (विषलाङ्गलीया)

**कलुष** पु० स्त्री० कल-उषच्, लुष हिंसायां क कस्य जलस्य लुषो घातकः इति वा। महिषे। पापे न०। तद्वति त्रि०।

**कलेवर** न० कले शुक्रे वरं श्रेष्ठम् तद्गुत्पत्त्वेऽपि शुचि। सप्तम्या अलुक्। देहे। [शार्ङ्गिके।

**कलोपजीविन्** त्रि० कलां वृत्तिमुपजीवति उप+जीव-णिनि।

**कल्क** पु० न० कल-क तस्य नेत्वम्। घृततैलादिशेषे, दम्भे, विभीतकवृक्षे, विष्ठायाम्, तुरुष्कनामकगन्धद्रव्ये, घृततैलादिपाकोदेये ओषधिद्रव्ये च 'द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलमिश्रितम्। तदेव सूरिभिः पूर्वैः कल्क इत्यभिधीयते' इत्युक्तलक्षणे द्रव्यभेदे, शाठ्ये, पापे च। [कायने कलहे च।

**कल्कन** न० कल्कं करोति णिच्-भावे ल्युट्। दम्भे, शाठ्ये,

**कल्कि** पु० कल्क+अत् करोतीति णिच्-इन्। 'शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः। भवने विष्णुयशसः कल्कि प्रादुर्भविष्यती'त्युक्तलक्षणे हरेरवतारे।

**कल्किन्** पु० कल्क-इनि। रामो रामश्च रामश्च बुद्धः कल्की च ते दशेति विष्णोरवतारभेदे।

**कल्प** पु० क्लृप-अच् घञ् वा। यज्ञक्रियाणामुपदेशके, शिक्षाकल्पव्याकरणादीनामन्यतमे वेदाङ्गभेदे, बौधायनादिकृते अनुष्ठेयकर्मविधाने, सूत्रात्मके कर्मपद्धतिग्रन्थे, ब्रह्मदिने, प्रलये, विकल्पे, कल्पवृक्षे, न्याये च। उत्तरपदस्थः सादृश्ये कल्पप्। यथा पितृकल्पः गुरुकल्पः।

**कल्पक** पु० क्लृप-णिच् ण्वुल्। नापिते। छेदके, कल्पनाकारके त्रि०

**कल्पतरु** पु० कल्प्यते फलदानाय अच् कर्म०। कल्पवृक्षे। [भेदे च

**कल्पन** न० क्लृप-भावे ल्युट्। कॢप्तौ, छेदने, न्यायोक्ते अनुमिति-

**कल्पना** स्त्री० क्लृप-णिच्-युच्। पल्ययनादिना करिणां सज्जीकरणे, न्यायोक्ते अनुमितिभेदे, रचनायाञ्च।

**कल्पान्त** पु० ६त०। प्रलये।

**कल्माष** पु० कल्मं शुभकर्म स्यति षो-क पृषो० [illegible]। नरकभेदे। पापे न०। तद्वति, मलिने च त्रि०।

**कल्माष** पु० कलयति कल-क्विप् कं माषयति अभिभवति अच्

मासे उप०। राक्षसे, चित्रवर्णे, कृष्णवर्णे, कृष्णपाण्डुरवर्णे च। तद्वति त्रि० स्त्रियां ङीप्।

कल्माषकण्ठ पु० कल्माषः कण्ठो यस्य। शिवे तस्य स्वयं श्वेतत्वात् विषयोगेण कृष्णत्वात् कृष्णपाण्डुरता।

कल्य न० कल-यत्, कलासु साधु कला+यत् वा। प्रभाते, मधुनि ज्योतिषोक्ते लग्ने च। वाक्श्रुतिवर्ज्जिते सज्जीभूते, वीतरोगे, दक्षे कल्याणे च जने त्रि०। [उपचारात् तत्कालभक्ष्ये

कल्यजग्धि स्त्री० अद-क्तिन् कल्ये प्रातर्जग्धिः। प्रातर्भोजने

कल्याण न०। कल्ये प्रातः अण्यते शब्द्यते अण-घञ्। हेम्नि, मङ्गले च। शुभयुक्ते त्रि०। स्त्रियां गौरा० ङीष्।

कल्याणकृत् त्रि० कल्याणं शुभं शास्त्रविहितं करोति कृ-क्विप्। शास्त्रविहितकर्मकारके 'न हि कल्याणकृत् कश्चि'दिति गीता

कल्याणिका स्त्री० कल्याण+अस्त्यर्थे ठन्। मनःशिलायाम्।

कल्ल कूजने अशब्दे च भ्वा० आत्म० अक० सेट्। कल्लते अकल्लिष्ट

कल्ल त्रि० कल्ल-अच्। बधिरे श्रवणेन्द्रियशून्ये।

कल्लोल पु० कल्ल-ओलच्। कम् जलं लोलं चपलं यस्मात् वा अत्र पक्षे अनुस्वारस्य लत्वम्। महातरङ्गे, हर्षे च। वैरिणि त्रि०

कव स्तुतौ वर्णने च भ्वा० आत्म० सक० सेट्। कवते अकविष्ट। [करकाणि चेति स्मृतिः

कवक पु० कु-अप् संज्ञायां कन्। ग्रासे, भूच्छत्राके, 'पलाण्डुं

कवच पु० कं वातं वञ्चयति वन्च-क। गर्द्दभाण्डे वृक्षे, पटहवाद्ये च। वर्म्मणि, तन्त्रोक्ते पूजादौ पाठ्ये भूर्जपत्रे लिखित्वा धार्य्ये च देवनामन्त्रन्यासयुक्ते वाक्यभेदे पु० न०

कवर पु० न० कु-अरन्। अम्ले, लवणे केशपाशे च। खचिते, संपृक्ते, शबले च त्रि०। वर्वरायां स्त्री० टाप्। कं शिरो वृणोति आच्छादयति क+वृ-अच् गौरा० ङीष्। केशविन्यासे केशवेशे, काकोल्यां हिङ्गुपत्रे वर्वरायाञ्च स्त्री०

कवर्ग पु० कखगघङा वर्गः समानितया। कादिषु पञ्चसु वर्णेषु। एवं चवर्गादयः। [एवं चवर्ग्य चवर्गीयादयः।

कवर्गीय पु० कवर्गे भवः छ। कवर्गमध्यभवे वर्णे। यत्। कवर्ग्य।

कवल पु० केन बलते बल-अच्। ग्रासे, (वेलेमाछ) मत्स्यभेदे च

कवलित त्रि० कवलं ग्रासं करोति णिच्-क्त। भुक्ते, व्याप्ते च

कवाट न० कं वातं वटति वट-वेष्टने अण्। द्वाररोधके काष्ठखण्डे। पुंस्त्वेऽपि ङीप्। कवाटी।

कवि पु० कु-इ। शुक्रे, वाल्मीकिमुनौ, भास्करे, काव्यकर्त्तरि, ऋषौ च। अतीतानागतधर्मज्ञे सूक्ष्मार्थदर्शिनि पण्डिते च त्रि०। पत्न्यां स्त्री० वा ङीष् कवी।

कविक न० कु-इ संज्ञायां कन्। खलीने यद्दिमौकस्य घोटकमुखाभ्यन्तरे प्रग्रहयोजनार्थं दीयते तस्मिन्। [कड़ि]।

कविका स्त्री० कु-इ संज्ञायां कन्। खलीने, मत्स्यभेदे च

कविज्येष्ठ पु० कविषु ज्येष्ठः। वाल्मीकिमुनौ।

कविता स्त्री० कवेः कर्म्म भावो वा तल्। कविकृते काव्ये 'भवति कविता कामिनी'ति प्रसन्नराघवम्। [तद्वति त्रि०

कवोष्ण न० ईषदुष्णम् कोः कवादेशः। ईषदुष्णे स्पर्शे।

कव्य न० कु यत्। पितृदेशेन दत्तेऽन्नादौ। [पितृगणभेदे।

कव्यवाल पु० कव्यं पितृदेश्यकं द्रव्यं वालयति चु० वल-अण्।

कश शब्दे भ्वा० अक० पर० सेट्। कशति अकशीत् अकाशीत्

कशा स्त्री० कश-अच्। अश्वादिचालनार्थं ताडनसाधने पदार्थे, (कोड़ा, चाबुक)।

कशार्ह त्रि० कशामर्हति अर्ह-अच्। कशया ताड्ये अदान्तेऽश्वादौ

कशिपु पु० कश-उ नि०। भक्ते, वस्त्रे च। समुदितयोर्भक्ष्यवस्त्रयोः, शय्यायाञ्च 'सत्यां क्षितौ किं कशिपोः प्रयासै'रिति प्रयोगात्।

कशेरु पु० न० कं शृणाति शॄ हिंसायां उ एरङादेशः। पृष्ठास्थनि, जलजे मूलभेदे च (केशुर)। स्वार्थे कन्। अत्रार्थे।

कशेरू स्त्री० कशेरु+अप्राणिजातित्वात् ऊङ्। जलकन्दे (केशुर)। [मलिने त्रि०।

कश्मल न० कश-कल मुट् च। मूर्च्छायां, मोहे, पापे च।

कश्मीर पु० कश ईरन् मुट् च। काश्मीराख्ये देशे। [पुं०

कश्मीरज पु० काश्मीरे जायते जन-ड। कुङ्कुमे काश्मीरजन्मा-

कश्य न० कश-यत्। अश्वमध्यभागे, मद्यभेदे च। कशामर्हति कशा+यत्। कशार्हे अदान्तेऽश्वादौ।

कश्यप पु० कश्यं मद्यं पिबति पा-क। 'ब्रह्मणस्तनयो योऽभूत् मरीचिरिति विश्रुतः। कश्यपस्तस्य पुत्रोऽभूत् कश्यपानात् स कश्यप इति' निरुक्ते मुनिभेदे, मृगभेदे मत्स्यभेदे च।

कष वधे भ्वा० पर० सक० सेट्। कषति। अकषीत् अकाषीत्

कष पु० कष-अच्। (कष्टी) पाषाणभेदे, 'कषपाषाणनिभे नभःस्थले' इति नैषधम्। [कण्डूयने च न०

कषण पु० कष ल्यु। अपक्वे (कांचा)। भावे ल्युट्। घर्षणे,

कषाय पु० कषति कण्ठम् कष-आय। स्नेहानाकृष्टे रागे, अन्नकरवदोषे 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते' इति वेदान्तपरिभाषायाम्। धववृक्षे (धगाछ), रसभेदे (कषा), रक्तपीतमिश्रितवर्णे च। तद्वति त्रि०। क्वाथे पु०। क्षुद्रदुरालभायां स्त्री०।

कषायित त्रि० कषायो रक्तपीतवर्णोऽस्य जातः इतच्। जातकषाये 'अमुनैव कषायितस्तनी'ति कुमार।

**कषायिन्** पु० कषाय+इनि । शालवृक्षे, नकुचवृक्षे, खर्ज्जूरी वृक्षे च । विषयरागवति त्रि०

**कष्ट** न० कष-क्त कृच्छ्रगहनयो कषऽति सेट् । पीडायाम् व्यायाम् पीडायुते । गहने च त्रि० ।

**कस** गतौ भ्वा०पर०सक०सेट् । कसति अकसीत् अकासीत् ।

**कस** शासने गतौ च अदा०इदित आत्म०सक०सेट् । कस्ते अकसिष्ट

**कस** शासने गतौ च सक०अदा०आत्म० सेट् । कस्ते अकसिष्ट

**कसनोत्पाटन** पु० कसन कासरोगम् उत्पाटयति ल्यु । वास कवृक्षे, 'वासक कासनाशक' इति वैद्यकोक्तेः । [च ।

**कसेरु** पु०कस-उ एरुन्नागम । कशेरौ,शूकरस्य प्रिये जलकन्दभेदे

**कस्तीर** पु०न०क जलं तीरयति अच् नि०सुट् । रङ्गे (राङ्)धातौ

**कस्तूरिका** स्त्री०कस ऊर तुट् च गौरा० ङीष् कस्तूरी स्वार्थे कन् ह्रस्व अत इत्वम् । मृगमदे । पृषो० अतोहस्त्वे कस्तुरिकाप्यत्र । [मृगनाभिजात गन्धद्रव्ये ।

**कस्तूरी** स्त्री०कषति गन्धोऽस्या कष ऊर तुट् च गौरा०ङीष् ।

**कह्लार** न०के जले ह्लादते ह्लाद्-अच् पृषो० दस्य र । श्वेतोत्पले

**कांस्य** न० कंसेन निर्म्मितम् कंस ञ्य । वाद्यभेदे,पानपात्रे च । स्वार्थे ष्यञ । ताम्ररङ्गनिर्म्मिते उपधातौ, 'उपधातुर्भवेत्कांस्य द्वयोस्ताम्ररङ्गयोरित्युक्ते । स्वार्थे कन् । उक्तार्थे ।

**कांस्यकार** पु० कांस्य+कृ-अण् उप० । (कासारि) जातिभेदे

**कांक** पु० कै-शब्दे कन् तस्य नेत्त्वम् । स्वनामख्याते पक्षिणि । खञ्जे, अरिष्टे तिलके च ।

**काककला** स्त्री० काकस्य कला अवयवो जङ्घेवावयवोयस्या काकजङ्घाख्ये । [काकस्य नाम ।

**काकघ्नी** स्त्री० काक हन्ति ट । महाकरञ्जे, ततफलसेवने हि

**काकचिञ्चा** स्त्री० काकवर्णा चिञ्चा प्रान्तभाग फले यस्या । गुञ्जायाम् । पृषो० । काक चञ्चि ,काकचिञ्ची,काकचञ्चाप्यत्र

**काकच्छद** पु० काकस्य छद पत्र इव छदो यस्य । खञ्जनखगे

**काकजङ्घा** स्त्री० काकस्य जङ्घेवावयवो यस्या । स्वनामख्याते वृक्षभेदे (केश्योयाठेङ्गा)

**काकजम्बु** स्त्री० काकवर्णा जम्बु । भूमिजम्बाम् ।

**काकतालीय** स्त्री० काकगमनसमये तालपतनमतर्कितहेतुक तदिव क्त । अवितर्कितसम्भवे याद्दच्छिकागतौ ।

**काकतिक्ता** स्त्री० काकस्यापि तिक्ता । गुञ्जायाम् ।

**काकतिन्दुक** पु० काकवर्ण तिन्दुक । काकपीलुके (कुचला)

**काकनासा** स्त्री० काकस्य नासेव फलमस्या । काकजङ्घायाम् (केश्योठेङ्गा) काकनासाप्यत्र ।

**काकपक्ष** पु० काकस्य पक्ष इव । मस्तकपार्श्वद्वयस्थे 'कादाना तशिखा प्रोक्ता काकपक्ष'इत्युक्ते केशरचनाभेदे (काणपाट्टा)

**काकपद** न० काकस्य पदमिव । लिपौ पतितवर्णस्य उपरि-लेखने तत्स्थानसूचनार्थं न्यस्ते काकपदाकारे चिह्ने । शीर्षस्थे काकपदाकारे केशपुञ्जे च (शिखा) ।

**काकपर्णी** पु० क कवर्ण पर्णमस्या । मुद्गपर्ण्याम् ।

**काकपीलु** पु० काकप्रिय पीलु शाक० । (कुचला) काकतिन्दुके

**काकपीलुक** पु०काकानां पीलुरिव । (कुचला) काकतिन्दुके ।

**काकपुष्ट** पु०काकेन पुष्ट । कोकिले,कोकिलया हि काकनीडात व स्वाण्डमपनीय तत्स्थाने स्वडिम्ब स्थाप्यते काकया च स्वडिम्बबुद्ध्या तत परिपाल्यते इति प्रसिद्धम् ।

**काकपुष्प** पु० काकवर्णं पुष्पमस्य । ग्रन्थिपर्णे वृक्षे ।

**काकभीरु** पु० क काकात् भीरु । पेचके ।

**काकमाची** पु० काकान् मञ्चते मचि अण् नलोप । कटुफल लतायाम् । (गुडकामाइ) । [पृ०व० । मुद्गपर्ण्याम् । (मुगानी)

**काकमुद्गा** स्त्री० मुद् गच्छति मुद् गम् ड काका मुद्गा यस्या

**काकरुहा** स्त्री० काकवत् रोहति अन्तरीक्षे मूलशून्यतया जायते । (परगाछा) वन्दाकवृक्षे ।

**काकलक** पु० कुत्सित कल कायति कै क । ग्रीवायामुन्नतदेशे

**काकली** स्त्री० कल इ ईषत् कलि कादेश वा ङीष् । सूक्ष्मे मधुरशब्दे ।

**काकलीरव** पु काकली मधुराव्यक्तो रवो यस्य । कोकिले ।

**काका** स्त्री० काक काकवर्णा विद्यतेऽस्या अर्श आद्यच् । काकोल्या काकनासायाम् काकमाच्याञ्च ।

**काकाक्षिगोलकन्याय** पु० काकस्य एक चक्षुर्यथा उभयगोलके पर्य्यायेण चक्षु कार्यकारकमेवमेकस्योभयत्रअन्वये दृष्टान्ते ।

**काकाङ्गी** स्त्री० काकस्याङ्ग नासेव फलमस्या । काकनासायाम

**काकाण्ड** पु० काकस्याण्ड इव फल यस्य । महानिम्बे । कोलशिम्ब्याम् स्त्री० टाप् महाज्योतिष्मत्यां च ङीष् ।

**काकादनी** स्त्री०काकैरद्यतेऽसौ काक+अद ल्युट् । गुञ्जायाम

**काकाल** पु० काककाकेतिरव लाति ला-क । द्रोणकाके ।

**काकिणी** स्त्री० कक लौल्ये घञ् तम् कणति अण् पृषो० । (कुडि) पणचतुर्थांशे 'वराटकानां दशकद्वय यत् सा काकिणी'ति लीलावती । काकिनीप्यत्र ।

**काकी** स्त्री० काकस्य जातित्वात् स्त्रियां ङीष् । काकयोषिति काकवर्णत्वात् वायसीलतायाम् ।

**काकु** स्त्री० कक उण् । शोकभीत्यादिभिर्ध्वनेर्विकारे, अलङ्कार प्रसिद्धे विरुद्धार्थकल्पके नञादौ शब्दे च । [सूर्य्यवंश्ये नृपे

**काकुत्स्थ** पु०ककुत्स्थ सूर्य्यवंशीय नृपभेदस्तस्यापत्यम् अण्

**काकुद** न० काकुं ध्वनिभेदं ददाति धा-क, काकुर्दीयते-ऽस्मिन् घञर्थे क वा शक०। तालुनि जिह्वेन्द्रियाधिष्ठान-स्थाने (तालुया)।

**काकेन्दु** पु० क कुत्सितमिन्दुः पृषो०। (कुचला) कटुतिन्दुके।

**काकेष्ट** पु० काकानामिष्ट। निम्बे तस्य हि फल काकानामिष्टम्

**काकोदर** पु० कुत्सितमकति अक-अच् कोः कादेश काकमी-षद्गतिमदुदरं यस्य। सर्पे। [कन्। (यज्ञडुमर) वृक्षभेदे।

**काकोडु(दु)म्बरिका** स्त्री० काकप्रिया उडु(दु)म्बरी शा०तायाम्

**काकोल** पु० कक-लौल्ये स्वार्थे णिच्-ओल। द्रोणकाके, सर्पे, शूकरभेदे च। नरकभेदे, विषभेदे च पु०न०। वायसाम् अश्वगन्धायाञ्च स्त्री०। [ङीप् अकाङ्क्ष।

**काङ्क्ष** वाञ्छायाम् भ्वा० उभ० इदित् सक० सेट्। काङ्क्षति अका

**काक्ष** त्रि० ईषत् कुत्सितमक्षि यस्य कोः कादेशः। कुत्सिताक्षे जने, ईषद्दर्शने कटाक्षे न०।

**काक्षी** स्त्री० कक्षे भवा अण् ङीप्। तुवरिकायाम् (अरहर)

**काक्षीव** पु० ईषत् क्षीवत्यस्मात् क्षीव-घञ् कादेश। शोभा-ञ्जनवृक्षे (सजना)।

**काङ्क्षा** स्त्री० काङ्क्ष-अ। इच्छायाम्।

**काङ्गा** स्त्री० कुत्सितमङ्गमस्याः कादेशः टाप्। वचायाम्।

**काच** पु० कच्यतेऽनेन कच-बन्धने दीप्तौ च घञ्। शिक्ये, (शिका) मणिभेदे, मृत्तिकाभेदे क्षारे, (कच) शिकथके च (मोम)।

**काचन** न० काचयति बध्नाति अनेन कच-स्वार्थे णिच्-ल्युट्। पत्रबन्धनद्रव्ये लाक्षादौ। काचिदित्यर्थे अव्य०।

**काचलवण** न० काचस्य लवणम्। काचोत्पादनशोधने लवणे, (सोरा)। कृष्णलवणे (कालानोन)।

**काचसौवर्चल** न० कृत०। काचमृत्तिकासम्भवे लवणे।

**काचस्थाली** स्त्री० काचस्य स्थालीव (पारुलगाछ)। वृक्ष-भेदे, काचमयपात्रे च।

**काचाक्ष** पु० काच इवाक्षि यस्य। कपर्दकाक्षे वकबके।

**काचित** त्रि० काचे शिक्ये चित धृत पृषो०। शिक्यधृते पदार्थे

**काञ्चन** पु० काचि-दीप्तौ ल्यु। स्वनामख्याते वृक्षे, चम्पके, नागकेशरे, उदुम्बरे, धुस्तूरे च। स्वर्णे पद्मकेशरे, काञ्चनार-पुष्पे दीप्तौ च न०।

**काञ्चनक** पु० काञ्चनमिव कायति प्रकाशते कै क। पक्षिभेदे, कोविदारवृक्षे च। हरिताले न०। [(चापाकला)।

**काञ्चनदली** स्त्री० काञ्चनमिव दल यस्याः। स्वर्णकदल्याम्

**काञ्चनक्षीरी** स्त्री० काञ्चनमिव क्षीरं यस्याः गौरा० ङीष्। क्षीरिण्ये लतायाम्। [(गणियारी)।

**काञ्चनपुष्पी** स्त्री० काञ्चनमिव पुष्पमस्याः। गणिकारीवृक्षे

**काञ्चनार** पु० काञ्चनं दीप्तिमृच्छति ऋ अण्। काञ्च-वृक्षे,

**काञ्चनाल** पु० काञ्चनाय दीप्त्यै अलति पर्य्याप्नोति अल अच्। कोविदारवृक्षे। [हरिद्रायां, गोरचनायाम् स्वर्णक्षीरीवृक्षे च

**काञ्चनी** स्त्री० काञ्च्यतेऽनया काचि दीप्तौ करणे ल्युट् ङीप्।

**काञ्चि(ञ्ची)** स्त्री० काचि-इन् वा ङीप्। स्त्रीकटिभूषणभेदे, (चन्द्रहार गोट) 'एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका। रशना षोडश ज्ञेया" इत्युक्तलक्षणे यष्टौ, गुञ्जायाम् 'अयो ध्या मथुरा माया काशी काञ्ची अवन्तिके'ति पुरीभेदे च।

**काञ्ची(ञ्चि)पद** न० कृत०। जघने।

**काञ्जिक** न० अनज-धात्वर्थनिर्देशे ण्वुल् कुत्सिता अञ्जिका व्यक्तिर्यस्य। आरनाले (कांजी)।

**काण** पु० कण निमीलने घञ्। काके। एकचक्षुर्युक्ते त्रि०।

**काण्ड** पु० न० कण शब्दे ड तस्य नेत्त्वम् दीर्घः। स्तम्बे, तृणादिगुच्छे, वृक्षस्कन्धे, (गुडी) बाणे, अवसरे, प्रस्तरे, नाडीवृन्दे, नाले, वर्गपरिच्छेदात्मके ग्रन्थप्रकरणे, निर्जन-स्थाने च। व्यवीडवृक्षे पु०। [(करेला)।

**काण्डकटुक** पु० काण्डे स्कन्धेऽपि कटुकस्तिक्तः। कारवेल्ले,

**काण्डकीलक** पु० काण्डे कीलमिव यस्य कप् समा०। लोध्रे, तस्मिन् कीटदंशात् हि कीलमिव कर्व्वुरं जायते।

**काण्डतिक्त** पु० काण्डे तिक्तः। भूनिम्बे (चिराता)।

**काण्डपट** पु० काण्ड इव पट। (कानात), पटभेदे, यस्य सङ्कोचे काण्डरूपता भवति।

**काण्डपृष्ठ** त्रि० काण्डानि पृष्ठे यस्य। शस्त्राजीवे। 'स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत्। तेन दुश्चरितेनासौ काण्डपृष्ठ इति स्मृतः' इत्युक्तलक्षणे जने पु०।

**काण्डरुहा** त्रि० काण्डात् प्ररोहति। कटुकायाम् (कटकी)।

**काण्डीर** त्रि० काण्डो बाणोऽस्त्यस्य ईर। (तीरन्दाज) बाणधरे, अपामार्गे न०। मञ्जिष्ठायां कारवेल्ल्याञ्च स्त्री० ङीप् वा।

**काण्डेक्षु** पु० काण्डेन स्कन्धेन इक्षुरिव। (तालमाखना) तृणभेदे

**काण्व** पु० कण्वेनाधीत अण्। यजुर्वेदीयशाखाभेदे। अपत्यार्थे ऽण्। कण्वपुत्रादौ त्रि०।

**कातर** त्रि० ईषत्तरति स्वकार्य्य कर्त्तुं शक्नोति कु+तॄ अच् कोः कादेशः। अधीरे, व्यसनाकुले, भीते, विवशे, चञ्चले च। तदध्यासितकातराक्षीति रघु। के जले आतरति प्लवन न तु विशेषतो मज्जति। उडुपे।

**कातृण** न० कुत्सितं तृणं कादेशः। कुत्सिततृणे।

कामद त्रि० कामान् ददाति दा-क । अभीष्टदायके, वनभेदे च

कामदुघा स्त्री० कामं दोग्धि दुह-क घादेश । अभीष्टसम्पादयित्र्याम् सुरभौ गवि ।

कामदुह् स्त्री० कामं दोग्धि दुह क्विप् । सुरभौ गवि । [गवि

कामधेनु स्त्री० कामस्य अभीष्टस्य दोहनस्य धेनुर्धेनुः । सुरभौ

कामध्वंसिन् पु० कामं ध्वंसयति ध्वंसु णिच्-णिनि । शिवे ।

कामपाल पु० कामान् पालयति पाल-णिच्-अण् । बलभद्रे ।

कामम् अव्य० कम-णिङ्-अम् । अनुमतौ, प्रकामे, पर्याप्ते, असूयायाम् अनुमतौ, अकामानुमतौ, स्वच्छन्दार्थे, अनिष्टस्वागत्या स्वीकारे च । [रूपे, सुन्दररूपे च त्रि० ।

कामरूप पु० स्वनामख्याते देशभेदे । कामोरूपं यस्य । स्वेच्छा

कामरूपिन् पु० कामतो रूपं यस्य इनि । विद्याधरे । मनोरूपधवति, स्वेच्छाद्रूपधारिणि च त्रि० ।

कामल पु० कामेन लसति लस-ड । वसन्तकाले । मत्वर्थे लच् । कामयुक्ते त्रि० । कामं कान्तिं लुनाति लू-ड । रोगभेदे (कामोल) पु० स्त्री० स्त्रियां टाप् ।

कामवल्लभ पु० ६त० । आम्रवृक्षे तन्मुकुलं हि कन्दर्पप्रियम् ।

कामवृन्ता स्त्री० कामतो वृन्तं यस्याः । पाटलायाम् ।

कामवृक्ष पु० कामेन बीजाङ्कुरनिरपेक्षतया यथेच्छं वृक्ष । वन्दाके (परगाछा) ।

कामशर पु० कामस्य शर इव कुकुन्दरत्वेन । आम्रवृक्षे ।

कामसख पु० ६त० । कामस्य सखा+टच् समा० । वसन्तकाले, तदुद्दीपके चन्द्रे च । [वात्स्यायनप्रणीते ग्रन्थे ।

कामसूत्र न० कामस्य तदङ्गस्य सूत्रम् । कामतन्त्रप्रतिपादके

कामाङ्कुश न० कामस्याङ्कुश इव । नखे ।

कामासक्तता स्त्री० कामासक्तेर्भावः तल् । कर्मफलाभिलाषित्वे । कामात्मता न प्रशस्तेति मनुः ।

कामात्मन् त्रि० कामे मनः आत्मा यस्य । आसक्तकामनावति, कामाकुलचित्ते च । काम आत्मा स्वरूपं यस्य । कामयते काम्यमानविषयगतात्मचित्तत्वेन तद्रूपता प्रकृतस्वभावे ।

कामान्ध पु० काम स्वेच्छमन्धयति स्वरेण विरहिणम् चुरा० अन्ध-अच् । कोकिले । कामेनान्धः ३त० । विवेकहीने त्रि० ।

कामाल पु० कामतोऽलति अल पर्याप्तौ अच् । रक्तकाञ्चनवृक्षे

कामावसा(शा)यिता स्त्री० कामान् अवस्यति अव+सोइ णिनि तस्य भावः तल् । अणिमाद्यष्टविधैश्वर्यमध्ये सत्यसङ्कल्पताख्ये ऐश्वर्ये । कामान् अवसातुं निश्चेतुं शीलमस्य अव-सो णिनि ततस्तल् । कामावसायितायमैश्वर्यम् ।

कामिन् पु० काम णिनि । चक्रवाके, पारावते चटके वृषभे च एतेषां कामाधिक्यात् कामित्वम् । कामवति त्रि० स्त्रियां ङीप् कामिनी । भीरुस्त्रियाम् दारुहरिद्रायाम्, मदिरायाञ्च स्त्री० ।

कामीन पु० काममनुगच्छति ख । रामपुगे । कामानुगते त्रि० ।

कामुक पु० कम-णिङ् उक । अशोकवृक्षे, अतिमुक्तके, माधवीलतायाम्, चटके च । मैथुनकामनातिशयवति त्रि० । स्त्रियां ङीप् कामुकी । इच्छागमनवत्यान्तु टाप् कामुका । [लतायाम्

कामुककान्ता स्त्री० कामुककान्ता कान्ता प्रिया । अतिमुक्तक

काम्पिल्य पु० कम्पिलाया नद्या अदूरभवो देशः ष्यञ् । उत्तरदेशभेदे, तत्र जातायां रागरोचनाख्यायां लतायाञ्च ।

काम्बल पु० कम्बलेन परिवृतो रथः । कम्बलेन समन्तादावृते रथे

काम्बविक पु० कम्बुः शङ्खः शिल्पमस्य । शङ्खकारे (शाखारि)

काम्बोज पु० कम्बोजो देशोऽभिजनो निवासो वा यस्य अण् कम्बोजदेशोद्भवेऽश्वे, पुन्नागवृक्षे, म्लेच्छभेदे च । धवलखदिरे, माषपर्ण्याम्, श्वेतपुष्पायाञ्च, स्त्री० ङीप् ।

काम्य न० कम णिङ् यत् । "यत् किञ्चित् फलमुद्दिश्य, यज्ञदानतपः क्रिया । क्रियते बहुलायासं तत्काम्यं परिकीर्त्तितमित्युक्ते कर्मणि । कमनीये, सुन्दरे च त्रि० ।

काय पु० चीयतेऽन्नादिभिः चिञ् घञ् नि० । देहे । कः प्रजापतिर्देवता अस्य देवताऽस्य अण् इत्यस्य आदेशः । हविरुपदेशभेदे । प्रजापतिदेवताके चरौ, प्राजापत्यविवाहे कनिष्ठानामिकयोरधोभागे, स्वल्पाङ्गुलिमूलरूपे, प्राजेतीर्थे, लक्ष्ये, स्वभावे, मूलधने च ।

कायस्थ पु० काये तिष्ठति काय+स्था-क । परमात्मनि, लिपिकरवृत्तौ (कायत) जातिभेदे च । कायस्थित्यनया स्था-क टाप् । हरीतक्याम् आमलक्याञ्च स्त्री० ।

कायिका स्त्री० कायेन निर्वाह्या ठञ् । गवादिपशुकर्मकरणरूपाया 'दोह्यवाह्यकर्मयुक्ता कायिका वृद्धिरुच्यते'ति स्मृत्युक्ताया वृद्धौ मत्स्यसूक्तप्रकटाधमर्णदेवदत्ते च 'कायाविरोधिनी शश्वत् पणार्द्धादा तु कायिकेति नारदवचनात् ।

कार पु० कृ हिंसायां, कृ करणे वा भावे घञ् । बधे निश्चये, यत्ने क्रियायाञ्च । कृ विक्षेपे आधारे घञ् । हिमाद्रौ, यत्ने । कर्मोपपदे कर्त्तरि अण् । तत्तत्कर्मकर्त्तरि यथा कर्मकार स्वर्णकार इत्यादिः । कृ कर्मणि घञ् पिण्डीभूते धान्यादिराशौ ।

कारक त्रि० कृ ण्वुल् । क्रियाजनके । क्रियोपाधिके साक्षात् क्रियान्वयिनि व्याकरणोक्ते कर्तृकर्मादिषु षट्सु न० ।

कारकदीपक न० अलङ्कारशास्त्रे अर्थालङ्कारभेदे सा०द० ।

देशमत्ययागमेषु न्यायमते प्रागभावप्रतियोगिनि घटपटादि विकाररूपे कार्य्ये, विनश्वरे, अवयववति, देहादौ, विवादे, पुण्यापुण्यरूपे अपूर्व्वे च। कर्त्तव्ये त्रि०।

कार्श्य न० कृशस्य भावः ष्यञ्। कृशत्वे। स्वार्थे ष्यञ्। कृशे शालवृक्षे, नकुचे (डेयो) वृक्षे च पु०।

कार्षापण पु०न० कर्षस्यायम् अण् आ+पण-घञ्। कर्षस्य आपणः। (काहन) षोडशपण परिमाणे, पणे च। [तोला]

कार्षिक पु० कर्षस्यायम् ठञ्। पणचतुर्थभागे, कर्षमाने च।

कार्ष्य पु० कृष क स्वार्थे ष्यञ्। शालवृक्षे।

काल पु० कुत्सितमलति अल-अच् कोः कादेशः। कृष्णवर्णे। तद्वति त्रि०। लौहे, कक्कोलके, न०। कालयति सर्व्वं चुरा० कल० अच्। यमे महाकाले शिवे, शनैश्चरे, कोकिले, रक्तचित्रके, कासमर्द्दे, क्षणदण्डादिसमये च पु०। अयं च सर्व्वकार्य्येषु निमित्तकारणम्। स च आदित्यादिक्रिया-प्रचयरूपस्तदुपाधिको घट दिरूपो वा।

कालक पु० कु० कल-ण्वुल्। जलौ,(देहस्थचिह्नभेदे) जलव्याले च। कालशाके,यकृति, बीजगणितोक्ते अव्यक्तराशिचिह्न-भेदे च न०। [खञ्जने, कलविङ्के, दात्यूहे च।

कालकण्ठ पु० कालः कण्ठो यस्य। नीलकण्ठे शिवे, मयूरे

कालकूट न० कालमपि कूटयति दहति, कूट-अण्। विषे, कालस्य इव कूटो राशिरिव। 'देवासुरणे देवैर्हतस्य पृथुमालिनः। दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभः। निर्य्यासः कालकूटोऽस्य मुनिभिः परिकीर्त्तितः। सोऽ-हिच्छत्रे शृङ्गवेरे कौङ्कणे मलयेऽभवदित्युक्ते वृक्षनिर्य्यासरूपे विषभेदे पु०न०। [च। सूर्य्ये।

कालकृत् पु० कालं समयं स्वगत्या करोति कृ-क्विप् तुक्

कालकेशी स्त्री० कालः केश इव पत्रादिर्यस्याः। नील्यामोषधौ

कालखण्ड न० कर्म्म०। दक्षिणकुक्षिस्थे मांसखण्डे यकृति।

कालचक्र न० कालश्चक्रमिव पहृतुरूपारवत्त्वात् सदा परि-वर्त्तमानत्वाच्च। कालरूपे द्वादशमासात्मके संवत्सर-रूपे चक्रे। [ज्योतिर्विदि दैवज्ञे।

कालचिन्तक पु० कालं चिन्तयति विचारयति चिन्ति ण्वुल्।

कालधर्म्म पु० ६त० मृत्यौ, समयस्वभावे च।

कालनियोग पु० कालेन कृतो नियोगः कालस्य वा नियोगः कालः नि+युज-घञ्। दैवायत्ता, कालकृतनियमे च

कालनिर्य्यास पु० कर्म्म०। गुग्गुलौ।

कालनेमि पु० राक्षसभेदे हिरण्यकशिपुपुत्रे दैत्ये च 'कालनेमिवधे युद्धे' इति पुराणम्।

कालपर्णी पु० कालं कृष्णं पर्णमस्य। तगरवृक्षे।

कालपुच्छ पु०कालं पुच्छोऽस्य।'गुरुदेहसमः कालपुच्छो मुनि-भिरीरित' इत्युक्ते मृगभेदे।

कालपृष्ठ पु० कालं पृष्ठमस्य। मृगभेदे कङ्कपक्षिणि, चापे च कालोयम इव पृष्ठमस्य। कर्णस्य चापे।

कालमान पु० कालं मानमस्य। कृष्णजीरके, कृष्णतुलस्यां।

कालमूल पु० कालं मूलमस्य। रक्तचित्रकवृक्षे।

कालमेषी स्त्री० कालं वर्णं मिषति स्पर्द्धते मिष-अण्। मञ्जिष्ठायाम् सोमराज्याम्, त्रिवृति च।

कालरात्रि स्त्री० कालस्य रात्रिर्नाशिका। सर्व्वभूतापहारिण्याम् मृत्युदेव्याम् यमभगिन्याम्,कल्पान्तरात्रौ,'दीपा-वली तु या प्रोक्ता कालरात्रिश्च सा मते'त्युक्ते कार्त्तिका-मावास्यारात्रिसमये च।

काललवण न० कर्म्म०। विड्लवणे।

काललौह न० कर्म्म०। कृष्णायसे लौहभेदे।

कालवृन्त पु० कालं वृन्तं वृन्तमस्य। कुलत्थवृक्षे।

कालशाक न० कर्म्म०। शाक्यीये शाकभेदे।

कालसर्प पु० नित्यकर्म्म०। कृष्णसर्पे महाविषे (केउटासाप)

कालसार पु० कालेन सारः शबलः। कृष्णसाराख्ये मृगे,

कालसूत्र न० कालस्य यमस्य सूत्रमिव। कुलालचक्रसूत्र-च्छेदनरूपे नरकभेदे।

कालसेय न० कलश्या दधिकुम्भ्यां भव ढक्। तक्रे।

कालस्कन्ध पु० कालः स्कन्धो यस्य। तमालवृक्षे, तिन्दुकवृक्षे, जीरकवृक्षे, दुग्धखदिरे, उदुम्बरे च।

काला स्त्री० काल+अजादित्वात् टाप्। कृष्णत्रिवृति। कालयति अच्। मञ्जिष्ठायाम्। कल क्षेपे कर्म्मणि घञ्। अश्वगन्धा-याम्,पाटलावृक्षे कृष्णजीरके,नीलिकायाञ्च। [चन्दने।

कालागुरु न० कर्म्म०। प्राग्ज्योतिषदेशोत्पत्तिके कृष्णागुरु

कालाग्नि पु० कालकारः मृत्युकारी अग्निः। प्रलयाग्नौ कालानलादयोऽप्यत्र। [कलविङ्के, कपिञ्जले पक्षिणि च।

कालानुनादिन् पु० अनुनदति अनु नद णिनि कर्म्म०। भ्रमरे

कालानुसारक न० कालं समयं इवानुसरति दूरतो गच्छति सृ ण्वुल्। कृष्णागुरुणि पीतचन्दने।

कालानुसारिन् न० कालं समयं इवानुसरति गन्धेन दूरतो गच्छति णिनि। शैलेये गन्धद्रव्ये।

कालानुसार्य्य पु०न०। कालेन समयदेशादुपार्य्यते अनु सृ-ण्यत्। शैलजे गन्धद्रव्ये,शिंशपावृक्षे, (सिंह) तगरे च

कालान्तरविष पु० कालान्तरे दशनकालात् बहुकालानन्तरं

**काष्ठलेखक** पु० काष्ठं लिखति ण्वुल् । घुणाख्ये कीटे ।

**काष्ठा** स्त्री० काश क्थन् । दिशि, दारुहरिद्रायाम् स्थितौ, पर्य्यवसानभूमौ, अष्टादशनिमेषात्मके काले, उत्कर्षे, काष्ठागत स्नेहरसानुविद्धमिति कुमार सीमायाञ्च परा हि काष्ठा तपसस्तया पुनरिति कुमार ।

**काष्ठाम्बुवाहिनी** स्त्री० पुनः पुनरम्बु वहति णिनि, काष्ठस्याम्बुवाहिनी । काष्ठरचितनौकाकृतिजलसेचन्याम् द्रोण्याम् । (सेंउनी) । [सिद्ध कासागास णिच् अचकासत् त ।

**कास** कुत्सितशब्दे भ्वादि० आत्म० अक० सेट् । कासते अका-

**कास** पु० कास-घञ् । रोगभेदे ।

**कासघ्नी** स्त्री० कासं रोगं हन्ति टक् । कण्टकार्य्याम् । [भेदे ।

**कासमर्द्द** पु० कासं मृद्नाति मर्द-अण् । (कालकासुन्दे) वृक्ष-

**कासमर्द्दन** पु० मृद ल्यु ६त० । पटोले ।

**कासर** पु० के जले आसरति आ+सृ-अच्, ईषत् सरति स्थूलकायत्वात् कौ कादेश वा । महिषे ।

**कासार** पु०, केन जलेनासम्यक् सार्य्यतेऽसौ, ईषत् सार्य्यतेऽसौ वा । सरोवरे, सपद्मे निष्पद्मे वा महाजलाशये ।

**कासारि** पु० ६त० । कासमर्द्दे, घालुके च ।

**कासीस** न० चुद् कास कासीमा श्यति शो-क । (हीराकस) उपधातुभेदे । [रोगेच ।

**कास्** स्त्री० कस-ञ णिच् । विकलवाचि, दीप्तौ, युद्धौ,

**काहल** पु० कुत्सित हलति विलसति कस्य को कादेशः । कुक्कुटे बिडाले च । शब्दमात्रे, महाढक्कायाम्, वाद्यभेदे, महाध्वनौ, अव्यक्तवाक्ये न० । शुष्के भृशे, खले च त्रि० ।

**काहलापुष्प** पु० काहलेव पुष्पमस्य । धुस्तूरे ।

**कि** ज्ञाने जुहो० पर० सक० अनिट् । चिकेति अकैषीत् ।

**किंवदन्ति(न्ती)** स्त्री० किम्+वद-झिच् वा ङीप् । जन-श्रुतौ सत्ये असत्ये वा लोकापवादे ।

**किंवा** अव्य० किञ्च वा च द्व० । विकल्पे, कथमित्यर्थे ।

**किंशारु** पु० कुत्सितं शृणाति किम्+शॄ ञुण् । धान्याद्यग्रभागे, वाणे, कङ्कपक्षिणि च ।

**किकीदिवि** पु० किकीति दीव्यते शब्दायते किकि+दिव-इन् नि० दीर्घ । चाषविहगे । [स्त्रियां ङीप् ।

**किङ्कर** त्रि० किञ्चित् कुत्सितं वा करोति-ट । भृत्ये, सेवके ।

**किङ्किणी** स्त्री० किञ्चित् किण् करोतीति णिच-अच्-गौरा० ङीष् । कटिभूषणे क्षुद्रघण्टिकायाम् विकङ्कततरौ च ।

**किङ्किर** पु० किम्+कॄ क । कोकिले, भ्रमरे, हये, कन्दर्पे च । रक्तवर्णे स्त्री० ।

**किङ्किरात** पु० किङ्किरो रक्तवर्णमतति गच्छति पुष्पद्वारा अण् । अशोकवृक्षे, शुकपक्षिणि रक्ताम्लाने (राँगभाटी) अत-अच् कर्म० । कन्दर्पे, कोकिले च । [विनाशाञ्च ।

**किञ्च** अव्य० किञ्च च द्व० । आरम्भे, समुच्चये, साकल्ये, समा-

**किञ्चन** अव्य० किम्+चन । असाकल्ये, अल्पे च । ग्रन्थिपर्ण-पलाशे पु० ।

**किञ्चित्** अव्य० किम्+चित् । असाकल्ये, अल्पे च ।

**किञ्चुलुक** पु० किञ्चित् चुलुम्पति सौत्र चुलुम्प-डु संज्ञायां कन् । (केंचो) महीलताख्ये कीटभेदे ।

**किञ्जल्क** पु० किञ्चित् जलति जल-अपवारणे क तस्य नेत्त्वम् । केसरे, पुष्परेणौ, नागकेसरे च पद्ममध्यस्थे कोशाकारे । करहाटवेष्टने न० ।

**किट** गतौ सक० भये अक० भ्वा० पर० सेट् । केटति अकेटीत्

**किटि** पु० किट-गतौ इन् किच्च । शूकरे । [भये च (काट)

**किट्ट** न० किट क्त इडभाव । धातूनां मले, तैलाद्यधोभागस्थे

**किण** पु० कण गतौ अच् पृषो० अत इत्त्वम् । (घेटा) । शुष्कव्रणे, मांसग्रन्थौ, घर्षणजे चिह्ने च ।

**किणिही** स्त्री० किण-अस्त्यर्थे इनि किणिनो व्रणान् हन्ति ड गौ० ङीष् । अपामार्गे ।

**किण्व** पु० न० कण-व नि० । सुराबीजे द्रव्ये 'किण्वादिभ्यो मदशक्तिवदि'ति सांख्यसूत्रम् । पापे न० ।

**कित** संशये रोगापनयने च भ्वा० पर० सक० सेट् । चिकित्सति अचिकित्सीत् । वासे अक० इच्छायां सक० । केतति अकेतीत्

**कित** ज्ञाने जुहो० पर० सक० सेट् । चिकेत्ति अकेतीत् ।

**कितव** पु० कि-भावे क्त कितेन वाति वा क । द्यूतकारके, वञ्चके, खले, चोरनामकगन्धद्रव्ये, धुस्तूरवृक्षे च ।

**किन्तनु** पु० किञ्चिन्मात्रा तनुर्यस्य । अष्टपादे (माकड़सा) कीटभेदे । [विरुद्धार्थे, किं पुनरित्यर्थे च ।

**किन्तु** अव्य० किञ्च तु च द्व० । पूर्ब्बवाक्यसङ्कोचप्रापके, मायुक्त-

**किन्नर** पु० कुत्सितो नरः कुत्सा च अश्वमुखत्वे नरदेहत्वात् नरमुखत्वे चाश्वदेहत्वात् । देवयोनिभेदे देवानां गायके ।

**किन्नरेश** पु० ६त० । कुवेरे धनदे ।

**किन्नु** अव्य० किञ्च नु च द्व० । प्रश्ने, वितर्के, सादृश्ये स्थाने च

**किम्** अव्य० कै डिमु । प्रश्ने, निषेधे, वितर्के, निन्दायाञ्च ।

**किमु** अव्य० किञ्च उ च द्व० । विमर्षे सम्भावनायाञ्च ।

**किमुत** अव्य० किञ्च उत च द्व० । प्रश्ने, वितर्के, विकल्पे, अतिशये च ।

**किम्पच** त्रि० किं पचति अच् । कृपणे हृदि आमोदरपूर्त्ति

मात्रं पचति नागन्तुकातिथिभ्योदानार्थम्।
किम्पचान त्रि॰ किम्+पच-आनच्। आत्मोदरपूर्त्तिमात्रं पाककर्त्तरि कृपणे। [कृपणे त्रि॰।
किम्पाक पु॰ निन्दित पाकोऽस्य (माकाल) इतिख्याते वृक्षे।
किम्पु(पू)रुष पु॰ कुत्सित पुरुष। देवयोनिभेदे देवगायके। हिमाचलहेमकूटयोर्मध्यस्थे नववर्षात्मकजम्बुद्वीपस्थेकतमे वर्षे
कियत् त्रि॰किम्+परिमाणे,वतुप् किम कियादेश वस्य य। किं परिमाणे इत्यर्थे। [ङित्वे टिलोमे ण्वुल्।उद्योगे उत्साहे।
कियद्देतिका स्त्री॰ कियत् एतत् आरभ्यमाण करोति णिचि
किर पु॰ कॄ क। शूकरे।
किरण पु॰ कॄ-क्यु। सूर्य्ये, रश्मौ च।
किरणमालिन् पु॰ किरणानां मालाऽस्यास्ति इनि। सूर्य्ये।
किरात पु॰ कीर्य्यतेऽवस्करो यत्र कॄ-क पर्यन्तदेशमृतति अण्। स्वेच्छजातिभेदे पर्य्यन्तदेशाश्रयिणि, अल्पतनौ, 'तमङ्कुरुष्व समारभ्य रामचेलानकं मिवे'। किरातदेशो देविणि। विन्ध्यशैलेऽवतिष्ठति इत्युक्तदेशे च।
किराततिक्त पु॰ किरातदेशे उत्पत्तिस्थानत्वेनास्यास्य अच्। कर्म॰ (चिराता) ख्याते वृक्षे,यवद्गम्बाद्ये, भूनिम्बे च।
किरि पु॰ कॄ-इक्। शूकरे
किरीट पुं॰न॰ कॄ कीटन्। मुकुटे, शिरोवेष्टने च।
किरीटिन् पु॰ किरीट+इनि। अर्ज्जुने। मुकुटवति त्रि॰।
किर्म्मी स्त्री॰ किरति किम् किर भाति भा-क गौरा॰ ङीप्। पलाशवृक्षे, स्तम्भे, स्वर्णपुत्तलिकायाम्, लौहपुत्तलिकायाञ्च।
किर्म्मीर पु॰ कॄ-ईरन् कित् मुडागमश्च। नारङ्गवृक्षे, राक्षसभेदे, चित्रवर्णे च। तद्वति त्रि॰।
किल अव्य॰किल-क। वार्त्तायाम् अनुनयार्थे,निश्चये,संभाव्ये प्रसिद्धममात्रद्योतके,सत्ये, हेतौ,अरुचौ,अलीके,तिरस्कारे च।
किलकिञ्चित 'स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम्। सांकर्य्यं किलकिञ्चितमभीष्टतमसंगमादिजाद्धर्षात्' इत्युक्ते स्त्रीणां विलासभेदे 'दमयन्तीकिलकिञ्चितं किले'ति नैषधम्
किलकिला स्त्री॰ किलकिलेति वीप्सया दिप्तत्वात् अच् तत टाप्। हर्षध्वने, सिंहनादे, वानराणां शब्दानुकरणे च।
किलाटक पु॰ 'दध्नश्चास्य पयस पिण्ड प्रोक्त किलाटक' इत्युक्ते क्षीरविकारे।
किलाटिन् पु॰ किलति क, अट तिनि कर्म्म॰। वंशे वृक्षे।
किलास न॰ किल-क-तमस्यति अस+अण्। सिध्मरोगे (छुली)
किलिञ्ज पु॰ किल-इन् ततो जात जन-ड पृ॰। कटे,सूक्ष्मकाष्ठे च। [धर्माधर्मफलभूते अनिष्टे प्रकारे च।
किल्बिष न॰ किल टिषच् वुक्। अपराधे, पापे, रोगे,
किशल पु॰न॰। कि शलति शल-अच् पृ॰। पल्लवे।
किशलय पु॰न॰। किञ्चित् शलति चलति कयन् पृ॰। पल्लवे।
किशोर पु॰ कश-ओरन् नि॰। हस्तिशिशौ, सूर्य्ये, तरुणावस्थे 'किञ्चिन्नूर किशोर स्यात्मतो द्विशमात् परम्। स्मृतम्' इत्युक्त किञ्चि दिव्युक्ते दशवर्षोत्तरपञ्चदशवर्षवयस्के त्रि॰। स्त्रियां ङीप्।
किष्क वधे चुरा॰ आत्म॰ सक॰ सेट्। किष्कयते अचिकिष्कत
किष्किन्ध(न्ध्य) पु॰ओड्रदेशस्थे पर्व्वतभेदे। तत्रत्यगुहायां स्त्री॰।
किष्कु पु॰स्त्री॰ किष्क उ। द्वादशाङ्गुलिपरिमाणे, प्रकोष्ठदेशे, हस्तपरिमाणे च। [नखे च (नाहा)।
किष्कुपर्व्वन् पु॰ किष्कुमितं पर्व्व यस्य। इक्षौ, वंशवृक्षे, पाटे
किसलय पु॰न॰ किञ्चित् सलति सल गतौ कयन् पृ॰। पल्लवे।
कीकट पु॰किञ्चित् कुत्सितं कटति पृ॰। अश्वे। मगधदेशे व॰व॰ च'कीकटेषु गया पुण्येति पुराणम्। कृपणे,निर्द्धने च त्रि॰।
कीकश पु॰ कीति कशति कश शब्दे अच्। चण्डाले।
कीकस पु॰ कीति कसति कस गतौ अच्। क्रमिजभेदे अस्थि न॰ कठिने त्रि॰।
कीकि पु॰ कीति शब्दं कायति कि। चाषपक्षिणि।
कीचक पु॰ कीत्यव्यक्तं चकति चक-तृप्त्यादौ अच्। वेणुभेदे, 'कीचका नाम ते वंशाये स्वनन्त्यनिलाहता' इत्युक्ते वेणुभेदे (तलताबाश) विराटराजश्याले,केकयाधिपे नृपभेदे च
कीचकजित् पु॰ कीचक जितवान् जि-भूते क्विप्। भीमसेने एव कीचकभिदादयोऽप्यत्र। [अवीकिटत् त।
कीट बन्धे वर्णे च चुरा॰ उभ॰ सक॰ सेट्। कीटयति ते
कीट पु॰ कीट अच्। क्रमिभेद स्थूले मुद्गजन्तमसे। स्वार्थे कन्। तदर्थे मगधजातौ च। कठिने त्रि॰।
कीटघ्न पु॰ कीट हन्ति हन टक्। गन्धके।
कीटजा स्त्री॰ कीटेभ्यो जायते जन ड। अलक्ते लाक्षायाम्।
कीटमणि पु॰ कीटेषु मणिरिव। खद्योते।
कीदृश पु॰ किम्+दृश-क्विप् किम की। किंप्रकारे। ट। कीदृश॰। कृष। कीदृक्षोऽप्यत्र।
कीनाश पु॰ कुत्सित नाशयति किञ्चाति नि॰। यमे,'कीनाशनिःकृन्तनादिति मिति वीच वानरभेदे,कर्षके,पशुघ्ने,क्षुद्रे च।
कीर पु कीति ईरयति ईर अच्। शुकपक्षिणि, देशभेदे ब॰व॰। मांसे न॰।
कीर्ण त्रि॰ कॄ क्त। आच्छन्ने, निहिते,विक्षिप्ते च।
कीर्त्तना स्त्री॰ चुरा॰ कृत-युच् टाप्। यशसि।
कीर्त्ति स्त्री॰ चु॰ कृत-क्तिन्। यशसि।

कीर्त्तित त्रि॰ कॄत॰ कृत क्त। कथिते-ख्याते च।

कीर्त्तिशेष पु॰ कीर्त्तिरेव शेष। मरणे। ब॰। मृते त्रि॰

कील बन्धे भ्वादि॰पर॰सक॰ सेट्। कीलति अकीलीत्।

कील पु॰स्त्री॰कील-क। अग्निशिखायाम्। करणे घञ्। शङ्कौ, शल्ये,कफोणौ स्तम्भे, लेशे च।

कीलक पु॰कील+स्वार्थे संज्ञायां वा कन्। कीलार्थे, गवां दोहनार्थं बन्धनस्तम्भे, गवां कण्डूयनार्थे स्तम्भे च।

कीलाल न॰ कीलां वह्निशिखामलति वारयति अण्। जले, रुधिरे च। कीलामग्निशिखां लाति ला क। अमृते। कीलेन प्रतिबन्धेन अल्यते वार्यते अल घञ्। पशौ पु॰

कीलित त्रि॰कील क्त। बद्धे। भावे क्त। बन्धे न॰।

कीश पु॰ कस्य वायोरपत्यम् अत इञ् कि हनुमान् ईशो यस्य। वानरे। [ङीष्। कीशपर्ण्यप्यत्र।

कीशपर्ण पु॰ कीश तस्येव पर्णमस्य। अपामार्गे। जातित्वे

कु शब्दे भ्वा॰आत्म॰सक॰ अनिट्। कवते अकोष्ट।

कु आर्त्तस्वरे तुदा॰आत्म॰सक॰अनिट्। कुटादि। कुवते अकुत

कु शब्दे अदा॰पर॰अक॰ अनिट्। कौति अकौषीत्।

कु अव्य॰ कु+डु। पापे, निन्दायाम्, ईषदर्थे, निवारणे च। भूमौ, धरायाञ्च स्त्री॰।

कुक आदाने भ्वा॰आत्म॰सक॰ सेट्। कोकते। अकोकिष्ट।

कुकील पु॰ कौ पृथिव्या कील इव स्तम्भहेतुत्वात्। पर्वते

कुकुट पु॰ कौ कुटति कुट क। (सुषनि) इतिख्याते शाकभेदे

कुकुद्द पु॰ सत्कारपूर्वकमलङ्कृतकन्यादातरि।

कुकुन्दर पु॰ कु भूमिं दारयति अन्तर्भूतण्यर्थे दृ-खच् नि॰। कुत्सित कुन्दरमत्र, स्कुद्यते कामिनाऽत्र स्कुद् नि॰ वा। स्त्रीणां नितम्बस्थे आवर्त्ताकारे पृष्ठवंशादधोगर्त्तद्वये।

कुकुर पु॰ कु पृथिवीं कुरति कुर-क। यदुवंशीयनृपभेदे तेषां ययातिशापात् राज्यं नाप्नोति पुराणकथा। कुकुरस्तिय इति माघः। दशार्हे देशभेदे ब॰व॰।

कुकूल पु॰ कौ भूमौ कूलं कुत्सित वा कूलम् कु-उलच् धातो कुगागमश्च। तुष नले, शङ्कुभिः सङ्कीर्णे गर्त्ते, वर्म्मणि च।

कुकोल न॰ कुत्सित कोल इति कुल अच्। कोलिवृक्षे।

कुक्कुट पु॰ कु-क्विप् कुक् तेन कुटति कुट-क। (कुकड़ा) ख्याते खगे, उल्कायाम्, वनकुक्कुटे, वह्निस्फुलिङ्गे च स्वार्थे कन्। तत्रैव शूद्राज्जातो निषाद्यान्तु यः स कुक्कुटक उच्यते इति मनूक्ते सङ्कीर्णवर्णे। स्त्रियां ङीष्।

कुक्कुटमस्तक पु॰कुक्कुटस्येव मस्तक यस्य। चव्ये (चइ)। [व्रतभेदे

कुक्कुटव्रत न॰ कार्त्तिकशुक्लसप्तम्यां सन्तानार्थं कर्त्तव्ये

कुक्कुटशिख पु॰ कुक्कुटस्य शिखेव शिखा यस्य। कुसुम्भवृक्षे तस्य हि पुष्पाणि कुक्कुटशिखातुल्यानि।

कुक्कुभ पु॰ कुक् इत्यव्यक्तं शब्द कौति कु-भक्। वनकुक्कुटे।

कुक्कुर पु॰ कोकते क्विप् कुरति शब्दं करोति कुर-शब्दे क कर्म॰। स्वनामख्याते पशौ। ग्रन्थिपर्णे वृक्षे न॰। [वृक्षभेदे

कुक्कुरद्रु पु॰ कुक्कुरस्याप्रियो द्रुः वृक्षः शाक॰। (कुकुरसोङा)

कुक्कुवाच् पु॰ कुकु इत्यव्यक्ता वाक् यस्य। शारङ्गमृगे।

कुक्षि पु॰कुष-क्सि। उदरे, उदरस्य वामदक्षिणपार्श्वयोश्च (कोंक)

कुक्षिम्भरि त्रि॰ कुक्षिं बिभर्त्ति भृ-इन्-मुम् च। देवातिथिवञ्चनेनात्मोदरमात्रपूरके।

कुक्षिरन्ध्र न॰ कुक्षेरिव रन्ध्रं छिद्रं यत्र। नले।

कुङ्कुम न॰ कुकयते आदीयते कुक-उमक् नि॰ मुम्। काश्मीरदेशजे स्वनामख्याते गन्धद्रव्ये। [शोलमचिस्थाने पर्वतभेदे।

कुङ्कुमाद्रि पु॰ कुङ्कुमस्याकर अद्रिः। काश्मीरदेशस्थे कुङ्कु-

कुच रोधे, सम्पर्के, लेखने च सक॰ कौटिल्ये अक॰तु॰ पर॰ सेट् कुटादि। कुचति अकुचीत् चुकोच।

कुच उच्चे शब्दे भ्वा॰पर॰अक॰ सेट्। कोचति अकोचीत्।

कुच पु॰ कुच- सम्पर्के-अच्। स्तने।

कुचन्दन न॰ कुत्सितं गन्धहीनत्वात् चन्दनम्। रक्तचन्दने, (बकम्) वृक्षभेदे च।

कुचफल पु॰ कुचाविव फलमस्य। दाडिम्बवृक्षे।

कुचर त्रि॰ कुत्सितं चरति चर-अच्। परदोषकथनशीले।

कुचेला स्त्री॰ कुत्सितं चेलमिव पत्रमस्याः। विद्धकर्णवृक्षे गौरा॰ ङीष्। अम्बष्ठा (आकनादि)। [कोशित्वा, कुज्ञार

कुज स्तेये, भ्वा॰पर॰सक॰ सेट् उदित्। कोजति अकोजीत्

कुज पु॰ कौ पृथिव्यां जायते जन-ड। मङ्गलग्रहे, नरकासुरे, वृक्षमात्रे च। सीतायां कात्यायन्याञ्च स्त्री॰।

कुज्झटि(टी) स्त्री॰ कु-क्विप् कुत् झट सङ्घाते इन्, वा ङीप्। (कुयाशा) नीहारे।

कुञ्चन न॰ कुञ्च-ल्युट्। कौटिल्ये अल्पीभावे च "वाताद्याः कुपितास्तु वर्त्मसु यदा दृष्टिः सङ्कोचं जनयन्ति यदा भृशम्। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदु" रित्युक्ते नेत्ररोगभेदे च। स्वार्थे कन् गमोरिणी।

कुञ्चि पु॰कुञ्च कौटिल्ये इन्। "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलं" मित्युक्ते मानभेदे।

कुञ्चिका स्त्री॰ कुञ्च ण्वुल् टाप्। कृष्णजीरके, (कुँचे) इति ख्याते मत्स्यभेदे (कञ्चि) वंशशाखायां, तालकोद्घाटने यन्त्रभेदे (चाबि)। उत्काटिकी गुञ्जेति शब्दरत्नाकर।

कुञ्चित न॰ कुञ्च क्त। तगरपुष्पे। वक्रे सङ्कुचिते च त्रि॰

कुञ्ज पु॰ कौ पृथिव्या जायते जन-ड ष॰। हस्तिहनौ, समन्तात् लतादिभिराच्छादिते मध्यशून्ये पर्वतादेः स्थानभेदे पु॰न॰

कुञ्जर पु॰ कुञ्ज+अस्त्यर्थे र। हस्तिनि।

कुञ्जरच्छाय पु॰ 'योगोमघावयोदश्या कुञ्जरच्छायसञ्ज्ञक। भवेन्मघाया सस्ये च गजिन्यर्के करस्थिते' इत्युक्ते योगभेदे। [प्पल्याम्।

कुञ्जरपिप्पली पु॰ कुञ्जर इव स्थूला पिप्पली। गजपि-

कुञ्जराशन पु॰ कुञ्जरैरश्यते अश-भक्षे ल्युट्। अश्वत्थवृक्षे।

कुञ्जल न॰ कुत्सितं जलं यत्र ब॰। काञ्जिके। (आमानि)।

कुट कौटिल्ये तुदा॰ पर॰ सक॰ सेट् कुटादि। कुटति अकुटीत् चुकोट।

कुट प्रतापने चुरा॰ आत्म॰ सक॰ सेट्। कोटयते अचूकुटत।

कुट वैकल्ये भ्वा॰ इदित् प॰ अक॰ सेट्। कुण्टति अकुण्टीत्।

कुट पु॰ कुट-अच् दुर्गे (गड) पर्वते, वृक्षे च। घटे पु॰न॰। गृहे स्त्री॰ ङीप्। शिलाकुट्टे अस्त्रे पु॰। अत्र कुट्ट इत्यपेत्यन्ये

कुटङ्क पु॰ कुटं गृहं कयति क ष॰। गृहाच्छादने, (चाल) गिरिनिकटे च।

कुटज पु॰ कुटे पर्वते जायते जन-ड। (कुरची) वृक्षभेदे यस्य फलम् इन्द्रयव। कुटे घटे जायते। अगस्त्यमुनौ द्रोणाचार्ये च

कुटजवीज न॰ ६त॰। इन्द्रयवे।

कुटन्नट पु॰ कुटन् वक्रीभवन् नटति। श्योनाकवृक्षे। मुस्तके न॰

कुटप पु॰ कुट-कपन्। ऋषौ। गृहसमीपस्थोपवने, कुडवरूप-मानभेदे च। पद्मे न॰। [ङीप्।

कुटि पु॰ कुट-इन्। वृक्षे, देहे शरीरे च। कुटीरवे स्त्री॰ वा

कुटिचर कुटौ जले चरति चर-अच्। शाटिचरे शूकरे

कुटीटि/र पु॰ अल्पा कुटी ईरन्। पर्णशालादौ (कुडे)

कुटिल त्रि॰ कुट-इलच्। वक्रे भङ्गुरे च। तगराख्ये न॰

कुटिलग पु॰ कुटिलं गच्छति गम-ड। सर्पे। नद्यां स्त्री॰ टाप्। वक्रगामिनि त्रि॰। [वा क अच्। यतिभेदे।

कुटि/टी/च/र/क पु॰ कुट्या कुटौ वा चरति, चरति वर्यति

कुटुम्ब पु॰न॰ कुटुम्ब-अच्। पोष्यवर्गे बान्धवे भरणे, द्वितीयस्थे च। [कुटुम्बत।

कुटुम्ब धृतौ चुरा॰ आत्म॰ अक॰ सेट्। कुटुम्बयते अचु-

कुटुम्बिनी स्त्री॰ कुटुम्ब+इनि। पतिपुत्रादिरूपायां प्रपत्नि-भार्यायां स्त्रियाम्। [नि-ने अचुकुट्टत् त।

कुट्ट छेदने, भिन्दने च अद॰ चुरा॰ उभ॰ सक॰ सेट्। कुट्टय-

कुट्ट प्रतापने अद॰ चुरा॰ आत्म॰ सक॰ सेट्। कुट्टयते अचुकुट्टत।

कुट्टक पु॰ कुट्ट-ण्वुल्। बीजगणितादौ प्रसिद्धे गणिते अङ्कभेदे। छेदके त्रि॰। [स्त्रिया समागमकारयित्र्याम्।

कुट्टनी स्त्री॰ कुट्ट-ल्युट् ङीप्। (कुट्नी) परपुरुषेण सह पर-

कुट्टमित न॰ 'केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात्। आहुः कुट्टमितं नाम शिरःकरविधूननमित्युक्ते स्त्रीणां विलासभेदे।

कुड्मल पु॰न॰ कुट-क्मलच्। मुकुले विकाशोन्मुखकलिकायाम्। नरकभेदे न॰ यत्र रज्जुभिर्बन्धना नारकिभ्यो दीयते।

कुठ छेदने भौव पर॰ सक॰ सेट्। कोठति अकोठीत्।

कुठ वैकल्ये आलस्ये अक॰ मोचने सक॰ च इदित् भ्वा॰ पर॰ सेट्। कुण्ठति अकुण्ठीत्।

कुठ पु॰ कुठ-अच्। वृक्षे।

कुठर पु॰ कुठ-करन्। मन्थनदण्डबन्धनार्थस्तम्भे। [वृक्षे पु॰।

कुठार पु॰स्त्री॰ कुठ करन्। अस्त्रभेदे (कुडाल) स्त्रियां ङीप्।

कुठारु पु॰ कुठ-आरुन्। वानरे वृक्षे, अस्त्रकारे च।

कुठेर पु॰ कुठ-एरक्। श्वेततुलस्याम्, वह्नौ, (बाबुइ) इतिख्याते वृक्षे च। स्वार्थे कन्। (बाबुइतुलसी) इति वृक्षे।

कुड वैकल्ये भ्वा॰ इदित् पर॰ अक॰ सेट्। कुण्डति अकुण्डीत्

कुड दाहे भ्वा॰ इदित् आत्म॰ सक॰ सेट्। कुण्डते अकुण्डिष्ट

कुड रक्षणे चुरा॰ इदित् उभ॰ सक॰ सेट्। कुण्डयति ते अचुकुण्डत् त।

कुड भक्षणे सक॰ बाल्ये अक॰ तुदा॰ पर॰ सेट्। कुटादि। कुडति अकुडीत् चुकोड। [मानभेदे।

कुडप(व) पु॰ कुड-कपन् (कवन्) वा। प्रस्थचतुर्थांशरूपे परि-

कुड्मल पु॰ न॰ कुड-क्मलच्। विकाशोन्मुखकलिकायां, नरकभेदे न॰।

कुड्य न॰ कुड-यत्। भित्तौ, विलेपने च।

कुड्यच्छेदिन् पु॰ छिद-णिनि ६त॰। चौरे येन गृहभित्तिं विदार्य चौर्यं क्रियते।

कुड्यच्छेद्य पु॰ कुड्यं छेद्यं यस्य। खनके।

कुण आमन्त्रणे, मन्त्रणे च अद॰ चु॰ उभ॰ सक॰ सेट्। कुणयति ते अचुकुणत् त। [अकोणीत्।

कुण उपकरणे शब्दे च तुदा॰ पर॰ सक॰ सेट्। कुणति

कुणप पु॰ कण-कपन् नाम्नाश्रयत्वम्। शवे मृतदेहे शवे, पूतिगन्धे च गन्धेन त्रि॰। गौरा॰ ङीष्। शिंसारिकायाम् (गुयाशालिक)।

कुणि पु॰ कुण-इन्। तुन्नवृक्षे (तुंद) कुब्जिकरे त्रि॰।

कुण्ठ त्रि॰ कुठि-अच्। क्रियासु मन्दे, अकर्मण्ये, मूढे च। स्वार्थे कन्। कुण्ठक। मूर्खे।

कुण्ड पु० कुण्ड्यते कुडि मदे कुडि-दाहे वा घञ्। जीवति भर्त्तरि जारजे पुत्रे मानभेदे पात्रे, जलाशये च। होमीयाग्निस्थापनस्य नभेदे पु०न०। ङीप्। स्थाल्याम् स्त्री०।

कुण्डपाय्य पु० कुण्डेन पीयते सोमोऽत्र्विन्। यज्ञभेदे।

कुण्डल न० कुडि दाहे रक्षणे वा कलच्। कर्णभूषणे, वेष्टने, पाशके, वलये च।

कुण्डलना स्त्री० कुण्डलं वेष्टनं करोति णिच् ततो युच्। वेष्टने 'विषमा कुण्डलनामवापिते'ति नैषधम् तन्त्रप्रसिद्धे मूलाधारस्थिते शक्तिभेदे (जिलिपी) इति ख्याते पक्वान्नभेदे गुडुचीलतायां सर्पजातिस्त्रियाञ्च।

कुण्डलिन् पु० कुण्डल+अस्त्यर्थे इनि। सर्पे।

कुण्डलिनी स्त्री० कुण्डलं वलयाकारवेष्टनमस्य इनि। सर्पाकारेण त्रिवेष्टनयुते तन्त्रप्रसिद्धे शक्तिभेदे, मर्प्याञ्च। [(कुडि)

कुण्डिका स्त्री० कुण्ड+संज्ञायां कन्। कमण्डलौ, स्थाल्याञ्च

कुण्डिन पु० कुडि-इनच्। मुनिभेदे विदर्भनगरे देशभेदे च

कुतप पु० कुत्सितं तपति तप अच्। सूर्य्ये, वह्नौ, ब्राह्मणे, अतिथौ गवि, भागिनेये, दौहित्रे च। वाद्ये, नेपालकम्बले, कुशतृणे पञ्चदशधाविभक्तदिनस्याष्टमांशे काले च अस्त्री० स च मध्याह्नात् पूर्वोत्तरदण्डद्वयात्मक मुहूर्त्तरूप काल। [छागे च।

कुतस् अव्य०किम्+तसिल् कादेशश्च। कस्मादित्यर्थे, प्रश्ने, नि

कुतुक न० कुतूं चर्म्मनिर्म्मितस्नेहपात्रमिव कायति कै-क पृषो० ह्रस्व। फलनिरपेक्षतया चिकीर्षिते कौतुके।

कुतुप पु० ह्रस्वा कुतूः डुपच्। अल्पे चर्म्ममये घृतादिस्नेहपात्रे (कुपी)

कुतुम्बुक न० कुत्सितं तुम्बुरु कुगति०। कुत्सिततिन्दुकफले।

कुतू स्त्री० कुत्सितं तन्यते तन-कू। चर्म्मनिर्म्मिते घृतादिस्नेहपात्रे (कुपा)

कुतूहल न० कुतूं चर्म्ममयं स्नेहपात्रं हलति जिघ्रति हल-अच्। अपूर्ववस्तुदिदृक्षातिशये चेष्टाभेदे, फलनिरपेक्षतया चिकीर्षिते कौतुके च। प्रशस्ते, अद्भुते च त्रि०।

कुतृण न० कुत्सितं तृणं कुगति०। (पाना) कुम्भिकायाम्।

कुत्र अव्य० किम्+त्रल् कादेश। कस्मिन्नित्यर्थे। ततश्चित्। कुत्रचिदित्यप्यर्थे।

कुत्स निन्दने चुरा० आत्म० सक० सेट्। कुत्सयते अचुकुत्सत

कुत्सा स्त्री० कुत्स-अ टाप्। निन्दायाम्, परिवादे च।

कुत्सित न० कुत्स क्त। कुष्ठनामौषधे (कुड)। निन्दिते त्रि०।

कुथ क्लेशे (कोथ) इदित् भ्वादि०सक०सेट्। कुन्थति अकुन्थीत्

कुथ पूतिगन्धे दिवा० पर० अक० सेट्। कुथ्यति अकोथीत्।

कुथ पु० स्त्री० कुथ-अच्। हस्तिपृष्ठस्थे चित्रकम्बले 'कुथेन नागेन्द्रमिवेन्द्रवाहनमिति' माघ स्त्रियां टाप्। कुशतृणे पु०

कुद्दाल पु० कुं भूमिं दलयति विदारयति दल-अण्। (कोदाल) भूमिखननसाधने अस्त्रभेदे।

कुदृष्टि स्त्री० कुत्सिता वेदबाह्या दृष्टिस्तर्कादिरूपा कुगति०। वेदबाह्यतार्किककल्पनायाम्। 'याश्च काश्च कुदृष्टय' इति मनु'

कुद्दाल पु०न० कु भूमिमुद्दलयति उद्+दल-अण् शक०। कोविदारवृक्षे, काकनासायाञ्च, भूमिखननसाधनेऽस्त्रे (कोदाल) न०

कुनख पु० कुत्सितनखकारके रोगभेदे। तथानखयुक्ते जने त्रि०

कुनखिन् त्रि० कुनख+अस्त्यर्थे इनि। कुनखरोगयुक्ते सङ्कुचितनखयुक्ते जने च। [कारके त्रि०।

कुनट पु० कुत्सितं नटति नट अच्। श्योनाकवृक्षे। कुत्सितनाट्य

कुनटी स्त्री० कौ नटति अच् गौरा० ङीष्। मनःशिलायाम्

कुनली स्त्री० कौ पृथिव्यां नलइव गौरा०ङीष्। वकवृक्षे।

कुनाशक स्त्री० कुं नाशयति नश-णिच्-ण्वुल्। दुरालभायाम्

कुन्च वक्रणे अनादरे च भ्वा०पर०सक०सेट्। कुञ्चति अकुञ्चीत्

कुन्त पु० कु भूमिं उनत्ति उन्द-त शक०। गवेधुकायां (गड़गड़े) धान्ये, प्रासाख्यायुधे, भल्ले च।

कुन्तल पु० कुन्तं कुन्ताद्याकारं लाति ला-क। केशे पानपात्रे लवे, हस्ते च। जनपदभेदे ब०व०।

कुन्तलवर्द्धन पु० कुन्तलान् वर्द्धयति वृध-णिच् ल्यु। भृङ्गराजे तद्रससेवनेन हि केशवृद्धि।

कुन्ति पु० कम-क्तिच् पु०। देशभेदे। युधिष्ठिरादिमातरि स्त्री० वा ङीप्। सा च शूरसेनराजस्यौरसी पृथानाम्नी कन्या अपुत्राय कुन्तिभोजाय पित्रा अपत्यत्वाय दत्ता।

कुन्थ क्लेशे क्लेषे च क्र्यादि०पर०अक०सेट्। कुथ्नाति अकुन्थीत्

कुन्द पु० कु-भूमिं दायति द्यति वा दै दो-वा क नि० इम्। (कुंद) पुष्पवृक्षभेदे कुन्दुरुनामगन्धद्रव्ये भ्रमियन्त्रे, (कुंद) कुवेरस्य निधिभेदे, करवीरवृक्षे च।

कुन्दुरु पु० कु भूमिमन्ति जत्वादित्वात् नि०। सुगन्धिद्रव्यभेदे

कुन्दुरुकी स्त्री० कुन्दुरुरिव प्रतिकृति कन् गौरा०। शल्लकीवृक्षे

कुप आच्छादने इदित् वा चुरा०उभ०पक्षे भ्वादि०पर०सक०सेट् कुम्पयति ते कुम्पति अचुकुम्पत् त अकुम्पीत्।

कुप द्युतौ चुरा०उभ०अक०सेट्। कोपयति ते अचूकुपत् त।

कुप कोपे दिवा०पर०अक०सेट्। कुप्यति अकुपत् अकोपीत्।

कुपाणि त्रि० कुत्सितः पाणिरस्य ब०। वक्रहस्ते।

कुपिन्द पु० कुप-किन्दच्। तन्तुवाये।

कुपीलु पु० कुत्सित पीलु । काकेन्दौ (कुचला) [दिविन्दिते
कुपूय त्रि० कुत्सितं पूयते पूय विसरणे अच् । आत्माचारा
कुप्य न० गुप क्यप् नि० । स्वर्णरूप्याभ्यामन्यस्मिन् तैजसादौ उपधातौ (टस्ना) इति ख्याते धातौ च ।

कुब इदित् स्तृतौ वा० चुरा०उभ० पक्षे भ्वा०पर० सक० सेट् । कुम्बयति ते कुम्बति अचुकुम्बत् त अकुम्बीत् ।

कुबे(वे)र पु० कुम्बति ध । एरक् नलोपश्च । यक्षराजे नन्दीवृक्षे च । कुत्सितं वेरं देहोऽस्य । 'कुत्साया क्षितिशब्दोऽयं शरीरं वेरमुच्यते। कुबेरः कुशरीरत्वात् इत्यमर्षवधोषयम् । कुत्सितशरीरे न०। मन्दे त्रि०। [पाटलावृक्षे,लताकरञ्जे च

कुबे(वे)राक्षी स्त्री०कुबे(वे)रस्याक्षीवाक्षि पुष्पमस्या षच् समा०।

कुब्ज पु० ईषत् उब्जमार्जवमस्य शक०। खड्गे, अपामार्गे च । 'हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक् । क्रुद्धो वायुर्यदा कुर्यात्तदा तं कुब्जमादिशे'दित्युक्तलक्षणरोगवति जने (कुजो) त्रि०

कुब्जक पु० कुब्ज+कन् । कुब्जे । महाकण्टे पुष्पप्रधाने वृक्षे च तत्पुष्पे न०। 'अशोकात् पुष्पबाहुल्य तु सेवतीपुष्पमुत्तमम् । सेवतीपुष्पबाहुल्यात् कुब्जक पुष्पमुत्तममिति भारविकम् ।

कुमार क्रीडौ अद०चुरा०उभ०सक० सेट् । कुमारयति ते अचुकुमारत् त ।

कुमार पु० कुमारयति क्रीडति, कुत्सितो मारो यस्मात्, कौ मारयति दुष्टान् वा । शुके पक्षिणि कार्त्तिकेये,शाखोटे युवराजे, अश्वचारके, सिन्धुनदे, वरुणवृक्षे, पञ्चवर्षीये, बालके च । स्त्रियां ङीप् ।

कुमारभृत्या स्त्री० भृ क्यप् ६त० । प्रसवकाले गर्भिण्याः परिचर्यायाम् । 'कुमारभृत्याकुशलैरिति रघु ।

कुमारिका स्त्री० कुमार+वयसि प्रथम इति ङीप् ततः स्वार्थे कन् । पञ्चवर्षीयायाम् अविवाहितायां कन्यायाम् नवमल्लिकावृक्षे, भारतवर्षस्य खण्डभेदे च 'वर्णव्यवस्थितिरिहैव कुमारिकाख्ये इति सिद्धान्तशिरोमणि ।

कुमारी स्त्री० कुमार+ङीप् । नवमल्लिकायाम, घृतकुमार्यां नदीभेदे अपराजितायां बन्ध्याकर्कोट्यां स्थूलैलायां वरुणपुष्पे 'सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयत' इति स्मृत्युक्तायां द्वादशवर्षीयायाम् अनूढायां कन्यायाम्, श्यामापक्षिणि च । [अचुकुमालत् त ।

कुमाल क्रीडौ अद०चुरा०उभ०सक०सेट् । कुमालयति ते

कुमालक पु० कुमाल-ण्वुल । सौवीरदेशे ।

कुमुद् न० कौ मुदि मोदते मुद क्विप् । कैरवे, रक्तोत्पले च । कृपणे, अप्रीते च त्रि०।

कुमुद न०कौ भूमौ मोदते मुद क । कैरवे, कह्लारे, (कोइ) श्वेतोत्पले च । वानरभेदे, दैत्यभेदे, कर्पूरे च पु० ।

कुमुदबान्धव पु० ६त० । चन्द्रे तस्य कुमुदप्रकाशकत्वेन तद्बान्धवत्वम् एव तद्वाचकशब्दयोऽप्यत्र कर्पूरे च ।

कुमुदा स्त्री० कौ भूमौ मोदते मुद क टाप् । (पाना) वारिपर्ण्याम् गाम्भारीवृक्षे, शालपर्णीवृक्षे धातकीवृक्षे,कट्फले च।

कुमुदाभिख्य न० कुमुदस्येवाभिख्या शोभा यस्य । रजते ।

कुमुदिनी स्त्री० कुमुदानां समूह इनि। कुमुदसमूहे। अस्त्यर्थे इनि । कुमुदयुक्तपुष्करिण्यादौ कुमुदलतायाञ्च ।

कुमुद्वत् त्रि० कुमुदानि प्रायाण्यस्मिन् ड्मतुप् मस्य व । कुमुदबहुलदेशे । स्त्री० ङीप् । कुमुद्वत्याम ।

कुम्भ पु० कु भूमि कुत्सितं वा उम्भति उम्भ पूरणे अच् शक०। घटे, हृद्रोगभेदे, हस्तिशिर उभयभागस्थपिण्डद्वये, 'तैः किल मत्तकरीन्द्रकुम्भकुहरे इति प्रसन्नराघवम् । कुम्भकर्णस्य पुत्रे, वेश्यापतौ, प्राणायामाङ्गे श्वासरोधके चेष्टाभेदे,'दश द्रोणा भवेत् खारी कुम्भस्तु द्रोणविंशतिरित्युक्ते परिमाणभेदे' भाण्डं दशभ्यः कुम्भेभ्योऽप्यधिकमिति श्रुतिः । ज्योतिषप्रसिद्धे मेषावधिके एकादशराशौ च । गुग्गुलौ, त्रिवृति च न० ।

कुम्भक पु० कुम्भ इव कायति निश्चलतया प्रकाशते कै क । "श्वासरोधने हित्वा निरोधः कुम्भकः स्मृतः" इत्युक्ते श्वासप्रश्वासत्यागेन प्राणवायोर्निरोधरूपे प्राणायामाङ्गे योगशास्त्रादौ प्रसिद्धे व्यापारे ।

कुम्भकर्ण पु० कुम्भ इव कर्णोऽस्य । रावणानुजे राक्षसभेदे

कुम्भकार पु० कुम्भं करोति कृ,अण उप० । जातिभेदे कुक्कुभपक्षिणि च ।

कुम्भकारिका स्त्री० कुम्भ-कृ ण्वुल् । कुलत्थायाम (कुलत्थकलाइ)

कुम्भकारी स्त्री० कुम्भ+कृ-अण् ङीप्। मन शिलायां, कुलत्थाञ्जने कुम्भकारपत्न्याञ्च ।

कुम्भतुम्बी स्त्री० कुम्भाकारा तुम्बी । (गोललाउ) अलाबुभेदे

कुम्भयोनि पु० कुम्भो योनिरुत्पत्तिस्थानं यस्य । अगस्त्यमुनौ कुम्भयोनेर्महौजस इति रघु । द्रोणाचार्ये, द्रोणपुष्प्याञ्च । कुम्भसम्भवादयोऽप्यत्र । [पाकस्थाने (कुमारशाला) ।

कुम्भशाला स्त्री० कुम्भस्य पाकशाला ६त० । कुम्भार-

कुम्भाण्ड पु० कुम्भाकारं अण्डं । कुष्माण्डे, बाणासुरमन्त्रिणि च गौरा० ङीष् कुम्भाण्डी स्त्री० कुष्माण्डे।

कुम्भिका स्त्री० कुम्भ+अल्पार्थे ठन् । (पाना) वारिपर्ण्याम् पाटलावृक्षे, द्रोणपुष्पे च ।

कुम्भिन् पु॰ कुम्भ+अस्त्यर्थे इनि। हस्तिनि, कुम्भीरे गुग्गुलौ च।

कुम्भिल पु॰ कुम्भ+अस्त्यर्थे इलच्। चौरे शालमत्स्ये, श्लोकार्थचौरे, श्याले च।

कुम्भी स्त्री॰ कुम्भ-अच् गौरा॰ ङीष्। उखायां, पाटलावृक्षे, वारिपर्ण्याम्, पुन्नागे, गणिकारिकायां, कट्फले च।

कुम्भीपाक पु॰ कुम्भ्यां तैलघटे पाको यस्मिन्। 'परत्र यातुधानास्तत्र तैले यत्रोपरन्धयन्ति स कुम्भीपाक' इत्युक्तलक्षणे नरकभेदे।

कुम्भीर पु॰ कुम्भिनं हस्तिनमपीरयति ईर-अण्। जलजन्तुभेदे नक्रे।

कुम्भीरमक्षिका स्त्री॰ कुम्भीरप्रधाना मक्षिका शाक॰ त॰। (कुमीरे पोका) कीटभेदे।

कुर शब्दे तुदा॰ पर॰ अक॰ सेट्। कुरति अकोरीत्।

कुरङ्कर पु॰ कुरं शब्दं करोति कृ-अच् ट॰ मुम्। सारसपक्षिणि।

कुरङ्ग पु॰ कौ रङ्गति रङ्ग-अच्। 'कुरङ्ग ईषत्ताम्रः स्यात् हरिणाकृतिको महान्' इत्युक्तलक्षणे मृगभेदे मृगमात्रे च।

कुरङ्गम पु॰ कौ रङ्गं मिमीते मा-ड। हरिणभेदे।

कुरण्ट पु॰ कुर्य्यते शब्द्यते कुर-अण्टक्। पीतझिण्ट्याम् स्वार्थे कन्। अत्रैवार्थे।

कुरर पु॰ काले कुङ-शब्दे क्ररन्। उत्क्रोशपक्षिणि।

कुररी स्त्री॰ कुरर ङीष्। कुररपक्षिस्त्रियां, मेष्याञ्च।

कुरल पु॰ कुर-कलच्। कुररपक्षिणि अलकरूपकेशेषु च।

कुरव पु॰ अल्पमकरन्दत्वात् कुत्सितो रवो यत्र। रक्तझिण्ट्याम्, करवके, सितमन्दारे च। कुत्सितशब्दे, तत्॰। तद्वच्छब्दयुक्ते त्रि॰। तत्र स्वार्थे कन् तत्रैवार्थेषु (कुरुवि) इति ख्याते पुष्पवृक्षे। ''कुरवकस्तवक अतिपहियो''ति माघः।

कुरवक पु॰ ईषत् रौति रु शब्दे संज्ञायां कुन् ''एवक्''। रक्तझिण्ट्याम् पीतझिण्ट्याञ्च।

कुरुविन्द पु॰ कुरून् विन्दति विद-श मुचादित्वात् नुम्। मुस्तायां, कुल्माषे, दर्पणे, हिङ्गुले च। पद्मरागमणौ न॰।

कुरुविल्व पु॰ कुरुषु बिल्व इव। पद्मरागमणौ (माणिक)

कुरुविस्त पु॰ कुरुषु विस्त। चतुस्तोलकमिते स्वर्णे।

कुरुवृद्ध पु॰ कुरूणां जनपदानां राज्ञां तद्राजस्य तद्धितस्य लुक् तेषु कुरुषु वृद्ध। भीष्मे।

कुरूप्य न॰ ईषत् रूप्यं शुभ्रत्वेन सादृश्यात्। रङ्गनामके धातौ।

कु(कू)र्द क्रीडायां भ्वा॰ आत्म॰ अक॰ सेट्। कु(कू)र्दते अकु(कू)र्दिष्ट

कु(कू)र्दन न॰ कु(कू)र्द-ल्युट्। क्रीडायाम्।

कुर्पर पु॰ कुर-क्विप् कुर् पिपर्त्ति पॄ-अच् कर्म॰। जानुनि, कफोणौ च।

कुर्पास पु॰ न॰ कुर्परे अस्यते आस्ते वा अस-घञ्। स्त्रीणां कञ्चुलिकायां (काचुली) स्वार्थे कन्। अत्रैवार्थे।

कुर्वत् त्रि॰ कृ शतृ। कर्मकरे भृत्ये, कारके च।

कुर्वद्रूप पु॰ कुर्वत् फलोन्मुखं रूपं यस्य। बौद्धमतसिद्धे फलजननाय योग्ये धान्यादौ बीजे।

कुल बन्धे संहतौ च भ्वा॰ पर॰ अक॰ सेट्। कोलति अकोलीत्।

कुल न॰ कुल-क। वंशे सजातीयगणे, देहे, गृहे, देशे, तन्त्रोक्ते जीवादौ, मध्यमकुलजन्म कल्पमानायां भूमौ च। ''दशौ कुलानि भुञ्जीत'' इति मनुः। कुले भवे त्रि॰। शिल्पिकुलप्रधाने पु॰।

कुलक न॰ कुल-अच् संज्ञायां कन्। पटोले, एकवाक्यतापन्नपद्यादिश्लोकसमुदाये च। वल्मीके काकतिन्दुके, कुलश्रेष्ठे च पु॰।

कुसुमायुध पु० कुसुममायुधमस्य । कामदेवे । [मदोच ।

कुसुमासव न० कुसुमस्य तद्रसस्यासवम् । पौष्पे मधुनि, तज्जाते

कुसुमेषु पु० कुसुमान्येषवो यस्य । कामदेवे । [पुष्पसमूहे ।

कुसुमोच्चय पु० कुसुमानामुच्चय समूहो यत्र । स्तवके । ६त०

कुसुम्भ न० कुस-उम्भ । पुष्पप्रधानशाके (कसुम) "कुसुम्भ नालिकायाकं वार्त्ताकुमिति स्मृति । स्वार्थे क तमण्डलौ ।

कुसृति स्त्री० कुत्सिता सृति सृ-क्तिन् । शाठ्ये ।

कुस्तुभ पु० कु भूमिम् स्तम्भाति स्तुम्भ-अच् नलोप नि० । विष्णौ, समुद्रे च ।

कुस्तुम्बुरु न० कुत्सित तुम्बति तुबि अर्द्दने उरु नि०-रुट् । धन्याके

कुस्म(स्स्म) कुदृष्टौ दर्शनेच चुरा० आत्म० सक० सेट् । कुस्म(स्स्म)यति अचुकुस्म(स्स्म)त । [अचुकुहत ।

कुह विस्मापने अद० चुरा० आत्म० सक० सेट् । कुहयते

कुह अव्य० किम्+ह-कु तिहोरिति कादेश । कुत्रेत्यर्थे

कुहक न० कुह क्वुन् । इन्द्रजालमायया अन्यथास्थितस्य वस्तुनोऽन्यथादर्शने । तद्युक्ते त्रि० ।

कुहन न० स्मयत् यत्नेन हन्यते हन-कर्मणि अप् । मृद्भाण्डे देवद् यत्नेन हन्ति कर्त्तरि अच् । सर्पे, चौरे च । कुं भूमिं हन्ति खनति अच् । मूषिके । कुह-युच् टाप् । दम्भ-चर्य्यायां स्त्री० । ईर्ष्यालौ त्रि० ।

कुहर पु० कु हरति हृ अच् । नागभेदे । कुह विस्मापने रान् या का छिद्रे । कर्णे, कण्ठे कण्ठशब्दे समीपे च न०

कुहलि पु० कुत्सित हलति हल इन् । ताम्बूले (पान)

कुहा स्त्री० कुह अच् । कुम्भटिकायां कटुकायाञ्च ।

कुहु (हू) स्त्री० कुह कु वा ऊङ् । नष्टेन्दुकलायामावास्यायाम्, कोकिलालापे च तत्र हि चन्द्रविरोधि कुहुरव' इति 'कुहूरिति कुहूरवध्वनिभिदिति चोदर ।

कुहूकण्ठ पु० कुहूरिति मन्द्र कण्ठो यस्य । कोकिले ।

कुहूरव पु० कुहूरिति रवो यस्य । कोकिले । कुहूशब्दादेर्वाच्य

कुहेलिका स्त्री० कुत्सित हेलयति ण्वुल् । कुज्झटिकायाम् ।

कू आर्त्तस्वर तुदा० आत्म० अक० सेट् कुटादि । कुवते अकुविष्ट

कू शब्दे क्र्यादि० उभ० अक० सेट् प्वादि० । कुनाति कुनीते अकावीत् अकविष्ट ।

ककुद पु० एतन्नाम्नाथ ऋषिकन्यादातरि ।

कूचिका स्त्री० कू क्वुन्, स्वार्थे कन् । तूलिकायाम् । कन्भावे वा ङीष् । कूचीत्यप्यत्र ।

कूज शब्दे भ्वा० पर० अक० सेट् । कूजति अकूजीत् ।

कूजित न० कूज-क्त । पक्षिशब्दे अव्यक्तशब्दे च 'मधुरकोमलकान्तपदावलिकलकलकूजितकुञ्जकुटीरे' इति जयदेव ।

कूट पु० कूट अच् कर्मणि घञ् वा । अगस्त्यमुनौ । राशौ पु० स्त्री० । निश्चले, धातुदारिद्र्ये, अशोभने (नेहार) लौह मुद्गरे, दम्भे, मायायां, यथार्थस्याच्छादने अद्रिशृङ्गे, तक्रे, फालाधारे लाङ्गलाङ्गे, मृगबन्धनहेतौ यन्त्रे, भग्नशृङ्गवृषे, पुरद्वारि च पु० । स्वार्थे कन् फाले । सीतायां कन् । मस्तके शृङ्गनामगन्धद्रव्ये च पु० ।

कूट अपमाने दानाभावे च चुरा० आत्म० सक० सेट् । कूटयते अचुकूटत-त । [कूटयति ते अचुकूटत्-त ।

कूट दाहे मन्त्रणे प्रच्छादने च अद० चुरा० उभय० सक० सेट्

कूटकार्षापण पु० कर्म० । मिथ्याभूतरौप्यादिमुद्रायाम्

कूटकृत् पु० कूट मिथ्याभूत करोति क क्विप् तुक् च । कायस्थे । कितवे त्रि० । कलहादिपाकस्थाने (पोयान) ।

कूटपालक पु० कूट मृत्तिकास्तूपं पालयति ण्वुल् । कुलाले ।

कूटयन्त्र न० कूटेन कृतं यन्त्रम् । आमिषादिदानेन मृगपक्षि-धारणार्थं पातित यन्त्रे ।

कूटशाल्मलि पु० कूट मिथ्याभूत शाल्मलि । रक्तशाल्मलौ

कूटसङ्क्रान्ति स्त्री० 'अर्द्धरात्रे व्यतीते तु यदा सङ्क्रमते रवि । सा ज्ञेया कूटसङ्क्रान्तिरित्युक्ते रर्द्धरात्रौ चरं राक्षसनरसङ्क्रारे ।

कूटसाक्षिन् त्रि० कर्म० । साक्ष्ये मिथ्याभिधायिनि ।

कूटस्थ त्रि० कूटोऽयोधनवत् निश्चल यथा तथा तिष्ठति स्था-क । एकरूपतया सर्वकालस्थायिनि परिणामादिकार्यान्तरशून्ये आत्मादौ, ब्रह्मणि च । व्याघ्रनखाख्य गन्धद्रव्ये पु० ।

कूटागार न० कर्म० । द्यूतागारे, चन्द्रशालिकायाम् (चिलाघर) क्रीडागृहे च । [मये यक्षभेदे ।

कूटायुध न० कर्म० । अन्तर्गुप्तनिशितास्त्रे यष्टिकाष्ठादि

कूटार्थभाषा स्त्री० कूटार्थस्य कल्पितार्थस्य भाषा कथा । प्रबन्धकल्पनारूपायां कथायाम् ।

कूड घनीभावे तुदादि० पर० अक० सेट् । कूडति अकूडीत ।

कूण सङ्कोचे अद० चुरा० उभ० अक० सेट् । कूणयति ते अचुकूणत् त ।

कूण सङ्कोचे चुरा० आत्म० अक० सेट् । कूणयते अचुकूणत ।

कूणि त्रि० कूण इन् । रोगादिना सङ्कुचितहस्तकरादौ जने

कूप दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कूपयति ते अचुकूपत्-त ।

कूप पु० कुत्सिता ईषत् वा आपो यत्र अच् समा०, कुवन्ति मण्डूका अस्मिन् कु-पक् दीर्घश्च वा । एव नयते उदा

भारे, गर्त्ते च । तत संज्ञायां कन् । नौकादौ गुणाधारे (मास्तुल) काष्ठमये स्तम्भे । [रोमाञ्चे ।

कूपाङ्क(ङ्ग) पु० कूपकारोद्धचिह्नं कूपाकारमङ्गं यस्मिन् ।

कूपार पु० कुं पृथिवीं पिपर्त्ति पूरयति अण् पृषो० दीर्घः । समुद्रे

कूपी स्त्री० कूप-अच् गौ० ङीष् । स्नेहादिधारणार्थे चर्म्ममये पात्रभेदे

कूर्च्च पु०न० कूर्च्यते कुर-चट् नि० दीर्घः । भ्रुवोर्मध्ये, स्थिते लोमोच्चये, श्मश्रुणि, कैतवे, दम्भे, मयूरपुच्छे, कुशमुष्टौ, अङ्गुष्ठाङ्गुलिमध्यस्योपरिभागे, अङ्गुष्ठे, शीर्षे, आसनभेदे, तन्त्रोक्ते बीजभेदे च (हुम्) । [द्वयोरप्यत्र ।

कूर्च्चशिरस् न० ६त० अस्थिस्कन्धे (गड्डा) । [शेखरा

कूर्च्चशीर्ष पु० कूर्चं श्मश्रु तद्वत् शीर्षमस्य । नारिकेले । कूर्च्च

कूर्च्चिका स्त्री० कूर्च+इवार्थे ठन् । (छोरसा) दुग्धविकारे, सूचिकायां, तूलिकायाम् कुट्मले, कुञ्चिकायाञ्च द्रव्यमार्जनसाधने दूर्ध्वे,-(कुचि) तृणगुच्छे च ।

कूर्पास पु० कुर्पासवत् चर्म्मम् ।

कूर्म्म पु० कुत्सितः कौ वा ऊर्म्मिर्वेगो यस्य पृ० । कच्छपे, 'उन्मीलने स्मृतः कूर्म्म' इत्युक्ते देहस्थे वायुभेदे च ।

कूर्म्मचक्र न० कूर्म्माकारं चक्रम् । ज्योतिषोक्ते कृषिकर्म्मोपयोगिनि, तन्त्रोक्ते जपादिकर्म्मोपयोगिनि च कूर्म्माकारे चक्रभेदे

कूर्म्मपुराण न० कूर्म्मेण कूर्म्मावतारेण भगवता उक्तम् पुराणम् । अष्टादशसु पुराणेषु मध्ये पुराणभेदे ।

कूर्म्मपृष्ठक न० कूर्म्मस्य पृष्ठमिव इवार्थे कन् । शरावे (सरा) ।

कूल आवृतौ भ्वा० पर० सक० सेट् । कूलति अकूलीत् ।

कूल न० कूल अच् । नद्यादेर्जलसमीपस्थाने तीरे, स्तूपे, सैन्यपृष्ठे च

कूलक पु० कूल ण्वुल् । कृमिपर्वते, वल्मीके स्थाने । (उपरदीपि)

कूलङ्कष पु० कूलं कषति कष-खच् मुम् च । समुद्रे । नद्यां स्त्री०

कूवर पु०न० कूङ् शब्दे कुटादि वरच् । रथस्य चक्राणाम युक्ते काष्ठे युगन्धरे कवचे च । रथे त्रि० ।

कूष्माण्ड पु० कुत्सिता उष्मा अण्डेषु बीजेषु यस्य । (कुमडा) लताभेदे गणदेवताभेदे च । [illegible] ।

कृ कृतौ स्वा० उभ० सक० अनिट् । करति ते अकार्षीत् अकृत ।

कृ करणे तना० उभ० सक० अनिट् । करोति कुरुते अकार्षीत् अकृत । कृत्रिम । [अकृत ।

कृ वधे स्वादि उभ० सक० अनिट् । कृणोति कृणुते अकार्षीत्

कृक पु० कृ बा० कक् । गले ।

कृकण पु० कृ इति कणति कण शब्दे अच् । (कयर कक्कर) पक्षिणि क्षुधाकारके देहस्थे वायुभेदे च ।

कृकर पु० कृ इति करोति कृ-ट । क्षुधाकारे देहस्थे वायौ ।

कृकलास पु० कृक गलं लासयति अण् । सरटे (कांकलास) पक्षिणि । [मयूरे, सरटे च ।

कृकवाकु पु० कृकेण वक्ति वच-परिभाषणे ञुण् कुक् । कुक्कुटे,

कृकाटिका स्त्री० कृक कण्ठमटति अट ण्वुल् टाप् कापि अत इत्वम् । ग्रीवायामुन्नतदेशे ।

कृच्छ्र न० कृत रक् छोऽन्तादेश । कष्टे, दुःखे, तत्कारणे-पापे, कष्टदायके प्राजापत्यादिव्रते, मूत्रकृच्छ्ररोगे च । तद्वति त्रि० ।

कृत छेदे तुदा० पर० सक० सेट् मुचादि । कृन्तति अकर्त्तीत् कर्त्तिष्यति कर्त्स्यति कृत्त ।

कृत वेष्टे रुधा० पर० सक० सेट् । कृणत्ति कृन्त अकर्त्तीत् ।

कृत न० कृ क्त । 'चत्वार्य्याहुः सहस्राणि वर्षाणान्तु कृतं युग'मिति मनूक्ते दिव्यमानेन चतुःसाहस्रमितवर्षे, मानुषमानेन १७२८०००मितवर्षे, सत्ययुगे, पर्य्याप्ते, अलमर्थे, फले च । रचिते त्रि० ।

कृतक न० कृत-कुन् । विडलवणे । कल्पिते, मिथ्याकल्पिते च त्रि ।

कृतकृत्य त्रि० कृतं कृत्यं कर्त्तव्यं येन । कृतार्थे समाप्तकार्य्ये धन्ये विदुषि च ।

कृतक्षण त्रि० कृतः क्षणः समयो येन । लब्धावकाशे ।

कृतघ्न त्रि० कृतं हन्ति हन क । कृतोपकारस्य जनस्य अपकारे प्रवर्त्तमाने 'कृतघ्ने नास्ति निष्कृति'रिति पुराणम् ।

कृतच्छिद्रा स्त्री० कृतं छिद्रं यस्याः । कोषातकीलतायाम् ।

कृतज्ञ त्रि० कृतं कृतोपकारं जानाति ज्ञा-क । कृतोपकारस्मर्त्तरि प्रत्युपकारके । कुक्कुरे पु० ।

कृतधी त्रि० कृता सम्पादिता धीर्येन । शास्त्राभ्यासमंस्कृतान्तःकरणे, स्थिरचित्ते, 'कृतधी किं प्रभाषेते'ति गीता ।

कृतप्रणाश पु० कृतयोः सुकृतदुष्कृतयोर्भोगमन्तरेण प्रणाशः । कृतहानौ ।

कृतम् अव्य० कृत अस्तु । अलमर्थे, निषेधे च ।

कृतमाल पु० कृता माला अस्य । आरग्वधे (सोन्दाल) कर्णिकारे च

कृतलक्षण त्रि० कृतानि लक्षणान्यस्य । गुणैः प्रख्याते ।

कृतवर्म्मन् पु० हृदिकात्मजे यादवे क्षत्रियभेदे ।

कृतश्रम त्रि० कृतः श्रमो येन । संजातक्लान्ते ।

कृतवीर्य्य पु० कृतं वीर्य्यमनेन । चन्द्रवंश्ये कार्त्तवीर्य्यार्जुनजनके नृपभेदे । वीर्य्यान्विते त्रि० ।

कृतविद्य त्रि० कृता अभ्यस्ता विद्या येन । [illegible] ।

कृतसापत्निका स्त्री० कृता सपत्नी यया कप् [illegible] अत इत्वम् । अध्यूढायां स्त्रियां [illegible] ।

**कृतस्वर** पु० कृत स्वरो यत्र । स्वर्णोत्पत्तिस्थाने स्वर्णाकरे ।

**कृतहस्त** त्रि० कृत अभ्यस्त हस्तो बाणादित्यागमोक्षणलाघव-रूपा हस्तशिक्षा येन । सुशिक्षितशरमोक्षणविद्ये जने ।

**कृताकृत** न० कृत कार्य्यमकृत कारणं च समा० द्व० । कार्य्य-कारणयोः । कर्म्म० । कृते अकृते च होमादौ । अतएव अल्पविशेषस्य मन्त्रस्य कृताकृतविद्धयाय होमादौ वरणम्

**कृताञ्जलि** पु० कृतोऽञ्जलिरिव पत्रसङ्कोचो येन । लज्जालु-वृक्षे । संपुटीकृतहस्ते त्रि० ।

**कृतात्मन्** पु० कृत शिक्षित संस्कृतो वा आत्माऽन्तःकरणं यस्य । शिक्षितचित्ते, शुद्धान्तःकरणे च ।

**कृतात्यय** पु० कृतस्य कर्म्मजन्यभोगस्यात्ययोऽवसानम् । भोग विना कृतकर्मनाशे 'कृतात्ययेऽनुशयवान्' इति शारीरकसूत्रम्

**कृतान्त** पु० कृत अन्तो विपर्य्ययनाशो निश्चयो विषयपरिच्छेदो वा येन । सिद्धान्ते । कृतो नाशो येन । दैवे, पापे यमे च ।

**कृतान्न** न० कृतं पक्वञ्च तदन्नञ्च । लड्डुकादौ पक्वान्ने, 'कृतान्नमुदकं स्त्रिय' इति स्मृति ।

**कृतार्थ** त्रि० कृत अर्थः प्रयोजन येन । कृतकार्य्ये ।

**कृतास्त्र** त्रि० कृत शिक्षितमस्त्र येन । शिक्षितास्त्रे ।

**कृति** स्त्री० कृ-क्तिन् । पुरुषप्रयत्ने, कर्त्तृव्यापारे, विंशत्यक्षर-पादके छन्दोभेदे च । [क्ति, निपुणे, साधौ, कृतार्थे च ।

**कृतिन्** त्रि० कृतमनेन इष्टादित्वादिनि । पण्डिते, योग्ये, पुण्य-

**कृत्त** त्रि० कृत क्त । छिन्ने, वेष्टिते च ।

**कृत्ति** स्त्री० कृत क्तिन् । चर्म्मणि, भूर्जपत्रे च ।

**कृत्तिका** स्त्री० कृत-क्तिन् संज्ञायां कन् । अश्विन्यवधिके तृतीये नक्षत्रे । [युक्तकाले क्षुतौ जाते । चन्द्रे ।

**कृत्तिकासुत** पु० कृत्तिकाया सुत । स्कन्दे, कृत्तिकानक्षत्र-

**कृत्तिवासस्** पु० कृत्तिश्चर्म वासो यस्य, कृत्ति वस्ते वस असुन् वा । शिवे ।

**कृत्य** न० कृत क्यप् । कार्य्ये व्याकरणोक्तेषु तव्यत्तव्यानीयर्यत्ण्यत्केलिमर्क्येषु प्रत्ययेषु पु० । कर्त्तव्ये त्रि० ।

**कृत्यविद्** त्रि० कृत्य कर्त्तव्य वेत्ति विद्-क्विप् । कार्य्यज्ञे, विधिज्ञे, कृत्यविदित्युवाचेति रघु । [देवभेदे च ।

**कृत्या** स्त्री० कृ क्यप् टाप् । क्रियायाम् अभिचारक्रियाजन्ये,

**कृत्रिम** न० कृ क्त्रि मप् च । सिंहलवणे, काचलवणे, तुरुष्क-नामगन्धद्रव्ये, रसाञ्जने च । मिथ्यके द्वादशविधपुत्रान्तर्गते पुत्रभेदे च पु० । क्रियया निष्पन्नमात्रे त्रि० ।

**कृत्स्न** न० कृत-क्स्न । सर्वे, जले, कुक्षौ च । समग्रे त्रि०

**कृन्तन** न० कृत-ल्युट् । नि० सुम्च । छेदने, 'कृन्तन नखकेशानां दन्तधावनस्पते' रिति स्मृति ।

**कृप** कल्पने भ्वा० आत्म० लुङि लुटि लृटि लृङि च उभ० द्युतादि अक० वेट् । कल्पते । अकल्पत् अकल्पिष्ट अक्लृप्त । कल्प्तासि कल्पितासे कल्प्तासे कल्प्स्यति कल्पिष्यते ।

**कृप** दौर्बल्ये अद० चुरा० उभ० अक० सेट् । कृपयति ते अचिकृपत्-त ।

**कृप** युतौ चित्रीकरणे वा चुरा० पक्षे भ्वादि० पर० । कल्पयति ते कल्पति अचीकॢपत् त अकल्पीत् ।

**कृप** पु० कृप-क । शरद्वत पुत्रे द्रोणश्यालके कृपाचार्य्ये ।

**कृपण** पु० कृप क्युन् । कृमौ । मन्दे, क्षुद्रे च 'कृपणा फल-हेतव' इति गीता । दीने, 'कार्पण्यदोषोपहतस्वभाव' इति गीता अदातरि च त्रि० । [पक्षेच्छायाम् ।

**कृपा** स्त्री० कृप-अङ् । दयायां फलनिरपेक्षतया दीनजनानु-

**कृपाण** पु० कृपां नुदति नुद-ड । खड्गे । ङीप् । कृपाणी अप्यत्र । छुरिकायाम्, कर्त्तर्याञ्च ।

**कृपालु** त्रि० कृपा लाति ला-डु । कृपायुक्ते ।

**कृपी** स्त्री० द्रोणाचार्य्यस्य पत्न्याम् शरद्वतो दुहितरि ।

**कृपीट** न० कृप-कीटन् । उदरे, तोये च ।

**कृपीटयोनि** पु० कृपीटस्य जलस्य योनि । वह्नौ 'आपो वा अग्नेरस्मेराप इति श्रुतेरस्य जलयोनित्वम् ।

**कृमि** पु० क्रम इन् सम्प्रसारणञ्च । कीटात् सूक्ष्म-जन्तौ । तज्जातायां लाक्षायां, उदरजातकीटयुक्तरोगे च ।

**कृमिकण्टक** पु० कृमिरिव कण्टकोऽस्य । विडङ्गे उडुम्बर त्रिवृतायाञ्च । [क । कोषस्थे (रेशमकीटे) ।

**कृमिकोषोत्थ** न० कृमे कोषात् उत्तिष्ठते उत्पद्यते उद्-स्था-

**कृमिघ्न** पु० कृमि हन्ति हन क । विडङ्गे, भल्लातकौ, कोलकन्दे, भल्लातके च । हरिद्रायाम स्त्री० टाप् । धूपपत्रायां स्त्री० ङीप्

**कृमिज** न० कृमिभिर्जन्यते जन कर्मणि ड । अगुरुणि चन्दने । कृमितोजाते त्रि० । लाक्षायां स्त्री० टाप् ।

**कृमिफल** पु० कृमय फलेऽस्य । उडुम्बरे ।

**कृमिशैल** पु० कृमीणां शैल इव । वल्मीके ।

**कृमीलक** पु० कृमीन् ईरयति जनयति ईर-ण्वुल् रस्य लः । वनमुद्गे । [अकर्शीत् ।

**कृश** तनूकरणे दिवा० पर० सक० सेट् । कृश्यति अकृशत्-

**कृश** त्रि० कृश-क्त नि० । अल्पे, सूक्ष्मे च ।

**कृशाङ्गी** स्त्री० कृशमङ्गमस्याः । प्रियङ्गुवृक्षे । कृशदेहे त्रि०

**कृशानु** पु० कृश-आनुक् । वह्नौ चित्रकवृक्षे च ।

**कृशानुरेतस्** पु० कृशानौ वह्नौ रेतोऽस्य । शिवे । देव्या मोहनसमये शिववीर्य्यस्याग्नौ प्रक्षेप कृतोऽग्निभः

कार्त्तिकेयो जात इति पुराणकथा अनुसन्धातव्या ।

कृष आकर्षणे विलेखने च तुदा० आत्म० सक० अनिट् ।
 कृषते । अकृक्षत अकृष्ट ।

कृष आकर्षणे विलेखने च भ्वा० पर० सक० अनिट् । कर्षति
 अक्राक्षीत् अकार्क्षीत् अकृक्षत् ।

कृषक पु० कृष क्वुन् । फाले कृषौ । कर्षके त्रि० ।

कृष(श)(स)र पु० तिलतण्डुलसम्पाक कृ(श)(स)सर,परिकीर्त्तित
 इत्युक्ते तिलमिश्रिते पक्के तण्डुलादन्ने ।

कृषि स्त्री० कृष इक् । वैश्यवृत्तिभेदे भूमिकर्षणकर्मे शस्योत्पा-
 दनव्यापारे । कर्म्मणि इक् । भूमौ ।

कृषिजीविन् त्रि० कृष्या जीवति जीव णिनि । स्वयमस्वयं
 वा कृतया कृषिवृत्त्या जीविनि ।

कृषीवल त्रि० कृषिरस्त्यस्य वलच् दीर्घश्च । कर्षके ।

कृष्टपच्य त्रि० कृष्टे क्षेत्रे स्वयमेव पच्यते पच क्यप् । धान्यादौ

कृष्ण पु० कृष-नक् । भगवतोऽवतारभेदे वासुदेवे देवकी
 नन्दने । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
 तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इत्युक्ते परब्रह्मणि
 वेदव्यासे अर्ज्जुने मध्यमपाण्डवे च । कृष्णवर्णत्वात् काके
 कोकिले करमर्द्दके (करमचा) वृक्षे नीले वर्णे च तद्वति
 त्रि० । कालागुरुणि अशुभकर्म्मणि च न० । द्रौपद्यां,
 नीलीवृक्षे, कणायां, द्राक्षायां, नीलपुनर्नवायाम्, कृष्ण-
 जीरके, गाम्भार्य्यां कटुकायाम, राजसर्षपे, पर्पट्यां,
 काकोल्यां सोमराज्याञ्च कृष्णवर्णत्वात् स्त्री० टाप् ।
 नीलाञ्जने, लौहे मरिचे च पु० ।

कृष्णकलि पु० कृष्णा इव चूडाल कलि कलिकाऽस्य ।
 स्वनामख्याते पुष्पप्रधाने वृक्षे । [त्रि० ।

कृष्णकाय पु० कृष्णः कायो यस्य । महिषे । कृष्णवर्णतनुयुक्ते

कृष्णगन्ध पु० कृष्णः उग्रो गन्धोऽस्य । शोभाञ्जनवृक्षे ।

कृष्णगर्भ पु०कृष्णवर्णोगर्भोऽस्य । कट्फले । [ख्याते पुष्पवृक्षे ।

कृष्णचूडा स्त्री० कृष्णस्य चूडा इव चूडाऽस्य । स्वनाम-

कृष्णचूर्ण न० कृष्णस्य चूर्णम् । लौहमले (लोहार गु) ।

कृष्णजटा स्त्री कृष्णा जटा यस्याः । जटामांस्याम् ।

कृष्णजीरक पु०कर्म्म० । कृष्णवर्णजीरके (कालजीरे)

कृष्णद्वैपायन पु० द्वीपे भव फञ् कर्म्म० । वेदव्यासे तस्य
 पराशरात् यमुनाद्वीपे एव जन्मेति पुराणम् ।

कृष्णधत्तू(धत्त्)र पु० कर्म्म० (कनकधुतरा) वृक्षभेदे ।

कृष्णपर्णी स्त्री० कृष्णं पर्णमस्याः । कालतुलसी) कृष्णतुलस्याम

कृष्णपक्ष पु० कर्म० । प्रतिपदाद्यमावस्यान्ताम पञ्चदश

तिथिषु चन्द्रह्रासकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः" इत्युक्ते
 मासार्द्धे काले । [रम्य । करमर्द्दे ।

कृष्णपाक पु० पच्यते इति पाकः फलं कृष्णं कृष्णवर्णं पाको

कृष्णपाकफल पु० कृष्णपाकं फलमस्य । करमर्द्दे ।

कृष्णफल पु० कृष्णं पाकावस्थायाम फलमस्य । करमर्द्दे,
 सोमराज्यां स्त्री० टाप् । [कटुकायाम् ।

कृष्णभेद पु० कृष्णोवर्णेन भेदश्छेद अस्ताऽस्य । वा ङीप् ।

कृष्णमुद्ग पु० कर्म्म० । (कालमुग) मुद्गभेदे ।

कृष्णरुह स्त्री० कृष्णं यथा रोहति रुह क । जतुकालतायाम्

कृष्णलवण न० कर्म्म० । सौवर्च्चलवणे । (कालानोण) ।

कृष्णलक पु० कृष्णं वर्णं लाति गृह्णाति ला क स्वार्थे कन् ।
 गुञ्जाफलतस्याऽर्द्धकृष्णत्वात्तथात्वम् 'पञ्चकृष्णलकोमाष'इति मनु

कृष्णला स्त्री०कृष्णं वर्णमर्द्धफले लाति ला क टाप । गुञ्जायाम्

कृष्णलौह न० कर्म्म० । अयस्कान्ते ।

कृष्णलोहित पु० कृष्णः सन् लोहितः वर्णोवर्णेनेति समा० ।
 रक्तकृष्णमिश्रितवर्णे । तद्वति त्रि० ।

कृष्णवक्त्र पु० कृष्णं वक्त्रमस्य । वानरे ।

कृष्णवर्ण पु० कृष्णो वर्णोऽस्य । राहौ ग्रहे । कृष्ण श्चासौ
 वर्ण । शूद्रे । न० । कृष्णवर्णवति त्रि० ।

कृष्णवर्त्मन् पु०कृष्णं वर्त्म धूमप्रसाररूपगतिस्थानमस्य । वह्नौ,
 राहौ ग्रहे, चित्रकवृक्षे च । कृष्णमपवित्रं वर्त्माचरणं यस्य ।
 दुष्कर्मकारके त्रि० ।

कृष्णवल्लिका स्त्री० कर्म्म० । जतुकालतायाम् ।

कृष्णवल्ली स्त्री० कर्म्म० । कृष्णतुलस्याम् कर्कट्याञ्च ।

कृष्णबीज पु० कृष्णं बीजमस्य । रक्तशिग्रौ । कालिङ्गे न० ।

कृष्णवृन्त स्त्री० कृष्णं वृन्तमस्याः । पाटलावृक्षे माषपर्ण्याञ्च ।
 स्वार्थे कन् कापि अत इत्वम् । गाम्भार्य्याम् ।

कृष्णशा(सा)र पु० कृष्णवर्णः शारः (सारः) शबलश्च
 वर्णो वर्णेनेति स० । कालसारमृगे ।

कृष्णशालि पु० कर्म० (कालधान) धान्यभेदे ।

कृष्णशिम्बिका स्त्री० कर्म० । काकाण्डाम् ।

कृष्णशिग्रु पु० कर्म० । कृष्णशोभाञ्जने (कालसजना) ।

कृष्णशृङ्ग पु० कृष्णं शृङ्गमस्य । महिषे ।

कृष्णसर्षप पु० कर्म० । (राइ सर्षा) राजसर्षपे ।

कृष्णसार पु० कृष्णः सारोऽस्य । शिंशपावृक्षे (शिशु)

कृष्णस्कन्ध पु० कृष्णः स्कन्धोऽस्य । तमालवृक्षे ।

कृष्णागुरु न० कर्म० । कालागुरुणि, "कृष्णं गुरुणाधिकं तत्
 लौहवत् वारि मज्जति" इत्युक्तलक्षणे काष्ठे ।

केशरञ्जन पु० केशान् रञ्जयति रञ्ज-णिच् ल्यु । भृङ्गराज-वृक्षे (भीमराज)

केशराज पु० केशा राजन्तेऽनेन घञ् । भृङ्गराजे (भीमराज)

केश(स)रिन् पु० केश(स)रा सन्त्यस्य इनि । सिंहे, अश्वे पुन्नाग-वृक्षे नागकेशरवृक्षे, बीजपूरकवृक्षे हनुमत्पितरि वानरभेदे च

केशरूपा स्त्री० केशस्येव रूपमस्याः । वन्दाकवृक्षे (परगाछा)

केशव पु० केशौ ब्रह्मरुद्रौ सर्वेश्वरावपि अनुकम्प्यतया वाति वा-ड केश केशिनं दर्पाद्यापाच वाति हिनस्ति वा-क वा । विष्णौ । 'यस्मात् त्वयैव दुष्टात्मा हतः केशी जनार्दन ! तस्मात् केशवनाम्ना त्वं लोके ख्यातो भविष्यसीत्युक्तो' । 'अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः सर्वज्ञाः केशवं तस्मात् मां प्राहुर्द्विजसत्तमा' इत्युक्ते सूर्यांशवति परे श्वेत च । केश+प्रशस्त्ये व । प्रशस्तकेशवति त्रि० ।

केशवर्द्धिनी स्त्री० केशान् वर्द्धयति वृध णिच् णिनि । सहदेवीलतायाम् ।

केशवेश पु० केशस्य वेश । कबरीबन्धने । [सहदेवीलतायाम् ।

केशारुहा स्त्री० केशा आरोहन्त्यनया रुह घञर्थे क ।

केशिक त्रि० प्रशस्त केशोऽस्त्यस्य ठन् । प्रशस्तकेशयुक्ते जने

केशिका स्त्री० केशिन इव कायति प्रकाशते कै-क । शता-वरीवृक्षे । [वति । विष्णौ, दैत्यभेदे, सिंहे च पु० ।

केशिन् त्रि० प्रशस्ता केशा सन्त्यस्य केश+इनि । प्रशस्तकेश-

केशिनिसूदन पु० केशिनं निसूदयति हिनस्ति नि+सूद-णिच्-ल्युट् । कृष्णे केशिहादयोऽप्यत्र ।

केश्य न० केशाय हितं केश+यत् । कृष्णागुरुणि । भृङ्गराजे पु०

केसर न० के जले सरति सृ अच् । हिङ्गौ, नागकेशरपुष्पे कासीसे, स्वर्णे च । नागकेसरवृक्षे, तुरङ्गस्कन्धस्थे केशे सिंहस्कन्धस्थजटायां पुन्नागवृक्षे, बकुलवृक्षे च पु० । किञ्जल्के पु०न० ।

कै शब्दे भ्वा० पर० अक० अनिट् । कायति अकासीत् ।

केकयी स्त्री० केकयानां देशानां राजा तस्यापत्यम् अञ् ङीप् । दशरथपत्न्यां भरतमातरि । [केकयदेशनृपे ।

कैकेय पु० केकय+राजनि+अञ् नि० यात यस्य इयि ।

कैकेयी स्त्री० कैकेयस्यापत्यं स्त्री अण् । भरतमातरि दशरथपत्न्याम्

कैटभ पु० कीटवत् भाति भा क स्वार्थे अण् । दैत्यभेदे ।

कैटभजित् पु० कैटभं जितवान् जि-भूते क्विप् तुक् च । विष्णौ । कैटभार्यादयोऽप्यत्र ।

कैटर्य्य पु० किञ्चन ईषदपि केटरति रा अनितिकाल्यात् क स्वार्थे ष्यञ् । निम्बे, भूनिम्बे कट्फले, पूतिकरञ्जे मदनवृक्षे च ।

कैतव न० कितवस्य कर्म अण् । कपटतायाम् स्वार्थे अण् । द्यूते, वैदूर्यमणौ, धुस्तूरपुष्पादौ च । [क्षेत्रसमूहे न०

कैदार पु० केदारस्य क्षेत्रस्यायम् अण् । केदारजे शस्यविशेषे ।

कैदार(रि)क न० केदार+समूहार्थे वुञ् ठञ् वा । क्षेत्रसमूहे

कैरव न० के जले रौति रु अच् अलुक् स० कैरवो हंसस्तस्य प्रियम् अण् । कुमुदे, शुक्लोत्पले, शत्रौ च ।

कैरविणी स्त्री० कैरव+इनि । कुमुदवन्दाये तद्युक्तलतायाञ्च ।

कैरवी स्त्री० कैरवाय हिता अण् । चन्द्रिकायाम् ।

कैरात पु० किरात इव शूर इवार्थे अण् बलवत्पुरुषे, किरातदेशे (स्वर्णदेशे) भव अण् । भूनिम्बे शम्बरचन्दने च न०

कैराल न० केरलदेशे भवम् अण् । हिङ्गे ।

कैलास पु० के जले लासो लसनं दीप्तिरस्य अलुक् स०, केलस स्फटिकस्तस्येव शुभ्र अण् केलीनां समूह अण् कैलं तेनास्यतेऽत्र अस घञ् वा । शिवकुबेरयो स्थाने ।

कैलासपति पु० ६त० । शिवे । [(जले) धीवरजातौ ।

कैवर्त्त पु० के जले वर्त्तते वृत-अच् अलुक् स० तत स्वार्थे अण् ।

कैवर्त्तमुस्तक पु० कर्म० । जलस्थितमुस्तके (केसुर) ।

कैवल्य न० केवलस्य शुद्धस्य उपाधिरहितस्य भाव । मोक्षे ।

कैशिक न० केशानां समूह ठक् । केशसमूहे । नाटकप्रसिद्धे वृत्तिभेदे स्त्री० ङीप् सा० द० प० ।

कैशोर न० किशोरस्य भाव अञ् । 'पौगण्ड' दशमावधि, कैशोरमापञ्चदशादि'त्युक्ताया किशोरावस्थायाम् ।

कैश्य न० केशानां समूह ष्यञ् । केशसमूहे ।

कोक पु० कोकते कुक आदाने अच् । चक्रवाके, वृके, ज्येष्ठ्याम् खर्ज्जूरीवृक्षे, दर्दुरे विष्णौ च ।

कोकनद पु० कोकान् चक्रवाकान् नदति नादयति अत्यर्थं शब्दार्थे नद-अच् । रक्तकुमुदे, रक्तपद्मे च । [नदति त्रि० ।

कोकनदच्छवि पु० कोकनदस्येव छविर्यस्य । रक्तवर्णे

कोकबन्धु पु० कोकयोश्चक्रवाकयोर्मेलनकारित्वात् बन्धुरिव । सूर्य्ये । [जातौ स्त्रियां टाप् ।

कोकिल पु० कुक आदाने इलच् । स्वनामख्याते विहगभेदे

कोकिलाक्ष पु० कोकिलस्याक्षीव रक्तवर्णं पुष्पं यस्य । (ताल माखना) वृक्षभेदे, करवीरभेदे इक्षुगन्धायाञ्च ।

कोकिलावास पु० ६त० । आम्रवृक्षे ।

कोकिलेक्षु पु० कोकिल इव कृष्ण इक्षु । (काजला इक्षुभेद ।

कोङ्कण पु० कोमिति कणत्यत्र । 'अथाभ्यर्क समारभ्य कोटिदेशस्य मध्यगे मलस्थानदेशो हि कोङ्कण परि-कीर्त्तित' इत्युक्ते देशभेदे ।

क्रन्दति अक्रन्दीत्। [अक्रदिष्ट क्रदयति।

क्रद वैकल्ये भ्वा० आत्म० अक० सेट् घटादि०। क्रदते

क्रन्द निरन्तरशब्दकरणे चुरा० अक० उभ० सेट्। प्रायेणाङ्-पूर्व्वं आक्रन्दयति ते आचक्रन्दत् त।

क्रन्दन न० क्रदि-भावे ल्युट्। शोकादिनाश्रुपातने। [क्रपयति

क्रप कृपायाम् भ्वा० अक० आत्म० सेट् घटादि। क्रपते अक्रपिष्ट

क्रम गतौ वा भ्वा० पक्षे दिवा० पर० सक० सेट्। क्रामति क्राम्यति अक्रमीत् क्रमित्वा क्रान्त्वा।

क्रम पु० क्रम-घञ्। नियतपूर्व्वापरभावरूपे विधाने, अनुक्रमे, शक्तौ, आक्रमणे, पादे च।

क्रमि पु० क्रम इन्। कृमिपदार्थे।

क्र(क्रि)मिघ्न पु० क्रमि हन्ति हन क। विडङ्गे।

क्रमिज क्रमेर्जायते जन ड। अगुरुचन्दने। लाक्षाया स्त्री०।

क्रमु पु० क्रम-उ। गुवाके (सुपारी)।

क्रमुक पु० क्रम उन् तत स्वार्थे कन्। भद्रमुस्तके ब्रह्म-दारुणि, गुवाके, पट्टिकालोध्रे च। [कन्। तत्रैवार्थे।

क्रमेल पु० क्रामति क्रम-विच् एलति अच् कर्म०। उष्ट्रे। स्वार्थे

क्रय पु० क्री-भावे अच्। मूल्यदानेन द्रव्यग्रहणे।

क्रयलेख्य न० ६त० "गृहं क्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरा-न्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते" इत्यु-क्तलक्षणे क्रयसूचकपत्रे (कबाला)।

क्रयविक्रयिक पु० क्रयविक्रयाभ्यां जीवति ठन्। वणिग्जने

क्रयिक पु० क्रयेण जीवति ठन्। वणिग्जने।

क्रय्य त्रि० क्रयाय क्रेतार क्रीणीयुरितिबुद्ध्या प्रसारितम् क्री-यत् क्रय्यस्तदर्थे इति नि०। क्रयनिमित्त हट्टे प्रसारिते द्रव्ये

क्रव्य न० क्लव-यत् रलयोरैकत्वात्। आममांसे।

क्रव्याद् पु० क्रव्यमत्ति अद क्विप्। राक्षसे, मांसादौ च।

क्रव्याद पु० क्रव्यमत्ति अद अण्। राक्षसे, सिंहे श्येने, शव-दाहकवह्नौ 'क्रव्यादोऽस्तमक्षयो' इत्यग्निनामधेये श्रवणात्

क्रशिमन् पु० कृशस्य भाव इमनिच। कृशत्वे।

क्रान्त पु० क्रम-क्त। अश्वे। आक्रान्ते अतिक्रान्ते व्याप्ते सङ्क्रान्ते च त्रि०। [अतीतद्रष्टरि।

क्रान्तदर्शिन् त्रि० क्रान्तमतीतं पश्यति णिनि। पण्डिते

क्रान्ति स्त्री० क्रम क्तिन्। आक्रमणे, गतौ खगोलमध्यस्थ-सूर्य्यगत्यर्थं तिर्य्यग्गोलरेखायाञ्च 'अयनादयनं यावत् कक्षा तिर्य्यक् तथा परा। क्रान्तिकक्षा तया सूर्य्यः सदा पर्य्येति भासयन्नि'त्युक्तकक्षायामपि।

क्रिमि पु० क्रम-इन् इत्त्वादि। कृमिशब्दार्थे। [ङीप्

क्रिमिघ्न पु० क्रिमि हन्ति हन-क। विडङ्गे। सोमराज्यां स्त्री०

क्रिया स्त्री० कृ-भावे श टाप्। आरम्भे, चेष्टायाम्, इन्द्रिय व्यापारे, पाकादिशब्दप्रवृत्तिनिमित्ते फुत्कव्यापाररूपे धातोरर्थे, निष्कृतौ, पूजायाम्, शिक्षायां, चिकित्सायां, करणे, गर्भाधानादिसंस्कारे, व्यवहारपादविशेषे च। 'सर्व्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिये'ति स्मृति।

क्रियापाद: पु कर्म०। व्यवहारे साक्षिलेख्यादिभि प्रतिज्ञा-तार्थसाधनरूपे तृतीये पादे 'पूर्व्वपक्ष स्मृत पूर्व्वोद्वितीय सोत्तर स्मृत। क्रियापादस्तृतीय स्यादिति स्मृत।

क्रियाफल न० ६त०। 'उत्पत्तिराप्तिर्विकृति संस्कृतिश्च चतुर्विधम्। क्रियाफलं प्राङ्कराचार्या' इत्युक्ते कर्मफले उत्प-त्त्यादौ, यागादिजन्ये पुण्यापुण्यादौ च।

क्रियायोग पु० योगार्थं क्रियमाणे देवाराधनादौ। 'यस्तु बाह्यार्थसंयोग क्रियायोग स उच्यते। प्रधानं कारणं योगो मुक्तेर्स्तु निरपेक्षतम। क्रियायोगस्तु योगस्य कारणं परम मतमि ति पुराणम्।

क्रियासमभिहार पु० सम्+अभि+हृ घञ्। ६त०। क्रि-याया पौन पुन्ये। क्रियासमभिहारेण विराध्यन्तं क्षमेत क इति माघ। [क्रीणाति क्रीणीते अक्रैषीत् अक्रेष्ट।

क्री क्रये (मूल्यदानेन द्रव्यग्रहणे) क्र्यादि० उभ० सक० अनिट्।

क्रीड खेलने भ्वा० पर० अक० सेट्। क्रीडति अक्रीडीत्।

क्रीडन न० क्रीड ल्युट्। परीहासे, क्रीडायाञ्च।

क्रीडा स्त्री० क्रीड अ। परीहासे खेलने च।

क्रीत पु० क्री-क्त। द्वादशपुत्रान्तर्गते 'क्रीणीयाद् यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्ये'त्युक्ते पुत्रभेदे। कृतक्रये वस्तुमात्रे त्रि०।

क्रीतानुशय पु० क्रीते अनुशय दुष्टत्वादिना पश्चात्तापो यत्र। अष्टादशविवादेषु 'क्रीत्वा मूल्येन य पण्य क्रेता न बहु मन्यते। क्रीतानुशय इत्येतद्विवादपदमुच्यते' इत्युक्ते विवादभेदे।

क्रुड बाल्ये दिवा० आ० अक० सेट्। क्रुड्यते। अक्रोडिष्ट।

क्रुञ्च् पु० क्रुन्च क्विप्। (कोंच) बकभेदे। जातित्वे ङीष् क्रुञ्ची।

क्रुञ्च पु० क्रुन्च कर्मणि घञ्। क्रौञ्चपर्व्वते। अच् टाप्। वीणाभेदे

क्रुध्(धा) स्त्री० क्रुध-सम्पद दित्वात् क्विप् वा टाप्। कामा-प्राप्तिहेतुके चित्तवृत्तिभेदे कोपे।

क्रुध कोपे दिवा० पर० अक० सोपसर्ग सक० अनिट्। क्रुध्यति अत्यमभिक्रुध्यति अक्रुधत्। [क्रौञ्

क्रुन्च गतौ, वक्रणेऽल्पीभावे च सक० पर० सेट्। क्रुञ्चति अक्रु-

क्रुन्थ कोपे क्षेपे च क्र्या०पर० अक० सेट् । क्रुन्थति अक्रुन्थीत्

क्रुश रोदने आक्रोशे च सक० भ्वा० पर०अनिट् । क्रोशति अक्रुक्षत् । [आहूते त्रि० ।

क्रुष्ट क्रुश-भावे क्त । रोदने रवे च । आङ्+कर्मणि क्त ।

क्रूर त्रि० कृत-रक् धातोः क्रू । कठिने, निर्दये, परद्रोहकारिणि, नृशंसे, उष्णे च । रक्तकरवीरे श्येनखगे, कङ्कपक्षिणि ज्योतिषोक्ते रविमङ्गलमन्दराहुकेतुरूपे ग्रहे, पूर्वात्रय-भरणीमघाख्ये नक्षत्रे च पु० ।

क्रूरराविन् पु० क्रूरशब्दं रौति रु णिनि । द्रोणकाके ।

क्रेय त्रि० क्री-यत् । क्रेतव्ये वस्तुमात्रे ।

क्रोड पु० न० क्रुड घञ् । अङ्के (कोल) । वराहे शूकरे च पु० । अश्वानामुरसि भुजान्तरे च स्त्री० टाप् । वाराहीकन्दे पु०स्त्री० ।

क्रोडाङ्घ्रि पु० क्रोडे अङ्घ्रिर्यस्य । कच्छपे ।

क्रोध पु० क्रुध-घञ् । परापकाराय चित्तवृत्तिभेदे, परानिष्टाभिलाषे, अनिष्टविषयद्वेषहेतुके चित्तवृत्तिभेदे च ।

क्रोधज पु० क्रोधात् जायते जन-ड । मोहे 'क्रोधात् भवति संमोह' इति गीता । 'पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टक' इत्युक्ते व्यसनभेदे च ।

क्रोधन पु० क्रुध-ल्यु । कोपयुक्ते, कोपशीले, तन्त्रोक्तेषु अष्टसु भैरवेषु भैरवभेदे, षष्टिवत्सरमध्ये ज्योतिषोक्ते 'रोगोपरवद्दुर्भिक्ष विरोधोवह्वमङ्कुल । क्रोधने विषमं सर्व' मित्युक्तफलके वत्सरभेदे च ।

क्रोश पु० क्रुश-घञ् । रोदने आह्वाने च । व्यस्तहस्तसहस्रमाने (कोश) क्रोश सहस्रद्वितयेन तथा'मिति लीलावती । मतान्तरे चतुःसहस्रमाने । [स्त्रियां क्रोष्ट्री ।

क्रोष्टु पु० क्रोशति क्रुश-तुन् । शृगाले । स्वार्थे कन् अत्रैवार्थे ।

क्रोष्टुकपुच्छिका स्त्री० क्रोष्टुकस्य पुच्छमिव पत्राण्यस्याः । (चाकुलिया) पृश्निपर्ण्याम् । [शृगाल्यां चाकुल्याञ्च ।

क्रोष्ट्री स्त्री० क्रुश तुन् तृज्वत् ङीप् । भूमिकुष्माण्डे, विदार्य्यां,

क्रौञ्च पु० क्रुञ्च+स्वार्थे अण् । (कोंचबक) बकभेदे कुररपक्षिणि, दैत्यभेदे, दधिसमुद्रेणावृते द्वीपभेदे, पर्वतभेदे च ।

क्रौञ्चदारक(ण) पु० क्रौञ्चं दैत्यं पर्वतं वा दारयति दृ णिच् ण्वुल् ल्युट् वा । कार्त्तिकेये स हि 'क्रौञ्चे क्रौञ्चो हतो दैत्य क्रौञ्चाद्रौ हेमचन्द्रे । स्कन्देन युद्धा सुचिरं चित्रमायी समापितः । स शैलस्तस्य दैत्यस्य ख्यातदितित्व कर्मणा । तेनतामगमत्तस्य नाम्ना क्रौञ्च' स उच्यते इति पुराणम् ।

क्रौञ्चादन न० क्रौञ्चानां बकभेदानामदनं भक्ष्यम् । मृणाले, (घेचु) चिञ्चोटके, पिप्पल्याञ्च । पद्मबीजे स्त्री० ।

क्लथ वधे वा चुरा०उभ०पक्षे भ्वा०पर०सक०सेट् घटादि० । क्लथयति ते क्लथति अचिक्लथत् अक्लाथीत् अक्लथीत् ।

क्लद रोदने अक०आह्वाने सक०इदित् पर०भ्वा०सेट् । क्लन्दति अक्लन्दीत् । [अक्लदिष्ट क्लदयति ते ।

क्लद वैकल्ये दि० आत्म० अक० सेट् घटादि० । क्लद्यते

क्लद रोदने भ्वा० उभ० इदित् अक० सेट् । क्लन्दति ते अक्लन्दीत् अक्लन्दिष्ट । [अचिक्लपत् त ।

क्लप अव्यक्तवाक्ये चुरा० उभ० अक० सेट् घटा० । क्लपयति ते

क्लम ग्लानौ दिवा०पर०अक०सेट् । क्लाम्यति अक्लमीत् । क्लमित्वा-क्लान्त्वा । क्लान्त । [मीत् । क्लमित्वा क्लमित० ।

क्लम ग्लानौ भ्वा० पर० अक० सेट् । क्लामति अक्लमत् अक्ल-

क्लम पु० क्लम-घञ् अवृद्धि । आयासे, श्रमे च । [क्लूता ।

क्लमथ पु० क्लम अथच् । आयासे । [रिष्ट क्लवयति क्लवित्वा ।

क्लव भये दिवा० आत्म० अक० सेट् घटादि० । क्लव्यते अक्ल

क्लान्त त्रि० क्लम-क्त । श्रमार्त्ते । [अक्लेदीत् अक्लेत्सीत् ।

क्लिद आर्द्रीभावे दिवा०पर०अक० वेट् । क्लिद्यति । अक्लिदत्-

क्लिद रोदने इदित् भ्वा०उभ०अक०सेट् । क्लिन्दति अक्लिन्दीत्

क्लिन्न त्रि० क्लिद क्त । आर्द्रे ।

क्लिश उपतापे दि० आत्म० अक० सेट् । क्लिश्यते । अक्लेशिष्ट क्लिशित्वा । क्लिशित्वा–क्लिष्ट । [अक्लिशत्

क्लिश विबाधे क्र्या० पर० सक० वेट् । क्लिश्नाति अक्लेशीत्-

क्लिशित त्रि०क्लिश-उपतापे क्त । क्लेशयुक्ते वा । इड्भावे क्लिष्टोऽप्यत्र

क्लीतक न० क्लीब क्विप् नि० वलोप क्ली तकति हसने अच् मधुके (यष्टिमधु) । [भीत्यामोमभौ ।

क्लीतकिका स्त्री० क्लीतक क्रयोऽस्त्यस्या ठन् वाच्यम् ।

क्लीब(व) मदे अप्रागल्भ्ये च भ्वा०आत्म०अक०सेट् । क्लीब(व)ते अक्लीबि(वि)ष्ट । [निष्कार्ये च ।

क्लीव(ब) पु०क्लीब(व)-अच् । नपुंसके, विक्रमहीने, धर्मकृत्यादौ,

क्लु गतौ भ्वा० आत्म० सक० सेट् । क्लवते अक्लविष्ट ।

क्लेद पु० क्लिद-घञ् । द्रवीभावे, चन्द्रे च ।

क्लेश वधे उपतापे भ्वा०आत्म० सक० सेट् । क्लेशते अक्लेशिष्ट

क्लेश पु० क्लिश-घञ् । दुःखे, रोगादौ, योगशास्त्रोक्तेषु अविद्याऽस्मितादिषु पञ्चसु । [कौन्तेये'ति गीता ।

क्लैव्य(ब्य) न० क्लीव(ब) भावे-ष्यञ् । निर्वीर्यत्वे 'मा क्लैब्यं गच्छ

क्लोमन् न० क्लुङ् गतौ मनिन् । 'अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहि शिरामूलं तृष्णास्थानं मतं

बुधैरित्युक्ते वाङ्गेर्मध्ये स्थानभेदे । [नेति चात्मार्थे ।
क्व अव्य० किम्+अ कादेश । कुत्रेत्यर्थे चिन्तनयो । क्वचित् क्वच
क्वण शब्दे भ्वा०पर०अक०सेट् । क्वणति अक्वाणीत् अक्वणीत
क्वण पु० क्वण अप् । वीणाया शब्दे ध्वनिमात्रे च ।
क्वथ निष्पचने भ्वा०पर०सक०सेट् । क्वथ त अक्वथीत् । [घ
क्वथित त्रि क्वथ क्त । अतिपक्वे व्यञ्जनादौ,दग्धमूत्रपाचनादौ
क्वाथ पु०क्वथ घञ् । दुःखे, द्रव्यमात्रस्यातिशये पाके ।
क्वाथोद्भव न० क्वाथादुद्भवति अच् । तुत्याञ्जने ।
क्षेल चालने गतौ च भ्वा०पर०सक०सेट । क्षेलति अक्षेलीत ।
क्षेलयति अचक्षेलत् । [अचक्षञ्जत् त ।
क्षज कृच्छ्रजीवने इदित् चुरा० उभ० अक० सेट् । क्षञ्जयति ते
क्षज वधे भ्वा०आ०सक०सेट् घटा० । क्षजते अक्षजिष्ट । क्षजयति
क्षञ्ज गतौ दाने च भ्वा०आ० इदित् सक० सेट् । क्षञ्जते
अक्षञ्जिष्ट । [अक्षणिष्ट ।
क्षण वधे तना०उभ सक०सेट् । क्षणोति क्षणुते । अक्षणीत
क्षण पु० क्षणोति दुःखम् क्षण अच् । उत्सवे, अवसर,मध्ये,
दशपलपरिमिते काले निमेषक्रियाचतुर्थभागे च ।
क्षणद पु० क्षण यात्रिकादिभ्यः शुभं वा ददाति दा क ।
गणके । जले न० । रात्रौ स्त्री० ।
क्षणप्रभा स्त्री० क्षण व्याप्य प्रभा यस्याः । विद्युति ।
क्षणभङ्ग पु० क्षणात् भङ्गो यस्य । ध्वंसनाभे, सर्वेषां भावय-
क्षानां प्रतिक्षणमन्यत्ववैलक्षण्यात्मकस्यावयवभङ्गस्य स्वी
कारो यस्मिन् मते तादृशे बौद्धादीनां मते ।
क्षणभङ्गुर त्रि० क्षणात् भज्यते भञ्ज कर्मकर्त्तरि घुरच् ।
क्षणेकनाश्ये वस्तुमात्रे ।
क्षणिक त्रि० क्षण व्याप्नोति ठन् । एकक्षणमात्रस्थायिनि
पदार्थे । यथा प्रथमक्षणे उत्पत्ति द्वितीयक्षणे स्थितिस्तृ-
तीयक्षणे नाश इति ते क्षणिका यथा बुद्ध्यादय इति तार्कि
काः । कार्यकारणक्षमयोर्भावानां सत्पदार्थाभिमतानामुत्प
त्तिद्वितीयक्षणे नाश इति बौद्धाः 'यत् सत्तत्क्षणिक'मित्युक्ते
क्षत न० क्षण भावे क्त । खड्गक्षुरादौ व्रणे । कर्मणि क्त ।
व्रणयुक्ते त्रि० ।
क्षतघ्न पु०क्षत हन्ति हन क । (कसेरोधा) क्षुपभेदे । लाक्षायाम्
क्षतज न० क्षतात् जायते जन ड । रुधिरे ।
क्षति स्त्री० क्षण क्तिन् । हानौ अपचय एवे च ।
क्षत्तृ पु० क्षद तृच् । शूद्रात् क्षत्रियायामुत्पन्ने सङ्कीर्णवर्णे
प्रतीहारे, सारथौ भुजिष्यापुत्रे नियुक्ते वेधसि च ।
क्षत्र पु० क्षद क्विप क्षत् ततस्त्रायते त्रै क । क्षत्रिये क्षत त्
त्रायत इत्युग्रः क्षत्रस्य शब्दः इति रघुः ।
क्षत्रबन्धु पु० क्षत्रस्य बन्धुरेव तत्कर्मकर्त्तृत्वाभावात् न तत्-
कर्त्ता । क्षत्रकार्याक्षमे निन्द्ये क्षत्रिये ।
क्षत्रिय पु० क्षत्रस्यापत्य घ । क्षत्रजाति राजन्ये क्षतत्र त्रायते
कर्म वेदाध्ययनसंयुतम् । दानादानबहिर्भूत स वै
क्षत्रिय उच्यते इत्युक्ते वर्णभेदे ।
क्षद् संवेषणे सौत०आत्म०सक०अनिट् । क्षदते अक्षत्त ।
क्षप क्षेपे अद०चुरा०उभ०सक०सेट् । क्षपयति ते अचक्षपत् त
क्षप सहने चुरा० इदित् उभ० सक० सेट् । क्षम्पयति ते
अचक्षम्पत् त ।
क्षप प्रेरणे चुरा०उभ०सक०सेट् । क्षपयति ते अचिक्षपत् त
क्षपणक पु० क्षपयति विषयराग क्षप ल्युट् स्वार्थ कन् ।
बौद्धसन्न्यासिनि । एव क्षपणक । माकाङ्क्षेत्युट ।
क्षपा स्त्री० क्षपयति चेष्टाम् क्षै-णिच् पुक् च अच् । रात्रौ ।
क्षपाकर पु० क्षपाया रात्रौ करो दीधितिर्यस्य । चन्द्रे स हि
रात्रौ सूर्यतेजसा दीप्यते ।
क्षपाट पु० क्षपायामटति अट-अच् । राक्षसे 'तत क्षपाटैः
पृथुपिङ्गलाक्षैरिति भट्टि । [क्षान्त ।
क्षम सहने भ्वादि०आत्म०सक०वेट् । क्षमते अक्षमिष्ट अक्षस्त
क्षम सहने दिवा० पर०सक०सेट् शमादि० । क्षाम्यति 'काम
क्षाम्यतु य क्षमीति माघ । अक्षमीत् ।
क्षम न० क्षम अच् । युक्ते । शक्ते, हिते क्षमायति च त्रि०
क्षमता स्त्री० क्षम+तल् । योग्यतायां शब्दनिष्ठे अर्थप्रकाशन
सामर्थ्ये च 'क्षमता च लिङ्गमि'ति मीमांसा ।
क्षमा स्त्री० क्षम अङ् । तितिक्षायाम्, 'बाह्ये वाध्यात्मिके चैव
दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा
क्षमा परिकीर्तिता,' 'आक्रुष्टोऽभिहतो वापि नाक्रोशेन्न
च हन्ति या । अदुष्टवाङ्मनःकायैस्तितिक्षुः सा क्षमा-
मतेति चोक्त लक्षणायाम् चित्तवृत्तौ, भूमौ च ।
क्षमिन् त्रि० क्षम-घिनुण् तच्छील । क्षमावति । 'काम क्षाम्य
तु य क्षमीति माघ ।
क्षय पु० क्षि-अच् । नाशे, ह्रासे, अपचये, कासरोगभेदे च
गृहे, निवासे, प्रलये च । ६०संवत्सरमध्ये 'देशभङ्गश्च दुर्भिक्षं
क्षये कथ्यते' मकारन्यूनप्रकाशके वत्सरभेदे, रविसंक्रान्ति
द्वययुक्तशुक्लप्रतिपदादिक अमावास्यान्ते मासे 'द्विसंक्रान्त
मास क्षय कार्तिकादौ' । 'सौरादारभ्य मासे स्तीयाम
मासौ द्विसंक्रान्तिकौ क्षयाख्य स्मृतौ गदिते च ।
क्षयथु पु० क्षि अथु (कासरोगे) ।

**क्षयनाशिनी** स्त्री॰ क्षयं कासं नाशयति नश-णिच्-णिनि। जीवन्तीवृक्षे। [क्षमा॰। कृष्णपक्षे।
**क्षयपक्ष** पु॰ क्षयस्य (चन्द्रस्य क्षयार्थं) पक्षः अवधानादिवत्
**क्षर** संचलने भ्वा॰ पर॰अक॰सेट्। क्षरति अक्षारीत्।
**क्षर** पु॰ क्षर-अच्। मेघे। 'कार्य्यकारणरूपन्तु नश्वरं क्षरमुच्यते' इत्युक्ते नश्वरे त्रि॰। 'क्षर सर्व्वाणि भूतानी'ति गीता। जले न॰। [क्षरति ते क्षलति अक्षलत् न अक्षालीत्।
**क्षल** शोधने वा चु॰उभ॰ पक्षे भ्वा॰पर॰सक॰ सेट्। क्षाल
**क्षव** पु॰ क्षु-अप्। क्षुते, (हाँचि) राजिकाभेदे च।
**क्षवक** पु॰ क्षव+स्वार्थे कन्। राजिकाभेदे, अपामार्गे च।
**क्षवथु** पु॰क्षु-अथुच्। क्षुते (हाँचि) [हि क्षुतं जायते।
**क्षवपत्रा** स्त्री॰क्षव॰ पत्रेषु यस्याः। द्रोणपुष्प्याम् यदाघ्राणे
**क्षात्र** न॰क्षत्रस्य कर्म्म भावो वा-अण्। 'शौर्य्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षात्रकर्म्म स्वभावज'मित्युक्ते क्षत्रियकर्म्मणि 'क्षात्रं द्विजत्वञ्च परस्परार्थ-मिति भट्टि'। [सामर्थ्ये तत्परलोकारपराङ्मुखे।
**क्षान्त** त्रि॰ क्षम क्त। सहिष्णौ केनचित्पीडनेऽपि सति
**क्षान्ति** स्त्री॰ क्षम-क्तिन्। क्षमायाम् सामर्थ्ये सत्यप्यपकारिणोऽप्यपकाराचिकीर्षायाम्।
**क्षाम** त्रि॰ क्षै-क्त तस्य म। क्षीणे, दुर्बले च।
**क्षार** पु॰ क्षर-ण। (क्षार) इति ख्याते रसे, लवणे, क्षारजाते काचे, भस्मनि, गुडे, धूर्त्ते च। टङ्कणे (सोहागा) यवक्षारे, विड्लवणे, सर्ज्जिकाक्षारे च न॰। [पिटके च
**क्षारक** पु॰क्षर-ण्वुल्। (जालि) नवकलिकावृन्दे पक्षिमत्स्यादि
**क्षारदला** स्त्री॰ क्षाराः दलान्यस्याः। चुक्रवास्तूकशाके।
**क्षारभूमि** स्त्री॰ क्षारयुक्ता भूमिः। 'अम्बुधिसमीपस्थभूमौ किमाश्चर्यं क्षारभूमौ प्रावदा यमदूतिकेत्युद्भट'।
**क्षारमृत्तिका** स्त्री॰ क्षारसंयुक्ता मृत्तिका। उषरस्थाने।
**क्षारित** त्रि॰ क्षर-णिच्-क्त। अपवादयुक्ते, ग्राम्यदोषे, स्रावित च
**क्षालित** त्रि॰ क्षल चु॰ क्त। निर्णिक्ते जलमध्यमार्जने च।
**क्षि** क्षये भ्वा॰ पर॰ अक॰ अनिट्। क्षयति अक्षैषीत्।
**क्षि** हिंसायां स्वा॰ पर॰ सक॰ अनिट्। क्षिणोति क्षिणुतः क्षिण्वः क्षिणुवः'। अक्षैषीत्। [अक्षैषीत्।
**क्षि** गतौ सक॰ निवासे अक॰ तुदा॰ पर॰ अनिट्। क्षियति
**क्षि** हिंसायां क्र्या॰ पर॰ सक॰ अनिट्। क्षिणाति अक्षैषीत्।
**क्षिण** हिंसायां तना॰ उभ॰ सक॰ सेट्। क्षिणोति क्षिणुते अक्षेणीत् अक्षेणिष्ट।
**क्षिति** स्त्री॰ क्षि-निवासे आधारे क्तिन्। भूमौ, भावे क्तिन् निवासे। क्षि-क्षये भावे-क्तिन्। क्षये, रोचनाख्यगन्धद्रव्ये च।
**क्षितिधर** पु॰ क्षितिं धारयति धृ-णिच् अच् उप॰स॰। पर्व्वते कूर्म्मवासुकिदिग्गजेषु च।
**क्षितिपति** पु॰ ६त॰। राजनि नृपतौ एवं क्षितीशादयोऽप्यत्र
**क्षितिरुह** पु॰ रोहति रुह-क ७त॰। वृक्षे।
**क्षितिवर्द्धन** पु॰ क्षितिं वर्द्धयति वृध-णिच् ल्यु। शवे 'करोमि क्षितिवर्द्धन'मिति भट्टि। [अक्षिप्त।
**क्षिप** प्रेरणे तुदा॰ उभ॰ सक॰ अनिट्। क्षिपति-ते अक्षैप्सीत्
**क्षिप** नोदने दिवा॰ पर॰ सक॰ अनिट्। क्षिप्यति अक्षैप्सीत्।
**क्षिपणि(णी)** स्त्री॰ क्षिप-अनि वा ङीप्। नौकादण्डे (दाड) शस्त्रे, वडिशे च।
**क्षिप्त** त्रि॰ क्षिप-क्त। प्रेरिते, त्यक्ते, विकीर्णे अवज्ञाते, रागद्वेषादिवशाद्विषयासक्ते चित्ते, वायुरोगयुक्ते च।
**क्षिप्र** न॰ क्षिप-रक्। ज्योतिषोक्ते नक्षत्रभेदे शीघ्रे च तद्वति त्रि॰
**क्षिप्रकारिन्** त्रि॰ क्षिप्रं करोति कृ-णिनि। (चालाक) शीघ्रक्रियाकारके।
**क्षिप्रपाकिन्** पु॰ क्षिप्रं शीघ्रं पच्यते णिनि। (गन्धभादिलिया) द्रुमभेदे। शीघ्रपाकवति त्रि॰।
**क्षिव** निरसने भ्वा॰ पर॰ सक॰ सेट्। क्षेवति अक्षेवीत्।
**क्षिव** निरसने दिवा॰ पर॰ सक॰ सेट्। क्षीव्यति अक्षेवीत्। क्षेवित्वा ष्ठ्यूत्वा। [अक्षेप।
**क्षी** हिंसायां भ्वा॰ उभ॰ सक॰ अनिट्। क्षयति-ते अक्षैषीत्
**क्षीज** अव्यक्तशब्दे भ्वा॰पर॰अक॰ सेट्। क्षीजति अक्षीजीत्
**क्षीण** त्रि॰ क्षि-क्त। दुर्बले, क्षामे च 'चतुर्द्दश्यष्टमे यामे क्षीणो भवति चन्द्रमा इति स्मृतिः।
**क्षीब(व)** मदे भ्वा॰आत्म॰अक॰ सेट् क्षीब(व)ते अक्षीबी(वी)त्
**क्षीब(व)** त्रि॰ क्षीब(व) क्त नि॰। मत्ते। [जले च।
**क्षीर** न॰ क्षी-सम्पादित्वात् क्विप् तामीरयति ईर-अण्। दुग्धे
**क्षीरकण्ठ** पु॰ क्षीरं कण्ठे यस्य। स्तनन्धये बालके। [क्षीरव
**क्षीरकन्द** पु॰क्षीरमिव कन्दोयस्य। क्षीरविदार्य्याम्,
**क्षीरकाण्डक** पु॰ क्षीरान्वितं काण्डं यस्य कप्। स्नुहीवृक्षे, अर्कवृक्षे च।
**क्षीरदल** पु॰ क्षीरं दले यस्य। अर्कवृक्षे।
**क्षीरनाश** पु॰ क्षीरं नाशयति नश-णिच्-अण्। करवीरवृक्षे (सेओडा) तत्पत्रादिनिर्यासयोगेन शीघ्रमेव दुग्धं दधिवत् घनीभवतीति तस्य दुग्धनाशकता।
**क्षीरपर्णी** स्त्री॰ क्षीरं पर्णे यस्याः ङीप्। अर्कवृक्षे।
**क्षीरवल्ली** स्त्री॰ क्षीरा क्षीरवती वल्ली। क्षीरविदार्य्याम्

स्वार्थे कन् अणोह्रस्व क्षीरवल्लिका अत्रैवार्थे ।
**क्षीरविकृति** स्त्री० ६त० 'दध्युष्ण पय पक्व यत् स्यात् या दधिकूर्चिकेत्युक्तायाम् । (क्षीरसा) दधिकूर्चिकायाम् ।
**क्षीरवृक्ष** पु० क्षीरप्रधानो वृक्ष । उदुम्बर राजादन्याम् ।
**क्षीरशर** पु० क्षीर शृणाति शॄ अच् । (छाना) आमिक्षायाम् ।
**क्षीरशाक** न० अपक्वमेव यदक्षीरशाक हि तत् पय ' इत्युक्ते नष्टे दुग्धे राजादने च । भूकुष्माण्डे स्त्री० ।
**क्षीरशुक्ल** पु० क्षीरमिव शुक्ल । शृङ्गाटके (पानिफल)
**क्षीरसार** पु० क्षीरस्य सार । नवनीते क्षीरसारमपनीय'त्यु क्तट (छाना) आमिक्षायाञ्च । [(फेनी) शर्कराफेने ।
**क्षीरहिण्डीर** पु० ६त० । दुग्धफेने । क्षीरमिव हिण्डीर
**क्षीराब्धि** पु० क्षीरस्य दुग्धरसस्याब्धि । क्षीरसमुद्रे एव क्षीरसागरादयोऽप्यत्र । [ स्त्री० ।
**क्षीराब्धिज** पु० क्षीराब्धौ जायते जन-ड । चन्द्रे । लक्ष्म्या
**क्षीरावी** स्त्री० क्षीरमवति अव-अण् ङीप् । दुग्धिकायाम् (दुधी)
**क्षीरिका** स्त्री० क्षीर+अस्त्यर्थे ठन् (क्षीरा) राजादन्याम् ।
**क्षीरिणी** स्त्री० क्षीर+अस्त्यर्थे इनि । तिक्तदुग्धाया मीत- दुग्धाया च क्षीरलतायाम् ।
**क्षीरिन्** पु० क्षीर+इनि । क्षुद्राम् वटे प्लक्षे, उदुम्बरे, अर्कवृक्षे, राजादने, सोमलतायाम् स्थालीवृक्षे च ।
**क्षीरिवृक्ष** पु० कर्म० । क्षीरयुक्तेषु न्यग्रोधाश्वत्थोदुम्बरपारिश- प्लवाख्येषु पञ्चसु वृक्षेषु ।
**क्षीरोद** पु० क्षीरमुदकमस्य उदकस्योदादेश । क्षीरसमुद्रे ।
**क्षु** क्षुतौ अदा० पर० अक० सेट् । क्षौति अक्षावीत् चुक्षाव । क्षुत । क्षुत्वा । क्षवथु । [दुर्गम'मिति माघ ।
**क्षुण्ण** त्रि० क्षुद क्त । अभ्यस्ते, विहते च 'अभीक्ष्णमक्षुण्णतयाति-
**क्षुत्** स्त्री० क्षु सम्पदा० क्विप् तुकच । (हाँचि) क्षुते ।
**क्षुत** न० क्षु क्त । नासात वायुनि सरवेग शब्दे । (हाँचि)
**क्षुद** पेषणे रुधा० उभ० सक० सेट् । क्षुणत्ति क्षुन्ते । अक्षु- दत् अक्षोदीत् अक्षोदिष्ट । ]मूलम्याहिमि च
**क्षुद्र** त्रि० क्षुद रक । नीचे कृपणे, क्रूरे, दरिद्रे, अल्पे,
**क्षुद्रकण्टकी** स्त्री० क्षुद्र कण्टक यस्या ङीष् । बृहत्याम् ।
**क्षुद्रकण्टिका** क्षुद्र कण्टक यस्या टाप् अत इत्वम् । कण्टकारिकालतायाम् ।
**क्षुद्रकम्बु** पु० कर्म० । शम्बूके । [(घुङ्गुर)
**क्षुद्रघण्टिका** स्त्री० घण्टेव कन् घण्टिका कर्म० । किङ्किण्याम्
**क्षुद्रजन्तु** पु० कर्म० । 'क्षुद्रजन्तुरनस्थि स्यादथवा क्षुद्रएव वा । शत वा प्रसृतौ येषा केचिदा नकुलादपी'त्युक्ते स्वल्पे सत्त्वे ।

**क्षुद्रजम्बू(म्बु)** स्त्री० कर्म० । भूमिजम्ब्वाम् ।
**क्षुद्रजीरक** न० कर्म० । कणजीरके, सुगन्धे च ।
**क्षुद्रघाली** स्त्री० कर्म० । कर्कटवृक्षे ।
**क्षुद्रधान्य** न० कर्म० । कङ्गुप्रभृतौ तृणधान्ये ।
**क्षुद्रपत्रा** स्त्री० क्षुद्र पत्र यस्या टाप् । चाङ्गेर्याञ्च (चुक्रो पालङ्ग) । ङीप् । वचायाम् ।
**क्षुद्रपनस** पु० कर्म० । लकुचे (मादार) ।
**क्षुद्रफल** पु० क्षुद्र फलमस्य । जीवनवृक्षे । कण्टकार्य्याम् अग्निदमन्या, भूमिजम्ब्वाञ्च स्त्री० टाप् ।
**क्षुद्रभण्टाकी** स्त्री० कर्म० । बृहत्याम् ।
**क्षुद्रमुस्ता** स्त्री० कर्म० । कसेरुकन्दे ।
**क्षुद्रवार्त्ताकिनी** स्त्री० कर्म० । कण्टकार्य्याम् ।
**क्षुद्रवार्त्ताकी** स्त्री० कर्म० । बृहत्याम् ।
**क्षुद्रशङ्ख** पु० कर्म० । शम्बूके । [त्रि०
**क्षुद्रशीर्ष** पु० क्षुद्र शीर्षमस्य । मयूरशिखावृक्षे स्वल्पशीर्षवति
**क्षुद्रशुक्ति** स्त्री० कर्म० । जलशुक्तिकायाम् । स्वार्थे कन तत्रैवार्थे
**क्षुद्रश्वास** पु० कर्म० । स्वल्पकासरोगे ।
**क्षुद्रसहा** स्त्री० सह अस्य क्षुद्रस सहा ६त० । सहदेव्याम् मार्जारगन्धायाञ्च ।
**क्षुद्रसुवर्ण** न० कर्म० । पित्तले । [ह्रस्वे टप् । अत्रैवार्थे ।
**क्षुद्रहिङ्गुली** स्त्री० कर्म० । कण्टकार्य्याम् । स्वार्थे कन् अणो
**क्षुद्रा** स्त्री० क्षुद रक् । वेश्यायाम्, कण्टकार्य्याम् सरघायां मक्षिकामात्रे, चाङ्गेर्याम्, हिंस्रायाम्, नटीकायाञ्च (गह- गड्डेभान । [कायाम् ।
**क्षुद्राग्निमन्थ** पु० कर्म० (छोटगणिआरी) स्वल्पगणिकारि-
**क्षुद्राम्लपनस** पु० अम्ल अम्लरस पनस कर्म० । लकुचे (डेयो) (मान्दार) । [लङ्क) स्वार्थे कन तत्रैवार्थे ।
**क्षुद्राम्ला** स्त्री० अम्ला अम्लरसा कर्म० । चाङ्गेर्याम् (चुक्रोपा-
**क्षुद्रेर्वारु** पु० कर्म० । गोपालकर्कट्याम् ।
**क्षुद्रोदुम्बरिका** स्त्री० कर्म० । काकोदुम्बरिकायाम् ।
**क्षुध** बुभुक्षायां दिवा० पर० सक० अनिट् । क्षुध्यति अक्षुधत् ।
**क्षुध्(धा)** स्त्री० क्षुध सम्पादित्वात् क्विप् वा टाप् । भोजनेच्छायाम्
**क्षुप** पु० क्षु-पक् । ह्रस्वशाखाशिफायुक्ते शाखोटादिद्रुमे, द्वारकापश्चिमदिक्स्थे पर्वतभेदे, राजन्यभेदे च ।
**क्षुब्ध** पु० क्षुभ क्त नि० । मन्थनदण्डे । क्षुभिते त्रि० ।
**क्षुभ** सञ्चलने भ्वा० आत्म० अक० सेट् । क्षोभते अक्षुभत् अक्षोभिष्ट-क्षुब्ध । क्षुभित । [अक्षोभीत् । क्षुभित ।
**क्षुभ** सञ्चालने क्या दिवा० प्र० अक० सेट् । क्षुभ्यति क्षुभ्नाति

सांख्याद्युक्ते प्रकृतिप्रेरके पुरुषे, ईश्वरे च।

**क्षौद्र** न० क्षुद्राभिः सरघाभिर्निर्वृत्तम् अण्। 'मक्षिका कपिला सूक्ष्मा क्षुद्राख्यास्तत्कृतं मधु। मुनिभिः क्षौद्र'मित्युक्तमित्युक्ते मधुनि।

**क्षौद्रज** न० क्षौद्राज्जायते जन-ड। मधुजाते (मोम) सिक्थके।

**क्षौद्रधातु** पु० कर्म०। माक्षिके मधुनि।

**क्षौद्रप्रिय** पु० क्षौद्रमिव प्रियं माधुर्यात्। जलमधूकद्रुमे ६त०। मधुप्रिये त्रि०।

**क्षौद्रेय** न० क्षुद्राभिः कृतम् ढक्। सिक्थके। (मोम)

**क्षौम** पु० न० क्षुमाया अतस्या विकारः अण्। अतसीवल्कलजाते वस्त्रे, दुकूले, शणजे वस्त्रे च। क्षु-मन् प्रज्ञादित्वादण् अट्टालिकायाम्। [न्यायाञ्च

**क्षौमी** स्त्री० क्षुमैव प्रज्ञाद्यण्। अतस्याम् क्षुमानिर्मितक-

**क्षौर** न० क्षुरेण निर्वृत्तम् अण्। क्षुरनिष्पाद्ये वपनादौ।

**क्ष्णु** तेजने अदा० पर० सक० सेट्। क्ष्णौति अक्ष्णावीत्।

**क्ष्मा** स्त्री० क्षमते भारं क्षम-अच् उपधालोपश्च। धरायाम्।

**क्ष्माभृत्** पु० क्ष्मां पृथिवीं बिभर्त्ति पालयति वा भृ-क्विप् तुक् च। नृपे, पर्वते च। भूधरादयोऽप्यत्र।

**क्ष्माय** विधूनने भ्वा० आत्म० सक० सेट्। क्ष्मायते अक्ष्मायिष्ट

**क्ष्मील** निमेषे भ्वा० पर० अक० सेट्। क्ष्मीलति अक्ष्मीलीत्।

**क्ष्विड** स्नेहे भ्वा० आत्म० अक० सेट्। क्ष्वेडते अक्ष्विडत् अक्ष्वेडिष्ट

**क्ष्विद** मोहने स्नेहे अक० भ्वा० आत्म० सक० सेट्। क्ष्वेदते अक्ष्विदत् अक्ष्वेदिष्ट। [अक्ष्विदत्

**क्ष्विद** कूजने दिवा० पर० अक० सेट्। क्ष्विद्यति अक्ष्वेदीत्-

**क्ष्विट** कूजने भ्वा० पर० अक० सेट्। क्ष्वेटति अक्ष्वेटीत्।

**क्ष्वेड** पु० क्ष्विड-अच्। पीतघोषाद्रुमे, विषे, वर्णात्मके ध्वनौ च घोषातकीपुष्पे न०। दुरासदे, कुटिले च त्रि०। [शलाकायाञ्च।

**क्ष्वेडा** स्त्री० क्ष्विड अच् टाप्। घोषातक्याम्, सिंहनादे वंश-

**क्ष्वेडित** न० क्ष्वेड-क्त। सिंहनादे।

**क्ष्वेल** चलने, गतौ सक० 'क्रीडायां च' अक० भ्वा० पर० सेट्। क्ष्वेलति अक्ष्वेलीत् णिचि लुङि अचिक्ष्वेलत्।

**क्ष्वेला** स्त्री० क्ष्वेल-अ। क्रीडायाम्।

## ख

**ख** पु० खर्व-ड। सूर्ये। इन्द्रिये, देहे, पुरे, शून्ये, अभ्रे, बिन्दौ, आकाशे, स्वर्गे, सुखे च न०।

**खक्ख** हासे भ्वा० पर० अक० सेट्। खक्खति अखक्खीत्

**खग** पु० खे आकाशे गच्छतीति गम-ड। सूर्ये, देवे, शरे, विहगे, वायौ, सूर्यचन्द्रादिषु ग्रहेषु च।

**खगगति** स्त्री० ६त०। 'डीनं प्रडीनमुड्डीनं संडीनं परिडीनकम्। विडीनमवडीनञ्चाभिडीनं डीनडीनकम्। गतागतमपतितं सम्पातं पक्षिणां गतिरित्युक्ते विहगगमने।

**खगप** पु० खगान् पाति पा-क। गरुडे खगपत्यादयोऽप्यत्र।

**खगस्थान** न० ६त०। द्रुमस्थे कोटरे। [श्येनविहगे।

**खगान्तक** न० अन्तयति अन्तं करोति णिच्-ण्वुल्। ६त०

**खगोल** पु० खं गोलः इव। भूगोलोपरिस्थिते मण्डलाकारे आकाशे तस्य संस्थितिमानविशेषो बृहदभिधाने द्रष्टव्य।

**खच** भूतौ उत्पत्तौ च क्र्या० पर० सक० सेट्। खच्ञाति अख-चीत्-अखाचीत्। [खचत् न।

**खच** बन्धने अद० चुरा० उभ० सक० सेट्। खचयति-ते अच-

**खचर** पु० खे आकाशे चरति चर-ट। राक्षसे स्त्रियां ङीप्। सूर्ये, वायौ, ग्रहे अश्वतरे च। आकाशगामिनि त्रि०।

**खचित** त्रि० खच क्त। बद्धे मयुक्ते च।

**खज** मन्थे भ्वा० पर० सक० सेट्। खजति अखाजीत्-अखजीत्

**खज** पङ्गुतायां भ्वा० इदित् पर० अक० सेट्। खञ्जति अखञ्जीत्

**खज** पु० स्त्री० खज अच्। दर्व्याम् (हाता) मन्थदण्डे च।

**खजाका** स्त्री० खज आक। दर्व्याम्। (हाता)

**खज्योतिस्** पु० खे आकाशे ज्योतिरस्य। खद्योते कीटे।

**खञ्ज(क)** पु० खजि गतिवैकल्ये अच् ण्वुल्। (खोंड़ा) पादविकले।

**खञ्जखेट** पु० खञ्ज इव खेटति अच्। खञ्जनविहगे।

**खञ्जखेल** पु० खञ्ज इव खेलति अच्। खञ्जनखगे। [वार्थे

**खञ्जन** पु० खञ्ज, ल्यु। स्वनामख्याते विहगे। स्वार्थे कन् तत्रै-

**खञ्जरीट** पु० खञ्ज इव ऋच्छति ऋ गतौ कीटन्। खञ्जनविहगे

**खट** काङ्क्षे भ्वा० पर० सक० सेट्। खटति अखाटीत्-अखटीत्

**खट** पु० खट-अच्। अन्धकूपे, कफे, टङ्के, तृणे लाङ्गले च।

**खटिक** पु० खट+ठन्। कुब्जपाणौ। (खड़ि) लेखनद्रव्ये स्त्री०। खटिका चिह्नोतीति नैषधम्। [धवलमृत्तिकायाञ्च

**खटिनी** स्त्री० खट+इनि लेखनद्रव्ये (खड़ी)। न पतति खटिनी

**खटी** स्त्री० खट-अच् गौरा ङीष्। (खड़ी) लेखनसाधनद्रव्ये

**खट्ट** वृतौ चुरा० उभ० सक० सेट्। खट्टयति ते अचखट्टत् त।

**खट्वा** स्त्री० खट-क्वन्। 'खटाभिः काष्ठखण्डैर्वा कृता खट्वेति' कथ्यते इत्युक्तायां शय्यायाम्।

**खट्वाका** स्त्री० क्षुद्रा-खट्वा अल्पार्थे कन् अभाषितपुंस्कत्वात् वा अत इत्त्वम्। स्वल्पखट्वायाम्।

**खट्वाङ्ग** पु० शस्त्रभेदे। खट्वाया अङ्गमिव। नृपभेदे, ईशायुधविशेषे, पृष्ठवंशे च। ६त० खट्वाया अङ्गे न०। खट्वाङ्गधर-

धारक इति बटुकशोलम्। [बटुकभेदये च।
खट्वाङ्गभृत् पु० खट्वाङ्गं बिभर्त्ति भृ क्विप् तुक् च। शिवे,
खट्वारूढ पु० खट्वा अम् आरुह-क्त नित्यस०। प्रमादवति।
खट्वाश्रिते। त्रि०। [अविखट्व।
खड मन्थे भञ्जने च भ्वा० आत्म० इदित् सक० सेट्। खण्डते
खड भेदे चुरा० उभ० सक० सेट्। खडयति ते अचीखडत् त।
खड न० खड-अच्। तृणभेदे (खड) पानान्तरे, भेदे च पु०
खडक्की स्त्री० खडक् इत्यव्यक्तशब्दं करोति कृ-ड गौ० ङीष्।
मध्यद्वारे (खिड्की)। [स्मृ ते लेखनद्रव्ये।
खडी स्त्री० खडि अच् नि० नलोप गौरा० ङीष्। खगाम
खड्ग पु० खडि-ग नि० नलोप। गण्डकाङ्के तद्वति गण्डकपशौ
च। (गण्डार) चोरनामगन्धद्रव्ये, असौ च। लौहे न०
खड्गकोष पु० ६त०। चर्म्मादिमये असिपिधाने (खाप) चर्म्मणि
(ढाल) खड्गावरके च। [खड्गकोषे (खाप) च
खड्गपत्र पु० खड्गस्य पत्रमिवाच्छादकम्। (ढाल) खड्गावरके
खड्गपिधान न० खड्ग पिधीयतेऽनेन। (खाप) खड्गकोषे।
खड्गिन् पु० खड्ग+अस्त्यर्थे इनि। गण्डारे। खड्गधारिजने त्रि०
खण्ड पु० खडि घञ्। भेदे 'खण्ड खण्डं ययुर्घ्नता' इति देवी-
माहात्म्यम्। विड्लवणे, इक्षुविकारे (खाड) च न०।
कर्म्मणि घञ्। एकदेशे पु० न०। [भेदे।
खण्डकर्ण पु० खण्डइव कर्णं कन्दोऽस्य। (शकरकन्द) आलु
खण्डकालु पु० खण्डइव कायति कै क कर्म्म०। (शकरकन्द)
आलुभेदे। [(कादवी)
खण्डधारा स्त्री० खण्डे एकदेशे धारा यस्याः। कर्त्तर्य्याम्
खण्डन न० खडि-ल्युट्। मर्द्दने, भेदने, छेदने, निराकरणे च
खण्डपरशु पु० खण्डयति खण्ड परशुरस्य। शिवे तच्छिष्ये
जामदग्न्ये च। खण्डपर्शुरप्यत्र।
खण्डिक पु० खण्ड+अस्त्यर्थे ठन्। कलाये, कङ्कभेदे, कक्षे च। क्रुद्धे
त्रि०। खण्डिकोपाध्याय शिष्याय चपेटं ददातीति भाष्यम्
खण्डित त्रि० खडि क्त। भेदिते छिन्ने, विप्रलब्धे च 'ज्ञातान्य
सङ्गविकृते खण्डितेर्ष्याकषायितेत्युक्तविधायां स्त्रियां स्त्री०
खण्डी स्त्री० खण्डयते गौरा०। वनमुद्गे।
खण्डीर पु० अपकृष्टा खण्डी सुष्ण्यादित्वात् र। पीतमुद्गे।
खतमाल पु० खे तमाल इव। धूमे, मेघे च। [अखदीत्
खद स्थैर्य्ये अक० वधे सक० भ्वा० पर० सेट्। खदति अखादीत्-
खदिर पु० खद किरच्। (खयेर) द्रुमभेदे इन्द्रे, चन्द्रे च।
खदिरपत्रिका स्त्री० खदिरस्येव पत्रमस्याः ङीप् तत संज्ञायां
कन् कापि ह्रस्व। अरिखदिरे लज्जालुलतायाम्। कनभावे
खदिरपत्रीत्यप्यत्रैव। [विना खदिरसारवेऽप्यत्र
खदिरसार पु० ६त०। खदिरद्रुमस्य निर्यासजे सारे (खयर)
खदिरिका स्त्री० खदिर खदिरमिवाऽस्त्यस्याः ठन्। लाक्षाया
तस्या हि खदिरतुल्यनिर्यास।
खदिरी स्त्री० खद-किरच् गौरा० ङीष्। लज्जालुलतायाम्
शाकभेदे (हाथजोडा) लतावाञ्च। [भेदे
खदिरोपम न० खदिर उपमा यस्य। (काटावावला) द्रुम
खद्योत पु० खे द्योतते द्युत-अच्। सूर्य्ये, कीटभेदे च (जोनाकपोका)
खधूप पु० खमाकाशं धूपयति धूप-अण्। (हाउइ) मण्डतौ
च 'मिश्रीडते सुसु खधूपानि ति भट्ट।
खन विदारे भ्वा० उभ० सक० सेट्। खनति अखानीत्-अखनीत्
अखनिष्ट खायात्-खन्यात्। [(कोडा) त्रि०
खनक पु० खन-वुन्। मूषिके, सन्धिचौरे च। भूमिदारके
खनि(नी) स्त्री० खन-इ वा ङीप्। धातूरत्नाद्युत्पत्तिस्थाने।
आकरे भूविदारणे च।
खनित न० खन क्त। (सोना) धातुभेदे।
खपुर पु० खमिन्द्रियमाकाशं वा पिपर्त्ति पृ क। गुवाकद्रुमे,
(सुपारी) भद्रमुस्तके, व्याघ्रनखे च। आकाशगत पुरे, घटे च
न०। अलसे त्रि०। [पिराम्(पाना)।
खमूली स्त्री० खे आकाशे भूमिमन्तरेणापि मूलमस्याः। वारि
खम्ब गतौ भ्वा० पर० सक० सेट्। खम्बति अखम्बीत्।
खर पु० ख उच्चविलमतिशयेनास्त्यस्य र खमिन्द्रियं राति रा क
वा रलयोरैक्यम्। गर्द्दभे, अश्वतरे राक्षसभेदे च 'खरत
खरदूषणाविति भट्टिः। कण्टकिदृक्षभेदे, काके, कङ्कविहगे,
कुररपक्षिणि, ६० संवत्सरमध्ये वत्सरभेदे रवे पार्श्वचरे,
तिग्मस्पर्शे च। तद्वति, कठिने च त्रि० 'खरविशदमभ्य-
वहार्य्य'मिति भाष्यम्। देवताडच्छे स्त्री० टाप्।
खरकाष्ठिका स्त्री० खरमस्य काष्ठ यस्याः। बलायामौषधौ
खरगन्धा स्त्री० खरो गन्धो यस्याः। नागबलायाम्। रामे च
खरघातन पु० खरस्तदरोग घातय तद्धन णिच् ल्यु। नागकेशरे
खरच्छद पु० खर छद पत्रमस्य। (उलुखड) तृणभेदे।
खरणस्(स) त्रि० खरा कठिना नासिकाऽस्य नासिकाया नस
नास्यलोप। णत्वञ्च। कठिननासिके।
खरत्वच् पु० खरा कठिना त्वक् यस्य। लज्जालुभेदे।
खरदण्ड न० खर इमाद्यमेषया कठिनोदण्डोनालो यस्य। पद्मे
खरदला स्त्री० खर दल यस्याः। काकोडुम्बरे।
खरदूषण पु० खरमपि दूषयत्युन्मादकत्वात् तद्दोषो मल।
धत्तूरे (धुतुरा) बहुदोषे त्रि०।

(गजसंख्या २७ रथसंख्या २७ अश्वसंख्या ८१ पदातिसंख्या १३५) एव सङ्ख्यान्वितायां सेनायाम्, एकैक विकरणभेदमासेदुषां भ्वादादिधातूनां समूहे, ज्योतिषोक्ते देवादिसंज्ञकनक्षत्राणां समूहे छन्दोग्रन्थोक्तेषु वर्णत्रयात्मकेषु मगणादिषु अष्टसु च ।

गणक पु० गणयति-ण्वुल् । दैवज्ञे ।

गणदेवता स्त्री० गण सन् गणीभूय वा देवता । तदुक्तं दैवतं शास्त्रेषु 'आदित्या द्वादश प्रोक्ता विश्वे देवा दश स्मृताः । वसवश्चाष्टसंख्याताः षट्त्रिंशत् तुषिता मताः । आभास्वराश्चतुःषष्टिर्वाता पञ्चाशदूनकाः । महाराजिकनामानो द्वे शते विंशतिस्तथा । साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः' इत्युक्त तत्तत्संख्याभेदान्वितेषु आदित्यादिषु ।

गणनाथ पु० गणानां प्रमथादीनां नाथः । गणेशे शिवे च गणनायकादयोऽप्यत्र ।

गणरात्र न० गणानां रात्रीणां समाहारः । गणशब्दस्य संख्यापरत्वात् द्विगुस० पचसमा० । रात्रिद्वन्द्वे ।

गणरूप पु० गणा बहूनि रूपाण्यस्य । अर्कवृक्षे ।

गणशस् अव्य० गणान्-गणान् इति गण+शस् । बहुगणार्थे

गणहासक पु० गणान् ह्रासयति ह्रस णिच् ण्वुल् । चोरनामगन्धे

गणान्न न० गणायोत्सृष्टम्, गणानां वाऽन्नम् । मठादौ बहुजनोद्देशेनोत्सृष्टान्ने, बहुस्वामिकेऽन्ने च 'गणान्नं गणिकान्नञ्चेति मनुना निषिद्धान्नमध्ये गणितम् ।

गणिका स्त्री० गण समूहोऽस्त्यस्याः भर्तृत्वेन ठन् । वेश्यायाम्, चित्ताकर्षकत्वात् यूथिकायाम् (युइ) हस्तिन्याञ्च ।

गणिकारिका स्त्री० गणम् गणि गण इ न करोति अण् ङीप् गणिकारी स्वार्थे के ह्रस्व । (गणियारी) द्रुमे । कर्मभावे गणिकारीत्यप्यत्र ।

गणित न० गण भावे क्त । गणने । करणे क्त । व्यक्ताव्यक्तरूपे अङ्कशास्त्रे । कर्मणि क्त । कृतगणने संख्याते त्रि० ।

गणेय त्रि० गण यत् । गणनीये ।

गणेरु पु० गण-एरु । कर्णिकारवृक्षे, करिण्यां, वेश्यायाञ्च ।

गणेश पु० गणानामीशः । स्वनामख्याते देवे, शिवे च ।

गण्ड पु० गडि अच् । गलिकपोले, कपोलमात्रे, गण्डके, (गण्डार) चिह्ने. वीरपट्टे पिटके, वीरे हयभूषणे, बुद्बुदे, स्फोटके पक्षौ, ज्योतिषोक्ते विष्कुम्भादिमध्ये योगभेदे, मूलान्त्ये पैत्राश्विन्यन्त्यपादे चतुष्पादेषु गण्डान्तरादवधभेदे च ।

गण्डक पु० गण्ड+स्वार्थे कन् । स्वनामख्याते पशौ (गण्डार) सङ्ख्याभेदे, अन्तराये, ज्योतिर्दे च ।

गण्डकारी स्त्री० गण्डं ग्रन्थिं भग्नसंयोजनरूपं सन्धिं करोति कृ-अण ङीप् । (हातजोडा) वराहक्रान्तायामोषधौ ।

गण्डकी स्त्री० 'गण्डक्याश्चैकदेशे च शालग्रामशिलास्थल'मित्युक्ते नदीभेदे । [शिलायाम् ।

गण्डकीशिला स्त्री० गण्डक्यामुत्पन्ना शिला । शालग्रा-

गण्डगात्र न० गण्डाः स्फोटकाः गात्रेऽवयवे यस्य (आता) सीताफले । [दूर्वाभेदे ।

गण्डदूर्वा स्त्री० गण्डयुक्ता ग्रन्थिमती दूर्वा (गाण्दूर्वा)

गण्डमाला स्त्री० गण्डानां स्फोटकानां माला । 'स्याद्गण्डमाला बहुभिश्च गण्डै'रित्युक्तलक्षणे रोगभेदे ।

गण्डमालिका स्त्री० गण्डानां ग्रन्थीनां माला यस्य सा कप् अत इत्त्वम् । लज्जालुवृक्षे ।

गण्डलेखा स्त्री० लिख्यतेऽत्र लेखा स्थली गण्ड स्थलीव । मकराकृतिगण्डस्थल्याम् । गण्डभित्त्यादयोऽप्यत्र । [प्रदेशमूलनाटे च

गण्डशैल पु० शैलस्य गण्डस्थ, राजद०स० । पर्वतात् पतितेषु स्थूलो

गण्डु पु० स्त्री० गडि-उ । ग्रन्थौ उपधाने च । स्त्रीत्वे वा ऊङ्

गण्डूपद पु० गण्डुयुक्तानि पदानि यस्य । (केंचो) किञ्चुलुके । जातौ ङीप् ।

गण्डूष पु० गडि-ऊषन् । मुखपूरणयोग्ये तोये 'गण्डूषजल'मिति कुमारः । करिहस्ताग्रे, प्रसृत्या मितजले, कराङ्गुलौ च । [लभ्ये, गणनीये च ।

गण्य त्रि० गणं लब्धा गण+यत् गण-यत् वा । गण सम्याम

गत त्रि० गम-क्त । याते, प्राप्ते, ज्ञाते, लब्धे, पतित, समाप्ते च । भावे क्त । गमने ।

गतागत न० गतञ्च आगतञ्च द्व० । यातायाते 'गतागतं कामकामा लभन्ते' इति गीता । गतञ्चागतञ्च यत्र । पक्षिगतिभेदे

गतार्त्तवा स्त्री० कृतोदयमार्त्तवं तत्फलं गर्भादि च गतम् आर्त्तवं यस्याः । वन्ध्यायाम् वृद्धायाञ्च ।

गति स्त्री० गम-भावादौ क्तिन् । गमने, पथि ज्ञाने, दशायां, यात्रायाम्, उपाये, नाडीमध्यपथे, कर्मफले, प्राप्तौ च ।

गद पु० गद अच् । श्रीकृष्णानुजे रोगे च । भावे घञ । कथने, विषे च ।

गदा स्त्री० गद अच् टाप् । स्वनामख्याते लौहादिनिर्मिते, लौहमये अस्त्रभेदे, पाटलावृक्षे च ।

गदाग्रज पु० ६त० श्रीकृष्णे ।

गदाधर पु० गदां धरतीति धृ-अच् ६त० । श्रीकृष्णे ।

गदाराति पु० ६त० औषधे । [गदति त्रि०

गद्गद पु० गदि-स्खलने गदति अच्, यङ् वा अव्यक्तास्फुटशब्दे ।

गद्गदध्वनि पु० गद्गदः कण्ठादिगतः अस्फुटः ध्वनिः । हर्षशोकादिना

सङ्क्रान्तेन वायुना यथास्थानानुसारणात् प्रजाते व्यञ्जकध्वनौ। तद्वति त्रि०। [समूहे न०।

**गद्य** त्रि० गद-यत्। कथनीये। पद्यभिन्ने कविकृते व्यापादे पद-

**गन्त्री** स्त्री० गम्यतेऽनया ष्ट्रन् ङीप्। वृषवहनीये शकटे।

**गन्त्रीरथ** पु० गन्त्री रथ इव अभीष्टस्थानप्रापकत्वात्। शकटे

**गन्ध** अर्द्दने चुरा० आ० अक० सेट्। गन्धयते अजगन्धत।

**गन्ध** पु० गन्ध अच्। सम्बन्धे, लेशे गन्धके गर्व्वे, शोभाञ्जने, हट-
चन्दनादीनां घ्राणग्राह्ये गुणभेदे स च गन्ध पञ्चविध
'चूर्णीकृतो वा घृष्टो वा दाहाकर्षित एव वा। रस सम्म-
र्द्दजोवापि प्राण्यङ्गोद्भवएव वेति' पञ्चविधकारणभेदात्
हटचन्दनादौ च।

**गन्धकन्दक** पु० गन्ध+अर्श आद्यच् गन्धयुक्त कन्दोऽस्य कप्।
कशेरुणि। [पदार्थे।

**गन्धकचूर्ण** पु० गन्धकप्रधानचूर्णं। (बारुद) इति ख्याते

**गन्धकाष्ठ** न० गन्धयुक्तं काष्ठम् कर्म्म०। अगुरुचन्दने।

**गन्धकुटी** स्त्री० गन्धस्य कुटीवाधार। मुरानामगन्धद्रव्ये।

**गन्धकुसुमा** स्त्री० गन्धयुक्त कुसुमं यस्याः। (गणिय री)
गणिकारीवृक्षे। [वेणा) गन्धवति भूतले।

**गन्धखेडक** न० गन्धस्य खेडा यत्र कप् डलयोरैकत्वात्।

**गन्धजात** न० गन्धो जातो यत्र। तेजपत्रे।

**गन्धज्ञा** स्त्री० गन्ध ज्ञायतेऽनया ज्ञा-अर्थे क। नासिकायाम्।

**गन्धतैल** न० गन्धयुक्तस्य चन्दनस्याग्निसंयोगेन जनितं
तैलम्। यन्त्रपाकेण जनिते तैले। (आतर) प्रभृतौ

**गन्धत्वच** स्त्री० गन्धान्विता त्वक् यस्याः। एलायाम्।

**गन्धदला** स्त्री० गन्धयुक्त दलं यस्याः। अजमोदायाम्।

**गन्धन** न० गन्ध भावादिषु ल्युट्। उत्साहे, प्रकाशने, सूचने,
हिंसायाञ्च।

**गन्धनाकुली** स्त्री० गन्धान्विता नाकुली रास्ना। रास्नाभेदे

**गन्धनिलया** स्त्री० गन्धस्य निलयो यत्र। नवमल्लिकायाम्

**गन्धपत्र** पु० गन्धयुक्त पत्रं यस्याः। तुलस्याम्। शठीभेदे स्त्री०

**गन्धपत्रिका** स्त्री० गन्धयुक्तं पत्रं यस्याः कप् कापि अत
इत्त्वम्। अजमोदायाम्।

**गन्धपत्री** स्त्री० गन्धयुक्त पत्रं यस्याः गौरा० ङीप्। अश्व
गन्धायाम् अम्बष्ठायाम्, अजमोदायाञ्च।

**गन्धपलाशिका** स्त्री० गन्धयुक्त पलाशं यस्याः कप्। हरिद्रायाम्

**गन्धपाषाण** पु० गन्धयुक्त पाषाणः। गन्धके।

**गन्धपुष्प** पु० गन्धः पुष्पेषु यस्य। वेतसे, अङ्कोटवृक्षे पत्रवारे
चपोटेच। केतक्या, नील्याम् गणिकारीवृक्षेच स्त्री० टाप्

**गन्धफल** पु० गन्धयुक्त फलं यस्य। बिल्वे, कपित्थे च। विदा-
र्य्यां, शल्लक्याञ्च स्त्री० टाप्। प्रियङ्गौ स्त्री० ङीप्।

**गन्धबन्धु** पु० ६त०। आम्रवृक्षे। [(गन्धभादाल) लताभेदे।

**गन्धभद्रा** स्त्री० गन्धेन लेशमात्रसेवनेन भद्रं यस्याः ५ब०।

**गन्धभाण्ड** पु० गन्धस्य भाण्ड इव। (गन्धभादाल) लताभेदे

**गन्धमासी** स्त्री० गन्धयुता मासी कर्म्म०। जटामासीभेदे।

**गन्धमादन** पु०न० गन्धेन मादयति मद-णिच् ल्यु। पर्व्वत
भेदे। भ्रमरे, वानरे, गन्धके च पु०।

**गन्धमादिनी** स्त्री० गन्धेन मादयति मद णिच् णिनि। लाक्षा
याम् मुरानामगन्धद्रव्ये च। [द्रव्ये।

**गन्धमालिनी** स्त्री० गन्धमालाऽस्त्यस्याः इनि। मुरानामगन्ध

**गन्धमुखा** स्त्री० गन्धो मुखेऽस्याः। छुछुन्दर्य्याम् (छुचा)

**गन्धमुण्ड** पु० गन्ध मुण्डयति मुण्ड+तत्करोतीति णिच-अण्।
(गन्धभादाल) लताभेदे।

**गन्धमूल** पु० गन्धो मूले यस्य। शल्लकीवृक्षे शठ्याम्। पु०
स्त्री० वा ङीप्। स्वार्थे कन् अत्रैवार्थे। [ख्यातेपुष्पवृक्षे च।

**गन्धमृग** पु० गन्धप्रधानो मृग। गन्धयोनौ कस्तूरीमृगे। [स्वनाम

**गन्धराज** न० गन्धेन राजते राज अच्। चन्दने, कणगुग्गुलौ,

**गन्धराजी** स्त्री० गन्धानां राजी टच् ङीप्। नखीगन्धद्रव्ये

**गन्धर्व्व** पु० गन्धमर्व्वति अर्व्व गतौ अच् शक०। मृगभेदे,
अश्वे कोकिले, स्वर्गगायके देवयोनिभेदे, गायनमात्रे च।

**गन्धर्व्वनगर** पु० न० गन्धर्व्वाणां नगरमिव। शून्याधिष्ठाने
पुराकारे नीलपीतादिमेघरचनाभेदे, इन्द्रजाले च।
गन्धर्व्वाद्रमयत्र। [भे।निर्दिष्टे स्थाने।

**गन्धर्व्वलोक** पु० ६त०। गुह्यकलोकोपरि विद्याधरलोकस्य

**गन्धर्व्ववेद** पु० ६त०। सामवेदस्योपवेदे सङ्गीतविद्यायाम्।

**गन्धर्व्वहस्त** पु० गन्धर्व्वस्य मृगभेदस्य हस्त पाद इव
पत्रमस्य। एरण्डवृक्षे। स्वार्थे कन् तत्रैवार्थे। [भेदे।

**गन्धलता** स्त्री० गन्धान्विता लता। प्रियङ्गौ। [ख्याते जाति-

**गन्धवणिज्** पु० गन्धोपजीवी वणिक्। (गन्धवेणिया) इति

**गन्धवती** स्त्री० गन्ध+मतुप् मस्य व। व्यासमातरि, भूमौ,
वायुवरुणयोर्नगर्य्याम्, सुरायाञ्च।

**गन्धवल्कल** न० गन्धो वल्केऽस्य। (दारचिनि) त्वचे।

**गन्धवल्लरी** स्त्री० गन्धान्विता वल्लरी। सहदेवीलतायाम्
गन्धवल्लीत्यप्यत्र। [नायकादौ त्रि०

**गन्धवह** पु० गन्धं वहति वह अच् ६त०। वायौ। गन्धयुक्ते

**गन्धवारि** न० गन्धवासितं वारि। गन्धद्रव्येण वासिते जले।

**गन्धवाह** पु० गन्धं वहति वह अण् उप०। वायौ। नासिकायां स्त्री०

गन्धविह्वल पु० गन्धेन विह्वलयति ह्वल-णिच्-अच् । गोधूमे
गन्धबीजा स्त्री० गन्धो बीजे यस्याः । मेथिकायाम् ।
गन्धव्याकुल पु०न० गन्धेन व्याकुलयति वि+आ+कुल णिच् अच् । कक्कोले । [(बासमति) प्रभृतौ ।
गन्धशालि पु० गन्धप्रधानः शालिः । आमोदवति धान्यभेदे
गन्धसार पु० गन्धयुक्तः सारो यस्य । चन्दनवृक्षे ।
गन्धसारण पु० गन्धं सारयति सृ-णिच्-ल्यु । छुछुन्दर्याम्
गन्धसोम न० गन्धाय सोमो विधुर्यस्य । कुमुदे चन्द्रोदये हि तस्य गन्धः ।
गन्धा स्त्री० गन्ध-णिच् अच् । गन्धहेतौ चम्पककलिकायाम्
गन्धाखु स्त्री० गन्धयुक्ता आखुः । छुछुन्दर्याम् (छुँचा) ।
गन्धाजीव पु० गन्धेन गन्धद्रव्येणाजीवति आ+जीव अच् । (गन्धवेने) गन्धवणिजि ।
गन्धाढ्य पु० गन्धेनाढ्यः । चन्दनवृक्षे, नागरङ्गवृक्षे च । गन्धयुते त्रि० । 'गन्धाढ्यः सुमनोहरः' इति तन्त्रम् । स्वर्णयूथ्यां, गन्धपत्रायाञ्च स्त्री० ।
गन्धाम्ला स्त्री० गन्धयुक्ता अम्ला यस्याः । वनबीजपूरके ।
गन्धार पु० गन्धमृच्छति ऋ अण् उप० । रागे, सिन्दूरे, स्वरभेदे च । देशभेदे ब० व० । [लताभेदे ।
गन्धाली स्त्री० गन्धमलति पर्याप्नोति अल-अण् । (गन्धभादाल)
गन्धालीगर्भ स्त्री० गन्धश्रेणी गर्भे यस्याः । सूक्ष्मैलायाम्
गन्धाष्टक न० गन्धानां गन्धद्रव्याणामष्टकम् । चन्दनाद्यष्टसु गन्धद्रव्येषु प्रपञ्चस्तु तदभिधाने द्रष्टव्य ।
गन्धिनी स्त्री० गन्धो विद्यतेऽस्याः इनि । मुरनाकगन्धद्रव्ये ।
गन्धिपर्ण पु० गन्धि गन्धयुक्तं पर्णं यस्य । सप्तच्छदद्रुमे (छातिम)
गन्धोत्कटा स्त्री० गन्धेन उत्कटा उग्रा । दमनकवृक्षे ।
गन्धोत्तमा स्त्री० गन्धेन उत्तमा उत्कृष्टा । मदिरायाम् ।
गन्धोली स्त्री० गन्धयति अर्द्दयति गन्ध ओलच् गौरा० ङीष् । वरटायाम् (बोलता) ।
गभस्ति पु० गम्यते ज्ञायते गम ड गः विषयस्तं बभस्ति भासयति भस क्तिच् । किरणे, सूर्य्ये च । स्वाहायां वह्निपत्न्यां स्त्री० वा ङीप् ।
गभस्तिमत् पु० गभस्ति+मतुप् । सूर्य्ये । [सूर्य्ये
गभस्तिहस्त पु० गभस्तयो हस्ता इव जलाकर्षकत्वात् यस्य ।
गभीर त्रि० गच्छति जलमत्र गम ईरन् भान्तादेशश्च । निम्नस्थाने, अतलस्पर्शे गहने दुष्प्रवेशे दुर्वारे च ।
गम गतौ भ्वा० पर० सक० अनिट् । गच्छति अगमत् ।
गम पु० गम अप् । द्यूतभेदे, जिगीषोर्यात्रायाम्, गमने, पथि, सदृशपाठे च । [कल्पात् समास इति भाष्यम् । गमयितरि च ।
गमक त्रि० गमयति बोधयति गम-णिच्-ण्वुल् । बोधके, गम-
गम्भारी स्त्री० कं जलं बिभर्त्ति भृ-अण् ङीप् पृ० कस्य गः । (गामारी) द्रुमभेदे ।
गम्भीर त्रि० गच्छति जलमत्र गम ईरन् भुगागम नि० । निम्नस्थाने, मन्द्रे गभीरार्थे च । जम्बीरे, पद्मे, मरुवकभेदे च पु० । स्वरे सत्त्वे च नाभौ च त्रिषु गम्भीरता शुभा ।
गम्भीरवेदिन् पु० गम्भीरं मन्दं वेत्ति विद-णिनि । 'चिरकालेन यो वेत्ति शिक्षां परिचितामपि 'गम्भीरवेदी विज्ञेयः स गजः' इत्युक्तचिह्ने, 'त्वग्भेदात् शोणितस्रावात् मांसस्य क्रथनादपि । आत्मानं यो न जानाति स स्यात् गम्भीरवेदिता' इत्युक्तचिह्ने च गजे । त्वच् गम्भीरवेदिताप्यत्र
गय पु० असुरभेदे, वानरभेदे, नृपभेदे च । तीर्थभेदे स्त्री० टाप्
गर पु० गॄ-निगरणे अच् अप् वा । विषे, रोगे, बवादिके षष्ठे करणे च । [ङीप् ।
गरघ्न पु० गरं विषं हन्ति । बर्बरे । मत्स्यभेदे (गडुइ) स्त्री०
गरल न० गिरति जीवनं गॄ-अलच् । विषे, सर्पविषे, तृणपूले च
गरागरी स्त्री० गरं मूषिकविषमागिरति आ+गॄ-अच् गौ० ङीष् । देवताडद्रुमे ।
गरिमन् पु० गुरोर्भावः इमनिच् गरादेश । गौरवे । [धानस्य
गरिष्ठ त्रि० अतिशयेन गुरुः इष्ठन् । गुरुतरे । दैत्यमुनिगरो-
गरी स्त्री० गॄ शब्दे अच् गौरा० ङीष् । देवताडद्रुमे ।
गरुड पु० गरुद्भ्यां डयते डी-ड पृ० तलोप । कश्यपात्मजे विनतागर्भजाते पक्षिराजे ।
गरुडध्वज पु० गरुडो ध्वजः चिह्नमस्य । विष्णौ ।
गरुडपुराण न० गरुडेन प्रोक्तं पुराणम् । पुराणभेदे ।
गरुडाग्रज पु० ६त० विनतायाः ज्येष्ठपुत्रे सूर्य्यसारथौ अरुणे ।
गरुत् पु० गॄ-उति । खगानां नभोगतिहेतौ पक्षे (पाखा)
गरुत्मत् पु० गरुत् अस्त्यस्य मतुप् यवादित्वात् न मस्य वः । गरुडे, विहगमात्रे च ।
गर्ग पु० गॄ ग । ब्रह्मणः पुत्रे ऋषिभेदे ।
गर्गरी स्त्री० गर्ग इति शब्दं राति रा-क गौ० ङीष् । दधिमन्थनपात्रे, कलशे च । मत्स्यभेदे, तक्रपयौ च पु० ।
गर्ज अव्यक्तशब्दे भ्वा० पर० अक० सेट् । गर्जति । अगर्जीत् 'गर्ज गर्ज क्षणं मूढे'ति देवीमाहात्म्यम् ।
गर्ज रवे चुरा० उभ० अक० सेट् । गर्जयति ते अजगर्जत्-त
गर्जर न० गॄ-विच् गरं जरयति जॄ-णिच् अच् । (गाजर) मूलभेदे
गर्जित न० गर्ज क्त । मेघशब्दे । कर्त्तरि क्त । मत्तहस्तिनि

गर्त्त पु० गृ तन् । भूमिच्छिद्रे, स्त्रीनितम्बस्थे कूपकाररूपे, रोगभेदे च 'धनु सहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्त्तास्ता' इत्युक्ते खाते स्त्री० टाप् ।

गर्त्तिका स्त्री० गर्त्तोऽस्त्यस्याः ठन् । तन्तुवपनशालायां (तांतघर)

गर्द्द रवे वा चुरा०उभ० पक्षे भ्वा० पर० अक० सेट् । गर्द्दयति-ते गर्द्दति अजगर्द्दत त अगर्द्दीत् । [विडङ्गे च न०

गर्द्दभ पु० गर्द्द अभच् (गाधा) गर्द्दभे, गन्धभेदे च । श्वेतकुमुदे,

गर्द्दभशाक पु० स्त्री० गर्द्दभस्य भक्ष्य शाक । ब्रह्मयष्टिद्रुमे (वामनहाटी) भार्ग्याम् स्त्री० ङीप् ।

गर्द्दभाण्ड पु० गर्द्दभ गन्धविशेषमभति अम ड, डस्य नेत्त्वम् । प्लक्षादिवृक्षश्वत्थतुल्याकारे द्रुमे (पाकुड) वृक्षे ।

गर्द्दभाह्वय पु० गर्द्द गन्धविशेषमाह्वयति ह्वे श । गर्द्दभ इति आह्वयो यस्य वा । कुमुदे ।

गर्द्दभी स्त्री० गर्द्द-अभच् गौ० ङीष् । गोमयकीटे, श्वेतकण्टकार्य्यां, अपराजितायाञ्च । गर्द्दभ+पु० योगे ङीष् । रासभ्याम्

गर्द्ध लिप्सायां चु० उभ० सक० सेट् । गर्द्धयति ते अजगर्द्धत् त

गर्द्ध पु० गृध-घञ् अच् वा । अतिशयस्पृहायां, गर्द्दभाण्डद्रुमे च

गर्द्धन त्रि० गृध युच् । लुब्धे ।

गर्ब्ब गतौ भ्वा० पर० सक० सेट् । गर्ब्बति अगर्ब्बीत् ।

गर्ब्ब दर्पे अद० चुर० आत्म० सेट् । गर्ब्बयते अजगर्ब्बत ।

गर्ब्ब पु० गर्ब्ब-दर्पे घञ् । अहङ्कारे ।

गर्भ पु० गॄ भन् । भ्रूणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये 'गर्भाशयगत शुक्रमार्त्तवं जीवसङ्क्रमम् । प्रकृति सविकारा च तत् सर्व्वं गर्भकृतित'मित्युक्ते मांसपिण्डे शिशौ कुक्षौ, नाटकसन्धिभेदे पनसकण्टके, अपवरके, 'भाद्रकृष्णचतुर्दश्यां यावदाक्रमते जलम् । तावद् गर्भं विजानीयादित्युक्ते भद्रकृष्णचतुर्दश्यां गङ्गाजलप्लावनस्थाने, अन्न, अग्नौ, पुत्रे, च ।

गर्भक पु० गर्भे केशमध्ये कायति कै क । केशमध्यस्थे माल्ये ।

गर्भगृह न० गर्भ इव गृहम । गृहमध्यभागे ।

गर्भघातिनी स्त्री० गर्भं हन्ति हन णिनि । लाङ्गलिकावृक्षे ।

गर्भद पु० गर्भं ददाति दा-क । पुत्रजीववृक्षे । क्षुपभेदे स्त्री० टच् ङीप् । गर्भदात्रीत्यपि अत्रार्थे । [(पटेशान) ।

गर्भपाकिन् पु० गर्भे पाकोऽविद्यतेऽस्य इनि । षष्टिकधान्ये

गर्भपातक पु० गर्भं पातयति पत णिच्-ण्वुल् । रक्तशोभाञ्जने (लालसजना) । [कर्णिकारीद्रुमे ।

गर्भपातनी स्त्री० गर्भं पात्यतेऽनया पत णिच्-ल्युट् ङीप् ।

गर्भपातिनी स्त्री० गर्भं पातयति-पत णिच्-णिनि ङीप् । विशल्यावृक्षे । [गर्भायां स्त्रियाम्

गर्भवती स्त्री० गर्भोऽविद्यतेऽस्याः मतुप् मस्य व । आपन्न

गर्भशय्या स्त्री० गर्भस्य शय्येव स्थानम् । 'शङ्खनाभ्याकृतियोनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिते' त्युक्तलक्षणे गर्भोत्पत्तिस्थाने । 'गर्भशय्यां गतोऽवे' ति वेणीसंहार । [गर्भस्य पतने

गर्भस्राव पु० स्रु-घञ् ६त० । प्रकृतिकालात् पूर्व्वं रोगादिना

गर्भस्राविन् पु० गर्भं स्रावयति स्रु णिच् णिनि । हिन्तालवृक्षे

गर्भागार न० गर्भ इवागारम् । गृहमध्यभागे वासगृहे । गर्भ एवागारम् । गर्भस्थाने ।

गर्भाधान न० गर्भ शुद्धतया आधीयतेऽनेन । दशविधसंस्कारान्तर्गते गर्भपालस्य संस्कारपूर्व्वक गर्भनिषेके ।

गर्भाशय पु० गर्भ आशेतेऽत्र शी-अच् । गर्भवेष्टनचर्म्मणि जरायौ

गर्भाष्टम पु० गर्भात् गर्भग्रहणसमयादष्टम । गर्भग्रहणावधिकेऽष्टमे मासि वर्षे वा 'गर्भाष्टमेऽब्दे कुर्व्वीतेति मनु ।

गर्भिणी स्त्री० गर्भोऽस्त्यस्याः इनि । गर्भवत्यां सगर्भायां स्त्रियाम्

गर्भोपघातिनी स्त्री० गर्भमुपहन्ति उप+हन-णिनि । गर्भघातिन्यां गवि । [तृणभेदे च ।

गर्मुत् स्त्री० गृ-उति मुट् च । स्वर्णे, लतायां, (मयना)

गर्व्व मदे भ्वा० पर० अक० सेट् । गर्व्वति अगर्व्वीत् ।

गर्व्व पु० गर्व्व-घञ् । अभिमाने, 'ऐश्वर्य्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिनान्येषामवज्ञा गर्व्व ईरित'युक्तेऽवज्ञाभेदे च । [अजगर्हत । पक्षे भ्वादिरूपम् ।

गर्ह निन्दायां वा चुरा० पक्षे भ्वा० आत्म० सक० सेट् । गर्हयते

गर्ह कुत्सायां भ्वा० आत्म० सक० सेट् । गर्हते अगर्हिष्ट ।

गर्ह्य त्रि० गर्ह ण्यत् । निन्द्ये, अधमे च ।

गर्ह्यवादिन् त्रि० गर्ह्यं वदति वद-णिनि । कुत्सितवादिनि कद्वदे

गल भक्षणे स्रावे च भ्वा० पर० सक० सेट् । गलति अगालीत्

गल स्रावणे चुरा० आत्म० सक० सेट् । गालयते अजीगलत

गल पु० गल-अच् । कण्ठे (गला) सर्ज्जरसे (धुना) व द्यभेदे, गडकमत्स्ये च ।

गलक पु० गल-वुन् । स्वल्पशल्कमत्स्ये । [मांसपिण्डे

गलकम्बल पु० गले कम्बल इव । सास्नायां गवां गलस्थिते

गलगण्ड पु० ७त० । (गलगण्ड) । रोगभेदे ।

गलग्रह पु० 'आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्व्वे तमेवाहुर्गलग्रह'मित्युक्ते प्रत्यारम्भाभाववति पदार्थे, 'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहा' इत्युक्ते तिथ्यष्टके च

गर्त्त पु० गॄ तन् । भूमिच्छिद्रे, स्त्रीनितम्बस्थे कूपाकारेऽंशे, रोगभेदे च 'धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते । न ता नदीशब्दवहा गर्तास्ता' इत्युक्ते खाते स्त्री० टाप् ।

गर्त्तिका स्त्री० गर्तोऽस्त्यस्याः ठन् । तन्तुवपनशालायां (तांतघर)

गर्द्द रवे वा चुरा० उभ० पक्षे भ्वा० पर० अक० सेट् । गर्द्दयति-ते गर्द्दति अजगर्द्दत्-त अगर्द्दीत् । [विडङ्गे च न०

गर्द्दभ पु० गर्द्द अभच् । (गाधा) गर्द्दभे, गन्धभेदे च । श्वेतकुमुदे,

गर्द्दभशाक पु० स्त्री० गर्द्दभस्य भक्ष्यं शाकं । ब्रह्मयष्टिद्रुमे (वामनहाटी) भार्ग्याम् स्त्री० ङीप् ।

गर्द्दभाण्ड पु० गर्द्दभं गन्धविशेषमतति अम ड डस्य नेत्वम् । पलाशिवश्वत्थतुल्याकारे द्रुमे (पाकुड) प्लक्षे ।

गर्द्दभाह्वय पु० गर्द्दं गन्धविशेषमाह्वयति ह्वे-श । गर्द्दभ इति आह्वयो यस्य वा । कुमुदे ।

गर्द्दभी स्त्री० गर्द्द-अभच् गौ० ङीष् । गोमयकीटे, श्वेतकण्टकार्य्यां, अपराजितायाञ्च । गर्द्दभ+पुं० योगे ङीष् । रासभ्याम्

गर्द्ध लिप्सायां चुरा० उभ० सक० सेट् । गर्द्धयति ते अजगर्द्धत् त

गर्द्ध पु० गृध-घञ् अच् वा । अतिशयस्पृहायां, गर्द्दभाण्डद्रुमे च

गर्द्धन त्रि० गृध-युच् । लुब्धे ।

गर्ब्ब गतौ भ्वा० पर० सक० सेट् । गर्ब्बति अगर्ब्बीत् ।

गर्ब्ब दर्पे अद० चुर० आत्म० सेट् । गर्ब्बयते अजगर्ब्बत ।

गर्ब्ब पु० गर्ब्ब-दर्पे घञ् । अहङ्कारे ।

गर्भ पु० गॄ-भन् । भ्रूणे देहजन्मकारके शुक्रशोणितानुबन्धजन्ये 'गर्भाशयगतं शुक्रमार्त्तवं जीवसंक्रमम् । प्रकृतिः सविकारा च तत् सर्वं गर्भसंज्ञित'मित्युक्ते मांसपिण्डे, शिशौ कुक्षौ, नाटकसन्धिभेदे, पनसकण्टके, अपवरके, 'भाद्रकृष्णचतुर्द्दश्यां यावदाक्रमते जलम् । तावद् गर्भं विजानीयादि'त्युक्ते भाद्रकृष्णचतुर्द्दश्यां गङ्गाजलप्लावनस्थाने, अन्ने, अग्नौ, पुत्रे, च ।

गर्भक पु० गर्भे केशमध्ये कायति कै-क । केशमध्यस्थे माल्ये ।

गर्भगृह न० गर्भ इव गृहम् । गृहमध्यभागे ।

गर्भघातिनी स्त्री० गर्भं हन्ति हन-णिनि । लाङ्गलिकावृक्षे ।

गर्भद पु० गर्भं ददाति दा-क । पुत्रजीवकवृक्षे । क्षुपभेदे स्त्री० टाप् ङीप् । गर्भदात्रीत्यपि अत्रार्थे । [(पटेथान) ।

गर्भपाकिन् पु० गर्भे पाकोविद्यतेऽस्य इनि । षष्टिकधान्ये

गर्भपातक पु० गर्भं पातयति पत णिच्-ण्वुल् । रक्तशोभाञ्जने (लालसजना) । [कर्णिकारीद्रुमे ।

गर्भपातनी स्त्री० गर्भं पात्यतेऽनया पत-णिच्-ल्युट् ङीप् ।

गर्भपातिनी स्त्री० गर्भं पातयति-पत-णिच्-णिनि ङीप् । विशल्यावृक्षे । [गर्भाया स्त्रियाम्

गर्भवती स्त्री० गर्भोविद्यतेऽस्याः मतुप् मस्य वः । आपन्न

गर्भशय्या स्त्री० गर्भस्य शयनस्थानम् । 'शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिते'त्युक्तलक्षणे गर्भोत्पत्तिस्थाने । 'गर्भशय्यां गतोवे'ति वेणीसंहार । [गर्भस्य पतने

गर्भस्राव पु० स्रु-घञ् ६त० । प्रसूतिकालात् पूर्वं रोगादिना

गर्भस्राविन् पु० गर्भं स्रावयति स्रु णिच्-णिनि । हिन्तालवृक्षे

गर्भागार न० गर्भ इवागारम् । गृहमध्यभागे वासगृहे । गर्भस्यवागारम् । गर्भस्थाने ।

गर्भाधान न० गर्भं शुद्धतया आधीयते येन । दशविधसंस्कारान्तर्गते गर्भपातस्य संस्कारपूर्वक गर्भनिषेके ।

गर्भाशय पु० गर्भ आशेतेऽत्र शी-अच् । गर्भवेष्टनचर्म्मणि जरायौ

गर्भाष्टम पु० गर्भात् गर्भग्रहणसमयादष्टम । गर्भग्रहणावधिकेऽष्टमे मासि वर्षे वा 'गर्भाष्टमेऽब्दे कुर्वीते'ति मनुः ।

गर्भिणी स्त्री० गर्भोऽस्त्यस्याः इनि । गर्भवत्यां सगर्भायां स्त्रियाम्

गर्भोपघातिनी स्त्री० गर्भमुपहन्ति उप+हन-णिनि । गर्भघातिन्यां गवि । [तृणभेदे च ।

गर्मुत् स्त्री० गॄ-उति मुट् च । स्वर्णे, लतायां, (मयना)

गर्व मदे भ्वा० पर० सक० सेट् । गर्वति अगर्वीत् ।

गर्व पु० गर्व-घञ् । अभिमाने, 'ऐश्वर्य्यरूपतारुण्यकुलविद्याबलैरपि । इष्टलाभादिनान्येषामवज्ञा गर्व्व ईरित'त्युक्तेऽवस्थाभेदे च । [अजगर्हत । पक्षे भ्वादिरूपम् ।

गर्ह निन्दायां वा चुरा० पक्षे भ्वा० आत्म० सक० सेट् । गर्हयते

गर्ह कुत्सायां भ्वा० आत्म० सक० सेट् । गर्हते अगर्हिष्ट ।

गर्ह्य त्रि० गर्ह-ण्यत् । निन्द्ये, अधमे च ।

गर्ह्यवादिन् त्रि० गर्ह्यं वदति वद-णिनि । कुत्सितवादिनि कद्वदे

गल भक्षणे स्रावे च भ्वा० पर० सक० सेट् । गलति अगालीत्

गल स्रावणे चुरा० आत्म० सक० सेट् । गालयते अजीगलत

गल पु० गल-अच् । कण्ठे (गला) सर्ज्जरसे (धुना) वाद्यभेदे, गडकमत्स्ये च ।

गलक पु० गल-वुन् । स्वल्पशकुलमत्स्ये । [मांसपिण्डे

गलकम्बल पु० गले कम्बल इव । सास्नायां गवां गलस्थिते

गलगण्ड पु० ७त० । (गरगण्ड) । रोगभेदे ।

गलग्रह पु० 'आरम्भानन्तरं यत्र प्रत्यारम्भो न दृश्यते । गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रह'मित्युक्ते प्रत्यारम्भाभाववति पदार्थे, 'कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् । त्रयोदशीचतुष्कञ्च अष्टावेते गलग्रहा' इत्युक्ते तिथ्यष्टके च

गलन्तिका स्त्री० गल-शतृ ङीप् अल्पार्थे कन् स्वल्पजलधारा युतायां (झारा) कर्कर्यां 'देवे देया गलन्तिकेति स्मृतिः ।

गल(ले)स्तनी स्त्री० गले स्तनौ यस्याः वा अलुक्स०। छाग्याम् ।

गलहस्त पु० गले हस्त० । अपसारणार्थं गलेऽर्पिते हस्ते (गलाटिपि)

गला स्त्री० गल-अच् । लज्जालुलताभेदे, अम्बुपायाञ्च ।

गलित त्रि० गल-क्त । पतिते स्रस्ते, च्युते, हस्तादितो भ्रष्टे च ।

गलेगण्ड पु० गलेगण्ड इव यस्य । पक्षिभेदे (हाड़गेला)

गलोद्देश पु० गलस्य उद्देशः समीपम् । गलसमीपस्थेऽवयवे ।

गल्भ धार्ष्ट्ये, प्रगल्भ्ये, भ्वा० आ० सक० सेट् । गल्भते अगल्भिष्ट

गल्या स्त्री० गलानां कण्ठानां समूहः । कण्ठसमुदाये ।

गल्ल पु० गल-ल तस्य नेत्त्वम् । (गाल) गण्डे ।

गल्लक पु० गलति क्विप् गल् तं लाति गृह्णाति ततः स्वार्थे कन् । चषके मद्यपानपात्रे । [भेदे च

गवय पु० गु-अयच् । गोसदृशे गलकम्बलहीने पशुभेदे वानर-

गवल पु० गुङ् शब्दे अच् तं लाति ला-क । वनमहिषे । तत्सम्बन्धित्वात् तच्छृङ्गे न० ।

गवाक्ष पु० गवां किरणानामपि रन्ध्रमिव । जालाकारे कुलवधूदृष्टिस्थाने वातायने ।

गवाक्षी स्त्री० गां भूमिमश्नोति अच् ङीप् । (गोमुक) लताभेदे, (पेयोडा) गवाक्षोटे, अपराजितायाञ्च । [ङीप् ।

गवादन न० गोभिरद्यते अद-ल्युट् । घासे । इन्द्रवारुण्यां स्त्री० ।

गवेडु पु० गवे दीयते दो ड़ इत्यर्थे कु पृ० टस्य ड अलुक् स० । (गड़गड़े) धान्यभेदे । [कनि स्त्रीत्वेन टाप् अल्पार्थे ।

गवेधु पु० गवे धीयते धाञ्-धारणे कु । (गड़गड़े) धान्यभेदे,

गवेधुकी स्त्री० न० । गवामीशः गौरक्षः तथाभूतः इव कायति कै क गौरा० ङीष् । (गोरक्षचाकुलिया) लताभेदे ।

गवेष अन्वेषणे, अद० चुरा० आत्म० सेट् । गवेषयते अजगवेषत ।

गवेषणा स्त्री० गवेष-युच् टाप् । अन्वेषणे । ल्युट् अन्वेषार्थे न० ।

गव्य त्रि० गोर्विकारः गवि भवं, गोर्हितं, गोरिदं, वा यत् गोसम्बन्धिनि, गोर्हितादौ च । ज्यायां रागद्रव्ये च न० ।

गव्यूति स्त्री० गोर्यूतिः । क्रोशद्वये क्रोशे च ।

गह गहने अद० चु० उभ० सक० सेट् । गहयति ते अजगहत् त

गहन न० गाह-युच् पृ० ह्रस्वः । कानने, गह्वरे, दुःखे च । दुर्गमे, दुष्प्रवेशे च त्रि० 'गहना कर्मणो गतिरि'ति गीता

गह्वर पु० गाह-वरच् नि० । निकुञ्जे । दम्भे, वने, रोदने, विषमस्थाने, अनेकार्थसङ्कटे च न० । गुहायां न० स्त्री० स्त्रीत्वपक्षे ङीप् ।

गा गतौ भ्वा० आत्म० सक० अनिट् । गाते अगास्त ।

गा स्तुतौ सक० जन्मनि अक० जुहो० । जगाति अगासीत् ।

गाङ्गेय पु० गङ्गा+ढक् । भीष्मे, कार्त्तिकेये च । 'तं गर्भं सुषुवे गङ्गा पावकाद्दीप्ततेजसम् । तदुल्बं पर्वते न्यस्तं हिरण्यं समपद्यते'त्युक्ते स्वर्णे, तन्नामनामके धुस्तूरे, कसेरुणि च

गाङ्गेरुकी स्त्री० गाङ्गं जलमीरयति क्षिपति ईर-उ स्वार्थे कन् गौरा० ङीष् । नागबलायाम् ।

गाजर न० गां जरयति जॄ-णिच्-अच् । मूलके (गाजोर) ।

गाढ न० गाह-क्त । अतिशये दृढे । मज्जिते, अवगाढे, सेविते च त्रि० । तपस्विगाढां तमसां प्रापेति रघुः ।

गाणिक्य न० गणिकानां समूहः ष्यञ् । वेश्यासमूहे ।

गाण्डि पु० गण्ड-इन् पृ० वृद्धिः । पर्व्वौ ।

गाण्डिव(वी)व पु० न० । गाण्डिर्ग्रन्थिरस्त्यस्य वा पूर्व्वपद-दीर्घः । अर्जुनचापे, चापमात्रे च । [मात्रे, अर्जुनवृक्षे च

गाण्डीव(वि)विन् पु० गाण्डीव(वि)व-इनि । अर्जुने, धानुष्क

गात्र शैथिल्ये अद० चु० आत्म० अक० सेट् । गात्रयते अजगात्रत

गात्र न० गा ष्ट्रन् । देहे, गजाद्यपजङ्घादौ च ।

गात्रभङ्ग पु० भञ्ज-घञ् गात्रस्य भङ्गोऽवसादो यस्याः । मूकशिम्ब्याम् । इत० । अङ्गभङ्गे (गामोड़ा) स्त्री० ।

गात्रानुलेपनी स्त्री० गात्रमनुलिप्यतेऽनया लिप-ल्युट् । अनुलेपनवर्त्तिकायाम् ।

गाथक त्रि० गै-थकन् । गायके गानोपजीविनि ।

गाथा स्त्री० गै-थन् । आर्य्याच्छन्दसि प्राकृतादिभाषारचिते पद्ये, श्लोके च । [अगाधिष्ट । अजगाधत्

गाध प्रतिष्ठायां यत्ने लिप्सायाञ्च भ्वा० आ० अक० सेट् । गाधते

गाध पु० गाध-घञ् । स्थाने, लिप्सायां, तलस्पर्शे च । [न्हपभेदे

गाधि पु० गाध इन् । चन्द्रवंश्ये कान्यकुब्जाधिपे, विश्वामित्रपितरि

गाधिज पु० गाधेर्जायते जन-ड । विश्वामित्रे ।

गाधेय पु० गाधि+अपत्ये ढक् । विश्वामित्रे मुनौ ।

गान न० गै-ल्युट् । गीतौ, ध्वनौ च ।

गान्दिनी स्त्री० गङ्गायां, यादववंश्यस्य अक्रूरस्य मातरि च ।

गान्धर्व त्रि० गन्धर्वस्येदम् अण् । गन्धर्वसम्बन्धिनि । 'इच्छयान्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेय' इत्युक्ते विवाहभेदे, भारतवर्षीयोपद्वीपभेदे च पु० । सामवेदस्तोमभेदे अग्नीषोमाख्ये, षट्स्वरसंघातकालेन सङ्गतलया। 'प्रयुक्तावस्था येन गान्धर्वमभिधीयते' इत्युक्ते गाने च न० ।

गान्धार पु० गन्धं सौरभमृच्छति अण् प्रज्ञाद्यण् । सिन्दूरे गीतिविषये रागभेदे, स्वरभेदे च । कन्दार इति ख्याते देशोद्भवे त्रि० । गन्धके न० ।

**गान्धारराज** पु० गान्धाराणां जनपदानां राजा टच् । दुर्य्योधनमातामहे सुबले तत्सुते शकुनौ च ।

**गान्धारी** स्त्री० गान्धारस्य अपत्यम् अण् । दुर्य्योधनस्य मातरि धृतराष्ट्रस्य पत्न्याम् ।

**गान्धिक** पु० गन्धेन जीवति ठक् । गन्धवणिजि ।

**गायत्री** स्त्री० गायन्तं त्रायते त्रै क । वेदोक्ते, मन्त्रभेदे, षड्-चरपादके छन्दोभेदे च ।

**गायन** त्रि० गै-ल्युट् । गानोपजीविनि । स्त्रियां ङीप् ।

**गारुड** न० गरुडो देवताऽस्य । मरकतमणौ, विषमन्त्रे, स्वर्णे च । तेन प्रोक्तमित्यण् । गरुडेनोक्ते पुराणभेदे च ।

**गारुडिक** पु० गारुडेन विषमन्त्रेण जीवति ठक् । विषवैद्ये ।

**गारुत्मत** न० गरुत्मान् देवतास्य अण् । मरकतमणौ ।

**गार्द्धपक्ष** पु० गृध्रस्य गार्द्ध अण् स पक्ष पत्रं यस्य । गृध्रपक्षरचितपत्रके बाणे । [गार्भिण्यमप्यत्र ।

**गार्भिण** न० गर्भिणीनां समूहः अञ् । गर्भिणीसमूहे । यञ् ।

**गार्हपत्य** पु० गृहपतेः नाम्ना युक्तः । यज्ञियाग्निभेदे ।

**गार्हस्थ्य** न० गृहस्थस्य भावः कर्म्म वा । गृहस्थस्यावश्यकर्त्तव्ये कर्म्मणि, तद्धर्म्मे च ।

**गालव** पु० पु० गल घञ् तं वाति वा-क । मुनिभेदे लोध्रवृक्षे च

**गालि** पु० स्त्री० गल-इन् । शापे आक्रोशे च । [अगाढ

**गाह** विलोडने भ्वा० आत्म० सक० सेट् । गाहते अगाहिष्ट-

**गि(ग)रा** स्त्री० गॄ क्विप् वा टाप् । वाक्ये ।

**गिरि** पु० गॄ-कि । पर्व्वते । 'मदोद्रेकाद्यर्थवैरी सुप्रवेशो दिगम्बरः । सर्व्वत्र समभावेन भावयेन्नो नरोत्तम । इष्टदेवीधिया नारीं स गिरिः परिकीर्त्तितः' इत्युक्तलक्षणे संन्यासिनि, नेत्ररोगभेदे च । यथा आनन्दगिरिः । गिलति लोकम् गॄ अच् । बालमूषिकायां स्त्री० वा ङीप् ।

**गिरिकदली** पु० ७त० । बहुबीजायाम् वनरम्भायाम् ।

**गिरिकर्णी** स्त्री० गिरिर्बालमूषिकेव कर्णः पत्रं यस्याः । अपराजितायाम् । स्वार्थे कन् गिरिकर्णिकाप्यत्र ।

**गिरिका** स्त्री० गिरि+संज्ञायां कन् । बालमूषिकायाम् ।

**गिरिज** न० गिरौ जायते जन-ड । अभ्रे, शिलाजतुनि, लौहे, गैरिके च । मधूकभेदे पु० । पार्व्वत्यां मातुलुङ्ग्यां च स्त्री० ।

**गिरिदुर्ग** न० गिरिरिव दुर्गम् । राज्ञा शत्रुभ्यो निरुद्वेगया वासस्थानं दुर्गम् (गड) । पर्व्वतरूपे तादृशे स्थाने, 'सर्व्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेदिति मनुः ।

**गिरिनिम्ब** पु० ७त० महानिम्बवृक्षे ।

**गिरिपीलु** पु० ६त० (फालसा) इति वृक्षभेदे ।

**गिरिपुष्पक** न० गिरेः पुष्पमिव इवार्थे कन् । शैलेये, शिलाजतुनि

**गिरिभिद्** पु० गिरिं भिनत्ति भिद क्विप् । पाषाणभेदके वृक्षे, इन्द्रे च

**गिरिमल्लिका** स्त्री० गिरौ मल्लीव इवार्थे कन् । कुटजवृक्षे ।

**गिरिश** पु० गिरौ शेते शी ड, गिरिरस्त्यस्य लोमा० श वा । शिवे । [शिनि । अपराजितायाम् ।

**गिरिशालिनी** स्त्री० गिरिणा बालमूषिकाकर्णेनेव शलते शल-

**गिरिसुत** पु० ६त० । मैनाकपर्व्वते । पार्व्वत्याम् स्त्री० ।

**गिरीश** पु० गिरेः कैलासस्य ईशः । महादेवे ।

**गिल** पु० गिलति गॄ मूल० क लत्वम् । जम्बीरे ।

**गिलित** त्रि० गॄ क गिलो जातोऽस्य तारका० इतच् । भक्षिते

**गीत** न० गै क्त । गाने तत्त्वचर्य्यादिकं शब्दाभिधाने ।

**गीता** स्त्री० गै-कर्म्मणि क्त । गुरुशिष्यकल्पनया उपदेशात्मके कथाविशेषे सा च भगवद्गीतारामगीतादिभेदात् बहुला किन्तु भगवद्गीतायामेव प्रसिद्धिः । गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः । या स्वयं पद्मनाभस्य मुखपद्माद् विनिःसृतेति श्रीधरस्वामिधृतवचनम् ।

**गीति** स्त्री० गै क्तिन् । गाने, आर्य्याच्छन्दोभेदे च ।

**गीर्णि** स्त्री० गॄ-क्तिन् । गिलने, स्तुतौ च ।

**गीर्व्वाण** पु० गीरेव बाणो यस्य । देवे ।

**गीष्पति** पु० गिरां पतिः षष्ठ्यलुक् सत्वम् । बृहस्पतौ । वा रत्वे विसर्गे च । गीर्पतिः गीःपतिरप्यत्र ।

**गु** ध्वनौ भ्वा० आत्म० अक० अनिट् । गवते अगोष्ट ।

**गु** विष्ठोत्सर्गे तुदा० कुटा० पर० अक० अनिट् । गुवति अगुत

**गुग्गुल(लु)** पु० गुजं क्विप् गुक् व्याधिः तस्मात् गुडति रक्षति उ-गुड-क वा डलयोरैक्यम् । स्वनामख्यातनिर्य्यासके वृक्षभेदे, रक्तशोभाञ्जने च ।

**गुच्छ** पु० गु-संप० क्विप् गुतं छ्यति छो-क । कलिककुसुमादिसमूहवति स्तवके, कारण्डमूर्ये मूलत एव शाखासमभानसंघातके धान्यमल्लिकादेः स्तम्बे, द्वात्रिंशद्यष्टिके हारभेदे, मयूरपुच्छे च । स्वार्थे कन् । उशीरमूले । संज्ञायां कन् । रीठाकरञ्जे ग्रन्थिपर्णे न० ।

**गुच्छकरञ्ज** पु० गुच्छाकृतिः करञ्जः । करञ्जभेदे ।

**गुच्छदन्तिका** स्त्री० गुच्छीभूता दन्ता पुष्पाकृपा अन्यस्याः ठन् । कदल्याम् तस्याः हि मोचकरूपे पुष्पे गुच्छाकृतिदन्तरूपत्वम् । [भावे पत्रस्य गुच्छाकारत्वम् ।

**गु(त्स)च्छपत्र** पु० गुच्छाकृतीनि पत्राण्यस्य । तालवृक्षे तस्य हि

**गु(त्स)च्छपुष्प** पु० गु(त्सा)च्छाकृतीनि पुष्पाण्यस्य । सप्तच्छदवृक्षे । संज्ञायां कन् । रीठाकरञ्जे धातक्यां स्त्री० ङीप् ।

मितगृहे, वन्याम्, गृध्रनखीवृक्षे, (गुहकाश्यौचौ)।
गु(गू)वाक पु॰ गु-पिनाकादित्वात् वाक नि॰ (सुपारी) क्रमुके
गुह संवरणे भ्वा॰उभ॰सक॰वेट्। गूहति ते अगूहीत् अघुक्षत् अगूहिष्ट अगूढ।
गुह पु॰ गुह-क। कार्त्तिकेये, अश्वे, राममित्रे शृङ्गवेराधिपे चण्डालनाथे, गर्त्ते, विष्णौ च। सिंहपुच्छीलतायाम् अश्वलिङ्गे देवखाते पर्वतगर्त्ते, हृदये च स्त्री॰। गुहां प्रविष्टाविति श्रुतिः।
गुहाशय पु॰ गुहायां गर्त्ते आशेते शी-अच्। अज्ञाने। 'सिंहव्याघ्रवृकास्तरक्षुद्वीपिनकाः। बभ्रुजम्बुकमार्ज्जारा इत्याद्याः स्युर्गुहाशया इत्युक्तेषु सिंहादिषु, हृदये, बुद्धौ च स्थिते जीवे,ईश्वरे च 'गुहाशयं गह्वरेष्ठ'मिति श्रुतिः।
गुहिल न॰ गुह-इलच् किच्च। धने, वने च।
गुह्य त्रि॰ गुह-क्यप्। कच्छपे, दम्भे, परमात्मनि च। रहसि, भगे, लिङ्गे च न॰। रहस्ये,गुह्यामर्हति दण्डादित्वात् यति। अप्रकाश्ये च त्रि॰। [कुवेरधनरक्षके देवयोनिभेदे।
गुह्यक पु॰ गुह्यं क सुखं यस्य,गुह्यं कुत्सितं काय ति कै क वा।
गुह्यकेश्वर पु॰ ६त॰। कुवेरे।
गुह्यपुष्प पु॰ गुह्यं पुष्पमस्य। अश्वत्थवृक्षे। [जुगाव। गुवः
गू विष्ठात्यागे तुदा॰कुटा॰पर॰अक॰सेट्। गुवति अगुविष्ट
गू स्त्री॰ मलत्यागेन देहात् गम-डू टिलोपश्च। विष्ठायां, मले च। गूथात्कप्रत्ययान्तताकथनं पुंलिङ्गताकथनञ्च प्रामादिकम्।
गूढ त्रि॰ गुह-क्त। गुप्ते, संवृते, गहने च। रहसि न॰।
गूढज पु॰गूढं गुप्तं यथा तथा जात -गूढ सन् वा जातः जन ड। द्वादशपुत्रमध्ये पुत्रभेदे। [ह्निकेनापि न दृष्टचरम्
गूढनीड पु॰ गूढं नीडं वासस्थानं यस्य। खञ्जनखगे तस्य वासस्थानं
गूढपत्र पु॰गूढं पत्रमस्य। अङ्कोठे, करीरे च।
गूढपाद्(द) पु॰ गूढा पादा यस्य वा पाद्भावः। सर्पे।
गूढपुरुष पु॰ कर्म॰। गुप्तचरे, प्रणिधौ।
गूढपुष्प पु॰ गूढानि संवृतानि पुष्पाण्यस्य।। पक्षवृक्षे।
गूढफल पु॰ गूढं यथा तथा फलति अच्। वदरे।
गूढमैथुन पु॰ गूढं केनाप्यदृश्यं मैथुनं यस्य। काके।
गूढवल्लिका स्त्री॰ कर्म॰। अमृतवल्ल्याम्।
गूढसाक्षिन् पु॰कर्म॰।'अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम्। य॰ श्राव्यते तदा गूढो गूढसाक्षी स उच्यते' इत्युक्ते साक्षिभेदे
गूढाङ्ग पु॰ गूढान्यङ्गान्यस्य। कच्छपे।
गूढोत्पन्न पु॰'उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्न स्तस्य स्यात् यस्य तल्पजः' इत्युक्ते पुत्रभेदे।
गृध पु॰न॰। गृ-थक्। विष्ठायाम्।
गूर उद्यमे चुरा॰आ॰अक॰सेट्। गूरयते अजूगुरत।
गूर वधे गतौ च दिवा॰आत्म॰सक॰सेट्। गूर्यते अगूरिष्ट।
गृ सेके भ्वा॰पर॰सक॰अनिट्। गरति अगार्षीत्।
गृज ध्वनौ भ्वा॰पर॰ अक॰सेट्। गर्जति अगर्जीत्।
गृज ध्वनौ भ्वा॰पर॰अक॰सेट् इदित्। गृञ्जति अगृञ्जीत्।
गृञ्जन पु॰ गृञ्जाते भक्ष्यत्वेन कथ्यते रोगेषु गृञ्जि-ल्युट्। 'गन्धजातिरसैस्तुल्य गृञ्जनाख्यः पलाण्डुना'इत्युक्तलक्षणे मूलभेदे (रसुन) इति ख्याते मूलभेदे च। विषदग्धपशुमांसे न॰। [अगर्द्धीत्। गर्द्धिता-गृद्धा।
गृध अभिकाङ्क्षायां दिवा॰ पर॰सक॰ सेट्। गृध्यति अगृधत्-
गृध्नु त्रि॰ गृध-क्नु। लुब्धे।
गृध्र पु॰ गृध-क्रन्। (शकुनि) खगभेदे।
गृध्रनखी स्त्री॰ गृध्रस्य नखइव पत्रादि अस्याः ङीप्। वदर्य्याम् (कुलेखाडा) कुलिकवृक्षे च।
गृध्रराज पु॰ ६त॰। गरुडात्मजे जटायुखगे।
गृष्टि स्त्री॰ सकृत् गर्भं गृह्णाति ग्रह-क्तिच्-पृ॰नि॰। सकृत्-प्रसूतायां गवि,वराहक्रान्तायां,वदरायामोषधौ,काश्मर्य्याञ्च
गृह ग्रहणे अद॰चु॰आत्म॰सक॰सेट्। गृहयते अजगृहत
गृह न॰ ग्रह गेहार्थे क। इष्टकादिरचिते गेहे। गृह-ग्रहणे अच्। कलत्रे 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते' इति स्मृतिः। नामनि, मेषादिभवने राशौ च। अर्द्धर्चादिपाठादयमुभयलिङ्गः तत्र एकत्वे न॰ पुंलिङ्गस्तु बहुवचनान्तएव 'तत्रागारं धनपतिगृहा'-निति मेघदूतम्। कलत्रेऽपि दाराशब्दवत् ब॰व॰।
गृहकच्छप पु॰ गृहे कच्छप इव। पेषणशिलायाम्।
गृहकन्या स्त्री॰ गृहे कन्येव। घृतकुमार्य्याम्।
गृहकारक पु॰ गृहं करोति कृ-ण्वुल्। (घरामि) गृहनिर्म्माणकारके वर्णसङ्करभेदे। [चिलकरखे (घुघु)
गृहनाशन पु॰ गृहं नाशयति नश-णिच् ल्यु। वनकपोते
गृहगोधा स्त्री॰ गृहस्य गोधेव। (टिकटिकी) ज्येष्ठ्याम्। स्वार्थे कन् तत्रैवार्थे।
गृहपति पु॰ ६त॰। गृहस्वामिनि,गृहस्थे,मन्त्रिणि,धर्मे च
गृहभूमि स्त्री॰ गृहयोग्या भूमिः। वास्तुभूमौ।
गृहमणि पु॰ गृहे मणिरिव। प्रदीपे।
गृहमृग पु॰ गृहस्य मृगइव। कुक्कुरे। [गृहस्थे।
गृहमेधिन् पु॰ गृहैर्दारैर्मेधते संगच्छते मेध-सङ्गमे णिनि।

गृहमेधीय पु० गृहमेधिनोऽयं छ । गृहस्थकर्त्तव्ये धर्मे ।
गृहयालु त्रि० गृह-आलु । ग्रहीतरि । [समीपस्थोपवने ।
गृहवाटिका स्त्री० गृहसमीपे वाटिका आरामः । गृह-
गृहस्थ पु० गृहेषु दारेषु तिष्ठति अभिरमते स्था-क । गृहिणि
गृहागत पु० गृहमागतः आ+गम-क्त । आगन्तुके, अतिथौ ।
गृहागते त्रि० । [पक्षे उपवने ।
गृहाराम पु० गृहे गृहसमीपे आरामः । गृहसमी-
गृहावग्रहणी स्त्री० गृहमवगृह्यते अनेन अव+ग्रह-करणे
ल्युट् ङीप् । देहल्याम् (देवोयाल) ।
गृहिणी स्त्री० गृह-अस्त्यर्थे इनि । भार्य्यायाम् गेहकर्म-
कुशलायाम् । 'गृहिणी सचिवो मिथः सखी'ति रघु० ।
गृहिन् पु० गृहा दाराः सन्त्यस्य इनि गृहस्थे ।
गृहीत त्रि० ग्रह-क्त । स्वीकृते, ज्ञाते, प्राप्ते, धृते च ।
गृहेनर्द्दिन् पु० गृहे एव नर्द्दति न युद्धे, पात्रेसमितादि०
स० । कापुरुषे रणभीरौ गृहे आस्फालयितरि ।
गृह्य पु० ग्रह-पदास्वैरीत्यादिना क्यप् । गृहासक्ते मृगे पक्षि-
णि च मलद्वारे, वेदोदितकर्म्मप्रयोगज्ञापके गोभिलसूत्रादौ
ग्रन्थभेदे च । अस्वैरिणि आयत्ते, स्वपक्षीये पक्ष्ये च
त्रि० । गृहे भवः यत् । गृहभवे, वस्तुनि त्रि० । स्वार्थे कन्
तत्रैवार्थे । नगरवाह्यस्थे ग्रामे स्त्री० टाप् गृह्या ।
गॄ विज्ञापने चुरा० आत्म० सक० सेट् । गारयते अजीगरत ।
गॄ शब्दे क्र्यादि० पर० प्वादि० सक० सेट् । गृणाति अगारीत्
गॄ निगरणे तु० पर० सक० सेट् । गिरति-गिलति अगारीत्-
अगालीत् । [गेदत् । गेदित्वा गेदवा ।
गेद गतौ भ्वा० आत्म० सक० सेट् । गेदते अगेदिष्ट । अजि-
गेन्दुक(ण्डुक) पु० गच्छतीति ग इन्दुरिव स्वार्थे कन् । कन्दुके
वस्त्रनिर्म्मिते गोलाकारे क्रीडनके । पृषो० वा ह्रस्वे गेण्डुकश्च
गेय त्रि० गै-अच्यगेयेत्यादिना कर्त्तरि यत् । गायने । भावे यत् ।
गीतौ 'गेये केन विनीतौ वा'मिति रघु० । कर्म्मणि यत् ।
गातव्ये त्रि० पूर्व्याहे गेयं सामेति भाष्यम् ।
गेव सेवने भ्वा० आ० सक० सेट् । गेवते अगेविष्ट । अजिगेवत्
गेप कम्पने भ्वा० आत्म० सक० सेट् । गेपते अगेपिष्ट । अजिगेपत्
गेह न० गो गणेशो गन्धर्व्वो वा ईहः ईप्सितो यत्र । गृहे ।
गेहेनर्द्दिन् पु० गृहेनर्द्दिवत् सर्व्वम् । [रणभीरौ ।
गेहेशूर पु० गृहएव शूरः । पात्रेसमितादि स० । कापुरुषे
गै गाने भ्वा० पर० सक० अनिट् । गायति । अगासीत् ।
गैरिक न० गिरौ भवः ठक् । गिरि इति ख्याते पर्व्वतजाते
उपधातुभेदे, स्वर्णे च ।

गैरिकाक्ष पु० गैरिकमिवाक्षि पुष्पमस्य । जलमधूके वृक्षे ।
गैरी स्त्री० गिरौ जाता अण् । (विषलाङ्गली) लाङ्गलीवृक्षे ।
गैरेय न० गिरौ भवः ढक् । (शैलज) शिलाजतुनि ।
गो पु० गम-डो । वृषभे, स्वर्गे, किरणे, वज्रे जले, पशौ, चन्द्रे, वायौ,
सूर्य्ये, ऋषभनामौषधौ च, । सौरभेय्याम् दृष्टौ, वाणे,
दिशि, मातरि, वाचि, भूमौ च स्त्री० ।
गोकण्टक पु० गोर्धेनोः पृथिव्या वा कण्टकः । क्षुरे, विद-
मोक्षिते स्थपुटे, विकङ्कतवृक्षे च (वैंइच) ।
गोकर्ण पु० गौरिव कर्णो यस्य । सर्पे, 'स्ववन्ति गोकर्ण-
शरीरभक्षा' इति चौर० । गौरिव कर्णोऽस्य । अश्वतरे,
मृगभेदे, गणदेवताभेदे, अङ्गुष्ठानामिकायुतविस्तृताङ्गुष्ठमाने,
शैवे तीर्थभेदे च ।
गोकर्णी स्त्री० गौः कर्ण इव यस्याः । मूर्व्वालतायाम् ।
गोकील पु० गोः पृथिव्याः कीलइव । लाङ्गले, मुषले च ।
गोकुल न० गवां कुलं यत्र । गोस्थाने गोष्ठे, 'गोकुले कन्दु-
शालायाम्'इति स्मृतिः । व्रजनामके प्रसिद्धे स्थाने 'गोकुले
रामकेशवावि'ति पुराणम् । ६त० । गोसमूहे ।
गोखुर पु० गोः खुरइव । गोक्षुरवृक्षे ६त० । गवां क्षुरे ।
गोग्रन्थि पु० गोर्ग्रन्थिरिव । करीषे (घुटिया) गवां ग्रन्थिः पङ्क्ति-
र्यत्र । गोष्ठे । गोर्ग्रन्थिरिव, गोजिह्विकौषधौ ।
गोघ्न पु० गौर्हन्यते यस्मै हन-सम्प्रदाने टक् । अतिथौ तदा-
गमने हि मधुपर्कार्थं गोवधो विहितः । कर्त्तरि टक् ।
गोघातके त्रि० ।
गोचर पु० गावः इन्द्रियाणि चरन्त्यस्मिन् नि० घ । इन्द्रिय-
विषये रूपरसादौ । गावश्चरन्त्यस्मिन् । गवां प्रचार-
स्थाने, देशमात्रे, ज्योतिषोक्ते जन्मराश्यवधिके तत्तत्
स्थाने सूर्य्यादिग्रहगमनेषु च । 'गोचरे वा विलग्ने वा ये
ग्रहारिष्टसूचकाः इति ज्योतिषम् ।
गोचर्म्मन् न० ६त० । गवां चर्म्मणि, 'सप्तहस्तेन दण्डेन त्रिंशद्दण्डै-
र्निवर्त्तनम् । दश तान्येव गोचर्म्मे'त्युक्ते भूमिपरिमाणभेदे च
गोच्छाल पु० गां भूमिमाच्छादयति छद णिच् अण् ष० ।
भूकदम्बे (चाकुलिया) । [न्दम् । मोद्गरादिषु ।
गोजा स्त्री० गवि पृथिव्यां मौद्गरादिक्रमेण जायते विट् आ-
गोजिह्वा स्त्री० गोर्जिह्वेव । (गोजिया) लताभेदे । स्वार्थे कन्
अत्रैवार्थे । [गवाट स्त्री । अत्र (ताराज) दीर्घदन्ते पु०
गोडुम्बा स्त्री० गां भूमिं तुम्बति अर्द्दते गवि च वृ० । (गोधूम)
गोणी स्त्री० गुण वर्ज्जे नि० गुण गोण+आवपदेशे ङीप् ।
धान्याधारे (गुण, छाला) आवपनार्थे छिद्ररहिते, शाण्याम्,

'द्विरूपा गोत्रगुराह्वने ति मानभेदे, द्रोणीपरिमाण च ।

**गोऽण्ड** पु॰ गोरण्ड इव । नीचजातिभेदे (गांड) तुङ्गनाभौ च तद्वति

**गोतम** पु॰ ब्रह्माण पुत्रे स्वनामख्याते मुनिभेदे ।

**गोतीर्थ** न॰ गोष्ठैतक तनुस्विला तीर्थमिव । गोष्ठे ।

**गोत्र** पु॰ गां पृथिवीं त्रायते त्रै क । पर्व्वते । नामनि, कानने, क्षेत्रे पथि, छत्रे सजातीयभणे, पौत्रादपत्ये वंशे ऋपि-गन्दवाच्येषु कादिपुरुषेषु शाण्डिल्यादिषु चतुर्विंशतौ मनू-ष्येषु च । विस्तरो वृहदभिधाने ।

**गोत्रज** त्रि॰ गोत्रे समाने गोत्रे जायते जन-ड । एकगोत्रोत्पन्ने

**गोत्रभिद्** पु॰ गोत्रान् पर्व्वतान् भिनत्ति भिद-क्विप् । इन्द्रे ।

**गोत्रा** स्त्री॰ गोत्रा पर्व्वता सन्त्यस्या अर्श आदित्वादच् । धरायाम् । गो+समूहे त्रल् । गोसमूहे । [दन्ते पु॰

**गोदन्त** न॰ गोर्दन्त इवावयवो यस्य । हरिताले । ह्रत॰ । गवा

**गोदान** न॰ गाव दीयन्तेऽत्र विप्रेभ्यः दो-ल्युट् । केशान्त-रूपसंस्कारभेदे 'अथ स गोदानविधेरनन्तर मित रघु ।

**गोदारण** न॰ गां भूमि दारयति ट णिच् ल्यु । लाङ्गले, कुद्दाले च । [गोधायाइनमन्त्र

**गोदावरी** स्त्री॰ नदीभेदे । गोदावरि । सरस्वति । इति वचे

**गोधन** न॰ गवां धन समूह । गोसमूहे । गोरेव धनमस्य । गो-रूपधनवति त्रि॰ । गौरेव धनम् । गोरूपे धने न॰।

**गोधा** स्त्री॰ गुध्यते वेष्ट्यतेवाहुरनया करणे घञ् । धनुर्गुणा घातवारणाय प्रकोष्ठे बद्धे चर्मणि । कर्त्तरि अच् । (गोसाप) इति ख्याते सर्पभेदे 'शशक शल्लकी गोधा' मनु । स्वार्थे कन् अत्रैवार्थे ।

**गोधापदी** स्त्री॰गोधेव पादो मूलमस्या स्वाङ्गत्वात् जातित्वाद्वा ङीपि पद्भाव । (गोयालिया) लताभेदे। स्वार्थे कन् अत्रैवार्थे

**गोधास्कन्ध** पु॰ गोधेव स्कन्धोऽस्य । विट्खदिरे ।

**गोधि** पु॰ गुध-इन । ललाटे, गोधाया च ।

**गोधिनी** स्त्री॰ गुध णिनि । वृहतीभेदे ।

**गोधूम** पु॰ गुध-ऊम । व्रीहिभेदे (गोंहुम) नागरङ्गे च ।

**गोधूलि** पु॰ गोभ्य उत्थिता धूलिर्यत्र काले । (सन्ध्यातपाकृष्टित पश्चिमदिग्विभागे व्योम्नि स्फुरद्विरलतारकसन्निवेशे । यद्वे गवां खुरपुटोद्धतैरजोभिर्धूलिरित्युक्तः काले ।' .

**गोनर्द** पु॰ गां जल नर्दयति नर्द अण् । सारसपक्षिणि, पर्व्वतभेदे च । कैवर्त्तीमुस्तके न॰ ।

**गोनर्दीय** पु॰ गोनर्दे तत्समीपे देशे भव । पाणिनौ मुनौ ।

**गोनस** पु॰ गोरिव नासास्य नसादेश । सर्पभेदे ।

**गोप** पु॰ गां भूमि वा पाति रक्षति पा क । (गोयाला) जाति-भेदे । ग्रामाधिकृते भूरक्षके उपकारके च त्रि॰ ।

**गोपघोण्टा** स्त्री॰ गोपप्रिया घोण्टा । हरिकेलौ 'ककरी-मदघावारो इष्ट लघुस्मफलो भवेत् । अटव्याभेर मा घोण्टा गोपघोण्टेति कीर्त्तितेत्युक्तेषु च ।

**गोपति** पु॰ ६त॰ । गवां पत्यौ वृषे, (षाड) वृषपतौ शिवे, भूमि पतौ, नृपे श्रीकृष्णे, किरणपतौ सूर्य्ये, स्वर्गपतौ इन्द्र-स्वर्णनामौषधौ च ।

**गोपदल** पु॰ गोपदमात्रस्थाम लाति ला क । गुवाके ।

**गोपभद्र** पु॰न॰ गोपेभ्यो भद्रमस्मात् ५व॰ । शालूके । [गाम्भार्याम्

**गोपभद्रिका** स्त्री॰ गोपेभ्योभद्र यस्मात् ५व॰ कप अतइत्त्वम ।

**गोपवल्ली** स्त्री॰ गां पाति पा-क कर्म॰ । मूर्व्वालतायां श्यामा लतायां (श्यामालता) ।

**गोपा** स्त्री॰ गां पाति पा क टाप् । श्यामालतायाम् ।

**गोपानसी** स्त्री॰ गवां किरणानां पान गोपान गोपान स्यति सो-क गौरा॰ ङीष । वलभीषु छादनार्थ वक्रे वक्रकाष्ठे (मुदनी) वलभाधारे पटलाधारे वंशपञ्जरे च । [रक्षके च

**गोपाल** पु॰ गा सुरभेद्वयमादिक भूमि वा पालयति । गोपार्थे,

**गोपालकर्कटी** स्त्री॰ । पाल अण् गोपालस्य गोरक्षकस्य प्रिया कर्कटी । क्षुद्रकर्कट्याम् ।

**गोपुच्छ** पु॰ गो पुच्छ इव पुच्छो यस्य । गोलाङ्गूलवानरे । गोपुच्छाकारत्वात् हारभेदे । ६त॰ । गोलाङ्गूल न॰ ।

**गोपुर** न॰ गावः पयन्ति यत्र इ क्त॰क । पुरद्वारे कैवर्त्तीमुस्तके च

**गोप्य** पु॰ गुप-यत् । दासे दासीपुत्रे । रक्षणीयमात्रे गुह्ये च त्रि॰

**गोमती** स्त्री॰ नदीभेदे वेदमन्त्रभेद च । [अजगोमत त ।

**गोम** लेपने अद॰ चुरा॰ उभ॰ सक॰ सेट् । गोमयति ते

**गोमन्त** पु॰ विन्ध्यपर्व्वतस्य प्रत्यन्तपर्व्वते ।

**गोमय** पु॰न॰ गवां पुरीषम् गो+मयट् । गोपुरीषे (गोबर)।

**गोमयच्छत्र** न॰ गोमये तदाधारस्थाने छत्रमिव । शिलीन्ध्रे (छातिया) । [(विछापोका) कीटभेद

**गोमयोत्था** स्त्री॰ गोमयादुत्तिष्ठति उद्+स्था क टाप् । (गुब

**गोमायु** पु॰ गां विकृता वाच मिनोति मा-उण् । शृगाले, गन्धर्वभेदे च ।

**गोमिन्** त्रि॰ गो+अस्त्यर्थे मिनि । गवां स्वामिनि । शृगाले पु॰

**गोमुख** पु॰ गोरिव मुखमस्य । यक्षभेदे नक्रे कुटिला-गारे वाद्यभाण्डे चौरकृतसन्धिभेदे लेपने तन्त्रोक्ते जप मालाच्छादनार्थे वस्त्रभेदे नर्म्मिते यन्त्रभेदे च । हिमा लयैकदेशात गङ्गापतनगुहायां स्त्री॰ ङीप् ।

**गोमुखिका** स्त्री॰ गोमुख साधनत्वेनास्त्या ठन् । गोमुखजातायां

स्त्व या गोमतत्तुल्यमणिविशेषविशेषरति काव्यप्रकाशे च ।
गोमेद पु० मणिभेदे द्वीपभेदे च । 'गोमेदे गोमतिनाम इत्यु-
पक्रम्य यत्राचास्ते ह्रतागावो दग्धा कोपाग्निना सदा ।
तदा तस्मान्मही लक्षा गोमेदः स ततोऽभवदिति पुराणेऽस्य
गोमेदता निरुक्ता ।
गोमेध पु० गौः मेध्यते यत्र मेध आधारे घञ् । यज्ञभेदे ।
गोरक्ष पु० रक्षतीति रक्ष-अच् । नारङ्गवृक्षे (गोरक्षचाकुलिया)।
लताभेदे च । गोरक्षके त्रि० ।
गोरक्षकर्कटी स्त्री० कर्म० । क्षुद्रकर्कट्याम् (राखालकांकुड़)।
गोरक्षजम्बू स्त्री० गोरक्षे गोपे जम्बुरिव । धौरट्टाकवृक्षे
गोधूमे च । [(गोरक्षचाकुलिया) क्षुपभेदे ।
गोरक्षतण्डुली स्त्री० गोरक्ष तण्डुल वीज यस्याः ।
गोरक्षतुम्बी स्त्री० गोरक्षी तुम्बी । कुम्भाकारतुम्ब्याम् ।
गोरोच न० गौ किरण इव रोचते रुच-अच् । हरिताले
गोरोचना स्त्री० गोभ्यो जाता रोचना हरिद्रा । स्वनाम-
ख्याते गन्धद्रव्ये 'गोरोचनालक्तककुङ्कुमेनेति तन्त्रम् ।
गोर्द न० गुर अस्त्रादित्वात् नि० । मस्तिष्के मगजमस्ते इति
गोल पु० गुड वन् डलयोरैक्याम् । सर्व्वतोवर्त्तुले, मदनद्रुमे,
भर्त्तरि मृते जारजे पुत्रे, ज्योतिर्मोक्ते भूगोले खगोले,
एकराशौ षड्ग्रहयोगे च । मण्डले न० । स्वार्थादौ कन्
मृते भर्त्तरि जारजाते पुत्रे, मणिके (जाला) गुडे, पिण्डे,
गन्धरसे कलाये च ।
गोला स्त्री० गां दीप्तिं लाति ला क । गोदावरीनद्याम्
सख्यां, कुनट्यां मनःशिलायां, मणिके भाण्डे, बालक्रीडनके च
गोलाङ्गूल पु० गौरिव कृष्णं लाङ्गूलमस्य । कृष्णमुखे वानर-
भेदे न्यायभेदे च । [गिलीम्बे च (क्षातिया)
गोलास पु० गवि गोमये लासो जन्म यस्य । गोमयकीटे,
गोलिह पु० गोभिर्लिह्यते लिह घञर्थे क । घण्टापाटलौ
(घण्टापारुलि) । [पि रलि) ।
गोलीढ पु० गोभिर्लिह्यते लिह-क्त । घण्टापाटलौ (घण्टा-
गोलोक पु० न० ६त० । वैकुण्ठस्य दक्षिणभागस्थे स्थानभेदे,
विष्णुनिवासस्थाने पु० ।
गोलोमिका स्त्री० गो गोमय इव लोमान्यस्य ङीप् तत
स्वार्थे कनि ह्रस्वः । (दावुटी) (गोधुमा) इति च
ख्यातायां महारियाम् औट्कदुरकायाम् ।
गोलोमी स्त्री० गौरिव गोलोमसदृश लोमानि यस्य ङीप् । श्वेत-
दूर्वायाम् । गोलोम्नः जाता अण् वचायाम् । गोलोमा-
मियम् अण् । वेश्यायाम् ।

गोवन्दनी स्त्री० गवि भूमौ वन्द्यते ल्युट् । प्रियङ्गौ, पीतचण्डो
लक्षे च । [भेदे ग्रामादिद्वारा तस्य हि गोवर्द्धकत्वम् ।
गोवर्द्धन पु० गा वर्द्धयति वृध णिच् ल्यु । वृन्दावनस्थे पर्वत-
गोवर्द्धनधर पु० गोवर्द्धनं पर्व्वतं धारयति धृ अच् । श्रीकृष्णे
नन्दनन्दने । [गवाध्यक्षे त्रि०।
गोविन्द पु० गां विन्दति विद-श । श्रीकृष्णे, वृहस्पतौ च ।
गोविष पु० न० ६त० । गोमये ।
गोशीर्ष न० गौ शीर्षमिव गोशीर्ष पर्व्वत तत्रजातत्वात् ।
मलयैकदेशे जाते चन्दने । ६त० गोमस्तके न०।
गोशीर्षिका पु० गोशीर्षमिव कायति कै-क । द्रोणपुष्पीवृक्षे
पद्मभाद्रिजाते गोरोचनातुल्ये चन्दनभेदे च । [शृङ्गे
गोशृङ्ग पु० गो शृङ्गमिव शृङ्गमस्य यस्य । वर्वुरवृक्षे । ६त० गो
गोष्ठ स्थाने भ्वा० आत्म० अक० सेट् । गोष्ठते अगोष्टिष्ट ।
गोष्ठ न० गावस्तिष्ठन्त्यत्र घञर्थे क षत्वम् । गवां स्थाने ।
गोष्ठी स्त्री० गावोऽनेका वाचस्तिष्ठन्त्यत्र घञर्थे क षत्व गौरा०
ङीप् । सभायाम् ।
गोष्पद न० गोः पदम्, गाव पद्यते यस्मिन् देशे वा घुट् ।
गो पदजाते गर्त्ते, गोपदप्रमाणे च । गोभिः सेवितो
देशः । गोप्रधाने देशे त्रि० ।
गोसख्य पु० गाव सचते सच अच् । गोपे ।
गोसम्भवा स्त्री० गोरिव सम्भवो लोमादिरूपाकारो यस्याः ।
श्वेतदूर्वायां । गोजाते त्रि० ।
गोसव पु० गाव सूयन्ते वध्यन्तेऽत्र सु अप् । गोमेधयज्ञे ।
गोस्तन पु० गो स्तना इव गुच्छो यस्य । चतुर्यष्टिकहारे ।
गोस्तनी स्त्री० गोरिव स्तन फलमस्याः । द्राक्षाभेदे ।
गोस्थानक न० गवां स्थानं स्वार्थे कन् । गोष्ठे ।
गोहरितकी स्त्री० गो हरितकीव हितकारित्वात् । विल्ववृक्षे
गोहित पु० गवां हितं यस्मात् ५ब० । विल्वे, घोषलतायाञ्च ।
गोहितकारके त्रि० ।
गौड पु० । 'वङ्गदेशं समारभ्य भुवनेशान्तगं शिवे । गौडदेशः
समाख्यात इत्युक्ते देशे । तद्देशस्थे जने ब०व० । 'सार-
स्वता कान्यकुब्जा गौडमैथिलोत्कलाः पञ्च गौडा इति
ख्याताविन्ध्यस्योत्तरवासिन इत्युक्ते विन्ध्यपर्व्वतोत्तरभा-
गवासिषु ब्राह्मणभेदेषु च ।
गौडवाम्लु(स्तु)क पु०न० 'तद्देव चेत् इक्षुतुल्य रसं आरोह-
वाह्यकमिश्रं यानकभेदे । [काव्यरीतिभेदे च ।
गौडी स्त्री० गुडस्य विकारः अण् । सुराभेदे अलङ्कारोक्ते
गौण त्रि० गुणादागत अण् । गुणयोगात् प्रवृत्ते शब्दे ...

इन्द्रोपपादितेऽर्थे च । गर्द्दनिके अर्थबोधकतामक्तिरूपे वृत्तिभेदे स्त्री० ङीप् ।

**गौतम** पु० गोतमस्यापत्यम् शिष्यो वा अण् । शतानन्दे नाचिकेतसो जनके मुनिभेदे, शाक्यसिंहे च । [गरीनद्याम्

**गौतमसम्भवा** स्त्री० गौतमात् सम्भवतीति अच् । गोदा-

**गौतमी** स्त्री० गोतम+इदमर्थे अण् ततो ङीप् । गोतमपत्न्यां तथा गोतमप्रदर्शितविद्यायाम् शाक्यसिंहप्रणीतायाञ्च विद्यायां, गोदावरीनद्याम् राक्षसीभेदे, रजन्यादिषु च ।

**गौधार** पु० गोधाया अपत्यम् । आरक् । गोधापुत्रे ।

**गौधेय** पु० गोधा+ढक् । गोधासुते ढक् गौधेरोऽप्यत्र ।

**गौर** पु० गुर-र नि० । श्वेतसर्षपे, चन्द्रे, धवदृक्षे, अरुणवर्णे, श्वेतवर्णे च तद्वद्वर्णवति, विशुद्धे च त्रि० । स्त्रियां गौरी । केशरे, पद्मजे, कुङ्कुमे, स्वर्णे च न० ।

**गौरजीरक** पु० कर्म० । श्वेतजीरके ।

**गौरत्वच्** पु० गौरी त्वक् यस्य । इङ्गुदीवृक्षे (जीयपुति)

**गौरव** न० गुरोर्भावः अण् । गुरुत्वे अभ्युत्थानादिसम्माने च ।

**गौरवित** त्रि० गौरवं जातमस्य तार० इतच् । पूज्ये ।

**गौरशाक** पु० गौरः शाकोऽस्य । मधूकभेदे ।

**गौरी** स्त्री० गौर+ङीष् 'शङ्खेन्दुकुन्दधवला ततो गौरी तु सा मतेत्युक्तायां पार्वत्याम् 'अष्टवर्षा भवेद्गौरी'त्युक्तायाम् अष्टवर्षायाम् अप्राप्तरजस्कायां कन्यायां, हरिद्रायाम् दारुहरिद्रायां, गोरोचनायाम्, प्रियङ्गौ, भूमौ, नदीभेदे, मञ्जिष्ठायां, श्वेतदूर्वायां, मल्लिकायाम्, तुलस्याम्, सुवर्णकदल्याम्, आकाशमांसी रागिणीभेदे च । [कुमार ।

**गौरीपुष्प** पु० गौरीव पीतं पुष्पमस्य । प्रियङ्गुवृक्षे । [मिति

**गौरीशिखर** न० पार्वती तपस्यास्थाने 'जगाम गौरीशिखर-

**गौष्ठीन** न० पूर्वं भूतं गोष्ठं खञ् । भूतपूर्वगोष्ठे । [ग्निव

**ग्रथ** कुटिलीकरणे आत्म० इदित् सक० सेट् । ग्रन्थते अग्र-

**ग्रथित** त्रि० ग्रन्थ संदर्भे-क्त । गुम्फिते, हिंसिते, आक्रान्ते च ।

**ग्रन्थ** संदर्भे वा चु० पक्षे क्र्या० उभ० सक० सेट् । ग्रन्थयति-ते ग्रथ्नाति ग्रथ्नीते अजग्रन्थत्, अग्रन्थीत् अग्रन्थिष्ट ।

**ग्रन्थ** पु० ग्रन्थ-घञ् । गुम्फने, धने च । करणे घञ् । शास्त्रे । अनुष्टुप्छन्दस्के पद्ये च ।

**ग्रन्थि** पु० ग्रन्थ-इन् । वंशादिपर्वणि (गाँट) रज्ज्वादेः कौटिल्ये, 'ग्रन्थग्रन्थिरिह कचित्क्वचिदिति नैषधम् । ग्रन्थिपर्णवृक्षे, बन्धने, रोगभेदे च । [गण्डूकी, करीरे च । स्वार्थे क पु० ।

**ग्रन्थिक** न० ग्रन्थ-स्वार्थे ठन् । पिप्पलीमूले । ग्रन्थिपर्णे,

**ग्रन्थिदूर्वा** स्त्री० ग्रन्थिमती दूर्वा (गाँटदूर्वा) दूर्वाभेदे ।

**ग्रन्थिपर्ण** न० ग्रन्थिमन्थयुतं पर्णं यस्य । चोरनामगन्धद्रव्ये ।

**ग्रन्थिफल** पु० ग्रन्थिः ग्रन्थियुतं फलमस्य । कपित्थवृक्षे, मदनवृक्षे मुकुरे च (कुकुरचोडा) ।

**ग्रन्थिभेद** पु० ग्रन्थिं भिनत्ति भिद-अण् (गाँटकाटा) चौरभेदे 'अङ्गुलीं ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे' इति स्मृतिः ।

**ग्रन्थिमत्** पु० ग्रन्थिः ग्रन्थिरस्यास्ति मतुप् (हाडजोड़ा) अस्थिसंहारवृक्षे । ग्रन्थियुक्ते त्रि० ।

**ग्रन्थिमत्फल** पु० ग्रन्थिमत् फलं यस्य । (मान्दार) लकुचे ।

**ग्रन्थिमूल** न० ग्रन्थियुतं मूलमस्य । गृञ्जने (गाजर)

**ग्रन्थिमूला** स्त्री० ग्रन्थि ग्रन्थयुतं मूलमपि यस्याः । मालादूर्वायाम्

**ग्रन्थिल** न० ग्रन्थिं लाति ला-क । पिप्पलीमूले, आर्द्रके च । विकङ्कतवृक्षे, (बइचि) करीरे, तण्डुलीयशाके (पो.दना) भद्रमुस्तायां मालादूर्वायाञ्च स्त्री० । छिन्नावल्ल्याम् पिण्ड्रके चोरनामगन्धद्रव्ये पु० । ग्रन्थिमति त्रि० । [ग्रन्था ।

**ग्रस** भक्षणे भ्वा० आत्म० सक० सेट् । ग्रसते अग्रसिष्ट अग्रसिष्ट

**ग्रस** भक्षणे वा० चुरा० उभ० पक्षे भ्वा० सक० सेट् । ग्रासयति-ते ग्रसति अजिग्रसत्-त अग्रासीत् अग्रसीत् ।

**ग्रस्त** न० ग्रस-क्त । लुप्तवर्णपदे वाक्यविशेषे, भक्षिते त्रि० ।

**ग्रह** ग्रहणे क्र्या० उभ० सक० सेट् । गृह्णाति गृह्णीते अग्रहीत् अग्रहीष्ट ।

**ग्रह** आदाने वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् । ग्राहयति-ते ग्रहति । अजिग्रहत् त अग्राहीत् त अग्रहीत् ।

**ग्रह** पु० ग्रह-अच् । सूर्यादिषु नवसु । अनुग्रहे, निर्बन्धे, ग्रहणे, रणोद्यमे, बालादिपीडाकारकेषु पूतनादिषु, चन्द्रसूर्ययोरुपरागे च 'तदा सम्भाव्यते ग्रह' इति ज्योतिषम् ।

**ग्रहण** न० ग्रह भावे करणे ल्युट् । स्वीकारे, आदाने, आदरे, करे, ज्ञाने, बन्धने, चन्द्रसूर्ययोरुपरागे, इन्द्रिये च ।

**ग्रहणि(णी)** स्त्री० ग्रह-अनि वा ङीप् । स्वनामख्याते रोगभेदे । [रोगयुक्तेऽपि त्रि० ।

**ग्रहपीडन** न० ग्रहणां कृतिः पुः-ल्युट् । ग्रहकृते, ग्रहपी-

**ग्रहनाश** पु० ग्रहं ग्रहजन्यादिदोषं नाशयति नश-णिच् अण् । (छातियान) वृक्षभेदे ।

**ग्रहपति** पु० ६त० । सूर्ये शनं ग्रहनायकत्वादस्य ।

**ग्रहयाग** पु० ग्रहेभ्यो यागः । अनिष्टनिवारणाय पूजनं वा । ग्रहोद्देशके यागभेदे ।

**ग्रहाधार** पु० ६त० । ध्रुवनक्षत्रे ।

**ग्रहवह्नि** पु० ग्रहाणां वह्निः । 'वह्निं विद्वो ग्रहैश्च' करालिष । द्वितीयं च ग्रहवह्निः सह तेषां ज्ञान०

छन्दोग्रन्थ विशेषो नवेते षड्जग्रामपत्तुले इत्यादि क्रमेण वह्निभेदे ।

ग्राम पु० ग्रस मन् आदन्तादेश विप्राय विप्रभ्राय यत चैव व्रस्मि हि । यत ग्राम इतिप्रोक्त शूद्राणा वास एव च' 'तथा शूद्रजनप्राया सुसमृद्धकृषीवला' क्षेत्रोपयोगभूमध्ये वसति ग्रामसंचिकेल्युक्तलक्षणे विप्रादीनां वासस्थाने, यथा कुटुम्बिन सर्वैश्चैकीभूता भवन्ति हि । तथा स्वराणां सन्दोहो ग्राम इत्यभिधीयते' इत्युक्ते स्वरभेदे, किञ्चिच्च उत्तरपदे तदर्थसंघाते च यथा शब्दग्राम गर्दभग्राम इत्यादि

ग्रामकठ्ठा स्त्री० ग्रह-बाह्यार्थ कप् । ग्रामबहिर्भूतायां येन ग्राम् ।

ग्रामणी पु०ग्राम नयति नी-क्विप् णत्वम् । नापिते । पत्यौ, प्रधाने च त्रि० । ग्रामगम्यायां वेश्यायां,नीलिकायाञ्च स्त्री० ।

ग्रामता स्त्री० ग्रामाणां समूह तल् । ग्रामसमूहे ।

ग्रामधर्म पु० ग्रामे भव अण् कर्म० । मैथुने व्यवाये ।

ग्राममुख पु० ग्रामस्य मुख यत । हट्टे ।

ग्रामखग पु० ६त० । कुक्कुरे । [विवि

ग्रामयाजक पु०६त० । ग्रामस्य नानावर्णानां याजके अपकृष्ट

ग्रामान्त न० ६त० । ग्रामस्य समीपस्थे ग्रामनिकटे ।

ग्रामीण पु० ग्रामे भव खञ् । कुक्कुरे, काके, ग्राम्यशूकरे च । ग्रामोद्भवे त्रि० । ग्रामीणस्य प्रथमत इति भाषापरि० नीलिकोषधौ, पालङ्क्याशाके च स्त्री० ।

ग्राम्य त्रि० ग्रामे भव य । प्राकृते मूढे, ग्रामभवे, ज्योतिषोक्ते मिथुनादिराशिभेदे 'ग्रामेष्वह्यग्राम्याद्या ग्राम्या प्रोक्ता' इत्युक्तेषु पशुभेदेषु अश्लीलव्यञ्जके भगाद्यभिधाने, च । तुलायां नील्याञ्च स्त्री० ।

ग्राम्यकन्द पु०-कर्म० । कन्दभेदे (ग्रामेर ओल) ।

ग्राम्यकर्कटी स्त्री० कर्म० । कुष्माण्डे ।

ग्राम्यकुङ्कुम न० कर्म० । कुसुम्भे ।

ग्राम्यपशु पु० कर्म० । 'गौरजोऽश्वो मनुष्यश्च अश्वतर गर्दभा' इत्युक्तेषु सप्तसु पशुषु ।

ग्राम्यवल्लभा स्त्री० ६त० । पालङ्क्याशाके (पालङ्)

ग्राम्याश्व पु० कर्म० । गर्दभे ।

ग्रावन् पु० ग्रसते ग्रस-ड च आवनति वन-संभक्तौ विच् कर्म० । प्रस्तरे पर्वते, मेघे च । दृढे त्रि० ।

ग्रास पु० ग्रस घञ् । पिण्डाकारे आहारे कवले 'कुक्कुटाण्डप्रमाणं वा यावद्वा प्रविशेन्मुखम् । एतं ग्रासं विजानीयादि त्युक्ते अशपूरणयोग्याहारे ।

ग्राह पु० ग्रह भावे घञ् । आदाने ग्रहणे, ग्रहवे च । कर्त्तरि ण । जलजन्तुभेदे (हाङ्गर) । [नरि लि० ।

ग्राहक पु० ग्रह ण्वुल् । श्येनपक्षिणि विषवैद्ये च । ग्रही

ग्राहिणी स्त्री० ग्रह-णिनि । क्षुद्रदुरालभायाम् (विछुट) ताम्रमूलाख्ये, गहीतायाञ्च । [कारके च त्रि० ।

ग्राहिन् पु० ग्रह णिनि । कपित्थे । ग्राहके, मलबन्ध-

ग्राहिफल पु० ग्राहि मलबन्धकं फलं यस्य । कपित्थवृक्षे ।

ग्राह्य त्रि० ग्रह-ण्यत् । ग्रहीतुमुचिते, ग्रहणयोग्ये,उपादेये, स्वीकार्य्ये, ज्ञेये च ।

ग्रीवा स्त्री० गृ-व नि० । कन्धरायाम् ।

ग्रीष्म पु० ग्रस-म नि० । निदाघे, घर्मजनके आतपादौ तदाधारकाले ज्यैष्ठाषाढमासे ऋतुभेदे च तद्वति त्रि० ।

ग्रीष्मजा स्त्री० ग्रीष्मे जायते जन-ड । (सोणा आता) नवमल्लिकायाञ्च ।

ग्रीष्मपुष्पी स्त्री० ग्रीष्मे पुष्पं यस्या । कदम्बपुष्पवृक्षे ।

ग्रीष्मभवा स्त्री० ग्रीष्मे भवति भू अच् । नवमल्लिकायाम् ।

ग्रीष्मसुन्दर पु० ७त० । (गिमा) शाकभेदे ।

ग्रुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्रोचति अग्रुचत् अग्रोचीत् । ग्रुचित्वा ग्रुक्त्वा ।

ग्रैव न० ग्रीवाया भवम् अण् । ग्रीवाभरणे ।

ग्रैवेय न० ग्रीवाया भवं ढञ् । ग्रीवाभूषणे ढकञ् ग्रैवेयकमप्यत्र । 'ग्रैवेयक नेऽव्ययम्'मिति शाब्दि० ।

ग्लस भक्षणे भ्वा० आत्म० सक० सेट् । ग्लसते अग्लसिष्ट । ग्लसित्वा-ग्लस्त्वा ।

ग्लह आदाने वा चुरा० उभ० पक्षे भ्वा० सक० वेट् । ग्लाहयति ते ग्लहति अजग्लहत् त अग्लहीत् ।

ग्लह पु० ग्लह-च । द्यूतादौ कृते पणे, द्यूते च ।

ग्लास्नु त्रि० ग्लै-स्नु । ग्लानियुक्ते ।

ग्लुच चौर्य्ये गतौ च भ्वा० पर० सक० सेट् । ग्लोचति अग्लुचत्-अग्लोचीत् । क्त्वा वेट् । [अग्लुचत्-अग्लुचीत् ।

ग्लुन्च चौर्य्ये गतौ च भ्वा०पर०सक०सेट् क्त्वा वेट् । ग्लुञ्चति

ग्लेप दैन्ये गतौ चाले च भ्वा० आत्म० सक० सेट् । ग्लेपते अग्लेपिष्ट । अजिग्लेपत् ।

ग्लेव सेवने भ्वा०आ०सक०सेट् । ग्लेवते अग्लेविष्ट । अजिग्लेवत

ग्लेष अन्वेषणे भ्वा० आ० सक० सेट् । ग्लेषते अग्लेषिष्ट अजिग्लेषत् । [अग्लासीत् ।

ग्लै क्षमे हर्षक्षये च भ्वा० पर० अक० अनिट् । ग्लायति

ग्लौ पु० ग्लै-डौ । चन्द्रे, कर्पूरे च ।

घनामय पु० घनो दृढ आमयो यस्मात् ५ब०। खर्ज्जूरवृक्षे।
घनामल पु० घनोऽमल विशेषणस०। वास्तूकशाके।
घनोपल पु० ६त०। घनस्य उपल इव सङ्घत्य कठिनत्वात्। करके (शिल)।
घघ्र गतौ भ्वा० पर० सक० सेट्। घघ्रति अघघ्रीत्।
घरट्ट पु० घृ-अच् घरोऽट्टो यस्मात् ५ब०शक०। (जाता) 'प्रतिकूपथे घरट्टादि'ति नैषधम्।
घर्घर पु० पुनः पुनः घरति दह् लुक् अच्। चलद्वारिध्वनौ नदभेदे हारे, स्वरभेदे च। क्षुद्रघण्टिकायाम् स्त्री०।
घर्घरिका स्त्री० घर्घर+अल्पार्थे कन्। क्षुद्रघण्टायाम् वाद्यभेदे। भृष्टधान्ये, नदभेदे च पु०।
घर्ब गतौ भ्वा० पर०सक० सेट्। घर्बति अघर्बीत्।
घर्म्म पु० घृ सेके मक् नि०गुण। अग्रात्मस्य ग त्वात् निष्यन्दिनि-जले, आतपे, ग्रीष्मे च। [ऊष्मो ग्रणभेदे।
घर्म्मविचर्च्चिका पु० घर्म्मोत्था विचर्चिका। (घामाचि) राजिका
घर्षणाल पु० घर्षणाय अलति पर्याप्नोति अल-अच्। शिला पुत्रके (लोडा)
घर्षणी स्त्री० घृष कर्म्मणि ल्युट ङीप्। हरिद्रायाम्।
घष(स) क्षरणे भ्वा० आत्म० अक० सेट् इ दत्। घष(स)ते अघषि(सि)ष्ट। [घत्स्यति।
घस भक्षणे भ्वा०पर०सक० अनिट्। घसति। अघसत्। घस्ता
घस्मर त्रि० घस क्मरच्। भक्षणशीले।
घस्र पु० घस रक्। दिवसे। हिंस्रे त्रि०।
घाट पु० घट०-अच्। ग्रीवायाः पश्चाद्भागे। तत्रैवार्थे स्त्री० टाप्। स्वार्थे कन् अत्रैवार्थे।
घाण्टिक पु०घण्टया चरति ठक्। 'राज्ञां प्रबोधसमये घण्टाशिल्पास्तु घाण्टिका' इत्युक्तलक्षणेषु राज्ञां प्रबोधनाय घण्टां वादयित्वा स्तुतिपाठकेषु, धुस्तूरे च। घण्टावादके त्रि०।
घात पु० हन घञ्। प्रहारे, मारणे, अङ्कस्य पूरणे, गुणने च। करणे घञ्। बाणे।
घातिन् त्रि० हन ताच्छील्यार्थे णिनि। हननकरणशीले।
घातुक त्रि० हन-उकञ्। हिंस्रे क्रूरे च।
घार पु० घृ सेके घञ्। सेचने। [भक्ष्यभेदे (घिओड़)।
घार्त्तिक पु० घृतेन निर्मितः तस्य विकारो वा ठक्। घृतपूरे
घास पु० घस-कर्म्मणि घञ्। गवादीनां भक्ष्ये तृणभेदे।
घिण्ण ग्रहणे भ्वा० आ० सक० सेट् इ दत्। घिण्णते अघिण्णिष्ट
घु ध्वनौ भ्वा० आत्म० अक० अनिट्। घवते अघोष्ट।
घुट आवर्त्तने भ्वा० आत्म० सक० सेट्। घोटते अघुटत्

अघोटिष्ट। [जुघोट।
घुट प्रतिघाते तु० कुटा० पर० सक० सेट्। घुटति अघुटीत्
घुट पु० घुट अच्। चरणग्रन्थौ गुल्फे। इन्। तत्रैवार्थे स्त्री० वा ङीप्। स्वार्थे कन् अत्रैवार्थे। [जुघोड।
घुड व्याघाते तु० कु० पर० सक० सेट्। घुडति अघुडीत्
घुण भ्रमणे तु० पर० सेट्। घोणते अघोणिष्ट।
घुण भ्रमणे तु० पर० सेट्। घुणति अघोणीत्।
घुण ग्रहणे भ्वा० आत्म० सक० सेट्। घुणते अघोणिष्ट।
घुण पु० घुण-क। स्वनामख्याते काष्ठभक्षकृमौ।
घुण्ट पु० घुट क नि० मुम्। गुल्फे। स्वार्थे कन् तत्रैवार्थे।
घुर भ्वनौ भीमभवने च तु०पर०अक०सेट्। घुरति अघोरीत्।
घुर्घुर पु० घुरित्यव्यक्तं ध्वनिं घुरति घुर-क। (घुर्घुरिया) कीटभेदे शूकरशब्दे च 'स घुर्घुरायितध्वनिरि'ति मा० ३परि०
घुष कान्तौ करणे च भ्वा०आत्म०सक०सेट् इदित्। घुषते अघुषिष्ट
घुष वधे भ्वा०पर०सक०सेट्। घोषति अघुषत्।
घुष शब्दे आविष्करणे च वा चु० उभ० पक्षे भ्वा०पर०सक० सेट्। घोषयति ते घोषति अजूघुषत् त। अघुषत्।
घुसृण न० घुस क्नन्। कुङ्कुमे। 'घुसृणैर्घनैर्जलाशयोदरे' इति नैषधम्।
घूक पु० घू इति कायति कै क। उलूके पेचके।
घूकारि पु० ६त०। काके तस्य पेचकवैरित्वं लोकसिद्धम्।
घूकावास पु० ६त०। शाखोटवृक्षे तस्य निबिडस्तम्बशाखायुक्तत्वेन कोटरत्वात् दिवाभीरोर्घूकस्यावासस्थानत्वात्।
घूर हिंसायां सक० जीर्णतायाम् अक० दि० आत्म० सेट्। घूर्य्यते अघूरिष्ट। घूर्णः। [घूर्णित।
घूर्ण भ्रमणे तु०उभ०सक०सेट्। घूर्णति ते अघूर्णीत् अघूर्णिष्ट
घृ सेके भ्वा० पर०सक०अनिट्। घरति अघार्षीत्। [घारित
घृ सेके चु०उभ०सक०सेट्। घारयति ते अजीघरत् त। घारयित्वा
घृ भासे अक० सेके सक० जु० पर० अनिट्। जिघर्त्ति अघार्षीत्।
घृण दीप्तौ तना० उभ० अक० सेट्। घर्णोति घर्णुते अघर्णीत्।
घृण ग्रहणे भ्वा० आत्म० सक० सेट् इदित्। घृणते अघृणिष्ट।
घृणा स्त्री० घृ सेके नक्। कारुण्ये, दयायां, जुगुप्सायाम्।
घृणि पु० घृ-नि नि० गुणाभाव। किरणे, ज्वालायां, तरङ्गे, सूर्य्ये च।
घृत न० घृ भासे भावे क्त। दीप्तौ। कर्त्तरि क्त। दीप्ते त्रि०। सेकार्थस्य कर्त्तरि क्त। जले पक्वनवनीते आज्ये च न०।
घृतकुमारी स्त्री० घृतप्रधाना कुमारी। स्वनामख्यातायामोषधौ तस्या हि दले दलिते घृतमिव क्षरति।

**घृतपूर** पु० घृतेन पूर्य्यते पूर-घञ् । पक्वान्नभेदे (घिओड) ।
**घृताची** स्त्री० अप्सरोभेदे ।
**घृष** सङ्घर्षे सक० हर्षे अक०भ्वा०आत्म० सेट् । घर्षते अघर्षिष्ट
**घृष्टि** पु० घृष-क्तिच् । वराहे । क्तिन् । घर्षणे,स्पर्द्धायां,विष्णु
    क्रान्तायां,वाराह्याञ्च स्त्री० ।
**घृष्टिला** स्त्री०घृष्टि जातिं ला-क । पृश्निपर्ण्याम् ।(चाकुलिया)
**घोट(क)** पु० घुट-घञ् ण्वुल् वा । अश्वे । [लोके प्रसिद्ध ।
**घोटकारि** पु० ६त० । महिषे तस्य महिषेण सह वैरिभावश्च
**घोणा** स्त्री० घुण अच् । अश्वनासिकायां, नासामात्रे च ।
**घोणिन्** पु० घोणा नासाऽस्त्यस्य व्रीह्यादित्वात् इनि ।
    वराहे तस्य दीर्घनासत्वात् तथात्वम् ।
**घोण्टा** स्त्री० घुण-ट तस्य नेत्वम् ।(सेयाकुल) बदरीभेदे ।
**घोर** पु० घुर-अच् । शिवे, ऋषिभेदे, शास्त्रोक्तेषु रज प्रधानेषु
    आकाशादिविशेषधर्म्मेषु । विषे न० । दारुणे, भयानके,
    दुर्गमे च त्रि० ।
**घोररासन** पु० घोरं रासनं शब्दोऽस्य । शृगाले ।
**घोरा** स्त्री० घुर-अच् । देवताडीलतायां, भयानकायां रात्रौ,
    शास्त्रोक्तायां राजस्य सन्नोष्टसौ,ज्योतिषोक्ते 'रवावुग्रभे
    सङ्क्रमे भास्करस्य भवेद्घोर'नाम्न्युक्तो रविसंक्रान्तिभेदे च।
**घोल** पु०न० घुड-कर्म्मणि घञ् डस्य ल । तक्रे मथितदधि ।
**घोष** पु० घोषन्ति गावोऽत्र घुष-आधारे घञ्। आभीरपल्लयाम्
    भावे घञ्।ध्वनौ,अम्बुदनादे च।कर्त्तरि अच्। अपामार्गे,
    व्याकरणोक्ते वर्णविशेषोत्पत्तौ वाह्यप्रयत्नभेदे च। कांस्ये न०।
**घोषणा** स्त्री०घुष-णिच् युच्। लोके ख्यापनार्थमुच्चै शब्दकरणे।
**घोषा** स्त्री० घुष्यते भ्रमरैरिव कर्म्मणि घञ् । शतपुष्पायां,
    मधुरिकायां, कर्कटशृङ्ग्यां, कोषातक्याञ्च ।
**घ्रा** गन्धग्रहणे भ्वा०पर०अक०प्रहृष्टगात्रे सक०अनिट्। जिघ्रति
    अघ्रात्-अघ्रासीत् । घ्राण -घ्रात । [आघ्राते त्रि०
**घ्राण** न० घ्रायतेऽनेन घ्रा ल्युट् । नासिकायाम् । घ्रा क्त ।
**घ्राणतर्पण** पु०घ्राणं नासिकां तर्पयति तृप-णिच् ल्यु। सुगन्धौ

## ङ

**ङ** पु० ङु-ड । विषये, विषयस्पृहायाम् ।
**ङु** ध्वनौ भ्वा० आत्म० अक० अनिट् । ङवते अङ्गोष्ट ।

## च

**च** अव्य० चि-ड । अन्वाचये (एकस्य प्राधान्येनेतरस्यानुषङ्गि
    कोक्तौ) यथा ग्राम गच्छ ग्रजाश्चानय अत्र ग्रामगमन
    भेरत्र,मुख्यमजानयनन्त्वानुषङ्गिकम् । समुच्चये (परस्परा
    पेक्षारहितस्यानेकस्य एकस्मिन् कर्म्मादौ अन्वये) यथा
    पिता पुत्रश्च ग्रामं गच्छति । अत्रैकस्मिन् गमने कर्म्मणि
    पितुरिव पुत्रस्यापि अन्वय । इतरेतरयोगे (परस्पर
    सापेक्षाणामेकस्मिन् कर्म्मादावन्वये) तत्र च द्वन्द्वसमास एव
    यथा पितापुत्रौ गच्छत । अत्रोभयोरपि एकस्मिन् प्रत्येक
    रूपेण गमने परस्परसापेक्षतयैवान्वय अन्वाचयादयमेवास्य
    विशेष । सापेक्षता च स्वघटितनामोत्तरवर्त्ति विभक्त्यन्व
    यित्वेन । समाहारे (मिलितानामन्वये) यथा हस्तपाद
    मादयति अत्र हस्तादीनां मिलितानामेवान्वय इतरेतरयोगे
    तु प्रत्येकस्यान्वय अथवा तद्दर्शि पदसमुदायोपस्थाप्यतत्तत्
    पदार्थसहतिरेव तत्र प्रधानं सहतेश्चैकत्वात् तत्रैकवचनता ।*
    व्यासवाक्ये च चकारेणोभयत्र इतरेतरयोगस्य समाहार-
    रूपसहतेश्च प्राधान्य द्योत्यते। पक्षान्तरे,अवधारणे,हेतौ,
    तुल्यत्वे, विनियोगे, पादपूरणे च । चण्डेशे, चन्द्रे,
    कच्छपे, चौरे च पु० । दुर्जने निर्वीजे च त्रि० ।
**चक** भ्रान्तौ भ्वा० पर०अक०सेट् इदित् । चङ्कति अचङ्कीत्।
**चक** प्रतिघाते सक० तृप्तौ अक- भ्वा० उभ० सेट् घटा० ।
    चकति-ते अचकीत् अचाकीत् अचकिष्ट । चकयति ।
**चकास** दीप्तौ अदा० जुहो० पर० अक० सेट् । चकास्ति
    अचकासीत । अचचकासत् ।
**चकित** न० चक भावे क्त । भये, । कर्त्तरि क्त । भीते त्रि० ।
    षोड़शाक्षरपादके छन्दोभेदे स्त्री० ।
**चकोर** पु० चक तृप्तौ ओरन् । स्वनामख्याते-पक्षिभेदे चकोर
    पारश्चकरीति मुरारि ।
**चक्क** व्यार्त्तौ चुरा० उभ० सक० सेट । चक्कयति ते अचचक्कत् त
**चक्र** पु० क्रियतेऽनेन कृ घञर्थे क नि० द्वित्वम । चक्रवाके
    पक्षिणि, (चक्रा) रथाङ्गे,(चाका) सैन्ये, समुदाये,राष्ट्रे,दम्भ
    भेदे, कुम्भकारोपकरणे, 'कलसे निजहेतुदण्डज क्रिय-
    चक्रभ्रमिकारितागुणः' इति नैषधम् अस्त्रभेदे।युद्धभेदे, जलावर्त्ते,
    ग्रामजाले, तगरपुष्पे, व्यूहभेदे, तन्त्रोक्तेषु मूलाधारादिषु
    स्थितेषु षट्सु पद्मेषु,सर्व्वतोभद्रादिषु देवार्च्चनयन्त्रेषु 'श्री-
    चक्रमेतदुदितमि'ति तन्त्रम । मन्त्रदोषोपयोगिषु अकडमा
    दिषु, कौलादिचक्रेषु, 'महत्तु भैरवीचक्रे सर्व्वे वर्णाद्विजो
    त्तमा' इति तन्त्रम् अलङ्कारोक्ते काव्यबन्धविशेषे च न० ।
    अर्द्धर्चादित्वात् क्लीबलिङ्गत्वेऽपि लक्ष्यभेदेनैवास्य लिङ्गनियम
**चक्रक** पु० चक्रमिव कायति कै क । स्वापेक्षापेक्षणेक्षितस्य
    मनेऽनिष्टप्रसङ्गरूपे तर्कभेदे ।

चक्रकारक न० नखः हतिलेन चक्रवत वेष्टनं करोति क ण्वुल् इत० । व्याघ्रनखाख्ये गन्धद्रव्ये ।

चक्रकुल्या स्त्री० चक्रस्य तद्वद्वेष्टनाकारस्य कुल्येवाधारः । (चाकुलिया) पृश्निपर्ण्याम् । [चक्रमर्द्दे । (दादमर्द्दन)

चक्रगज पु० चक्रे चक्राकारे दद्रुरोगे गजइव मर्द्दकत्वात् ।

चक्रगुच्छ पु० चक्रमिव वेष्टनाकारो गुच्छ स्तवको यस्य । अशोकवृक्षे । [विष्णौ, सर्पे च ।

चक्रधर पु० चक्रमस्त्रभेद फणामण्डलं वा धारयति धृ-अच् ।

चक्रधारा स्त्री० चक्रस्य धाराग्रम् । चक्रापि यदंशेऽस्य तीक्ष्णता सा चाग्रे एवेत्यग्रमेव धारा ।

चक्रनख पु० चक्राकारो नखइव कुम्भ दि० न णत्वम् । व्याघ्र- [नखाख्ये गन्धद्रव्ये ।

चक्रपद्माट पु० पद्म पद्मानमटति अण् पद्माटोगजइवचक्रे चक्राकारे दद्रुरोगे पद्माट गजइव मर्द्दकत्वात् । चक्रमर्द्दे वृक्षे (दादमर्द्दन) [पृश्निपर्ण्याम्

चक्रपर्णी स्त्री० चक्रमिव पर्णमस्याः ङीप् । (चाकुलिया)

चक्रपाणि पु० चक्रं प्रहरणं पाणौ यस्य । विष्णौ ।

चक्रपाद पु० चक्रं पाद इव गतिसाधनत्वात् यस्य । रथे चक्रमिव पादोऽस्य । हस्तिनि ।

चक्रपुष्करिणी स्त्री० हरिचक्रेण निखाता पुष्करिणी । काशीतीर्थस्थे मणिकर्णिकाख्ये चक्रतीर्थे । [योग ।

चक्रबन्धु पु० चक्रयो मेलकत्वात् बन्धुरिव । सूर्ये दिवाहि तयो

चक्रभेदिनी स्त्री० चक्रौ भिनत्ति परस्पर वियोजयति भिद णिनि । रात्रौ तत्र हि तयोर्वियोग लोकप्रसिद्ध ।

चक्रभ्रम पु० चक्रमिव भ्रमति अच् । कुन्दाख्ये शिल्पिना यन्त्रभेदे

चक्रमर्द्द पु० चक्रं चक्राकारं दद्रुरोगं मृद्नाति मृद अण् । (दादमर्द्दन) क्षुपभेदे । ण्वुल् चक्रमर्द्दकोऽप्यत्र ।

चक्रला स्त्री० चक्र रोगभेद लाति ला क । उच्चटायाम् मुस्ताभेदे

चक्रवर्त्तिन् पु० चक्रे भूमण्डले, वर्त्तितु चक्रं सैन्यचक्रं वा सर्वभूमौ वर्त्तयितु शीलमस्य वृत वृत णिच् वा णिनि । ससद्रपर्यन्तक्षितेरधीश्वरे, वास्तूकशाके च । चक्रात् वर्त्तिनि त्रि० । जतुकाया जटामांस्याम् अलक्तके च स्त्री० ङीप् ।

चक्रवाक पु० चक्राख्येन उच्यते वच परिभाषणे कर्मणि घञ् । स्वनामख्याते खगे । [पर्व्वते । मण्डले न०

चक्रवाड(ल) पु० चक्रमिव वाडते वेष्टयति अच् । लोकालोक

चक्रवृद्धि स्त्री० वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृते'ति स्मृत्युक्ते वृद्धिभेदे (सुदेर सुद) ।

चक्रव्यूह पु० चक्रमिव व्यूह सैन्यस्थितिरचनाविशेष । दुर्गार्थ मण्डलाकारे सैन्यस्थापने ।

चक्रा स्त्री० चक्र इवाकारोऽस्त्यस्याः अर्श आदि अच् । नागरमुस्तायां कर्कटशृङ्ग्याञ्च ।

चक्राङ्ग पु० चक्रस्याङ्गमङ्गं चक्रमिवाङ्ग यस्य । हंसे । चक्रमङ्गमस्य । रथे । [मोचिकायां, मञ्जिष्ठायाञ्च

चक्राङ्गी स्त्री० चक्र लग्निकरमङ्गमस्याः । कटुरोहिण्याम्, हिम-

चक्रिन् पु० चक्र+अस्त्यर्थे इनि । विष्णौ, सर्पे, चक्रवाके, कुम्भकारे सूचके तैलिकभेदे चक्रवर्त्तिनि, चक्रमर्द्दे व्याल नखे, खरे, ग्रामजालिके च । चक्रयति त्रि० ।

चक्रीवत् पु० चक्रवत् भ्रमणमस्यास्ति मतुप् मस्य व नि० अत ईत्वम् । गर्द्दभे, नृपभेदे च ।

चक्ष कथने त्यागे च अदा० आत्म० सक० सेट् । चष्टे । अचक्षत अचक्षत आचमते अचक्षासीत् अचक्षाल । त्यागे तु समचक्षिष्ट । [(चाकना) ।

चक्षण न० चक्ष ल्युट् न ख्यादेश । मद्यपानरोचके अवदंशे

चक्षुःश्रवस् पु० चक्षुषा शृणोति श्रु असुन् चक्षुरेव श्रवः कर्णौ यस्य वा । सर्पे ।

चक्षुष्य पु० चक्षुषे हित यत् । केतके पुण्डरीकवृक्षे, शोभाञ्जने रसाञ्जने च । सौवीराञ्जने, स्थलपद्मे, खर्परीतुत्थे च न० । प्रियदर्शने, चक्षुर्हिते च त्रि० । कुलत्थिकायां, सुभगायाम्, अजश्टङ्ग्यां, वनकुलत्थिकायाञ्च स्त्री० ।

चक्षुस् न० चक्ष-उसि शिच्च तेन न ख्यादेश । लोचने ।

चघ घातने स्वादि० पर० सक० सेट् । चघ्नोति अचघीत् अचघीत

चङ्कुर पु० चकि उरच् । रथे, वृक्षे च । यानमात्रे न० ।

चङ्क्रमण न० क्रम यङ ल्युट् । पुनः पुनर्भ्रमणे अतिशयभ्रमणे इतस्ततो भ्रमणे, कुटिलभ्रमणे च ।

चञ्चरी स्त्री० चनुच गतौ घञ् त लाति ला-क रस्य ल चञ्च+ अस्त्यर्थे र वा गौरा० ङीष् । भ्रमर्यां तिन्तिडीवृक्षे च ।

चञ्चरीक पु० चर ईकन् चर्करीकादित्वात् नि० । भ्रमरे ।

चञ्चल पु० चञ्च अलच् चञ्च गति वा लाति ला-क वा । कामुके, वायौ च । चपले, अस्थिरे च त्रि० । विद्युति लक्ष्म्याञ्च स्त्री० ।

चञ्चा स्त्री० चनुच अच् । नलनिर्म्मित कटभेदे (चाच) चञ्चेवति इवार्थे कन् 'लुप् मनुष्ये' इति तस्य लुप् । तृणमयपुरुषे ।

चञ्चु पु० चनुच उ । एरण्डके, रक्तैरण्डे, नाडीचशाके च । पक्षिणामोष्ठे (ठोट) । चाल वा ऊङ् इत्येके । चञ्चू ।

चञ्चुसूचि पुं०स्त्री० चञ्चु सूचिरिव यस्य । कारण्डवपक्षिणि स्त्रीत्वपक्षे वा ङीप् । वा कप् अत्रैव ।

चट भेदे भ्वा० पर० सक० सेट् । चटति अचटीत् अचाटीत् ।

चट वधे भेदे च चु० उभ० सक० सेट् । चाटयति ते अचीचटत् त

रूपे ग्रन्थे, तदध्येतरि जने गोत्रे च । भावे ल्युट् । गतौ भक्षणे, आचारे, गीते च न० ।

चरणग्रन्थि पु० ६त० । गुल्फे ।

चरणायुध पु० चरणाभ्यामायुध्यति आ+युध क । कुक्कुटे ।

चरणव्यूह पु० चरणानां वेदशाखानां व्यूहो विशेषेणोहो-निरूपणं यत्र । व्यासकृते ग्रन्थभेदे ।

चरम त्रि० चर-अमच् । अन्ते अवसाने, पश्चिमे च ।

चरमाचल पु० चरम पश्चिम अचल कर्म० । अस्ताचले । चरमशैलादयोऽप्यत्र । [एक व० । कपर्दके पु० ।

चराचर न० चर-अच् नि० । जगति । समा० द्व० । जङ्गमेऽजङ्गमे

चरित(त्र) न० चर-क्त (इत्र वा) । अनुष्ठाने, सञ्चारे, व्रत-कर्मादौ, चेष्टिते, लीलादौ च ।

चरु पु० चर उ । हव्यान्ने होमार्थं पाच्यान्ने 'अनवस्रावितान्तरूष्मपाक्योदनश्चरुरिति याज्ञिकाः । चरुपाकपात्रे भाण्डे च । [चित-त । चर्चित चर्चा ।

चर्च अध्ययने चुरा० उभ० सक० सेट् । चर्चयति-ते अचच-

चर्च उक्तौ भर्त्सने च तु० पर० सक० सेट् । चर्चति अचर्चीत् ।

चर्चरी स्त्री० चर्च अरन् गौरा० ङीष् । गीतिभेदे, कुटिल केशे, हर्षक्रीडायाम्, साटोपवाक्ये, छन्दोभेदे च ।

चर्चा स्त्री० चर्च-अ । विचारे, चिन्तायां, चन्दनादिना देह-लेपने च । [लेपने

चर्चित त्रि० चर्चा जातास्य इतच् । चन्दनादिना कृतगात्रानु-

चर्ब गतौ भक्षणे च भ्वा० पर० सक० सेट् । चर्बति अचर्बीत् ।

चर्मकार पु० चर्म तन्मयं पादुकादिकं करोति कृ-अण् । (चामार) पादुकाकारे एवं चर्मकृदादयोऽप्यत्र ।

चर्मण्वती स्त्री० चर्मास्त्यस्याम् मतुप नि० । नदीभेदे ।

चर्मदण्ड पु० चर्मणा कृतो दण्डः । कशायाम् (कोड़ा)

चर्मन् न० चर मनिन् । [illegible] कृत्तौ, इन्द्रियभेदे येन स्पर्श-उपलभ्यते तस्मिन् 'शरीरावरकं शरीरं चर्म इत्यभिधी-यते' इत्युक्ते (ढाल) फलके च ।

चर्मपादुका स्त्री० चर्मनिर्मिता पादुका । उपानहि (जुता)

चर्मप्रभेदिका स्त्री० प्रभिनत्ति प्र+भिद-ण्वुल् ६त० । चर्म-वेधनेऽस्त्रभेदे ।

चर्मप्रसेविका स्त्री० चर्मणा प्रसीव्यते सिव ण्वुल् । अग्नि-सन्दीपनार्थं चर्मनिर्मिते भस्त्राख्ये यन्त्रे ।

चर्मिन् पु० चर्म-फलकमस्यास्ति ब्रीह्यादित्वादिनि । फल-कास्त्रधरे त्वक्प्रधानतरौ, भूर्जवृक्षे, भृङ्गिरिटौ, कदल्याम् ।

चर्या स्त्री० चर-क्यप् । नियमपरिपालने गुरूपदिष्टव्रताद्यनुष्ठाने

चर्व भक्षे (दन्तैश्चूर्णने) वा चुरा० उभ० पक्षे भ्वा० पर० । चर्वयति-ते चर्वति अचचर्वत्-त अचर्वीत् ।

चर्षणि पु० कृष अणि ष्ट० आदेशश्च । जने 'स चर्षणीनामुदगादि'ति भागवतम् । [चल चालः ।

चल गतौ भ्वा० पर० सक० सेट् ज्वला० इ० । चलति अचालीत्

चल विलासे तु० पर० अक० सेट् । चलति अचालीत् ।

चल प्रेषणे चुरा० उभ० सक० सेट् । चालयति अचीचलत्-त

चल त्रि० चल ज्वलादित्वात् वा अच् । तरले, चञ्चले, कम्प-युक्ते । भावे क । कम्पे । [चलादयोऽप्यत्र ।

चलदल पु० चलानि चञ्चलानि दलान्यस्य । अश्वत्थवृक्षे चल-

चला स्त्री० चल अच् । लक्ष्म्यां सिह्लके च ।

चलाचल त्रि० चल अच् नि० । अत्यन्तचञ्चले । काके पु०

चवि स्त्री० चर्व इन् ष्ट० । (चइ) चव्ये । [मध्यत्वार्थे ।

चविका स्त्री० चर्व क्वुन् ष्ट० । चव्ये (चइ) इकन् ष्ट० । चविक-

चव्य न० चर्व्यते चर्व-यत् ष्ट० । (चइ) इति ख्याता, कार्पास्याञ्च

चव्यजा स्त्री० चव्यमिव जायते जन-ड । गजपिप्पल्याम् ।

चष भक्षे भ्वा० उभ० पर० सक सेट् । चषति-ते अचाषीत्-अचषीत् अचषिष्ट ।

चष वधे भ्वा० पर० सक० सेट् । चषति अचाषीत्-अचषीत् ।

चषक पु० न० चष-करणे क्वुन् । मद्यपानपात्रे । कर्मणि क्वुन् । मधुनि, मद्यभेदे च न० ।

चषाल पु० चष-आलच् । यज्ञियपशुबन्धनार्थं काष्ठे यूपमध्य-देशे वलयाकारे काष्ठमये लौहमये वा पदार्थे ।

चह प्रतारणे भ्वा० पर० सक० सेट् । चहति अचहीत् ।

चह प्रतारणे अद० चुरा० उभ० सक० सेट् । चहयति-ते अचचहत् त । [चहत् त ।

चह प्रतारणे चुरा० पर० सक० सेट् घटा० चहयति अची-

चाकचक्य न० चक दीप्तौ अच् चक प्रकारे द्वित्वं चकचकस्य भावः ष्यञ् । उज्ज्वलतायाम् । चाकचक्यादिप्रत्ययः संदर्शन-हृदूनेति वेदान्तपरिभाषा । [मनौ च ।

चाक्षुष न० चक्षुषा निर्वृत्तम् अण् । चक्षुर्जन्ये ज्ञाने, मनौ

चाक्रिक पु० चक्रेण समूहेन चरति ठक् । घण्टाय स्तुतिपाठक घाण्टिकार्थे ।

चाङ्गेरी स्त्री० चङ्गु शोभने दन्ते इत्युक्ते चाङ्गं शोभनदन्तता मीरयति ईर-अण् गौरा० ङीष् । (आमरुल) क्षुपभेदे ।

चाट पु० चट-भेदे अच् । वाक्ये विश्वासमुत्पाद्य परधनापहर्त्तरि चौरे "चाटचारभटादीनु द्रव्यं भवति निष्फलमि"ति स्मृतिः ।

चित चयने वा चु० प० ञ्चा० उभ० द्वि० घटादि । चपयति ते चयति ते । अचीचपत् त अचैषीत् अचेष्ट ।

चिकित्सक पु० कित रोगापनयने स्वार्थे सन् ण्वुल् । रोगापनयनकर्त्तरि वैद्ये । [करण ।

चिकित्सा स्त्री० कित स्वार्थे सन्-अ । रोगप्रतीकारोपाय

चिकित्स्य त्रि० चिकित्सयि० योग्ये अर्हार्थे यत् । साध्ये रोगे रोगात् मोचनयोग्ये जने च ।

चिकुर पु० चि दत्यव्यक्त शब्द कुरति कुर क । केशे, सत्त्वभेदे, पर्वते सरीसृपे च । चपले, तरले, चञ्चले च त्रि० ।

चिक्क पीडने चु उभ०सक०सेट् । चिक्कयति ते अचिचिक्कत त

चिक्कण पु० चिक्क क्विप् चिक् त कणत कण शब्दे अच् । गुवकवृक्षे । तत्फले न० । मसृणे स्निग्धे चिक्कन) त्रि० । चिक्कणगुणवत्या उत्तमाया गवि स्त्री० ।

चिच्छक्ति स्त्री० चिदेव शक्ति । चिच्छक्ति परमेश्वरस्य विमल चैतन्यमेवोच्यते' इत्युक्ते चैतन्ये । [स्वार्थे कन् अत्रैव ।

चिञ्चा स्त्री० चिमित्यव्यक्त शब्द चिनोति चि ड । तिन्तिडीवृक्षे ।

चिञ्चाम्ल न० चिञ्चेवाम्लम् । अम्लशाके ।

चिट प्रेषणे भ्वा०पर०सक० सेट् । चेटति अचेटीत् ।

चिट प्रेषणे चु०उभ०सक० सेट् । चेटयति ते अचीचिटत त

चित ज्ञाने भ्वा०पर० सक० सेट् । चेतति अचेतीत् । चित्तम् ।

चित ज्ञाने चु०आ०स०सक०सेट् । चेतयति ते अचीचितत् त ।

चित स्मृतौ चु०उभ०सक०सेट् इदित् । चिन्तयति ते अचिचिन्तत् त

चित् स्त्री० चित सम्पद० क्विप् । ज्ञाने चेतनायाम् चैतन्ये ।

चित् अव्य० चित क्विप् । असाकल्ये यथा किञ्चित् जातुचित् ।

चित त्रि० चि क्त । इतचयने पुष्पादौ हस्ते च । गवदा क्तार्थकाष्ठचूडा स्त्री० ।

चिति स्त्री० चि क्तिन् चितायां,समूहे वेदान्तोक्ते निर्विषय ज्ञानै निर्विषयचितिरेव केवलेति सन्तेपशार' रकम् । प्राणायामादिषु दृढक दिनत्रयान्तार्यं यह्वासक्तोति (२८) इति ख्याते पर्यार्थे अग्नि यानभेदे च ।

चित्त न० चित्यते ज्ञायतेऽनेन चित क्त । मनसि, वदान्तोक्ते ऽहमस्मानान्तकरणवृत्ति अन्तःकरणे, चित्ताकार्ये च ।

चित्तविक्षेप पु० चित्त विक्षिपन्ति योगान्तरायमन्ति दिप कण् । योगशास्त्रोक्तेषु योगप्रतिबन्धेषु व्याध्यादिषु नवसु । दिगोगे

चित्तविप्लव पु० चित्तस्य विप्लवात्मवस्थान यस्य त० पु० । उन्मा

चित्तविभ्रम पु० चित्तस्य विभ्रमो विशेषेण भ्रमणमनवस्थान यस्मात् ५व० । उन्मादरोगे ।

चित्तसमुन्नति स्त्री० सम्+उद् नम क्तिन् इत० । चित्तस्य सम्यगुन्नमने तद्धतौ गर्व्वे च चित्तोन्नतिरप्यत्र गर्व्वे च ।

चित्ताभोग पु० सम्यग् भोग आभोग एकविषयता इत० । एकविषये स्थिरचित्ततायाम् ।

चित्य पु० चीयतेऽसौ चि काप् । अग्नौ । चितायां स्त्री० ।

चित्र आश्चर्ये दर्शने अद्भुते च अद०चु०उभ०सक०सेट् । चित्रयति ते अचिचित्रत् त ।

चित्र पु० चित क्विप् त्रायते त्रै क वा तलोप चित्र-अच् वा । यमभेदे इन्द्रोदराय चित्राये ति तर्पणमन्त्र । अशोकवृक्षे (चिता) चित्रकवृक्षे एरण्डवृक्षे आकाशे कुष्ठभेदे नानावर्णे च । महति अद्भुते च त्रि० । लेख्ये तिलके शब्दालङ्कारभेदे च न० । स्वार्थे कन् उक्तार्थे (चिरता) इत्यादि । चित्रत्व कायति कै क व्याघ्रभेदे पु० । [च (पुष्प) ।

चित्रकण्ठ पु० चित्र कण्ठोऽस्य । पारावते तद्भेदे वनकपोते

चित्रकम्बल पु० कर्म० । कम्बलभेदे । [चित्रकारोऽप्यत्र ।

चित्रकर पु० चित्र करोति क टच् । वर्णसङ्करभेदे । अण्

चित्रकाय पु० चित्र कायो यस्य । (चितारवा) व्याघ्रभेदे ।

चित्रकूट पु० चित्र कूटमस्य । पर्वतभेदे ।

चित्रगुप्त पु० यमभेदे चित्रगुप्ताय वै नम' इति तर्पणमन्त्र ।

चित्रतण्डुला स्त्री०न० चित्रास्तण्डुलोऽस्या । विडङ्गे ।

चित्रत्वच् पु० चित्रा त्वक् यस्य । भूर्जत्वचे ।

चित्रदण्डक पु०चित्रोदण्ड काण्डो यस्य कप् । (ओल) सूरणे

चित्रपट पु० कर्म० । (छिट) मस्त्रभेदे ।

चित्रपत्रिका स्त्री० चित्राणि पत्राण्यस्या कप् वा अत इत्त्वम् । द्रोणपुष्प्यां, कपित्थपर्ण्यां च ।

चित्रपर्णी स्त्री० चित्राणि पत्राण्यस्या ङीप् । जलपिप्पल्याम

चित्रपदा स्त्री० चित्र पद स्थानिशान्यस्यां यस्याः । गोधासतायां, अष्टाक्षरपादके छन्दोभेदे च । [कर्म०

चित्रपर्णी स्त्री० चित्राणि पर्णान्यस्या । (चाकुलिया) पृश्निप

चित्रपादा स्त्री० चित्रौ पादौ यस्या । सारिके पक्षिणि ।

चित्रपुष्पी स्त्री०चित्राणि पुष्पाण्यस्या ङीप् । अम्बष्ठलतायाम्

चित्रपृष्ठ पु० चित्र पृष्ठमस्य । कलविङ्कपक्षिणि ।

चित्रफला स्त्री० चित्र फल यस्या । कण्टकार्यां वार्ताकौ म

चित्रभानु पु० चित्राभानवो यस्य । अग्नौ सूर्ये,चित्रकवृक्षे च ।

(अलके । [महाभाष्ये, कपर्दके च ।

चर्णि र्णी पु० चुर-चर-वा क्विच् नि० । पतञ्जलिमते

चला स्त्री० चुल-अ दीर्घ. । प्रासादोपरिस्थे गृहे (चिलाघर)

चूडायाञ्च । [मूले, नाटकाङ्गभेदे च ।

चूलिका स्त्री० चुल-मर्दने ण्वुल् ष्ट० दीर्घ. । हस्तिकर्ण-

चूष पाने भ्वा० पर० सक० सेट् । चूषति । अचूषीत् ।

चृत हिंसे ग्रन्थने च तुदा० सक० सेट् । चृतति अचर्तीत्

चृत(प) संदीपने वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् ।

चर्त(प)यति-ते । अचीचृत(प)त-त अचचर्त(प)त्-त । पक्षे

चर्त(प)ति अचर्ती(र्पी)त् ।

चेट(ड) पु० चिट-परप्रेष्ये अच् वा डस्य ड । दासे उपपत्यो

ङीप् । दासाम् । ण्वुल् । दासे, उपनायके च स्त्रियां

चेटि(डि)का । [स्वतया कथने च ।

चेत् अव्य० चित् विच् । यद्यर्थे पक्षान्तरे, असन्देहेऽपि सन्दि

चेतकी स्त्री० चित-वुन् । हरितक्याम् तत्फलेऽपि स्त्री० ।

चेतन पु० चित-युच् । आत्मनि, जीवे परमेश्वरे प्राणिनि

च । चेतनयुक्ते त्रि० ।

चेतनकी पु० चेतनं करोति कृ-ड गौ० ङीष् । हरितक्याम् ।

चेतना स्त्री० चु० चित युच् । बुद्धौ ज्ञाने ।

चेतनीया स्त्री० चेतनाय हिता छ । ऋद्धिनामौषधे ।

चेतस् न० चित-असुन् । चित्ते । आत्मनि पु० 'साक्षी चेताः

केवलो निर्गुणश्चे'ति श्रुतिः । [जीवे ।

चेतोमुख पु० चेतो मुखं द्वारमस्य । वेदान्तोक्ते प्राज्ञाभिमानिनि

चेदि पु० देशभेदे । तद्देशस्थे जने ब० व० ।

चेदिपति पु० चेदीनां पतिः । शिशुपाले उपरिचरवसुनामके

नृपे च । चेदिराजादयोऽप्यत्र । [अचिचेलत् त ।

चेल लोल्ये गतौ च भ्वा० पर० सक० सेट् । चेलति अचेलीत्

चेल न० चिल-वस्त्राच्छादने घर्मार्थे घञ् । वस्त्रे । चेल-गोप्ये

अच् । अधमे त्रि० ।

चेल्ल चालने गतौ च भ्वा० पर० सक० सेट् । चेल्लति अचेल्लीत्

चेष्ट चेष्टायां भ्वा० आ० सक० सेट् । चेष्टते अचेष्टिष्ट । अच-

चेष्टत्-अचिचेष्टत् ।

चेष्टा स्त्री० चेष्ट-अङ् । 'आत्मजन्या भवेदिच्छा इच्छाजन्या

भवेत् कृतिः । कृतिजन्या भवेच्चेष्टे'त्युक्ते कायिके व्यापारे ।

चैतन्य न० चेतन+भावे स्वार्थे वा ष्यञ् । चेतनायां, ज्ञाने,

प्रकृतौ च । [ब्रह्मणि च ।

चैत्त न० चित्तस्येदम् अण् । बौद्धमते विज्ञानातिरिक्ते

चैत्य न० चिताया इदम् । चतुष्पथस्थिते महावृक्षे, देवा-

वासे द्रुमे, जनानां सभास्थतरौ, बुद्धभेदे, आयतने,

चिताचिह्ने, जनसभायां, यज्ञस्थाने, जनानां विश्राम

स्थाने, देवस्थाने च । [हिते त्रि० ।

चैत्यतरु पु० चैत्यस्य समीपे तरुः । चतुष्पथस्थे वृक्षे । अश्वत्थादिः

चैत्यद्रुम पु० कर्म० । अश्वत्थादिवृक्षे द्रुमे ।

चैत्र पु० चित्रानक्षत्रेण युक्ता पौर्णमासी चैत्री साऽस्मिन् मासे

अण् । स्वनामख्याते शुक्लप्रतिपदादिदर्शान्ते चान्द्रे मासे ।

ठञ् । चैत्रिक । कन् । चैत्रकोऽप्यत्र पर्वतभेदे च ।

चैत्ररथ पु० चित्ररथेन गन्धर्वेण निर्वृत्तम् अण् । कुबेरोद्याने

चैत्रावली स्त्री० चैत्रे समयक् बलिरस्याम् । चैत्रपौर्णमास्याम्

चैत्री स्त्री० चित्रानक्षत्रेण युक्ता पौर्णमासी अण् । चैत्र

मासपौर्णमास्याम् तत्रैव तद्योगसम्भवात् ।

चैद्य पु० चेदीनां जनपदनामकम् ष्यञ् । शिशुपाले ।

चोदना स्त्री० चु०चुद-युच् । 'चोदना चोपदेशश्च विधिश्चै-

कार्थवाचिनः' इति भट्टोक्तेः प्रवर्तकवाक्ये 'चोदनालक्षणो-

ऽर्थो धर्मः' इति मीमांसासूत्रम् । प्रेरणायां, तर्जनायां,

प्रवर्त्तनायाञ्च । [त्रि० ।

चोद्य न० चुद-ण्यत् । प्रश्ने, पूर्वपक्षे, अद्भुते च । प्रेरणीये

चोपन न० चुप-ल्युट् । मन्दगमने, हस्तोन्नयने, मौने च ।

चोर पु० चुर-अच् । अस्वामिके परद्रव्यापहारके गन्धद्रव्य-

भेदे, कण्टकाख्ये च । [चण्डिपर्याये ।

चोरक पु० चोरः स्वनामख्यातस्तद्वत् धावति वै क ।

चोरपुष्पी स्त्री० चोर इव पुष्पमस्याः स्त्रियां ङीष् ।

शङ्खिन्याम् । स्वार्थे कन् अत इत्वम् । चोरपुष्पिकाप्यत्र ।

चोरा स्त्री० चोरवत् यत्र निकाशितेन पुष्पमस्त्यस्या अर्श

आद्यच् । गन्धद्रव्यिकायाम् ।

चौ(चो)रिका स्त्री० चोर+कर्मणि ठक् ठन् वा । चौर्ये ।

चोल न० चुल-घञ् । स्त्रीणां कञ्चुकाख्ये आवरकीले वस्त्रे ।

(चोला) इति ख्याते पुंसां वस्त्रभेदे च द्राविडसन्निकृष्टदेशे,

देशभेदे पु० । [त्रिमणभेदेऽपि च ।

चोलकी पु० चुल-चुल् गौरा० ङीष् । करीरे, नारङ्गे,

चोली स्त्री० अल्पार्थे ङीष् । पुष्पाभे वस्त्रभेदे ।

चोष्य त्रि० चूष ण्यत् उ० । इक्ष्वादौ भक्ष्यभेदे ।

चौड(ल) न० चूडा प्रयोजनमस्य अण् । चूडाकर्मणि संस्कार-

भेदे । डस्य लः । [वह देशे चोलनामाख्यदेशे पु० ।

चौर त्रि० चुरा शीलमस्य चोरस्य वा अण् । चण्डपरदूषण-

चौर्य न० चोरस्य भावः कर्म वा ष्यञ् । परद्रव्यापहरणे ।

च्यवन पु० च्यु-ल्युट् । ऋषिभेदे ।

च्यु गतौ भ्वा०आत्म०सक०अनिट् । च्यवते अच्योष्ट ।
च्यु हासे सहने च चुरा० उभ० सक० अनिट् । च्यावयति ते अचुच्यवत् त ।
च्युत् क्षरणे भ्वा०पर०अक०सेट् । च्योतति अच्युतत्-अच्योतीत्
च्युति स्त्री० च्यु-क्तिन् । क्षरणे नाशे च अपादाने क्तिच् । भगे

## छ

छ त्रि० छो-क । छेदनकर्त्तरि, निर्मले, तरले च । खण्डे न०
छगल पु० छो-कलच् गुट् च । पशुभेदे छागे । जातौ ङीप् । नीलवस्त्रे न० । वृद्धदारकवृक्षे स्त्री० टाप् । स्वार्थे कन् । पशुभेदे छागे ।
छगलान्त्री(ङ्घ्री) स्त्री० छगलस्येवान्त्रम् अङ्घ्रिर्वा यस्याः गौरा०ङीष् । वृद्धदारकौषधे, वृके च । स्वार्थे कन् । अत्रैवार्थे
छटा स्त्री० छो-अटन् । दीप्तौ, परम्परायाञ्च ।
छटाफल पु० छटेव परम्परान्वितं फलं यस्य । गुवाके ।
छत्र पु० छद-णिच्-ष्ट्रन् ह्रस्व । वृक्षाकारमूलदले (छातादिया) क्षुपभेदे । आतपत्रे न० । अतिछत्रायां (सुल्फा) वृक्षे स्त्री० ।
छत्रक पु० छत्रमिव कायति कै-क । (राङ्गाउलेखाडा) वृक्ष, मत्स्यरङ्गे पक्षिणि च । स्वार्थे कन् छत्रे न० ।
छत्रपत्र न० छत्रमिव पत्रमस्य । स्थलपद्मे, भूर्जपत्रवृक्षे पु०
छत्रपुष्प पु० छत्रमिव पुष्पमस्य । तिलकवृक्षे ।
छत्रभङ्ग पु० छत्रस्य भङ्गो यत्र । नृपनाशे, वैधव्ये अस्वातन्त्र्ये च
छत्राक न० छत्रमिव कायति कै-क । शिलीन्ध्रे 'छत्राकं विड्वराहञ्चे'ति मनुः ।
छत्राकी स्त्री० छत्रमकति अक-कुटिलगतौ अण् । रास्नायाम्
छद संवरणे अद०चु०उभ०सक०सेट् । छदयति ते अचिच्छदत् त
छद बलाधाने जीवने च भ्वा० पर० अक० सेट् । छदति अच्छदत्-अच्छदीत्-अच्छादीत् ।
छद संवरणे वा० चुरा० पक्षे भ्वा०उभ० सकर्म० सेट् इदित् । छन्दयति-ते अचच्छन्दत् त । छन्दति-ते अच्छन्दीत् अच्छन्दिष्ट । [अच्छदीत् अच्छदिष्ट ।
छद अपवारणे भ्वा०उभ०सक सेट् । छदति छदते । अच्छदीत्-
छद पु० छद क । पत्रे पक्षिणां पक्षे, ग्रन्थिपर्णवृक्षे, तमालवृक्षे च । [छुद् । पिधाने ।
छदन न० छद ल्युट् । पत्रे, पक्षे (तेजपात) पत्रे च । भावे
छदपत्र पु० छदार्थं पत्रमस्य । भूर्जपत्रे । [तमालपत्रे ।
छदि पु० छद इन् । पटले (चाल) इति ख्याते गृहाच्छादके
छदिस् स्त्री० छद इसि पटले (चाल)

छद्मतापस पु० छद्मना छलेन तापसः । लोकवञ्चनार्थं तापसतास्थापनाय तापसलिङ्गधारिणि तत्कर्माननुष्ठायिनि वैडालव्रतिके ।
छद्मन् न० छादयति स्वरूपमनेन छद मनि । कपटे छले ।
छन्द पु० छदि संवरणे धातोरनेकार्थत्वात् इच्छायाम् घञ् । अभिलाषे, वशतायाम्, विषभेदे च ।
छन्दस् न० छदि असि । वेदे, स्वैराचारे अभिलाषे, नियताक्षरवर्णमात्रादिसन्निवेशवशात् चतुश्चरणादौ एकाक्षरादिभेदे गायत्र्यादौ छन्दसि, पद्ये च ।
छन्दोग पु० छन्दः सामवेदं गायति गै-क । सामवेदगे द्विजादौ
छन्न त्रि० छद-णिच् क्त नि० । आच्छादिते, निर्जने रहसि न० ।
छप गतौ वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । छम्पयति ते छम्पति अचच्छम्पत् त अच्छम्पीत् । [छान्त्वा
छम भक्षणे भ्वा०पर०सक०सेट् । छमति अच्छमीत् । छमित्वा-
छर्द वमने चुरा०उभ०सक०सेट् । छर्दयति ते अचच्छर्दत् त ।
छर्दन पु० छर्द-णिच् ल्यु । निम्बवृक्षे मदनवृक्षे च । भावे ल्युट् । वमने न० । [अत्रैवार्थे
छर्दि(र्दी) स्त्री० छर्द-णिच् इन् । वमनरोगे वा ङीप् ।
छर्दिका स्त्री० छर्द-णिच् ण्वुल् । उत्कासिकायां, विष्णुक्रान्तायाञ्च । धात्वर्थे ण्वुल् । वमने ।
छर्दिकारिपु पु० ६त० । सूक्ष्मैलायाम् । छर्दिनाशके त्रि० ।
छर्दिघ्न पु० छर्दिं हन्ति-हन् टक् । निम्बभेदे । छर्दिनाशके त्रि०
छर्दिस् स्त्री० छर्द इसि । वमने ।
छल न० छो कलच् । शाठ्ये, स्वरूपाच्छादने व्याजे, न्यायोक्ते तात्पर्यान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनेन वादिनो प्रतिवादिना दत्तदूषणे च । यथा नेपालादागतोऽयं नवकम्बलवत्त्वादिति वादिना उक्ते नवशब्दस्य नूतनार्थपरत्वे स्थिते प्रतिवादिना तस्य नवसंख्यायुक्तार्थत्वकल्पनेन नास्य नवसंख्यककम्बलवत्त्वमिति यद्दूषणं दीयते ।
छलना स्त्री० छल+तत्करोति णिच्-भावे-युच् । परप्रतारणायाम् । [(छान) कराय सु पन्नगौ च ।
छल्ली स्त्री० छद-क्विप् तां लाति ला-क गौ० ङीष् । वल्कले
छवि स्त्री० छ्यति छ्यन्ति तमो वा क्विन् । शोभायां कान्तौ च । [छ्वि ।
छष वधे भ्वा०उभ०सक० सेट् । छषति ते अच्छषीत् अच्छषीत्
छाग पु० छो-गन् । छागे । जातौ स्त्रियां ङीष् । रोगभेदे च । इदमर्थे अण् छाग्यादुग्धे छागमांसे च न० ।

**छागल** पु० छगलस्य अपत्यम् अण् । स्वनामख्याते पशौ, छगलस्यापत्यम् अण् । ऋषिभेदे ।

**छागवाहन** पु० छागो वाहनमस्य । अग्नौ ।

**छात** त्रि० छो-कर्म्मणि कर्त्तरि वा क्त । छिन्ने, दुर्बले च । छाततराम्बुच्छटेति काव्य० प्र० ।उ०।

**छात्त** पु० गुरोर्दोषावरणं छत्रं तच्छीलमस्य ण । शिष्ये 'वरटा कपिला पीता प्रायो हिमवतो वने । कुर्व्वन्ति छत्रकाकारं तज्जं छात्रं मधु स्मृत'मित्युक्ते मधुभेदे न० ।

**छादन** पु० छद-णिच् ल्यु । नीलाम्लानवृक्षे । भावे ल्युट् । छादने । करणे ल्युट । पत्रे न० ।

**छान्दस** पु० छन्दोवेदमधीतेऽण् । वेदाध्ययनकर्त्तरि ।

**छान्दोग्य** न० छन्दोग+आम्नायार्थे ञ्य । सामगानां धर्मे आम्नाये, (मन्त्रब्राह्मणात्मके शास्त्रे) सङ्घे च ।

**छाया** स्त्री० छो-य । आतपाभावे, कान्तौ, प्रतिबिम्बे, पालने, उत्कोचे पङ्क्तौ, संज्ञाप्रतिरूपायां सूर्य्यभार्य्यायाम् अनविंशाक्षरपादके छन्दोभेदे च ।

**छायातनय** पु० ६त० । शनैश्वरे 'छायासुतादयोऽप्यत्र ।

**छायापुरुष** पु० छायया पुरुष इव । आकाशे दृश्ये निजच्छायाद्भूते छायात्मके पुरुषे ।

**छायावृक्ष** पु० छायाप्रधानो वृक्ष शाक० । वटादौ वृक्षे ।

**छिक्कनी** स्त्री० छिक् इत्यव्यक्तं नासिकाशब्दं कणति शब्दायते अच् गौरा० ङीष् । (नाकछिकनी) वृक्षभेदे ।

**छिक्का** स्त्री० छिक् इत्यव्यक्तं शब्दं करोति कृ ड । क्षुते ।

**छित्वर** त्रि० छिद-ष्वरप् पृ० तकुच । वैरिणि धूर्त्ते छेदके च । स्त्रियां ङीप् । छेदने न० । [अच्छिदत् अच्छैत्सीत्,छिदा ।

**छिद्** द्वैधीकरणे रुधा० उ० सक० अनिट् । छिनत्ति छिन्ते अच्छैत्सीत्-

**छिदिर** पु० छिद-किरच् । कुठारे पावके, रज्जुभेदे खड्गे च

**छिदुर** त्रि० छिद कुरच् । वैरिणि धूर्त्ते छेदके, छेदनद्रव्ये च

**छिद्र** भेदने अद० चुरा० उभ० सक० सेट् । छिद्रयति ते अचिच्छिद्रत् त । [ज्योतिषोक्ते लग्नतोऽष्टमस्थाने च ।

**छिद्र** न० छिद-रक् छिद्र अच् वा । दूषणे, गर्त्ते, अवकाशे

**छिद्रान्तर** पु० छिद्रमन्तर्मध्यं यस्य । नले ।

**छिद्रित** त्रि० छिद्र तारका० इतच् । विद्धे कृतच्छिद्रे ।

**छिन्नपत्री** स्त्री० छिन्नं पत्रं यस्याः । अम्बष्ठायाम् ।(आकनादी)

**छिन्नमस्ता** स्त्री० छिन्नं मस्तं यस्याः । महाविद्यायां विद्याभेदे

**छिन्नरुह** पु० छिन्नोऽपि रोहति रुह क । तिलकवृक्षे । गुडूच्यां, मत्स्याक्ष्यां, केतक्याञ्च स्त्री० ।

**छिन्नोद्भवा** स्त्री० छिन्नात् उद्भवति उद्+भू-अच् । गुडूच्याम् ।

**छुछुन्दरी** स्त्री० छुछु इत्यव्यक्तं दधाति अच् पृ० । (छुछु) जन्तुभेदे गन्धमूषिके ।

**छुट** छेदने वा चुरा० उभ० पक्षे तु० कुटा० पर० सक० सेट् । छोटयति ते छुटति । अचुच्छुटत् त अच्छुटीत् ।

**छुड** छेदने तु० कु० पर० सक० सेट् । छुडति अच्छुडीत् चुच्छोड

**छुप** स्पर्शे तु० पर० सक० अनिट् । छुपति अच्छौप्सीत् ।

**छुप** पु० छुप-क । क्षुपे, स्पर्शे, चपले, युद्धे च ।

**छुर** छेदे भ्वा० पर० सक० सेट् । छोरति अच्छोरीत् ।

**छुर** लेपने तु० कु० पर० सक० सेट् । छुरति अच्छुरीत् ।

**छुरिका** स्त्री० छुर-क्वुन् । अस्त्रभेदे (छुरि) । छुर क गौ० ङीष् । छुरीत्यप्यत्र ।

**छृद** सन्दीपने वा चु० उ० पक्षे भ्वा० पर० सक० सेट् । छर्दयति ते छर्दति । अचच्छर्दत्-अचिच्छृदत् त अच्छर्दीत् ।

**छृद** देवने दीप्तौ च अक० वमने सक० रुधा० उभ० सेट् । छृणत्ति छृन्ते अच्छृदत् अच्छर्दीत् ।

**छृप** यापने दिक० शब्दे अक० वा चुरा० उभ० पक्षे भ्वा० पर० सेट् । छर्पयति ते छर्पति । अचिच्छृपत् त-अचच्छर्पत् त । अच्छर्पीत् । [नागरे च त्रि० ।

**छेक** पु० छो ईकन् । गृहासक्ते पक्षिणि, मृगे च । विदग्धे,

**छेकानुप्रास** पु० छेकस्य विदग्धस्य प्रियोऽनुप्रास शाक० । अनुप्रासभेदे शब्दालङ्कारे । [ङ्कारभेदे ।

**छेकोक्ति** स्त्री० छेकाया विदग्धाया उक्तिः । वक्रोक्तिरूपेऽल-

**छेद** छेदने अद० चु० उभ० सक० सेट् । छेदयति ते अचिच्छेदत् त

**छेद** पु० छिद-घञ् । छेदने खण्डे, भाजके च 'छेद गुणं गुणं छेदं' इति लीलावती । कर्म्मणि घञ् । खण्डे, 'कलाकृतच्छेदविभक्तरागा'मिति कुमार ।

**छैदिक** पु० छेद नित्यमर्हति ठक् । वेतसे ।

**छो** छेदने दि० पर० सक० अनिट् । छ्यति अच्छात् अच्छासीत् ।

**छोटिका** स्त्री० चु० छुट-ण्वुल् । तर्जन्यङ्गुष्ठजनिते शब्दे ।

**छ्यु** गतौ भ्वा० आत्म० सक० अनिट् । छ्यवते अच्छ्योष्ट ।

## ज

**ज** पु० जि-जन-वा ड । शिवे विष्णौ, जनके, वेगे, मुक्तौ विषे, छन्दोग्रन्थोक्ते गुरुमध्यगे वर्णत्रये च ।

**जक्ष** भक्षणे सक० हासे अक० अदा० सचा० पर० सेट् । जक्षिति अजक्षीत् ।

**जगच्चक्षुः** पु० जगतां चक्षुरिव सर्व्वपदार्थदर्शकत्वात् । सूर्य्ये

**जगत्** पु० गम-क्विप् नि० । वायौ । जङ्गमे त्रि० । विश्वे लोके न० ।

**जगत्प्राण** पु॰ जगतां प्राणो जीवनहेतुत्वात्। वायौ।
**जगत्साक्षिन्** पु॰ जगतां साक्षीव सर्व्वस्य साक्षाद्दर्शनात्। सूर्य्ये।
**जगती** स्त्री॰ गम-क्विप् नि॰। पृथिव्याम्, भुवने, जने, जम्बु-
द्वीपे, वास्तुभेदे, द्वादशाक्षरपादके छन्दोभेदे च।
**जगदाधार** पु॰ ६त॰। वायौ, जगतामाश्रये च 'कालो हि जगदाधार' इति स्मृतिः।
**जगद्धात्री** स्त्री॰ धा तृच् ६त॰। दुर्गाभेदे। 'अहृद्धात्री जगद्धात्री'मिति स्मृतिः।
**जगद्योनि** पु॰ जगतां योनिरुत्पत्तिर्यस्मात्। शिवे, विष्णौ,
हिरण्यगर्भे, कुमारे च। ६त॰ पृथिव्याम्। [भैरवभेदे च।
**जगन्नाथ** पु॰ ६त॰। विष्णौ, तदीयक्षेत्रभेदे, विमलापीठस्थे
**जगल** पु॰ गल-अदने यङ् अच् नि॰। मद्यकल्के (मदेर गोडा)
मदनवृक्षे पिष्टमद्ये धूर्ते च।
**जग्ध** त्रि॰ अद-क्त। भुक्ते।
**जग्धि** स्त्री॰ अद-क्तिन्। भोजने, सहभोजने च।
**जघन** न॰ वक्रं हन्ति हन-यङ् अच् पृ॰। स्त्रीणां श्रोणिपुरो-
भागे, श्रोणौ च। 'पीनस्तनजघनाया' इत्युद्भटः।
**जघनेफला** स्त्री॰ जघने इव मध्यभागे फलमस्याः अलुक्स॰।
काकोडुम्बरिकायाम्।
**जघन्य** त्रि॰ हन-यङ् अच् पृ॰, जघनमिव इवार्थे यत् वा।
अधमे, चरमे, गर्हिते च। शूद्रे पु॰। जघनमनुशेलितं
यस्य। पुंसां लिङ्गे।
**जघन्यज** पु॰ जघन्ये चरमे जायते जन-ड। शूद्रे, कनिष्ठे त्रि॰।
**जङ्गम** त्रि॰ गम-यङ्-अच्। गतिशक्तियुते।
**जङ्गल** न॰ गल यङ्-अच् पृ॰। वने, रहसि च। मांसे पु॰।
**जङ्घा** स्त्री॰ जघन्यते कुटिलं गच्छति गत्यर्थकस्य हन्ते
कौटिल्ये यङ-अ पृ॰। गुल्फजान्वोरन्तराले अवयवे।
**जङ्घाकरिक** त्रि॰ कृ अप् करः विक्षेपः ६त॰ सः अस्त्यर्थे
ठन्। जङ्घाबलेनाजीवति धावके (धाउड़े)।
**जङ्घाल** त्रि॰ जङ्घा वेगवती अस्त्यस्य लच्। धावके जङ्घाजी-
विनि। 'हरिणैणकुरङ्गर्ष्यपृषतन्यङ्कुशम्बराः। राजीवश्च
तथा मुण्डी जङ्घाला परिकीर्त्तिता'-इत्युक्तेषु मृगेषु पु॰।
**जङ्घिल** त्रि॰ अतिशयवेगवती जङ्घाऽस्त्यस्य इलच्। वेगव-
ज्जङ्घाविशिष्टे धावके।
**जज** युद्धे भ्वा॰पर॰अक॰ सेट्। जजति अजाजीत्-अजजीत्
**जञ्ज** योधने भ्वा॰पर॰ सक॰ सेट् इदित्। जञ्जति अजञ्जीत्
**जट** संहतौ भ्वा॰पर॰अक॰सेट्। जटति अजाटीत् अजटीत्।
**जटा** स्त्री॰ जट अच्। अन्योन्यसंलग्ने केशे व्रतिनां शिखा-
याम्, कच्छादे सटायाम्, वृक्षादेर्मूले, (जड) जटामास्याम्,
वेदस्य पाठभेदे, रुद्रजटायाम्, लतायाम्, शतावर्य्याञ्च।
**जटाजूट** पु॰ ६त॰। जटानां जूटे (बन्धे) समूहे च 'जटा-
जूटसमायुक्ता'मिति दुर्गाध्यानम्। [गन्धद्रव्यभेदे।
**जटामांसी** पु॰ जटा मन्यते मन-स दीर्घश्च। स्वनामख्याते
**जटायु(स्)** पु॰ जटा याति या कु, जट संहतौ अच् जट
संहतमायुरस्य वा। स्वनामख्याते खगभेदे, गुग्गुलौ च।
**जटाल** पु॰ जटाऽस्त्यस्य लच्। गुग्गुलौ, वटे, कर्पूरे, मुष्कके
च। जटायुक्ते त्रि॰। जटामांस्यां स्त्री॰।
**जटावल्ली** स्त्री॰ जटेव वल्ली। रुद्रजटायाम्। [वा ङीप्।
**जटि(टी)** पु॰ जट-इन्। वटवृक्षे, समूहे च। जटामांस्यां स्त्री॰
**जटिन्** पु॰ जटा अस्त्यस्य इनि। प्लक्षे (पाकुड़) अश्वत्थतुल्य-
पत्रयुक्ते वृक्षभेदे। जटावति त्रि॰।
**जटिल** पु॰ जटा अस्त्यर्थे इलच्। सिंहे, ब्रह्मचारिभेदे च।
जटायुक्ते त्रि॰। जटामांस्याम्, पिप्पल्याम्, वचायाम्, दमन-
वृक्षे च स्त्री॰। [भेदे शिम्बौ (जडुल)।
**जटु(डु)ल** पु॰ जट-उलच् पृ॰ टस्य ड वा। देहस्थे कृष्णचिह्न-
**जठर** न॰ जायते जन्तुर्गर्भो यस्मिन् जन-अर ठान्तादेश।
कुक्षौ। वृद्धे, कठिने च त्रि॰।
**जड** त्रि॰ जलति घनीभवति जल-अच् लस्य डः। इष्टानि-
ष्टानभिज्ञे, हिमार्त्ते, मूके, बुद्धिहीने, अप्रकाशे, वेदग्र-
हणासमर्थे मूर्खे च। जले, सीसके च न॰। जडयति जड-
करोति णिच्-अच्। मूकशिम्बायां भूम्यामलक्याञ्च स्त्री॰ टाप्
**जतु** न॰ जन-उ तोऽन्तादेशः। अलक्ते, लाक्षायाञ्च।
**जतुका** स्त्री॰ जतु+इवार्थे कन्। (चामचिका) पक्षिभेदे गन्ध-
द्रव्यभेदे, जम्बा, पर्पटा, तिर्य्यक्फलायाम्, निशान्धायाञ्च।
**जतुकारी** स्त्री॰ जतु करोति कृ अण् ङीप्। जतुकालतायाम्
**जतुरस** पु॰ ६त॰। अलक्तके।
**जत्रु** न॰ जन रु तान्तादेशः। स्कन्धवक्षसोः सन्धौ, कण्ठ-
स्याधोभागस्थतयोरस्थ्नोश्च।
**जन** जनने जुहो॰ पर॰अक॰सेट् घटा॰। जजन्ति। अजनत्
अजनीत् अजानीत्। जनयति अजीजनत्। [यति जात-
**जन** जनने दि॰आ॰अक॰सेट् घटा॰। जायते अजनिष्ट। जन-
**जन** पु॰ जन अच्। लोके पामरलोके, महर्लोकादूर्ध्वलोके च
**जनक** पु॰ जन णिच्-ण्वुल्। पितरि मिथिलाधिपे राज-
भेदे च। कारणे त्रि॰। [रामपत्न्याम्
**जनकसुता** स्त्री॰ जनकस्य सुततया ख्याता। सीतादेव्यां
**जनता** स्त्री॰ जनानां समूहः तल्। जनसमूहे।
**जननि(नी)** स्त्री॰ जन-अनि वा ङीप्। मातरि, जनिकाम-

गन्धद्रव्ये, दयायां, कटुकायां, मञ्जिष्ठायाम्, अलक्तके, जटामांस्याञ्च ।

**जनपद** पु० जना पद्यन्ते गच्छन्ति यत्र पद-घ । देशे ।

**जनमेजय** पु० जन+एज-णिच्-खश् मुम् च । परीक्षिद्राजपुत्रे, नृपभेदे । पु० । जन्मेजयोऽप्यत्र ।

**जनयितृ** पु० जन-णिच्-तृच् । पितरि । मातरि स्त्री० ङीप् ।

**जनलोक** पु० महर्लोकोपरि भुवनभेदे ।

**जनवल्लभ** पु० ६त० । श्वेतरोहितवृक्षे । जनप्रिये त्रि० ।

**जनश्रुति** स्त्री० जनेषु श्रुतिरेव न दृष्टिर्यस्याः । सत्यमिथ्यासाधारणलोकमात्रसिद्धौ किम्वदन्त्याम् ।

**जनस्थान** न० दण्डकारण्यस्य समीपे स्थानभेदे, जनाधारस्थाने च । जनस्थाने भ्रान्तमित्युद्भट ।

**जनान्तिक** न० ६त० । जनसमीपे, अप्रकाशे, त्रिपताककरेणान्यानपवार्य्यान्तिके जनान् । अन्योन्यामन्त्रणं यत् स्यात् जनान्ते तज्जनान्तिकमित्युक्ते नाटकेऽभिनयकर्त्तोरन्योन्यप्रभाषणे च ।

**जनार्द्दन** पु० जनैरर्द्यते याच्यते साभिमतं अर्द्द-याचने कर्म्मणि ल्युट् जनं जननमर्द्दयति वा अर्द्द-हिंसायां ल्यु वा । विष्णौ ।

**जनाश्रय** पु० जनानां लोकानामाश्रय । मण्डपे ।

**जनि(नी)** स्त्री० जन-भावे इन् वा ङीप् । उत्पत्तौ अभूतप्रादुर्भावे, जायते गर्भोऽस्याम्, नार्य्याम् । मातरि, स्नुषायां, जायायाञ्च । जायते आरोग्यमनया । ओषधिभेदे जतुकायाञ्च ।

**जनुस्** न० जन-उसि । उत्पत्तौ ।

**जनु(नू)** स्त्री० जन उ वा ऊङ् । उत्पत्तौ ।

**जनेष्ट** पु० जनानामिष्ट । मुद्गरवृक्षे । वृद्धिनामौषधौ, जातीपुष्पे हरिद्रायां जतुकायाञ्च स्त्री० । [त्माभिमानिनि जीवे ।

**जन्तु** पु० जन तु । जननयोग्ये प्राणिनि अविद्यादोषात् देहा-

**जन्तुका** स्त्री० जन्तुभिः कायति प्रकाशते कै-क । लाक्षायां, तस्याहि कीटै प्रकाश । हिङ्गुले च ।

**जन्तुघ्न** पु० जन्तून् कृमीन् हन्ति टक् । बीजपूरे । विडङ्गे, हिङ्गुनि च न० । प्राणिघातके त्रि० ।

**जन्तुफल** पु० जन्तवः फलेऽस्य । उडुम्बरे ।

**जन्तुमारी** स्त्री० जन्तून् कृमीन् मारयति मृ णिच् अण् उप० । निम्बूके (निमकी) । [तत्र हि बहुकीटानां स्थिति ।

**जन्तुला** स्त्री० जन्तून् कीटान् लाति ला-क । काशतृणे

**जन्मन्** न० जन-मनिन् । उत्पत्तौ, आद्यक्षणसम्बन्धे, गर्भवासयोनिनिःसारणेन देहग्रहणे, न्यायाद्युक्ते अपूर्व्वदेहादिभि सम्बन्धे, ज्योतिषोक्ते जन्मलग्ने, स्वावधिके दशमे जन-विंशे च नक्षत्रे, जन्मलग्ने च ।

**जन्ममास** पु० ६त० । 'आरभ्य जन्मदिवसं यावत् त्रिंशद्दिनानि च । जन्ममासः स विज्ञेयः वर्ज्जितः सर्व्वकर्म्मसु' इत्युक्ते जन्मदिनावधिके त्रिंशद्दिनात्मके मासे ।

**जन्मान्तर** न० अन्यत् जन्म मयू० । भवान्तरे परलोके ।

**जन्माष्टमी** स्त्री० श्रीकृष्णस्य जन्मतिथौ मुख्यचान्द्रेण भाद्रस्य कृष्णाष्टम्याम् ।

**जन्मिन्** पु० जन्मास्त्यस्य व्रीह्यादि० इनि । प्राणिनि जीवे ।

**जन्य** त्रि० जन कर्त्तरि यत् । जायमाने । जन-णिच्-यत् । उत्पाद्ये, जनके च । जनीं वधूं वहति नयति वा यत् । नवोढाज्ञातिमित्रभृत्यादिकेषु त्रि० । अट्टे, परीवादे, प्रीतौ, युद्धे, देहे च पु० । भावे यत् । जनने न० । मातृवयस्यायां स्त्री० । [पीत् अजपीत् ।

**जप** उच्चारणे वाचि च भ्वा० पर० सक० सेट् । जपति अजा-

**जप** पु० जप-अच् । वेदमन्त्रादेरावृत्तौ अव्यक्तोच्चारणे 'जपस्तु ज्ञापनं ध्येयस्याभिमुखीकरणं' इत्युक्ते मन्त्रादिभाषणे च ।

**जपा(वा)** स्त्री० जप-अच् वा पस्य व । स्वनामख्याते वृक्षे तत्पुष्पे च ।

**जभ** मैथुने भ्वा० पर० सक० सेट् । जभति अजभीत् ।

**जभि** मैथुने भ्वा० पर० सक० सेट् इदित् । जम्भति अजम्भीत्

**जभि** जृम्भणे भ्वा० आत्म० अक० सेट् इदित् । जम्भते अजम्भिष्ट

**जभि** नाशे चुरा० उभ० सक० इदित् । जम्भयति-ते अजजम्भत् त

**जभ** जृम्भणे भ्वा० आत्म० सेट् । जभते अजभिष्ट । [जान्त्वा

**जम** भक्षणे भ्वा० पर० सक० सेट् । जमति अजमीत् । जमित्वा-

**जमदग्नि** पु० परशुरामस्य पितरि मुनिभेदे ।

**जम्पती** पु० द्वि० ब० । जाया च पतिश्च द्व० जायाया जम् । दम्पत्योः स्त्रीपुरुषयोः । [पङ्के, शैवाले, वेतस्याञ्च ।

**जम्बाल** पु० जम्ब-घञ् जम्बमालाति आदत्ते आ+ला क ।

**जम्बालिनी** स्त्री० जम्बाल+अस्त्यर्थे इनि । नद्याम् ।

**जम्बीर** पु० जम-विच् वीर-विक्रान्तौ क कर्म० । (गोडानेबु) वृक्षभेदे, मरुवके, शिखाजर्के च ।

**जम्बु(म्बू)** स्त्री० जम-कु नि० बुक् ऊ० वा ऊङ् (जाम) । इति ख्याते वृक्षे । तस्याः फले अण् तस्य वा लुप् । जाम्बवम् । वा ह्रस्वे । जम्बु चात्र ।

**जम्बुक** पु० जम्बुरिव कायति कै-क । (गोलाबजाम) इति ख्याते वृक्षे, श्योनाकभेदे च । स्वार्थे कन् जम्बुशब्दार्थे

**जम्बुद्वीप** पु० जम्बुवृक्षचिह्नितो द्वीप शाक० । सप्तद्वीपमध्ये स्वनामख्याते द्वीपभेदे ।

**जम्बुक** पु० जम उकञादि० नि० । शृगाले नीचे, वरुणे, जम्बुकायाँ च (गोलाजाम) वृक्षभेदे स्त्री० ।

**जम्भ** पु० जभि घञ् । दैत्यभेदे, दन्ते जम्बीरे, अंशे, हनौ, तूणे च । भावे घञ् । भक्षणे जृम्भणे च । टा । जृम्भायां स्त्री० ।

**जम्भभेदिन्** पु० जम्भं दैत्यं भिनत्ति भिद-णिनि । इन्द्रे जम्भभेदनादयोऽप्यत्र ।

**जम्भला** स्त्री० जम्भं जृम्भां लाति ला क । राक्षसीभेदे तस्याः स्मरणे ज्वरनाशात् ज्वरनाशे च तत्पूर्व्वाङ्गजृम्भाया अपि नाशः 'समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी'ति ।

**जय** पु० जि भावे अच् । शत्रूणामभिभावने नारायणपार्श्वचरे 'एतौ द्वौ पार्श्वगौ मह्यं जयो विजय एव चे'ति भागवतम् विराटगृहस्थे गुप्तपाण्डवके युधिष्ठिरे च ।

**जयढक्का** स्त्री० जयसूचिका ढक्का । वाद्यभेदे ।

**जयद्रथ** पु० जयन् रथो यस्य । सिन्धुराजे दुर्योधनभगिनीपतौ स्वनामख्याते नृपे, सूर्य्ये, भीमे च ।

**जयन्त** पु० जि झच् । इन्द्रस्य पुत्रे चन्द्रे, शिवे, विराटपुरस्थे गुप्तपाण्डवके भीमे च ।

**जयन्ती** स्त्री० जयति रोगान् अन्यान् वा धानि वा जि-शतृ ङीप् । जरायाम् नाद्येयाम् दुर्गाभेदे 'जयन्ती मङ्गला काली'ति मन्त्रः । पताकायाम् जयन्तीवृक्षे, 'रोहिणीसहिता कृष्णा मासे च श्रावणेऽष्टमी । अर्द्धरात्रादधश्चोर्द्धम् कलयापि यदा भवेत् जयन्ती नाम सा प्रोक्ते'त्युक्तलक्षणे योगभेदे च ।

**जयपत्र** न० । जयसूचकं पत्रम् । पूर्व्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः । प्रदद्यात् जयिने लेख्यं जयपत्रं तदुच्यते' इत्युक्ते पत्रे ।

**जयपाल** पु० जयेन सज्जनेन पालयति पाल अच् । स्वनामख्याते सारकफलके वृक्षे । इ त० । विष्णौ, नृपे च ।

**जया** स्त्री० जि-अच् । हरितक्याम्, जयन्त्याम्, दुर्गायाः, तत्सहचर्य्याम्, गणिकारिकायाम्, विजयायाम् (भङ्गा) पताकाभेदे, नीलदूर्व्वायाम्, मान्यावर्षे ज्योतिषोक्ते 'त्रयोदश्यष्टमी चैव तृतीया च जया मते'त्युक्ते तिथिसमुदाये च ।

**जय्य** त्रि० जेतुं शक्यः जि-यत् क्षय्यजय्यौ तदर्थे नि० । जेतुं शक्ये ।

**जरठ** त्रि० जॄ-अठच् । कर्कशे, कठिने, पाण्डौ, जीर्णे च ।

**जरण** पु० न० । जॄ णिच् ल्यु । जीरके, हिङ्गुनि, सौवर्चले, कृष्णौषधौ च । कासमर्द्दे पु० । कृष्णजीरके स्त्री० ।

**जरत्** त्रि० जॄ अतृन् । वृद्धे, जीर्णे, जरायुक्ते, पुरातने च । स्त्रियां जरती ।

**जरत्कारु** पु० मनसादेव्याः पत्यौ मुनिभेदे । मनसादेव्यां स्त्री० ।

**जरद्गव** पु० जरन् गौः पच् समा० । वृद्धोक्षे, गृध्रभेदे च ।

**जरन्त** पु० जॄ-झच् । महिषे । जीर्णे त्रि० ।

**जरा** स्त्री० जॄ-अङ् । शैथिल्यापादकावस्थाभेदे ।

**जरायु** पु० जरामेति इण् उण् । गर्भावरकचर्मणि गर्भाशये, जटायौ पक्षिणि च ।

**जरायुज** त्रि० जरायुतो जायते जन-ड । 'पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः । रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः' इत्युक्ते पश्वादिमनुष्यान्तेषु 'यत्तु चर्म्माकृति सूक्ष्मं जरायु सा निगद्यते । शुक्रशोणितयोर्योगस्तस्मिन् सञ्जायते यतः । तत्र गर्भो भवेद्यस्मात् तेन प्रोक्तो जरायुज' इत्युक्ते गर्भे च । [दित्युक्तनिरुक्तौ नृपभेदे ।

**जरासन्ध**: पु० 'जरया सन्धितो यस्मात् जरासन्धस्ततोऽभव

**जरूथ** पु०न० जॄ-ऊथन् । स्थूलमांसे । [अजर्चीत्

**जर्च्(र्त्स)(र्झ)** उक्तौ भर्त्सने च तु०पर०सक०सेट् । जर्च(र्त्स)(र्झ)ति

**जर्ज्जर** पु०न० । जर्ज्ज-अरन् । शक्रध्वजे, शैलजे, गन्धद्रव्ये च । जीर्णे त्रि० । [द्रव्ये । जीर्णे त्रि०

**जर्ज्जरीक** त्रि० जर्ज-ईकन् चर्करीकादि० नि० । बहुच्छिद्रे

**जर्झ** उक्तौ निन्दायाञ्च तु०पर०सक०सेट् । जर्झति अजर्झीत्

**जर्त्तिल** पु० जॄ-विच् कर्म्म० । अरण्यतिले । [अजर्त्सीत् ।

**जर्त्स** भर्त्सने उक्तौ रक्षणे च भ्वा०पर०सक०सेट् । जर्त्सति

**जल** आच्छादने चुरा० उभ० सक० सेट् । जालयति-ते अजीजलत् त । [अजालीत् । जल जाड्य ।

**जल** तीक्ष्णतादिभवने भ्वा०पर०अक०सेट् ज्वलादि । जलति

**जल** त्रि० जल-अच् । जडे । उदके, ह्रीवेरे गन्धद्रव्ये, ज्योतिषोक्ते लग्नावधिके चतुर्थस्थाने, पूर्व्वाषाढानक्षत्रे च न० ।

**जलकण्टक** पु० जलस्य कण्टकइव । शृङ्गाटके । (पानफल) कुम्भीरे च ।

**जलकपि** पु० जले कपिरिव । शिशुमारे जलजन्तुभेदे (सोसक)

**जलकरङ्क** पु० जलस्य करङ्क इवाधारः । नारिकेले, मेघे च । जले करङ्क इव । शङ्खे जललतायाञ्च ।

**जलकाक** पु० जले काक इव । (पानकौडी) पक्षिभेदे ।

**जलकुन्तल** पु० जलस्य कुन्तल केश इव । शैवाले ।

**जलचर** पु० जलेचरति चर-टक् । ग्राहादिषु जलजन्तुषु ।

**जलज** पु० जले जायते जन ड । शैवले वानीरवृक्षे हिज्जलवृक्षे, मत्स्ये ज्योतिषोक्तेषु कर्कटमीनमकरान्त्यार्द्धराशिषु च । सारभेदे, पद्मे च न० । शङ्खे पु०न० । जलजातमात्रे त्रि० ।

**जलजन्तु** पु० ६ त० जलस्थेषु ग्राहादिषु प्राणिषु । [(जोंक)

**जलजन्तुका** स्त्री० जलजन्तु+स्वार्थे कन् । जलौकायाम्

जहदजहल्लक्षणा स्त्री० जहच्च अजहच्च स्वार्थो यस्यां तादृशी लक्षणा। वाच्यार्थैकदेशत्यागेनैकदेशवृत्तौ लक्षणायाम् यथा सोऽयं देवदत्त इत्यत्र तत्कालैतत्कालरूपार्थत्यागेन केवलदेवदत्तमात्रार्थबोधनात् वाच्यार्थैकदेशत्यक्तिता।

जहल्लक्षणा स्त्री० जहत् स्वार्थो यस्याम् उत्तरपदलोप कर्म०। जहत्स्वार्थायां लक्षणायाम्। यथा आयुर्घृतम्।

जह्नु पु० चन्द्रवंशीये राजर्षिभेदे येन गङ्गावतरणकाले गङ्गा पीतेति पुराणम्। [गङ्गायाम्।

जह्नुतनया स्त्री० जह्नोस्तनयेव तदुदरं गत्वा ततो निःसरणात्।

जह्नुसप्तमी स्त्री० वैशाखशुक्लसप्तम्याम्।

जागर पु० जागृ अप्। निद्राभावे जागरणे, कवचे च।

जागरित न० जागृ क्त। इन्द्रियैर्विषयोपलब्धियोग्यायामवस्थायाम्। जीवो हि स्वप्नादिहेतुकर्मनाशे इन्द्रियविषयान् अनुमेयांश्च स्थूलविषयान् व्यावहारिकांश्च पदार्थान् यस्यामवस्थायामनुभवति तज्जागरितम्। कर्त्तरि-क्त। जागरणयुक्ते त्रि०। [विश्वसञ्ज्ञे जीवे।

जागरितस्थान पु० जागरितं स्थानमस्य। वेदान्तोक्ते

जागरूक त्रि० जागृ ऊक। जागरणशीले, अप्रमत्ते च।

जागर्य्या स्त्री० जागृ-श। जागरणे। ण्य। जागराप्यत्र। [रीत्

जागृ निद्राभावे अदा० पर० अक० सेट् अङ्का०। जागर्त्ति अजागरीत्

जागृवि पु० जागृ क्विन्। अग्नौ, नृपे च।

जाग्रत् न० जागृ-शतृ। इन्द्रियादिभिः विषयज्ञानयोग्यावस्थायाम्। तद्वति त्रि० स्त्रियां ङीप्।

जाङ्गल पु० जङ्गले भव, तत् शीलित यस्य वा अण्। कपिञ्जले खगे निर्जलदेशे हरिणादिषु पशुषु कुरुदेशसमीपस्थे देशे च तद्देशस्थे त्रि० म० व०।

जाङ्गलि पु० जङ्गल परिशीलितमस्य जङ्गल इञ्। विषवैद्ये।

जाङ्गलिक पु० जाङ्गुल्या विषविद्यया चरति ठक्। विषवैद्ये।

जाङ्गली स्त्री० जाङ्गलेरियम् अण् ङीप्। विषविद्यायाम्, शूकशिम्ब्याञ्च।

जाङ्गुली स्त्री० गम-यङ् उलच् नि० ङीप्। विषविद्यायाम्।

जाङ्घिक त्रि० जङ्घाभ्यामाजीवति वेतनादि० ठक्। धावके, जङ्घाजीविनि। उष्ट्रे पु०। [च त्रि०।

जात न० जन-क्त। समूहे, व्यक्तौ, जन्मनि च। उत्पन्ने, प्रशस्ते

जातक न० जातस्य हितम् कन्। जातस्य शुभाशुभनिरूपके ग्रहजातकादौ ग्रन्थे, जातकर्मरूपे संस्कारभेदे च।

जातकर्म्मन् न० जातस्य कर्म्म समासात् सर्वं सामगादि। संस्कारभेदे।

जातमात्र त्रि० जात एव मयूर०। सद्योजाते बालकादौ।

जातरूप न० जातं रूपमस्य। प्रशस्तवर्णे, स्वर्णे।

जातवेदस् पु० जातान् प्राणिनः विन्दते जठरानलत्वेन विद-लाभे असुन्। वह्नौ, चित्रकवृक्षे च।

जाति स्त्री० जन-क्तिन्। जन्मनि, अनुगतैकाकारबुद्धिजनन समर्थे, अवयवव्यङ्ग्ये सलक्षणदेशव्यङ्ग्ये च धर्मभेदे, यथा गोत्व-मनुष्यत्वादि ब्राह्मणत्वशूद्रत्वादि च। व्याकरणोक्ते पौत्राद्यपत्यात्मके गोत्रे, वेदशाखाभेदे च। न्यायोक्ते साधर्म्य-वैधर्म्याभ्यां व्याप्तिनिरपेक्षाभ्यां वादिवाक्येषु दूषणादानरूपे वाक्ये, षड्जादिषु सप्तसु स्वरेषु, अलङ्कारभेदे, चुल्ल्याम्, आमलक्याम्, काम्पिल्ले, छन्दसि, जातिफले, मालत्याम्,(चामेली) पुष्पप्रधानवृक्षे च।

जातिकोष न० जात्याः कोषमिव (जायफल) जात्याम् जय-न्त्याम् स्त्री० ङीप्।

जातिब्राह्मण पु० जात्या ब्राह्मण। 'तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' इत्युक्ते निन्द्ये विप्रे।

जातिशस्य न० जात्याः शस्यम (जायफल) जातिफले।

जातिस्मर त्रि० जातिं पूर्वजन्म स्मरति स्मृ-अच्। अतीत जन्मवृत्तान्तस्मृतियुक्ते जने।

जाती स्त्री० जन क्तिच् ङीप्। मालत्याम् (चामेली) तत्पुष्पेऽपि लताभेदे च यस्याः फल (जायफल)।

जातीफल न० ६त०। (जायफल) इतिख्याते फले।

जातीय त्रि० जातौ भव छ। समानजातियुक्ते सजातीय किञ्चिच्छन्दात् जातीयप्रत्यय। प्रकारार्थे। यथा तार्किक जातीय तार्किकप्रकार। [अविकल्पे, निषेधे च।

जातु अव्य० जै-क्तदे तुन्। कदाचिदर्थे, सम्भावनायाम्, निन्दायाम्

जातुधान पु० जातु कदाचिदूर्ध्वं नास्ति धनं सन्निधानमस्य। राक्षसे। [निर्म्मिते पदार्थे।

जातुष त्रि० जतुनो विकारः अण् षुगागम। जतुविकार-

जातूकर्ण्य पु० मुनिभेदे।

जातेष्टि स्त्री० यज क्तिन् इष्टिः जातस्य उद्धारार्थ कर्त्तव्या इष्टि यागभेदः। जातकर्म्माङ्गे संस्कारभेदे।

जातोक्ष पु० जातः प्राप्तस्थाविर्य उक्षा टच् समा०। वृद्धवृषे

जात्य त्रि० जातौ भव यत्। कुलीने, श्रेष्ठे, कान्ते च।

जात्यन्ध त्रि० जातौ जन्मतः अन्ध। जन्मान्धे 'जात्यन्धौ च इत्यथे ति मनुः।

जात्युत्तर न० जात्या व्याप्तिनिरपेक्षाभ्यां साधर्म्यवैधर्म्याभ्यां उत्तरम्। न्यायोक्ते असदुत्तरे।

जानकी स्त्री॰ जनकस्येयम् दुहितृत्वेन अण् । सीतायाम् ।

जानपद त्रि॰ जनपदे भवः, तत आगतो वा अण् । देशस्थे देशादागते च । जनपदानां वृत्तौ स्त्री॰ ङीप् ।

जानु न॰ जन-ञुण् । ऊरुजङ्घयोर्मध्यभागे (आंठु)-स्वार्थे कन् अत्रैवार्थे । [रामे ।

जामदग्न्य पु॰ जमदग्नेरपत्यम् यञ् । जमदग्निपुत्रे परशु-

जामातृ पु॰ जायां माति मिनोति मिमीते वा तृच् । दुहितृपतौ, धवे, स्वामिनि च । '

जामि स्त्री॰ जम-मिण् नि॰ वृद्धिः । भगिन्यां दुहितरि, स्नुषायां, कुलस्त्रियां, सन्निहितस्त्रियाम्, 'जामयो यानि गेहानी'ति मनुः

जाम्बवत् पु॰ रामायणप्रसिद्धे भल्लुकराजे ।

जाम्बवती स्त्री॰ जाम्बवतोऽपत्यं स्त्री । कृष्णस्य भार्याभेदे जाम्बवत्कन्यायाम् 'साम्ब! साम्ब! महाबाहो! शृणु जाम्बवतीसुते'ति सूर्यस्तवः । नागदमन्याञ्च ।

जाम्बूनद न॰ जम्बूनदे भवम् अण् । स्वर्णे 'तीरमृत् तद्रसं प्राप्य सुखवायुविशोषिता । जाम्बूनदाख्यं भवति सुवर्णं सिद्धभूषणमित्युक्तं सुवर्णभेदे (तद्रसं जम्बुरसम्) धुस्तूरे च

जायक न॰ जयति गन्धान्तरं जि-ण्वुल् । पीतवर्णे गन्धकाष्ठे

जाया स्त्री॰ जन-यक् । 'पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते जायायास्तद्धि जायात्वं यदस्यां जायते पुनः'रित्युक्तायां स्त्रियाम्, ज्योतिषोक्ते लग्नतः सप्तमे स्थाने च ।

जायाजीव पु॰ जायया जीवति जीव-क । नटे ।

जायानुजीविन् पु॰ जायामनुजीवति अनु+जीव-णिनि । नटे, वेश्यापतौ, बके, दुःस्थे च ।

जायु पु॰ जयति रोगान् जि उण् । औषधे ।

जार पु॰ जीर्यत्यनेन जॄ करणे घञ् । उपपतौ ।

जारज त्रि॰ जारात् जायते जन-ड । अनियुक्तायामुपपतिजाते कुण्डे, गोलके च पुत्रे ।

जारणी स्त्री॰ जार्यतेऽनया जॄ-ज-करणे ल्युट् । श्वेतजीरके

जाल पु॰ न॰ जल संवरणे घञ्, जल-घातने, णिच्-अच्, जलेऽनिष्यते स्वल् न । जलस्वजन्तुबन्धनार्थे (मत्स्यजालैः) विनिमग्नतल्प' इति भट्टिः । सन्धिधारणार्थे ग्रन्थस्त्रमिति गवाक्षादपि गवाक्षे, अस्मदादिकायां, घृतफले, कदम्बादिबन्धारणार्थे पाशे च । यादोऽस्त्रो, समूहे इन्द्रजाले च न॰ । स्वार्थे कन् । मत्स्यबन्धे पु॰ । मौचकफले न॰ । कलिकासमूहे, आरके च न॰ ।

जालकारक पु॰ जल-ण्वुल् इन॰ । जालस्य मक्षिकादिपातनाय मालक ए॰-मर्कटे (माकड्सा) नाशन ऊर्णनाभ च कर्करि स्त्रि॰

जालन्धर पु॰ त्रिगर्तास्ये देशे तद्देशस्थे जने. ब॰ व॰ ।

जालपाद् पु॰ जालमिव पादावस्य पादाव । हंसे (गतादि) पक्षिभेदे च । [भेदे ।

जालबर्बुरक पु॰ जालाकारो बर्बुरकः । (कांटाबावला) वृक्ष

जालिक पु॰ जालेन चरति जाल+ठक् । वागुरिके जालजीविनि, कैवर्त्ते, मर्कटके च । जालोपजीविनि त्रि॰ ।

जालिनी स्त्री॰ जाल+अस्त्यर्थे इनि । चित्रशालायां, कोषातक्याम्, (झिंगा) तस्याः पक्वफलकोषे हि जालवत्त्वम् ।

जाली स्त्री॰ जालं विद्यतेऽस्याः अच् गौरा॰ ङीप् । (झिंगा) लताभेदे । [रामकण्टाद्य ।

जाल्म त्रि॰ जालयति अपवारयति म । पामरे, मूर्खे, क्रूरे,

जावाल पु॰ जबालाया अपत्यम् अण् । मुनिभेदे ।

जाह्नवी स्त्री॰ 'कान्हुहारा पुरादाना अङ्कसंज्ञीय कोपतः । तस्य कन्यात्वरूपा च जाह्नवी तेन कीर्तिते'त्युक्तनिर्वचनायां गङ्गायाम् ।

जि जये भ्वा॰ पर॰ सक॰ अनिट् । जयति अजैषीत् ।

जिगीषा स्त्री॰ जि-सन् अ । जयेच्छायां, प्रकर्षे, उद्यमे च ।

जिज्ञासु त्रि॰ ज्ञातुमिच्छुः ज्ञा-सन् उ । ज्ञातुमिच्छौ, मुमुक्षौ च

जित न॰ जि-भावे क्त । जये । कर्मणि क्त । अभिभूते पराजिते जयलब्धे, वशीकृते, आयत्तीकृते च ।

जितकाशिन् त्रि॰ जितेन जयेन काशते प्रकाशते णिनि । जिताहवे, जयिनि च । [जितेन्द्रिये ।

जितात्मन् त्रि॰ जित वशीकृत आत्मा इन्द्रियं मनो वा येन ।

जितेन्द्रिय त्रि॰ जितानि वशीकृतानीन्द्रियाणि येन । 'श्रुत्वा दृष्ट्वा तथा स्पृष्ट्वा भुक्त्वा घ्रात्वा च यो नरः । न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रिय' इत्युक्ते हर्षविषादशून्ये शान्ते जने । कामवृक्षिके पु॰ ।

जित्य पु॰ जि-क्यप् । हलङ्के हलभिन्ने कर्षणार्थं स्थूलकाष्ठे (मर) । अस्य स्त्रीत्वोक्ति प्रामादिकी ।

जित्वर त्रि॰ जि-क्वरप् । जयशीले । स्त्रियां ङीप् ।

जिन पु॰ जयति संसारं जि-नक् । बुद्धे, विष्णौ च । जित्वरे त्रि॰

जिम भक्षे भ्वा॰ पर॰ सक॰ सेट् । जेमति अजेमीत् ।

जिरि हिंसायां स्वा॰ पर॰ सक॰ सेट् । जिरिणोति अजिरयीत्

जिवि प्रीणने भ्वा॰ पर॰ सक॰ सेट् इदित् । जिन्वति अजिन्वीत्

जिष सेके भ्वा॰ पर॰ सक॰ सेट् । जेषति अजेषीत् ।

जिष्णु पु॰ जि-ग्स्नु । अर्जुने, इन्द्रे, विष्णौ, सूर्ये, वसुषु च । जित्वरे त्रि॰ ।

जिह्म त्रि॰ हा-मन् द्वित्वादि नि॰ । कुटिले, मन्दे, अपटुत्वे च

**जिह्मग** पु० जिह्मं गच्छति गम-ड। सर्पे,मन्दगच्चे च। मन्दगे, कुटिले च त्रि०।

**जिह्वा** स्त्री० लेढि अनया लिह व नि०। *रसज्ञानेन्द्रिये रसनायाम्। [विसर्गरेखालेख्ये विसर्गभेदे

**जिह्वामूलीय** पु० जिह्वामूले भवः छ। कखाभ्यां प्राक् अर्द्ध-

**जिह्वारद** पु० जिह्वैव रदोदन्तचर्वणसाधनं यस्य। दन्तहीने जिह्वयैव चर्वणकरे खगे। [वृद्धे, जरति,चर्म्मपुटे च।

**जीन** त्रि० ज्या-वयोहानौ कर्त्तरि क्त संप्रसारणं दीर्घश्च।

**जीमूत** पु० ज्या-क्विप् जी० तया जरया मूतो बद्धः मू-बन्धने क्त, जयति नभः, जीयते वायुना वा जि-क्त मूट् दीर्घश्च वा। मेघे, मुस्तके, पर्व्वते, भृतिकरे, देवताडवृक्षे, इन्द्रे घोषातकीलतायाञ्च। [(जीरा) ख्याते पदार्थे

**जीर** पु० ज्या-रक्। जीरके,खड्गे,अणौ च। संज्ञायां कन्।

**जीर्ण** पु० जॄ-क्त। जीरके। शैलजे न०। जरायुक्ते त्रि०। स्थूलजीरके स्त्री०।

**जीर्णपर्ण** पु० जीर्णानि पर्णान्यस्य। कदम्बे। पुरातनपत्र युक्ते त्रि०। कर्म्म०। पुरातनपत्रे न०।

**जीर्णि** स्त्री० जॄ क्तिन्। जीर्णतायाम्।

**जीर्णोद्धार** पु०जीर्णस्य भग्नमन्दिरादेरुद्धारो यत्र। संस्कारभेदे

**जीव** प्राणधारणे भ्वा० पर०अक०सेट्। जीवति अजीवीत्। णिच् अजिजीवत् त अजीजिवत् त।

**जीव** पु० जीव-क। देहाभिमानिनि आत्मनि मनुष्यादिकीट पर्य्यन्ते चेतने 'प्राणान् धारयन् जीव उच्यते' इत्युक्ते प्राणिनि। करणे घञ्। जीवनोपाये। जीव-णिच् अच्। वृक्षभेदे। भावे घञ्। प्राणधारणे।

**जीवक** पु० जीवयति जीव-णिच् ण्वुल्। ओषधभेदे। पीतशाले वृक्षे क्षपणे च। सेवके, वृद्धाजीविनि, जीव्यात् आशिषि वुन्। आशास्यमानजीवने जने त्रि०।

**जीवघन** पु० जीवस्य घनीभूतिः सैन्धवशिलाशकलस्य यस्य। हिरण्यगर्भे। [चकोरपक्षिणि

**जीवजीव** पु० जीवान् जीवयति दर्शनेन तृप्तिकरत्वात् क।

**जीवञ्जीव** पु० जीवान् जीवयति खच्। चकोरे, वृक्षभेदे च

**जीवन** न०जीव्यतेऽनेन जीव-ल्युट्। वृत्तौ, जले, मज्जनि, क्षेत्रयोगे च। भावे ल्युट्। प्राणधारणे। जीवयति णिच्-ल्यु। पुत्रे जीवकौषधे, वायौ, क्षुद्रफलकवृक्षे च पु०

**जीवनयोनि** स्त्री० ६त०। न्यायोक्ते देहे प्राणस्य रक्षार्थे अतीन्द्रिये यत्नभेदे।

**जीवनहेतु** पु० ६त०। 'विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः। वृत्तिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः' इत्युक्तेषु विद्यादिषु जीवनोपायेषु दशसु।

**जीवनी** स्त्री० जीव्यतेऽनया जीव ल्युट् ङीप्। जीवन्त्याम्, काकोल्यां, स्वर्णहरितकीभेदे, शम्या,गुडूच्याम् वन्दायाञ्च

**जीवन्तिका** स्त्री० जीव-झ ङीप् स्वार्थे कन् ह्रस्वे अत इत्त्वम्। गुडूच्याम्, जीवाख्यशाके, वन्दायां, हरितक्याञ्च

**जीवन्ती** स्त्री० जीव-झ ङीप्। जीवन्त्यां, मधुश्रवाख्यौषधौ, शम्यां, गुडूच्यां, वन्दायां, हरितक्याञ्च।

**जीवन्मुक्त** त्रि० जीवन्नेव मुक्तः त्यक्तसंसारः। कृतात्मसाक्षात्कारे प्रारब्धकर्मक्षयपर्य्यन्तं सुषुप्तिवत् व्यवहर्त्तरि आत्मज्ञे जीवे 'सुषुप्तवद् जाग्रति यो न पश्यति द्वयञ्च पश्यन्नपि चाद्वयत्वतः। तथाच कुर्व्वन्नपि निष्क्रियश्च यः स आत्मविन्नान्य इतीह निश्चय' इत्युक्ते ब्रह्मात्मज्ञानयुक्ते।

**जीवन्मुक्ति** स्त्री० जीवत एव मुक्तिः कर्त्तृत्वभोक्तृत्वादिबन्धात्। जीवतो बन्धनिवृत्तौ।

**जीवपुत्रक** पु० जीवयतीति क जीवः पुत्र इव हर्षहेतुत्वात् स्वार्थे कन्। (जीयापुता) वृक्षभेदे।

**जीवपुष्पा** स्त्री० जीवं पुष्पं यस्याः। वृहज्जीवन्त्याम्।

**जीवप्रिया** स्त्री० ६त०। हरितक्याम्। [वृद्धिनामौषधे च

**जीवभद्रा** स्त्री० जीवानां भद्रं यस्याः ५व०। जीवन्तीलतायां

**जीववल्ली** स्त्री० जीवयतीति जीवा कर्म०। क्षीरकाकोल्याम्

**जीवस्थान** न० ६त०। मर्म्मणि।

**जीवा** स्त्री० जीव-अच् जीवयतेरच् वा टाप्। धनुषो गुणे, जीवन्तिकायामौषधौ, वचायां, शिञ्जिते, भूमौ, जीवनोपाये च। [मद्यौषधौषधे च

**जीवातु** पु०न०। जीव आतु। अन्ने, जीविते,जीवनौषधे, मृत

**जीवात्मन्** पु० कर्म्म०। देहाभिमानिनि जीवे।

**जीवाधार** पु०६त०। हृदये, देहे च। [आजीवने

**जीविका** स्त्री० जीव-अ कन् अत इत्त्वम्। जीवनोपाये

**जीवितकाल** पु० जीव-भावे क्त तस्य कालः। जीवनावधि काले आयुषि।

**जीवितेश** पु० ६त०। यमे, प्राणस्वामिनि, 'जीवितेशवसतिं जगाम सा' इति रघु। जीवातौ,चन्द्रे सूर्य्ये च। प्रियनाथे त्रि०

**जीवोपाधि** पु०६त०। स्वप्नसुषुप्तिजाग्रदवस्थासु।

**जीव्या** स्त्री० जीवाय हिता यत्। हरितक्याम्, जीवन्त्यां, गोक्षुरदुग्धायाञ्च।

**जु** रंहसि भ्वा०पर०अक०अनिट्। जवति। अजौषीत्। जन.

**जु** गतौ सौ०आत्म०सक०अनिट्। जवते। अजोष्ट।

जुग त्यागे भ्वा॰पर॰सक॰सेट् इदित् । जुङ्गति । अजुङ्गीत्
जुगुप्सा स्त्री॰ गुप निन्दायां स्वार्थे सन् अ टाप् । निन्दायाम्
जुङ्ग पु॰ जुगि-अच् । वृद्धदारकवृक्षे वा स्त्री॰ इति केचित् ।
जुटिका स्त्री॰ जट-संहतौ टाप् पृ॰। शिखायां,संहतकेशे च ।
जुड प्रेरणे चु॰उभ॰सक॰सेट् । जोडयति ते अजूजुडत् त
जुड बन्धे तुदा॰कुटा॰पर॰सक॰सेट् । जुडति अजुडीत् जुजोड
जुड गतौ तु॰पर॰सक॰सेट् । जुडति अजोडीत् । [जोतत् त
जुत दीप्तौ भ्वा॰ आत्म॰अक॰सेट् । जोतते अजोतिष्ट । अजु॰
जुन गतौ तु॰ पर॰ सक॰ सेट् । जुनति अजोनीत् ।
जुर्व वधे भ्वा॰पर॰सक॰सेट् । जूर्वति अजूर्वीत् । जूर्त्तः जूर्त्तिः
जुल पेषणे चु॰उभ॰सक॰सेट् । जोलयति ते अजूजुलत् त
जुष तृप्तौ तर्के च वा चु॰उभ॰पक्षे भ्वा॰पर॰सक॰सेट् । जोष-
यति ते जोषति अजूजुषत् त अजोषीत् ।
जुष प्रीतौ अक॰,सेवने सक॰तुदा॰आत्म॰सेट् । जुषते अजोषिष्ट ।
जुष्ट न॰ जुष-क्त । उच्छिष्टे । सेविते त्रि॰ ।
जुहू स्त्री॰ जुहोत्यनया हु-क्विप् नि॰ । पलाशकाष्ठनिर्मिते
अर्द्धचन्द्राकृतिरूपे यज्ञपात्रभेदे, पर्णमये यज्ञपात्रभेदे च
'यस्य पर्णमयी जुहूर्भवती'ति श्रुतिः ।
जूट पु॰ जट बन्धे च पृ॰ । बन्धे, समूहे, जटायाञ्च ।
जूति स्त्री॰ जु-क्तिन् नि॰ दीर्घः । वेगे ।
जूर वयोहानौ अक॰ वधे सक॰ दिवा॰ आत्म॰ सेट् । जूर्यते
अजूरिष्ट । जूर्णः ।
जूर्ण पु॰ जूर-क्त । (उलुखड़) तृणभेदे ।
जूर्त्ति स्त्री॰ ज्वर-क्तिन् संप्रसारणम् । ज्वरे ।
जूष वधे भ्वा॰उभ॰सक॰सेट् । जूषति ते अजूषीत् अजूषिष्ट
जूष पु॰न॰ जूष-घञ् अच् वा । मुद्गादीनां क्वाथे (यूष) ।
जूषण न॰ जूष-ल्यु । भातपुष्पायाम् (धाइफुल) ।
जृ न्यक्कारे भ्वा॰पर॰सक॰ अनिट् । जरति अजार्षीत् ।
जृभ जृम्भणे (हाइतोला) भ्वादि॰ आत्म॰ सक॰ सेट् इदित् ।
जृम्भते अजृम्भिष्ट ।
जृभ जृम्भे भ्वा॰आत्म॰सक॰सेट् । जर्भते अजर्भिष्ट ।
जृम्भ पु॰ जृभि घञ् । गात्रविकाशे (हाइतोला) अ टाप् । अत्रैव
स्त्री॰। तत॰ स्वार्थे कन् अत इत्वम् जृम्भिकाप्यत्रैव ।
जृम्भकास्त्र न॰ जृभि-णिच्-ण्वुल् कर्म॰ । विपक्षस्य जृम्भोप
लक्षितनिद्राकारकेऽस्त्रे ।
जृम्भिणी स्त्री॰ जृभि-णिनि । एलापर्ण्याम् ।
जॄ जरायां दिवा॰पर॰अक॰सेट् षटादि॰ । जीर्यति अजरत्
अजारीत् । जीर्णः । जरा । जरयति ।

जॄ जरायां वा चुरा॰उभ॰ पक्षे क्र्यादि॰ प्वादि॰ अक॰सेट् ।
जारयति ते जृणाति । अजीजरत् अजरत्-अजारीत् ।
जेमन न॰ जिम-ल्युट् । भक्षणे ।
जेय त्रि॰ जि-कर्मणि यत् । जेतव्यमात्रे ।
जेष गतौ भ्वा॰ आत्म॰सक॰सेट् । जेषते अजेषिष्ट । णिच्
अजिजेषत् त । [अजिजेहत त
जेह यत्ने भ्वा॰आत्म॰ अक॰ सेट् । जेहते अजेहिष्ट । णिच् ।
जै क्षये भ्वा॰पर॰अक॰ अनिट् । जायति अजासीत् । जान ।
जैत्र त्रि॰ जेतैव जेतृ प्रज्ञादि॰ अण् । जयशीले । पारदे पु॰।
औषधे न॰ ।
जैत्री स्त्री॰ जैत्रैव जैत्र+स्वार्थे अण् ङीप् । जयन्तीवृक्षे ।
जैन पु॰ जिनो देवतास्य अण् । बौद्धधर्मावलम्बिनि अर्हदुपासके
जैमिनि पु॰ वेदमीमांसाशास्त्रकर्त्तरि व्यासशिष्ये मुनिभेदे ।
जैवातृक पु॰ जीव-आतृच् तत -कण् वृद्धिश्च । चन्द्रे, औषधे,
कर्पूरे च । दीर्घायुष्के त्रि॰ ।
जोङ्गक पु॰न॰ । जुगि-वर्ज्जने ण्वुल् नि॰ । अगुरुचन्दने ।
जोषम् अव्य॰ जुष-अम । सुखे,मर्यादायां,तूष्णीमर्थे, लङ्घने च ।
जोषा स्त्री॰ जुष्यते जुषते वा जुष-घञ् । नार्य्याम् ।
जोषित् स्त्री॰ जुष-इति । नार्य्याम् ।
ज्ञ पु॰ ज्ञा-क । ब्रह्मणि, पण्डिते, सोमपुत्रे, बुधे च ।
ज्ञप मारणे, आलोके, निशाने,तोषणे, स्तुतौ च चुरा॰ उभ॰
सक॰ सेट् घटा॰ । ज्ञपयति ते अजिज्ञपत्-त ।
ज्ञपित त्रि॰ ज्ञप क्त । मारिते, ज्ञापिते च नि॰ ज्ञप्तोऽप्यत्र ।
ज्ञप्ति स्त्री॰ ज्ञप-क्तिन् । बुद्धौ ।
ज्ञा बोधे क्र्या॰ पर॰ सक॰ अनिट् । जानाति अज्ञासीत् ।
ज्ञा ज्ञपधात्वर्थे चुरा॰ उभ॰ सक॰ सेट् घटा॰ । ज्ञपयति ते
अजिज्ञपत् त ।
ज्ञा प्रेरणे चुरा॰उभ॰ सक॰सेट् । ज्ञापयति ते अजिज्ञपत् त
ज्ञातसिद्धान्त पु॰ ज्ञात॰ सिद्धान्त शास्त्रार्थो येन । सिद्धान्तज्ञे
ज्ञाति पु॰ज्ञा-कर्त्तरि करणे वा क्तिच् । पितृादि सपिण्डे सपिण्ड
मनुष्यसमानोदकसगोत्रजरूपे एकगोत्रोत्पन्ने पितृव्यादौ ।
ज्ञातेय न॰ ज्ञातेर्भावः ढक् । ज्ञातित्वे ।
ज्ञान न॰ ज्ञा-भावे ल्युट् । नाना परिणामरूपे बुद्धिधर्मे,
'ज्ञानं द्विधा वस्तुमात्रद्योतकं निर्विकल्पकम् । सविकल्पन्तु
भेदादिद्योतकत्वादनेकधा । संस्कारमात्रजन्मानिश्चयात्म-
ऽस्मृतिरिया तथोऽस्मानुभावतथा दृष्टानुभवादय' इत्युक्ते
नानाविधेषु बुद्धिपरिणामेषु । [ब्रह्मलाभोपाये विद्याभेदे ।
ज्ञानयोग पु॰ ज्ञानमेव योगः कौशलं मोक्षप्राप्त्युपायो वा ।

**तथागत** पु० यथा पुनरावृत्तिर्न भवति तथा गतो ज्ञातः । बुद्धमुनौ
**तथाच** अव्य० तथेति चिनोति चि-ड । पूर्व्वोक्तार्थदृढीकरणे
**तथाहि** अव्य० तथा च हि च द्व० । निदर्शने प्रसिद्धमेवेत्यर्थे
**तथ्य** न० । तथा तत्र साधु यत् । सत्ये । तद्वति त्रि० ।
**तद्** त्रि० तन-अदि डिच्च । पूर्व्वोक्ते बुद्धिस्थे, परामर्शयोग्ये
विप्रकृष्टविषये च । ब्रह्मणि न० । 'ओं तत्सदिति निर्देशो
ब्रह्मणः' इति गीता ।
**तदा** अव्य० तस्मिन् काले दाच् । तस्मिन् काले इत्यर्थे ।
**तदात्मन्** त्रि० स आत्मा यस्य । तत्स्वरूपे ।
**तदात्व** न० तदेत्यस्य भाव तदा+त्व । तत्काले ।
**तदानीम्** अ० तस्मिन् काले-तद्+दानीम् । तदेत्यर्थे ।
**तद्गत** त्रि० तस्मिन् गत आसक्त । तत्परे एकान्तचित्ततया तदासक्त
**तद्गुण** पु० अलङ्कारोक्ते अर्थालङ्कारभेदे ।
**तद्गुणसंविज्ञान** पु० यत्र बहुव्रीहौ गुणस्य गुणीभूतस्य
(विशेषणस्य) संविज्ञान विशेष्यपारतन्त्र्येण बोधन यत्र ।
व्याकरणोक्ते बहुव्रीहिसमासभेदे भवति च लम्बकर्णमान-
येत्यादौ गुणीभूतस्य कर्णस्याप्यानयनम् ।
**तद्धन** त्रि० तदेव धनं यस्य । कृपणे स हि सर्व्वमेव धनमप
व्ययितयावधार्य्य आत्मनि तद्धनत्वमेवाभिमन्यते ।
**तद्धर्म्मन्** त्रि उद्देश्यान्तरं विनाऽपि स एव धर्मो यस्य अनिच्
समा० । स्वधर्मोऽयमिति बुद्ध्या धर्माय प्रवर्त्तमाने जने ।
**तद्धित** पु० तेभ्यो विग्रहस्थतत्तत्प्रकृतीनां स्वविशिष्टतया प्रयो-
गेभ्य हित । व्याकरणोक्ते प्रत्ययभेदे । [न्द्रीत् ।
**तद्रि** अवसादे मोहे च भ्वा०पर०अक०सेट् इदित् । तन्द्रति अत-
**तद्वत्** अव्य० तेन तुल्य या तुल्या चा चेत् क्रियेत्यर्थे वति ।
तत्सदृशक्रियावति । तस्य तत्र वा तुल्यमित्यर्थे वति । त-
त्तुल्येऽर्थे यथा तद्वत् शिवस्य विभुता, तद्वत् शिवे भक्ति-
रित्यादि । तद् अस्त्यर्थे मतुप् मस्य व । तद्विशिष्टे त्रि० ।
**तन** विस्तृतौ तना०उभ०सक०सेट् । तनोति तनुते अतानीत्-
अतनीत् अतत-अतनिष्ट ततान तेने । तनित्वा-तान्त्वा ।
**तन** उपकारे श्रद्धायां शब्दे आघाते च वा० चुरा०उभ० पक्षे
भ्वा०सक०सेट् । तानयति ते तनति, अतीतनत् न अतानीत
अतनीत । उपसर्गात् दैर्घ्यं । आतानयति दीर्घो भवति ।
**तनय** पु० तनोति कुलम् तन-कयन् । पुत्रे । दुहितरि, अर्क
कन्यायां लतायां, घृतकुमार्य्याञ्च स्त्री० टाप् ।
**तनिमन्** पु० तनोर्भाव इमनिच् । तनुत्वे, कार्श्ये च ।
**तनु** स्त्री०तन उ । देहे, मूर्त्तौ वा ऊङ्, तनूश्च । अल्पे, विरले,
कृशे च त्रि० । स्त्रियां वा ङीप तन्वी तनुः ।

**तनुच्छाय** पु० तन्वी छाया यस्य । बर्बुरवृक्षे । हस्व० ।
देहच्छायायां स्त्री० न० । [स्त्री० देहजातमात्रे त्रि० ।
**तनु(नू)ज** पु० तनौ तन्वा वा जायते जन-ड । पुत्रे । दुहितरि
**तनुत्र** न० तनु देहं त्रायते त्रै-क । कवचे । ल्युट् । तनुत्राणमप्यत्र
**तनुत्वचा** स्त्री० तन्वी त्वचा वल्कलं यस्याः । क्षुद्राग्निमन्थे ।
**तनुपत्र** पु० तनूनि कृशानि पत्राणि यस्य । इङ्गुदीवृक्षे ।
**तनुभस्त्रा** स्त्री० तनोर्देहस्य भस्त्रेव । नासिकायाम् । कर्म० ।
क्षुद्रभस्त्रायाम् ।
**तनुभृत्** पु० तनु देहं बिभर्त्ति आत्मत्वेनाभिमन्यते भृ क्विप् ।
जीवे 'या दुस्त्यजा तनुभृतामिति भागवतम् ।
**तनुमध्या** स्त्री० तनु कृशं मध्यं यस्याः । कृशमध्यायां स्त्रियां,
षडक्षरपादके छन्दोभेदे च । [च
**तनुवार** न० तनु देहं वृणोति वृ अण् उप० । कवचे सन्नाहे
**तनुवीज** पु० तनूनि कृशानि वीजानि यस्य । वीजबदरे ।
**तनुस** न० तन-उसि । देहे ।
**तनूनपात्(द्)** पु० तनू न पातयति पत णिच् क्विप् । अग्नौ,
जठरस्थस्याऽपि भुक्तान्नपाचनादस्य देहापातकत्वम् । तनू न
पाति रक्षति पा शतृ । वह्नौ । अत्र पक्षे तनूनपान्नौ इत्या-
दिभेद तन्वा जनं कृशं पाति तनूनपं घृतादि तदत्ति अद
क्विप् । वह्नौ अस्मिन् पक्षे तनूनपादौ इत्यादिभेद ।
**तनूरुह** न० तनौ रोहति रुह क । लोमनि पक्षिणां पक्षे च
तनुमतुत्फुल्लतनूरुहीकृतामिति नैषधम् । [तङ्क्त
**तन्च** गतौ भ्वा० पर० सक० । तञ्चति अतञ्चीत् । तञ्चित्वा
**तन्च** सङ्कोचने रुधा०पर० सक०वेट् । पाणिनीयगणे अनुष
ङ्गसाहचर्य्यादय वेट्केव वोपदेवगणे उदित्करणे प्रामादि
कम् । तनक्ति अतञ्चीत् अताङ्क्षीत् ।
**तन्ज** सङ्कोचने रुधा०पर० सक० । पाणिनीयगणे (तनूचू)
इत्यत्र तनुज इति पाठान्तरम् अनुषङ्गसाहचर्य्यात् अय
मुदित्त्वात् वेट्केव । तनक्ति अतञ्जीत् अताङ्क्षीत् ।
**तन्तु** पु० तन-तुन् । ग्राहे अपत्ये सन्ततौ, सूत्रे च ।
**तन्तुकीट** पु० तन्तौ कीट । (गुटिकीका) कीटभेद ।
**तन्तुनाभ** पु०तन्तुर्नाभावस्य अच् समा० । (माकडसा)लूतायाम
**तन्तुनिर्य्यास** पु० तन्तुरिव निर्य्यासो यस्य । तालवृक्षे ।
**तन्तुपर्व्वन्** न० तन्तो यज्ञोपवीतस्य दानरूप पर्व्व । चान्द्र
श्रावणपौर्णमास्याम् तद्दिने हि सामगाय यज्ञोपवीतदानो
त्सव प्रवर्त्तते विहित ।
**तन्तुभ** पु० तन्तुना सूत्रेण भाति भा-क । सर्षपे वत्से च ।
**तन्तुर(ल)** न० तन्तुर्विद्यतेऽस्य र लच् वा । मृणाले ।

तन्तुवाप पु० तन्तून् वपति वप-अण् उप० । तन्तुवाये (ताँति)

तन्तुवाय पु० तन्तून् वयति वे-अण् । (ताँति, जातिभेदे ।

तन्तुविग्रहा स्त्री० तन्तवो विग्रहे यस्याः । कदल्याम् । तत्-त्वचि हि बहुसूत्राणि प्रादुर्भवन्ति । [गृहे

तन्तुशाला स्त्री० तन्तूनां वयनाय शाला । (ताँतघर) तन्तुवपन

तन्तुसन्तत त्रि० तन्तुभिः सन्ततं व्याप्तम् । सूतवस्त्रे ।

तन्तुसार तन्तव इव सारो मज्जास्य । गुवाकवृक्षे ।

तन्त्र न० तन-ष्ट्रन् । सिद्धान्ते, औषधौ, कुटुम्बकार्ये, प्रधाने, तन्तुवाये, परिच्छदे, हेतौ, उभयार्थे प्रयोजके तन्त्रे, इति कर्त्तव्यतायाम् राष्ट्रे, परच्छन्दे करणे, अर्थसाधके, तन्त्रे, स्वराष्ट्रचिन्तायाम् परिजने, तन्तुवायशलाकायाम् प्रबन्धे, शपथे, धने, गृहे, वयनसाधने, कुले, वेदशाखाभेदे, वेदादिशास्त्रे, स्वनामख्याते शिवायुक्ते शास्त्रे च ।

तन्त्रक न० तन्त्रादचिरादपहृतम् कन् । नवीने वस्त्रे ।

तन्त्रता स्त्री० तन्त्रस्य भावः तल् । अनेकोद्देशेन सकृत्प्रवृत्तौ यथा तर्पणपूजनादावनेककर्मोद्देशेन सकृदनुष्ठाने कृते सर्वकर्माङ्गस्नानसिद्धिः ।

तन्त्रवाप(य) पु० तन्त्राणि तन्तून् वप(य)ति वप-वे-वा अण् उप० । तन्तुवाये (ताँति) । [गुडूच्याम्

तन्त्रिका स्त्री० तन्त्र्यते तन्त्र ईः तत: स्वार्थे कन् अस्यो ह्रस्वः ।

तन्त्री स्त्री० तन्त्रि ईः । गुडूच्याम्, वीणाभेदे, देहशिरायाम्, रज्ज्वाम् नदीभेदे, युवतीभेदे च ।

तन्द्रा स्त्री० सौ० तद्रि-अ । आलस्ये निद्रायाम् प्रमीलायाम्

तन्द्रालु त्रि० सौ० तद्रि आलुच् । निद्राशीले ।

तन्द्रि(न्द्री) स्त्री० सौ० तद्रि-क्रिन् वा ङीप् । आलस्ये निद्रायाम्

तन्मय त्रि० तदेव मयट् । तद्भावापन्ने अभेदे ।

तन्मात्र त्रि० तदेव मयट् । तदात्मके । सा मात्रा यस्मिन् । सांख्योक्तेषु 'तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता । तन्मात्राण्यविशेषाणि अविशेषास्ततो हि ते । न शान्ता नापि घोरास्ते न मूढाश्चाविशेषिणः, इत्युक्तेषु पञ्चसु शब्दादि-कारणीभूतेषु भूतेषु ।

तन्वी स्त्री० तनु+ङीप् पृश्निपर्ण्याम् । तनुलगुणयुक्तायाम् कृशाङ्गस्त्रियाञ्च । [अतपीत् ।

तप दाहे भ्वा० उभ० सक० सेट् । तपति-ते अतापीत् अतपीत्

तप उपतापे सक० ऐश्वर्ये अ० दि० आ० अनिट । तप्यते अतप्त ।

तप दाहे चु० उ० सक० सेट् । तापयति-ते अतीतपत्-त ।

तप उपतापे सक० ऐश्वर्ये अक० भ्वा० पर० अनिट । तपति अताप्सीत् ।

तप पु० तप अच् । ग्रीष्मे ज्यैष्ठाषाढात्मके ऋतौ ।

तपती स्त्री० तप-शतृ ङि० । छायानाम्न्याम् सूर्यपत्न्या, नदीभेदे सूर्यसुतायाञ्च यद्योगात् कुरुस्तापत्य उच्यन्ते ।

तपन पु० तप-ल्यु । सूर्ये तापे भल्लातकवृक्षे, नरकभेदे ग्रीष्मऋतौ अर्कवृक्षे, क्षुद्राग्निमन्थवृक्षे, सूर्यकान्तमणौ च ।

तपनतनय पु० ६त० । यमे । यमुनायाम्, शमीवृक्षे च स्त्री० ।

तपनी स्त्री० तप-ल्यु गौरा० ङीष् । गोदावरीनद्याम् ।

तपनीय न० तप-अनीयर् । स्वर्णे । स्वार्थे कन् । अत्रैवार्थे ।

तपस् पु० तप-असुन् । चान्द्रे माघे मासि, शिशिरे ऋतौ, जनलोकोपरिस्थे लोकभेदे च । आलोचने च तपोऽकुरुतेति श्रुतिः स्वाश्रमविहितधर्मे, वैधे क्लेशजनके चान्द्रायणादौ कर्म्मणि, ज्योतिषोक्ते लग्नतोनवमस्थाने च न० ।

तपस्य पु० तपसि तपश्चरणाय साधु अनतिशीतोष्णत्वात् यत् । फाल्गुने मासि । तपसि माघे भव यत् । कुन्दगुल्म वृक्षे तपश्चरणे साधुर्यत् । तपस्यभिरते त्रि० । [याञ्च

तपस्या स्त्री० तपश्चरति तपस्+क्यङ् अ । तपश्चरणे, व्रतचर्या

तपस्विन् त्रि० तपस्+अस्त्यर्थे विनि । तापसे, चान्द्रायणादिव्रतधारिणि, अनुकम्प्ये, दीने, प्रशस्ततपोवति च । घृतकरञ्जे, मत्स्यभेदे, चटके च पु० ।

तपस्विनी स्त्री० तपस्+विनि ङीप् । तपोयुक्तायां स्त्रियां, जटामांस्यां, कटुरोहिण्याम् दीनायाम् अनुकम्प्यायां स्त्रियाञ्च

तपात्यय पु० तपस्य ग्रीष्मस्यात्ययोऽवसानं यत्र काले । वर्षाकाले 'तपात्यये वारिभिरुक्षिते'ति कुमार ।

तपोधन पु० तपोधनमतोनिष्टत्वात् यस्य । तापसे, दमनवृक्षे च

तपोवन न० ६त० । तापससेव्ये वनभेदे तन्नामके तीर्थभेदे च

तप्तकुम्भ पु० तप्तः कुम्भो यत्र । नरकभेदे ।

तप्तकृच्छ्र न० 'षट्पलन्तु पिवेदम्बु त्रिपलन्तु पय पिवेत् । पलमेकं पिवेत् सर्पिस्तप्तकृच्छ्रं विधीयते इत्युक्ते व्रतभेदे, 'त्र्यहं उष्णं पिवेदापस्त्र्यहमुष्णं पयः पिवेत् त्र्यहमुष्णं घृतं पिवेत् वायुभक्षस्त्र्यहं पिवेत् । तप्तकृच्छ्रं विजानीयाच्छीतैः शीतमुदाहृतम्' इति गौतमोक्ते पुरश्चरणे । [यत्र । नरकभेदे ।

तप्तपाषाणकुण्ड न० तप्ता पाषाणा यत्र तादृशं कुण्डं

तप्तवालुक न० तप्ता वालुका यत्र । नरकभेदे ।

तप्तमुद्रा स्त्री० तप्ता मुद्रा चिह्नम् । वैष्णवोचितधर्मरूपे अग्नितापितलौहशलाकादिना कृते भगवदायुधाकारे 'तप्ता धातुमयीं मुद्रां तापयित्वा स्वकां तनुं । चक्रादिभि धृतं भूप ! धारयेत् वैष्णवो नर इति ब्रह्मपुराणोक्ते चिह्नभेदे ।

तप्तसुराकुण्ड न० तप्तायाः सुरायाः कुण्डं यत्र । नरकभेदे ।

तप्तसूर्म्मिकुण्ड न० तप्तसूर्म्याः कुण्डं यत्र । नरकभेदे ।

घनितसत्त्वज्ञानार्थे ऊहे, उत्प्रेक्षायाञ्च। [अततर्कत्-त।
तर्क दीप्तौ अक० वितर्के सक० चुरा० उभ० सेट्। तर्कयति ते
तर्कविद्या स्त्री० तत्० । गौतमोक्तानां प्रमाणप्रमेयादीनां षोडशानां पदार्थानां विद्यायां, काणादाद्युक्तषट्पदार्थादिविद्यायाञ्च।
तर्कारी स्त्री० तर्कमृच्छति ऋ अण्। जयन्तीवृक्षे।
तर्कु पु० कृत उ नि०। (टेको) इति ख्याते यन्त्रभेदे।
तर्कुलासक पु० तर्कुं लासयति चालयति लस-णिच् ण्वुल्। तर्कुचालके यन्त्रे (चरका)।
तर्ज भर्त्सने भ्वा० पर० सक० सेट्। तर्जति अतर्जीत्।
तर्ज भर्त्सने चु० आ० सक० सेट्। तर्जयते अततर्जत।
तर्जनी स्त्री० तर्ज्यतेऽनया तर्ज ल्युट्। अङ्गुष्ठान्तिकस्थ अङ्गुलौ
तर्ण पु० तृण-अच्। वत्से। ण्वुल्। गोवत्से, 'आथर्वणाया तर्णकपड्क्तिरि त छन्दोग०। सद्योजाते शिशौ च।
तर्द हिंसे भ्वा०पर०सक०सेट्। तर्दति अतर्दीत्।
तर्दू स्त्री० तर्द ऊद्-वा च। काष्ठनिर्मितायां दर्व्याम्।
तर्पण न० तृप-ल्युट्। तृप्तौ। णिच् ल्युट्। प्रीणने, ब्रह्मस्य कर्त्तव्ये पञ्चयज्ञान्तर्गते पितृयज्ञे, यज्ञकाष्ठे च।
तर्पिणी स्त्री० तर्पयति प्रीणयति णिनि। पद्मचारिण्योषधौ
तर्ब गतौ भ्वा०पर०सक०सेट्। तर्बति अतर्बीत्।
तर्मन् न० तॄ-मनिन्। यूपाग्रभागे। [मामा दिति भागवतम्
तर्ष पु० तृष-घञ्। अभिलाषे तृष्णायाञ्च 'निवृत्ततर्षैरुपगीय
तर्हि अव्य० तद्+र्हिल। तस्मिन् काले इत्यर्थे।
तल प्रतिष्ठायां वा चुरा०उभ०पक्षे भ्वा०पर० अक० सेट्। तालयति ते तलति। अतीतलत् त अतालीत्।
तल पु० न० तल-अच्। स्वरूपे यथा भूमितलं करतलम्। अधोभागे, चपेटे, तालवृक्षे च। खड्गमुष्टौ आधारे, स्वभावे च पु०। वने न०। ज्यायातवारणे, गर्त्ते च स्त्री०न०।
तलप्रहार पु० तलेन चपेटेन प्रहारः प्र+हृ घञ्। (चापड़-मारा) चपेटाघाते।
तलातल न० अतलादिषु मध्ये षष्ठमे पाताले।
तलित न० तल+तारका० इतच्। भृष्टमांसे। [स्थिते च त्रि०
तलिन न० तल इनन्। शय्यायाम्, विरले, स्तोके, तुच्छे,
तलुन पु० तॄ उनन् रस्य ल। वायौ। यूनि, तरुणे च त्रि०। युवत्यां स्त्री० ङीप्।
तल्प पु०न० तल-पक्। शय्यायाम्, अट्टालिकायां, दारेषु च।
तल्पकीट पु० इत०। (छारपोका) कीटभेदे।
तल्लज पु० लज कान्तौ अच् तद्वत् लज। प्रशस्ते उत्तरपद

स्थोयम् प्रशंसावचनैश्चेति समासेऽपि नियतलिङ्गएव तेन माघ्रपीतल्लज इत्येव।
तष्ट त्रि० तक्ष क्त। तनूकृते द्विधाकृते, शणिते च।
तष्टृ पु० तक्ष तृच्। (छुतार) जातिभेदे, विश्वकर्मणि, सूर्य्ये च
तस अलङ्कारे वा चुरा० उभ० पक्षे भ्वा० पर० सक० सेट् इदित्। तंसयति-ते तंस त अततंसत्-त अतंसीत्।
तस उपक्षेपे दिवा०पर०सक० सेट्। तस्यति अतसीत् अतासीत्। तसित्वा तस्त्वा।
तस्कर पु० तत् करोति तद्+कृ अच् नि०। चौरे, प्रकाशाप्रकाशाभ्यां परद्रव्यापहारके, दमनकवृक्षे, वृक्षायां च। चौर्यवत्या स्त्रियां स्त्री० ङीप्।
ताच्छील्य न० तत् शीलमस्य ष्यञ्। नियततत्स्वभावे।
ताट(ड)ङ्क पु० ताड्यते ताड वा इस्त ट अङ्क चिह्नं यस्य शक०। कर्णभूषणभेदे।
ताटस्थ्य न० तटस्थस्य भाव ष्यञ्। औदासीन्ये, नैकट्ये च।
ताडका स्त्री०। राक्षसीभेदे। [(कोड़ा) (चावुक)।
ताडनी स्त्री० ताड्यतेऽनया तड आघाते ल्युट्। कशायाम्
ताडपत्र न० ताडयति अच् ताड पत्रमिव। कर्णभूषणभेदे।
ताडि(डी) स्त्री० पु० तड-इ। (ताडियात) ख्याते वृक्षभेदे।
ताण्डव न० तण्डुना मुनिना प्रोक्तमस्त्वास यस्य अण्। 'पुंनृत्यं ताण्डवं प्रोक्तं स्त्रीनृत्यं लास्यमुच्यते' इत्युक्ते पुंसां नृत्ये, तृणभेदे उद्धतनृत्ये च।
ताण्डवप्रिय पु० ताण्डवं प्रियं यस्य। शिवे, नृत्यप्रियमात्रे त्रि०।
तात पु० तन क्त दीर्घश्च। पितरि। अनुकम्प्ये पूज्ये च त्रि०।
तात्पर्य्य न० तत्परस्य भाव ष्यञ्। वक्तुरिच्छायाम्, अभिप्राये, तत्परतायाञ्च। [तदुद्देश्ये च।
तादर्थ्य न० तस्मै इदम् तदर्थं तस्य भावः ष्यञ्। तदर्थत्वे,
तादात्म्य न० स आत्मा स्वरूपं यस्य तस्य भावे ष्यञ्। अभेदे, स्वरूपे च। [तादृक्।-क्ष्। तादृश। एतादृशार्थे
तादृक्ष त्रि० तमेव दर्शनमस्य दृश क्स। तथाविधेऽर्थे। क्विप्।
तान पु० तन-घञ्। विस्तार्यन्ते प्रयोगाय मूर्च्छनाशेषस्तया। तालाश्चेऽप्युनपञ्चाशत् षष्ठस्वरसमुद्भवा' इत्युक्ते गानाङ्गे स्वरभेदे 'तानप्रदायित्वमिवोपगन्तुमि'ति कुमार' विस्तारे च। ज्ञानविषये न०।
तान्त्रिक त्रि० तन्त्रं सिद्धान्तं तदर्थकशास्त्रं वाधीते वेद वा ठक्। ज्ञातसिद्धान्ते, मन्त्रवादिनि, तन्त्रशास्त्राभिज्ञे च।
ताप पु० तप-घञ्। सन्तापे, दुःखे च।
तापस न० तपसि साधु यत्। तमालपत्रे (तेजपात)। तप

अस्त्यस्य अच् । तपस्विनि त्रि० । दमनकवृक्षे, वकवृक्षे च पु० ।

तापसतरु पु० तापसोपयुक्तस्तरुः । इङ्गुदीवृक्षे तत्तैलादिना तापसानां सर्वकर्मनिर्वाहात् ।

तापसप्रिय पु० तापसानां प्रियः छायाप्रदत्वात् । प्रियालवृक्षे

तापिञ्छ(ञ्ज) पु० तापिनं छादयति जयति वा छद जि-वा ड पृषो० । तमालवृक्षे । [पश्चिमवाहिनदीभेदे ।

तापी स्त्री० तापयति अच् गौरा० ङीष् । विन्ध्याचलस्थे

तामरस न० तामरे जले सस्ति सस ड । पद्मे ताम्रे, स्वर्णे, धुस्तूरे, द्वादशाक्षरपादके छन्दोभेदे च ।

तामलकी स्त्री० ताम क्विप् ता कर्म० । भूम्यामलक्याम् ।

तामस पु० तमसि अन्धकारे अविद्यागुणे वा रत अण् । सर्पे, उलूके, खले च । तमसा गुणभेदेन निर्वृत्तम् अण् । सांख्योक्ते तमोजन्ये अहङ्कारादौ त्रि० । तमस राहोरपत्यम् अण् । राहुसुतेषु ज्योतिषोक्तेषु केतुषु । तमसा व्याप्ता अण् ङीप् । रात्रौ, जटामांस्याम्, तमोधिकायां स्त्रियाञ्च स्त्री० ।

तामिस्र पु० तमिस्रमस्त्यस्मिन् अ । सांख्योक्ते अष्टादशविधे विपर्ययरूपाज्ञानभेदे, भोगेच्छाप्रतिघातजे क्रोधे तमिस्रा पारिणि राक्षसे च । अन्धकारमये नरकभेदे न० ।

ताम्बूल न० तम अलच् बुगागम दीर्घश्च । (पान) ख्याते नागवल्लीदले गुवाके च ।

ताम्बूलकरङ्क पु० ६त० । (पानवाटा) ताम्बूलाधारपात्रे ।

ताम्बूलपत्र पु० ताम्बूलमिव पत्रमस्य । पिण्डालौ ।

ताम्बूलवल्ली स्त्री० तम क्विप् ताम् बुल मज्जने क ष० दीर्घ कर्म० ताम्बूलाख्या वल्ली । (पान) नागवल्ल्याम् स्वार्थे कन् अत्रैवार्थे । [विक्रयोपजीविनि जातिभेदे ।

ताम्बूलिक त्रि० ताम्बूलं पण्यमस्य ठक् । (तामूलि) ताम्बूल

ताम्बूलिन् त्रि० ताम्बूल+अस्त्यर्थे इनि । (तामूलि) जातिभेदे

ताम्र न० तम रक् दीर्घश्च । धातुभेदे (तामा) कुष्ठरोगभेदे च अरुणवर्णे पु० तद्वति त्रि० ।

ताम्रकर्णी स्त्री० ताम्रौ अरुणौ कर्णौ यस्याः । पश्चिम दिग्गजस्त्रियाम् । [जातिभेदे ।

ताम्रकार पु० ताम्रं ताम्रमयं करोति कृ अण् । (कांसारि)

ताम्रकूट न० ताम्रस्य ताम्रवर्णस्य कूटमिव (तामाकु) इति ख्याते पदार्थे "भविता कालकूटश्च ताम्रकूटश्च भूतले"इत्युक्तम्

ताम्रचूड पु० ताम्रा चूडा यस्य । कुक्कुटे ।

ताम्रत्रपुज न० ताम्रस्य त्रपु च ताभ्यां जायते जन-ड । कांस्ये तयोर्मिश्रणात्तज्जन्यत्वात् ।

ताम्रपट्ट न० ताम्रमयः पट्टम् । (पाटा) तन्मये लेखाधारे ।

ताम्रपत्र पु० ताम्रवर्णं पत्रमस्य । जीवशाके । कर्म० । ताम्रमये लेखनपत्रे न० । [महोदधे'रिति रघुः ।

ताम्रपर्णी स्त्री० नदीभेदे 'ताम्रपर्णीसमेतस्य मुक्तासारं

ताम्रपल्लव पु० ताम्राणि पल्लवानि यस्य । अशोकवृक्षे ।

ताम्रपाकिन् पु० पच्यते पाकः फलपुष्पादि ताम्रः पाकः अस्त्यस्य इनि । गर्दभाण्डवृक्षे ।

ताम्रपुष्प पु० ताम्राणि रक्तानि पुष्पाण्यस्य । भूमिचम्पके ।

ताम्रपुष्पिका स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् कपि कन् ह्रस्व । "रक्तत्रिवृति (नसुत्तेवडि)" । [धातक्याञ्च ।

ताम्रपुष्पी स्त्री० ताम्राणि पुष्पाण्यस्याः ङीप् । जरायाम्,

ताम्रफल पु० ताम्रं फलमस्य । अङ्कोटवृक्षे । [श्यामपुष्पी ।

ताम्रमूला स्त्री० ताम्रं मूलमस्याः टाप् । दुरालभायाम्

ताम्रवल्ली स्त्री० कर्म० । मञ्जिष्ठायाम् ।

ताम्रबीज पु० ताम्रं बीजं यस्य । कुलत्थे ।

ताम्रवृक्ष पु० कर्म० । रक्तचन्दनवृक्षे कुलत्थे च ।

ताम्रवृन्ता पु० ताम्रं वृन्तमस्य । कुलत्थे, स्त्रीत्वमपि टाप् ।

ताम्रशिखिन् पु० ताम्रवर्णा शिखाऽस्त्यस्य इनि । कुक्कुटे ।

ताम्रसार पु० ताम्रवर्णं सारमस्य । रक्तचन्दनवृक्षे । कर्म० । तत्सारे न० । [रक्तचन्दने च

ताम्रसारिक पु० ताम्रं सारोऽस्त्यस्य ठन् । रक्तखदिरे

ताम्रिक पु० ताम्रघटनं शिल्पमस्य ताम्रस्याय वा ठन् । कांस्यकारे (कासारि) जातिभेदे, ताम्रनिर्मिते कर्पूरिते पदार्थे च

ताय पालने विस्तारे च भ्वा० आत्म० सक० सेट् । तायते अतायि अतायिष्ट । णिच् अतातायत्-त ।

तार पु० तृ-स्वार्थे णिच् अच्, भेदे णिच् करणादौ घञ् वा । मानभेदे, शुद्धमुक्तायाम्, प्रणवे, देवीमन्त्रे, (कुँडी) तरणे, शिरोजातध्वनौ च । नक्षत्रे नेत्रकनीनिकायाञ्च स्त्री० न० । रूप्ये न० । अत्युच्चशब्दे, अत्युच्चे निर्मले च त्रि० । महाविद्याभेदे वालिपत्न्यां, बृहस्पतिभार्यायाञ्च स्त्री० ।

तारक पु० तारयति तॄ णिच्-ण्वुल् । कर्णधारे, भेलके, दैत्यभेदे च । नक्षत्रे, नेत्रमध्यस्थकृष्णकनीनिकायाम् स्त्री० टाप् । क्विप० नेत्रम् तारका । तारणकर्त्तरि त्रि० तत्र स्त्रियां तारिका । [तारकासुरयोधन ।

तारकजित् पु० तारकं जितवान् जि भूते क्विप् । कार्त्तिकेय

तारकित न० तारकाः जाताः अस्य इतच् । नक्षत्रयुक्ते आकाशे

तारण पु० तारयत्यनेन ल्युट् । भेलके । ष० वर्षभेदे 'यत्र भवति भावाभ्य तारणे इत्यन्दितो' इत्युक्ते वत्सरभेदे च । तारयितरि त्रि० ।

**तारतम्य** न० तरतमयोर्भावः ष्यञ् । न्यूनाधिक्ये । "मिहिर निधनमेतयोर्द्वयोस्तारतम्यविविक्तचेतसामि"त्युद्भटः ।

**तारपुष्प** पु० तारं निर्मलं शुभ्रत्वात् पुष्पमस्य । कुन्दवृक्षे ।

**तारमाक्षिक** न० तारस्य रूप्यस्य माक्षिकम् उपधातुभेदः । रजततुल्ये उपधातुभेदे ।

**तारशुद्धिकर** न० तारस्य रजतस्य शुद्धिं धात्वन्तरयोगात् जातमलशुद्धिं करोति कृ टक् । सीसके तत्सम्पर्कात् हि रजतस्य मलशुद्धिर्लोकसिद्धा । [सुग्रीवे च ।

**तारापति** पु० ६त० । शिवे, चन्द्रे, बृहस्पतौ, वालिवानरे,

**तारापीड** पु० ताराः आपीडमिव यस्य । चन्द्रे, कादम्बरीकथा- प्रसिद्धे नृपभेदे च । [त्वात् । कर्पूरे ।

**ताराभ्र** पु० तारो निर्मलः चन्द्रसूर्य अभ्रं मेघरूप शुभ्र-

**तारिणी** स्त्री० तारयति तॄ+णिच् णिनि । शिवपत्न्यां द्वितीयायां महाविद्यायाम्, तारणकर्त्र्यां स्त्रियाञ्च ।

**तार्किक** त्रि० तर्कं वेत्त्यधीते वा ठक् । तर्कशास्त्राध्येतरि तद्- भिज्ञे च । तर्कशास्त्रञ्च गौतमकणादबृहस्पत्यादिप्रणीत शास्त्रम् ।

**तार्क्ष** पु० । कश्यपमुनौ । [रथे, अश्वकर्णवृक्षे, रसाञ्जने च ।

**तार्क्ष्य** पु० तार्क्षस्यापत्यम् यञ् । गरुडे, अरुणे, सर्पे, अश्वे, सुवर्णे,

**तार्त्तीयीक** त्रि० तृतीय+स्वार्थे ईकक् । तृतीये ।

**ताल** पु तल प्रतिष्ठायाम् णिच् अच् वा । स्वनामख्याते वृक्षे, वितस्ता- ख्याम् अङ्गुष्ठमध्यमाभ्यां, परिमिते दीर्घपरिमाणभेदे, करतले, कराम्फोटे, (ताल) कांस्यमयवाद्यभेदे, (करताल) खड्गमुष्टौ च । लेखपत्रे न० "तालो ह्वादशभिर्जानुभ्रम- णात् परिकीर्त्तित" इत्युक्ते ह्वादशधा हस्तेन जानुमण्डल परिभ्रमणोपलक्षिते कालरूपे मानभेदे, गीतादौ द्रुत- मात्रादिकालक्रियामाने च ।

**तालक** न० तल स्वुल् । द्वारपिधानयन्त्रे, हरिताले, आढक्याञ्च

**तालध्वज** पु० तालचिह्नितो ध्वजो यस्य । बलभद्रे ।

**तालनवमी** स्त्री० भाद्रशुक्लनवम्याम् । तद्दिने देवेभ्यो विधानेन तालदानं स्मृतौ विहितम् ।

**तालपत्र** न० तालस्य पत्रमिव । कर्णभूषणभेदे ताडङ्के ।

**तालपत्रिका** स्त्री० तालस्य पत्रमिव पत्रमस्याः ङीप् स्वार्थे कन् ह्रस्वः । तालमूलीवृक्षे ।

**तालपत्री** स्त्री० तालस्य पत्रमिव पत्रमस्याः । मूषिकपर्ण्याम्

**तालपर्णी** न०स्त्री० तालस्य पर्णमिव पर्णमस्य । मुरानामगन्ध- द्रव्ये । स्त्रीत्वे ङीप् । आढक्यां स्त्री० ङीप् ।

**तालमूली** स्त्री० तालस्य मूलमिव मूलमस्याः । मुषल्याम् स्वार्थे कन् । तालमूलिकाप्यत्र ।

**तालवृन्त** न० ताले करतले वृन्तं बन्धनमस्य, तालस्येव वृन्त- मस्य वा । व्यजने (पाखा) स्वार्थे कन् । अत्रार्थे ।

**तालाङ्क** पु० तालस्तालचिह्नितः अङ्कः ध्वजोऽस्य । बलदेवे ।

**तालिक** पु० तालेन करतलेन निर्वृत्तः ठक् । चपेटे (चापड़) (हाततालि) । ताली+स्वार्थे कन् । तालमूल्याम् स्त्री० ।

**ताली** स्त्री० तालेन तद्विर्यासेन निर्वृत्ता अण् । (ताड़ी) ताल- जातसुरायाम् । तल स्वनामख्ये अच् गौरा० ङीप् । (ताड़ियात) वृक्षभेदे, तालमूल्याम्, (भूम्यामलकी) वृक्षभेदे, आढक्याम्, (अहर) तालीशपत्राख्ये वृक्षे, तालकोद्घाटन यन्त्रे (काठि) कुञ्चिकायाञ्च ।

**तालीश** न० तालीव रोगान् श्यति, शो-ड । स्वनामख्याते वृक्षे

**तालीशपत्र** न० तालीश तालीवद् रोगनाशक पत्रं यस्य । स्वनामख्याते वृक्षे, भूम्यामलक्याञ्च ।

**तालु** न० तरन्त्यनेन वर्णाः तॄ ञुण् रस्य लः । जिह्वेन्द्रियाधि- ष्ठाने (तेलो) स्थानभेदे । स्वार्थे कन् तालुकमप्यत्र ।

**तालुजिह्व** पु० तालु एव जिह्वा यस्य । कुम्भीरे तस्य जिह्वा- शून्यत्वेऽपि तालुनैव रसास्वादात् ।

**तावत्** अव्य० तत्परिमाणमस्य नि० । साकल्ये, अवधौ, माने, अवधारणे, प्रशंसायां पक्षान्तरे, वाक्यभूषणे, तदेत्यर्थे च । "भर्त्तापि तावत् क्रथकैशिकानामिति रघुः । तत्परिमाण- वति त्रि० स्त्रियां ङीप् तावती । [तैकत् त

**तिक** गतौ भ्वा० आत्म०सक०सेट् । तेकते अतेकिष्ट णिच् अत

**तिक** आस्कन्दे वधे च स्वा०पर०सक०सेट् । तिक्नोति अतेकीत्

**तिक्त** पु० तिज क्त । वरुणद्रुमे, कुटजे, रसभेदे (तित) च । तद्वति त्रि० । पर्पटौषधौ न० । कटुकायां पाठायां, छिक्कन्याञ्च स्त्री० टाप् ।

**तिक्तक** पु० तिक्त+संज्ञायां कन् । भूनिम्बे, (चिराता) चिरतिक्ते कृष्णखदिरे, निम्बे, इङ्गुदीवृक्षे, तिक्तार्थे, पटोले च । कटुतुम्ब्यां स्त्री० टाप् । [ल्यायाम् ।

**तिक्तगन्धिका** पु० तिक्तो गन्धो लेशोऽपि यस्याः । वराहक्रा-

**तिक्तगुञ्जा** स्त्री० गुञ्जेव तिक्ता राजद० । करञ्जे ।

**तिक्ततण्डुला** स्त्री० तिक्तास्तण्डुलोऽन्तं यस्य यस्याः । पिप्पल्याम्

**तिक्ततुम्बी** स्त्री० कर्म० । कटुतुम्ब्याम् (तितलाउ) [अलम्बुषायाञ्च

**तिक्तदुग्धा** स्त्री० तिक्तं दुग्धं निर्यासो यस्याः । क्षीरिण्याम्,

**तिक्तपत्र** पु० तिक्तं पत्रमस्य । (काकरोल) कर्कोटके ।

**तिक्तपर्व्वन्** स्त्री० तिक्तं पर्व्व ग्रन्थिर्यस्याः । ग्रन्थिदूर्व्वायाम्

**तिक्तपुष्पा** स्त्री० तिक्तानि पुष्पाण्यस्याः । (आकनादी) पाठायाम्

**तिक्तफल** पु० तिक्तानि फलानि यस्य । कतकवृक्षे (निर्मली)

**तिक्तभद्रक** पु० भद्रं करोति णिच् ण्वुल् तिक्तोऽपि भद्रक कर्म्म० । पटोले ।

**तिक्तरोहिणी** स्त्री० तिक्ता सती रोहति रुह णिनि कर्म्म० । कटुकायाम् (कट्की) स्वार्थे कन् अत्रार्थे ।

**तिक्तवल्ली** स्त्री० कर्म्म० । मूर्वालतायाम् ।

**तिक्तबीजा** स्त्री० तिक्तानि बीजानि यस्याः । कटुतुम्ब्याम् ।

**तिक्तशाक** पु० तिक्तं शाकोऽस्य । वरणद्रुमे, खदिरवृक्षे च

**तिक्तसार** पु० तिक्तः सारो निर्यासोऽस्य । खदिरे ।

**तिक्तिका** स्त्री० तिक्ता स्वार्थे कन् ह्रस्वे अतइत्वम् । कटुतुम्ब्याम् । [अतेगीत ।

**तिग** आस्कन्दे हिंसायाञ्च स्वा० पर०सक० सेट् । तिग्नोति

**तिग्म** न० तिज मक् जस्य ग । तीक्ष्णे, तद्वति त्रि० ।

**तिग्मरश्मि** पु० तिग्मा रश्मयोऽस्य । सूर्य्ये । तिग्मांश्वादयोऽप्यत्र

**तिघ** घातने स्वा०पर०सक० सेट । तिघ्नोति अतेघीत् ।

**तिज** तीक्ष्णीकरणे,चु उभ०सक०सेट् । तेजयति ते अतीतिजत् त

**तिज** क्षमायां स्वार्थे सन् निशाने न सन् भ्वा०आत्म०सक०सेट् । तितिक्षते तेजते । अतितिक्षिष्ट अतेजिष्ट । [चालन्य स

**तितउ** पु० तनु डउ सन्वच्च डउ इति निर्द्देशात् न सन्धि ।

**तितिक्षा** स्त्री० तिज क्षान्तौ स्वार्थे सन् अ टाप् । क्षमायां परापमानादिसहने, शीतोष्णादिद्वन्द्वसहने च ।

**तितिक्षु** त्रि० तिज सन् उ । प्राप्तवियोगफलकभिन्नगीत दि सहनशीले । [(तितिर) पक्षिभेदे ।

**तित्ति(त्ती)रि** पु० तित्ति इत्यव्यक्तशब्दं राति रा क, डि वा ।

**तिथि(थी)** पु० स्त्री० अत इथिन् ट वा ङीप् । मन्द्रचन्द्रकलाक्रियारूपासु प्रतिपदादिषु, पञ्चदशसङ्ख्यायाञ्च ।

**तिथिक्षय** पु० तिथीनां तिथ्युपलक्षित चन्द्रकलानां क्षय क्षया रम्भो यस्मिन् । दर्शे अमावास्यायाम् । ६त० । तिथीनां नाशे

**तिथिप्रणी** पु० तिथीन् प्रणयति स्वगत्या निष्पादयति प्र+णी क्विप् । चन्द्रे 'शायन्तनीं तिथिप्रण्य' इति भट्टिः ।

**तिन्तिडीक** न० तिम आर्द्रीभावे अलीकादयश्चेति नि० । वृक्ष (तेतुल)वृक्षभेदे पु० । कन्तोभे । तिन्तिडीप्यत्रार्थे स्त्री० । इत्स वा हस्वे तिन्तिडीकादयोऽप्यत्र ।

**तिन्दु** पु० तिज दु मृगय्वादि० नि० । (तेंदु) ख्याते वृक्षे स्वार्थे कन् (गाब) इति ख्याते वृक्षे पु०स्त्री० स्त्रीत्वे ङीप् ।

**तिप** क्षरणे भ्वा०आत्म०अक० सेट् । तपते अतेपिष्ट अतिप्त ।

**तिम** आर्द्रीभावे भ्वा०पर०अक० सेट । तेमति अतेमीत् ।

**तिम** आर्द्रीकरणे दिवा०पर०सक०सेट् । तिम्यति अतेमीत ।

**तिमि** पु० तिम इन् । मत्स्ये समुद्रे, तद्धने महाकाये मत्स्यभेदे च । 'अस्ति मत्स्यस्तिमिर्नाम शतयोजनविस्तृतः । तिमि ङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति राघवे'ति रामायणम् ।

**तिमिङ्गिल** पु० तिमिं मत्स्यं गिरति गॄ निगरणे खश् मुम् च । मत्स्यभेदे, तं गिरति तिमिङ्गिलगिल महामत्स्ये

**तिमित** त्रि० तिम कर्त्तरि क्त । निश्चले क्लिन्ने च (भिजे)

**तिमिर** न० । तिम किरच् । अन्धकारे, नेत्ररोगभेदे च ।

**तिमिष** पु० तिम इषक् । पाण्यकर्कट्याम्, नाटाद्ले च ।

**तिरश्चीन** त्रि० तिर्यञ्च्+स्वार्थे ख । तिर्य्यग्भूते । 'गत तिरश्चीनमनूरुसारथेरिति माघः । [तिर्य्यगर्थे च

**तिरस्** अव्य० तॄ असुन् । अन्तर्द्धाने, तिरस्कारे अवज्ञायाम्,

**तिरस्करिणी** स्त्री० तिरस्+कृ णिनि नि० । जवनिकायां (परदा) 'तिरस्करिण्यो जलदा भवन्ती'ति कुमारः ।

**तिरस्कार** पु० तिरस्+कृ घञ् । अनादरे, अधिक्षेपे च ।

**तिरीट** पु० तॄ ईटन् । लोध्रवृक्षे ।

**तिरोधान** न० तिरस्+धा ल्युट् । अन्तर्द्धाने ।

**तिरोहित** त्रि० तिरस्+धा क्त । अन्तर्हिते, आच्छादिते च ।

**तिर्य्यञ्च्** अव्य० तिरस्+अञ्च् क्विन् तिर्य्यादेशः । वक्रे निरुद्धे च । पशुषु, पक्षिषु, वक्रगामिनि च त्रि० ।

**तिल** गतौ भ्वा०पर०सक०सेट । तेलति अतेलीत् ।

**तिल** स्नेहे तु०पर०अक०अनिट् । तिलति अतेलीत् ।

**तिल** स्नेहे चुरा० उभ०अक०सेट् । तेलयति ते अतीतिलत् त

**तिल** पु० तिल क । स्वनामख्याते वृक्षे तत्फलेऽपि पु० ।

**तिलक** पु० तिल क्वुन् तिल+इवार्थे संज्ञायां वा कन् वा । तिल वृक्षे, अश्वभेदे रोगभेदे मरुवके च । सौवर्चले, मादकाङ्गे न० । स्वनामख्याते ललाटादौ धार्य्ये चन्दनादिविशेषके पु०न० । प्रधाने त्रि० । रघुकुलतिलक इति नाटकम् ।

**तिलकट** न० तिलस्य रज तिल+कटच् । तिलानाम् चूर्णे ।

**तिलकल्क** पु० तिलस्य कल्कः । पिण्याके (खल) ।

**तिलकालक** पु० तिल इव कालकः कृष्णः । देहस्थे तिलाकारे चिह्ने, रोगभेदे च ।

**तिलकिट्ट** न० ६त० । (काइ) तैलमले, पिण्याके च (खल) ।

**तिलतैल** न० तिलस्य स्नेहः तिल+तैलच् । तिलधेनु । तिल रसोऽप्यत्र । [लतायां धेनौ

**तिलधेनु** स्त्री० तिलनिर्म्मिता धेनुः । दानार्थं विधानेन तिल

**तिलपर्णी** स्त्री० तिलस्येव पर्णान्यस्याः ङीष् । रक्तचन्दने ।

**तिलपिञ्ज** पु० निष्फलतिल तिल+पिञ्ज । निष्फलतिले सैन्ये । तिलपेजोऽप्यत्र । [धान्यगते दर्भभेदे ।

**तिलित्स** पु० तैलेन तिलमिव त्सरति छद्मना गच्छति त्सर ड ।

**तिलोत्तमा** स्त्री॰ 'तिल तिलं समानीय रत्नानां यद्विनिर्मिता। तिलोत्तमेति तत् तस्या नामेत्युक्तनिर्वचने अप्सरोभेदे।

**तिलौदन** न॰ तिलमिश्रित ओदनो यत्र। कृशरे।

**तिल्य** न॰ तिलानां भवनं क्षेत्रम् यत्। तिलभवनयोग्य क्षेत्रे

**तिल्ल** गतौ भ्वा॰पर॰सक॰सेट्। तिल्लति अतिल्लीत् [अर्थे व।

**तिल्व** पु॰ तिल्यतेऽनेन तिल स्नेहने वक्। लोध्रे स्वार्थे कन्।

**तिष्ठद्गु** अव्य॰ तिष्ठन्ति गावो यत्र नि॰। दोहनकाले 'आ तिष्ठद्गु जपन् सन्ध्या'मिति भट्टि। अस्याव्ययीभावनिष्पन्नतयाव्ययत्वमेव पुंलिङ्गतोक्तिः प्रामादिकी।

**तिष्य** पु॰ तुष्यन्त्यस्मिन् तुष-क्यप नि॰। पुष्यनक्षत्रे त्विष दीप्तौ यक् अप्रादि॰ नि॰। कलियुगे। तिष्ये नक्षत्रे जात अण् तस्य लुक्। पुष्यनक्षत्रजाते त्रि॰।

**तिष्यफला** स्त्री॰ तिष्ये कलियुगेऽपि फलं यस्याः ५ब॰। 'तिष्यामलके लक्ष्मी'रित्युक्ते आमलक्याम्। [तीकतं त।

**तीक** याचने भ्वा॰आत्म॰द्विक॰सेट्। तीकते अतीकिष्ट अति

**तीक्ष्ण** न॰ तिज कक्ष दीर्घश्च। मरणे, युद्धे, विषे, लौहे, शस्त्रे, शौर्ये, सामुद्रलवणे, मुष्कके, चव्यके उग्रे (झाल) रसे च, तद्वति त्रि॰। यवक्षारे, श्वेतकुशे कुन्दुरुके। ज्योतिषोक्ते आर्द्राश्लेषाज्येष्ठामूलनक्षत्रे च पु॰। तीव्रे आत्मत्यागिनि, निरालस्ये मुमुक्षौ योगिनि च पु॰।

**तीक्ष्णक** पु॰तीक्ष्ण+संज्ञाया कन्। गौरसर्षपे, मुष्कके च।

**तीक्ष्णकण्टक** पु॰ तीक्ष्णं कण्टकोऽस्य। धुस्तूरे, वर्वुरे, इङ्गुदीवृक्षे यमे च। कन्थारीवृक्षे स्त्री॰ टाप्।

**तीक्ष्णकन्द** पु॰ तीक्ष्णं कन्दोमूलमस्य। पलाण्डौ। [अलेशार्थे

**तीक्ष्णगन्ध** पु॰ तीक्ष्णं गन्धोऽस्य। शोभाञ्जनवृक्षे। वा कप्।

**तीक्ष्णगन्धा** स्त्री॰ तीक्ष्णं गन्धोऽस्याः। वचायां, राजिकायाम् कन्थार्यां, सूक्ष्मैलायाम् जीवन्त्याञ्च।

**तीक्ष्णतण्डुला** स्त्री॰ तीक्ष्णास्तण्डुला यस्याः। पिप्पल्याम्।

**तीक्ष्णतैल** न॰तीक्ष्णस्य स्नेहं तैलञ्च। स्नुहीक्षीरे सर्जरसे मद्ये च

**तीक्ष्णपत्र** पु॰ तीक्ष्णानि पत्राण्यस्य। तुम्बुरुवृक्षे।

**तीक्ष्णपुष्प** न॰तीक्ष्णं पुष्पमस्य। लवङ्गे। केतक्यां स्त्री टाप्।

**तीक्ष्णफल** पु॰ तीक्ष्णं फलमस्य। तुम्बुरुवृक्षे।

**तीक्ष्णमूल** पु॰ तीक्ष्णं मूलमस्य। शोभाञ्जने, कुलञ्जने च।

**तीक्ष्णरस** पु॰ तीक्ष्णो रसोऽस्य। यवक्षारे।

**तीक्ष्णशूक** पु॰ तीक्ष्णं शूकोऽग्रं यस्य। यवे

**तीक्ष्णसारा** स्त्री॰ तीक्ष्णं कठिनं सारोऽस्याः। शिंशपायाम् (शिशु)। [अत्यम्लपर्ण्याञ्च।

**तीक्ष्णा** स्त्री॰ वचायाम् कपिकच्छाम् महाज्योतिष्मत्याम्

**तीक्ष्णायस** न॰ तीक्ष्णमयः अच् समा॰। (इस्पात) लौहभेदे।

**तीम** क्लेदने दिवा॰ पर॰अक॰ सेट्। तीम्यति अतीमीत्।

**तीर** पारगतौ कर्मसमाप्तौ अद॰ चुरा॰ उभ॰ अक॰ सेट्। तीरयति ते अतितीरत् त।

**तीर** न॰ तीर-अच्। नद्यादेः कूले, सायके च। सीसके पु॰

**तीरभुक्ति** पु॰ (त्रिहुत) विदेहदेशे।

**तीर्ण** त्रि॰ तॄ क्त। उत्तीर्णे अभिभूते आप्लुते च।

**तीर्थ** न॰ तॄ थक्। शास्त्रे, यज्ञे क्षेत्रे उपाये स्त्रीरजसि नद्यादेरवतारणे, घट्टादौ, 'कृततीर्थं पयसामिवाशयः' इति भारवि। विद्यादिगुणयुतपात्रे, उपाध्याये मन्त्रिणि योनौ दर्शने, ब्राह्मण, आगमे, निदाने अग्नौ उपकूप जलाशये, दैहिके मानसिके भौमिके च त्रिविधे पवित्र स्थाने च। तत्र दैहिकानि तीर्थानि अङ्गुल्यग्रे दैवं तीर्थं कनिष्ठाङ्गुल्योर्मूले कायम् (प्राजापत्यम्)। अङ्गुष्ठाङ्गुल्यो पैत्रं मूलेऽङ्गुष्ठस्य ब्राह्म'मित्युक्तानि मानसानि, यथा 'सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः। सर्वभूतदया तीर्थं सर्वत्रार्जवमेव च। दानं तीर्थं दमस्तीर्थं सन्तोषस्तीर्थं मुच्यते। ब्रह्मचर्यं परं तीर्थं तीर्थञ्च प्रियवादिता। ज्ञानं तीर्थं धृतिस्तीर्थं पुण्यं तीर्थमुदाहृतम्। तीर्थानामपि तत्तीर्थं विशुद्धिर्मनसः परे'युक्तानि। भौमानि यथा 'यथा शरीरस्योद्देशाः केचित् मेध्यतमाः मताः। तथा पृथिव्या उद्देशाः केचित् पुण्यतमाः स्मृताः। प्रभावादद्भुताद्भूमेः सलिलस्य च तेजसः। परिग्रहात् मुनीनाञ्च तीर्थानां पुण्यता स्मृते'त्युक्तानि। [मकपित्रादिषु।

**तीर्थङ्कर** पु॰ तीर्थं हितशासनमागमं करोति कृ टक। जैन

**तीव** स्थौल्ये भ्वा॰ पर॰ अक॰ सेट्। तीवति अतीवीत्।

**तीवर** पु॰ तु अरजन्त नि। समुद्रे व्याधे, वर्णसङ्करजाति भेदे (तेओर)।

**तीव्र** पु॰ तीव रक्। शिवे। लौहे, सीसके, तीक्ष्णे च न॰। तद्वति तु सक्ते, अत्यन्ते नितान्ते च त्रि॰। कटुरोहिण्यां राजिकायां, गण्डदूर्वायां महाज्योतिष्मत्यां नदीभेदे च स्त्री॰

**तीव्रकण्ठ** पु॰ तीव्रः कण्ठो यस्मात् ५ब॰। सेवनेन कण्ठपीडके शूरणे (ओल) तस्य कण्ठोद्वेजितालोकप्रसिद्धा।

**तीव्रगन्धा** स्त्री॰ तीव्रो गन्धोयस्याः। यवान्याम्।

**तीव्रज्वाला** स्त्री॰ तीव्रं यथा तथा ज्वालयति उद्दीपयति सेवितम् ज्वल णिच् अच्। धातक्याम्। तत्सेवने गात्रे सन्तापजन्म लोकप्रसिद्धम्।

**तीव्रवेदना** स्त्री॰ कर्म॰। अत्यन्तपीडायां यातनायाम्

तुर न तर क। तूर्णं शीघ्रे। वग स्त्रीत्वमपि तुरापाडिति
तरग पु तु रेण वगेन गच्छति गम–ड। घोटके, चित्त च।
तुरगस्कन्ध पु० तुरग+समूह स्कन्धच। अश्वसमूहे। द्वत०।
अश्वस्कन्ध। [अश्वगन्धायाम।
तुरगी स्त्री तुरगस्तुरगगन्धोऽस्त्यस्या अच गौरा० ङीष्।
तुरङ्ग पु० तुरेण गच्छति गम ख मुम् वा डिच्च। घोटके चित्ते
डित्वामाव तुरङ्गमोऽप्यत्र।
तुरि(री) स्त्री० तुर इन वा ङीप। तन्तुवायस्य कार्पासादिनि
र्मिते वयनसाधने (माकु) तन्तटचातुरीतुरीति नैषधम।
तुरीय त्रि० चतुर्+पूरण तीय नि०। चतुर्थे वदान्तोक्ते
युद्धे निर्गुणे ब्रह्मणि।
तुरीयवर्ण पु० कर्म०। शूद्रे। [दयोऽप्यत्र।
तुरुङ्गवदन पु० तरङ्गस्येव वदनमस्य। किन्नरे तुरङ्गवक्त्रा
तुरङ्गारि पु० ६त०। करवीरे वृक्षे, महिषे च।
तुरासाह पु० तुरा वग सहते तुर वगवन्तम् अासाहयते अभि
भवति वा क्विप् डलयदे मत्वम्। इन्द्रे।
तुरुष्क पु० तुर उधिक स्वार्थे कन् इसुसोरिति षत्वम्।
गन्धद्रव्यभेदे (शिलारस)।
तुर्य त्रि० चतुर्णां पूरण यत नि०। चतुर्थे।
तुर्व्व हिंसे भ्वा०पर सक०सेट। तूर्व्वति अतूर्व्वीत। तूर्त्त।
तुर्वसु पु० ययातिनृपतिपुत्रभेदे।
तुल उन्माने वा चुरा उभ०पक्षे भ्व पर सक०सेट। तोलय त
ते तोलति अतूतुलत त। तुलयति तु तुलायद्वत णिच
तुलसी स्त्री तुलाम्स्यति क्षम अथ शक। 'यस्या दवि तुला
नास्ति विश्वेषु पावितेषु च। तुलसी तेन सा ख्यात' इत्युक्ते
स्वनामख्याते वृक्षे।
तुला स्त्री० तुल भिदा०अङ। सादृश्ये माने, स्वद्यादर दारु
बन्धनाघ पलगते भाण्डे, मेषाश्रवित सप्तम राशौ तोलन
दण्डे दिव्यप्रमाणरूपे विषवर्ज ब्राह्मणस्य सर्वेषान्तु
तुला स्मृते'ति नारदोक्ते परीक्षाभेदे च।
तुलाकोटि(टी) स्त्री तुलया तुना वा कोट्यति कुट परि
तापे इ वा ङीप। नूपुरे तुलाकोटिकाग्रेप्युक्तम्।
तुलाधर त्रि० तुलाया मानदण्डस्य धर ट अच। वाणि
जके, तुलाराशौ तुलादण्डधारके गुण च।
तुलापुरुष पु० षोडशमहादानान्तर्गते दानभेदे विस्तरस्तु
मत्कृततुलादानादिपद्धतौ। [तुलादण्डे
तुलामान न० तुलार्थं तोलनार्थं मान मीयतेऽनेन मा ल्युट्।
तुलावीज न० तुलाया वीज मानम् गुञ्जायाम तन्मानस्यैव हि
मानं शास्त्रे दर्शितं यथा दशार्द्धपञ्च मदन्ति माषमिति।
तुलित त्रि० तुला+तत्करोतीति णिच्–कर्मणि क्त। परिमिते
सदृशीकृते।
तुल्य त्रि० तुलया सम्मित यत। सदृशे। [मिलेतत्र पाने
तुल्यपान न० तुल्येन सजातीयेन सह पानम्। सजातीयैर्मेलक
तुल्ययोगिता स्त्री० अलङ्कारोक्त अर्थालङ्कारभेदे।
तुवर पु० तरति हिनस्ति रोगान ष्टौ० तु ष्वरच् नि० गुणा
भाव। धान्यभेदे कषायरसे च तद्वति त्रि०। आढक्याम
सौराष्ट्रमृत्तिकायाञ्च स्त्री०। षित्व त ङीष। स्वार्थे कन
तुवरिकाप्यत्रैव। [रक्तचक्रमर्द्दने
तुवरीशिम्ब पु० तुवर्या आढक्या इव शिम्बा यस्य।
तुष तोषे दिवा पर अक०अनिट। तुष्यति अतुषत।
तुष पु० तुष क। विभीतकवृक्षे (बयडा) धान्यादि स्वनाम
ख्याते द्रव्ये च।
तुषानल पु तुषस्यानल। तुषजाते अग्नौ। [तद्वति त्रि०।
तुषार पु० अस्त्यर्थे तुष आरक। हिमे, कर्पूरे शीते च
तुषित पु० तुष कितच्। 'तोष प्रतोष सन्तोषो भद्र शान्ति
रिडस्पति। इध्म कविर्विभु स्वाहा सुदेवो रोचनो
द्विषट्। तुषिता नाम ते देवा आसन् स्वायम्भुवोऽन्तरे' इत्यु
क्तेषु द्वादशसंख्येषु मतान्तरे षट्त्रिंशत्संख्यकेषु गणदेवेषु।
तुष्टि स्त्री० तुष क्तिन्। सन्तोषे 'अकृतार्थस्य लोकस्य कृतार्थोऽ
स्मीति या मति'रित्युक्ताया बुद्धौ तुष्टिनवधेति सांख्योक्तासु
आध्यात्मिकबाह्यभेदेन नवभेदासु सिद्धिषु मातृकाभेदेषु च।
तुस ध्वाने भ्वा पर०सक०सेट्। तोसति अतोसीत।
तुह वध भ्वा०पर सक०सेट। तोहति। अतुहत अतोहीत्।
तुहिन न० तुह इनन्। हिम चन्द्रज्योत्स्नि च।
तुहिनांशु पु० तुहिनमंशवो यस्य। चन्द्रे। हिमांशुप्रभृतयोऽप्यत्र
तूड अनादरे भ्वा०पर सक०सेट। तूडयति अतूडीत। णिच
अतूतुडत त।
तूण सङ्कोचे अद०चु०उभ०सक०सेट। तूणयति ते। अतुतूणत त
तूण सङ्कोचे चु उभ०सक०सेट। तूणयति ते अतूतुणत त।
तूण पूरणे चु०आ०सक०सेट। तूणयते, अतूतुणत त।
तूण(णी) पु०स्त्री० तूण क स्त्रीत्वपक्षे गौ०ङीष। वाणाधार
स्वनामख्याते इषुधौ। तूण इ वा ङीप सङ्कोचे स्त्री०।
तूणीर पु० तूणीं सङ्कोच राति इरा त रा क। तूणे, इषुधौ
तूर हिंसे सक० त्वरे अक० दिवा आत्म० सेट। तूर्य्यते अतूरिष्ट
तूर्ण न०त्वर क्त ऊठ तस्य न। शीघ्रे, सत्वर तद्वति त्रि।
तूर्य्य न० तूर यत्। वाद्यभेदे।

तूल पूरणे चुरा०आ०सक०सेट् । तूलयते अतूतुलत ।

तूल उच्चतापरिच्छेदे निष्कासने च भ्वा० पर० सक० सेट् । तूलति अतूलीत् ।

तूल पु०न० । तूल क । कार्पासभेदे (तुला) "तूलराशिमिवानल" इति स्मृतिः । आकाशे, (तुद) वृक्षभेदे च न० । कार्पासा स्त्री० । स्वार्थे कन् अत्रैव न० । [योटघान ।

तूलकार्मुक न०६त० । तूलस्फोटनार्थे धनुषि । तूलधापाद-

तूलनाली स्त्री० तूलनिर्म्मिता नाली । पिञ्जिकायाम् (पाइज) स्वार्थे कन् अत्रैवार्थे । [(तुलार गाछ)

तूलपिचु पु० पिच-मर्द्दने कुन् तूलप्रधान पिचु । तूलवृक्षे

तूलवृक्ष पु० तूलप्रधान वृक्ष शाक० । शाल्मलिवृक्षे ।

तूलि(ली) स्त्री० तूल-इन् वा ङीप् । चित्रसाधने स्वनाम-ख्याते पदार्थे ।

तूलिका स्त्री०तूल+अस्त्यर्थे ठन् । (तोषक) शय्योपकरणभेदे । तूलयति ण्वुल् । चित्रसाधने तूली)द्रव्ये "उन्मीलित तूलि कयेव चित्र"मिति कु० स्वर्णादेरावर्त्तनपटोत्तोपयोगिपदार्थे वीरणादिशलाकायाञ्च ।

तूलिनी स्त्री० तूल+इनि । शाल्मलिवृक्षे ।

तूलिफला स्त्री० तूलि तूलवत् फल यस्याः । शाल्मलिवृक्षे ।

तूवर पु० तु-वरट् दीर्घश्च । काले ऽजातशृङ्गे गवि, अजातश्मश्रुके पुरुषे, कषायरसे च । तद्वति त्रि० । आढक्यां, सौराष्ट्र मृत्तिकायाञ्च स्त्री० ङीप् ।

तूष तुष्टौ भ्वा०पर०सक० सेट् । तूषति अतूषीत् ।

तूष्णीशील त्रि० तूष्णीं शीलं यस्य । मौनावलम्बिनि ।

तूष्णीक त्रि० तूष्णीं शीलं यस्य शीलेऽर्थे कन् मलोपश्च, मौनावलम्बिनि । [तूष्णीकामम्यत ।

तूष्णीम् अव्य० तुष-नीमु । मौने । अकस्मात्तिक्रमे कामि ।

तूस्त न०तुस-तन् दीर्घश्च । जटायां,संहतकेशेषु,धूलौ, पापे च

तृक्ष गतौ भ्वा०पर०सक०सेट् । तृक्षति अतृक्षीत् ।

तृणु भक्षे तना० उभ० सक० सेट् । तृणोमि तर्णोति तृणुते तर्णुते । अतर्णीत् अतर्णिष्ट । तर्णित्वा तृण्ट्वा ।

तृण न० तृह नक् हलोपश्च । नडादौ, खटे (खड़)

तृणकाण्ड न० तृणानां समूह दूर्वा० काण्डच् । तृणसमूहे

तृणकेतु पु० तृणेषु केतुरिव श्रेष्ठत्वात् । वंशवृक्षे, तालवृक्षे, असारत्वेन तृणद्रुमत्वमत्रवाच्यत ।

तृणजाति स्त्री० तृणमेव जाति । उलपादौ (खड) ।

तृणद्रुम पु० तृणजातीया द्रुमा असारत्वात् शाक० । नारिकेले, ताले, गुवाके, ताल्यां, केतक्यां, खर्ज्जूरे, खर्ज्जूर्याञ्च ।

तृणधान्य न० तृणमिव धान्यं अकृष्टजन्मत्वात् शाक० । नीवारे, श्यामाकादौ च ।

तृणराज पु०तृणेषु राजते राज-अच् ६त०टच् वा । तालवृक्षे

तृणबीज न०६त० । श्यामाके धान्ये ।

तृणसारा स्त्री० तृणमेव सारोऽस्याः । कदल्याम् तस्याः सर्वथाऽसारत्वात्कथनम् । [धारपत्रयुक्ते तृणभेदे

तृणेक्षु पु० तृणमिक्षुरिव तीक्ष्णधारत्वात् । वल्वजायाम् तीक्ष्ण-

तृणौकस् न०तृणनिर्म्मितमोक । तृणनिर्म्मित गृहे(खड़ेरघर)

तृणौषध न० तृणात्मकमौषधम् । एलवालुकाख्ये गन्धद्रव्ये

तृण्या स्त्री० तृणानां समूह य पा० य । तृणसमूहे ।

तृतीय त्रि० त्रयाणां पूरण त्रि+तीय सम्प्रसारणञ्च । त्रया-णां पूरणे येन त्रित्वसंख्या पूर्य्यते तस्मिन् पदार्थे ।

तृतीयप्रकृति स्त्री०स्त्रीपुंसापेक्षया तृतीया प्रकृति प्रकारः । नपुंसके क्लीवे ।

तृतीया स्त्री० चन्द्रमण्डलस्य तृतीयकलायाः सूर्य्यमण्डल प्रवेशनिर्गमान्यतरक्रियात्मिकायां तिथौ ।

तृतीयाकृत त्रि०तृतीयं कृतं त्रिगुणार्थे तृतीय+डाच्+कृ क्त । त्रिवारकृष्टे क्षेत्रे ।

तृद् अनादरे रु०उभ०सक० सेट् । तृणत्ति तृन्ते । अतर्दीत् अतृदत् अतर्द्दिष्ट । त.र्द्दित्वा-तृत्त्वा ।

तृन्प(म्प) प्रीणने तु०पर०सक०सेट् । तृपति तृम्पति अतर्पीत् ।

तृन्फ(म्फ) प्रीणने तु०प०सक०सेट् । तृफति तृम्फति अतर्फीत

तृन्ह हिंसे तु०प०सक०सेट् क्वावेट् । तृहति अतृहत् ।

तृप प्रीणने स्वा०पर०सक०सेट् । तृप्नोति अतर्पीत् ।

तृप सन्दीपने प्रीणने च वा चुरा०उभ० पक्षे भ्वा०पर०सक० सेट् । तर्पयति ते तर्पति अततर्पत् त अतीतृपत् त । अतर्पीत् । [अताप्सीत्-अतृपत् ।

तृप प्रीणने दि०पर०सक० वेट् । तृप्यति अतर्पीत् अत्राप्सीत्-

तृप प्रीणने तु०प०पर०सक०सेट् तृम्पति अतर्पीत् ।

तृप्ति स्त्री० तृप-क्तिन् । अतिशयभक्षणेन भक्ष्येच्छानिवृत्तौ ।

तृफ प्रीणने तु० पर०सक०सेट् । तृफति । अतर्फीत् ।

तृ(त्रि)फला स्त्री० त्रयाणां फलानां समाहार वा सम्प्रसार-णञ्च । हरितक्यामलकीविभीतकफलत्रये ।

तृष तृष्णायां दिवा०पर०सक०सेट् । तृष्यति अतृषत् अतर्षीत्

तृष्(षा) स्त्री० तृष क्विप् । भावुरिमते हलन्तत्वात् वा टाप् । तृष्णायां, अरपुत्रायाम्, कामदेवस्त्रीभेदे च ।

तृषाभू स्त्री० ६त० । क्लोमनि हृदयस्थे स्थानभेदे ।

तृषित त्रि० तृषा जातास्य तार० इतच् । तृष्णान्विते ।

जातिपुष्पद्वे तत्पुष्पेण वासितं हि गन्धतैलं भवति ।

**तैलम्पाता** स्त्री० तिलस्य पातोऽत्र अ नि० मुम् च । स्वधा-
याम्, पद्ममूलचिते श्राद्धे च । [गन्धद्रव्यभेदे ।

**तैलसाधन** न० तैलं साध्यतेऽनेन सिध-णिच्-ल्युट् (काकला)

**तैलीन** न०तिलानां भवनं क्षेत्रं ख । तिलभवनयोग्ये क्षेत्रे ।

**तैष** पु० तिष्यनक्षत्रयुक्ता पौर्णमासी तैषी साऽस्मिन् मासे अण् ।
चान्द्रपौषमासे । [पौषस्य पौर्णमास्याम् ।

**तैषी** स्त्री० तिष्येण नक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्र

**तोक** न० सौ०तु-क तस्य नेत्त्वम् । अपत्ये पुत्रे,दुहितरि च ।

**तोटक** न० द्वादशाक्षरपादके छन्दोभेदे । [अततोटत् ।

**तोड** अनादरे भ्वा०पर०सक०सेट् । तोडति अतोडीत् । णिच्

**तोडी(री)** स्त्री० तुड-अच् गौरा०ङीष् वा डस्य र । स्वनाम
ख्याते तैलसाधने धान्यभेदे । [चाक्षनटखण्डे च ।

**तोत्त्र** न० तुद-ष्ट्रन् । गवादिताडनदण्डे (पाचुनि) गजादि

**तोदन** न०तुद्यतेऽनेन ल्युट् । तथाऽर्थे । भावे ल्युट् । व्यथायाम्

**तोमर** पु०न०तु णिच् तोर्गतौ म्रियतेऽनेन मृ-अच् । हस्तक्षेप्ये
शल्याग्रे दण्डाकारेऽस्त्रभेदे (रायबांश) । [त्रि च ।

**तोमरिका** स्त्री० तोमर+स्वार्थे कन् । आढक्याम् । [मिश्र

**तोय** न० सौ० तु विधृतत्वे पूर्त्ति याति या-क । जले पूर्वाषाढा

**तोयकाम** पु० तोयं कामयते कम-अण् । जलवेतसे । जला-
भिलाषुके त्रि० ।

**तोयकृच्छ्र** न० जलमात्रपानरूपे व्रतभेदे । [जलदातरि त्रि०

**तोयद** पु० तोयं ददाति दा+क । मेघे,मुस्तके च । घृते न०।

**तोयधि** पु० तोयानि धीयन्तेऽत्र धा कि । समुद्रे तोयनिधा-
दयोऽप्यत्र । [लाङ्गल्याम् ।

**तोयपिप्पली** स्त्री० तोये पिप्पलीव । (कांचड़ा) शाकभेदे

**तोयपुष्पी** स्त्री० तोयेन बहुजलदानेन पुष्पाण्यस्याः । पाटला
वृक्षे । [वृक्षे । कतके (निर्म्मली)

**तोयप्रसादन** पु० तोयं प्रसादयति फलयोगेन प्र+सद-णिच्-

**तोयफला** स्त्री० तोयप्रधानं फलं यस्याः । इर्वारौ कर्कटीभेदे

**तोयवल्ली** स्त्री० तोयसन्निहितस्थाने वल्ली । कारवेल्ले (उच्छे)

**तोयसूचक** पु०तोयं तोयवर्षं सूचयति रवेण सूच-ण्वुल् । भेके

**तोरण** पु०न० तुर युच् । बहिर्द्वारे, सम्भोपरिस्थे लिङ्गाकारे
काष्ठे द्वाराग्रभागे च । कण्ठदायां न० ।

**तोल** पु० न० तुल अच् । सुवर्णादितिपरिमाणे कर्षे, स्वार्थे कन्
ल्युल् वा । तोलकमप्यत्र ।

**तौर्य्य** न० तूर्यं मुरजादौ वाद्ये भवम् अण् । मृदङ्गादिध्वनौ ।

**तौर्य्यत्रिक** न०नृत्य गीतवाद्यरूप त्रयं तौर्य्यप्रधानं त्रिकम् ।
नृत्यगीतवाद्येषु समुदितेषु 'वनेऽपि तौर्य्यत्रिकमि'ति नैषधम्

**तौलिक** पु० तूल्या जीवति ठक् । चित्रकरे ।

**त्यज** हानौ दाने च भ्वा०पर०सक०अनिट् । त्यजति अत्याक्षीत् ।

**त्यद्** त्रि० त्यज-अदि डिच्च । तच्छब्दार्थे 'योऽसौ सोऽसौ भवाम्य-
हमि'ति वेदव्यास ।

**त्यागिन्** त्रि० त्यज-घिणुन् । दातरि, शूरे, वर्जनशीले,
कर्म्मफलत्यागिनि च 'यस्तु कर्म्मफलत्यागी स त्यागीत्यभि-
धीयते' इति गीता ।

**त्रक** गतौ भ्वा० आत्म० सक० सेट् । त्रकते अत्रकिष्ट ।

**त्रख** गतौ भ्वा० पर०सक०सेट् । त्रखति अत्रखीत् अत्राखीत्

**त्रङ्ख** गतौ भ्वा०पर०सक०सेट् इदित् । त्रङ्खति अत्रङ्खीत् ।

**त्रङ्ग** गतौ भ्वा० पर०सक० सेट् इदित् । त्रङ्गति अत्रङ्गीत् ।

**त्रन्द** चेष्टायां भ्वा०पर०अक०सेट् इदित् । त्रन्दति अत्रन्दीत् ।

**त्रप** लज्जायां भ्वा०आ०अक० वेट् वा म० । त्रपते अत्रपिष्ट
अत्रप्त । णिच् त्रपयति त्रापयति । त्रपा

**त्रपा** स्त्री० त्रप-भावे अङ् । लज्जायाम् । अच् । कुलटायाम् ।
कुले कीर्त्तौ च । [सीसके,रङ्गे च ।

**त्रपु** न० अग्नि दृष्टा त्रपते लज्जते इव लज्जया द्रवीभवति वा

**त्रपुटी** स्त्री०त्रप-उटच् गौरा०ङीष् । सूक्ष्मैलायाम् ।

**त्रपुष** स्त्री० त्रपते क्विप् त्रप् उष-दाहे क क० । कर्कटीभेदे
गौरा० ङीष् । (खीरा) (शशा) ख्याते वृक्षे ।

**त्रपुस्** न० त्रप-उसि । रङ्गे ।

**त्रय** न०स्त्री० त्रयाणामवयव त्रयोऽवयवा येषां वा अयट् ।
त्रिसङ्ख्यायाम् 'त्रयमप्यत्राक्षय्य'मिति मनुः । स्त्रीत्वपक्षे
ङीप् । 'अथो नरस्त्रियोरि'ति माघ । त्रिसङ्ख्या-
विशिष्टे त्रि० स्त्रियां ङीप् । ऋगादिवेदत्रये, 'त्रयीव
नीताङ्गगुणेन विस्तर'मिति नैषधम् । मङ्गादिमूर्त्तित्रये,
दुरन्ध्याम्, सुमतौ, सोमराजीवृक्षे च ।

**त्रयीधर्म्म** पु० त्रय्या वेदत्रयेण विधीयमानो धर्म्मः शाक० ।
वैदिके धर्म्मे ज्योतिष्टोमादौ ।

**त्रयोदशन्** त्रि० त्रयश्च दश च, त्र्यधिका वा दश । त्र्यधिक
दशसङ्ख्यान्विते । तत्पूरणे तु डट् । त्रयोदश त्रि० । चान्द्रस्य
त्रयोदशकलाक्रियारूपे तिथौ स्त्री० ङीप् ।

**त्रस** धृतौ वधे निषेधे च चुरा०उभ० सक० सेट् । त्रसयति
ते अतित्रसत् त ।

**त्रस** भाषे वा० चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् इदित् ।
त्रंसयति ते त्रंसति अतत्रंसत् त अत्रंसीत् ।

**त्रस** भये वा दिवा० पक्षे भ्वा० उभा०पर०अक०सेट् । त्रसति

त्रसति अत्रसीत् अत्रासीत् त्रिसत त्रसवत्।

त्रस न० त्रस-भये कर्त्तरि अच्। वने। त्रस इती अच्। जङ्गमे त्रि०।

त्रसरेणु पु० त्रस चलो रेणु कर्म०। 'जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः। प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते' इत्युक्ते गवाक्षान्तर्गतसूर्य्यकिरणेषु दोधूयमाने परमाणुषट्कात्मके द्व्यणुकत्रयात्मके रजसि।

त्रस्त त्रि० त्रस क्त। भीते चकिते। भीमे न०।

त्रस्नु त्रि० त्रस-क्नु। भीरौ त्रासयोगे।

त्रापुष त्रि० त्रपुणा निर्वृत्तम् अण्। त्रपुमये पात्रादौ।

त्रायन्ती स्त्री० त्रै-भर्म०-क्विप् त्रा अयति आ० इ-ईर्-वा शतृ। (बला) ख्यातायाम् लतायाम्।

त्रायमाण स्त्री० त्रायते त्रै शानच्। (बला) ख्यातायां लतायाम्

त्रि त्रि० ब०व० तृ ड्रि। त्रित्वसङ्ख्याविशिष्टे। स्त्रियाम् तिस्रा देश। तिस्र इत्यादि।

त्रिंश त्रि० त्रिंशत्-पूरणे डट्। त्रिंशत्पूरणे, त्रिंशत्तमे, 'त्रिंशांशकलयाराशेर्भागं' इत्यभिधीयते इति ज्योतिषम्।

त्रिंशक त्रि० त्रिंशता क्रीत वुन्। त्रिंशत्सङ्ख्यान्वितद्रव्येण क्रीते वस्तुनि। [र्थ, तत्सङ्ख्यान्विते च।

त्रिंशत् स्त्री० त्रयोदशत परिमाणमस्य नि०। त्रिदशसङ्ख्या-

त्रिंशत्पत्र न० त्रिंशत्सङ्ख्यानि पत्राणि दलानि प्रतिपुष्पमस्य। कुमुदे।

त्रिक न० त्रयाणां संघ कन्। त्रित्वसङ्ख्यायाम् पृष्ठवंशाधो भागे, कटिभागे, त्रिफलायाम् (हरितक्यामलकीवयस्थाफलत्रये) त्रिकटुनि, (शुण्ठीपिप्पलीमरिचत्रये)। वातादिषु मिलितेषु च। त्रिषु कायति कै-क। गोक्षुरे हले पु०।

त्रिककुद् पु० त्रीणि ककुदस्थानि शृङ्गाण्यस्य ककुदस्य अन्त्य लोपः। त्रिकूटाख्ये पर्वतभेदे। [गोक्षुरके।

त्रिकट पु० त्रीन् वातादिदोषान् 'कटति आवृणोति अच्।

त्रिकटु न० त्रयाणां कटुद्रव्याणां समाहारः। मिलितेषु शुण्ठीपिप्पलीमरिचेषु। [द्वन्द्वे, मत्स्यभेदे च (टेङ्गरा)।

त्रिकण्ट पु० त्रयः कण्टा कण्टका अस्य। गोक्षुरे, क्षुद्र

त्रिकाल न० त्रयाणां कार्य्यकालभूतभविष्यत्कालानां समाहारः। भूतभविष्यद्वर्त्तमानकालत्रये प्रातर्मध्याह्नसायाह्नरूपकालत्रये च। 'त्रिकाल पूजयेद्देवीमिति तन्त्रम्।

त्रिकालज्ञ पु० त्रिकालवर्त्तिपदार्थान् जानाति ज्ञा क। सर्व्वज्ञे त्रिकालविदादयोऽप्यत्र। [पर्वते।

त्रिकूट पु० त्रीणि कूटान्यस्य। लङ्कापुराधिष्ठिते सुवेलाख्ये

त्रिकोण त्रि० त्रय कोणायस्य। त्रिकोणयुक्ते पदार्थे, ज्योतिषोक्ते लग्नात् नवमपञ्चमस्थाने न०। 'त्रिकोणगान् शुभ ग्रहान्' इति ज्योतिषम्।

त्रिकोणफल न० त्रिकोणं त्रिकोणाकारं फलम्। शृङ्गाटके (पानीफल)। [कन् तत्रैव।

त्रिगर्त्त पु० त्रयो गर्त्ताः अत्र देशे। तद्देशस्थे जने ब०व०। स्वार्थे

त्रिगुण न० त्रयाणां गुणानां समाहारः। सांख्योक्ते प्रधाने। त्रिभिर्गुण्यते गुण संख्याने अच्। त्रिभिर्गुणिते त्रि०।

त्रिगुणाकृत त्रि० त्रिगुणं कृतं कृष्टं डाच् कृ क्त। त्रिधाकर्षणेन कृष्टे क्षेत्रादौ।

त्रिगुणात्मक न० त्रयो गुणाः सत्त्वादयआत्मा स्वरूपं यस्य कप्। सांख्यमतोक्ते प्रधाने, वेदान्तोक्ते अज्ञाने च।

त्रिजटा स्त्री० रामायणप्रसिद्धे राक्षसीभेदे।

त्रिणाचिकेत पु० त्रिः कृत्वो नाचिकेतोऽग्निश्चितो येन। अध्वर्य्युभेदे 'यज्ञाग्नयो ये च त्रिणाचिकेताः' इति श्रुति

त्रिणे(नै)त्र पु० त्रीणि नेत्राण्यस्य। शिवे। पूर्व्वपदात् संज्ञायामिति णत्वे प्राप्ते गिरिनद्यादित्वात् वा णत्व मिति बोध्यम्। त्र्यम्बकादि० नेत्रयुक्ते।

त्रितय न० त्रयाणामवयव त्रयोऽवयवा येषाम् वा तयप्। त्रयमित्यर्थे त्रित्वसंख्यायाम्। त्रित्वसंख्यान्विते त्रि०।

त्रिदण्ड न० त्रयाणां दण्डानां समाहारः। वाङ्मनःकायदण्डेषु, सयादण्डोपलक्षिते संन्यासाश्रमे च।

त्रिदण्डिन् त्रि० त्रिदण्डमस्त्यस्य इनि। 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते' इति मनूक्ते संन्यासिभेदे।

त्रिदला स्त्री० त्रीणि त्रीणि दलानि प्रतिपत्रं यस्याः। (गोयालिया) गोधापदीलतायाम्।

त्रिदश पु० त्रिधा दशा जन्मसत्ताविनाशाख्या न तु वृद्धि परिणामक्षया मनुष्याणामिव दशा येषाम्। देवेषु। अथ वा त्रयविकारिशिराद्यस्मात् दश परिमाणमेषां डट् शाक० पार्थिवादित्वात् एतत्स्यैव त्रिशब्दस्य तन्मतयोः आत् उभयार्थपरत्वम्। त्रयस्त्रिंशत्सङ्ख्यानपेक्षया देवे यथा अष्टौ वसवः, रुद्रा एकादश, वस्वोऽष्टौ, विश्वे देवौ द्वाविति। अथवैव पक्ष त्रयो च दश चेति छान्दोग्येऽभिहितात् त्राधिकादशतद्योतनार्थ त्रो चेति द्विवचनान्ततया निर्देशः।

त्रिदशाधिप पु० ६त०। इन्द्रे।

त्रिदशाध्यक्ष पु० त्रिदशानां दशानां आपल्लक्षणद्वयुपनोत्रिदशानां देवानां चाऽध्यक्ष। सर्वधात्विपि ब्रह्मणि, विष्णौ च

शिवे, विष्णौ च । [रजतताम्राभिधधातुत्रये ।
त्रिलौहक न० त्रयाणां लोहानां धातूनां समाहारः । सुवर्णं
त्रिवर्ग पु० त्रयाणां धर्मार्थकामानां वर्गः । धर्मार्थकाम-
रूपेषु पुरुषार्थेषु, त्रिफलायां, कटुत्रिके, सांख्योक्ते सत्त्व-
रजस्तमोरूपगुणत्रये । 'क्षय स्थानं च वृद्धिश्च त्रिवर्गो
नीतिवेदिना'मित्युक्ते क्षयस्थानवृद्धिरूपेषु पदार्थेषु च ।
त्रिवर्णक पु०त्रयो वर्णाः शुभ्रोऽस्य कप् । गोक्षुरे । समा०द्वि०
पात्रा०स्वार्थे कन् । त्रिफलायां त्रिकटौ ब्राह्मणक्षत्रियवैश्य
रूपे द्विजातिवर्णत्रये च न० । [त्रिवर्षवयस्कायां गवि ।
त्रिवर्षिका स्त्री० त्रीणि वर्षाणि वयोऽस्याः स्वार्थे कन् ।
त्रिविक्रम पु० त्रीन् लोकान् विशेषेण सामर्थ्येन क्रामति वि+
क्रम अच । विष्णौ 'त्रिरित्येव त्रयो लोकाः कीर्त्तिता मुनि
सत्तम क्रमते तांस्त्रयान् सर्वान् त्रिविक्रमो जनार्द्दन' इति
हरिवंश बलिबन्धनसमये हि तस्य तथारूपत्वम् ।
त्रिवीज पु० त्रीणि त्रीणि वीजानि प्रतिफलं यस्य । श्यामाके
त्रिवृत्(ता) पु० त्रीन् अवयवान् वृणोति वृ क्विप् त्रिभिरवयवै
र्वृता वा । (तेओडि) ओषधिभेदे, वर्त्तन वृत् तिस्रः वृत्तो
यत्र । त्रिगुणे त्रि० । 'त्रिवृत्सौत्रं भवेत्'दिति स्मृतिः । शास्त्रे
त्रिवृतमेकैकां करोतीति श्रुत्युक्तेषु मिश्रितेषु तेजोजलान्नेषु च
त्रिवृत्पर्णी स्त्री० त्रिवृत् त्रिदोषघ्नम् पर्णमस्याः । (हेलञ्चा) हिल
मोचिकायाम् । [युक्तप्रवाहे च दक्षिणे उत्तरे च प्रयागे ।
त्रिवेणी स्त्री० तिस्रः वेण्यः प्रवाहा यत्र कप् । संततप्रवाहे
त्रिवेणु पु० त्रयो वेणवो यत्र । रथयुगस्थे ऽवयवभेदे ।
त्रिवेदिन् पु० त्रयो वेदाः पाठ्यत्वेन सन्त्यस्य इनि । ऋगादि
वेदत्रयपाठके ।
त्रिशङ्कु पु० सूर्य्यवंशीयनृपभेदे । त्रिषु अवयवेषु शङ्कुरिव ।
शलभे, मार्ज्जारे चातके, खद्योते च ।
त्रिशाखपत्र पु०तिस्रः शाखा अस्य तादृशं पत्रं यस्य । बिल्वे
त्रिशिख पु०तिस्रः शिखा प्रतिपत्रमस्य । बिल्वे । राक्षसभेदे
च । त्रिशूले, मण्डलान्तरे च न० । शिखात्रयवति
आयुधकादौ त्रि० ।
त्रिशिरस् पु०त्रीणि शिरांस्यस्य । राक्षसभेदे ज्वरे, कुबेरे च
त्रिशीर्षक न०त्रीणि शीर्षाण्यस्य कप् । त्रिशूले ।
त्रिशूल न० त्रीणि शूलानि शिखाग्राणि यत्र । स्वनाम
ख्याते अस्त्रभेदे । माने त्रि० स्त्रियां ङीप्
त्रिशूलिन् पु० त्रिशूलमस्त्यस्य इनि । शिवे । त्रिशूलधारि
त्रिशृङ्ग पु० त्रीणि शृङ्गाण्यस्य । त्रिकूटपर्व्वते ।
त्रि(ष)ष्टुप् स्त्री० त्रिषु स्थानेषु स्तुभ्नाति स्तुभ क्विप् षत्वम्

ते संप्रसारणं च । एकादशाक्षरपादके छन्दोभेदे ।
त्रिसन्ध्य न० तिसृणां सन्ध्यानां समाहारः । त्रिकाले प्राह्ण
पराह्णमध्याह्नरूपकालत्रये । 'त्रिसन्ध्यं च पठेन्नित्यमिति ।
त्रि(ष)सवन न० त्रीणि सवनानि यत्र काले वा षत्वम् ।
त्रिकाले । समाहारद्विगु । त्रैकालिके स्नानत्रये च ।
'वाग्यतस्त्रि(ष)सवनं चरेदि'ति स्मृतिः ।
त्रिस्रोतस् स्त्री० त्रिषु लोकेषु स्रोतो यस्याः । गङ्गायाम्
त्रिहल्य त्रि० त्रिवारं हलेन कृष्टं यत् । त्रिवारकृष्टे क्षेत्रे
त्रिहायणी स्त्री०त्रयो हायना वयोमानमस्याः ङीप् णत्वम् ।
त्रिवर्षायां गवि । [अत्रुटीत् ।
त्रुट छेदने दिवा०तुदा०कु०पर० सक० सेट् । त्रुट्यति त्रुटति
त्रुट छेदने चुरा०आ०सक० सेट् । त्रोटयते अतुत्रुटत ।
त्रुटि(टी) स्त्री० त्रुट-इन् किच्च वा ङीप् । लेशे, संशये सूक्ष्मै
लायां, निमेषद्वयरूपे कालभेदे, हानौ च ।
त्रुन्प(म्प) वध भ्वा०पर०सक०सेट् । त्रुम्पति अत्रुम्पीत् ।
त्रुन्फ(म्फ) वधे भ्वा०पर०सक०सेट् । त्रुम्फति अत्रुम्फीत् ।
त्रुप(फ) वधे भ्वा०पर०सक०सेट् । त्रोप(फ)ति अत्रोपी(फी)त्
त्रेता स्त्री० त्रीन् इता नि० । दक्षिणाग्निगार्हपत्याहवनीयात्मके
समुदिते अग्नित्रये, सत्ययुगानन्तरवर्त्तिनि युगभेदे, द्यूत-
क्रीडासाधनसाधनस्य यस्मिन् पार्श्वे त्रयोऽङ्कास्तस्य पार्श्वस्य
उत्तानतया पतने द्यूतविशेषे वराटकानां मध्ये त्रयाणाम्
उत्तानतया पतने च 'त्रेताहृतसर्व्वस्व'मिति मृच्छकटिकटीका
त्रेधा अव्य० त्रि+प्रकारार्थे धाच् त्रेस्त्रे इत्यादेश । त्रिप्रकारे
त्रै पालने भ्वा०आ०सक०अनिट् । त्रायते अत्रास्त ।
त्रैगुणिक त्रि० त्रिगुणार्थं प्रयच्छति त्रिगुण अद्वैतमेकगुण
प्रयुङ्क्ते 'तत्प्रयच्छति गर्ह्यमि'ति ठक् । एकगुणं दत्त्वा
त्रिगुणं ग्रहीतरि वार्द्धुषिकभेदे ।
त्रैगुण्य न० त्रयाणां गुणानां सत्त्वरजस्तमसां समाहारः तत
स्वार्थे ष्यञ् । सत्त्वादिषु गुणेषु 'त्रैगुण्यविषया वेदा' इति
गीता । गुणत्रयकार्य्येषु पुण्याऽपुण्य कर्मफलयुक्ते संसारे च ।
त्रैध न० त्रिप्रकारम् त्रि धञ् । त्रिप्रकारार्थे ।

दन्दशूक पु० गर्हितं दशति दन्श-गर्हार्थे यङ्-ऊक । राक्षसे, सरीसृपे, सर्पे च । [दम्भिता दब्धा ।

दन्भ दम्भे स्वा० प० सक० सेट् । दभ्नोति अदम्भीत् ।

दन्भ संघाते चु० आत्म० सक० सेट् । दम्भयते अददम्भत ।

दन्भ दम्भे भ्वा० पर० सक० अनिट् । दम्भति अदाम्भीत् ।

दभ प्रेरणे चु०उभ०सक०सेट् इदित् । दम्भयति ते अददम्भत् त

दभ प्रेरणे चु०उभ०सक०सेट् । दभयति ते अदीदभत् त ।

दभ्र न० दन्भ-रक् । अल्पे, 'अदभ्रदर्भामधिशय्य'ति भारवि

दम शमे दण्डे च दि० शमा० अक० सेट् । दाम्यति अदमत्-अदमीत् । दमित्वा दान्त्वा ।

दम पु० दम०-घञ् । दण्डे बाह्येन्द्रियाणां ध्येयविषयव्यतिरिक्तेभ्यो निवर्त्तने, 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते' इत्युक्ते बाह्येन्द्रियव्यापाररोधे, विकारहेतुसन्निधानेऽपि मनसः स्थैर्ये, 'कुत्सितात् कर्मणो विप्र । यश्च चित्तनिवारणम् । स कीर्त्तितो दम' इत्युक्ते कुकर्मभ्यो मनसो निवारणे, कर्द्दमे, दमने च । [घोषज' इति माघ'

दमघोष पु० शिशुपालपितरि चन्द्रवंश्ये नृपभेदे, 'सुदमोदमदमघोषसुत पु०६त० । शिशुपाले । दमघोषजादयोऽप्यत्र ।

दमनक पु० दम ल्यु स्वार्थे कन् । (दोना) वृक्षभेदे कुन्दवृक्षे च

दमनी स्त्री० दम्यतेऽनया ल्युट् । अग्निदमनीवृक्षे ।

दमयन्ती स्त्री० दम-णिच्-शतृ । नलराजपत्न्याम्, भद्रमल्लिकायाञ्च ।

दमित त्रि० दम क्त णिच् । दान्ते, भारवहनादिशिक्षायुक्ते च ।

दमु(मू)नस् पु० दम उनसि वा दीर्घ । अग्नौ, शुक्राचार्ये च

दम्पती पु०द्वि०व० । जाया च पतिश्च द्वन्द्वे जायाशब्दस्य दमादेशः । मिलितयो जायापत्यो ।

दम्भ पु० दम्भ घञ् । कपटे शाठ्ये ।

दम्भोलि पु० दभ्नोति खेदयति दन्भ-ओलि । वज्रे इन्द्रे ।

दम्य पु० दम-यत् ण्यत् वा । भारवहनादिशिक्षायोग्यवयस्के वत्से, अश्वादिषु च । दमनीये दमनार्हे शम्ये च त्रि० [अदयिष्ट ।

दय गतौ वधे, दाने पालने च भ्वा०आत्म०सक० सेट् । दयते

दया स्त्री० दय-भिदा० अङ् । 'यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ । सा दया परिकीर्त्तिता'त्युक्तलक्षणेच्छाभेदे । [इत्युक्त ।

दयालु त्रि० दय-आलुच् । कृपायुक्ते । 'दयालुरपि च क्षणं'

दयित पु० दय-क्त । पत्यौ । प्रियमात्रे त्रि० । भार्यायां स्त्री०

दर अव्य० दॄ-अप् । ईषदर्थे । भये, गर्त्ते च पु०न० । 'दरादराभ्यां दरकम्पिनी'ति नैषधम् । कन्दरे पु०स्त्री० स्त्रीत्वे ङीप् ।

दरकण्टिका स्त्री० दर कण्टक यस्याः स्वार्थे कन् । शतावर्य्याम्

दरद् स्त्री० दॄ अदि । प्रपाते, भये, पर्वते, तटे, म्लेच्छजातिभेदे, हृदये च ।

दरद पु० भये, देशभेदे च । तद्देशस्थे ब०व० । दरदा खशा इति मनुः । दरं भयं ददाति दा क । भयप्रदे त्रि० । हिङ्गुले पु०न०

दरिद्र पु० दरिद्रा अच् आलोप । निर्द्धने, दीने च ।

दरिद्रा दुर्गतौ अदा० जक्षा० जक्षा० पर० अक० सेट् । दरिद्राति अदरिद्रीत् अदरिद्रासीत् ।

दर्दुर पु० दृणाति कर्णौ शब्दैः उरच् नि० । मेघे, भेके, वाद्यभेदे, पर्वतभेदे, कृष्णमयपात्रभेदे च । ग्रामजाले न० ।

दर्द्रू स्त्री० दरिद्रा ऊ नि० । (दाद) रोगभेदे ।

दर्प पु० दृप-घञ् अच् वा । कस्तूर्य्याम्, मदे, गर्वे, अहङ्कारे च ।

दर्पक पु० दर्पयति दृप-णिच् ण्वुल् । कामदेवे ।

दर्पण पु० चु० दृप सन्दीपे ल्यु । रूपप्रतिबिम्बदर्शनाधारे, आदर्शे, पर्वतभेदे च । नेत्रे न० ।

दर्भ पु० दृभ-ग्रन्थे घञ् दृ भ वा । 'कुशाः काशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिता' इत्युक्तेषु काशादिषु षट्सु तृणेषु ।

दर्वि(र्वी) स्त्री० दृ-विन् वा ङीप् । अन्नमाद्याहारके (हाता) काष्ठादिनिर्मिते पदार्थे । स्वार्थे कन् । अल्पार्थे गोजिह्वालतायाञ्च । [वा दृ-अच् । दर्वे ।

दर्वीकर पु० दर्वीव करः फणो यस्य दर्वीमिव फणां करोति

दर्श पु० दृश्यते भास्करे चन्द्रार्कावस्मिन् पत्र दृश-घञ् । अमावस्यायां तिथौ 'अन्योन्यं चन्द्रसूर्यौ तु दर्शनाद्दर्श उच्यते, इत्युक्ते । तत्साध्ये यागभेदे च । दर्शपौर्णमासाभ्यां यजेतेति श्रुतिः । भावे घञ् । दर्शने । दृश-अच् । द्रष्टरि त्रि० ।

दर्शक पु० दर्शयति राजानम् आगतान् । दृश णिच्-ण्वुल् । द्वारपाले । दर्शयितरि त्रि० । दृश-ण्वुल् । द्रष्टरि त्रि० ।

दर्शन न० दृश ल्युट् । नेत्रे स्वप्ने, बुद्धौ, धर्मे, उपलब्धौ, दर्पणे अध्यात्मशास्त्रोपायेषु न्यायादिषु शास्त्रेषु च ।

दर्शनीय त्रि० दृश-अनीयर् । मनोहरे, दर्शनयोग्ये च ।

दर्शयितृ पु० दृश णिच् तृच् । द्वारपाले स हि द्वारागतान् राजानं दर्शयति । दर्शनकारयितरि त्रि० ।

दल भेदने भ्वा०पर०सक० सेट् घटा० । दलति अदालीत् णिचि दलयति दालयति ।

दल भेदे चुरा०उभ०सक० सेट् । दालयति ते अदीदलत् त ।

दल न० दल-अच् । शस्त्रभेदे, अपकृष्टद्रव्ये पत्रे तमालपत्रे उद्धृतायाम्, खड्गे, अर्द्धे च । खण्डे, उत्सेधवद्वस्तुनि च पु०।

स्मृते 'दद्यात् माता पिता वा यं स पुत्रो दत्तको भवेदि'त्युक्ते पुत्रभेदे पु० ।

**दत्ताप्रदानिक** न० दत्तस्याप्रदानं पुनरादानमस्त्यस्मिन् ठन् । अष्टादशविवादान्तर्गते दत्तस्य पुनरुपादानविषये 'दत्त्वा द्रव्यमसम्यग्य पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि तदि'ति नारदोक्ते व्यवहारभेदे ।

**दत्तात्मन्** पु० दत्त आत्मा येन । 'दत्तात्मा तु स्वयं दत्त' इत्युक्ते पुत्रभेदे ।

**दत्त्रिम** त्रि० दानेन निर्वृत्तः दा क्त्रि मप् च । दाननिर्वृत्ते । 'माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुत' इत्युक्ते दत्तकपुत्रे पु० ।

**दद** दाने धृतौ च भ्वा० आ० सक० सेट् । ददते अददिष्ट दददे

**दद्रु** पु० दृ-द रु । रोगभेदे (दाद्) कच्छपे च ।

**दद्रुघ्न** पु० दद्रु हन्ति हन-टक् । चक्रमर्द्दके । (दादमर्दन) ।

**दद्रुण** त्रि० दद्रु अस्त्यर्थे न । दद्रू न सुखं च वा । दद्रुरोगवति

**दद्रू** पु० दरिद्रा ऊ नि० । त्वग्रोगभेदे (दाद्) ।

**दध** दाने धारणे च भ्वा० आ० सक० सेट् । दधते अदधिष्ट ।

**दधि** न० दध-इन् । (दइ) दुग्धविकृतिभेदे, वस्त्रे च । धा कि द्वित्वम् । धारणकर्त्तरि त्रि० ।

**दधिकूर्चिका** स्त्री० 'दध्ना सह पयः पक्वं यत् स्यात्तद्दधिकूर्चिके'त्युक्तायामामिक्षायाम् (छाना) । [(कएतबेल)

**दधित्थ** पु० दधिवद्वर्णास्तिष्ठन्त्यस्मिन् स्था क पृ० । कपित्थे

**दधिपुष्पिका** स्त्री० दधिवत् शुभ्रं पुष्पमस्याः कप् अत इत्वम् । श्वेतापराजितायाम् । कप्भावे ङीप् । कोलशिम्ब्याम् ।

**दधिफल** पु० दधिवत् द्रवं फलमस्य । कपित्थे ।

**दधिमण्ड** पु० ६त० । दध्नः मस्तुनि (मात) ख्याते पदार्थे ।

**दधिसक्तु** पु० व० व० । दध्युपसिक्ताः सक्तवः । दधिमिश्रितसक्तुषु

**दधिसार** न० ६त० । नवनीते ।

**दधीच(चि)** पु० अथर्वमुनेरौरसे कर्द्दमप्रजापतिकन्यायां जाते मुनिभेदे, वृत्रासुरवधार्थं यस्यास्थिभिः देवैर्वज्रं निर्मितम्

**दधीचास्थि** न० ६त० । तेन निर्मितत्वेन तत्त्वारोप । वज्रे तन्नामके हीरके च ।

**दध्न** पु दध-न । यमभेदे 'औडम्बराय दध्नायेति यमतर्पणमन्त्र

**दनु** स्त्री० कश्यपपत्न्याम् दक्षप्रजापतेः कन्यायां दानवमातरि

**दनुज** पु० दनोर्जायते जन ड । असुरे, दनुजदलनप्रभृतयोऽप्यत्र

**दन्त** पु० अन्तर्भावितण्यर्थे दम तन् । चर्वणसाधनेऽस्थिभेदे (दात) कुञ्जे, पर्वतनितम्बे, सानुनि, छागलाद्यसहायाश्च ।

**दन्तक** त्रि० दन्ते भवित कन् । दन्तमांसोपजीविनि । नागदन्ते, गिरिप्रदेशात् तिर्य्यग्बहिर्गते पाषाणे च पु० । स्वार्थे कन् दन्तार्थे पु० ।

**दन्तकर्षण** पु० दन्तान् कर्षति कृष-ल्यु । जम्बीरे ।

**दन्तकाष्ठ** न० दन्तधावनार्थं काष्ठम् । दन्तधावनसाधने काष्ठे । तत् यस्मात् ५ब० । विकङ्कतवृक्षे पु० । [(ठोट)

**दन्तच्छद** पु० दन्ताश्छाद्यन्तेऽनेन छद-णिच्-घ ह्रस्व । ओष्ठे

**दन्तच्छदोपमा** स्त्री० दन्तच्छदश्चोष्ठ उपमीयतेऽनया अङ् । बिम्बीलतायाम् (तेलाकुचा) तत्फलेन ह्योष्ठसादृश्य प्रसिद्धम्

**दन्तधावन** पु० दन्तान् धावयति शोधयति धाव ल्यु । खदिरवृक्षे, शुभ्रकरञ्जे, बकुले च । भावे ल्युट् । दन्तशुद्धौ ।

**दन्तपत्रक** न० दन्त इव शुभ्रं पत्रं दलं यस्य । कुन्दपुष्पे

**दन्तपुष्प** न० दन्त इव शुभ्रं पुष्पमस्य । कुन्दे, कतकफले च ।

**दन्तफल** न० दन्त इव शुभ्रं फलम् । कतकफले । दन्तवत फल० स । कपित्थे पु० । पिप्पल्याम् स्त्री० टाप् ।

**दन्तमूलिका** स्त्री० दन्त इव शुभ्रं मूलं यस्याः कप् । दन्तीवृक्षे

**दन्तवक्त्र** पु० दन्तप्रधानं वक्त्रमस्य । करूषदेशस्थे नृपतिभेदे ।

**दन्तबीजक** पु० दन्तवत् बीजानि यस्य । दाडिमे वृक्षे ।

**दन्तशठ** पु० दन्तान् शठति छेदयति अच् । जम्बीरे, कपित्थे कर्मरङ्गे, नागरङ्गे च । चाङ्गेर्य्याम् क्षुद्राम्लिकायां स्त्री० ।

**दन्ताघात** पु० दन्तमाहन्ति आ+हन-अण् । निम्बूके । भावे घञ् । दन्तैराहनने ।

**दन्तालिका** स्त्री० दन्तान् अलति भूषयति, तेभ्यो वा पर्य्याप्नोति अल+अण् ण्वुल् वा । वल्गायाम् । (लागाम)

**दन्तावल** पु० दन्त+अस्त्यर्थे वलच् पूर्व्वदीर्घ । हस्तिनि ।

**दन्तिका** स्त्री० दम-तन+गौरा० ङीष् स्वार्थे कन् । दन्तीवृक्षे ।

**दन्तिन्** पु० दन्त इनि । हस्तिनि ।

**दन्तिनी** स्त्री० दन्त इनि । दन्तीवृक्षे । [ओषधौ च ।

**दन्ती** स्त्री० दम तन् गौरा० ङीष् । उदुम्बरपर्ण्यां मल्लकपर्णी-

**दन्तीबीज** न० ६त० । रेचके फलभेदे जयपाले ।

**दन्तुर** त्रि० उन्नता दन्ता सन्त्यस्य दन्त+उरच् । उन्नतदन्तयुक्ते, उन्नतानते विषमे स्थाने च ।

**दन्तुरच्छद** पु० दन्तुर उन्नत इव छदो यस्य । बीजपूरे ।

**दन्तोलूखलिक** पु० दन्ता एव उलूखलं कण्डनसाधनं विद्यतेऽस्य ठन् । तापसभेदे स हि दन्तैरेव व्रीह्यादीन् कण्डयित्वा खादति । इति । दन्तोलूखलीत्यप्यत्र ।

**दन्त्य** त्रि० दन्ते दन्तमूले वा भव यत् । दन्तदन्त्यमूलयोर्जाते तवर्गादौ वर्णे । दन्तेभ्यो हित यत् । दन्तहितकारके ।

**दन्दशूक** पु० गर्हितं दशति दन्श गर्हार्थे यङ्-ऊक । राक्षसे, सरीसृपे, सर्पे च । [दम्भित्वा दब्ध्वा ।
**दन्भ** दम्भे स्वा० प० अक० सेट् । दभ्नोति अदम्भीत् ।
**दन्भ** सङ्घाते चु० आत्म० अक० सेट् । दम्भयते अददम्भत ।
**दन्श** दशने भ्वा० पर० सक० अनिट् । दशति अदाङ्क्षीत् ।
**दभ** प्रेरणे चु०उभ०सक०सेट् इदित् । दम्भयति ते अददम्भत् त
**दभ** प्रेरणे चु०उभ०सक०सेट् । दभयति ते अदीदभत् त ।
**दभ्र** न० दन्भ-रक । अल्पे, 'अदभ्रदर्भामधिशय्य'ति भारवि
**दम** शमे दण्डे च दि० शमा० अक० सेट् । दाम्यति अदमत्-अदमीत् । दमित्वा दान्त्वा ।
**दम** पु० दम०-घञ् । दण्डे बाह्येन्द्रियाणां धैर्यविषयव्यतिरिक्तेभ्यो निवर्त्तने, 'निग्रहो बाह्यवृत्तीनां दम इत्यभिधीयते' इत्युक्ते बाह्येन्द्रियव्यापाररोधे, विकारहेतुसन्निधानेऽपि मनसः स्थैर्य्ये, 'कुत्सितात् कर्म्मणो विप्र! यच्च चित्तनिवारणम् । स कीर्त्तितो दम' इत्युक्ते कुकर्म्मभ्यो मनसो निवारणे, कर्द्दमे, दमने च । ['घोषज' इति माघ
**दमघोष** पु० शिशुपालपितरि चन्द्रवंश्ये नृपभेदे, 'सदमोदम-
**दमघोषसुत** पु० ६त० । शिशुपाले । दमघोषजादयोऽप्यत्र ।
**दमनक** पु० दम ल्यु स्वार्थे कन् । (दोना) वृक्षभेदे, कुन्दवृक्षे च
**दमनी** स्त्री० दम्यतेऽनया ल्युट् । अग्निदमनीवृक्षे ।
**दमयन्ती** स्त्री० दम णिच्-शतृ । नलराजपत्न्याम्, भद्रमल्लिकायाञ्च ।
**दमित** त्रि० दम क्त नि० । दान्ते, भारवहनादिक्लेशसहे च ।
**दमु(मू)नस्** पु० दम उनसि वा दीर्घ । अग्नौ, शुक्राचार्य्ये च
**दम्पती** पु० द्वि०व० । जाया च पतिश्च द्वन्द्वे जायाशब्दस्य दमादेशः । मिलितयोः जायापत्योः ।
**दम्भ** पु० दन्भ घञ् । कपटे शाठ्ये ।
**दम्भोलि** पु० दम्भोति खेदयति दन्भ-ओलि । वज्रेऽस्त्रे ।
**दम्य** पु० दम-यत् कयप् वा । प्राप्तभारवहनयोग्यवयस्के वत्से, अनडुहि च । दमनीये दमनार्हे शास्ये च त्रि० [अदयिष्ट ।
**दय** गतौ वधे दाने पालने च भ्वा० आत्म० सक० सेट् । दयते
**दया** स्त्री० दय-भिदा० अङ् । 'यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ! सा दया परिकीर्त्तिते'त्युक्तलक्षणेच्छाभेदे । [इत्युक्ते ।
**दयालु** त्रि० दय आलुच । कृपायुक्ते । 'दयालुरपि स तथा'
**दयित** पु० दय क्त । पत्यौ । प्रियमात्रे त्रि० । भार्य्यायां स्त्री० ।
**दर** अव्य० दृ अप् । ईषदर्थे । भये, गर्त्ते च पु० न० । 'दरादराभ्यां दरकम्पिनी'ति नैषधम् । कन्दरे पु० स्त्री० स्त्रीत्वे ङीप् ।

**दरकण्टिका** स्त्री० दर कण्ट यस्याः स्वार्थे कन् । शतावर्य्याम्
**दरद्** स्त्री० दृ अदि । प्रपाते, भये, पर्व्वते, तटे, म्लेच्छजातिभेदे, हृदये च ।
**दरद** पु० भये, देशभेदे च । तद्देशस्थे ब०व० । दरदा अस्य इति मतु । दरं भयं ददाति दा क । भयप्रदे त्रि० हिङ्गुले पु० न०
**दरिद्र** पु० दरिद्रा अच् आलोप । निर्द्धने, दीने च ।
**दरिद्रा** दुर्गतौ अदा० स्वपा० जक्षा० पर० अक० सेट् । दरिद्राति अदरिद्रीत् अदरिद्रासीत् ।
**दर्दुर** पु० दृणाति कर्णौ शब्दैः उरच् नि० । मेघे भेके; वाद्यभेदे, पर्व्वतभेदे, मलयपालभेदे च । ग्रामजाले न० ।
**दर्द्रू** स्त्री० दरिद्रा ऊ नि० । (दाद) रोगभेदे ।
**दर्प** पु० दृप-घञ् अच् वा । मृगमदे, गर्व्वे, अहङ्कारे च ।
**दर्पक** पु० दर्पयति दृप णिच् ण्वुल् । कामदेवे ।
**दर्पण** पु० चु० दृप सन्दीपे ल्यु । रूपप्रतिबिम्बदर्शनाधारे, आदर्शे, पर्व्वतभेदे च । नेत्रे न० ।
**दर्भ** पु० दृभ-ग्रन्थे घञ् दृ भ वा । 'कुशाः काशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः । मौञ्जाश्च शाद्वलाश्चैव षड् दर्भाः परिकीर्त्तिता' इत्युक्तेषु काशादिषु षट्सु तृणेषु ।
**दर्वि(र्वी)** स्त्री० दृ विन् वा ङीप् । व्यञ्जनादिदारके (हाता) काष्ठादिनिर्म्मिते पदार्थे । स्वार्थे कन् । अल्पार्थे गोजिह्वालतायाञ्च । [शा द्य-अच् । फणे ।
**दर्व्वीकर** पु० दर्व्वीव करः फणो यस्य दर्व्वीमिव फणां करोति
**दर्श** पु० दृश्यते यस्मिन् चन्द्रार्कसङ्गमो यत्र दृश-घञ् । अमावस्यायां तिथौ 'अन्योन्यं चन्द्रसूर्य्यौ तु दर्शनाद्दर्श उच्यते' इत्युक्ते । तत्साध्ये यागभेदे च । दर्शपौर्णमासाभ्यां यजेतेति श्रुतिः । भावे घञ् । दर्शने । दृश अच् । द्रष्टरि त्रि० ।
**दर्शक** पु० दर्शयति राजानम् आगतान् । दृश णिच्-ण्वुल् । द्वारपाले । दर्शयितरि त्रि० । दृश ण्वुल् । द्रष्टरि त्रि० ।
**दर्शन** न० दृश ल्युट् । नेत्रे स्वप्ने, बुद्धौ, धर्म्मे, उपलब्धौ, दर्पणे अध्यात्मज्ञानोपायेषु न्यायादिषु शास्त्रेषु च ।
**दर्शनीय** त्रि० दृश अनीयर् । मनोहरे, दर्शनयोग्ये च ।
**दर्शयितृ** पु० दृश णिच् तृच् । द्वारपाले स हि द्वारागतान् राजानं दर्शयति । दर्शनकारयितरि त्रि० ।
**दल** भेदने भ्वा० पर० सक० सेट् वा घटा० । दलति अदालीत् णिचि दलयति दालयति ।
**दल** भेदे चुरा० उभ० सक० सेट् । दालयति-ते अदीदलत् त ।
**दल** न० दल-अच् । शस्त्रच्छेदे अपकृष्टद्रव्ये पत्रे तमालपत्रे उत्सेधतायाम्, षट्के, अर्द्धे च । खण्डे, सैन्यवदस्त्रनि च पु० ।

दलकोष पु० दलान्येव कोषोऽस्य । कुन्दपुष्पवृक्षे तस्य पुष्पे कोषान्तराभावात्तथात्वम् ।

दलनिर्मोक पु० दलमेव दलं वल्कलं निर्मोक इव यस्य । भूर्जपत्रवृक्षे तस्य हि वल्कलस्य निर्मोकाकारत्वम् ।

दलपुष्पा स्त्री० दलं स्वयं विदीर्णं पुष्पमस्याः । केतक्याम् ।

दलाढक पु० दलेनाढक इव । स्वयंजाततिलवृक्षे, पृश्नाम्, कुन्दे, नागकेशरे, शिरीषे, करिकर्णे, फेने, खातके, गैरिके च

दलामल न० दलेनामलम् । मरुवके । मदनवृक्षे दमनवृक्षे च पु०

दलाम्ल न० दलेनाम्लम् । चुक्रे (चुकापालङ्ग) ।

दलित त्रि० दल-क्त । प्रफुल्ले, खण्डिते, चूर्णीकृते च 'व्येकादलिता विभाजितैस्तैरिति लीला० । [सप्तच्छदवृक्षे ।

दलेगन्धि पु० दले गन्धो यस्य इत् समा० सप्तम्यालुक् ।

दव गतौ भ्वा०पर०सक०सेट् इदित् । दन्वति अदन्वीत् ।

दव पु० दुनोति दु-अच् । वने, वनानले च । भावे अप् । उपतापे

दवथु पु० टु-दु- उपतापे अथुच् । संतापे, गात्रादिदाहे च ।

दवाग्नि पु० दवस्य वनस्याग्निः । दावानले ।

दविष्ठ त्रि० अतिशयेन दूरः-इष्ठन् अन्त्यलोपः गुणश्च । अति दूरे । ईयसुनि दवीयस् । अत्रैवार्थे स्त्रियां ङीप् ।

दश दीप्तौ चु०उभ०अक०सेट् इदित् । दंशयति-ते अददंशत्-त

दश दंशने चुरा०आत्म०सक०सेट् इदित् । दंशयते अददंशत ।

दशक न० दश परिमाणमस्य कन् । दशति, दशसङ्ख्यायाम् ।

दशकण्ठ पु० दश कण्ठा यस्य । रावणे । दशकन्धरादयोऽप्यत्र

दशत् पु० दश परिमाणमस्य अति । दशानां वर्गे-दशके दशसङ्ख्यायाम् ।

दशधा अव्य० दशप्रकारम् धाच् । दशविधे ।

दशन् त्रि० दन्श-कनिन् । (दश) सङ्ख्याविशेषे ।

दशन पु० दश्यतेऽनेन नि० नलोपः । दन्ते शिखरे च । करणे ल्युट् । कवचे । भावे ल्युट् । दंशने, दन्तादिनाघाते च ।

दशनोच्छिष्ट न० दशनैरुच्छिष्टं यत्र । अधरादिचुम्बने 'रेवतीदशनोच्छिष्टपरिपूतपुटे' इति माघः । निश्वासे पु० । दन्तोच्छिष्टे त्रि० ।

दशपुर न० दश दिशः पिपर्ति पृ-क । कैवर्तीमुस्तके । दश पुरो यत्र अप् समा० । मालवदेशैकपत्तने ।

दशबल पु० 'दानशीलक्षमावीर्यध्यानप्रज्ञाबलानि च । उपायः प्रणिधिर्ज्ञानं दश बुद्धबलानि वै' इत्युक्तानि दश बलानि यस्य । बुद्धमुनौ ।

दशभुजा स्त्री० दश भुजा यस्याः । 'इतिहासं पुराकल्पे मनोः स्वायम्भुवेऽन्तरे प्रादुर्भूता दशभुजा देवी'त्युक्तायां दुर्गायाम्

दशम त्रि० दशानां पूरणः डटि मट् । येन दश सङ्ख्या पूर्यते तस्मिन् । स्त्रियां ङीप् ।

दशमिन् त्रि० नवतेरूर्द्ध्वं दशमी साऽवस्थाभेदोऽस्त्यस्य पूरणार्थाद् इनि । नवत्यूर्द्ध्ववयस्के अतिवृद्धे ।

दशमी स्त्री० दशानां पूरणी । शतायुर्वै पुरुष इत्युक्तेः नराणां शतायुष्यनियमात् तस्यायुषो दशधाविभागे नवत्यधिकायामवस्थायाम् तद्वृद्धावस्थायाम्, चन्द्रस्य दशमकलायाः प्रवेशनिर्गमान्यतररूपात्मके तिथिभेदे 'आरभ्य सप्तमीं दशमीं च यावदि'ति स्मृतिः 'उन्मादो मूर्च्छा मृतिरित्येता' स्मरदशा दशैव स्यु'रिति विरहावस्थाभेदे मरणरूपायामवस्थायाञ्च ।

दशमीस्थ त्रि० दशम्यामवस्थायां तिष्ठति स्था-क । अतिवृद्धे नवत्यधिकवयस्के-क्षीणरागे-स्मृतिहीने, विरहवशात् मरणावस्थाप्राप्ते कामिजने च ।

दशमूल न० दश मूलानि यत्र । पाचनभेदे । दशानां मूलानां समाहारः पात्रा० । 'बिल्वश्योनाकगाम्भारीपाटलागणिकारिकाः । शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् । उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृत'मित्युक्तेषु बिल्वादिदशकमूलेषु ।

दशरथ पु० दशसु दिक्षु गतो रथो यस्य । सूर्यवंश्ये नृपभेदे

दशरथसुत पु० ६त० । रामे एवं दशरथात्मजादयोऽप्यत्र ।

दशहरा स्त्री० दशविधानि दशजन्मार्जितानि च पापानि हरति हृ-अच् । गङ्गाजन्मदिने ज्यैष्ठशुक्लदशम्याम् ज्येष्ठशुक्लदशमीमधिकृत्य 'दशपापहरा यस्मात्तस्मात् दशहरा' स्मृतेत्युक्ताम् ।

दशा स्त्री० दन्श-अङ् नि० नलोपः । अवस्थायां, दीपवर्त्याम् 'अपैतु ते मम स्नेहः न पात्रं न दशान्तरम् । परोपकारनिरता मणिदीपा इवोत्तमाः' इत्युद्भटः । चित्ते, कालकृतविशेषरूपायां गर्भवासजन्मादिरूपायां बाल्ययौवनादिरूपायाम्, कामकृते विरहिणां नेत्ररागाद्यवस्थायाम्, ज्योतिषोक्ते नक्षत्रानुसारेण सूर्यादिग्रहाणां स्वामित्वेन भोग्यकाले च विस्तरो बृहदभिधाने ।

दशाकर्ष पु० दशया तैलादिकमाकर्षति आ+कृष-अण् । प्रदीपे वस्त्राञ्चले पु० स्त्री० पुंसि ब०व० ।

दशाङ्गधूप पु० 'मधु घृतं सितं गन्धो गुग्गुलुः सर्जचन्दनम् । सरलं सिह्लसिद्धार्थं दशाङ्गोऽयं उच्यते' इत्युक्ते धूपभेदे प्रकारान्तरमप्यस्ति विस्तरोऽस्य बृहदभिधाने । [illegible]

दशापवित्र न० दशावस्त्राञ्चलं पवित्रम् । श्राद्धादिदेये वास-

दशारुहा स्त्री० दशसु दिक्षु आरोहति आ+रुह-क । कैव

चौसुमेके । [इद्रि । देशभेदे । नदीभेदे । स्त्री० ।

**दशार्ण** पु० दश-ऋणानि दुर्गाणि जलानि वा यत्र' वरणशब्द

**दशार्ह** पु० यदुराजदेशे । तद्देशस्थे ब०व० ।

**दशावतार** पु० दश मीनादयोऽवतारा यस्य । विष्णौ ते चाव-
तारा इत्यदभिधाने दशविध्यले ।

**दशाश्व** पु० दश अश्वा रथे यस्य । 'रथस्त्रिचक्रः सोमस्य
कुन्दाभास्तत्र वाजिनः । वामदक्षिणतो युक्ता दश तेन
चरत्यसावि'त्युक्ते चन्द्रे । [कामोरूपे तीर्थभेदे ।

**दशाश्वमेधिक** पु० दश अश्वमेधा ब्रह्मणा कृता अत्र ठन् ।

**दशाह** पु० दशानामह्नां समाहारः टच् समा० नाह्लादेश ।
दशसु दिनेषु 'दशाह सूतकी भवेदि'ति स्मृतिः ।

**दशेन्धन** पु० दशा वर्त्तिरेव इन्धनं यस्य । प्रदीपे ।

**दशेरक** पु० मरुदेशे । तद्देशस्थे ब०व० ।

**दस** उत्क्षेपे दि०पर सक०सेट् । दस्यति । अदसत्-अदासीत्
अदसीत् । दसित्वा दस्त्वा ।

**दस** भासे चु० उभ०सक०सेट् इदित् । दंसयति ते अददंसत् त

**दस** दर्शने दशने च चु०आ०सक०सेट् इदित् । दंसयते अददंसत

**दस्यु** पु० दस-युच् नानादेश । चौरे, रिपौ, महासाहसिके च

**दस्र** पु० दस रक् । गर्दभे । अश्विनीकुमारयोः द्वि०व० । अश्विनी
तारके च । [अददंहत् त ।

**दह** दीप्तौ अक० दाहे सक०चु०उभ० सेट् इदित् । दंहयति ते

**दह** दाहे भ्वा०पर०सक०अनिट् । दहति अधाक्षीत् ।

**दहन** पु० दह ल्यु । अग्नौ चित्रकवृक्षे, भल्लातके, दुष्टचेतसि
च । भावे ल्युट् । दाहे न० ।

**दहर** पु० दह अरन् । मूषायाम् धातुद्रव्यद्रावणपात्रे (मुचि)
सूक्ष्मे 'दहरोऽस्मिन् अन्तराकाश'इति श्रुतिः । अल्पे च त्रि०

**दहराकाश** पु० कर्म० । चिदाकाशे ईश्वरे ।

**दाण** दाने भ्वा०पर०सक०सेट् यच्छत । यच्छति अदात् ।

**दा** दाने जुहो० उभ० सक० सेट् । ददाति दत्ते अदात् अदित

**दा** छेदने अदा०पर०सक० अनिट् । दाति अदात् ।

**दाक्षायणी** स्त्री० दक्षस्यापत्यं स्त्री फिञ् गौरा०ङीष् । अश्वि
न्यादितारासु, सतीनाम्न्यां शिवपत्न्याम् ।

**दाक्षिणात्य** पु० दक्षिणस्यां दिशि भव दक्षिण+त्यक् । नारि-
केले । दक्षिणदिग्भवमात्रे त्रि० ।

**दाक्षिण्य** न० दक्षिणस्य भाव ष्यञ् । अनुकूलत्वे । दक्षिणा
मर्हति ञ्य । दक्षिणार्हे ऋत्विजि । [मुनेर्मातरि ।

**दाक्षी** स्त्री० दक्षस्य गोत्रापत्य स्त्री० इञ् ङीष् । पाणिनि

**दाक्षीसुत** पु० ६त० । व्याकरणकर्त्तरि पाणिनिमुनौ ।

**दाडि(लि)म** त्रि० दल घञ् दाल तेन निर्वृत्त इमप् वा
लस्य ड । दाडिम्बवृक्षे स्त्रियां ङीप् 'त्रियोगिनीमैक्षत दाडि-
मीमसावि'ति नै० । [वृक्षे । ६त० । दाडिम्बपुष्पे न० ।

**दाडिमपुष्प** पु० दाडिमस्य पुष्पमिव पुष्पमस्य । रोहितक

**दाडिम्ब** पु० दा-डिम्ब डस्य नेत्त्वम् । स्वनामख्याते वृक्षे ।

**दात** त्रि० दो क्त । छिन्ने । दैप क्त । शुद्धे ।

**दात्यूह** पु० दो-क्तिन् दितिं खण्डनं वहति दितिवाट् स एव
अथ वाह ऊठ्-आदेरित्त्वात्त्वम् । कालकण्ठके पक्षिभेदे ।

**दात्र** न० दा ष्ट्रन् । छेदनसाधने (दा)शस्त्रे । [अदीदांसिष्ट

**दान** ऋजुताकरणे, छेदने च । भ्वा०अक०स्वार्थे सन् । दीदांसत

**दान** न० दो-दै दा वा ल्युट् । हस्तिमदजले, पालने, छेदने,
शुद्धौ, त्यागे च ।

**दानव** पु० दनोरपत्यम् अण् । असुरे ।

**दानवारि** पु० ६त० । देवे, विष्णौ च । कर्म० । हस्तिमदजले न०

**दानशील** त्रि० दानं शीलं सततमनुष्ठानं यस्य । बहुदातरि ।

**दानशौण्ड** त्रि० दाने शौण्ड दक्ष । बहुप्रदे । [दण्डिते च

**दापित** त्रि० दा णिच क्त । साधिते, धनादिना वशीकृते,

**दामन्** स्त्री०न० दो मनिन् । दोहनकाले पशुबन्धनरज्जौ
रज्जुमात्रे, मालायाञ्च । स्त्रीत्वे वा डप् । दामा दाम ।

**दामनपर्वन्** न० ६त० । दमनभञ्जनतिथौ चैत्रशुक्लचतुर्दश्याम्

**दामनी** स्त्री० दामैव प्रज्ञा० अण् वा ङीप् । पशुबन्धनरज्जौ

**दामोदर** पु० 'दामानि लोकनामानि तानि यस्योदरान्तरे ।
तेन दामोदरो देव' इत्युक्ते विष्णौ ।

**दाम्भिक** त्रि० दम्भेन चरति धर्मं ठक् । लोकेषु कीर्त्यादि-
ख्यापनार्थं धर्मचारिणि वैडालव्रतिनि, दम्भयुक्ते च ।
बकपक्षिणि पु० । [अदायत त

**दाय** दाने भ्वा० आ० सक० सेट् । दायते अदायिष्ट णिच्-

**दाय** पु० दा कर्मणि घञ् । 'विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र
प्रकल्प्यते' इत्युक्ते पित्रादिसम्बन्धवति तदुपरमे तत्सम्ब-
न्धिभि पुत्रादिभि विभजनीये द्रव्ये, विवाहकाले जामा-
त्रादिभ्यो देये धने च । भावे घञ् । दाने । दो-भावे
घञ् । खण्डने । दैप करणादौ घञ् । अम्बुनि स्थाने,
लये सोल्लुण्ठनवाक्ये च ।

**दायभाग** पु० दायस्य सम्बन्धिस्वामिकधनस्य तत्स्वामिमरणा
दौ तत्सम्बन्धिभि पुत्रादिभिर्भागे विभजन गुटिकापाता
दिना व्यञ्जनम् । अष्टादशविवादान्तर्गते विवादभेदे, तादृ
शविवादविषये पुत्रादिभि पित्रादिधनस्य विभजने च ।

**दायाद** पु० दायं विभजनीयधनमादत्ते आ+दा क । पुत्रे ।

दायमत्ति अद-अण् उपपदसमासः । चपिल्ले ।

**दार** पु० ब०व० दारयन्ति भ्रातृस्नेहम् दॄ-णिच्-अच् । पत्न्याम् सा हि पत्युः भ्रातृस्नेहं भिनत्तीति लोकप्रसिद्धम्

**दारक** पु० दृणाति भिनत्ति उदरं दॄ-ण्वुल् । बालके नालिकायां स्त्री० टाप् अत इत्त्वम् । भेदके त्रि० । ग्रामशूकरे पु० ।

**दारकर्मन्** पु० दारोपयिकं दारसम्पादकं कर्म० । विवाहे 'सर्वेषामपि द्विजातीनां दारकर्मणी'ति स्मृतिः ।

**दारद** पु० दरदि देशे भवः अण् । विषभेदे, पारदे, हिङ्गुले च दरदा देशेन एकदिक् अण् । दरद्देशसन्निकृष्ट समुद्रे ।

**दारु** न० दॄ-उण् । काष्ठे, पित्तले, देवदारौ च । शिल्पिनि, दारके च त्रि० । [काष्ठे च न० ।

**दारुक** पु० कृष्णसारथौ । दारु-स्वार्थे कन् । देवदारुवृक्षे,

**दारुगन्धा** स्त्री० दारुणि गन्धो यस्याः । (चीडा) गन्धद्रव्ये ।

**दारुण** पु० दारयति चित्तं दॄ-भये उनन् । चित्रके, रौद्ररसे, भयानकरसे च । भयावहे, दुःसहे, भीषणे, भयहेतौ च त्रि०

**दारुनिशा** स्त्री० दारुमयी-निशा पत्वम् । दारुहरिद्रायाम्

**दारुपत्री** स्त्री० दारुमयं पत्रं यस्याः ङीप् । हिङ्गुपत्र्याम् ।

**दारुपुत्रिका** स्त्री० दारुमयी पुत्रिका । काष्ठपुत्तलिकायाम् ।

**दारुसार** न० दारुषु सारं श्रेष्ठम् । चन्दने । [पदार्थे ।

**दारुसिता** स्त्री० दारुमयी-सिता मधुरत्वात् । (दारचिनी)-

**दारुहरिद्रा** स्त्री० दारुमयी हरिद्रा । स्वनामख्यातायाम् हरिद्रायाम् ।

**दारुहस्तक** पु० हस्त इव कन् दारुमयः हस्तकः । काष्ठ-निर्मिते हस्ताकारे (हाता) पदार्थे ।

**दार्वट** न० दारुवत् निश्चलतया निरूपणीयविषयनिश्चयार्थं-मटन्त्यत्र अट-घञर्थे क । चिन्तागृहे, मन्त्रगृहे च ।

**दार्व्वाघाट(त)** पु० दारूणि आहन्ति हन-अण् वा टात्वा-देशः । (काठठोकरा) पक्षिभेदे ।

**दार्व्विका** स्त्री० दारयति उत्स्वादि० नि० दार्वी दारुहरिद्रा तस्या विकारः ठक् । दारुहरिद्राक्वाथोद्भवे तुत्थे । दार्व्वी +संज्ञायां कन् अणो ह्रस्वः । गोजिह्वालतायाम् ।

**दार्व्वी** स्त्री० दॄ-उण् गौ० ङीष् । देवदारुणि । उत्स्वा० नि० । हरिद्रायाम् गोजिह्वायाम् दारुहरिद्रायाञ्च ।

**दाल** पु० चु० दल-अच् । कोद्रवे (कोदो) धान्यभेदे, मधुभेदे च । देवतालीलतायां स्त्री० ङीप् ।

**दाव** पु० दुनोति दु-ण । वने, वनभवेऽग्नौ, अग्निमात्रे च भावे घञ् । तापे । [तादृशोपले ।

**दावाग्नि** पु० दावस्य वनस्याग्निः । वनोद्भवेऽग्नौ । दावानः

**दाविक** त्रि० देविकायां नद्यां भवः । अण् देविकादेरत्त्वम् । देविकानदीभवे । [शो(सो)तृ ।

**दाश(स)** हिंसने स्वा० पर० सक० सेट् । दाश्नो(स्नो)ति अदा-

**दाश** दाने चु० उभ० सक० सेट् । दाशयति-ते अदिदाशत्-त

**दाश** दाने भ्वा० उ० सक० सेट् । दाशति-ते अदाशीत् अदा-शिष्ट । णिच् अदिदाशत्-त ।

**दाश(स)** पु० दशति मत्स्यान् दन्श घञ् नि०, दाश्यते मूल्यमस्मै दाश-घञ् वा । मत्स्योपजीविनि धीवरे ।

**दाश(स)पुर** न० दाशा(सा)न् कैवर्त्तान् पिपर्त्ति पालयति पॄ-क । कैवर्त्तीमुस्तके । [दशाय कैवर्ती'ति नाटकम् ।

**दाशरथ** पु० दशरथस्येदम् अण् । श्रीरामे 'मदीयता दाश-

**दाशरथि** पु० दशरथस्यापत्यम् अत-इञ् । दशरथस्यापत्येषु श्रीरामादिषु चतुर्षु । (वा० । विष्णौ, दशार्हदेशजे त्रि० ।

**दाशार्ह** पु० दाशं दानमर्हति अर्ह-अण् दशार्हवंशे भवः अण्

**दाशेरक** पु० मालवदेशे । तद्देशस्थे जने ब०व० ।

**दास** दाने भ्वा० उभ० सक० सेट् । दासति ते अदासीत् अदा-सिष्ट । णिच् अददासत् त ।

**दास** पु० दास-अच् । शूद्रे, ज्ञातात्मनि, धीवरे, दानपात्रे शूद्रस्योपाधौ 'शूद्रे दासं प्रयोजयेदि'ति स्मृतिः । दास्यते दीयतेऽस्मै भक्तादि दास-घञ् । भृत्ये सेवके च त्रि० । स्त्रियां ङीप् दासी ।

**दासी** स्त्री० दस क्षेपे कर्मणि घञ् । झिण्ट्याम्, काकजङ्घा-याम्, नीलझिण्ट्यां, वेश्यायाञ्च । दासस्य पत्नी ङीप् । शूद्र-पत्न्यां, कैवर्त्तभार्यायाञ्च ।

**दासेय** पु० दास्या अपत्यं ढक् । दासीगर्भजाते दासे । दासस्य धीवरस्यापत्यम् ढक् । व्यासजनन्यां स्त्री० ।

**दासेर** पु० दास-एरक् । उष्ट्रे । दास्या अपत्यं ढक् । दासीपुत्रे दासे । स्वार्थे कन् । अत्रैवार्थे ।

**दाह** पु० दह-घञ् । भस्मीकरणे, गात्रादितापे च ।

**दाहक** पु० दह-ण्वुल् । चित्रकवृक्षे, रक्तचित्रके च । दाह-कर्त्तरि त्रि० । स्त्रियां दाहिका ।

**दाहहरण** न० दाहो ह्रियतेऽनेन ह्यु ल्युट् णिच्-कर्त्तरि ल्यु वा । वीरणमूले (वेणार मूल) । दाहनाशके त्रि० ।

**दिकर** पु० दिशु कीर्यतेऽसौ कॄ-अप् । तरुणे । युवत्यां स्त्री० ।

**दिक्पति** पु० इत० । दिशामधीश्वरेषु 'इन्द्रो वह्निः पितृपति नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्' इत्युक्तेषु इन्द्रादिषु 'सूर्य्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी । सौम्यस्त्रिदशमन्त्री च पूर्वादीशा

,,मधीश्वरा' इत्युक्तेषु सूर्य दिषु च। पवनो दिक्पतिर्भूमि रिति मन्व । एव दिक्पालादयोऽपि इन्द्रादिष्वेव।

**दिगम्बर** पु० दिक शून्यमेवाम्बरं यस्य। शिवे क्षपणकभेदे, 'दिगम्बरा मध्यमतमाश्रयापादमस्तकम्। चैतन्यव्याप्ति-मद्दृष्टेरा नखाग्रपर्यन्तेरपी'त्युक्ते जीवस्य देहपरिमाणाङ्गी कारके बौद्धभेदे च। नग्ने त्रि०। क लिकाया स्त्री०ङीप्। न्यायमस्तरशितायरकत्वात्। तमसि न०।

**दिग्गज** पु ६त०। 'ऐरावत पुण्डरीक वामन कुमुदोऽञ्जन पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा'इत्युक्तेषु पूर्वा-दिदिक्षु भूमिधारणाय स्थितेषु ऐरावतादिषु गजेषु।

**दिग्ध** पु० दिह क्त। विषाक्तबाणे, वह्नौ प्रबन्धे च। भावे क्त। स्नेहे लेपने च न०। कर्मणि क्त। लिप्ते त्रि०। [भावे क्ति०

**दिग्माल** न० दिशोरीतर्मोबो छया। एकदेशे। इव०। दश्न

**दिति(ती)** स्त्री० दो अवखण्डने क्तिच् वा ङीप्। दैत्यमा-तरि कश्यपपत्न्याम्। भावे क्तिन् न ङीप्। खण्डने।

**दितिज** पु० दितेर्जायते जन-ड। असुरे। दितनयादयोऽप्यत्र

**दिधिषु(षू)** पु० दिधिषूमात्मन इच्छति क्यच् क्विप् ष० वा हस्व। द्विरूढाया स्त्रिया स्वामनि।

**दिधिषू** स्त्री० दधाति धाय धियते धाधा धिष वा ऊ नि०, दिधि धैर्यं स्यति षो ऊ वा पत्वम्। द्विरूढाया स्त्रियां पुनर्भू स्त्रियाम्, 'ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषू' स्मृतेत्युक्तायां ज्येष्ठायामनूढायां सत्याम् ऊढायां कनिष्ठभगिन्याम्।

**दिधिषूपति** पु० ६त०। 'भ्रातृर्मृतस्य भार्यायां योऽनुरज्येत कामत। धर्मेणापि नियुक्तायां स ज्ञेयो दिधिषूपति' रि-त्युक्ते पुनर्भूपतौ। ज्येष्ठे विवाहाभावे ऊढाया कनिष्ठाया भगिन्या पत्यौ च।

**दिन** न० दो त नक्। सूर्यकिरणोपलक्षिते षष्टिदण्डात्मके मष्टिदिष्टे वा चतुर्यामात्मके काले। तत्र मनुष्याणां षष्टि-दण्डात्मकम् पितॄणाम् गौणचान्द्रमासात्मक तेषां हि चन्द्रलोकोपरिस्थिते शुक्लाष्टमीतएव सूर्यस्य सम्मुखे किरणसम्पातसम्भवः शुक्लाऽष्टम्या पुनर्भूहस्तेनाच्छादनात न तत्सम्पर्कः। देवानामसुराणाञ्च सौरवर्षकालात्मक तद्द विस्तरस्तु सूर्यसिद्धान्ते। सम्प्राणो दिवसमानेन तुमच्छन्त्य कृतकालात्मकमिति विवेक।

**दिनकर** पु० दिन करोति छोदिदम क टक्। दिने कर किरणो यस्य वा। सूर्ये।

**दिनक्षय** पु० एकस्मिन् सावने त्र्यहिवियोगा तिथय यत्र तद्' दिनक्षय मौक्त इत्युक्ते एकसावनदिनत्रितिथि व्याप्ते काले।

**दिनपति** पु० ६त०। सूर्ये अर्कवृक्षे च। दिनेशादयोऽप्यत्र।

**दिनमणि** पु० दिने मणिरिव प्रकाशकत्वात्। सूर्ये अर्कवृक्षे च

**दिन्भ** प्रघाते चु०आत्म०अक०सेट्। दिम्भयते अदिदिम्भत

**दिनादि** पु० ६त०। प्रात काले।

**दिनान्त** पु० ६त०। दिवावसाने सायकाले। अदिदिम्भत त

**दिम** प्रेरणे चुरा० उभ० सक० सेट् इदित। दिम्भयति त

**दिम्प** सघाते चुरा०उभ०सक०सेट्। दिम्पयति ते अदि दम्पत त

**दिलीप** पु० सूर्यवंश्ये नृपभेदे रघो पितरि।

**दिव** प्रीतौ भ्वा०पर०सक०सेट् इदित। दिन्वति अदिन्वीत।

*दिव जिगीषायां पणे व्यवहारे इच्छायां व्याप्तायाञ्च दिवा०* पर०अक०सक०च सेट। दीव्यति अदेवीत। देवित्वा द्यूत्वा

**दिव** कूजने चु०आत्म०सक०सेट्। देवयते अदिदेवत।

**दिव** अर्दे चु०उभ०सक०सेट्। देवयति ते अदीदिवत त।

**दिव्** स्त्री० दिव डिवि। स्वर्गे आकाशे च। [दिवसे वने च

**दिव** न०दिव क। स्वर्गे, 'दिवौकस' इत्यत्र दन्तता। आकाश,

**दिवस** पु० दीव्यन्त्यत्र दिव असच् किच्च। 'नाडीषष्टितम सत्र सावनो दिवस स्मृत। त्रिंशभागोऽर्कराशेस्तु दिवस सौर उच्यते। चान्द्रस्तु तिथय प्रोक्तो भौमो भपरिधि र्मत' इत्युक्तेषु सावनादिषु दिनेषु।

**दिवसमुख** न० ६त०। प्रभाते।

**दिवस्पति** पु० ६त० अलुक् स० सत्वञ्च। इन्द्रे।

**दिवस्पृथिवी** स्त्री० द्वि०व०। दिवञ्च पृथिवी च नि० सुट्। मिलितयो भूमिस्वर्गयो रोदस्यो।

**दिवा** अव्य० दिव का। दिवसे।

**दिवाकीर्त्ति** पु० दिवैव कीर्त्ति स्तव यस्य रात्रौ क्षुरकर्म निषेधात। नापिते [चण्डालानां दिवाकीर्त्तिमि'ति स्मृ

**दिवातन** त्रि दिवा भव ट्यु तुट् च दिवाभव। स्त्रियां ङीप्।

**दिवान्ध** पु० दिवा दिने अन्ध दर्शनाभावात। पेचके दौ 'दिवान्धा प्राणिन केचि'दि त चण्डी।

**दिवाभीत** पु० दिवा दिवसे भीत। चौरे घूके, पेचके च। 'दिवाभीतमिवान्धकारमि ति कुमार।

**दिवि** पु० दिव कि। चषपक्षिणि।

**दिविज** पु० दिवि जायते जन ड कृत० अलुक् स०। स्वर्गीये दिविषदादयोऽप्यत्र। [दिविजादयोऽप्यत्र।

**दिविषद्** पु० दिवि सीदति क्विप् षत्वमादि० षत्वम्। देव

**दिवौ(वो)कस(स)** पु० दिवि दिवस वा ओकः यस्य ष०,

अदन्तत्वम् । देवे । 'तारकेण दिवौकस' इति कुमारः

**दिवोदास** पु० चन्द्रवंशीये काशिराजे नृपभेदे ।

**दिव्य** न० दिवि भव यत् । लवङ्गे चन्दने, यक्षधूपे, अलौकिक प्रमाणभेदे गुग्गुलौ, तन्त्रोक्ते भावभेदे च । नायकभेदे पु० । दीव्यतेऽनेन दिव-क्यप् । मनोहरे द्योतनात्मके च त्रि० ।

**दिव्यगन्ध** पु० दिव्यो मनोहरो गन्धोऽस्य । गन्धके । लवङ्गे न० । स्थूलैलायां स्त्री० । कर्म० । उत्तमगन्धे पु० ।

**दिव्यगायन** पु० कर्म० । गन्धर्वे ।

**दिव्यतेजस्** स्त्री० दिव्यं तेजो यस्याः । ब्राह्मीलतायाम् ।

**दिव्यदोहद** न० 'यत् दीयते तु देवेभ्यो मनोराज्यस्य सिद्धये । उपयाचितकं दिव्यदोहदं तद्विदुर्बुधा' इत्युक्ते अभीष्टसिद्धये देवेभ्यो देये द्रव्ये ।

**दिव्यपुष्प** पु० दिव्यं पुष्पमस्य । करवीरे । महाद्रोणायां स्त्री० ।

**दिव्यलता** स्त्री० कर्म० । मूर्वालतायाम् ।

**दिव्यसार** पु० दिव्यः सारो यस्य । शालवृक्षे ।

**दिव्या** स्त्री० दीव्यतेऽनेन दिव क्यप् । वन्ध्याकर्कोट्यां शतावर्य्याम्, महामेदायां, ब्राह्म्याम्, श्वेतदूर्वायां, श्वेतजीरके, हरितक्यां च ।

**दिव्योदक** न० कर्म० । मेघजले ।

**दिव्योपपादुक** पु० उपपद्यते मातापित्रादिदृष्टकारणमनपेक्ष्यैव अदृष्टसहकृताणुभ्य एव उत्पद्यते उप+पद-उकञ् पितामहादित्वात्तये दिव्य इति विशेषणं तेषाञ्च मातापित्रादिदृष्टकारणापेक्षाभावेऽपि दिव्यत्वाभावान्न तथात्वम् । देवे

**दिव्यौषधि** स्त्री० कर्म० । मनःशिलायाम् ।

**दिश** दाने आज्ञापने च तु० उभ० सक० अनिट् । दिशति अदिक्षत

**दि(द)शा** स्त्री० दिश-क्विप् वा टाप् । आशायाम् ककुभि ।

**दिश्य** त्रि० दिशि भवं दिग्भ्य उपनीतं वा यत् । दिग्भवे, दिग्भ्य उपनीते च । [काले पु० । उपदिष्टे त्रि० ।

**दिष्ट** न० दिश-क्त । भाग्ये 'न दिष्टमिदं गृह्यते' इति माघ ।

**दिष्टान्त** पुं० दिष्टस्य भाग्यस्यान्तः । भाग्यस्यान्तोपलक्षिते मरणे

**दिष्ट्या** अव्य० दिश-क्तिन् अस्त्रादि० नि० । आनन्दे, हर्षे, भाग्येनेत्यर्थे च । [अभिजात-अदिग्ध ।

**दिह** लेपने अदा० उभ० सक० अनिट् । देग्धि दिग्धे अधिक्षत्

**दी** क्षये दि० आत्म० अक० अनिट् । दीयते अदास्त । दिग्ध । दीक्ष

**दीक्ष** मौण्ड्ये, यागे, उपनयने, नियमव्रतयोरादेशे च भ्वा० आत्म० सक० सेट् । दीक्षते अदीक्षिष्ट ।

**दीक्षणीया** स्त्री० दीक्ष-अनीयर् । सोमयागाङ्गे इष्टिभेदे ।

**दीक्षा** स्त्री० दीक्ष अ । नियमे, संस्कारे [illegible] दगुरु' इति रघु । 'दीयते विमलं ज्ञानं क्षीयते कर्मवासना तेन दीक्षेति सा प्रोक्ते'ति तन्त्रोक्ते अभीष्टमन्त्रग्रहणे, तदुपदेशे, यागे च ।

**दीक्षागुरु** पु० दीक्षाया गुरुरुपदेष्टा । मन्त्राद्युपदेष्टरि ।

**दीक्षान्त** पु० दीक्षाया प्रधानयागस्य अन्तः अन्तोपलक्षित तत्समापको यागभेदः । अवभृथरूपे यागभेदे ।

**दीक्षित** त्रि० दीक्ष-क्त । सोमयागादौ संकल्पं विधाय कृतनियमे । दीक्षा तन्त्रोक्ता संजाताऽस्य इतच् । तान्त्रिकदीक्षावति ।

**दीदिवि** पु० दिव-क्विन् अभ्यासदीर्घश्च । बृहस्पतौ । अन्ने पु० न० । उदिते त्रि० । [किरणे

**दीधिति** स्त्री० दिधी-क्तिन् पृषोदरादित्वात् इकारलोपश्च ।

**दीधी** देवने दीप्तौ च अदा० जना० आत्म० अक० सेट् । दीधीते अदीधिष्ट । [मूषिकायां स्त्री० ।

**दीन** त्रि० दी-क्त तस्य न. । दुःखिते, भीते च । तगरपुष्पे न० ।

**दीनार** पु० दी-आरक् नुट् च । स्वर्णभूषणे, स्वर्णमुद्रायां, सुवर्णकर्षद्वये, निष्कमाने, द्वात्रिंशद्रक्तिकापरिमितस्वर्णे च ।

**दीप** दीप्तौ दि० आत्म० अक० सेट् । दीप्यते अदीपि-अदीपिष्ट । दीप्त । णिच् अदीदिपत्-अदिदीपत् । [त्विषि

**दीप** पु० दीप-क । प्रदीपे तैलादिस्नेहयोगेन वर्तिकादाहकशिखा

**दीपक** पु० दीप+स्वार्थे कन् । प्रदीपे, श्येनपक्षिणि, रागभेदे च । कुङ्कुमे अर्थालङ्कारभेदे च न० । दीपयति णिच् ण्वुल् । यवान्याम्, स्त्री० । वाह्यप्रकाशके, उद्दीपके च त्रि० । स्त्रियां टाप् अत इत्त्वम् छन्दोभेदे ।

**दीपन** पु० दीपयति प्रकाशयति जठराग्निमुत्तेजयति दीप-णिच् ल्यु । पलाण्डौ कासमर्दे, मयूरशिखायां शालिञ्चशाके, तगरमूले, कुङ्कुमे च । दीपनकर्त्तरि त्रि० । मेथ्याम्, मेथिकायां, मल्याश्च स्त्री० ङीप् ।

**दीपपुष्प** पु० दीप इव पुष्पमस्य । चम्पकवृक्षे ।

**दीपमालिका** स्त्री० दीपानां माला यस्याम् कप् अत इत्त्वम् । दीपान्वितायाममावस्यायाम् । [न० । दीपवृक्षे ।

**दीपवृक्ष** पु० शाक० दीपस्याधारो वृक्ष इव । (शिलावृक्षे) दीपाधारे तैजसे काष्ठादिनिर्मिते वा पदार्थे ।

**दीपान्विता** स्त्री० दीपैरन्विता । गौणचान्द्रेण कार्त्तिककृष्णपक्षामावस्यायाम् ।

**दीप्त** पु० दीप-क्त । सिंहे, हिङ्गौ च । स्वर्णे न० । ज्वलिते, प्रकाशिते, दीप्तियुक्ते च त्रि० । ज्योतिषोक्ते सूर्याधिष्ठितराशौ ।

**दीप्तजिह्वा** स्त्री० दीप्ता जिह्वा यस्याः । उल्का ।

शृगालीभेदे तस्या हि रात्रौ जिह्वा ज्वलतीति प्रसिद्धम् ।

**दीप्ताग्नि** पु० दीप्त अग्निर्जठरानलो यस्य । अगस्त्ये । तीक्ष्णजठराग्निमति त्रि० ।

**दीप्ति** स्त्री० दीप क्तिन् । कान्तौ, 'कान्तिरेव वयोभोगदेशकालगुणादिभिः । उद्दीपिताऽतिविस्तारं प्राप्ता दीप्तिरिहोच्यते' इत्युक्ते स्त्रीणां गुणभेदे ।

**दीप्तिक** स्त्री० दीप्त्या कायति कै क । दुग्धपाषाणवृक्षे ।

**दीप्य** पु० दीप यत् । जीरके । श्वेतजीरके न० । दीपने साधुर्यत् । यमान्यां पु० स्त्री० । [स्वर्वर्णे च । ण्यते त्रि० ।

**दीर्घ** पु० दॄ घञ् मस्य नेत्वम् । शालवृक्षे, उष्ट्रे, हिमाले

**दीर्घकणा** स्त्री० दीर्घं कणो लेशो यस्याः । श्वेते जीरके ।

**दीर्घकण्टक** पु० दीर्घं कण्टको यस्य । वर्बुरे (बाबला) ।

**दीर्घकण्ठ** पु० दीर्घं कण्ठो यस्य । बके । आयतकण्ठमात्रे त्रि०

**दीर्घकन्द** न० कर्म० । मूलके । दीर्घं कन्दो यस्याः कप् अत इत्त्वम् । मूषल्याम् स्त्री० । [तत्रैवार्थे ।

**दीर्घकील** पु० दीर्घं कीलो यत्र । अङ्कोटके । स्वार्थे कन् ।

**दीर्घकोषिका** स्त्री० दीर्घं कोषो यस्याः कप् अत इत्त्वम् । (भिनुक) शुक्तिभायाम् । न स्वयमर्थोऽपि ।

**दीर्घग्रन्थि** पु० दीर्घा ग्रन्थिः पर्व यस्य । गजपिप्पल्याम् ।

**दीर्घग्रीव** पु० दीर्घा ग्रीवा यस्य । उष्ट्रे, नीलक्रौञ्चे च ।

**दीर्घच्छद** पु० दीर्घाश्छदा यस्य । इक्षौ ।

**दीर्घजङ्घ** पु० दीर्घा जङ्घा यस्य । उष्ट्रे, बके च ।

**दीर्घजिह्व** पु० दीर्घा जिह्वा यस्य । सर्पे ।

**दीर्घतरु** पु० कर्म० । तालवृक्षे । [ह्वां स्त्री० ङीप् ।

**दीर्घदण्ड** पु० दीर्घो दण्ड इव काण्डेन । एरण्डवृक्षे । गोर

**दीर्घदर्शिन्** पु० दीर्घं पश्यति दृश णिनि । दूरदर्शिनि पण्डिते, भल्लूके च । आगामिकार्यज्ञे, दूरदर्शिमात्रे त्रि० ।

**दीर्घदृष्टि** पु० दीर्घा दृष्टिरस्य । पण्डिते । दीर्घा दूरगा दृष्टिर्येषां ६ब० । दूरवीक्षणे यन्त्रभेदे । [न स्वत्वम । शङ्खे

**दीर्घनाद** पु० दीर्घो दूरगामित्वात् विस्तीर्णो नादोऽस्य ब्रुब्रा०

**दीर्घनिद्रा** स्त्री० कर्म० ब्रुब्रा० न णत्वम् । मृत्यौ बहुकालिक निद्रायाञ्च । 'दीर्घनिद्रामशयित' इति रघु । [लताभेदे

**दीर्घपटोलिका** स्त्री० कुत्सिता पटोली कन् कर्म० । (धुधुल)

**दीर्घपत्र** पु० दीर्घाणि पत्राण्यस्य । राजपलाण्डौ विष्णुकन्दे, हरिदर्भे कुन्दरे ताले, कुपीलौ च अम्लजम्बुके गन्धपत्रायाञ्च स्त्री० टाप् । संज्ञायां कन् अत इत्त्वम् । दल कम्बा, मन्वचायाञ्च । वसुधाके पलाशलतायाञ्च स्त्री० ङीप् । [चाकलिया) ।

**दीर्घपर्णी** स्त्री० दीर्घाणि पर्णान्यस्याः ङीप् । पृश्निपर्ण्याम्

**दीर्घपल्लव** पु० दीर्घं पल्लवोऽस्य । शणवृक्षे । कर्म० । दीर्घच्छदे पु० न० । दीर्घच्छदयुक्तमात्रे त्रि० ।

**दीर्घपादप** पु० कर्म० । ताले, पूगे च ।

**दीर्घपृष्ठ** पु० दीर्घं पृष्ठमस्य । सर्पे ।

**दीर्घफल** पु० दीर्घाणि फलान्यस्य । आरग्वधे (सोन्दाल) संज्ञायां कन् । अगस्त्यवृक्षे पु० । कपिलद्राक्षायां, जतुकायाञ्च स्त्री०

**दीर्घमूल** पु० दीर्घं मूलं यस्य । मोरटालतायां, शिलभेदे च । वीरणे न० । कर्म० । संज्ञायां कन् । मूलके । श्यामालतायां स्त्री० टाप् । दुरालभायां स्त्री० ङीप् ।

**दीर्घरागा** स्त्री० दीर्घो बहुकालस्थायी रागो रञ्जनं यस्याः । हरिद्रायाम् । [चिरकाले ।

**दीर्घरात्र** न० कर्म० । दीर्घायां रात्रौ । ७ब० बहुरात्रियुक्ते

**दीर्घरोमन्** पु० दीर्घाणि रोमाण्यस्य । भल्लूके ।

**दीर्घवल्ली** स्त्री० कर्म० । पलाश्यां, पातालगरुडीलतायां, माहेन्द्रवारुण्याम्, आयतायां लतायाञ्च ।

**दीर्घवृन्त** पु० दीर्घं वृन्तमस्य । श्योनाके वृक्षे । स्वार्थे कन् । तत्रार्थे । इन्द्रचिर्भिट्यां स्त्री० टाप् । संज्ञायां कन् अत इत्त्वम् । एलापर्ण्याम् स्त्री० ।

**दीर्घशाख** पु० दीर्घा शाखा यस्य । शालवृक्षे । संज्ञायां कन् अत इत्त्वम् । एलापर्ण्याम् स्त्री० टप् । [राजाद्रे ।

**दीर्घशूक** पु० दीर्घं शूकोऽग्रमस्य । शालिभेदे । संज्ञायां कन् ।

**दीर्घसत्र** न० कर्म० । दीर्घकालिके यज्ञभेदे ६ब० । तत्कर्तरि त्रि० । 'हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः' इति रघु

**दीर्घसूत्र** त्रि० दीर्घेण चिरकालेन सूत्रं सूचितं कर्म यस्य । चिरकालेन प्रारब्धकर्मानुष्ठातरि । कर्म० । आयततन्तौ न०

**दीर्घस्कन्ध** पु० दीर्घः स्कन्धः काण्डोऽस्य । तालवृक्षे ।

**दीर्घायुष्य** पु० दीर्घमायुष्यं यस्य श्वेतमन्दारकवृक्षे मार्कण्डेये च

**दीर्घायुस्** पु० दीर्घम् आयुर्जीवनकालोऽस्य । काके शाल्मलिवृक्षे च

**दीर्घिका** स्त्री० दैर्घ्यं विस्तारमपेक्ष्य आयतैव । जलाशयभेदे अस्याः सञ्चय तडागशब्दे द्रष्टव्यम् । [न०

**दीर्ण** त्रि० दॄ क्त । विदारिते, भीते च भावे क्त । विदारे, भये च

**दु** गतौ भ्वा० पर० सक० अनिट् । दवति अदौषीत् केचित्तु वेडयमित्याहुस्तेन अदावीदित्यपि । [दून । दवथु ।

**दु** उपतापने स्वा० पर० सक० वेट् । दुनोति अदावीत् अदौषीत्

**दुःख** दुःखकरणे अद० चुरा० उभ० सक० सेट् । दुःखयति ते अदुदुःखत् त ।

**दुःख** न० दुःख अच् घञ् वा । प्रतिकूलवेदनीये चित्तधर्मभेदे

न्यायनते आत्मधर्मभेदे,पीडायां, कष्टे च। दु खसाधने पदार्थे, तद्वति च त्रि०। [दु खाना त्रितये।

दु खत्रय न० द्वन०। आध्यात्मिकाधिदैविकाधिभौतिकरूपे

दु शासन पु० दु खेन शिष्यतेऽसौ शास-खलर्थे युच्। भारत प्रसिद्धे दुर्योधनस्यानन्तरानुजे धृतराष्ट्रसुते।

दु षमम् अव्य० दुष्टं समम् तिष्ठद्गु० अव्ययत्वम्। गर्ह्ये इव० असमम्। असमञ्जसे त्रि०।

दु सहा स्त्री० दु खेन सह्यते दुर्+सह-खल्। नागदमन्याम्

दु स्थ त्रि० दु खेन तिष्ठति स्था-क। दीने मूर्खे, लुब्धे च।

दु स्थित त्रि० दुर्+स्था-क्त। अनवस्थिते, दु खेन स्थिते च

दु स्पर्श पु०स्त्री० दु खेन स्पृश्यतेऽसौ दुर् स्पृश-खल्। दुरालभायाम्। लताकरञ्जे पु०। कण्टकार्याम्, कपिकच्छ्वाम्, आकाशवल्ल्याञ्च स्त्री०। दु स्पर्शवस्तुमात्रे त्रि०।

दुकूल न० दु अव्य० कुक् च दुष्टं कूलति कूलयवरणे क वा द०। क्षौमाम्बरे, सूक्ष्मवस्त्रे, सूक्ष्मवस्त्रे च।

दुग्ध न० दुह-क्त। पयसि क्षीरे, स्त्रीजातिस्तननिर्यन्दिद्रव द्रव्ये। कर्मणि क्त। कृतदोहायां धेन्वादौ स्त्री०। प्रपूरिते त्रि०। भावे क्त। दोहने न०।

दुग्धपाषाण पु० दुग्धं निर्यास पाषाणमिव यस्य। (थिर गोला) ख्याते वृक्षभेदे। स्वार्थे कन्। अत्रैवार्थे।

दुग्धिका स्त्री० दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः ठन्। (दुधि) (चीरा) इति ख्याते वृक्षभेदे।

दुग्धी स्त्री० दुग्धमिव निर्यासोऽस्त्यस्य अर्शआद्यच् गौ० ङीष्। दुग्धिकायाम् (दुधि)।

दुद्रुम पु० दुष्टो द्रुम प्रा०। हरित्पर्णे पलाण्डौ।

दुन्दुभि पु० दुन्दु इति शब्देन उभति पूरयति उभ-क प्रक०। ढक्कायाम्, भेर्याम्, वरुणे दैत्यभेदे, राक्षसभेदे, विषे, इ०वर्षभेदे 'प्राणिनां जायते हर्षो दुन्दुभौ वत्सरोत्तिनो' सुताखण्डे वसुमरभेदे च। भाजते स्त्री०।

दुर्(स्) अव्य० दु रुक् सुक् वा। दुष्टे निन्दायां, निषेधे,दु खे च

दुरक्ष पु० दुष्टोऽक्ष प्रा०। कपटपाशके। दुष्टोऽक्षो यत्र दुर्द्यूते

दुरत्यय त्रि० दु खेनात्ययते दुर्+अति-इ-खल्। दुरतिक्रमणीये, दुस्तरे च। [दुर्गमे, दुर्ज्ञेये च।

दुरदृष्ट न० दुष्टमदृष्टं प्रा०। दुर्भाग्ये पापे। [दुष्प्राप्ये

दुरधिगम त्रि० दु खेनाधिगम्यते दुर् अधि+गम-खल्।

दुरध्व पु० दुष्टोऽध्वा प्रा०-अच्। दुष्टमार्गे।

दुरन्त त्रि० दुष्टोऽन्तोऽवसानं यस्य। स्वगमारातपामादिषु व्यसनेषु तानि हि प्रथमं सुखयित्वा अन्ते दुःखयन्ति। दुर्ज्ञेयोऽन्त परिच्छेदो यस्य। दुर्ज्ञेये, गभीरे च।

दुरभिग्रह पु० दु खेनाभिगृह्यतेऽसौ दुर्+अभि+ग्रह-खल्। अपामार्गे दु खेन ग्राह्ये त्रि०। दुरालभायां, कपिकच्छ्वां च स्त्री०।

दुराग्रह पु० दुष्ट आग्रह निर्बन्ध। युक्तिरहितेऽभिनिवेशे, इव०। तद्युक्ते त्रि०।

दुराचार पु० दुष्ट आचार प्रा०। निन्दिताचरणे। इव०। तदाचारवति त्रि०। 'अपि चेत् सुदुराचार' इति गीता।

दुरात्मन् त्रि० दुष्ट आत्मा चित्तं यस्य। दुष्टचित्ते जने।

दुराधर्ष पु० दुष्टान् राक्षसान् आधर्षयति अच्। श्वेतसर्षपे तत्क्षेपणे हि वेतालादीनामपधर्षणं स्मृतौ दर्शितम्। दु खेन ईषदपि धर्षयितुमशक्यम् दुर्+आ+धृष-खल्। धर्षयितुमशक्ये त्रि०। कुटुम्बिनीवृक्षे स्त्री०।

दुरारुह पु० दु खेनारुह्यतेऽसौ दुर्+आ+रुह-खलर्थे कर्मणि क। बिल्वे, नारिकेले च। खर्जूर्यां स्त्री०।

दुरारोह पु० दु खेनारुह्यते दुर्+आ+रुह खल्। शाल्मलि वृक्षे। खर्जूर्यां स्त्री०। दुरारोहणीये त्रि०।

दुरालभा(म्भा) स्त्री० दु खेनालभ्यते स्पृश्यते असौ दुर्+आ+लभ-खल् वा नुम्। (आलकुषी) लतायाम्।

दुरालाप पु० दुष्ट आलाप प्रा०। दुष्टवचनकथने स्वाभिप्रकाशे च। इव०। तद्वति त्रि०।

दुरासद त्रि० दु खेनासद्यते गम्यतेऽसौ दुर्+आ+सद-खल्। दुर्गम्ये, दुर्धर्षे च 'स समूह दुरासद' इति रघु।

दुरित न० दुष्टमितं गमनं नरकादिस्थानप्राप्तिरनेन। पापे।

दुरुक्त न० दुष्टमुक्तम्। पापे। [दुर्वादे।

दुरुच्छेद त्रि० दु खेन उच्छिद्यतेऽसौ दुर्+उद्+छिद खल्।

दुरुत्तर त्रि० दु खेन उत्तीर्यते दुर्+उद्+तॄ-खल्। दुस्तरे दुष्टमुत्तरम् प्रा०। दुष्टे उत्तरे न०।

दुरूह त्रि० दु खेन ऊह्यते वितर्क्यते ऊह खल्। दुर्ज्ञेये

दुरोदर पु० दुरम् उदरमस्य। द्यूतकारे, पणे, अक्षे च। द्यूते न०। 'दुरोदरच्छद्मजितां समीहते' इति भारवि।

दुर्ग पु० दु खेन गम्यतेऽसौ कर्मणि ड। असुरभेदे, तद्धन्त्र्यां देव्यां स्त्री०। 'तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् दुर्गादेवीति विख्यातमिति श्रुती'। काल्याम्। गुग्गुलौ पु०। दु खेन गम्यते दुर्+गम-आधारे ड। पर्वतादिदुर्गमे पुरे, कोट्टे (केल्ला) (गड़) ख्याते न०। दुर्गमदेशे, दुर्ग्राह्ये, दु खेन गम्यते च त्रि०। कामक्रोधादिदुःखेन दुस्तरे संसारे न०।

दुर्गत त्रि० दुर्गतिमाप्त दुर्+गम क्त। दरिद्रे दैन्यगते च।

गर्विते दृप्ति । अदीदृपत् त अदद्रर्पत्-त अदर्पीत् ।

दृप हर्षे गर्वे च दिवा०पर०अक०सेट् । दृप्यति अदृपत अदर्पीत्

दर्पित्वा दृप्त्वा । दृप्त । [परान्' इति रामकरणम् ।

दृप्त त्रि० दृप-क्त । गर्विते 'परदृप्तान् जघानैव रावणादिनिभा

दृफ क्लेशे तु०मु०पर०अक०सेट् । दृम्फति अदर्फीत् ।

दृब्ध त्रि० दृभ-क्त । ग्रथिते, भीते च ।

दृभ ग्रथने वा चुरा० उभ०पक्षे तु०पर० सक०सेट् । दर्भयति

ते दृभति अदीदृभत् त अददर्भत् त अदर्भीत् ।

दृभ भये वा चुरा उभ०पक्षे भ्वा० पर०अक० सेट् । दर्भयति-

ते दर्भति । अदीदृभत् अददर्भत् त । अदर्भीत् ।

दृम्भ राशीकरणे चुरा० उभ०सक०सेट् । दृम्भयति ते अद

दृम्भत् त । [अद्राक्षीत् ।

दृश चाक्षुषज्ञाने भ्वा०पर०सक० अनिट् । पश्यति अदर्शत्-

दृश्(शा) स्त्री० दृश सम्प० भावे क्विप् वा टाप् । दर्शने ज्ञाने ।

करणे क्विप् । नेत्रे, द्वित्वसंख्यायाञ्च । कर्त्तरि क्विप् ।

साक्षिणि, द्रष्टरि ज्ञातरि च त्रि० ।

दृश(ष)द् स्त्री० दृ विदारे अदि षुक् (शुक्) वा ह्रस्व । पाषाणे

निम्नपेषणशिलायाञ्च (शिल) । [दृशद्वत्योरिति मनुः ।

दृश(ष)द्वती स्त्री० दृशद्+मतुप् मस्य व । नदीभेदे 'सरस्वती

दृष्ट न० दृश क्त । स्वपरचक्रभये । वीक्षिते लौकिके च त्रि० ।

दृष्टरजस् स्त्री० दृष्टं रजो यया । प्रौढायां स्त्रियाम् ।

दृष्टान्त पु० दृष्टोऽन्तो नाशोऽवसानं परिच्छेदो यस्मिन् ।

न्यायशास्त्रे, प्रतिपाद्यप्रतिपादकयोः बुद्धिसाम्यविषयत्वेन

उदाहरणे, यथा यो धूमवान् स वह्निमान् यथा पाकस्था

नमित्यादौ धूमवह्निमत्त्वयोर्व्याप्तौ पाकस्थानमुदाहरणम्

अलङ्कारोक्ते अर्थालङ्कारभेदे च ।

दृष्टि स्त्री० दृश भावे क्तिन् । दर्शने, बुद्धौ च । करणे क्तिन् ।

नेत्रे द्वित्वसंख्या या 'चक्षुर्जन्यमनोवृत्तिर्विद्युक्ता रूपभा

सिका दृष्टिरित्युच्यते' इत्युक्ताया मनोवृत्तौ च ।

दृष्टिविष पु० दृष्टौ विषं यस्य । सर्पभेदे ।

दृह वृद्धौ भ्वा० पर० अक०सेट् । दर्हति अदर्हीत् अयमिदित्

तत्र दृंहति अदृंहीत । [दरयति ।

दॄ भये भ्वा० पर० सक० सेट् घटा० । दरति अदारीत् णिच्

दॄ विदारे 'दिवा० क्र्या० च प्वा० पर० सक० सेट् । दीर्य्यति

दृणाति । अदारीत् ।

दॄ भये क्र्या० प्वा० पर०अक०सेट् । दृणाति अदारीत् ।

दे पालने भ्वा० आत्म सक०अनिट् । दयते अदास्त ।

देव क्रीडने भ्वा० आत्म०अक०सेट् । देवते अदेविष्ट ।

देव पु० दिव पचाद्यच् । अमरे । द्योतनात्मके आत्मनि दीव्यति

क्रीडते यस्माद्द्योतते द्योतते दिवि । तस्माद्देव इति प्रोक्तः

स्तूयते सर्वदैवतैरित्युक्ते परमेश्वरे ब्राह्मणस्योपाधौ च ।

इन्द्रिये न० । पूज्ये त्रि० । नाट्योक्तौ राजनि पु० ।

देवक पु० श्रीकृष्णस्य मातामहे देवक्याः पितरि नृपभेदे ।

दे(दै)वकी स्त्री० देवकस्य अपत्ये आमजा प्रयोगे कौकयीति

वद्ङीप् । श्रीकृष्णस्य मातरि वसुदेवस्य भार्य्यायाम् ।

अपत्यार्थेऽण् दैवकीति तत्रैव । शुनादयोऽप्यत्र ।

दे(दै)वकीनन्दन पु० ६त० श्रीकृष्णे वसुदेवात्मजे दे(दै)वकी-

देवकुसुम न० देवानां प्रियं योग्यं वा कुसुमम् शाक० । लवङ्गे

देवखात न० देवेन खात खन क्त । अकृत्रिमे जलाशये ।

७त० देवसमीपस्थे खाते च ।

देवखातबिल न० देवेन खातं विदारितं बिलम् । गुहायाम्

देवगायन पु० ६त० । गन्धर्वे ।

देवगिरि पु० देवानां प्रियः गिरिः । पर्वतभेदे ।

देवगुरु पु० ६त० । बृहस्पतौ । यष्टिके हारे ।

देवच्छन्द पु० देवैश्छन्द्यते प्रार्थ्यते छन्द-कर्मणि घञ् । शत

देवजग्धक न० देवैरद्यते स्म अद क्त जग्धादेशः स्वार्थे कन् ।

कतृणे, गन्धतृणे च । [चन्द्रेषु पञ्चसु वृक्षेषु ।

देवतरु पु० ६त० । मन्दारपारिजातसन्तानकल्पवृक्षहरि

देवता स्त्री० देव+स्वार्थे तल् 'कचित् स्वार्थिका अपि प्रत्ययाः

प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते, इति भाष्योक्तेः स्त्रीत्वम् ।

इन्द्रादौ सुरे । [वृक्षभेदे, अग्नौ, राहौ, मेघे च ।

देवताड पु० देवमिन्द्रियं ताडयति ताड-अण् । (देताड)

देवदण्डा स्त्री० देवमिन्द्रियं दण्डयति दण्ड अच् । नागबलायाम्

देवदत्त पु० देवा एनं देयासुः आशिषि क्तच् । देवार्पिते तन्ना-

मके जने, अर्जुनशङ्खे 'देवदत्तं धनञ्जयः' इति गीता

जृम्भणकरे वायौ च । देवाय दत्त । देवोद्देशेन त्यक्ते त्रि० ।

देवदारु न० देवानां प्रियं दारु यस्य तत्काष्ठचन्दनस्य देव

प्रियत्वात् । स्वनामख्याते वृक्षे अयं पुमानप्यत्र अस्तु पुर

पश्यसि देवदारुमिति रघु । [बीजपूरके, वेश्यायाञ्च ।

देवदासी स्त्री० देवमिन्द्रियं दासयति दास-वधे अण् । वन-

देवदीप पु० देवेषु इन्द्रियेषु दीप इव रूपप्रकाशकत्वात् । लोचने

देवदुन्दुभि पु० देवानां दुन्दुभिरिव हर्षप्रदत्वात् । रक्तत

सायाम् । ६त० देवढक्कायाम् ।

देवदूती स्त्री० देवानि इन्द्रियाणि दूयन्ते खिद्यन्तेऽनया दू

क्तिच् ङीप् । वनबीजपूरके ।

देवदेव पु० देवेषु मध्ये दीव्यति दिव अच् । महादेवे ।

देवधान्य न० देवानां योग्यं धान्यम् । (देधान) धान्यभेदे ।
देवन पु० दीव्यत्यनेन दिव-करणे ल्युट् । पाशके । भावे ल्युट् । क्रीडायां, दीप्तौ, व्यवहारे, जिगीषायां, स्तुतौ च न० । दीव्यत्यत्राधारे ल्युट् । लीलोद्याने, पद्मे च ।
देवनदी स्त्री० ६त० । गङ्गायाम् 'असंबाधा देवनदी'ति महाभा०
देवनिर्म्मिता स्त्री० देवैः निर्मिता । गुडूच्याम् ।
देवपथ पु० देवैरर्च्चिरादिभिरातिवाहिकैरुपलक्षितः पन्थाः अच् समा० । उत्तरमार्गे । देवानां पन्थाः । छायापथे (यमनाला)
देवपुरोधस् पु० ६त० । वृहस्पतौ ।
देवप्रिय पु० ६त० । पीतभृङ्गराजे । वकपुष्पे न० ।
देवबला स्त्री० देवानामिन्द्रियाणां बलं यस्याः ५ब० । सह-देवीलतायाम् ।
देव(ब)ल्लभ पु० ६त० । पुन्नागवृक्षे ।
देवभवन न० देवानां भवनमिव । अश्वत्थवृक्षे । ६त० । स्वर्गे
देवभूय न० देवस्य भावः भू-क्यप् । देवत्वे देवसायुज्ये ।
देवमणि पु० देवेषु मणिरिव प्रकाशकत्वात् । शिवे, अश्वस्य कण्ठस्थे रोमावर्त्ते, कौस्तुभमणौ, महाश्वेतायाञ्च ।
देवमातृक त्रि० देवः पर्ज्जन्यरूपीन्द्र मातेव पालकोऽस्य । वृष्टिजलसम्पन्नशस्यपालिते देशे ।
देवयान न० ६त० । देवरथे देवैरुपलक्षितं यानं मार्गः । अर्चि-रादिमार्गे शुक्राचार्य्यकन्यायां स्त्री० ङीप् । [देवांशभूते ।
देवयोनि पु० देवा एव योनिः कारणमस्य । विद्याधरादौ
देवर पु० दिव अर । पत्युः कनिष्ठभ्रातरि ।
देवरथ पु० ६त० । देवानां नभोगमनसाधने विमानादौ याने ।
देवराज पु० देवानां राजा टच् समा० । इन्द्रे देवाधिपादयोऽप्यत्र
देवरात पु० देवा दत्तरायाः क्त । अभिमन्युसुते परीक्षिन्नृपे
देवर्षि पु० 'देवश्चासावृषिः देव एव सन् ऋषिः' । नारदादिमुनौ
देवल पु० मुनिभेदे व्यासशिष्ये धौम्यस्य ज्येष्ठभ्रातरि, देवान् जोविकार्थं लाति ला-क । देवोपजीविनि । अर्थे कन् अत्रैव 'देवकोषोपजीवी च नाम्ना देवलको भवे'दित्युक्ते विप्रे ।
देवलता स्त्री० दीव्यति प्रकाशते देवा कर्म० । नवमल्लिकायाम्
देवलोक पु० ६त० । स्वर्गे । देवस्य ईश्वरस्य सम्पद्रूपो लोकः । 'भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः । तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्त्तिता' इत्युक्तेषु भूरादिषु सप्तसु लोकेषु
देववर्द्धकि पु० ६त० । विश्वकर्म्मणि । [इन्द्रेषु, गुग्गुलौ च ।
देववृक्ष पु० दीव्यति देवः कर्म० । सप्तपर्णवृक्षे, ६त० मन्दारादि
देवव्रत पु० देवस्य इन्द्रियसंयमनं व्रतमस्य । भीष्मे । [भीमे च
देवसात् अव्य० देवेभ्यो देयं तदधीनं करोति वा देवेभ्योऽर्प्यते, तद-

देवसायुज्य न० युनक्ति युज-क सह युजेन सयुजः तस्य भावः सायुज्यं देवेन सायुज्यमेकासनयोगिता । देवसहयोगे ।
देवसेना स्त्री० इन्द्रस्य सुतायां षष्ठीनाम्न्यां कार्त्तिकेयपत्न्याम्, मातृकाभेदे । ६त० । देवानां सेनायाञ्च ।
देवसेनापति पु० ६त० । कार्त्तिकेये । इन्द्रसुते, देवसेनानामोऽप्यत्र
देवस्व न० 'यद्धनं यज्ञशीलानां देवस्वं तद्विदुर्बुधा' इत्युक्ते धने
देवहूति स्त्री० स्वायम्भुवमनोः कन्यायाम् ।
देवा स्त्री० दिव-अच् । पद्मचारिण्यां लतायाम्, अशनपर्ण्याञ्च ।
देवागारिक त्रि० देवागारे नियुक्तः ठन् । देवागारे नियुक्ते
देवाजीव त्रि० देवं देवप्रतिमादृव्यमाजीवति जीव अण् । (पूजारी) देवले । णिनि देवाजीविन्यप्यत्र ।
देवात्मन् पु० देवो विष्णुरात्मा यस्य । अश्वत्थे तस्य विष्णुरूपत्वम् अश्वत्थरूपी भगवानिति मन्त्रात् सिद्धम् ।
देवानांप्रिय पु० । अलुक् समासः । छागे । मूर्खे त्रि० ।
देवापि पु० चन्द्रवंश्ये नृपभेदे ।
देवार्ह न० देवानर्हति अण् । सुरपर्णे । सहदेवीलतायां स्त्री० । देवयोग्यमात्रे त्रि० । [देवायतनमप्यत्र ।
देवालय पु० देवानामालयः । स्वर्गे, देवप्रतिमादीनां गृहे च
देवावास पु० ६त० । अश्वत्थवृक्षे ।
देविका स्त्री० दिव-ण्वुल् । "अर्द्धयोजनविस्तारां पञ्चयोजन-मायताम् । एतावद्देविकामाहु"रित्युक्ते नदीभेदे धुस्तूरे च ।
देवी स्त्री० दीव्यति दिव अच् गौ० ङीष् । दुर्गायाम्, मूर्वायां, पृक्कायाञ्च । देवस्य पत्नी ङीप् । देवपत्न्यां, मार्घ्यांक्तं कृता-भिषेकायां राजवनितायां, विप्रस्त्रीणामुपाधौ च 'देव्यन्ता विप्रयोषित' इत्युक्ते ।
देवृ पु० दिव-ऋ । देवरे स्वामिनः कनिष्ठ भ्रातरि ।
देवेश न० ६त० । महादेवे । तत्पत्न्यां दुर्गायां स्त्री० ङीप् ।
देवेष्ट पु० देवानामिष्टः । गुग्गुलौ । देवभेदजातत्वात् देवप्रिय त्वमस्य । वनवीजपूरके स्त्री० ।
देवोद्यान न० ६त० देवोद्यानानि चैत्ररथं मिश्रकं चित्रका-रथम् । नन्दनञ्चेति चत्वारीत्युक्तेषु चतुर्षु वनेषु ।
देश पु० दिश-अच् । भूगोलविभागमात्रे पुरुषप्रवरादिषु मगध-वङ्गजनपदेषु स्थानमात्रे च ।
देशरूप न० देशनं देशः प्रशस्तदेशः उचिते सभ्यत्वे ।
देशिनी स्त्री० दिशति दिश-करणार्थ तर्जनीप्रदर्शनार्थ णिनि । तर्ज्जन्याम् ।
देशान्तर न० अन्योदेशः मयूर० । 'नाथो यस्य विदेशमे त्यदि वा व्यवधायक । महान्नद्यन्तरं यत्र गिरि वा व्यवधायक ।

शुच्यते, इत्युक्ते देशभेदे ज्योतिषोक्ते शुभेष्टलग्नयोर्मध्य-
— देशावर्त्ति देशावधिके देशे तदवधिके अन्तरयोजनादौ च।

**देशिक** पु० देशेषु प्रसित ठन्। पथिके। देशोदेशनोपदेश
तत्र साधु ठन्। गुरौ। [तज्ज्ञेऽप्याम्।

**देशिनी** स्त्री० दिशति दिश कर्त्तरि कर्म्मत्वविवक्षायां णिनि।

**देश्य** न० दिश-ण्यत्। पूर्व्वपक्षे। देशमर्हति यत्। देशयोग्ये
त्रि०। ज्योतिषोक्ते लग्ने च। भावे घञ् लेपने पु०।

**देह** पु०न० दिह घञ्। स्थूलसूक्ष्मकार्य्यकारणरूपे शरीरे

**देहधारक** पु न० देहं धारयति धृ-णिच् ण्वुल्। अस्थि।

**देहभृत्** पु० देहं बिभर्त्ति भृ क्विप्। जीवे।

**देहयात्रा** स्त्री० देहो याति गच्छत्यनेन या-करणे ष्ट्रन् न
ङीप्। शरीररक्षासाधने भोजने। ६त०। मरणे तदुप
लक्षिते यमपुरीगमने च।

**देहली(लि)** देहं लेपनं लाति गृह्णाति ला-क गौरा० ङीप् पृ०
वा ह्रस्वः। लेपनयोग्यायां द्वारपिण्डिकायां, (देयाल)
कपाटस्याऽध काष्ठखण्डे च।

**देहसार** पु० ६त०। मज्जनि। [चार्वाके।

**देहात्मवादिन्** पु० देहमेव आत्मतया वदति वद-णिनि।

**देहिन्** त्रि० देह+अस्त्यर्थे इनि। प्राणिनि देहात्माभिमानिनि जीवे

**दैप** शोधने भ्वा०पर०अक०सेट् पित्। दायति अदासीत् दायात्

**दैतेय** पु० दितेरपत्यम् दिति ढक्। असुरे। स्त्रि। दैत्योऽप्यत्र।

**दैत्यगुरु** पु० ६त०। शुक्राचार्य्ये, दैत्याचार्य्यादयोऽप्यत्र।

**दैत्यनिसूदन** पु० दैत्यान् निसूदयति हिनस्ति सूद-णिच्
ल्यु। विष्णौ।

**दैत्यमेदज** पु० दैत्यानां मेदाज्जायते जन ड। गुग्गुलौ।
पृथिव्यां। स्त्री० मधुकैटभमेदजातत्वात्तस्यास्तथात्वम्।

**दैत्या** स्त्री० दैत्यस्य प्रिया यत्। दैत्यभार्य्यायाम्, सुरायां,
मुरानामगन्धद्रव्ये, चण्डौषधौ च।

**दैत्यारि** पु० ६त०। विष्णौ। [त्रि०।

**दैन** न० दीनस्य भावः। दीनत्वे। दिने भव अण्। दिनभवे

**दैनन्दिन** त्रि० दिने दिने प्रतिदिनम् तत्र भवम् अण् नि०।
प्रतिदिनभवे।

**दैनन्दिनप्रलय** पु० ७त० ब्रह्मण समाप्तानुसारेण प्रति-
- दिनावसाने सर्व्वस्थवस्तूनां लये। विशरी बहुदभिधाने।

**दैन्य** न० दीनस्य भाव० ष्यञ्। दीनत्वे, कार्पण्ये च।

**दैव** न० देवादागतम्, देवो देवताऽस्य, देवस्येदं वा अण्। भाग्ये
फलोन्मुखे शुभाशुभकर्म्मणि, 'प्राग्जन्मनि कृतं कर्म्म शुभं
वा यदि वाऽशुभम्। दैवशब्देन निर्दिष्टमिह जन्मनि मद्
शुभे'त्युक्ते पूर्व्वजन्मार्ज्जिते कर्म्मणि, दक्षिणहस्ताङ्गुलीना-
मग्ररूपे देवतीर्थे, मन्त्राणामनुग्राहकदेवताध्याने, उत्पात-
ध्याने च। विवाहभेदे, त्रिविधभूतादिसर्गे च पु०। देव-
सम्बन्धिनि श्राद्धहोमादौ त्रि०।

**दैवज्ञ** पु० दैवं पूर्व्वजन्मार्जितशुभाशुभं जनानां जन्मलग्नादिना
जानाति ज्ञा क ६त०। गणके ज्योतिर्विदि। वर्णादिना
शुभाशुभज्ञायां स्त्रियां स्त्री० टाप्।

**दैवत** पु०न०। देव एव देवता तत्र प्रज्ञाद्यण्। देवे। देवतानां
समूहे अण्। देवसमूहे न०।

**दैवतन्त्र** त्रि० दैवस्य तन्त्रमायत्तम्। भाग्याधीने।

**दैवपर** त्रि० दैवमेव परं श्रेयः यस्य। दैवसारे यत्नविमुखे।

**दैवप्रश्न** पु० 'नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः। श्रूयते
तद्विदुर्धीरा दैवप्रश्नमित्युक्ते रात्रौ अकस्मात् आकाशादौ
श्रूयमाणे शुभाशुभसूचके वाक्ये।

**दैवलेखक** पु० दैवं लिखति। गणके। [सङ्कल्पवाणग्राम।

**दैववाणी** स्त्री० देवस्येयम् अण् कर्म्म०। आकाशवाण्याम्

**दैवसर्ग** पु० देवस्य सत्वगुणकृत सर्गः। सांख्योक्तभूत-
सर्गमध्ये सात्त्विकांशसृष्टौ।

**दैवात्** अव्य० दैवमतति क्विप्। हठादित्यर्थे।

**दैविक** न० देवो देवताऽस्य ठक् 'देवानुद्दिश्य यच्छ्राद्धं दैविकं
तत् प्रचक्षते' इत्युक्ते देवोद्देश्यके श्राद्धे। देवस्येदं देवादागतं
वा ठक्। देवादागते देवसम्बन्धिनि च त्रि०।

**दैवी** स्त्री० देवस्येयम् अण्। सात्त्विकप्रकृतौ, 'दैवी सम्पद्विमो-
क्षाये'ति गीता। देवसम्बन्धिन्याञ्च।

**दैवोदासि** पु० दिवोदासस्यापत्यम् अत इञ्। प्रतर्द्दने नृपे।

**दैव्य** न० देवेन कृतम् देवानामिदम् वा यञ्। भाग्ये।
देवसम्बन्धिनि त्रि०।

**दैशिक** त्रि० देशेन निर्वृत्तं देशस्येदं वा ठञ्। देशसम्बन्धिनि
न्यायोक्ते देशकृतसङ्करूपभेदे विशिषणसम्बन्धे च। स्त्रियां ङीप्

**दैष्टिक** त्रि० दिष्टं भागधेयमेव कर्म्मसाधनमिति यस्य मतिः
ठक्। भाग्याधीनतावादिनि।

**दो** छेदे दिवा०पर०सक०अनिट्। द्यति अदात्।

**दोःशिखर** न० ६त०। स्कन्धे। [गति स्त्री० ङीप्।

**दोग्धृ** पु० दुह तृच्। वत्से, गोपाले, दोहनकर्त्तरि त्रि०।

**दोर्द्दण्ड** पु० दोर्द्दण्ड इव दीर्घत्वात् कार्य्यसाधकत्वाद्वा। बाहु-
दण्डे। एवं भुजदण्डादयोऽप्यत्र।

**दोर्मूल** न० ६त०। कक्षे बाहुमूले। [दोलयाम दोलोऽस्यप्यत्र

**दोल** पु० दुल-भावे घञ्। श्रीकृष्णस्य दोलनरूपे उत्सवभेदे।

**दोला** स्त्री० दुल अच् टाप् च वा। (डोली) यानभेदे, उद्यानादौ क्रीडार्थं दोलनयन्त्रे च। स्वार्थे कन्। अत्रार्थे।

**दोलायमान** त्रि० दोला दोलनमाचरति क्यङ् शानच्। दोलनं कुर्वति दोलायमानारूढे।

**दोष** पु० दुष-घञ्। दूषणे पापे च 'वात पित्त कफश्चेति त्रयो दोषा समासतः' इत्युक्तेषु वातादिषु, अलङ्कारोक्ते रसापकर्षाधायके दुष्टशब्दादिभेदे न्यायाद्युक्तेषु रागद्वेषमोहेषु च

**दोषग्राहिन्** त्रि० दोषानेव गृह्णाति न गुणान् ग्रह-णिनि। 'दोषग्राही गुणत्यागी चालनीव हि दुर्जन' इत्युक्ते दुर्जने

**दोषज्ञ** त्रि० दोषान् जानाति ज्ञा क। पण्डिते, वातादिदोषज्ञे चिकित्सके च।

**दोषत्रय** न० दोषाणां त्रयम्। वातपित्तकफेषु।

**दोषा** अव्य० दुष-आच्। रात्रौ।

**दोषाकर** पु० दोषा रात्रिं करोति तस्मिन् करः किरणो यस्य वा। चन्द्रे। दोषाणामाकरः दोषाश्रये पु०। [रिकायाम्

**दोषाक्लीबा** स्त्री० दोषा रात्रौ क्लिश्यति अच् टाप्। वनवर्त्तु

**दोषैकदृक्** त्रि० दोषे एव न गुणे एकादृग् यस्य। खले।

**दोस्**(षा) पु० दम कर्त्ते डोसि। भुजे, भाग्ररिमते टापि चलम्

**दोह** पु० दुह कर्म्मणि घञ्। दुग्धे 'सदोहयाट्यनेदुहनी'ति स्मृति। आधारे घञ्। दोहनपात्रे। भावे घञ्। दोहने।

**दोहद** पु० न० द्वयोः गर्भिणीतदपत्ययोर्हृदयमस्य नि०। गर्भे यदभिलाषा दोहदलक्षणमिति रघु। दोहमाकर्षं ददाति दा क। (साद) गर्भिण्यभिलाषे लालसामात्रे। चिह्ने, गर्भलक्षणे च न०। ष० श्रौत्। दौहदमपत्य।

**दोहदिनी** स्त्री० दोहदोऽस्त्यस्या इनि। गर्भिण्याम् 'तास्वहृदयां मारीमाङ्क्दौहदिनीमित्युक्तेः।

**दोहनी** स्त्री० दुह्यतेऽत्र आधारे ल्युट् ङीप्। दोहनपात्रे।

**दोहा** स्त्री० मात्रावृत्तभेदे। [र्थेऽपि च।

**दौत्य** न० दूतस्य भाव कर्म्म वा ष्यञ्। दूतस्य भावे तत्क-

**दौर्भागिनेय** पु० दुर्भगाया अपत्यम् ढक् इनङादेश द्विपदवृद्धि। दुर्भगापुत्रे।

**दौर्मनस्य** न० दुर्मनसो भाव ष्यञ्। बाह्याभ्यन्तरकारणैर्मनसो दौःस्थ्ये, सम्भोगाभावे तु अध्येतके विलसालसतादे च।

**दौवारिक** पु० द्वारे नियुक्त ठक्। द्वारपाले। प्रतीहार्य्यादौ।

**दौष्कुलेय** त्रि० दुष्कुलस्यापत्यम् ढक्। निन्दितकुलजाते।

**दौहित्र** पु० दुहितुरपत्यम् अण्। दुहितुः सुते 'दौहित्रो ह्यखिलान्यर्थांस्त्रपस्य दुहितुःपिता। स एवाया इष्टेन दौहित्राणि चोच्यते' इत्युक्ते तु खड्गादिषु न०।

**द्यावापृथिवी** स्त्री० द्वि० व०। द्यौश्च पृथिवी च द्व० द्यावादेश। स्वर्गपृथिव्योर्मिलितयो एवं द्यावाभूम्यादयोऽप्यत्र द्यावाभूमी जनयन्निति श्रुति।

**द्यु** अभिगमने अदा० पर० सक० अनिट्। द्यौति अद्यौषीत्।

**द्यु** पु० दिव-क्विप् ऊ० ह्रस्वः। अग्नौ, सूर्य्ये, अर्कवृक्षे च आकाशे, दिवसे च न०।

**द्युत** दीप्तौ भ्वा० आत्म० अक० सेट्। द्योतते अद्युतत् अद्योतिष्ट

**द्युति**(ती) स्त्री० द्युत-इन् वा ङीप्। कान्तौ, दीप्तौ, शोभायाम् प्रकाशे च। [द्युमण्यादयोऽप्यत्र।

**द्युपति** पु० ६त०। सूर्य्ये अर्कवृक्षे च एवं दिवोमणिरिप

**द्युम्न**० दिव मनति म्ना-क। धने, बले च।

**द्यूत** न० दिव-क्त। (जुया) पाशकक्रीडायाम् पणाधिकरणक क्रीडायां, कैतवे च।

**द्यूतकर** त्रि० द्यूत करोति कृ-टक्। पाशकादिक्रीडाकारके (जुयारी) ण्वुल्। द्यूतकारकोऽप्यत्र। क्विप्। द्यूतकृदप्यत्र

**द्यूतपूर्णिमा** स्त्री० द्यूतस्य द्यूतार्थं पूर्णिमा। आश्विनपौर्णमास्यां कोजागरपौर्णमास्याम्।

**द्यूतप्रतिपद्**(दा) स्त्री० चतुर्थ्यर्थे ६त०। कार्त्तिकशुक्लप्रतिपदि। 'द्यूतप्रतिपदा नाम तत्र भावी गणेश्वर' इति स्मृति'

**द्यूतवृत्ति** पु० द्यूतमेव वृत्तिर्जीविका यस्य। सभिके।

**द्यै** तिरस्कारे भ्वा० पर० सक० अनिट्। द्यायति अद्यासीत्।

**द्यो** स्त्री० द्युत-डो। स्वर्गे, आकाशे च।

**द्योत** पु० द्युत घञ्। प्रकाशे, आतपे च। [दार्ढ्ये।

**द्रढिमन्** पु० दृढस्य भाव' इमनिच् द्रढादेश'। दृढत्वे

**द्रप्स**(प्स्य) न० दध्यन्त्यवेन च(स) अम् च। घनभिन्ने द्रवीभूते दधि

**द्रम** गतौ भ्वा० पर० सक० सेट्। द्रमति अद्रमीत्।

**द्रम्म** पु० 'वराटकानां दशकद्वयं यत् सा काकिणी ताश्च पणश्चतस्र ते षोडश द्रम्म' इत्युक्ते परिमाणभेदे (काहन)।

**द्रव** पु० द्रु-अप्। रसे पलायने, गतौ, वेगे परीहासे च।

**द्रवज** पु० द्रवात् रसात् जायते जन-ड। गुडे। द्रवजात-जाते त्रि०।

**द्रवत्व** न० द्रवति स्यन्दते द्रु-अच् तस्य भाव। न्यायोक्ते स्यन्दनकारणे पृथिवीजलतेजोवृत्तौ गुणभेदे।

**द्रवद्रव्य** न० द्रवतीति द्रव कर्म्म०। दुग्धदधिजलादौ निस्यन्दिनि द्रव्ये। [निष्पत्ति।

**द्रवन्ती** स्त्री० द्रु शतृ। नद्याम्। मतम्भूषिकायां मूषिक

**द्रविड** पु० देशभेदे। तद्देशस्थे ब० व०।

**द्रविण** न० द्रु-इनन्। वित्ते, काञ्चने, पराक्रमे, बले च।

द्रुघणनाशन पु० द्रुघणं बलं नाशयति नश-णिच् ल्यु । शोभाञ्जनवृक्षे ।

द्रव्य न० द्रु यत् । पित्तले, वित्ते विलेपनद्रव्ये, भेषजे, भव्ये, जतुनि विनये मद्ये, न्यायोक्ते पृथिव्यादिषु गुणवत्सु नवसु । व्याकरणोक्ते लिङ्गसंख्यान्वयिनि पदार्थे । द्रोर्वृक्षस्य विकारः तस्येदम् वा यत् । वृक्षविकारे तत्सम्बन्धिनि च त्रि० ।

द्रष्टृ त्रि० दृश तृच् । विचारकुशले चेतने, साक्षिणि, दृष्टा दृष्टे कर्त्तरीत्युक्ते दर्शनकर्त्तरि च ।

द्रा स्वप्ने पलायने अदा०अक०अनिट । द्राति अद्रासीत ।

द्राक् अव्य० द्रा क्रु । शीघ्रे झटितीत्यर्थे । [अद्राङ्क्षीत् ।

द्राक्ष काङ्क्षायां भ्वा० पर० सक० सेट् इदित । द्राङ्क्षति

द्राक्षा स्त्री० द्राक्षि अ नि० नलोप । मृद्वीकायाम् (किस-मिस) 'द्राक्षे ! द्रक्ष्यन्ति के त्वामिति जयदेव ।

द्राख शोषणे अलमर्थे च भ्वा०पर०सक०सेट् । द्राखति अद्राखीत् । णिच् अदद्राखत् । [अद्राघीत् । णिच् अदद्राघत्

द्राघ आयासे सक्तौ भ्रमे च भ्वा० पर०सक सेट् । द्राघति

द्राघिमन् पु० दीर्घस्य भाव इमनिच् द्राघादेश । दीर्घत्वे ।

द्राघिष्ठ त्रि० अतिशयेन दीर्घ इष्ठन् द्राघादेश । अतिदीर्घे। ईयसुन् द्राघीयस् इत्यप्यत्र । स्त्रियां ङीप ।

द्राड विभेदे भ्वा०आ०सक० सेट् । द्राडते अद्राडिष्ट ।

द्रावक पु०द्रु ण्वुल । चन्द्रकान्तमणौ, जारे विदग्धे रसभेदे च।

द्राविडी स्त्री० द्रविडे जाता अण् । सूक्ष्मैलायाम ।

द्राह जागरे भ्वा०आत्म०अक० सेट् । द्राहते अद्राहिष्ट णिच् अदद्राहत् ।

द्रु गतौ भ्वा०पर०सक०अनिट् । द्रवति अदुद्रुवत् त ।

द्रु अनुभावे स्वा० पर० सक०अनिट् । द्रुणोति अद्रौषीत् ।

द्रु पु० द्रवत्यूर्द्ध्वं द्रु-कु डु वा । वृक्षे, शाखायाञ्च। गतौ स्त्री० ।

द्रुघण पु० द्रु-हन्ति अनेन हन करणे अप् द्रुघ कुत्वञ्च । मुद्गरे, परश्वधे, ब्रह्मणि चतुर्मुखे, भूमिचम्पके च ।

द्रुड मज्जने भ्वा० पर० सक० सेट् । द्रोडति अद्रोडीत् ।

द्रुड मज्जने तु० कु० पर० सक० सेट् । द्रुडति अद्रुडीत् ।

द्रुण कुटिलीकरणे तु० पर०सक० सेट् । द्रुणति अद्रोणीत् ।

द्रुणस् त्रि० द्रुरिव दीर्घा नासिकास्य नसादेश अत्वञ्च । दीर्घ-नासिके जने । [कच्छप्याम्' कर्णजलौकायाञ्च ।

द्रुणी स्त्री० द्रुण क गौरा० ङीष् । काष्ठाम्बु वाहिन्याम्

द्रुत पु० द्रवत्यूर्द्ध्वम् द्रु क्त । वृक्षे । शीघ्रे न्यायोक्तवाच्येषु शीघ्रे च न० । शीघ्रतावति, द्रवीभूते, पलायिते च त्रि० ।

द्रुपद पु० चन्द्रवंश्ये युधिष्ठिरादेः श्वशुरे नृपभेदे ।

द्रुम पु० द्रु शाखास्त्यस्य म । वृक्षे, पारिजाते, कुवेरे च ।

द्रुमामय पु० द्रुमस्यामय इव । लाक्षायाम् । [कर्णिकारे ।

द्रुमोत्पल पु० द्रुमेषु मध्ये उत्पलमिव तदाकारपुष्पकत्वात् ।

द्रुमत्सक पु० द्रुषु मत्सक इव । प्रियालवृक्षे ।

द्रुह अनिष्टचिन्तने दिवा० पर० सेट् । द्रुह्यति अद्रुहत् । द्रोहिता द्रोग्धा द्रोढा ।

द्रुहिण पु० द्रुह इनन् किच्च । जगत्स्रष्टरि चतुर्मुखे ।

द्रू बधे गतौ च स्वा०क्र्या०च । उ०सक सेट । द्रूणोति द्रूणुते द्रूणाति द्रूणीते अद्रावीत् अद्रविष्ट । [क्विप् । णिच् अदिद्रेकत्

द्रेक स्वने उत्साहे च भ्वा० आत्म०अक० सेट् । द्रेकते अद्रे

द्रै स्वप्ने भ्वा०पर०अक० अनिट । द्रायति अद्रासीत् ।

द्रोण पु०द्रुण अच, द्रु-न वा । भारतप्रसिद्धे स्वनामख्याते योद्धृभेदे द्रोणकाके (डाडकाक) वृश्चिके मेघभेदे (पलघषिया) वृक्षभेदे आढकचतुष्टयरूपे परिमाणे जलाशयभेदे च तडागशब्दे लक्षणं द्रष्टव्यम् ।

द्रोणकाक पु०कर्म० । काकभेदे (डाडकाक) । [द्रोणछायाम ।

द्रोणगन्धिका स्त्री० द्रोणपुष्पस्येव गन्धो यस्याः स्वार्थे कन ।

द्रोणि(णी) स्त्री० द्रुण इन् वा ङीप् । जलाद्याधारे पात्रभेदे, नदीभेदे, शैलजनामगन्धद्रव्ये, काष्ठाम्बुवाहिन्याम् ।

द्रोणीदल पु० द्रोणीव दलमस्य । केतकीवृक्षे ।

द्रोह पु० द्रुह घञ । अनिष्टचिन्तने ।

द्रोहचिन्तन न० द्रोह एव चिन्तनम् । परानिष्टचिन्तने ।

द्रौणायन पु० द्रोणस्यापत्यं फक् । अश्वत्थाम्नि ।

द्रौणिक त्रि० द्रोण तस्मिन् समावेशयति पचति वा ठक् । द्रोणमितधान्यवपनयोग्ये क्षेत्रे द्रोणपचनयोग्ये पात्रे च ।

द्रौपदी स्त्री० द्रुपदस्यापत्यम् स्त्री अण् । द्रुपदराजात्मजायाम्

द्वन्द्व पु० द्वौ द्वौ सहाभिव्यक्तौ 'द्वन्द्व रहस्यमर्यादेत्या दिना नि० । व्याकरणोक्ते उभयपदार्थे प्रधाने समासभेदे । 'सुखिमासे शोकमोहौ रागद्वेषौ तथैव च । कामक्रोधप्रभृतयो द्वन्द्व शब्देन वर्णिता इत्युक्ते परस्परविरुद्धे, शोकाशोकादौ शीतोष्णादौ रहस्ये, कलहे, युद्धे, मिथुने, दुर्गे च ।

द्वन्द्वचर पु० द्वन्द्वीभूय चरति चर-पचाद्यच् । चक्रवाके

द्वय न० द्वाववयवावस्य अवयव वा द्वि-तयप् अयट् । द्वित्वसंख्यायां न०स्त्री० ङीप् 'अतद्द्वयोजितवरे'ति नै० 'स्वमद्वय चाह नये'ति कु० द्वित्वसंख्यान्विते त्रि० । द्वयं गत समतीति कु० स्त्रियां ङीप् । [स्था कर्त्तरि क । द्वा (द्वा)स्थितोऽप्यत्र

द्वा (द्वा)स्थ पु० द्वारि तिष्ठति स्था क वा विसर्गलोप । द्वारपाले

द्वाचत्वारिंशत् स्त्री० द्वधिका चत्वारिंशत् द्वौ च चत्वारिंशच्च वा आत्वम्। (बियालिश) संख्याभेदे द्वाविंशदादयोऽप्यत्र।

द्वादश त्रि० द्वादशानां पूरण डट्। येन द्वादशसंख्या पूर्य्यते तस्मिन्। [संख्याभेदे द्विराहत्ता दश विंशतिसंख्यायाम्

द्वादशन् पु० द्वौ च दश च द्वधिका वा दश आत्वम् (बारो)

द्वादशकर पु० द्वादश करा इस्ता यस्य। कार्त्तिकेये वृहस्पतौ च द्वादशहस्तादयोऽप्यत्र। [द्वादशलोचनादयोऽप्यत्र।

द्वादशनेत्र पु० द्वादश नेत्राण्यस्य। षडानने कार्त्तिकेये।

द्वादशाङ्गुल पु० द्वादश अङ्गुलय प्रमाणमस्य तद्धितार्थे द्विगुः तद्धितस्य लुकि अच् समा०। वितस्तिप्रमाणे। [च।

द्वादशात्मन् पु० द्वादश आत्मानो मूर्त्तयोऽस्य। सूर्य्ये, अर्कवृक्षे

द्वादशायुस् पु० द्वादश वर्षमायुर्यस्य। कुक्कुरे।

द्वापर पु० द्वौ परौ प्रकारौ विषयौ वा यस्य पृ० आत्वम्। संशये सत्यत्रेतानन्तरे युगभेदे। द्व्यङ्कसंख्यान्वितपाशकपार्श्वे च।

द्वापराय पु० पाशकस्य द्व्यङ्कसंख्यान्वितं पार्श्वं द्वापरं तस्य अयः उत्तानतया पतनम्। द्यूतभेदे द्व्यङ्कान्वितपार्श्वस्योत्तानतया पतने। [गौतमे मुनौ च।

द्वामुष्यायण पु० द्वयोरमुयोरपत्यम्। त्रि०। द्वयोः पुत्रे।

द्वार् स्त्री० द्वृ-वरणे णिच्-क्विप्। गृहादिनिर्गमनस्थाने, प्रतीहारे, उपाये, मुखे च। [उपाये, मुखे च

द्वार न० द्वृ-णिच् अच्। गृहादिनिर्गमनस्थाने, प्रतीहारे,

द्वारका स्त्री० द्वारैर्बहुभिर्द्वारैः कायति कै-क। समुद्रसन्निकृष्टे तीर्थभेदे द्वारवत्यादयोऽप्यत्र।

द्वारकेश पु० ६त०। श्रीकृष्णे। [बलदेवे च। एतावत्पुत्राद्यर्थे।

द्वारप त्रि० द्वारं पाति रक्षति पा-क। द्वारपाले। पाल-अण्।

द्वारयन्त्र न० ६त०। तालके। (ताला) (कुलुप) ख्याते पदार्थे

द्वारावती स्त्री० द्वाराणि मोक्षोपायाः सन्त्यस्याम् मतुप् पूर्व्वदीर्घः। तीर्थभेदे पुरी द्वारावती चैव सप्तैता इति पुराणम् द्वार+अस्त्यर्थे इनि। द्वारिकाप्यत्र।

द्वारिन् त्रि०। द्वारं पालयतेऽस्यास्य इनि। द्वारपाले।

द्वाविंशति स्त्री० द्वधिका विंशतिः द्वौ च विंशतिश्च आत्वम्। (बाइस) सङ्ख्याभेदे।

द्वि त्रि० द्वि०व०। द्वृ-ड। द्वित्वसंख्यान्विते।

द्विक पु० द्वौ कौ ककारौ यत्र। काके, कोके, स्वार्थे कन् द्वित्वसंख्यायाम् तद्वति च त्रि०। एकं द्विकं त्रिकञ्चेति कारिका।

द्विककुद् पु० द्वे ककुदे यस्य अन्त्यलोपः। उष्ट्रे।

द्विगु पु० व्याकरणोक्ते समासभेदे। ६त०। गोद्वयस्वामिनि त्रि०।

द्विगुण त्रि० द्वाभ्यां गुण्यते गुण-कर्म्मणि क। द्वाभ्यां गुणिते

द्विगुणाकृत त्रि०-द्विगुणं-कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवारकृष्टे क्षेत्रे।

द्विज पु० द्विर्जायते जन ड द्वौ जन्मनी यस्य वा। ब्राह्मणक्षत्रियवैश्यवर्णत्रये, 'जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते' इति स्मृतिः। दन्ते, अण्डजे विहगादौ, तुम्बुरुवृक्षे च

द्विजकुत्सित पु० ६त०। श्लेष्मातकवृक्षे तत्फलस्य द्विजानां अभक्ष्यत्वात् तन्निन्द्यत्वम्।

द्विजदेव पु० द्विजेषु देवइव। ब्राह्मणे, ऋषौ च।

द्विजन्मन् पु० द्वे जन्मनी यस्य। ब्राह्मणक्षत्रियवैश्यरूपवर्णत्रये, 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने' इति स्मृतिः दन्ते, अण्डजे च।

द्विजबन्धु पु० द्विजो बन्धुर्यस्य तद्गोत्रोत्पन्नत्वात्। स्वकार्य्यरहितेषु जन्ममात्रोपजीविषु अधमेषु ब्राह्मणक्षत्रियवैश्येषु

द्विजराज पु० ६त० टच् समा०। चन्द्रे, अनन्ते, गरुडे च।

द्विजवर पु० द्विजेषु वर। विप्रे। द्विजवर्य्यद्विजोत्तमादयोऽप्यत्र

द्विजाम्र पु० ६त०। राजमाषे (बरबटी)। [काकच्छद्र्य्ये च।

द्विजा स्त्री० द्विर्जायते जन-ड टाप्। पालङ्क्यां भार्य्यां, रेणुकायां

द्विजाति पु० द्वे जाती जन्मनी यस्य। 'ब्राह्मण क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः' इति मनूक्ते वर्णत्रये 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने' इत्युक्तेस्तेषां तथात्वम्।

द्विजिह्व पु० द्वे जिह्वे यस्य। सर्पे। खले, चौरे, दुःसाध्ये च त्रि०

द्वितय त्रि० द्वाववयवावस्य अवयवे वा द्वि-तयप्। द्वित्वसंख्यान्विते 'यदि वा तौ द्वितयेऽपि तेऽव्वला' इति भारविः स्त्रियां ङीप्। द्वित्वसंख्यायाम् न०।

द्वितीय त्रि० द्वयोः पूरण तीय। द्वयोः पूरणे। चन्द्रस्य द्वितीयकलाक्रियारूपे तिथौ स्त्री०। भागार्थेऽण्। द्वितीये भागे। [कृष्टे क्षेत्रे।

द्वितीयाकृत त्रि० द्वितीयं कृत्वा कृष्टम् डाच्+कृ-क्त। द्विवा

द्विदत् त्रि० द्वौ दन्तावस्य वयसि दन्तस्य दत्रादेशः। द्विदन्तोपलक्षितवयस्के पश्वादौ स्त्रियां ङीप्।

द्विदैव पु० द्वौ देवावस्य अण् उत्तरपदवृद्धिः। विशाखानक्षत्रे तस्याः शक्राग्निदेवतात्वात् तथात्वम्।

द्विधा अव्य० द्विप्रकारम् द्वि+धाच्। द्विप्रकारे।

द्विधालेख्य पु० द्विधा लेखा रेखामर्हति यत्। हिन्तालवृक्षे। द्विप्रकारलेखनीये त्रि०।

द्विप पु० द्वाभ्यां शुण्डमुखाभ्यां पिबति पा-क। हस्तिनि।

द्विपद पु० द्वे पदे यस्य। मनुष्ये, देवे, पक्षिणि, राक्षसे, च

**धमनि(नी)** स्त्री० धम-अनि वा ङीप् । नाड्यां, शिरायां, हट्टविलासिन्यां, ग्रीवायां, हरिद्रायाञ्च । [(खोपा)

**धम्मिल्ल** पु० सौ० धम-विच् मिल क इ० कर्म० । संयतेषु केशेषु

**धर** पु० धृ-अच् । पर्वते, कूर्मराजे, वसुभेदे कार्पासतूले च ।

**धरण** पु० धृ-ल्युट् । पर्वतभेदे, लोके, सेतौ, धान्ये 'दिवाकरे सेतौ च । चतुर्विंशतिरत्तिकामाने दशरत्तिकापरिमाणे च ।

**धरणि** पु० धृ-अनि वा ङीप् भूमौ, कन्दविशेषे, कन्दाबौ वनकन्दे च स्त्री० ।

**धरणि(णी)धर** पु० धरणिं(णीं) धरति धृ-अच् । पर्वते विष्णौ, कच्छपे च । [नाड्याम्

**धरा** स्त्री० धृ-अच् । पृथिव्याम्, गर्भाशये जरायौ, मेदोवहायां

**धराधर** पु० धरां धारयति धृ-अच् । पर्वते वराहरूपे विष्णौ च

**धरामर** पु० धरायाममर इव । ब्राह्मणे एव भूदेवादयोऽप्यत्र ।

**धरित्री** स्त्री० धृ-इत्र गौरा० ङीप् । भूमौ ।

**धर्म्म** पु०न० । धृ मन् । शास्त्रविहितकर्मानुष्ठानजन्ये भाविफलसाधनभूते शुभादृष्टे 'श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः' इत्युक्ते श्रौते स्मार्त्ते कर्म्मणि । 'विहितक्रियया साध्यो धर्म्मः पुंसो गुणो मतः' इत्युक्ते कर्म्मजन्ये अदृष्टे च आत्मनि, देहधारणात्, जीवे, आचारे, वस्तुगुणरूपे, स्वभावे, उपमायाम्, यागादौ, अहिंसायां न्याये, उपनिषदि, यमे, सोमाध्यायिनि, सत्सङ्गे, धनुषि, ज्योतिषोक्ते लग्नात् नवमस्थाने च । दानादौ न० ।

**धर्म्मक्षेत्र** न० 'ब्रह्मवेदिः कुरुक्षेत्रं पञ्चरामह्रदान्तरम् । धर्म्मक्षेत्रं कुरुक्षेत्रं द्वादशयोजनावधी'त्युक्ते कुरुक्षेत्रे । इत० । धर्म्मस्थाने

**धर्म्मघट** पु० धर्म्मार्थो घटः । सौरवैशाखे प्रत्यहं दातव्ये सुगन्धोदकपूर्णे घटे । [भार्य्यायाम्

**धर्म्मचारिणी** स्त्री० धर्म्मं दाम्पत्यधर्म्मं चरति चर णिनि ।

**धर्म्मदान** न० 'पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम् । केवलं धर्म्मबुद्ध्या यत् धर्म्मदानं प्रचक्षते' इत्युक्ते प्रयोजनान्तरानुद्देशेन दाने ।

**धर्म्मद्रवी** स्त्री० धर्म्मजनको द्रवो यस्याः । 'विष्णुपादाप्रसंभूते ! गङ्गे त्रिपथगामिनि । धर्म्मद्रवीति विख्याते' इत्युक्तायां गङ्गायाम् । [जटादिधारिणि

**धर्म्मध्वजिन्** त्रि० धर्म्मो ध्वजमिवास्त्यस्य इनि । जीविकार्थं

**धर्म्मपत्नी** स्त्री० धर्म्मार्थं पत्नी । प्रथमं समूढायां सवर्णायाम् स्त्रियां, कीर्त्तौ, वाचि, स्मृतौ, मेधायां, धृतौ, क्षमायाञ्च ।

**धर्म्मपुत्र** पु०इत० । युधिष्ठिरे । [क्षमा० । यमे, युधिष्ठिरे च ।

**धर्म्मराज** पु० धर्म्मेण राजते राजाद्य । धर्म्मस्य राजा इव

**धर्म्मलक्षण** न० धर्म्मो लक्ष्यतेऽनेन लक्ष ल्युट् । 'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्या सत्यमक्रोधः दशकं धर्म्मलक्षण'मित्युक्ते धृत्यादौ दशके ।

**धर्म्मवाणिजिक** पु० वणिगेव स्वार्थे ठक् वाणिजिकः उप० । पुण्यकर्म्मफलाभिलाषुके । [न्याय दातरि

**धर्म्मवैतसिक** पु० पापेन धनमुपार्ज्यात्मनो धार्म्मिकत्वख्याप-

**धर्म्मशास्त्र** न० धर्म्मप्रतिपादकं शास्त्रम् । मन्वादिप्रणीते स्मृतिशास्त्रे ।

**धर्म्मशील** त्रि० धर्म्मे शीलं सततमनुष्ठेयं यस्य । धार्म्मिके ।

**धर्म्मसंस्थापन** न० धर्म्मस्य सम्यक् अधर्म्मनिराकरणेन स्थापनम् । 'वेदोदितधर्म्मव्यवस्थापने धर्म्मसंस्थापनार्थाय सम्भवामि युगे युगे इति पुराणम् ।

**धर्म्मसंहिता** स्त्री० धर्म्मार्थं संहिता यद्वा रचिता धर्म्म+धा-क्त । मन्वादिप्रोक्ते धर्म्मप्रतिपादनार्थे शास्त्रे ।

**धर्म्मात्मन्** पु० धर्म्म आत्मा स्वभावो यस्य । धर्म्मानुगतचित्ते ।

**धर्म्माधिकरण** पु० धर्म्मोऽधिक्रियतेऽसौ कर्म्मणि ल्युट् । 'सम शत्रौ च मित्रे च धर्म्मशास्त्रविशारद । 'विप्रमुख्य कुलीनश्च धर्म्माधिकरणो भवे'दित्युक्ते धर्म्माध्यक्षे । इत० । 'धर्म्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम् । यत्राधिक्रियते स्थाने धर्म्माधिकरणं हि त'दित्युक्ते विचारस्थाने न० ।

**धर्म्माध्यक्ष** पु० 'कुलशीलगुणोपेत सर्वकर्म्मपरायणः । प्रवीणं प्रेषणाध्यक्षो धर्म्माध्यक्षोऽभिधीयते' इत्युक्ते धर्म्माधिकरणे । इत० । सर्वधर्म्मस्य साक्षिणि परमेश्वरे च ।

**धर्म्माभास** पु० धर्म्मइवाभासते आभास्त्वोक्तत्वात् । 'श्रुतिस्मृतिभ्यामुदितं यत् स धर्म्मः प्रकीर्त्तितः । अन्यशास्त्रेषु यः प्रोक्तो धर्म्माभासः स उच्यते' इत्युक्ते अन्यशास्त्रोक्ते अप्रमाणे धर्म्मे ।

**धर्म्मासन** न० इत० । राज्ञो धर्म्मतोऽर्णमार्थमासने ।

**धर्म्मिन्** त्रि० धर्म्म+अस्त्यर्थे इनि । गुणवति वस्तुगुणस्वरूप धर्म्मयुक्ते त्रि० ।

**धर्म्मिष्ठ** त्रि० अतिशयेन धर्म्मी इष्ठन् इनेर्लुक् । अत्यन्तधर्म्मवति

**धर्म्म्य** त्रि० धर्म्मादनपेत धर्म्मेण प्राप्यो वा यत् । धर्म्मयुक्ते, धर्म्मलभ्ये च । [हिंसायाञ्च ।

**धर्ष** पु० धृष घञ् । प्रागल्भ्ये, अमर्षे, शक्तिबन्धने, षण्ढे,

**धर्षण** न० धृष-भावे ल्युट् । परिभवे, दुःसहे धर्षकार्थे च । कर्म्मणि ल्युट् । अभिसारिकायां, स्त्रियाम् स्त्री० ङीप् ।

**धर्षित** न० धृष-भावे क्त । मैथुने । कर्म्मणि क्त । कृतधर्षणे तिरस्कृते च त्रि० । असत्यां स्त्रियाम् स्त्री० ।

**धव** गतौ भ्वा० पर० सक० सेट् इदित् । धन्वति अधन्वीत् ।

**धीशक्ति** स्त्री० इत० । शुश्रूषादिषु अष्टसु धीगुणवृन्दे दर्शितेषु बुद्धिगुणेषु ।

**धीसख** पु० धियः सखा टच्समा० । अमात्ये धीसचिवे ।

**धु** कम्पने स्वा० उभ०सक० अनिट् । धुनोति धुनीते । अधौषीत् अधोष्ट ।

**धुच** सन्दीपने भ्वा०आत्म०सक०सेट् । धुचते । अधुचिष्ट ।

**धुत** त्रि० धु-क्त । त्यक्ते, कम्पिते च ।

**धुनि(नी)** स्त्री० धुनोति वेतसादीन् धु-निक् वा ङीप् । नदीमात्रे

**धुन्धुमार** पु० इन्द्रवधूकपतङ्गे, इन्द्रगोपे कीटे, गृहधूमे (झुल)च

**धुर्(रा)** स्त्री०धुर्व किप् वा टाप् । चिन्तायाम्, रथाद्यग्रभागे, यानमुखे, भारे च ।

**धुरन्धर** त्रि० धुरं धारयति धृ णिच्-खच् मुम् ह्रस्व । भारवाहके वृषादौ, भारसहे च । धवलवृक्षे पु० ।

**धुरीण** त्रि० धुरं वहति ख । भारवाहके, श्रेष्ठे च ।

**धुर्य** त्रि० धुरं वहति यत् । भारवाहके, श्रेष्ठे च ।

**धुर्व** हिंसे भ्वा० पर०सक०सेट् । धूर्वति अधूर्वीत् । धूर्णः ।

**धुवित्र** न० करणे धु-इत्र । यज्ञादौ वह्निसंधुक्षणे ।

**धु(धू)स्तु(स्तू)र** पु० धुस-क्विप् तुर-क कर्म० स० वा ह्रस्व । (धुतरा) ख्याते वृक्षे । [अधवीष्ट

**धू** कम्पने भ्वा० उभ० सक० वेट् । धवति ते अधावीत् अधविष्ट

**धू** कम्पने वा०चुरा०उभ० पक्षे तुदा० कु०पर०सक० सेट् । धूनयति ते धुवति अदूधुनत् अधुवीत् ।

**धू** कम्पने स्वा० क्र्यादि० वादिच उभ० सक० वेट् । धूनोति धूनुते धुनाति धुनीते । अधावीत् अधविष्ट अधोष्ट 'धूनोति चम्पकवनानि धुनोत्यशोक मिति'। 'वायुर्विधूनयतीति' च कविरहस्यम् ।

**धूत** त्रि० धू क्त । भर्त्सिते, कम्पिते, तर्कित्ते, त्यक्ते च ।

**धूनक** पु० धूनयति संधुचते वह्निम् चु० धू ण्वुल् नुगागम । यक्षधूपे (धुना) । [अदूधुपत् त ।

**धूप** दीप्तौ चुरा०उभ० अक० दीपने सक० सेट् । धूपयति ते ।

**धूप** तापे अक०तापने सक०भ्वा०पर०सेट् । धूपायति अधूपायीत् अधूपीत् । [गन्धद्रव्योत्थे धूमे, तत्साधनद्रव्ये च ।

**धूप** पु० धूपयति रोगान् दोषान् वा धूप-अच् । गुग्गुलुप्रभृति

**धूपन** पु० धूप ल्यु । यक्षधूपे (धुना) ।

**धूपवृक्ष** पु० इत० सरलवृक्षे । धूपोऽस्त्यस्य । धूपाङ्गमप्यत्र ।

**धूपित** त्रि० धूप-क्त वा आयाभाव । धूपादिगमनेन श्रान्ते, सन्तापिते च । [धूमे पदार्थे ।

**धूम** पु० धू मक् । आर्द्रकाष्ठजाते मेघकारणद्रव्ये कादम्बे मुस्ति

**धूमकेतन** पु० धूम-केतनो यस्य । वह्नौ । धूम इव केतन । तारापुञ्जात्मके धूमकेतौ उत्पातभेदे ।

**धूमकेतु** पु० धूमइव केतु । उत्पातरूपेऽशुभसूचके तारापुञ्जभेदे । इत० । वह्नौ धूमध्वजादयोप्यत्र ।

**धूमगन्धिक** न० धूमस्येव गन्धोऽस्यस्य ठन् । रोहिषतृणे ।

**धूममहिषी** स्त्री० धूमस्य महिषीव । कुज्झटिकायाम् ।

**धूमयोनि** पु० धूमोयोनिरस्य । मेघे,मुस्तके च । इत० । वह्नौ आर्द्रकाष्ठे च । [तद्वति त्रि० ।

**धूमल** पु० धूमं धूमवद्वर्णं लाति ला-क । कृष्णलोहिते वर्णे ।

**धूमाभ** पु० धूमस्येवाभा यस्य । धूम्रवर्णे । तद्वति त्रि० ।

**धूमावती** स्त्री० महाविद्याभेदे । [हितं यत् । धूमसाधने त्रि०

**धूम्या** स्त्री० धूमानां समूह पाशादि० य । धूमसमूहे।धूमाय-

**धूम्याट** पु० धूम्या इव अटति अट-अच् । (फिङ्गा) पक्षिभेदे

**धूम्र** पु० धूमं तद्वर्णं राति रा-क०स० । शिह्लके, सर्वलोमप्राणिभे कृष्णलोहिते वर्णे च । तद्वति त्रि० ।

**धूम्रक** पु० धूम्रइव कायति कै-क । उष्ट्रे । [प्रतिभेदे च

**धूम्रलोचन** पु० धूम्रे लोचने यस्य । कपोते, महिषासुरसेना-

**धूम्रवर्ण** पु० धूम्रो वर्णोऽस्य । शिह्लके, कृष्णलोहितवर्णे च । तद्युक्ते त्रि० । [वृक्षे तस्या धूमप्रादुर्भावात्तथात्वम् ।

**धूम्रिका** स्त्री० धूम्रोवर्ण अस्तेऽस्यस्य ठन् । (शिशु) शिंशपा

**धूर** वधे गतौ च दि०आ०सक०सेट् । धूर्यते अधूरिष्ट । धूर्ण

**धूर्जटि** पु० जट-सङ्घाते इन् धूरस्त्रैलोक्यचिन्ताया जटि सङ्घातोऽत्र । शिवे ।

**धूर्त** पु० धुर्व धूर-वा क्त । धुस्तूरवृक्षे, चोरकवृक्षे, नायकभेदे, 'धूर्तोऽपरा चुम्बतो'ति सा० द० । लौहकीटे, विड्लवणे च । द्यूतकारके, वञ्चके च त्रि० ।

**धूर्तक** पु० धूर्तइव वञ्चकइव स्वार्थे कन् । शृगाले ।

**धूर्वह** त्रि० धुरं वहति वह-अच् दर्भे इत्यो दीर्घ । भारवाहके धुरन्धरे । धूर्वह इति छलयुक्तकलम ममादिकम् ।

**धूलि(ली)** स्त्री० धू लिक् वा ङीप् । रजसि परागे ।

**धूलिध्वज** पु० धूलिरेव ध्वजोऽस्य । वायौ ।

**धूलिपुष्पी** स्त्री० धूलिप्रचुरं पुष्पमस्या ङीप् । केतक्याम् । स्वार्थे कन् ह्रस्व । अत्रार्थे ।

**धूलिकदम्ब** पु० धूलीनां कदम्ब यत्र । कदम्बवृक्षे, वरुणवृक्षे, तिनिशवृक्षे च । इत० । धूलीसमूहे न० ।

**धूश(ष)(स)** शोभने चुरा०उभ०सक०सेट् । धूश(ष)(स)यति ते अदूधुश(ष)(स)त् त ।

**धूसर** पुं० धू सर किच्च न मतम् । गर्दभे, उष्ट्रे, कपोते,

तैलकारे, ईषत्पाण्डुवर्णे, कृष्णश्वेतवर्णे, शुक्लपीतवर्णे च तत्तद्वर्णवति त्रि० । [हस्तिशुण्डवृक्षे ।

**धूसरपत्रिका** स्त्री० धूसर पत्रमस्याः कप् । (हातिशुंडा)

**धृ** पतने भ्वा०आ०अक० अनिट् । धरते अधृत ।

**धृ** स्थितौ अक० धृतौ सक० भ्वा० उभ० अनिट् । धरति ते अधार्षीत् अधृत ।

**धृ** स्थितौ अक० धृतौ सक०तुदा०आ०अनिट । ध्रियते अधृत

**धृ** धारणे, चुरा०उभ०सक०अनिट । धारयति ते अदीधरत् त

**धृज** गतौ भ्वा०पर०सक०सेट् इदित् । धृञ्जति अधृञ्जीत् [च

**धृतराष्ट्र** पु०चन्द्रवंशे दुर्योधनपितरि नृपभेदे नागभेदे, पक्षिभेदे

**धृति** स्त्री० धृ क्तिन् । तुष्टौ, धारणे, यागे, विष्कम्भावधिके अष्टमे योगे, सुखे, धारणायाम्, अवसादेऽपि शरीरादे स्तम्भनशक्तौ, अष्टादशाक्षरपादके छन्दोभेदे, अष्टादशसङ्ख्यायाञ्च । [धर्षित्वा धृष्टा ।

**धृष** संहतौ अक० हिंसे सक०भ्वा०पर०सेट् । धर्षति अधर्षीत्

**धृष** प्रागल्भ्ये स्वा०पर०अक० सेट । धृष्णोति अधर्षीत् । धृष्ट

**धृष** सामर्थ्यबन्धने चुरा०आत्म० अक०सेट् । धर्षयते अदीधृषत अदधर्षत ।

**धृष** क्रोधे अभिभवे च वा चु० उभ० पक्षे भ्वा० सक० सेट् । धर्षयति ते धर्षति अदीधृषत् त अदधर्षत् त अधर्षीत् ।

**धृष्णज्** त्रि० धृष-न नजङ् । प्रगल्भे निर्लज्जे वेणुदले च (कञ्चो)

**धृष्णु** त्रि० धृष क्नु । प्रगल्भे निर्लज्जे च ।

**धृष्ट** त्रि० धृष क्त । निर्लज्जे, प्रगल्भे, नायकभेदे च ।

**धृष्टद्युम्न** पु० धृष्ट प्रगल्भ द्युम्नं बल यस्य । द्रुपदनृपपुत्रे ।

**धेनु** स्त्री० धयति स्तनान् धे-नु इच्च । नवप्रसूतायां गवि ।

**धेनुक** पु० धेनुरिव इवार्थे कन् । असुरभेदे । हस्तिन्यां स्त्री० । स्वार्थे कन् । धेनौ । धेनुकहादयोऽप्यत्र

**धेनुकसूदन** पु० धेनुकं सूदयति हिनस्ति सूद ल्यु । श्रीकृष्णे

**धेनुदुग्धकर** पु० धेनोर्दुग्धमिव किरति कॄ अच् । गर्जरे (गाजर)

**धेनुष्या** स्त्री० धेनु+इच्छाया यत् सुक् च । ऋणशोधनार्थमुत्तमर्णाय यावत्कालेन दीयमानायां धेनौ ।

**धैनुक** न० धेनूनां समूहः ठक् । धेनुसमूहे ।

**धैर्य्य** न०धीरस्य भाव ष्यञ् 'स्थिरचित्तोन्नतिर्या तु तद्धैर्य्यमिति गीयते' इत्युक्ते मनस स्थैर्य्ये, कौशले, 'मनसो निर्विकारत्वं धैर्य्यं सत्स्वपि हेतुषु' इत्युक्ते मनसो विकाराभावे अव्याकुलत्वे, विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतौ चित्तवृत्तिभेदे च ।

**धैवत** पु० 'गत्वा नाभेरधोभागं वस्तिं प्राप्योर्द्ध्वग पुनः । धावन्निव च यो याति कण्ठं देशं स धैवतः' इत्युक्ते कण्ठोत्थिते स्वरभेदे । [णिच् अदुधोरत् त

**धोर** गतिचातुर्य्ये भ्वा०पर०अक०सेट् । धोरति अधोरीत् ।

**धोरण** न० धोरत्यनेन धोर-ल्यु ल्युट् वा । हस्त्यश्वरथादौ याने । भावे ल्युट् । अश्वगतिभेदे ।

**धोरणि(णी)** स्त्री० धोर-अनि वा ङीप् । परम्परायाम् 'सद्यस्खलन्मधुरीधाराधोरणिधौतधामनी' त्युद्भटः ।

**धौत** त्रि० धाव क्त ऊठ् । मार्जिते, प्रक्षालिते, उत्तेजिते, शुभ्रे च । रजते न० ।

**धौतकौषेय** न० कर्म० । प्रक्षालिते क्रिमिकोषजाते वस्त्रे ।

**धौरित** न० धोर-क्त प्रज्ञाद्यण् । 'अश्वानां चतुरायां गतौ । स्वार्थे कन् । तत्रैवार्थे । . .

**धौरेय** त्रि० धुरं वहति ढक । भारवाहके वृषादौ ।

**ध्मा** अग्निसंयुतौ दीर्घश्वासहेतुके शब्दभेदे भ्वा०पर० तादृशशब्देन वादने सक० अनिट् । धमति अध्मासीत् ।

**ध्मात** त्रि० ध्मात क्त । संयुक्ते दीर्घश्वासहेतुकशब्दयुक्ते ।

**ध्माक्ष** आकाङ्क्षे सक० घोररवे अक० भ्वा० पर० सेट् इदित् । ध्माङ्क्षति । अध्माङ्क्षीत् । [काकोलिकायां स्त्री०गौ०ङीष्

**ध्माङ्क्ष** पु० ध्माक्षि अच् । काके, मत्स्यभक्षके पक्षिभेदे, भिक्षुके च

**ध्माङ्क्षोली** स्त्री० ध्माक्षि ओल गौ० ङीष् । काकोलीलतायाम्

**ध्यान** न० ध्यै ल्युट् । चिन्तने, ध्येयवस्तुविषयचिन्तने, चित्तस्यैकतानप्रवाहे ब्रह्मैवास्मीति सद्वृत्त्या निरालम्बतया स्थिति । ध्यानशब्देन विख्याता परमानन्ददायिनी' ति वेदान्तोक्ते ब्रह्मविषये चित्तस्थैर्य्ये, 'ध्यै चिन्तायां स्मृतो धातुश्चिन्ता तत्त्वेन निश्चला । एतद्ध्यानमिह प्रोक्त'मिति तन्त्रोक्ते ध्येयस्य चित्तस्थिरतया निश्चये च ।

**ध्याम** न० ध्यायते पशुभिः ध्यै मक् । गन्धतृणे दमनकवृक्षे च । संज्ञायां कन् । रोहिषतृणे ।

**ध्यै** चिन्तने भ्वा०पर०सक०अनिट् । ध्यायति अध्यासीत् ।

**ध्रज** गतौ भ्वा० पर०सक०सेट् । ध्रजति अध्राजीत् अध्रजीत् अयमिदित् ध्रञ्जति अध्रञ्जीत् ।

**ध्रण** ध्वाने भ्वा०पर०अक०सेट् । ध्रणति अध्रणीत् अध्राणीत्

**ध्रस** कणशः आदाने क्र्या०पर०सक०सेट् । ध्रस्नाति अध्रसीत् अध्रासीत् । ध्रसित्वा ध्रस्त्वा । [यति ते अदिध्रसत् त

**ध्रस** उत्क्षेपे कणश आदाने च चुरा०उभ०सक० सेट । ध्रास-

**ध्राक्ष** काङ्क्षे घोररवे च भ्वा० प०स०सेट् इदित् । ध्राङ्क्षति अध्राङ्क्षीत् । [अध्र खीत । णिच् अदध्राखत् ।

**ध्राख** शोषणे अलमर्थे च भ्वा० पर०सक० सेट् । ध्राखति

नक्षत्रात्मके खगोलस्थे राशिचक्रे । तन्त्रोक्ते मन्त्रग्रह
णोपयोगिचक्रभेदे च । [विष्णौ च

**नक्षत्रनेमि** पु० नक्षत्राणां नेमिरिव । ध्रुवाख्ये तारके, चन्द्रे

**नक्षत्रमाला** स्त्री० नक्षत्राणामिव माला । सप्तविंशतिमौ
क्तिकैर्निर्मिते हारभेदे । ६त०। नक्षत्रपङ्क्तौ ।

**नक्षत्रसूचक** पु० नक्षत्राणि शुभाशुभतया सूचयति ण्वुल् ।
'अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्रपद्यते। स पङ्क्तिदूषक
पापी ज्ञेयो नक्षत्रसूचकः' इति 'तथ्युत्पत्तिं न जानन्ति
गणकाणां नैव साधनम् । परवाक्येन वर्त्तन्ते ते वै नक्षत्र-
सूचकाः' इत्युक्ते सिद्धान्तानभिज्ञे ज्योतिर्विदि । स्त्रियां
नक्षत्रसूचीत्यप्यत्र ।

**नक्षत्रेश** पु० ६त०। चन्द्रे नक्षत्रपत्यादयोऽप्यत्र ।

**नख** सर्पणे भ्वा०पर०सक०सेट् । नखति अनखीत् अनाखीत् ।

**नख** पु०न० । न खं छिद्रमत्र । करजे अङ्गुल्यग्रस्थे कण्टके ।

**नखकुट्ट** पु० नखान् कुट्टयति कुट्ट अण् । नापिते ।

**नखनिकृन्तन** न० नखानि कृत्यन्तेऽनेन कृत ल्युट् ६० मुम् ।
नखच्छेदनार्थे नापितास्त्रभेदे ।

**नखर** पु०न० न खं राति रा क । नखे । [नखायुधोऽप्यत्र ।

**नखरायुध** पु० नखरमायुधं यस्य । सिंहे, व्याघ्रे, कुक्कुटे च

**नखशङ्ख** पु० नख इव शङ्खः । क्षुद्रशङ्खे ।

**नखाङ्क** पु० नखस्याङ्क इव यस्य । व्याघ्रनखे न० ।

**नखी** स्त्री० नखमस्त्यस्य अर्श आदित्वादच् गौरा० ङीप् ।
स्वनामख्याते, गन्धद्रव्ये ।

**नग** पु० न गच्छति गम ड । पर्वते, वृक्षे च ।

**नगण** पु० छन्दोग्रन्थोक्ते लघुत्रयवर्णत्रये । न गण्यते गण-अच् ।
(मालकाकनी) वृक्षभेदे पारावतपद्याम स्त्री० टाप् ।

**नगनन्दिनी** स्त्री० ६त० । हिमालयपुत्र्यां दुर्गायाम् ।

**नगभिद्** पु० नगान् भिनत्ति भिद-क्विप् । इन्द्रे । पर्वतभेदने
त्रि० । [भेदायाम् ।

**नगभू** स्त्री० नग एव भूरुत्पत्तिस्थानं यस्याः । क्षुद्रपाषाण

**नगर** न० नगाः वृक्षाः पर्वता वा सन्त्यस्मिन् नग+र । 'पुरल
क्रियादिनिपुणैश्चातुर्वर्ण्यजनैर्युतम् । अनेकजातिसम्बद्धं
नैकशिल्पिसमाकुलम् । सर्वदैवतसम्बद्धं नगरं त्वभिधीयते'
इत्युक्तलक्षणे पुरभेदे । वा गौरा० ङीष् । नगर्यप्यत्र ।

**नगरन्धकर** पु० नगस्य क्रौञ्चपर्वतस्य रन्ध्रं करोति कृ-अच् ।
कार्त्तिकेये 'स नगरं नगरन्ध्रकरौजसः' इति रघुः ।

**नगरोत्था** स्त्री० नगरादुत्तिष्ठति उद्+स्था-क । नगरस्थायां
स्त्रियां, नागरमुस्तायाञ्च ।

**नगरौषधि** स्त्री० ६त० । कदल्याम् ।

**नगाट** पु० नगेषु वृक्षेषु अटति अच् । वानरे ।

**नगाधिप** पु० नगानामधिपः । हिमालयपर्वते ।

**नगाश्रय** पु० नगः पर्वत आश्रयोऽस्य । हस्तिकन्दवृक्षे ।
पर्वतवासिनि त्रि० ।

**नगौकस्** पु० नग ओको यस्य । पक्षिणि, शरभे, सिंहे च ।

**नग्न** त्रि० नज क्त । विवस्त्रे । 'दिगम्बराख्ये बौद्धभेदे पु० । 'द्विक
च्छः कच्छशेषश्च मुक्तकच्छस्तथैव च । एकवासा अवासाश्च
नग्नः पञ्चविधः स्मृतः' इत्युक्तेषु द्विकच्छादिषु, 'ऋग्यजुः
सामसंज्ञेयं त्रयी वर्णावृतिर्द्विज । एतामुज्झति यो
मोहात् स नग्नः पातकी स्मृतः' इत्युक्ते वेदत्रयोक्तधर्मा-
चरणत्यागिनि जने च ।

**नग्निका** स्त्री० नग्नैव स्वार्थे कन् । अष्टवर्षवयस्कायां स्त्रियाम्

**नज** व्रीडायां भ्वा०आ०अक० सेट् । नजते अनजिष्ट । नग्न

**नञ्** अव्य० न+अञ् ञिदनुबन्धो नलोपार्थः तेन अब्राह्मण इत्यत्र
नादिलोप नैकधेत्यादि । अभावे, निषेधे, अल्पत्वे, अप्राश-
स्त्ये, अतिक्रमे, ईषदर्थे, सादृश्ये, विरोधे भेदे च । तत्र
सादृश्ये अब्राह्मणः । अभावे अपापम् । भेदे अघटः पटः ।
ईषदर्थे अनुदरी कन्या । अपत्ये अकेशा । विरोधे असुरः ।

**नट** पु० नटति नट-अच् । नाटकादिदृश्यकाव्याभिनयकर्त्तरि
नर्त्तकभेदे, जायाजीविनि वर्णसङ्करभेदे, श्योनाकवृक्षे, गोला-
कवृक्षे, नले, किम्पुरुषे गोदन्तहरिताले च ।

**नट** नृत्ये हिंसने च भ्वा० पर० सक० सेट् । नटति अनटीत्
अनाटीत् अणोपदेशतया न णत्वम् परिनटति । [णत्वम् ।

**नट** भाषे द्युतौ च चु०उभ०अक०सेट् । नाटयति-ते अनीनटत् । न

**नटन** न० नट-ल्युट् । नृत्ये । [नाटयोऽप्यत्र ।

**नटभूषण** नटान् भूषयति भूष ल्यु । हरिताले । नटमण्ड

**नटी** स्त्री० नट-अच् । गौरा० ङीष् । नलीनामगन्धद्रव्ये,
वेश्यायाञ्च । नट+पुंयोगे ङीष् । नटस्य योषिति स्त्री० ।

**नड** भाषे चु०उभ०अक० सेट् । नाडयति-ते अनीनडत् त ।
णोपदेशत्वाभावान्न णत्वम् ।

**नड** पु० नट अच् । नलाख्ये ।

**नडकीय** त्रि० नडाः सन्त्यस्य छ कुक् च । नडवति देशे ।

**नडप्राय** पु० नड प्रायो यत्र । नडबहुले देशे ।

**नड्या** स्त्री० नडानां समूहः पाशा० य । नडसमूहे । ङीप् ।

**नड्वत्** त्रि० नडाः सन्त्यस्य ड्मतुप् मस्य वः । नडबहुले देशादौ

**नड्वल** त्रि० नडाः सन्त्यस्य ड्वलच् । नडयुक्ते देशे ।

**नत** त्रि० नम-क्त । हतनमने ज्योतिषोक्ते दिनार्द्धे

जन्मनाडिकाया पु०। विस्तरस्तु हद्दभिधाने। तगरमूले न०।

**नतद्रुम** पु० कर्म०। लतायावकवृक्षे।

**नतनासिक** त्रि० नता नासिकाऽस्य। चिपिटनासिके (खान्दा)

**नताङ्गी** स्त्री० स्तनजघनभारात् नतमङ्गमस्याः ङीप्। नार्याम्

**नति** स्त्री० नम क्तिन्। नम्रतायाम् 'त्रिकोणमथ षट्कोणमर्द्ध-चन्द्रं प्रदक्षिणम्। दण्डमष्टाङ्गमुग्रञ्च सप्तधा नतिलक्षण-मित्युक्ते सप्तभेदे नमनभेदे च एतल्लक्षणं हद्दभिधाने।

**नद** सत्तौ॰ भ्वा०पर०अक० सेट् इदित्। नन्दति अनन्दीत् ननन्द्‌ । प्रनन्दति ।

**नद** पु० नद-अच्। सिन्धुभैरवशोणादौ पश्चिमे जलप्रवाहे

**नदी** स्त्री० नद अच् नदट इति निर्देशात्। टित्वात् ङीप्। गङ्गायमुनादिषु गुरुलघुजलप्रवाहेषु 'धनु सहस्राण्यष्टौ च गतिर्यासां न विद्यते। न ता नदीशब्दवहा' इत्युक्ते धनु-सहस्राष्टकान्यूनदेशवाहिन्यामेव नदीशब्दप्रवृत्तिः। तासु च 'प्राच्यो गुर्व्यो प्राङ्मुखी वाहिनी स्यात् नदी पश्चा द्वाहिनी निश्चयेन' इति 'प्रायो नदवहा गुर्व्यो लघ्व्यः प्रव्रवहा स्मृता' इति च विशेषः।

**नदीकान्त** पु० नदी कान्ता यस्य। समुद्रे हिज्जलवृक्षे, सिन्धु-वारके च। जम्बूवृक्षे काकजङ्घौषधौ च स्त्री०।

**नदीकूलप्रिय** पु० नदीकूलं प्रियं यस्य। जलवेतसे।

**नदीज** पु० नद्याः समीपे जायते जन ड। अर्जुनवृक्षे अग्निमन्थवृक्षे च। हिज्जलवृक्षे, स्रोतोञ्जने च न०। नदी-जातमात्रे त्रि०। 'नदीज! लङ्केश्वरनारदैतदि'ति भारतम्

**नदीन** पु० इतव०। समुद्रे वरुणे च। नदीभिन्ने त्रि०।

**नदीमातृक** त्रि० नदी मातेव पोषिकाऽस्य। नदीजलसम्पन्न व्रीहिपालित देशे।

**नदीष्ण** त्रि० नद्यां स्नाति जानाति स्ना क षत्वम्। नदी स्नानकुशले यस्य यस्या नद्या यथावत्तरणीय तत्सुखानुज्ञे

**नदीसर्ज्ज** पु० नद्याः सृज्यतेऽसौ सृज-अच्। अर्जुनवृक्षे।

**नद्ध** त्रि० नह क्त। बद्धे आवृते च।

**नद्ध्री** स्त्री० नह्यतेऽनया ष्ट्रन् ङीप्। चर्मनिर्मितरज्ज्वाम्।

**ननन्दृ** स्त्री० न नन्दति सेवायामपि सेवया न तुष्यति न+नन्द-ऋन्। भर्तृभगिन्याम् (ननद) पु० इद्दौ। ननान्द्रादयोऽप्यत्र।

**ननु** अव्य० न नुदति नुद डु। प्रश्ने, अवधारणे निश्चये, अनुमतौ अनुनयायाम्, अनुमये, सान्त्वने, सम्बोधने आमन्त्रणे, पद पूरणे, अधिकारे, सम्भ्रमे, दुष्टोक्तौ अस्वयवादे, स्मृतौ, आक्षेपे, प्रत्युक्तौ, उपेक्षायाञ्च।

**ननुच** अव्य० ननु च चसमाहार द्व०। विरोधोक्तौ।

**नन्द** पु० नन्द अच्। श्रीकृष्णस्य पितरि गोपभेदे महानन्दि सुते नृपतिभेदे आनन्दे, निधिभेदे, प्रासादविशेषे गृहे, भारतभेदे च।

**नन्दक** पु० नन्दयति नन्द णिच् ण्वुल्। हरे खड्गे, भेके च। आनन्दजनके, कुलपालके च त्रि०।

**नन्दकिन्** पु० विद्यामयो नन्दकोऽसिरस्य इनि। विष्णौ।

**नन्दगोपित** स्त्री० इत०। राजायाम्। भङ्गि

**नन्दथु** पु० नन्द अथुच्। आनन्दे 'यस्यासौ तस्य नन्दथु'रिति

**नन्दन** पु० नन्दयति नदि-णिच्। सुते भेके, पर्वतभेदे 'यत्र-चीरालया गावो नन्दन नन्दने प्रिय!' इत्युक्ते ६०वर्षमध्ये वत्सरभेदे च। इन्द्रोद्याने न०। आनन्दकारके त्रि०।

**नन्दनन्दन** पु०नन्दस्य नन्दन। श्रीकृष्णे नन्दसुतादयोऽप्यत्र

**नन्दनन्दिनी** स्त्री० इत०। दुर्गायाम् 'नन्दगोपगृहे जाता यशोदागर्भसम्भवे'ति चण्डी। नन्दसुतादयोऽप्यत्र।

**नन्दा** स्त्री०नन्द अच्। 'नन्दतु सुरलोकेषु नन्दने वसतेऽश्वा। हिमाचले महापुण्ये नन्दा देवी तथोत्भव दिव्याकाया गौर्याम् अलिञ्जरे, (नाद) सम्पदि, 'प्रतिपदेकादशी षष्ठी नन्दा ज्ञेया मनीषिभिरि'त्युक्तेषु तिथिभेदेषु 'स्थिरे नीचचरे तु नन्दे'ति श्रुतिः, सूर्यसङ्क्रान्तिभेदे ननान्दरि, तीर्थभेदे च।

**नन्दि** पु० नन्द इन्। सनातनजाते हर्षे आनन्दे 'कौसल्या-नन्दिवर्द्धनो राम' इति रामायणम्। महादेवस्य पार्श्व-चरभेदे नन्दिकेश्वरे। द्यूताङ्गे पु० न०।

**नन्दिकेश्वर** पु० शिवस्य पार्श्वचरभेदे। तेन प्रोक्तमस्य लुक्। पुराणभेदे। [नन्दिकादयोऽप्यत्र।

**नन्दितरु** पु० नन्दयति णिच् णिनि कर्म०। धवद्रुमे।

**नन्दिन्** पु०नन्द-णिनि। शिवद्वारपाले। गर्द्दभाण्डे, वटद्रुमे च

**नन्दिनी** स्त्री०नन्दयति नन्द-णिनि। वशिष्ठधेनौ सुतायाम्, उमायां, गङ्गायां, ननान्दरि, व्याडिमातरि, रेणुकौषधौ च

**नन्दिनीसुत** पु०इत०। व्याकरणस्य सङ्ग्रहकारके व्याडिमुनौ

**नन्दिपुराण** न० नन्दिना प्रोक्तं पुराणम्। उपपुराणभेदे।

**नन्दिवर्द्धन** पु० नन्दि नन्द नन्दिन वा वर्द्धयति वृध णिच् ल्यु। तनये मित्रे शिवे च। आनन्दवर्द्धके त्रि०।

**नन्दीवृक्ष** पु० नन्द इन् वा ङीप् कर्म०। अश्वत्थभेदे, तुन (तुद) वृक्षके, मेषशृङ्गाख्ये। [नन्दीश्वरादयोऽप्यत्र।

**नन्दीश** पु० नन्दी ईशः इत्र। शिवद्वारपाले। इत०। शिवे

**नन्द्यावर्त्त** पु० 'दक्षिणावर्त्तशाखाश्चित्रमत परिसाधकम्। पश्चिमद्वाररहितं नन्द्यावर्त्तं वदन्ति तदि'त्युक्ते गृहभेदे, तगरवृक्षे, मत्स्यभेदे च।

**नपुंसक** पु॰न॰ न स्त्री न पुमान् नि॰ । 'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः । उभयोरन्तरं यच्च तदभावे नपुंसक'मित्युक्तलक्षणे क्लीवे । शब्दे तद्व्यवहारस्तु सत्त्वरजोभ्यां साम्यावस्थापन्नाभ्यामुत्पन्नत्वात् अनादिसंस्कारविशेषवत्त्वाद्वा

**नप्तृ** पु॰ न पतन्ति पितरोऽनेन न+पत तृच नि॰ । पौत्रे दौहित्रे च । पौत्र्यां दौहित्र्याञ्च स्त्री॰ ङीप् ।

**नभ** न॰ नभ अच् । आकाशे । श्रावणे मासि पु॰ ।

**नभ(स्)सद्** पु॰ नभसि सीदति सद क्विप् । देवे ।

**नभश्चर** पु॰ नभसि चरति चर ट । मेघे वायौ, पक्षिणि, विद्याधरे, सूर्यादिषु ग्रहेषु राक्षसे च । आकाशगामिनि त्रि॰

**नभस** न॰ नभ असच । आकाशे । [आकाशे न॰ ।

**नभस्** पु॰ नभ असि । श्रावणे मासि, मेघे पतद्ग्रहे च ।

**नभसङ्गम** पु॰ नभस गच्छति गम खच मुम् च । पक्षिणि ।

**नभस्य** पु॰ नभसि मेघे साधु यत् । भाद्रपदमासि ।

**नभस्वत्** पु॰ नभोऽस्त्यस्याश्रयत्वेन मतुप मस्य व । वायौ ।

**नभोमणि** पु॰नभस आकाशस्य मणिरिव प्रकाशकत्वात् । सूर्य्ये

**नभोरजस्** न॰ नभसो रज इव दृष्टव्यापकारत्वात् । अन्धकारे

**नभ्राज्** पु॰ न भ्राजति भ्राज क्विप् । मेघे ।

**नमस्** अव्य॰ नम असि । नतौ, त्यागे, स्तुतौ च ।

**नमस्कार** पु॰ नमस्+कृ घञ् । कराभ्यां शिरःसंयोगविशेषेण स्वापकर्षसूचके व्यापारभेदे ।

**नमस्य** त्रि॰ नमस करोति नमस्+क्यच्-नमस्य-कर्म्मणि यत् । नमस्करणीये । भावे अ । नतौ, पूजायाञ्च स्त्री॰ ।

**नमुचि** पु॰ न मुञ्चति न+मुच-कि । शुम्भनिशुम्भयोः कनिष्ठानुजेऽसुरभेदे ।

**नमुचिद्विष्** पु॰६त॰ । इन्द्रे, नमुचिसूदनादयोऽप्यत्र ।

**नमेरु** पु॰ नम एरु । सुरपुन्नागवृक्षे, रुद्राक्षे च ।

**नम्ब** गतौ भ्वा॰पर॰सक॰ सेट् । नम्बति अनम्बीत्

**नम्र** त्रि॰ नम र । नते, विनयान्विते च ।

**नम्रक** पु॰ नम्र इव कायति कै क । स्वार्थे कन् वा । वेतसे स्वार्थे कन् । नम्रे त्रि॰ ।

**नय** गतौ भ्वा॰ आत्म॰ सक॰ सेट । नयते अनयिष्ट ।

**नय** पु॰ नी अच । नीतौ शुक्राचार्य्यादिप्रणीते शास्त्रभेदे द्यूतभेदे च । कर्त्तरि अच । नेतरि न्याय्ये च त्रि॰ । [प्रापणे ।

**नयन** न॰नीयतेऽनेन करणे ल्युट । नेत्रे चक्षुषि । भावे ल्युट

**नर** पु॰ नृ-अच । परमात्मनि 'आपो वै नरसूनवः' इति मनुः । विष्णौ, नरावतारे अर्ज्जुने, ऋषिभेदे, मनुष्ये, गणितशास्त्रोक्ते छायाप्रमाणसाधनोपयोगिनि, शङ्कौ च ।

**नरक** पु॰ नृ वुन् । भूमिगर्भे वराहाज्जाते दैत्यभेदे पापिनां दुःखभोगस्थानभेदे रौरवप्रभृतौ च । तेषां विभेदो वृहदभिधाने । [वृहदभिधाने ।

**नरककुण्ड** न॰६त॰ । पापिनां यातनाभोगकुण्डेषु । विस्तरस्तु

**नरकजित्** पु॰ नरक नरकासुर जितवान् जि भूते क्विप । श्रीकृष्णे । नरकान्तकादयोऽप्यत्र ।

**नरदेव** पु॰ नरो देव इव । नृपतौ ।

**नरनारायण** पु॰द्वि॰ । नरश्च नारायणश्च द्व॰ । 'कृष्णार्ज्जुनावतारिणोः मुनिभेदयोः । भगवतोऽवतारभेदे एकरूपमूर्त्तौ च॰

**नरपति** पु ६त॰ । राजनि । नरेशादयोऽप्यत्र ।

**नरपुङ्गव** पु॰ पुमान् गौः पुङ्गव इव नरः पुङ्गव इव भारवहनयोग्यत्वात् । मनुष्यश्रेष्ठे, नृपे च ।

**नरमाला** स्त्री॰ नराणां तन्मुण्डानां माला । नरमुण्डनिर्म्मितायां मालायां 'नरमालाविभूषणे'ति चण्डी ।

**नरमेध** पु॰नरो मेध्यते वध्यते मोचनादिभिः संस्क्रियते वात्र नरमांसहवनद्रव्यकरणके यागभेदे ।

**नरवाहन** पु॰ नरा वाहनान्यस्य । कुवेरे स हि मनुष्यैरुह्यते । मनुष्यवाह्यमाने त्रि॰ ।

**नरसिंह** पु॰ नरश्चासौ सिंहश्च । अवयवभेदेन नरसिंहयोराकारयुक्ते हिरण्यकशिपोर्नाशार्थमाविर्भूते भगवदवतारभेदे नरहर्य्यादयोऽप्यत्र । नरः सिंह इव शौर्य्यादिमत्त्वात् । नरश्रेष्ठे । [दयोऽप्यत्रार्थे ।

**नरस्कन्ध** पु॰ नर+समूहे स्कन्ध । नरसमूहे एवं मनुष्यस्कन्धा

**नरेन्द्र** पु॰ नर इन्द्र इव । राजनि, विषवैद्ये एकविंशत्यक्षरपादके छन्दोभेदे च ।

**नरोत्तम** पु॰ नरेषु उत्तम । पुरुषोत्तमे नारायणे, 'य स्वकात् परतो वेह जातनिर्वेद आत्मवान् । हृदि कृत्वा हरिं गेहात् प्रव्रजेत स नरोत्तम' इत्युक्ते वैराग्यवति पुरुषे नृपे च 'नराणाञ्च नरोत्तम' इति गीता ।

**नर्त्तक** पु॰ नृत ण्वुल । चारणे, नटभेदे च यादृशः नृत्यपात्रस्यात गीत योज्य च तादृशः । नृत्यस्य धारणात् पात्रं नर्त्तकः परिकीर्त्तित' इत्युक्ते नृत्याभिज्ञे नटे त्रि॰ । [षित्वात् स्त्रियां ङीष् ।

**नर्त्तन** न॰ नृत ल्युट् । नृत्ये । [न पालम् प्रनर्हति ।

**नर्द्द** शब्दे चक॰ गतौ सक॰ भ्वा॰ पर॰ सेट् । नर्द्दति अनर्द्दीत्

**नर्म्मद** पु॰ नर्म्म परिहासं ददाति दा क । केलिसचिवे । परिहासदायके त्रि॰ । सोमोद्भवायां दक्षिणस्थायां नद्यां स्त्री॰

**नर्म्मन्** न॰ नृ मनिन् । परीहासे केलौ ।

नव्य त्रि॰ नु यत् । नूतने । रक्तपुनर्नवायां पु॰ ।

नष्ट त्रि॰ नश क्त । तिरोहिते, दर्शनायोग्ये, ध्वस्ते च ।

नष्टचन्द्र पु॰ 'नष्टश्चन्द्रो न द्रष्टव्यः भाद्रे मासि' सितासिते । चतुर्थ्यामुदितोऽशुद्ध प्रतिषिद्धो मनीषिभि'रित्युक्ते सौरभाद्रमासे उभयपक्षचतुर्थ्यामुदिते चन्द्रे ।

नष्टचेष्टता स्त्री॰ नष्टा चेष्टा यस्य तस्य भावः तल । हर्षशोकादिभिः सर्व्वचेष्टारोहित्ये । [लुप्तमार्त्तवस्त्रौ, निरग्नौ च ।

नष्टाग्नि पु॰ नष्टोऽग्निर्यस्य । प्रमादादिना नष्टवैतानिकाग्नौ,

नष्टेन्दुकला स्त्री॰ नष्टा इन्दुकला यस्याम् । चतुर्द्दशीयुक्ते दर्शे । 'चतुर्द्दश्यष्टमे यामे क्षीणो भवति चन्द्रमा इति स्मृतेस्तद्युक्तामावास्याया हि इन्दुकलाक्षय ।

नस्य न॰ नसे हितम् । नासिकादौ अपस्मारादिरोगनिवारणार्थं नसि देये चूर्णे । [(नाकफोड़ा) बलीवर्दे ।

नस्योत पु॰ नसि नासिकायाम् स्यूतः अतः ऊत्वे तत्त्वे ।

नह्व अव्य॰ । न च ह च । प्रत्यारम्भे ।

नहि अव्य॰ । नह इन् । निषेधे ।

नहुष पु॰ । चन्द्रवंश्ये नृपभेदे, नागभेदे च ।

नहुषात्मज पु॰ ययातिनामके नृपे । नहुषसुतादयोऽप्यत्र ।

ना अव्य॰ नह डा । निषेधे ।

नाक पु॰ न कमकं दुःखं तन्नास्ति यत्र । स्वर्गे । 'यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत् सुखं स्वः पदास्पद'मित्युक्ते स्वर्गस्य दुःखशून्यत्वम् ।

नाकिन् पुं॰ नाको वासस्थानत्वेनास्त्यस्य इनि । देवे ।

नाकु पु॰ नम उ नाकादेश । वल्मीके, पर्व्वते च ।

नाकुली स्त्री॰ नकुलस्येदम् प्रियत्वात् अण् । कुक्कुटीकन्दे चविके (चइ) रास्नायां यवतिक्तायां, श्वेतकण्टकार्याञ्च ।

नाग न॰ न गच्छति अग न अगः । मनुष्याकारेषु फणालाङ्गूलविशिष्टेषु वासुक्यादिषु सर्पेषु हस्तिनि, मेघे नागकेशरे, नागदन्तके, मुस्तके, देहस्थे उद्गारकारके पवनभेदे, दर्वादिमध्येकरणभेदे च । नगे भव अण् । पर्व्वतभवे त्रि॰ । रङ्गे सीसके च न॰ ।

नागकेशर पु॰ नागाख्यः केशरः । स्वनामख्याते पुष्पवृक्षे ।

नागगन्धा स्त्री॰ नागस्येव गन्धोऽस्याः । नाकुलीकन्दे ।

नागज न॰ नागात् जायते जन-ड । सिन्दूरे, रङ्गे च ।

नागजिह्वा स्त्री॰ नागानामिव जिह्वा मूलान्यस्याः । अनन्तमूलायाम् लतायाम् । [हस्तिदन्ते । स्वार्थे कन् । तत्रैव

नागदन्त पु नागस्य दन्त इव । भित्तिनिर्गतदारुणि । हस्त॰ ।

नागदन्तिका स्त्री॰ नागस्य सर्पस्य दन्तस्तत्स्वर्शिविषमस्यास्ति ठन् । (विछाति) इति ख्यातायाम् लतायाम् ।

नागदन्ती स्त्री॰ नागदन्त आकारत्वेनास्त्यस्य अच् गौ॰ ङीष् । (हातिशुंडा) लतायाम् वेश्यायाञ्च ।

नागदमनी स्त्री॰ नागा सर्पा दम्यन्ते अनया दम ल्युट् ङीप् । (दरदमूल) लताभेदे ।

नागद्रु पु॰ नागप्रिय द्रु । स्नुहीवृक्षे तस्य सर्पपूजास्थानत्वेन तत्प्रियत्वम् अतएव स्नुहीविटपस्थितामिति स्मृतौ सर्पाधिदेवताया मनसाया स्नुहीवृक्षाश्रितत्वमुक्तम् ।

नागनिर्य्यूह पु॰ नागाकार निर्य्यूह । नागदन्तके भित्तिस्थे नागाकारे निर्गतकाष्ठखण्डे ।

नागपाश पु॰ नाग पाश इव बन्धनहेतुत्वात् । वरुणस्यास्त्रभेदे । नागाकार पाशः । 'साङ्गुष्ठयावर्त्तभाक्तु नागपाश इति स्मृत 'इतितन्त्रोक्ते ग्रन्थिभेदे ।

नागपुर न॰ दक्षिणदेशप्रसिद्धे नगरभेदे, हस्तिनापुरे च । ६त॰ । पातालस्थे नागानां नगरे । [नागकेशरे वृक्षे ।

नागपुष्प पु॰ नागगन्धयुक्तं हस्तिमदगन्धयुक्तं पुष्पमस्य ।

नागपुष्पफला स्त्री॰ नागाकारं पुष्पं फलति गृह्णाते फल अच् । कुष्माण्डयाम् । [लतायाम् ।

नागपुष्पी स्त्री॰ नागाकारं पुष्पमस्याः ङीप् । नागिन्यां

नागफल पु नागाकार फलमस्य दीर्घत्वात् । पटोलभेदे (धुधुल)

नागबला स्त्री॰ नागानां दन्तिनां बलं यस्याः ५ब॰ । (गोरक्षचाकुलिया) लताभेदे । [गाङ्गेरुकाञ्च ।

नागमातृ स्त्री॰ ६त॰ । कद्रुसमाख्याया कश्यपपत्न्याम् मन-

नागमार पु॰ नाग हस्तिनं मारयति मृ णिच्-अण् । मत्कुराजे तद्वधे हि हस्तिनो नाश । हस्तिमारके त्रि ।

नागयष्टि स्त्री॰ नागाश्रयार्था यष्टि । (रङ्काठ) पुष्करिण्यादौ खातानां नागानां मध्ये उद्भूतमानानुसारेण तदीयस्थाश्रयत्वेन कल्पिते दीर्घयूपाकारे काष्ठे ।

नागर त्रि नगरे भव । विदग्धे अग राति अगर न अगर । देवरे, नागरङ्गे, जम्बीरभेदे, मुस्तकभेदे च (नागरमुथा) ।

नागरक पु॰ नगरे भव ततः कुत्सितार्थे प्राग्दीव्ये वा वुञ् । चौरे, चित्रलेखनकरे शिल्पिनि च ।

नागरघन पु॰ नागराख्य घन मुस्तक । (नागरमुथा) मुस्तकभेदे । [(कारङ्गी) ।

नागरङ्ग पु॰ नागस्य सिन्दूरस्येव रङ्गोऽरागो यत्र । जम्बीरभेदे

नागरमुस्तक पु॰न॰ कर्म्म॰ । स्वनामख्याते मुस्तकभेदे । नागरमुस्ताप्यत्र । [समा॰ । अनन्ते सर्पे ऐरावते गजे च ।

नागराज पु॰ नागानां सर्पाणां हस्तिनां च राजा टच्

**नागलता** स्त्री० नागाकारा नागलोकस्य वा लता । ताम्बूल्यां पुरुषलिङ्गे च ।

**नागलोक** पु० इत० । पाताले ।

**नागवल्लरी** स्त्री० नागाकारा नागलोकस्य वा वल्लरी लता । ताम्बूल्याम् नागवल्लयादयोऽप्यत्र ।

**नागसम्भव** न० नाग सीसं सम्भवोऽस्य । सिन्दूरे । [च

**नागस्फोता** स्त्री० नाग इव स्फोता । नागदन्तीवृक्षे, दन्तीवृक्षे

**नागहन्** पु० नागस्य हस्तिनो हन्तरि । नखनामगन्धद्रव्ये

**नागहन्त्री** स्त्री०नागान् सर्पान् हन्ति हन् ङीप् । वन्ध्याकर्कोट्याम्

**नागान्तक** पु० इत० । गरुडे । नागारातिरप्यत्र वन्ध्याकर्कोट्यां च । [तुम्ब्याम् ।

**नागालाबु** स्त्री० नाग। नागकुम्भ इवालाबुः । कुम्भाकारायां

**नागाशन** न० नागान् अश्नाति अश ल्यु । गरुडे । [योऽप्यत्र

**नागाह्व** न० नागेन युक्ताह्वा यस्य । हस्तिनापुरे । नागाह्वयाद-

**नागी** स्त्री० नाग+पुंयोगे ङीप् । सर्पयोषिति, हस्तियोषिति च । स्थौल्ये जनपदेत्यादिना ङीप् । स्थूलगुणयोगात् हस्तितुल्यायाम् स्त्रियाम् । दीर्घगुणयोगात् सर्पतुल्यायान्तु स्त्रियां न ङीप् किन्तु टाप् । [स्थानभेदे च

**नाचिकेतस्** पु० वह्नौ, ऋषिभेदे, ततमार्गे, वेदोक्ते उपा-

**नाट** पु० नट-घञ् । नृत्ये, कर्णाटदेशे च ।

**नाटक** पु० कामाख्यास्थपर्वतभेदे, 'नाटकं ख्याततत्त्वं स्यात् पञ्चसन्धिसमन्वित'मित्याद्युक्तलक्षणे सा० द० इश्यकाव्यभेदे न० । नाटयति चुरा० नट-ण्वुल् । नर्तके त्रि०

**नाटाम्र** पु० (तरमुज) लताफले ।

**नाटार** पु० नटस्यापत्यम् आरक् । नटस्य पुत्रे ।

**नाटिका** स्त्री० नाटकभेदे । [ऽप्यत्र ।

**नाटेय(र)** नट्या अपत्यम् ढक् । नट्या अपत्ये । ढ्रक् । नाटेरो

**नाट्य** न० नटानां कर्म ष्यञ् । नटकर्त्तव्ये नृत्यगीतवाद्यरूपे त्रिके । [दिगमासादपमुखस्य गृहे ।

**नाट्यशाला** स्त्री० नाट्यस्य नाट्यार्थं शाला । (नाटमन्दिर) ।

**नाट्योक्ति** स्त्री० नाट्ये नटकर्मणि उक्तिः । नाटकविषये वचने । तद्विशेषस्तु शब्ददभिधाने ।

**नाडिन्धम** पु० नाडीं 'वंशनलीं धमति ध्मा-खश् धमादेश मुम् हस्वश्च । स्वर्णकारे । [(नाडिताशाक)

**नाडिपत्र** पु० नाडीमयं पत्रं यस्य ब० हस्वः । नाडीचशाके ।

**नाडि(डी)** स्त्री०नड-भ्रंशे घ० नड इन् । वा ङीप् । देहस्थायां शिरायां, शाकस्य काण्डे, नाले, व्रणभेदे, गण्डदूर्वायां, षण्मिषात्मके काले, छन्दभेदे, वंशनलायां च ।

**ना(डि)डीका** स्त्री०नाडी नालं विद्यतेऽस्य ठन् वा हस्व (कलम्बी) शाके 'कुसुम्भं नाडिकाशाक'मिति स्मृतिः पट्टशाके पु० ।

**नाडीच** पु० नाडिं चमति चम-ड । (नाडिता) शाकभेदे ।

**नाडीचक्र** न०'नाडीमण्डलमाधार कुक्कुटाण्डमिव स्थितम् । नाडीचक्रमिति प्रोक्तं तत्राधारः सहस्रता' इत्युक्ते नाभिस्थे नाडीनिष्क्रमणचक्रभेदे । [भेदे, नदीभेदे च ।

**नाडिजङ्घ** पु० नाडीव जङ्घाऽस्य । काके, ब्रह्मणः प्रिये बक

**नाडीतरङ्ग** पु० नाडी तरङ्ग इव यस्य । कुकोचे ।

**नाथक** पु० न अथकं कुत्सितं नञर्थनशब्देन स० । अधमे, मुद्राचिह्निते निष्कादौ न० । 'तदायाचनमाना करकृतनाथकस्य चे'ति स्मृतिः ।

**नाथ** उपतापे याचने च भ्वा०, आशीर्वादे आत्म०,सक० सेट् वक० सेट् । नाथति व्यनाथीत् आशिषि-नाथते अनाथिष्ट । णिचि अननाथत् ।

**नाथ** पु० नाथ-ऐश्वर्ये अच् । अधिपे स्वामिनि, प्रार्थनीये त्रि०

**नाथवत्** त्रि० नाथोऽस्त्यस्य मतु मस्य व । पराधीने परतन्त्रे ।

**नाथहरि** पु० नाथं हरति हृ-इन् । पशौ ।

**नाद** पु० नद-घञ् । शब्दे, अर्द्धमात्रात्मके नादबिन्द्वाकृतिव्यक्ते अनुस्वारतुल्ये वर्णे, 'नाभेरूर्ध्वं हृदि स्थानात् मारुतः प्राणसंज्ञकः । नदति ब्रह्मरन्ध्रान्ते तेन नाद प्रकीर्त्तितः' इत्युक्ते, 'आकाशाग्निमरुज्जातो नाभेरूर्ध्वं समुच्चरन् । मुखेऽभिव्यक्तिमापन्नः यः स नाद इतीरितः' इत्युक्ते च प्राणवायुशक्तिभेदे च ।

**नादेय** न०नद्या नदस्य वा इदम् ढक् । सैन्धवलवणे सौवीराञ्जने नदीनदसम्बन्धिन्यर्थे च ।,काशतृणे वेतसवृक्षे च पु० । नदीभवे त्रि० । नागदन्त्यां,जपायां, पताकायाम्,अम्बुवेतसे, भूमिजम्ब्वाम्, अग्निमन्थे, जवायां, काकजम्ब्वां च स्त्री०ङीप् ।

**नाध** नाथार्थे भ्वा० आ० सक०सेट् । नाधते अनाधिष्ट ।

**नाना** अव्य०न+नाञ् । विनार्थे, अनेकार्थे, उभयार्थे च ।

**नानाकन्द** पु०नाना कन्दा यस्य । पिण्डालौ । बहुविधमूले त्रि०

**नानार्थ** त्रि० नानाविधा अर्था अभिधेयानि प्रयोजनानि वा यस्य । बहुविधाभिधेये, बहुप्रयोजने च ।

**नान्तरीयक** त्रि० अन्तरं प्रतिबन्धादिना व्यवधानं तदत० भवति छ नञर्थनशब्देन समासः. नान्तरीयं ततः स्वार्थे कन् । अवश्यम्भाविनि, व्याप्ये च ।

**नान्दी** स्त्री० नन्दन्ति देवाः पितरो वा यत्र नन्द-इन् ङीप् पृ० । वृद्धौ । 'नान्दीश्राद्धं तत कुर्या'दिति स्मृतिः ,नाटकादौ स्तवपाठे कर्त्तव्ये 'देवद्विजनृपादीनामाशीर्वाद०

परायणा । नन्दन्ति देवता यस्मात्तस्मान्नान्दी प्रकीर्त्तिते’त्युक्ते मङ्गलाचरणभेदे च ।

**नान्दीमुख** पु० नान्द्यर्थं हर्षार्थं बन्धनान्वितं मुखं यस्य । कूपादिमुखबन्धने पटे । नान्दी हर्षितदश्राद्ध चामुखे यस्य । नान्दीश्राद्धभुजि पितृगणे । गौरादौ स्त्री० ङीप् ।

**नान्दीवादिन्** पु० नान्दीं वदति वादयति वा । नाटकादौ नान्दीकरे सूत्रधारे तदर्थं तूर्य्यादिवादके नटादौ च ।

**नापित** पु० क्षुरकर्मकारके जातिभेदे ।

**नाभि** पु० नह्यन्ते अत्र नह्यतेऽनेन वा नह इञ् भान्तादेश । द्वादशन्तपश्चकस्य मध्ये, रथचक्रस्य वामपिण्डयाम्, क्षत्रिये च । मृगमदे स्त्री० । प्राण्यङ्गभेदे (नाइ) पु स्त्री० । स्त्रीत्वे वा ङीप् । प्रधाने, मुख्ये त्रि० ।

**नाभिज** पु० नाभौ विष्णुनाभौ जायते जन ड । चतुर्मुखे ब्रह्मणि, नाभिजन्मादयोऽप्यत्र ।

**नाम** अव्य० नामयति नम णिच ड । स्वीकारे विस्मये स्मरणे सम्भावनायां, निन्दाया प्राकाश्ये, विकल्पे अलीके, कोपे च

**नामकरण** न० नाम क्रियतेऽत्र कृ-ल्युट । ‘दशमेऽहनि पिता नाम कुर्य्या’दिति श्रुत्युक्ते दशमादिदिने कर्त्तव्ये संस्कारभेदे

**नामधेय** न० नामैव स्वार्थे धेय । नामनि वाचकशब्दे संज्ञायाम ‘वाचारम्भण विकारो नामधेय’मिति श्रुति ।

**नामन्** न० नम्यतेऽभिधीयतेऽर्थोऽनेन नामनुणीमन्निति नि० । घटाकाशादिपदार्थबोधके संज्ञाशब्दे आख्यायाम् तानि च पञ्च ‘उणाद्यन्त कृदन्त च तद्धितान्त समासजम् । शब्दानुकरण चेति नाम पञ्चविध स्मृत’मित्युक्ते ।

**नामशेष** त्रि० न मैव शेषो न देहादिरस्य । मृते । नाम मात्र शेषो यत्र । मरणे पु० ।

**नायक** पु० नी ण्वुल । नेतरि स्वामिनि, प्रभौ हारमध्यमणौ, सेनापतौ, शृङ्गाररसालम्बने मनुष्यपत्यादौ च । प्रापयितरि च त्रि० ।

**नायिका** स्त्री० नी ण्वुल । शृङ्गारसालम्बने भार्य्यादौ, दुर्गाया मह्चरीषु उग्रचण्डादिषु च ।

**नार** पु० नरस्यायम् अण् । बालके, जले च । ‘आपो नारा इति प्रोक्ता इति मनु । परमात्मसम्बन्धिनि मनुष्यसम्बन्धिनि च त्रि० ‘नार स्पृष्ट्वा तु सस्नेह मिति स्मृति । नराणां समूहः अण् । नरसमूहे न० ।

**नारक** पु० न्व ण्वुन् प्रज्ञाद्यण् । नरके । नरके भव अण् । नरकस्थे त्रि० । [भोगिनि जीवे ।

**नारकिन्** त्रि० नारक भोग्यत्वेनास्त्यस्य इनि । नरकयातना

**नारङ्ग** पु० न अरङ्ग अरञ्जन यस्य । स्वनामख्याते जम्बीरभेदे, पिप्पलीरसे विटे च । गर्ज्जरे न० ।

**नारद** पु० नार जल ददाति दा क । ‘नार पानीय मित्युक्त तत् पितृभ्य सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यती त्युक्तनिर्वचनयुते मुनिभेदे । नारमज्ञान द्यति दो क, नार ज्ञान ददाति दा क वा । मुनिभेदे तत्प्रोक्ते पञ्चविंशतिसहस्रात्मके महापुराणे न० ।

**नारदीय** न० नारदेन प्रोक्तम् छ । उपपुराणभेदे ।

**नारसिंह** न० नरसिंहमधिकृत्य कृत ग्रन्थ इत्यण् । उपपुराणभेदे । [लौहमये अस्त्रभेदे ।

**नाराच** न० नराणा समूह नारमाचामति चम ड । सर्वे

**नारायण** पु० ‘आपो नारा इति प्रोक्ता आपो वै नरसूनव । ता यदस्यायन पूर्वं तेन नारायण स्मृत’ इति मनूक्तनिर्वचनवति विष्णौ ।

**नारायणक्षेत्र** न० ६त० । ‘प्रवाहमवधि कृत्वा यावद्धस्तचतुष्टयम । अत्र नारायण स्वामी’त्युक्ते गङ्गाया प्रवाहावधिहस्तचतुष्टयमितस्थाने । [चित्तात्मके विधानभेदे ।

**नारायणबलि** पु० स्मृत्युक्ते मृतानां पापण्डादीनां प्राय

**नारायणी** स्त्री० ‘जलायना नराधारा समुद्रशयनापि ना । नारायणी समाख्याता नरनारी प्रकीर्त्ति’त्युक्तायां विष्णुशक्तौ लक्ष्म्यां दुर्गायां ‘नारायणि नमोऽस्तु ते’ इति चण्डी गङ्गाया शतावर्य्याञ्च ।

**नारिकेल** पु० नल इव नालि केन वायुना जलेन वा इलति चलति इल क कर्म० रलयोरैक्यम् । स्वनामख्याते वृक्षे

**नारीष्टा** स्त्री० नारीभिरिष्टा । मल्लिकायाम ।

**नाल** न० नल ज्वलादि० ण । काण्डे, उत्पलादिदण्डे मृणाले न० स्त्री० । नाला मृणालाग्रभुजो भजाम’ इति नै० ।

**नालि(ली)** स्त्री० नल इण वा ङीप । देहस्थशिरायाम, शाकभेदे पद्मादिदण्डे च । गण्डार्यां कन् । श्वेतकलम्ब्याम नाडीशाके, चर्म्ममयकशायाम्, हस्तिकर्णवधन्याम, नाले पुष्पिच्छिद्रे, वेणुभाजने दण्डात्मके काले च ।

**नालिता** स्त्री० नल णिच् क्त । स्वनामख्याते शाकभेदे ।

**नालीक** पु० नाल्या कायति कै क । शरभाले लौहययुक्तान्तश्छिद्रे शरभेदे शरीरे च । पद्मपत्रे न० ।

**नाविक** पु० नावा चरति ठक् । कर्णधारे ।

**नाव्य** त्रि० नावा तीर्य्यतेऽसौ नौ यत् । नौतार्य्ये देशे ।

**नाश** पु० नश-घञ् । पलायने अदर्शने, निधने अनुपलम्भे च

**नासत्य** पु० द्वि० व० । नास्ति असत्य ययो नञ् प्रकृत्या, नासा

निभ पु० निभाति नि+भा-क । व्याजे । उत्तरपदस्थः । सदृशे त्रि० । यथा पितृनिभः मातृनिभेत्यादि तत्सदृशे इत्यर्थः । स्वातन्त्र्ये नास्य न प्रयोगः ।

निभालन न० नि+भल-णिच्-ल्युट् । दर्शने ।

निभृत त्रि० नि+भृ-क्त । धृते, विनीते, निश्चले, एकान्ते, गुप्ते, निर्जने, अस्तायोपस्थिते च 'नभसा निभृतेन्दुने'ति रघुः

निमज्जथु पु० नि+मस्ज-अथुच् । 'अवगाहने, निद्रालुतया स्थितौ च । [निद्रालसतया स्थितौ च ।

निमज्जन न० नि+मस्ज ल्युट् । अवगाहने, जलादौ प्रवेशे,

निमन्त्रण न० नि+मन्त्र-ल्युट् । अकरणे प्रत्यवायसाधने । नियोगभेदे यथा श्राद्धादौ भोजनार्थं नियोगः 'तस्याकरणे प्रत्यवायो जायते' इति स्मृतौ प्रसिद्धम् आह्वाने च ।

निमान न० निमीयते प्रोयतेऽनेन मा ल्युट् । मूल्ये ।

निमि पु० इक्ष्वाकुवंश्ये, चन्द्रवंश्ये च नृपभेदे ।

निमित्त न० नि+मिद-क्त । कारणे, हेतौ, लक्ष्ये, चिह्ने, भाविशुभाशुभसूचके ज्योतिषाद्युक्ते शकुने च 'निमित्तमुपोषन' इति रघुः 'निमित्तानि च पश्यामी'ति गीता । उद्देश्ये च । 'निमित्तात् कर्मयोगे' इति पाणिनिः ।

निमित्तकारण न० कर्म० । न्यायोक्ते समवाय्यसमवायिभिन्ने कारणे यथा घटादौ मृदादि समवायिकारणं कपालद्वयसंयोगः असमवायिकारणम् उभयभिन्न कुलालादि निमित्तकारणम्

निमि(मे)ष पु० निमिषति नि+मिष-क अच् वा । कालभेदे, चक्षुषः स्वाभाविकस्पन्दनोचितकाले (पलक), भावे अप् कुञ्च घञ् , घञ् वा गुणः । चक्षुर्मीलने ।

निमीलन न० नि+मील ल्युट् । मरणे, सङ्कोचने, चक्षुर्मुद्रणे च

निम्न त्रि० निम्नं नमति म्ना वा अध्यादि क । गभीरे नीचे

निम्नगा स्त्री० निम्नं गच्छति गम ड । नदीमात्रे । नीचगामिनि त्रि०

निम्नोन्नत त्रि० निम्नं तदुन्नतं । उन्नतानते वस्तुनि ।

निम्ब पु० निम्बति स्वास्थ्यं निवि सेचने अच् । (निम) वृक्षे ।

निम्बतरु पु० निम्ब-व्यष्ट कर्म० । मन्दारवृक्षे ।

निम्बबीज पु० निम्ब अच् तद्बीजं यस्य । राजादनीवृक्षे ।

निम्बू स्त्री० निम्ब-ऊ । (नेबु) वृक्षभेदे । स्वार्थे कन् । अत्रैव ।

निम्रोचन न० नि+म्रुच-ल्युट् । अस्तमाने ।

नियत त्रि० नि+यम-क्त । नियते नित्ये, आचारयुक्ते, नियमवति, संयतेन्द्रिये च । नियतकर्मणि न० ।

नियति स्त्री० नि+यम-क्तिन् । नियमे, भाग्ये 'नियतिः केन बाध्यते' इति पुराणम् । शुभाशुभकर्मणि, दुर्गायां च ।

नि[illegible] पु० अति वाहयत् नि+यम-तृच् । सारथौ, स्वामि-

तरि, प्रशासके त्रि० । स्त्रियां ङीप् । [दुर्गे च ।

नियन्त्रित त्रि० नितरां यन्त्रित नि+यन्त्र क्त । बद्धे, प्रति-

नियम पु० नि+यम-घञ् । यन्त्रणे, प्रतिज्ञायां, निश्चये, अङ्गीकारे, पूर्वमीमांसोक्ते पक्षतः प्राप्तस्य इतरपक्षव्युदासेन एकतरपक्षे व्यवस्थापने, यथा व्रीहीनवहन्ति । अत्र वितुषीकरणस्य अनेकसाधनसाध्यत्वे नखादेरवहननस्य वा प्राप्तौ नियमात् अवघात एव प्रवृत्तिर्व्यवस्थाप्यते । स्मृतौ 'नियमस्तु स यत् कर्मानित्यमागन्तुसाधन'मित्युक्ते अनित्ये आगन्तुकसाधने उपवासादौ कर्मणि, शौचादिषु च । विशेषस्तु हद्दरभिधाने ।

नियामक पु० नि+यम-ण्वुल् । कर्णधारे । नियन्तरि त्रि०

नियुत न० 'शतं सहस्रमयुतं नियुतं प्रयुतं तथे'त्युक्तायां लक्षसङ्ख्यायां 'लक्षस्तु नियुतं'त्युक्तायां दशलक्षसङ्ख्यायां, तत्सङ्ख्यान्विते च ।

नियुद्ध न० नियतं नितरां वा युद्धम् । बाहुयुद्धे ।

नियोग पु० नि+युज-भावे घञ् । अवधारणे, आज्ञायाम्, निक्षेपे प्रेरणे च । नियुज्यतेऽस्मिन् आधारे घञ् । कार्ये ।

नियोग्य त्रि० नियोक्तुमर्हति यत् । नियोगकरणार्हे प्रभौ ।

नियोज्य त्रि० नियोक्तुं शक्यते कर्मणि यत् कुत्वाभाव । प्रेष्ये प्रेरणार्हे भृत्ये । [स्वाम्याद्यर्थे च

निर् अव्य० नॄ-क्विप् न दीर्घः । निषेधे, निश्चये, वहिर्भावे च ।

निरंश त्रि० निर्गतोऽंशो येषां । अंशरहिते पवितृक्लीवादिपुत्रादौ । राश्यंशरहिते प्रथमदिने अन्तिमदिने संक्रान्तिदिने च

निरग्नि पु० नास्ति अग्निरस्य । अग्निसाध्यश्रौतकर्मशून्ये तु विप्रादिषु त्रिषु वर्णेषु ।

निरङ्कुश त्रि० निर्गतोऽङ्कुशात् । बाधाशून्ये, अनिवार्ये च ।

निरञ्जन त्रि० निर्गतमञ्जनं यस्मात् । अञ्जनशून्ये निर्मले । अञ्जनं तमः मलिनस्वभावत्वात् तस्मात् निर्गतं तन्निर्गतं यस्मात्सः । परमात्मनि 'निरञ्जनं साम्यमुपैति दिव्य'मिति श्रुतिः ।

निरतिशय त्रि० निर्गतोऽतिशयोऽस्मात् । अतिशयशून्ये परमोत्कृष्टे । ['निरतिशय धाम्ने'ति भारवि ।

निरत्यय त्रि० निर्गतोऽत्ययोऽस्मात् । निर्बाधे अमाविके च

निरन्तर त्रि० निर्गतमन्तरात् निर्गतमन्तरं वा यस्मात् । निविडे, निरवधौ, निश्छिद्रे च ।

निरपत्रप त्रि० निर्गतोऽपत्रपायाः । निर्लज्जे ।

निरर्गल त्रि० निर्गतमर्गलं यस्मात् । [illegible] च

निरर्थक त्रि० निर्गतोऽर्थो [illegible] दर्शाधेयदन्ते च ।

निरवग्रह त्रि० निर्गतोऽवग्रहात् । निष्प्रतिबन्धे ।
निरवद्य त्रि० निर्गतोऽवद्यात् । दोषशून्ये, उत्कृष्टे च ।
निरवयव पु० निर्गतोऽवयवात् । परमाणौ । आकारशून्ये आकाशादौ त्रि० ।
निरवशेष त्रि० निर्गतोऽवशेषो यस्मात् । सर्वस्मिन् ।
निरवसित त्रि० निर्+अव+सो-क्त । पात्रबहिष्कृते (यस्य भोजनपात्रं संस्कारेणापि न शुध्यति तस्मिन्) चाण्डालादौ नीचवर्णे । [निष्कासने च ।
निरसन न० निर्+अस-ल्युट् । परित्यागे, प्रतिक्षेपे वधे,
निरस्त त्रि० निर्+अस-क्त । त्वरितोच्चारिते, निष्ठ्यूते, क्षिप्ते, प्रतिहते, भक्षिते च ।
निराकरण न० निर्+आ+कृ-ल्युट् । निवारणे, दूरीकरणे च
निराकरिष्णु त्रि० निर्+आ+कृ-इष्णुच् । निवारणशीले प्रतिक्षेपकर्त्तरि च ।
निराकृत त्रि० निर्+आ+कृ-क्त । दूरीकृते, निवारिते च ।
निराकृति स्त्री० निर्+आ+कृ-क्तिन् । निवारणे ।
निरामय त्रि० निर्गत आमयात् । रोगरहिते । वनच्छागे, शूकरे च पु० ।
निरामालु पु० नितरां रमतेऽत्र रम-आलु । कपित्थवृक्षे ।
निरालम्बा स्त्री० निर्गत आलम्बोऽस्मात् । आकाशलम्बिन्यां मांस्याम् । [नास्तिके त्रि० ।
निरीश न० निर्गतमीशायाः । फाले । ईश्वरशून्यतावादिनि
निरुक्त न० निश्शेषेणोच्यतेऽत्र । निर्+वच-क्त । 'वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्त'मित्युक्तदिशा प्रकृतिप्रत्ययाद्यवयवार्थनिर्वचनप्रतिपादके वेदाङ्गे ग्रन्थभेदे ।
निरुक्ति स्त्री० निर्+वच-क्तिन् । निर्वचने प्रकृतिप्रत्ययाद्यवयवार्थकथनद्वारा समुदितार्थबोधने ।
निरुपाख्य त्रि० निर्गता उपाख्या यस्मात् । असत्पदार्थे वन्ध्यापुत्रादौ, वाङ्मनसयोर्विषयतयोक्तुमयोग्ये अस्फुटस्वरूपे च ब्रह्मणि । [शब्दे ।
निरूढ पु० निर्+रुह-क्त । शक्तिवृत्त्यनपेक्षयाऽर्थबोधके
निरूढलक्षणा स्त्री० निरूढा प्रसिद्धस्य लक्षणा । आकरणबोध्यदेशेतरः प्रसिद्धार्थे शक्तितुल्यायां लक्षणरूपायां शब्दस्यार्थबोधनशक्तौ ।
निरूढि स्त्री० निर्+रुह-क्तिन् । प्रसिद्धौ ।
निरूपण न० नि+रूप-ल्युट् । तत्त्वज्ञानानुकूलशब्दप्रयोगे विचारे, निदर्शने, आलोके च ।
निरूपित त्रि० नि+रूप-क्त । नियुक्ते, कृतनिरूपणे, कथिते, न्यायोक्ते निरूपकतासम्बन्धेन सम्बन्धिनि च ।
निरोध पु० नि+रुध-घञ् । नाशे, 'न निरोधो नचोत्पत्तिरि'ति पुराणम् । प्रलये, प्रतिरोधे च । [रोधने
निरोधन न० नि+रुध-ल्युट् । कारागारादौ प्रवेशनेन गतिनिर्वृति नियता कृतिरूपा यत्र । हविषमधिमविद्विपतौ । चलत्सारस्य स्त्री० । निरुपद्रवे त्रि० । [पालमनिबद्धे ।
निर्गन्धपुष्पी स्त्री० निर्गन्धं गन्धशून्यं पुष्पं यस्याः ङीप् ।
निर्गुण पु० निर्गतो गुणेभ्यः । सत्त्वरजस्तमोरूपगुणत्रयशून्ये निर्धर्मके परमात्मनि । निर्गताः गुणाः शौर्यादयो रूपादयो वा यस्मात् । गुणहीने त्रि० ।
निर्गुण्डी स्त्री० निर्गता गुडात् वेष्टनात् पृ० गौरा० ङीष् । नीरसे, कलिकायां, सिन्धुवारवृक्षे, पद्मकन्दे च ।
निर्ग्रन्थ पु० निर्गतो ग्रन्थेभ्यः । क्षपणके, दिगम्बरे, बौद्धभेदे, द्यूतकारे, मुनिभेदे च । निर्धने, मूर्खे, निःसहाये, निर्वेदगते च त्रि० । स्वार्थे कन् । क्षपणे, निष्फले च पु० । वस्त्ररहिते त्रि० ।
निर्ग्रन्थन न० निर्+ग्रन्थ-कौटिल्ये ल्युट् । मारणे ।
निर्ग्रन्थिक पु० निर्गतो ग्रन्थिर्वस्त्रग्रन्थिर्यस्य कप् । क्षपणके । निपुणे, ग्रन्थिहीने च त्रि० ।
निर्घात पु० निर्+हन-घञ् । 'पवनः पवनाभिहतो गगनादवनौ यदा पतति । भवति तदा निर्घातः' इत्युक्ते पवनाहतपवनजन्ये शब्दभेदे । 'निर्घाते भूमिचलने' इतिस्मृतिः
निर्घृण त्रि० निर्गता घृणा दया यस्मात् । निर्दये ।
निर्घोष पु० निर्+घुष-घञ् । शब्दमात्रे ।
निर्जन त्रि० निर्गतो जनो यस्मात् । जनैरनाकीर्णे विजने
निर्जर पु० निर्गता जरा यस्मात् । देवे । जराशून्ये त्रि० । पृ० । अमृते न० ।
निर्जरा स्त्री० निर्गता जरा यस्याः पृ० । गुडूच्यां, तालपर्ण्यां च
निर्झर पु० निर्+झॄ-अप् । पर्वतादिपतज्जलप्रवाहे (झरणा)
निर्झरिणी स्त्री० निर्झरः पर्वतादिपतज्जलप्रवाहः कारणत्वेनास्त्यस्या इनि । नद्याम् ।
निर्णय पु० निर्+नी-अच् । निश्चये, तद्भावाभाववति पक्षे तद्भावावगाहिनि ज्ञाने, सन्देहे यथा भावाभावौ द्वावेव विषयतया भासेते नैवं निश्चये तत्र एकविषयत्वमापद्यते । विरोधपरिहारे, मीमांसोक्ते पञ्चावयवन्यायमध्ये चरमावयवे, न्यायोक्ते 'सन्दिग्धपक्षप्रतिपक्षयोः साधकबाधकप्रमाणदर्शनात्मके च ।

**निर्णयपाद** पु० चतुष्पादव्यवहारमध्ये चरम चतुर्थे येन सभासदा जयपराजयपदार्थनिर्णयस्तस्मिन् पादे ।

**निर्णिक्त** त्रि० निर्+निज क्त । शोधिते, अपगतमले च ।

**निर्णेजक** पु० निर्+निज ण्वुल । रजके ।

**निर्दहन** पु० निःशेषेण दहति ल्यु । भल्लातके । करणे ल्युट् ङीप् । मूर्वालतायां स्त्री० । निर्गतोदहनोऽस्मात् । शीतादिचिह्नशून्ये त्रि० ।

**निर्दिष्ट** त्रि० निर्+दिश-क्त । उपदिष्टे प्रदर्शिते, कथिते च

**निर्देश** पु० निर्+दिश भावे घञ् । शासने, आज्ञायां, उपदेशे च । निर्दिश्यतेऽभिधीयतेऽनेन घञ् । प्रतिपादकशब्दरूपे नाम्नि, वेतने च 'कालमेव प्रतीक्षेत निर्देशं भृतको यथे'ति पुराणम् । कथने, उपान्ते, देशान्निर्गते च त्रि० ।

**निर्द्धन** पु० निर्गतं धनमस्मात् । जरद्गवे । धनहीने त्रि० ।

**निर्द्धारण** न० निर्+धृ णिच् ल्युट् । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणे । यथा नराणां क्षत्रियः शूर इत्यादौ नररूपसमुदायात् क्षत्रियजातेरेकदेशस्य शूरत्वेन पृथक्करणम् । [निश्चये च ।

**निर्द्धारित** त्रि० निर्+धृ णिच्-क्त । कृतनिश्चये निर्द्धारण-

**निर्द्वन्द्व** त्रि० निर्गतो द्वन्द्वेभ्यः शीतोष्णादिविरुद्धधर्मयुगलेभ्यः । रागद्वेषशीतोष्णलाभालाभादिद्वन्द्वरहिते ।

**निर्बन्ध** पु० निर्+बन्ध घञ् । आग्रहे अभिनिवेशे ।

**निर्बाध** त्रि० निर्गता बाधा यस्मात् । निरुपद्रवे बाधाशून्ये च ।

**निर्भय** पु० निर्+भी अच् । हयश्रेष्ठे । भयरहिते त्रि० ।

**निर्भर** न० निःशेषेण भरो भारोऽत्र । अतिमात्रे । तद्युक्ते त्रि०

**निर्मक्षिक** अव्य० मक्षिकाया अभावः । मक्षिकाया अभावे ।

**निर्मन्थ्यदारु** न० निर्मन्थ्यस्य अग्न्युत्पादनस्य दारु काष्ठम् । घर्षणेन अग्न्युत्पादनसाधने काष्ठे । [शून्ये योगिभेदे ।

**निर्मम** त्रि० निर्गतो ममकारो यस्मात् । पुत्रदेहादौ ममता-

**निर्मल** त्रि० निर्गतो मलात् । रजस्तमआदिमलहीने, रागादिमलरहिते, अशुद्धिरहिते, शुद्धे च । अभ्रके न० । निर्गतोमलो यस्मात् पु० । कतके तस्य हि फलसम्बन्धात् जलमलनाशकत्वम् प्रसिद्धम् । [कामभेदे च

**निर्माण** न० निर्+मा ल्युट् । रचनायाम्, सारे, समञ्जसे,

**निर्माल्य** न० 'विसर्ज्जिते तु देवेश निर्माल्यं भवति क्षणादि'-त्युक्ते देवविसर्ज्जनोत्तर देवदत्तद्रव्ये देवोच्छिष्टे ।

**निर्मुक्त** पु० निर्+मुच क्त । त्यक्तकञ्चुके सर्पे (खोलसछाडासाप) निःशेषेण मुक्तः । निष्परिग्रहे, सङ्गरहिते, सम्बन्धशून्ये च ।

**निर्मोक** पु० । निर्+मुच् घञ् । सर्पकञ्चुके (खोलस) मोचने, सन्नाहे, आकाशे च । [सदामनि, गर्भादिनिर्गमे, मोक्षे च

**निर्याण** न० निर्+या ल्युट् । गजापाङ्गदेशे, पशूनां पादबन्ध-

**निर्यातन** न० निर्+यत-णिच्-ल्युट् । वैरशुद्धौ, प्रतिदाने, दाने, न्याससमर्पणे च ।

**निर्यास** पु० निर्+यस घञ् । वृक्षात् तरलतया निर्गते कालेन कठिनतां प्राप्ते, रसे (गाँद) क्षरसे, क्वाथे च ।

**निर्यूह** पु० निर्+ऊह क पृ० । नागदन्तके, द्वारे, निर्यासे, आपीडे, शेखरे च ।

**निर्ल्वयनी** स्त्री० नितरां लयति अहिरस्याम् त्वचि ल्युट ङीप् पृ० । सर्पत्वचि (खोलस) 'यथाहिनिर्ल्वयनी मृत्यस्ता शयीत' इति श्रुतिः । [कथनरूपायां निरुक्तौ ।

**निर्वचन** न० निर्+वच-ल्युट् । प्रकृतिप्रत्ययविभागेन अर्थ

**निर्वपण** न० निर्+वप ल्युट् । अन्नादीना विभागे, दाने च ।

**निर्वर्त्तित** त्रि० निर्+वृत णिच् क्त । निष्पादिते ।

**निर्वहण** न० निर्+वह ल्युट् । नाट्योक्तौ प्रस्तुतकथासमाप्तौ, प्रकृताभिनयस्य निर्वाहे, नाटकसन्धिभेदे च ।

**निर्वाण** न० निर्+वा भावे क्त नि० न । मोक्षे, आत्यन्तिकदुःखनिवृत्तौ विनाशे, गजमज्जने, सङ्गमे च । कर्त्तरि क्त । निर्वृते, शान्ते, मुक्ते, निश्चले, शून्ये, विश्रान्ते च त्रि० ।

**निर्वाद** पु० निर्+वद घञ् । लोकापवादे । [च ।

**निर्वापण** न० निर्+वप, वा वा णिच्-ल्युट् । मारणे वधे दाने

**निर्वासन** न० निर्+वस णिच् ल्युट् । नगरात् बहिष्करणे, मारणे, हिंसने, विसर्ज्जने च । [च

**निर्वाह** न० निर+वह घञ् । कार्यसम्पादने, निष्पत्तौ, समाप्तौ

**निर्विकल्प** त्रि० निर्गतो विकल्पो ज्ञातृज्ञेयादिविभागो विशेष्यविशेषणतासम्बन्धो वा यस्मात् । वेदान्तोक्ते ज्ञातृज्ञेयादिविभागशून्ये विशेष्यविशेषणतासम्बन्धरहिते च ब्रह्मात्मैकात्म्यविषये अखण्डाकारके एकविषयके ज्ञाने, 'आत्मारामा विहितरतयो निर्विकल्पे समाधावि'ति वेणी० । वा कप् । 'सत् प्रमा नापमा नापि ज्ञानं यन्निर्विकल्पकम् । प्रकारतादिशून्यं हि सम्बन्धानवगाहि यत्' इति न्यायोक्ते अलौकिके आलोचनात्मके ज्ञानभेदे ।

**निर्विकार** पु० प्रकृतेरन्यथाभावः विकारः स निर्गतो यस्मात् । जन्मादिषड्भावविकारहीने परमात्मनि । विकारशून्ये त्रि० ।

**निर्बीजा** स्त्री० निर्गतं बीजं यस्याः । द्राक्षाभेदे अल्पबीजे बीजशून्ये च त्रि० । शास्त्रोक्ते समाधिभेदे पु० ।

**निर्वृति** स्त्री० निर्+वृ क्तिन् । सुखे, सुस्थितौ, अस्तगमने, मोक्षे, मृत्यौ च ।

निर्वृत्त त्रि० निर्+वृत-क्त । निष्पन्ने । निर्गता वृत्तिर्यस्य । वृत्तिरहिते त्रि० ।

निर्वेद पु० निर्+विद घञ् । स्वस्यावमाने, बहुकालेनाभ्यसिद्धे पदार्थे निष्प्रयोजनत्वेन पश्चात्तापे, औदासीन्ये, वैराग्ये, 'तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य चे'ति गीता अलङ्कारोक्ते शान्तिरसस्य स्थायिभावे च ।

निर्वेश पु० निर्+विश-घञ् । भोगे, वेतने, मूर्च्छने, विवाहे च

निर्व्यथन न० व्यथ भावे ल्युट् निश्चयेन व्यथनं भयं चलनं वा यत्र । छिद्रे, शोकस्थाने, व्यसनादौ, दु खोत्पादके व्यापारे च

निर्व्यूढ त्रि० निर्+वि-वह-क्त । त्यक्ते, असमाप्ते, यत् वस्तु सम्यक्पूर्णतापर्य्याप्तं तस्मिन् च । यथा पत्न्यादीनां भर्त्तृधने न सम्यक् स्वत्वं यथेष्टदानासामर्थ्यात् इति न तस्य निर्व्यूढत्वं भवति च, दौहित्रादे स्वत्वं सम्यगेव पर्याप्तमत स्तन्निर्व्यूढम् । [निष्कासने च ।

निर्हरण न० नि शेषेण हरणम् । दाहार्थं शवादिहरणे,

निर्हार पु० निर्+हृ-घञ् । निखातशल्यादे उद्धरणे, मलमूत्रादित्यागे, 'आहारनिर्हारविहारयोगा' इति स्मृति । प्रेतदेहस्य दाहार्थं बहिर्नयने, यथेष्टविनियोगे च । 'न निर्हारं स्त्रियः कुर्यु'रिति मनु ।

निर्हारिन् पु० निर्हरति दूरं गच्छति निर्+हृ णिनि । दूरगामिगन्धे । निर्हरणकर्त्तरि त्रि० ।

निर्ह्राद पु० निश्चयेन ह्रादः ह्रद घञ्० शब्दे ।

निलय पु० निलीयतेऽत्र ली-अच् । गृहे, आवासस्थाने च

निवचने अव्य० वचननिवृत्तौ । निवचनेकृत्य वाच नियम्येत्यर्थ

निवपन न० नियत वपनम् । पित्राद्युद्देशेन दाने ।

निवर्त्तन न० उभयतो विंशतिवंशमिते क्षेत्रादौ 'निवर्त्तनं विंशतिवंशसंख्ये'रिति कोश । नि+वृत-णिच-ल्युट् । निवारणे

निवर्हण न० नितरां वर्हणं वर्ह हिंसायां ल्युट् । मारणे ।

निवसति स्त्री० नि+वस-आधारे अतिच् । गृहे ।

निवसथ पु० न्युष्यतेऽत्र नि+वस-अथच् । ग्रामे ।

निवसन न० न्युष्यतेऽत्र ल्युट् । गृहे । नि+वस-आच्छादने ल्युट् । वस्त्रे । [सप्तवायुमध्ये वायुभेदे ।

निवह पु० नितरामुह्यते वह-अच् । समूहे । नि+वह-अच् ।

निवात पु० निरुद्धो निवृत्तो वा वातोऽस्मात् । दृढकवचे, शस्त्राद्यभेद्यकवचे, आश्रये च । वातशून्ये देशे त्रि० ।

निवातकवच पु० हिरण्यकशिपो पुत्रस्य संह्रादस्य दैत्यस्य पुत्रे दैत्यभेदे ।

निवाप पु० न्युप्यते नि+वप घञ् । पित्रुद्देशेन दाने, दत्तमात्रे च

निवास पु० नि+वस-आधारे घञ् । गृहे, आश्रये च 'जगन्निवासो वसुदेवसद्मनी'ति माघ ।

निविड त्रि० नितरां विडति संहन्यते नि+विड क । सान्द्रे घने, नीरन्ध्रे, दृढे च । नितरां नासिका नि+नासाया विडच् । नतनासिकायाम् स्त्री० ।

निवीत न० नि+व्यञ-क्त । कण्ठलम्बिते यज्ञसूत्रे । व्येञ् संवरणे क्त सम्प्रसारणादि । प्रावृतवस्त्रे ।

निवृत्त नि+वृत भावे क्त । निषेधे, 'निवृत्तं पदार्थ' इति भाष्यम् कर्त्तरि क्त । विरते त्रि० । [महाफले ति मनु ।

निवृत्ति स्त्री० नि+वृत-क्तिन् । उपरमे, विरतौ च 'निवृत्तिस्तु

निवेदन न० नि+विद-णिच्-ल्युट् । सम्मानपूर्वकं ज्ञापने, समर्पणे च । [निवेशने, उद्वाहे, न्यासे च ।

निवेश पु० नि+विश-घञ् । विन्यासे, शिबिरे, आगन्तुसैन्य-

निवेशन न० नि+विश-आधारे ल्युट् । गेहे । भावे ल्युट् । प्रवेशे, स्थितौ च । [रात्रौ, हरिद्रायाम्

निश् स्त्री० नितरां श्यति तनूकरोति व्यापारान् शो-क्विप् ० ।

निश(शा)मन न० नि+शम णिच् ल्युट् वा ह्रस्व । श्रवणे, दर्शने च ।

निशा स्त्री० नितरां श्यति व्यापारान् शो-क । रात्रौ हरिद्रायाम्, 'अजगोमिथुनकर्किधन्विमृगा निशा' इति ज्योतिषोक्तेषु मेषादिराशिषु च ।

निशाकर पु० निशां करोति कृ ट । चन्द्रे, कुक्कुटे च ।

निशाचर पु० निशायां चरति चर-ट । राक्षसे, शृगाले पेचके, सर्पे, पिशाचे, चक्रवाके, चौरे च । रात्रिचरमात्रे त्रि० ङीप् । राक्षस्याम् कुलटायां केशिनीनामगन्धद्रव्ये च स्त्री०

निशा(शि)त त्रि० नि+शो क्त वा इत्वम् । तेजित संशोधिते

निशान न० नि+शो-ल्युट् । तेजोकरणे ।

निशान्त न० निशायामस्यते अत्र अम-गतौ कर्मणि क्त । गृहे । नितरां शान्ते त्रि० ।

निशापति पु० ६त० । चन्द्रे, कर्पूरे च ।

निशिपुष्पा स्त्री० निशि रात्रौ पुष्यति पुष-अच् अलुक्स० । शेफालिकायाम् । निशिपुष्पीत्यप्यत्र ।

निशीथ पु० निशेरतेऽत्र नि+शी थक् । अर्द्धरात्रे, रात्रिमात्रे च

निशीथिनी स्त्री० निशीथोऽस्त्यस्या इनि । रात्रौ ।

निशुम्भ पु० नि+शुम्भ-अच् घञ् वा । शुम्भासुरानुजे दैत्यभेदे । मर्द्दने च 'धान्याग्निशुम्भमाभवत'रिति भीरचरितम् ।

निशुम्भमर्द्दिनी स्त्री० निशुम्भं मर्द्दयति मर्द-णिनि ङीप् । दुर्गायाम् ।

निश्चय पु० निर्+वि-चि-अच् । संशयान्यज्ञाने निर्णये, सिद्धान्ते, इदमेवेति विषयपरिच्छेदे च ।

निश्चल त्रि० निर्+चल अच् । स्थिरे, अचले, असम्भावना-विपरीतभावनारहिते च । भूमौ, शालपर्ण्याञ्च स्त्री० टाप्

निश्वास पु० नि+श्वस घञ् । मुखनासिकाभ्यां प्राणवायोर्निःसरणे

निषङ्ग पु० नितरां सजन्ति शरा यत्र सञ्ज-घञ् । तूणीरे

निषङ्गिन् त्रि० निषङ्ग+अस्त्यर्थे इनि । धनुर्द्धरे ।

निषद्या स्त्री० निषीदन्त्यस्याम् जना सद-क्यप् । पण्यविक्रयशालायां (हाटचाला) हट्टे, क्षुद्रखट्वायाञ्च ।

निषद्वर पु० नि+सद+क्विप् निषद् आसनं तां वृणोति वर आवरके ट अच् । जम्बाले कर्द्दमे ।

निषध पु० नि+सद अच् ष० । कठिने देशभेदे च तद्देशस्थे ब०व० । तद्देशस्थे, निषादस्वरे, हरिवर्षस्य मर्य्यादापर्वते च पु० ॥

निषाद पु० निषीदति मन, पापं वा यस्मिन् सद-घञ् । 'निषादं रौति कुञ्जर' इत्युक्ते तन्त्रीकण्ठोत्थिते स्वरभेदे, चण्डाले, ब्राह्मणात् ऊढायां शूद्रायामुत्पन्ने पारशवाख्ये वर्णसङ्करे च । [णिनि । हस्तिपाले

निषादिन् पु० निषादयति उपवेशयति हस्तिनं नि+सद-णिच्

निषिद्ध त्रि० नि+सिध क्त । निषेधविषये, इष्टसाधनताभ्रम निषेधकेन नञ्पदेन, लिङाद्यनुषक्तनञ्पदेन वा बोध्ये, पदार्थे, बाधिते च । [निनिमत्त ।

निषेक पु० नि सिच घञ् । गर्भाधाने 'निषेकादि श्मशानान्त'

निषेध पु० नि+सिध-घञ् । निवृत्तौ, प्रतिषेधे, नञादिना बोधितार्थे । [प्रादिभ्यो न णत्वम् ।

निष्क माने चु० आत्म०सक०सेट् । निष्कयते अनिनिष्कत ।

निष्क पु०न० निश्चयेन कायति कै क । माषैः पञ्चभिर्माषक परिमितसुवर्णानामष्टाधिकशते, व्यावहारिकरूपके दीनारे, (टाका) चतुर्भिः सुवर्णपरिमिते मानभेदे षोडशद्रम्म (काहन)परिमाणे, वक्षोभूषणे, हेममात्रे, पलपरिमाणे च

निष्कण्ठ पु० निर्गत कण्टोऽस्मात् । कण्टकशून्ये वरुणाख्ये द्रुमे

निष्कर्ष पु० निर्+कृष घञ् । इयत्तापरिच्छेदे निश्चये च ।

निष्कल त्रि० निर्गता कला यस्मात् । कलाशून्ये, नष्टवीर्ये च । आधारे पु० । कलावयवशून्ये ब्रह्मणि न० । 'निष्कलस्य द्वितीयस्ये'ति पुरश्चम् । [निवृत्तार्त्तवायाम्

वृद्धायां स्त्रियां स्त्री० वा गौरा० ङीष् ।

निष्कासित त्रि० निस्+कस गतौ णिच् क्त । निःसारिते ।

निष्कुट पु० निस्+कुट-क । गृहसमीपस्थे उपवने, केदारे

क्षेत्रे, राज्ञाम् अन्तःपुरे च । [वा ङीप् । एलायाम्

निष्कुटि(टी) स्त्री० कुट-इन् कौटिल्यम् निर्गता कुटिर्यस्या

निष्कुषित त्रि० निर्+कुष-क्त । खण्डिते, निस्त्वचीकृते च 'काकैर्निष्कुषित'मिति गङ्गास्तव ।

निष्कुह पु० नि शेषेण कुहयते विस्मापयति कुह क । वृक्षादिस्थे स्वयं जाते रन्ध्रे कोटरे ।

निष्कृति स्त्री० निर्+कृ क्तिन् । निस्तारे, निर्मुक्तौ, पापादेश्च उद्धारे च 'कृतघ्ने नास्ति निष्कृति'रिति स्मृति ।

निष्कृष्ट त्रि० निर्+कृष-क्त । सारांशे ।

निष्कोषण न० निर्+कुष-ल्युट् । अन्तरवयवानां बहिर्निःसारणे

निष्क्रम पु० निर्+क्रम घञ् । बुद्धिसम्पत्तौ, निर्गमे, दुष्कुले च

निष्क्रमण न० निर्+क्रम ल्युट् । बहिर्गमने, चतुर्थे मासि शिशो कर्त्तव्ये संस्कारभेदे च 'चतुर्थे मासि कर्त्तव्यं शिशोर्निष्क्रमणं गृहा'दिति मनु ।

निष्ठा स्त्री० नि+स्था-अङ् । नाट्योक्ता प्रस्तुतकथासमाप्तौ, निष्पत्तौ, नाशे, अन्ते, याच्ञायाम्, उत्कर्षे, व्यवस्थायाम्, क्लेशे, व्रते, गुरुशुश्रूषादौ, तत्परतायां, धर्म्मादौ श्रद्धायां च 'लोकेऽस्मिन् द्विविधा निष्ठे'ति गीता । निश्चयेन स्थितौ च 'नैषां निष्ठा तु सात्त्विकी'ति गीता । [दध्यादौ व्यञ्जने

निष्ठान न० निष्ठीयतेऽत्र स्था ल्युट् । भक्ताद्युपसेचने

निष्ठी(ष्ठि)व पु० नि+ष्ठिव-घञ् वा दीर्घः । मुखेन श्लेष्मनिरसने । ल्युट् वा दीर्घः । निष्ठीवननिष्ठेवने पते अप्यत्र ।

निष्ठुर न० नि+स्था-उरच् । परुषवाक्ये । कठोरे, त्रि० । 'गुह्याद्युत्सेध्यशब्दानां वचनं निष्ठुरं विदुः' । यदन्यद्वा वचो नोग्रं क्लीबं समैथुनाश्रय'मित्युक्ते, अश्लीलवाक्ये न० । तद्वति त्रि० ।

निष्ठ्यूत त्रि० नि+ष्ठिव-क्त । क्षिप्ते ।

निष्णात त्रि० नितरां स्नात पारं गत शुद्धो वा नि+स्ना-क्त षत्वम् । निपुणे, पारङ्गते च ।

निष्पक्व त्रि० निरतिशय पक्वम् । अतिशयेन पक्वे क्वथिते दशमूलादौ । पक्वं पाक निरा०स० । पाकशून्ये त्रि० ।

निष्पत्ति स्त्री० निर्+पद-क्तिन् । समाप्तौ, सिद्धौ च ।

निष्पत्राकृति स्त्री० पत्र पुङ्खमशरीर अच् पत्र शर' तस्य परपार्श्वे निष्पातनं सपत्रं तत करोति । 'सपत्रनिष्पत्रा व्यामन्नलक्ष्यदनं' इति डाच् क्तिन् । अतिव्यथायाम् ।

निष्पत्रिका स्त्री० निर्गत पत्रं यस्याः ब०व० । करीरवृक्षे (टाटरकाटा) ।

निष्पन्न त्रि० निर्+पद क्त । सिद्धे, समाप्ते च ।

भिण्टाम्। तस्या हि पुष्पमल्पकालेनैव म्लायति।

नीलालु पु० कर्म०। श्यामवर्णकन्दे आलुभेदे।

नीलासन पु० कर्म०। (पियाशाल) वृक्षभेदे। [इति च।

नीलिनी स्त्री० नीलोवर्णोऽस्त्यस्याः इनि। नीलीवृक्षे कृष्णत्रि

नीलोत्पल न० कर्म०। इन्दीवरे सौगन्धिके नीलवर्णे कुमुदे

नीवाक पु० नियतं वाको वचनं वच-घञ् दीर्घः। महार्घहेतो धान्यसङ्ग्रहादरे। [कङ्कटीयैरि'ति रघु०।

नीवार पु० नि+वृ-घञ् दीर्घः। तृणधान्यभेदे 'नीवारपाकादि

नीवि(वी) स्त्री० निव्ययति निवीयते वा नि+व्ये इन् यलोपः दीर्घो डिच्च वा ङीप्। वणिजां मूलधने, कटीवस्त्रबन्धे च 'नीविं प्रति प्रणिहिते तु करे' इति सा०द०। [जनपदे।

नीवृत् पु० स्त्री० नियतं वर्त्ततेऽत्र नि+वृत-क्विप् दीर्घः। देशे,

नीशार पु० नितरां शीर्य्यते हिमानिलादत्वानेन वा नि+शॄ-घञ् दीर्घः। हिमानिलनिवारणे प्रावरणे, काण्डपटे च (कानात्)। [हिमे च।

नीहार पु० निह्रियते नि+हृ-घञ् दीर्घः। घनीभूते शिशिरे,

नु अव्य० नुदति नौति वा मित०डु। विकल्पे, अनुनये, अतीते, प्रश्ने, हेतौ, वितर्के, अपमाने, अपदेशे, अनुतापे च।

नुड वधे तु० कु० प०सक०सेट्। नुडति अनुडीत्। न णत्वम्

नुति स्त्री० नु-क्तिन्। स्तवे, प्रणामे च।

नुत्त(न्न) त्रि० नुद-क्त तस्य वा नः। प्रेरिते, क्षिप्ते च।

नूतन त्रि० नव एव नव+तन नवस्य नू। अभिनवे नवीने। स्व। नूत्नोऽप्यत्र। [इत्ये।

नूद पु० नुदति पापं क पृ० दीर्घः। अश्वत्थाकारे वृक्षाकृतिणि

नूनम् अव्य० नु+ऊन-अमि। वितर्के, निश्चिते, अर्थे, वाक्यपूरणे, उत्प्रेक्षाद्योतने च। [पादाङ्गदे।

नूपुर न० नू-क्विप् तथा पुरति पुर-अग्रगमने क। (नेपुर)

नृ पु० नी-ऋन् डिच्च। मनुष्ये, पुरुषे च। जातौ ङीप्। नारी

नृग पु० इक्ष्वाकुवंश्ये नृपभेदे।

नृकरोटिका स्त्री० ६त०। नरकपाले।

नृचक्षस् पु० नॄन् चष्टे पश्यति भक्ष्यत्वेन चक्ष-असुन् न ख्या देशः। राक्षसे। [नृत्यति।

नृत नर्त्तने दि०पर०अक०सेट्। नृत्यति अनर्त्तीत् नर्त्तिष्यति-

नृत्त(त्य) न० नृत-क्त क्यप् वा। तालमानयुक्ते अभिनयाद्यविशेषरूपे नर्त्तने।

नृप पु० नॄन् पाति रक्षति पा-क। 'चतुर्वर्णसमस्तलोकाधिकारी नृपो भवेदि'त्युक्ते राजविशेषे, राजमात्रे च।

नृपकन्द पु० कन्दानां नृप श्रेष्ठः राजद०। राजपलाण्डौ।

नृपति पु० ६त०। कुबेरे, राजनि च। [इन्द्रादयोऽप्यत्र।

नृपद्रुम पु० द्रुमाणां नृपः राजद०। राजशब्दे आरग्वधे राज

नृपप्रिय पु० ६त०। (वैंडुवांश) वंशभेदे तस्य दुर्गवेष्टनकारित्वात्तत्प्रियत्वम्। राजपलाण्डौ, शालिधान्ये, शरे च। राजवल्लभे त्रि०। केतक्यां राजखर्जूर्यांञ्च स्त्री०।

नृपप्रियफला स्त्री० नृपप्रियं फलं यस्याः। वार्त्ताक्याम्।

नृपसभ न० नृपाणां सभा शाला संहतिर्वा। राजसमूहे राजास्थानशालायाञ्च।

नृपोचित पु० नृपेषु उचितः। राजमाषे। राजयोग्ये त्रि०।

नृयज्ञ पु० नॄणां यज्ञः। अतिथिपूजने। मनुष्ययज्ञोऽप्यत्र।

नृवराह पु० ना वराहः। अंशाभ्यां मनुष्यवराहाकृतौ भगवदवतारभेदे। [परद्रोहिणि च।

नृशंस त्रि० नॄन् शंसति शन्स हिंसायाम् अण्। घातके, क्रूरे,

नृसिंह पु० ना सिंहः। अंशाभ्यां मनुष्यसिंहाकृतियुक्ते भगवतोऽवतारभेदे।

नॄ नीतौ क्र्यादि० प्वादि० पर० सक० सेट्। नृणाति अनारीत् अस्योपदेशस्थत्वात् णत्वम्। [नरयति। अणत्वम्।

नॄ नये भ्वा०पर०सक०सेट् घटा०। नरति अनारीत्। णिच्

नेजक पु० निज-शुद्धौ ण्वुल्। रजके। शोधकमात्रे त्रि०।

नेतृ त्रि० नी-तृच्। प्रभौ, निर्वाहके नायके, प्रवर्त्तके, प्रापके, च। स्त्रियां ङीप्। निम्बवृक्षे पु०।

नेत्र न० नयति नीयते वाऽनेन ष्ट्रन्। मन्थनदामनि, वस्त्रभेदे, वृक्षमूले, रथे, जटायाम्, नाड्याम्, गलकायाम्, चक्षुषि च। प्रापयितरि, नयनसाधने, प्रवर्त्तके च त्रि०।

नेत्रच्छद पु० नेत्रे छाद्यतेऽनेन छद णिच् क सुम्न०। नेत्रपिधायके चर्म्मणि नेत्रपुटे।

नेत्रपर्य्यन्त पु० नेत्रयोः पर्य्यन्तः कोणः सीमा। अपाङ्गे।

नेत्रमल न० ६त०। चक्षुर्मले दूषिकायाम् (पिचुटि)।

नेत्ररञ्जन न० नेत्रे रज्यते अनेन रन्ज करणे ल्युट्। कज्जले

नेत्ररोगहन् पु० नेत्ररोगं हन्ति हन क्विप्। वृश्चिकालीवृक्षे तस्य हि नेत्ररोगनाशकत्वं वैद्यके प्रसिद्धम्।

नेत्राम्बु न० ६त०। चक्षुर्जले अश्रुणि। [वृक्षभेदे।

नेत्रोपमफल पु० नेत्रे उपमा यस्य तादृशं फलमस्य। (बादाम)

नेत्रौषधि(धी) स्त्री० ६त० वा ङीप्। कर्कटशृङ्ग्याम् (काकरशिङ्गा)।

नेदिष्ठ त्रि० अतिशयेनान्तिकः इष्ठन् नेद देशः। अतिशयनिकटस्थे

नेदीयस् त्रि० अतिशयेनान्तिकः ईयसुन् नेदादेशः। अत्यन्तसमीपस्थे। [शाटकादेरन्तिमभागे(दशायाम्) च।

नेपथ्य न० नी-विच् नेः नेता पथ्यम्। भूषणे, वेशे, नेपथ्यागारे,

**नेपाल** पु० स्वनामख्याते 'जटेश्वरं समारभ्य योगेशान्तं महेश्वरि । नेपालदेशो देवेशी'त्युक्ते देशभेदे ।

**नेपालकम्बल** पु० ६त० । कुथाख्ये चित्रकम्बले ।

**नेपालनिम्ब** पु० ६त० । ज्वरान्तके तृणनिम्बे, निम्बभेदे च ।

**नेपालमूलक** न० ६त० । हस्तिकन्दसदृशे मूलभेदे ।

**नेपालिका** स्त्री० नेपाले भवा ठन् । मनःशिलायाम् ।

**नेम** पु० नी मन् । अवधौ काले, अर्द्धे, प्राकारे, कैतवे, गर्त्ते, नाल्वे, अन्यस्मिन्नित्यर्थे च । अर्द्धार्थेऽस्य सर्वनामता ।

**नेमि** पु०नी मि । तिनिशवृक्षे । कूपसमीपे रज्जुधारणार्थे त्रिकाष्ठयन्त्रे, चक्रान्ते च । (रथचक्रस्य भूमिस्पर्शनयोग्ये भागे) कूपान्तिकस्थे समानस्थलभागे स्त्री० वा ङीप् ।

**नेमिश** न० ब्रह्मणा सृष्टस्य चक्रस्य नेमिः शीर्य्यतेऽत्र शॄ ड । नैमिषारण्ये क्षेत्रे । स्वार्थेऽण् । नैमिशमप्यत्र ।

**नैकभेद** त्रि० न एके अनेके नञर्थस्य न शब्देन सुप्सुपेति स० नैके भेदा यस्य । अनेकप्रकारे उच्चावचे ।

**नैगम** पु० निगम एव प्रज्ञाद्यण् । नीत्याम्, उपनिषदि ब्रह्मविद्यायाम्, तत्प्रतिपादके वेदान्ते च । निगमे भव अण् । वणिग्जने, नागरे च । [उपसमाया गवि ।

**नैचिकी** स्त्री० नीचैरमन्दं चरति ठक् टिलोपः गौ० ङीष् ।

**नैत्य(त्यि)क** न० नित्यमनुष्ठेयम् कन् ठन् वा । नित्यानुष्ठेये, 'नैत्य(त्यि)कान्ते भुजिक्रिये'ति स्मृतिः ।

**नैपुण्य(ण)** न० निपुणस्य भावः ष्यञ् अण् वा । दक्षतायाम्

**नैमित्तिक** त्रि० निमित्तादागतम् ठक् । पुत्रजन्मादिनिमित्तमाश्रित्य विहिते जातेष्ट्यादौ 'नित्यं नैमित्तिकं चरे'दिति स्मृतिः

**नैमित्तिकलय** पु० कर्म० 'चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लय' इत्युक्ते ब्रह्मदिनावसाने जगतां प्रलये । [त्रिषु ।

**नैमिष** न० तीर्थभेदे निमिषेण विष्णुना तत्रासुरविनाशात् तथा

**नैमेय** पु० नि+मि यत् स्वार्थेऽण् । विनिमये परीवर्त्ते ।

**नैयग्रोध** न०न्यग्रोधस्य विकारः अण् तस्य ऐजागमः । वटफलादौ

**नैयायिक** त्रि०न्यायं वेत्त्यधीते वा ठक् । न्यायवेत्तरि ।

**नैरन्तर्य्य** न० निरन्तरस्य भावः ष्यञ् । अविच्छेदे ।

**नैराश्य** न० निराशस्य निष्कामस्य भावः ष्यञ् । आशाशून्यत्वे 'नैराश्यं परमं सुख'मिति पुराणम् ।

**नैर्ऋती** स्त्री० निर्ऋतेरियम् अण् । दक्षिणपश्चिमायां दिशि 'नैर्ऋतीं दिशमाश्रये'दिति स्मृतिः ।

**नैर्मल्य** न० निर्मलस्य भावः ष्यञ् । निर्मलत्वे स्वच्छत्वे । 'विषयेष्वतिविरागो मानसो मल उच्यते । तेष्वेव हि विरागस्तु नैर्मल्यं समुदाहृतमि'त्युक्ते विषयवैराग्ये च ।

**नैवेद्य** न० निवेदं निवेदनमर्हति ष्यञ् नि+विद्-णिच् कर्मणि यत् स्वार्थे अण् वा । 'निवेदनीयं द्रव्यन्तु नैवेद्यमिति कथ्यते' इति स्मृत्युक्ते देवतोद्देशेन त्यक्तव्ये द्रव्ये ।

**नैषध** पु० निषधानां जनपदानामयम् अण् । नलनामनि भूपतौ, तदधिकृत्य कृते ग्रन्थे, न० । तद्देशभवे तत्सम्बन्धिनि च त्रि० ।

**नैष्कर्म्य** न० निष्कर्मणो भावः ष्यञ् । विधिना सर्वकर्मत्यागे 'न कर्मणामनारम्भान्नैष्कर्म्य'मिति इति गीता ।

**नैष्किक** पु० निष्के हेम्नि टङ्कागारे तद्गारे वर्त्तते नियुक्तः ठक् । कोषाध्यक्षे, टङ्कशालाया नियुक्ते ।

**नैष्ठिक** पु०निष्ठा व्रतसमाप्तिः प्रयोजनमस्य ठक् । ब्रह्मचर्य्येण यावज्जीवं गुरुकुलवासिनि ब्रह्मचारिभेदे । निश्चलतयास्थितिः निष्ठा तत्रासक्तः ठक् । निश्चलायां स्थितौ सक्ते त्रि० स्त्रियां ङीप् नैष्ठिकी ।

**नैसर्गिक** त्रि० निसर्गेण स्वभावेन निर्वृत्तः ठञ् । स्वाभाविके ।

**नैस्त्रिंशिक** त्रि०निस्त्रिंशः प्रहरणमस्य ठञ् । खड्गेन योद्धरि

**नो** अव्य० नह डो । अभावे ।

**नोचेत्** अव्य० नो च चेत् द्व० । निषेधे ।

**नोपस्थाता** त्रि० न उपतिष्ठति स्था तृच् । दूरस्थे । स्त्रीवे 'अनृतवादी क्रियाद्वेषी नोपस्थाता निरुत्तर' इति स्मृत्युक्ते दुष्टवादिभेदे । [कन् । नौकाप्यत्रैवार्थे ।

**नौ** स्त्री० नुद डौ । जलोपरि गमनसाधने तरणिभेदे । स्वार्थे

**नौकादण्ड** पु० ६त० । नौकाया चालनार्थं पार्श्वस्थदीर्घे काष्ठदण्डे (दाँड) । [न्यक्कृतिरप्यत्रार्थे ।

**न्यक्कार** पु० न्यक्+कृ-घञ् । नीचकरणे तिरस्कारे च । क्तिन् ।

**न्यग्रोध** पु० न्यक् रुणद्धि रुध अच् । वटवृक्षे, शमीवृक्षे बाहुद्वयविस्तारकृतव्यामरूपपरिमाणे (वाम्) सर्वाणि न्यक्कृत्य स्थिते विष्णौ, विषपर्ण्यां मोहनौषधौ च । भूमिकपर्द्यां स्त्री० ङीप् ।

**न्यग्रोधपरिमण्डला** स्त्री० 'स्तनौ सुकठिनौ यस्या नितम्बे च विशालता । मध्ये क्षीणा भवेद्या सा न्यग्रोधपरिमण्डले'त्युक्तलक्षणायां नार्य्याम् । [न्यङ्कु मृगभेदे च ।

**न्यङ्कु** पु० नितरामञ्चति नि+अन्च-उ कुत्वम् । मुनिभेदे, न्यङ्कु

**न्यङ्कुभूरुह** पु० न्यङ्कुरिव भूरुहः । श्योनाकवृक्षे । तस्य शृङ्गाकारफलत्वात्तथात्वम् ।

**न्यच्** त्रि० निम्नमञ्चति नि-अन्च क्विन् । नीचे निम्ने ।

**न्यश्चित** त्रि० नि+अन्च क्त । अधःक्षिप्ते ।

**न्यस्त** त्रि० नि अस क्त । क्षिप्ते त्यक्ते, विसृष्टे, निहिते च ।

**न्याद** पु० नि+अद घञ् न घसादेशः । भोजने ।

न्याय पु० नि+इ-इण् वा घञ् । उचिते गौतमोक्ते शास्त्रभेदे, तदुक्ते प्रतिज्ञादिपञ्चकप्रतिपादिकवाक्यविशेषे, नीतौ नयो पाये, भोगे, युक्तौ, युक्तिमूलकशास्त्रभेदे च ।
न्याय्य त्रि० न्यायादनपेतं यत् । उचिते, युक्तियुक्ते च ।
न्यास पु० नि+अस-कर्मणि,भावे वा घञ् । स्थाप्यद्रव्ये (गच्छित) अर्पणे विन्यासे, संन्यासे च । [अतिप्रिये च त्रि० ।
न्युङ्ख पु० नि-उङ्ख-अच् । सामवेदाङ्गेषु षट्सु प्रणवेषु । मनोहरे,
न्युब्ज त्रि० नि+उब्ज-घञ् कुत्वाभावः । अधोमुखे कुब्जे । (कुजो) यज्ञपात्रभेदे (दर्भमयस्रुचि) पु० । कर्मरङ्गफले न० ।
न्यून त्रि० न्यूनयति नि+ऊन-परिहाणे अच् । ऊने गर्ह्ये च ।

प

प पु० पत, पा वा ड । पवने, पातरि, पर्णे, पाने च ।
पकषा पु० पचति पच क्विप् कष-अच् कर्म० । शवरालये ।
पक्तिम त्रि० पच-क्ति ततो मप् । पाकनिर्वृत्ते । [माने च
पक्व त्रि० पच-क्त तस्य व । परिणते, दृढे, विनाशोन्मुखे, कृत-
पक्वकृत् पु० पक्वं करोति कृ क्विप् । निम्बवृक्षे ।
पक्ष परिग्रहे चु०उभ०सक०सेट् । पक्षयति ते अपपक्षत् त ।
पक्ष परिग्रहे भ्वा० पु०उभ०सक० सेट् इदित् भ्वादिश्च पर० । पक्षति पक्षयति ते अपपक्षत् त अपक्षीत् ।
पक्ष पु० पक्ष-अच् । शुक्लकृष्णप्रतिपदादिपञ्चदशपञ्चदश तिथ्यात्मके काले, खगानां पतत्रे (पाखा) शरस्य पुङ्खस्थे पत्रे, केशात् पर । समूहार्थे, यथा केशपक्ष इत्यादि । पार्श्वे, गृहे, न्यायोक्ते सन्दिग्धसाध्यवति पदार्थे, यथा पर्वतो वह्निमान् । विरोधे, बले, सहाये, सख्यौ, चुल्लीरन्ध्रे राजकुञ्जरे, खगे, वलये, समूहे, पिच्छे, देहार्द्धे च ।
पक्षक पु० पक्ष इव कायति कै-क । पार्श्वद्वारे (खिडकी)
पक्षता स्त्री० पक्षस्य भावः । न्यायोक्ते अनुमाने व्याप्तिग्रहात् समानाधिकरणे साध्यवत्तानिश्चयाभावे यत् पक्षादिकं साध्यते तत्र धर्मिणि वह्निमत्त्वनिश्चयाभावे एव पक्षत्वं तत्र तद्विषयकत्वे तु अनुमानेच्छासत्त्वे एव पक्षता भेत-व्येति न्याये स्थितम् । [खगानां पक्षस्य मूले च (डाना)
पक्षति स्त्री० पक्षस्य मूलम् ति । पक्षारम्भके प्रतिपदि तिथौ
पक्षद्वार न० पक्षे पार्श्वे द्वारम् । (खिडकी) पार्श्वस्थे द्वारे
पक्षपात पु० पक्षे अन्यतरस्मिन्साहाय्ये पातः अभिनिवेशः । अन्यायसाहाय्ये ।
पक्षपातिता स्त्री० पक्षपात+अस्त्यर्थे इनि तस्य भावः तल् । साहाय्यकरणाभिनिवेशे, पक्षाभ्यां पतने च "न परं पथि पक्षपातितेति नैषधम् । [तिथौ ।
पक्षान्त पु० पक्षस्यान्तो यत्र । अमावास्यायां पूर्णिमायाञ्च
पक्षिणी स्त्री० पक्षतुल्ये अहनी विद्येते अस्याः इनि । आगामि वर्त्तमानदिनाभ्यां युक्तायां रात्रौ ।
पक्षिल त्रि० पक्ष साहाय्यम् अस्त्यर्थे इलच् । साहाय्यकारके । न्यायभाष्यकारे वात्स्यायनमुनौ पु० ।
पक्षिन् पु० पक्ष+अस्त्यर्थे इनि । खगे, विहङ्गमे च ।
पक्ष्मन् न० पक्ष-मनिन् । नेत्रावरके लोम्नि, पक्षाग्रे, केसरे, सूत्रादेरल्पभागे, खगादेः पक्षे च ।
पङ्क पु०न० पचि-घञ् नि० । कुत्वम् । कर्द्दमे, पापे च ।
पङ्क(ङ्की)ज न० पङ्के जायते जन ड सप्तम्या अलुक् स० । पद्मे, सारसपक्षिणि च । पङ्कजन्मादयोऽप्यत्र ।
पङ्कशूरण पु० पङ्के शूरण इव । शालूके ।
पङ्कार पु० पङ्कमृच्छति ऋ-अण् उप० । शैवले, सेतौ च ।
पङ्किल त्रि० पङ्क+अस्त्यर्थे इलच् । कर्द्दमवति देशे ।
पङ्केरुह न०पङ्के रोहति रुह क अलुक् स० । पद्मे, सारसखगे च
पङ्क्ति स्त्री० पचि-क्तिन् । सजातीयपङ्क्तौ (पात) पञ्चाक्षरपाद के, दशाक्षरपादके च छन्दोभेदे, दशसङ्ख्यायाञ्च तेन पङ्क्तिरथ इति दशरथसंज्ञा । पृथिव्यां, गौरवे, पाके, प्रपञ्चे च ।
पङ्क्तिदूषक पु० पङ्क्तिं श्राद्धे भोजनार्थमुपविष्टानां विप्राणां आवलिं दूषयति दुष-णिच् ण्वुल् । अपाङ्क्तेये श्राद्धे अभोजनीये क्लितकादौ । क्लिरस्तु इत्यभिधाने ।
पङ्क्तिपावन पु० पङ्क्तिं श्राद्धे भोजनार्थमुपविष्टानामावलिं पुनाति पू णिच्-ल्यु । श्राद्धभोजनार्थमुपविष्टानां पङ्क्तिपवित्रताकारके विद्याविनियादौ । विस्तरस्तु शब्दार्थभिधाने ।
पङ्क्तिबीज पु० पङ्क्तिगतानि बीजानि यस्य । बर्बुरवृक्षे ।
पङ्गु त्रि० खञ्ज उ पगादेश कुङ् च । गतिहीने क्रियां कट् । शनैश्चरे पु० । [पङ्गुक पत्रा ।
पच पाके भ्वा०उ०सक०अनिट् । पचति ते । अपाक्षीत् अपक्त ।
पच व्यक्तीकारे भ्वा०आत्म०अनिट् । पचते । अपक्त ।
पच विस्तारे चु०उ०सक०सेट् इदित् । पञ्चयति ते अपपञ्चत् त
पचनी स्त्री० पच्यतेऽनया ल्युट् । वनबीजपूरके जम्बीरभेदे
पचम्पचा स्त्री० पचति पच-अच् उ० मुम् खिरच् । दारु हरिद्रायाम् ।
पज आवरणे भ्वा०पर०सक० सेट् इदित् । पञ्जति अपञ्जीत् ।
पज्ज पु०पद्भ्यां महापुरुषपादाभ्यां जायते जन-ड । शूद्रे, "पद्भ्यां शूद्रोऽजायते" इति श्रुतिः । [धनिष्ठादिरेवत्यन्तर्क्षे च ।
पञ्चक न० पञ्चानामवयवम् कन् । पञ्चसंख्यायां ज्योतिषोक्ते

**पञ्चत्व** न० पञ्चानां पृथिव्यादिभूतानां भावः त्व। मरणे तत्र हि देहारम्भकभूतानां स्वांशस्य स्वेषु स्वेषु प्रवेश इति तस्य पञ्चरूपता। तल्। पञ्चतापत्र।

**पञ्चदश** त्रि० पञ्चदशानां पूरणः डट्। येन पञ्चदशसङ्ख्या पूर्य्यते तस्मिन्। स्त्रियां ङीप्। सा च चन्द्रस्य पञ्चदश-कलाक्रियारूपायां पूर्णिमायाममावास्यायाञ्च तिथौ, विद्यारण्यप्रणीते वेदान्तग्रन्थभेदे च।

**पञ्चधा** अव्य० पञ्चप्रकारम् पञ्चन्+धाच्। पञ्चप्रकारे।

**पञ्चन्** त्रि० पचि विस्तारे कनि। (पाच) सङ्ख्यायुक्ते।

**पञ्चनख** पु० पञ्च नखा यस्य। हस्तिनि, व्याघ्रे च। पञ्च नखयुक्ते त्रि०। ते च शशकादयः 'शशकः शल्लकी गोधा खड्गी कूर्मश्च पञ्चमः। भक्ष्यान् पञ्चनखेष्वाहु'रिति मनुः

**पञ्चनद** पु० पञ्च नद्यो यत्र। 'वितस्तैरावतीचन्द्रभागा' सद्रि-इरावती। शतद्रुश्च विपाशा च तेन पञ्चनद स्मृत' इत्युक्ते(पञ्जाब) इति ख्याते देशे। पञ्चानां नदीनां समाहारः। काशीस्थतीर्थ 'किरणा धूतपापा च पुण्यतोया सरस्वती। गङ्गा च यमुना चैव पञ्च नद्यः प्रकीर्त्तिताः' इत्युक्तासु बिन्दुमाधवसमीपस्थितासु पञ्चसु नदीषु।

**पञ्चपर्णी** स्त्री० पञ्च पञ्च पर्णानि प्रतिपर्वं यस्याः। (गिरचा-कुलिया) क्षुपभेदे। स्वार्थे कन् अत्रैव।

**पञ्चपल्लव** न० समा० द्विगु। 'आम्राश्वत्थवटप्लक्षयज्ञोडुम्बर-पल्लवाः। पञ्चपल्लवमित्युक्तं'मित्युक्ते वैदिककर्मणि, 'पनसाम्र तथाश्वत्थ वट बकुलमेव वे'ति तन्त्रोक्ते तान्त्रिककर्मणि च श्याम्यघटोपरि देये पल्लवपञ्चके।

**पञ्चपात्र** न० पञ्च पात्राणि यत्र। देवपक्षद्वय मित्यादितिकमिति पार्वणश्राद्धोद्देशेन कर्त्तव्ये विकृतिपार्वण श्राद्धे पञ्चानां पात्राणां समाहारः। पञ्चसु पात्रेषु।

**पञ्चप्रदीप** पु० पञ्च प्रदीपा यत्र। आरात्रिकार्थ पञ्चप्रदीपात्मके दीपपात्रभेदे। [पार्वणे पुष्पित इत्युक्ते सर्पभेदे।

**पञ्चभद्र** पु० पञ्चसु देहस्थानेषु भद्रः। 'पञ्चभद्रस्तु हृत्पृष्ठे मुख

**पञ्चभूत** न० पञ्चानां भूतानां समाहारः। वैशेषिकाद्युक्तेषु 'क्षितप्तेजोवायुव्योमात्मकेषु भूतेषु।

**पञ्चम** त्रि० पञ्चानां पूरणः पञ्चन्+मट्। येन पञ्चसङ्ख्या पूर्य्यते तस्मिन्। स्त्रियां ङीप्। सा च चन्द्रस्य पञ्चमकला क्रियारूपायां तिथौ च।

**पञ्चमकार** न० पञ्चानां मकारादिवर्णानां समाहारः। तन्त्रोक्तेषु मद्यमांसमत्स्यमुद्रामैथुनेषु।

**पञ्चमहायज्ञ** पु० महान्तः यज्ञाः महायज्ञाः तत कर्म०। नित्य स्वाध्यायकर्त्तव्येषु स्वाध्यायपाठाग्निहोत्रयागातिथिपूजन पितृतर्पणबलिकर्मारूपेषु पञ्चसु पञ्चसूनादोषापनोदकेषु कर्मसु। पञ्चयज्ञ शब्दोऽप्यत्रार्थे।

**पञ्चमास्य** पु० पञ्चम स्वरभेदः आस्ये तदेकदेशकण्ठे यस्य। कोकिले 'पञ्चमं रौति कोकिल' इति हि कथ्यते।

**पञ्चमूल** न० समा० द्वि०। 'बिल्वश्योनाकगाम्भारीपाटलागणि कारिका। पञ्चमूलमिति ख्यातं मित्युक्ते पाचनभेदे।

**पञ्चरत्न** न० समा० द्वि०। विद्रुम हीरकं नीलं पद्मरागश्च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमित्युक्तेषु पञ्चसु रत्नेषु।

**पञ्चरात्र** न० 'रात्रञ्च ज्ञानवचनं ज्ञानं पञ्चविधम् स्मृतम्। पञ्च रात्रमिति ख्यातं'मित्युक्ते पञ्चज्ञानसाधने नारदाद्युक्तग्रन्थभेदे

**पञ्चलाङ्गलक** न० पञ्चभिर्लाङ्गलैः स्वर्णमयैः कायति कै क। षोडशमहादानमध्ये महादानभेदे।

**पञ्चलौहक** न० लौह धातु समा० द्वि० 'सुवर्णं रजतं ताम्रं रङ्गं नागं तथैव च। पञ्चलौहमिति प्रोक्तं मित्युक्ते धातुपञ्चके

**पट** गतौ भ्वा०पर०सक०सेट्। पटति। अपाटीत् अपटीत्।

**पट** ग्रन्थे चु०उभ०अक०सेट्। पाटयति ते अपीपटत् त।

**पट** वेष्टने अद०चु०उभ०सक०सेट्। पटयति ते अपपटत् त

**पट** त्रि० पट्यते वेष्ट्यते अच्। वस्त्रे। स्त्रियां गौ० ङीप्। पियालवृक्षे पु०। प्रस्तृते त्रि०। [त्राणाय।

**पटकार** पु० पटं करोति कृ अण्। तन्तुवाये। [पिज्जकार

**पटकुटी** स्त्री० पटनिर्मिता कुटी शा०। प्रटमय गृहे (ताबु)

**पटच्चर** न० पटति आवेष्टते पट क्विप्, भूतपूर्वं पत् चरट्। जीर्णवस्त्रे। पटमिव चरितं इव चरति चर अच्। चौरे पु०

**पटल** न० पट वेष्टने कलच्। (चाल) छदिषि। क्लीबत्वमथ — गौ० ङीप्। वृन्दे, चक्षुर्भेदे च पु०।

**पटवासक** पु० पटान् वासयति सुरभीकरोति वास ण्वुल्। वसनवासके कुङ्कुमादिचूर्णे।

**पटह** पु० न०। पटत् इत्यव्यक्तशब्दः,पट इत्येव शब्दं जहाति वा हा गत् ड। ढक्कावाद्ये। समारम्भे पु०।

**पटि(टी)** स्त्री०पट इन् वा ङीप्। पटभेदे कुम्भिकाख्ये च।

**पटीर** न० पट ईरन्। चालन्याम् मूलके, केदार, मेघ कन्दर्पे खदिरे, उदरे कन्दर्पे,चन्दने च। परिणति पटीरसौरभ्य' इत्युद्भटः। उच्चे, हरणीय च त्रि०।

**पटीयस्** त्रि० अतिशयेन पटुः ईयसुन्। अतिशयकार्यदक्षे।

**पटु** त्रि० पट-उ। निपुणे, नीरोगे, तीक्ष्णे स्फुटे,निष्ठुरे धूर्ते च। स्त्रियां वा ङीप्। पटोले पु०। लवणे, पांशुलवणे छत्राके च न०।

**पटुजातीय** त्रि॰ पटुप्रकारः जातीयर् । पटुप्रकारे ।

**पटुपर्णी** स्त्री॰ पटूनि पर्णान्यस्याः । स्वर्णक्षीरिणीवृक्षे ।

**पटुरूप** त्रि॰ प्रशस्तं पटु' प्राशस्त्ये रूपप् । अतिशयदक्षे ।

**पटोल** पु॰ पट ओलच् । स्वनामख्याते लताभेदे । वस्त्रभेदे न॰

**पटोली**(लिका) स्त्री॰ अल्पार्थे पटोल' ङीप् (झिङ्गा) ख्या-

तायां लतायाम् । स्वार्थे कन् । तत्रैवार्थे ।

**पट्ट** न॰ पट क्त नेट् ट वा तस्य नेत्वम् । नगरे । चतुष्पथे,

राजादिलेख्यपत्रे, (पाट्टा) पीठे, 'ललाटपट्ट'मित्युद्भट' ।

फलके (ढाल) राजसिंहासने, उत्तरीयवस्त्रे, कौषेये (रेशम)

पेषणे च । पाषाणे पु॰ ।

**पट्टज** न॰ पट्टात् जायते । पट्टनिर्म्मिते वस्त्रे (रेशमिकापड)

**पट्टदेवी** स्त्री॰ पट्टे राजासने देवी कृताभिषेका स्त्री । राज

महिष्याम् (पाटराणी) पट्टमहिष्यादयोऽप्यत्र । [प्रधाननगरे

**पट्ट(त्त)न** न॰ पट(त)न्ति जना यत्र पट-पत, वा तनन् । नेट् ।

**पट्टरङ्ग** न॰ पट्टं रज्यतेऽनेन रन्ज-करणे घञ् । (वक्कम्) इति

ख्याते पदार्थे । ल्युट् । पट्टरञ्जनमप्यत्र ।

**पट्टशाक** पु॰ कर्म्म॰ (नालिता) शाकभेदे ।

**पट्टिकालोध्र** पु॰ पट्टिकाकारः लोध्र॰ । (पटियालोध) लोध्र-

भेदे । पट्टिलोध्रादयोऽप्यत्र ।

**पट्टिन्** पु॰ पट्ट+अस्त्यर्थे इनि । रक्तलोध्रे ।

**पट्टिल** पु॰ पट्ट अस्त्यर्थे-इलच् । पूतिकरञ्जे । [अपठीत्

**पठ** लिखिताक्षरवाचने भ्वा॰पर॰सक॰सेट् । पठति अपाठीत्

**पड** गतौ भ्वा॰आ॰ सक॰सेट इदित् । पण्डते अपण्डिष्ट ।

**पड** संहतौ वा चु॰उ॰ पक्षे भ्वा॰ अक॰ सेट् इदित् । पण्ड-

यति-ते पण्डति अपपण्डत्-त अपण्डीत् ।

**पण** व्यवहारे (क्रयविक्रयादौ) स्तुतौ च भ्वा॰आ॰ सक॰ सेट् ।

पणायति –ते पणते व्यवहारे तु पणायतीत्येव । अप

णायीत् अपणायिष्ट अपणिष्ट ।

**पण** पु॰ पण्यतेऽनेन पण-अच् । मूल्ये, धने, ताम्रे कर्षपरि-

मिते (पयसा) ख्याते द्रव्ये च । भावे अच् । भृतौ, द्यूते,

ग्लहे, (पराजये, इद देयमित्येव) नियमे । व्यवहारे च 'मा-

काकिनी तास्र पण्यस्तस्य' इत्युक्ते चतु काकिनीपरिमाणे च

**पणन** न॰ पण-भावे ल्युट् । विक्रये ।

**पणव** पु॰ स्त्री॰ पणं व्यवहारं वाति वा-क । पटहभेदे 'पण-

वानकगोमुखाः' इति गीता । [व'धाःका पणायाः' इति भट्टि

**पणाया** स्त्री॰पण-स्वार्थे आय-तत अ । व्यवहारे 'न चोपलेभे

**पणायित** त्रि॰ पण-आय-क्त । स्तुते । आयाभावपक्षे पणित-

मप्यत्र ।

**पणितव्य** त्रि॰ पण-तव्य । विक्रेतव्ये, क्रेतव्ये, व्यवहार्य्ये च

यत् । पण्यमप्यत्र । [मारिकायां बुद्धौ स्त्री॰ टाप् ।

**पण्ड** पु॰ पण-ड तस्य नेत्वम् । क्लीबे, निष्फले च । तत्त्वानु-

**पण्डापूर्व्व** न॰ पुण्डं फलासाधनमपूर्व्वम् । वस्तुतः फलसाधन-

योग्ये फलानुपहिते धर्म्माधर्म्मात्मकेऽदृष्टे यथा सन्ध्यावन्द-

नादेरभावे दुरदृष्टं जायते सन्ध्यादेर्वन्दने तु तस्मात्तत्त्या

फलानुपहितं दुरदृष्टं नश्यतीति तत्पण्डापूर्व्वमिति मीमांसा

**पण्डित** पु॰ पण्डा तत्त्वानुगा बुद्धिर्जातास्य तार॰ इतच् ।

शास्त्रतात्पर्य्यज्ञे विदुषि ।

**पण्यवीथी** स्त्री॰६त॰ । विक्रेयद्रव्यविक्रयशालायां (हाटचाला)

हट्टे च । स्वार्थे कन् । पण्यवीथिका, पण्यशाला चाप्यत्र ।

**पण्यस्त्री** स्त्री॰ कर्म्म॰ । वेश्यायाम्, पण्याङ्गनादयोऽप्यत्र ।

**पण्याजीव** पु॰ पण्येन क्रयविक्रेयद्रव्येणाजीवति आ+जीव

अच् । वणिग्जने । [अपपतत्-त ।

**पत** गतौ अद॰चु॰उभ॰सक॰, ऐश्वर्ये अक॰ सेट् । पतयति-ते

**पत** ऐश्वर्ये दि॰ आ॰ अक॰ सेट् । पत्यते अपतिष्ट । [अपप्तत् ।

**पत** गतौ भ्वा॰ पर॰ सक॰, ऐश्वर्ये अक॰ ज्वला॰ सेट् । पतति

**पतग** पु॰ पतत्यनेन पत पक्षस्तेन गच्छति गम-ड । विहङ्गमे ।

**पतङ्ग** पु॰ पतन् सन् गच्छति गम-खच् डिच्च । सूर्य्ये, शलभे,

(फडिङ्ग) खगे, शालिभेदे, मधूकवृक्षे च । [कायाम्

**पतङ्गिका** स्त्री॰ क्षुद्रः पतङ्गः पतङ्गी तत कन् । क्षुद्रमक्षि-

**पतञ्जलि** पु॰ पतन् अञ्जलिर्यस्मै नमस्यत्वात् पृष॰ । पाणि-

नीयसूत्रभाष्यकारे, योगसूत्रकारे च मुनिभेदे ।

**पतत्** पु॰ पत-शतृ । पक्षिणि ।

**पतत्त्र** पु॰ पतन्तं त्रायते त्रै-क । पक्षिणां पक्षे (पाखा) ।

**पतत्रि** पु॰ पत-अत्रिन् । पक्षिणि, पतत्त्री पतत्त्रय ।

**पतत्त्रिन्** पु॰ पतत्त्रोऽस्त्यस्य इनि । पक्षिणि पतत्त्रिणी ।

**पतद्ग्रह** पु॰ पतत् मुखादिभ्यः स्रवत् जलादि गृह्णाति ।

(पिकदानी) पात्रभेदे ।

**पतयालु** त्रि॰ पु॰ पत-आलुच् । पतनशीले पातुके ।

**पताका** स्त्री॰ पत्यते बोध्यते योधादिभेदोऽनया पत-आकन् ।

वंशोपरिदेये त्रिकोणाकारे वस्त्रखण्डे, सौभाग्ये, नाटकाङ्के,

अङ्के, केतौ, छन्दोग्रन्थोक्ते लघुगुरुव्यक्तिज्ञानार्थे चक्रभेदे च

**पताकिन्** त्रि॰ पताका+अस्त्यर्थे इनि । पताकाधारिणि ।

ज्योतिषोक्ते नराकारवति रिष्टसूचके चक्रभेदे पु॰ ।

**पति** पु॰ पा डति । भर्त्तरि । अधिपतौ त्रि॰ । स्त्रियां वा ङीप्

**पतित** त्रि॰ पत-क्त । चलिते, गलिते धर्म्मादित्यागादिजन्य

दुरदृष्टवति जने च 'पतितानां न दाहः स्या'दिति

केशाकारे पदार्थे । [ब्रह्मणि । कर्म० । कमलमध्ये न० ।
**पद्मगर्भ** पु० पद्मं विष्णुनाभिपद्मं गर्भमुत्पादकं यस्य । चतुर्मुखे
**पद्मचारिणी** स्त्री० पद्ममिव चरति स्थानं परित्यज्य दूरं गच्छति णिनि । उत्तरकुरुदेशे प्रसिद्धे लताभेदे ।
**पद्मनाभ** पु० पद्मं नाभौ यस्य अच् । विष्णौ । [लमूले ।
**पद्मपत्त्र** न० ६त० । कमलपत्त्रे । पद्मस्य पत्त्रं वाहनमिव । कम-
**पद्मपुराण** न० पद्ममधिकृत्य कृतमण् तस्य लुक् कर्म० । महापुराणान्तर्गते पुराणभेदे ।
**पद्मपुष्प** पु० पद्ममिव पुष्पं यस्य । कर्णिकारवृक्षे ।
**पद्मबन्ध** पु० पद्माकारो बन्धः सन्निवेशः । शब्दालङ्कारभेदे ।
**पद्मबन्धु** पु० ६त० । सूर्ये, भ्रमरे च । पद्ममित्रादयोऽप्यत्र ।
**पद्मभू** पु० पद्मं विष्णोर्नाभिपद्मं भूरुत्पत्तिस्थानं यस्य । चतुर्मुखे ब्रह्मणि । पद्मोद्भवादयोऽप्यत्र ।
**पद्मराग** न० पद्मस्येव रागो यस्य । रक्तवर्णे मणिभेदे (माणिक)
**पद्मलाञ्छन** पु० पद्मं लाञ्छनमस्य । सूर्ये, ब्रह्मणि, नृपे, कुबेरे च
**पद्मवासा** स्त्री० पद्मवनमाधारे घञ् ६त० । सरस्वत्यां लक्ष्म्याम्, लवङ्गे च । पद्मं निवासो निलयो यस्याः । पद्मनिवासादयोऽप्यत्र
**पद्मबीज** न० ६त० । कमलबीजे (कमलगाट्टा) ।
**पद्मबीजाभ** न० पद्मबीजमिवाभाति आ+भा-क । (मार्खाना) जलजे फलभेदे । [मनसादेव्याम्, कुम्भतुम्ब्यां च ।
**पद्मा** स्त्री० पद्ममस्त्यस्य अर्श आद्यच् । लक्ष्म्याम्, लवङ्गे,
**पद्माकर** पु० ६त० । पद्मयुक्ते तडागे वा अगाधे जलाशये,
**पद्माट** पु० पद्मवदटति अट अच् । चक्रमर्दवृक्षे (दादमर्दन) ।
**पद्मावती** पु० पद्म+अस्त्यर्थे मतुप् मस्य व दीर्घश्च । (पद्म) नदीभेदे, मनसादेव्याम्, पद्मचारिणीलतायाञ्च ।
**पद्मासन** न० पद्ममिवासनम् । योगशास्त्रप्रसिद्धे आसनभेदे ।
**पद्मिनी** स्त्री० पद्मानां समूहः, तत्सम्बद्धदेशो वा इनि । कमलसमूहे तद्युतदेशरूपायां सरोवरस्थलतायाम्, स्त्रीभेदे च ।
**पद्मिनीकान्त** पु० ६त० । सूर्ये पद्मिनीप्रियादयोऽप्यत्र ।
**पद्मिन्** पु० पद्मं बिन्दुजालमस्त्यस्य इनि । हस्तिनि । पद्मयुक्ते त्रि०
**पद्मेशय** पु० पद्मे शेते शी-अच् अलुक् स० । विष्णौ ।
**पद्य** न० पद चरणमर्हति पद+यत् । कविकृते चतुश्चरणात्मके 'पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधे'त्युक्ते, वाक्यभेदे । पदव्यां स्त्री० । पद्भ्यां जात यत् । शूद्रे पु० । पदं विध्यति यत् । शर्करायां स्त्री० । [वीत्, अपनायिष्ट अपनिष्ट ।
**पन** स्तुतौ भ्वा० आ० सक० सेट् । पनायते पनायति अपना-
**पनस** पु० पन-असच् । (काठाल) कण्टकिफले । [गतौ न०
**पन्न** त्रि० पद-क्त । गलिते, च्युते, च । पद नत् । अधोगम-
**पन्नग** पु० पन्नमधोगमं यथा तथा गच्छति, पद्भ्यां न गच्छति वा, गम-ड । सर्पे, पद्मकाष्ठे च । जातौ ङीप् । सर्प्याम् ।
**पन्नगाशन** पु० पन्नगानश्नाति अश-ल्यु । गरुडे ।
**पन्नद्धा** स्त्री० पदि नद्धा बद्धा नह-क्त । चर्मपादुकायाम् ।
**पन्नद्धी** स्त्री० पद् नह्यतेऽनया नह-ष्ट्रन् षित्वात् ङीप् । चर्मपादुकायाम् । [यथाम् ।
**पम्पा** स्त्री० नदीभेदे, 'पश्य लक्ष्मण ! पम्पायामि'ति रामा
**पय** गतौ भ्वा० आत्म० सक० सेट् । पयते अपयिष्ट ।
**पयःकन्दा** स्त्री० पयः क्षीरं कन्दे यस्याः । क्षीरविदार्याम्
**पयस्** न० पा-असुन् इकारस्यान्तादेशः । दुग्धे, जले च ।
**पयस्य** त्रि० पयसो विकारः यत् । दुग्धविकारे दध्यादौ । बिडाले पु० । क्षीरकाकोल्याम्, अर्कपुष्पिकायाम्, कुट्टुम्बिन्याञ्च स्त्री० ङीप् । आमिक्षायां स्त्री० टाप् ।
**पयस्विनी** स्त्री० पयस्+अस्त्यर्थे विनि । धेनौ, नद्याम्, काकोल्याम्, क्षीरकाकोल्याम्, दुग्धफेन्याम्, क्षीरविदार्याम्, छाग्याम्, जीवन्त्याम्, रात्रौ च ।
**पयोधर** पु० पयांसि धारयति धृ-णिच् अच् ह्रस्वः । मेघे, स्त्रीस्तने । 'प्रायः पयोधरसमुन्नतिरत्र हेतु'रित्युद्भटः नारिकेले, कशेरुणि, कोषकारे च । [निध्यादयोऽप्यत्र ।
**पयोधि** पु० पयांसि धीयन्तेऽत्र पयस्+धा कि । समुद्रे पयो-
**पयोर** पु० पयो जलं रजति रञ्ज-ड । खदिरे ।
**पयोलता** स्त्री० पयः प्रधाना लता शाक० । क्षीरविदार्याम्
**पयोव्रत** न० पयोमात्रपानरूपं व्रतम् । द्वादशाहसाध्ये व्रतभेदे
**पर** त्रि० पॄ भावे अप्, कर्त्तरि अच् वा । अन्यस्मिन् भिन्ने इत्यर्थे उत्तरे, दूरे, सीमापरिच्छिन्ने, श्रेष्ठे च मोक्षे, केवले, ब्रह्मणि च न० । 'द्वे ब्रह्मणी वेदितव्ये परञ्चापर'मिति श्रुतिः । शत्रौ पु० ।
**परःशत** न० शतात् परे नि० । शताधिकसंख्यायां, तत्संख्यान्वितेषु च
**परश्वस्** अव्य० श्वः परे दिने नि० । आगामिपरदिवसात् परस्मिन् दिने । [तत्संख्यान्वितेषु च ।
**परःसहस्र** न० सहस्रात् परे नि० । सहस्राधिकसंख्यायाम्
**परकीय** त्रि० परस्येदम् छ कुक् च । परसंबन्धिनि । उपनायिकायां स्त्री० ।
**परच्छन्द** पु० ६त० । परेच्छायाम् परच्छन्दानुवर्त्तिनीत्युद्भटः परस्य छन्देन छन्दो यस्य । पराधीने त्रि० ।
**परजात** त्रि० परस्मात्, परकर्तृकपोषणाद्वा जातः जन ड । अन्येन जाते, परप्रयत्नेन पुष्टे च । [पिके ।
**परतन्त्र** त्रि० परस्तन्त्रं प्रधानं यस्य । पराधीने पराधीनादयो

**परत्व** न० परस्य भावः त्व। वैशेषिकमतसिद्धे गुणभेदे, भेदे च।

**परपाकनिवृत्त** पु० परार्थं देवातिथ्याद्यर्थं पाकस्तस्मान्नि वृत्त। 'गृहीत्वाग्निं समारोप्य पञ्च यज्ञान् न निर्वपेत्। परपाकनिवृत्तोऽसावि'त्युक्ते पञ्चयज्ञाकारके।

**परपाकरत** पु० परस्य पाकस्तत्र रतः रमः क्त। 'पञ्चयज्ञान् स्वयं कृत्वा परान्नमुपजीवति। सततं प्रातरुत्थाय पर पाकरतस्तु स' इत्युक्ते परपक्वान्नभक्षणे सततं प्रवृत्ते।

**परपिण्डाद** त्रि० परस्य पिण्डं ग्रासमत्ति अद-अण्। नित्य परान्नोपजीविनि।

**परपुष्ट** पु० परया काकया पुष्टः पुष-क्त कर्म्मणि पुंवत्। कोकिले, कोकिलया हि डिम्बस्फोटनाद्भयात् नीडस्थं काक डिम्बमपसार्य स्वडिम्बं तत्र स्थाप्यते काकया स्वडिम्बबुद्ध्या असौ पुष्यते इति लोकप्रसिद्धिः। परभृतादयोऽप्यत्र। अन्य-पालिते त्रि०। वेश्यायाम् स्त्री०।

**परपूर्व्वा** स्त्री० परः इतरः पूर्व्वो यस्याः। 'पतिं हित्वापकृष्ट स्वमुत्कृष्टं या निषेवते। परपूर्व्वेति सा प्रोक्ते'त्युक्तायां पुन-र्भुवि स्त्रियाम्।

**परभाग** पु० भज्यते सेव्यतेऽनेन भागः उत्कर्षः कर्म०। स्वल्प-ल्पोत्कर्षे 'लब्धपरभागतये'ति रघुः। भागः खण्डः कर्म०। शेषार्थे, इत०। परस्य भागे अंशे। [क्षिप्। काके।

**परभृत्** पु० परं कोकिलडिम्बं स्वडिम्बबुद्ध्या बिभर्त्ति, भृ-

**परम्** अव्य० पृ-अमि। नियोगे, क्षेपे केवले च।

**परम** त्रि० परं परत्वं माति मा-क। उत्कृष्टे, प्रधाने, आद्ये, प्रथमे च।

**परमम्** अव्य० पर+मा-डमि। अनुज्ञायाम्, स्वीकारे च।

**परमर्षि** पु० परमं ब्रह्म ऋषति गच्छति जानाति वा ऋष गतौ इन्। 'ऋषति परमं यस्मात् परमर्षिस्ततः स्मृत' इति निरुक्ते ब्रह्मवेत्तरि। कर्म०। श्रेष्ठे मुनौ। [सन्यासिभेदे

**परमहंस** पु० कर्म०। कुटीचकादिषु चतुर्षु सन्न्यासिषु मध्ये

**परमाणु** पु० कर्म०। वैशेषिकसिद्धे पृथिव्यादीनां चतुर्णां भूतानां द्व्यणुकरूपावयवारम्भके सूक्ष्मभूते।

**परमात्मन्** पु० कर्म०। 'आत्मा स्य जगतो यस्मात् सर्व्वोप-कारयो मतः। परमात्मा परं ब्रह्म तेन वेदे प्रकीर्त्तित' इत्युक्ते परब्रह्मणि। [परमात्मस्य।

**परमान्न** न० कर्म०। पायसे दुग्धपक्वान्ने देवादिप्रियत्वात्

**परमायुध** पु० परममायुधं यस्य ब०। असनवृक्षे।

**परमायुस्** न० परमं शेषावधिकं आयुर्जीवितकालः। मनुष्या दीनां ज्योतिषोक्ते शताब्दादिकाले। विस्तरस्तु शब्दार्थचिन्तामणौ

**परमेश्वर** पु० कर्म०। जगत्सृष्ट्यादिकारके सगुणे विमूर्त्तिके ब्रह्मणि, चक्रवर्त्तिनि नृपे च।

**परमेष्ठिन्** पु० परमे ब्रह्मणि तिष्ठति श्रीयते स्था इनि षत्व-मलुक्। चतुर्मुखे ब्रह्मणि, शालग्राममूर्त्तिभेदे च।

**परम्परा** स्त्री० परम् अतिशयेन पृणाति पिपर्त्ति वा पृ-दा अच्। वंशे, व्यवधाने, सन्ततौ अविच्छिन्नधारायाम् 'एवं परम्पराप्राप्त'मिति गीता। वधे, अनुक्रमे च।

**परम्पराक** न० परम् अतिशयेन परा श्रेष्ठा परम्परा तथा धारया च कौटिल्यं यत्र यज्ञ कुटिलगतौ मञ्, यद्वा परम्परा हिंसा अनिष्टजनकत्वात् कन् वा नपुंसकत्व लोकात्। यज्ञार्थे पशुहनने। 'या वेदविहिता हिंसा नियतास्मिंश्च-राचरे। अहिंसामेव तां विद्यादि'ति मनूक्तेस्तस्या अहिं सात्वेन हि प्रागल्भ्यम्। [गते।

**परम्परीण** त्रि० परम्परया धारयागतः ख। अविच्छेदेनागता-

**परवश** त्रि० परस्य वशः आयत्तः। पराधीने।

**परवत्** त्रि० परः पराधीनताऽस्त्यस्य मतुप् मस्य वः। पराधीने

**परशु** पु० परं शृणाति शॄ कु डिच्च। परश्वः (टाङ्गी) अस्त्र-भेदे। स्पृश मृन् श आदेशः। पर्शुरप्यत्र, अस्त्रमात्रे च।

**परशुराम** पु० परशुधारी रामः शाक०। जमदग्निजे भगवद-वतारभेदे येन परशुना त्रिः सप्तकृत्वो भूमिर्निःक्षत्रिया कृता।

**परश्व(स्व)ध** पु० श्वि-ड श्वः वृद्धिः परस्य स्व भवति, परस्य स्वः क्षयं धयति वा धे क। कुठारे अस्त्रभेदे।

**परस्पर** त्रि० पर+वीप्सायां द्वित्वम् सुट् च। अन्योन्यमित्य-र्थे। स्त्रीनपुंसकयोस्तु सार्व्वविभक्तिक आम् अम् च। परस्परं परस्परामिति सर्व्वविभक्तौ।

**परस्मैपद** न० परस्मै परोद्देशेन पदं फलबोधनं यस्मात्। व्याकरणोक्तेषु तिबादिषु नवसु। स्वरितेत ञितश्च धातोः कर्त्तरि क्रियादिभिर्नवभिर्हि परार्थमेव फलं बोध्यते।

**परा** अव्य० पॄ-आ। प्रातिलोम्ये प्राधान्ये, धर्षणे, आभिमुख्ये त्यागे, विक्रमे, भृशार्थे गतौ, भङ्गे, अनादरे, तिरस्कारे, प्रत्या वृत्तौ च। सप्ताक्षर्य्याम् 'परा शाकपार्थिके'त्युक्ते मूलाधारस्थे शब्दभेदे, 'सा परा यथाक्षरमधिगम्यत' इति श्रुत्युक्तायां ब्रह्मविद्यायाञ्च स्त्री०।

**पराक** पु० 'यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनम्। पराक नामे'त्युक्ते द्वादशाहोपवाससाध्ये प्रायश्चित्तरूपे व्रतभेदे

**पराक्पुष्पी** स्त्री० पराक् पुष्पं यस्याः। अपामार्गे।

**पराक्रम** पु० परा+क्रम घञ् न वृद्धिः। बले, देहसामर्थ्ये।

**पराग** पु० परागच्छति परा+गम ड। धूलिमात्रे पुष्परजसि

'स्फुरदरागपरागतपङ्कज'मिति माघ । स्नानीयद्रव्ये कुङ्कुमचूर्णादौ उपरागे, चन्दने च ।

**पराङ्मुख** त्रि० पराक् प्रत्यावृत्त मुख यस्य । विमुखे आर ब्धकार्यात निवृत्तादुन्मुखे ।

**पराच्** त्रि० परा अञ्चति अनुच क्विन् प्रत्यक्तत्त्वभिन्ने दृश्यव्यवहारविषये बाह्ये वस्तुनि ।

**पराचित** त्रि० परेणाचित पुष्ट व्याप्तो वा आ+चि क्त । परेण प्रतिपालिते सम्यग्व्याप्ते च ।

**पराचीन** त्रि०परात्मभव पराच्+ख। पराङ्मुखे,परकालिके च

**पराजय** पु० परा+जि अच् । पराभवे (हारि) ।

**पराधीन** त्रि०परऽधि इति वाक्ये समासे चाध्युत्तरपदात् ख, परस्याधीनो वा । परायत्ते । [अध्यसाने न०

**परान्न** त्रि० परस्यान्नमेवान्नमस्य। परान्नोपजीविनि । ३त०।

**पराभव** पु० परा+भू अप् । तिरस्कारे, अभिभवे, विनाशे च

**परामर्श** पु० परा+मृश घञ् । युक्तौ, विवेचने, न्यायादुक्तो व्याप्तिविशिष्टतया पक्षस्य ज्ञाने च यथा वह्निव्याप्यधूमवान पर्वत इत्यादि ज्ञानम् ।

**परायण** न० परमयन यत्नम । अत्यन्तासक्तौ उत्तमाश्रये च ६त०। अत्यासक्ते, यथा धर्मपरायण धर्मे अत्यन्तासक्तः । तत्परे अभीष्टे च त्रि० ।

**परारि** अव्य० पूर्वतरे वर्षे पूर्वतर+अरि परादेश त्रि० । पूर्वतरवत्सरे गततृतीयवत्सरे । परोऽरि । अत्यन्तशत्रौ पु०

**परारु** पु०-परार्द्धति परा+ऋ उण् । कारवल्लके (उच्छा) ।

**परार्द्ध** न० अध-अच कर्म० । चरमसंख्यायां 'परार्धपरार्द्ध गणित यदि स्या दिति नैषधम् । कर्म० । ब्राह्मण आयुषोऽर्द्धे । [यत् । श्रेष्ठे 'परार्ध्यवर्णास्तरणे'ति रघु ।

**परार्द्ध्य** त्रि० परार्द्धे चरमसंख्यासमधारात श्रेष्ठत्वमर्हति

**परावर्त्त** पु० परा+वृत घञ । परीवर्त्ते विनिमये ।

**परावह** पु० परा+वहति परा+वह अच । सप्तवायुमध्ये परिवहवायोरूर्द्ध्वस्थे वायुभेदे ।

**पराशर** पु० व्यासपितरि मुनिभेदे ।

**पराश्रया** स्त्री० परमाश्रयति आ+श्रि अच । वन्दादाम (परगाछा) अन्यावलम्बिनि त्रि० ।

**परासन** न० परा+अस ल्युट । मारणे ।

**परासु** त्रि० परागता असवो यस्य । मृते ।

**पराskन्दिन्** पु० परान् आस्कन्दति णिनि । चौरे ।

**परास्त** त्रि० परा+अस क्त । निरस्ते पराजिते च ।

**पराह्न** पु० परमुत्तरमहः कर्म० टच समा० पुंस्त्वञ्च । परदिने

**पराह्ण** पु०परमह्नः एकदेशिस० टच् समा० अह्लादेश णत्वम। दिवसस्य चरमभागे, मध्याह्नकालात्परकाले च ।

**परि** अव्य० प-इन । सर्वत इत्यर्थे वर्ज्जने व्याप्तौ,शेष, कथित प्रकार मार्गे, निरसने, पूजायां, भूषणे, उपरमे, शोके, सन्तोषभाषणे, अतिशये, त्यागे, नियमे च ।

**परिकर** पु० परि+कृ अप् । पर्य्यङ्के, परिवारे, समारम्भे, समूहे प्रगाढ़गात्रबन्धे, विवेके, सहचारिणि च ।

**परिकर्म्मन्** न०। कर्म अलङ्कारादि,०त्यक्त्वाहा ६ब० देहसंस्कारे, कुङ्कुमाद्युद्वर्त्तनीयद्रव्ये भूषणे च गणितानुगुणेषु सङ्कलनव्यवकलनगुणनभागहरवर्गतत्पदघनतत्पदरूपेषु अष्टविधेषु संस्कारेषु च । ६ब० । सेवके त्रि ।

**परिक्रम** पु० परि+क्रम घञ् न वृद्धि । क्रीडादौ, पूजादौ प्रदक्षिणीकरणाद्यर्थ प दन गमने च ।

**परिक्रिया** स्त्री० परितः क्रिया वेष्टनम । परिखादिना पुरादेर्वेष्टने । [भेदे परिचितोऽपत्य ।

**परिक्षित्** पु० अर्जुनेन सुभद्राय सतादित कुरुवंशे नृपति-

**परिखा** स्त्री० प रत खन्यत खन ड । पुरादौ रिपुप्रवर्त्तिना दुष्प्रवेशतासिद्धये गर्त्तरचनायां जलाधारस्थाने वेष्टनाकारभूमौ । [वेष्टिते, गते च ।

**परिगत** त्रि० परि+गम क्त । ज्ञाते, ज्ञाते, विस्मृते, चेष्टिते,

**परिग्रह** पु०परि+ग्रह अप्। स्वीकारे,सैन्यपश्चाद्भागे च कर्मणि च। भार्य्यायां, परिजने च। करणे अप्। मूले, शपथे च।

**परिघ** पु परि+हन क नि० । परिघातास्त्रे लौहमुद्गरादौ, लौहमुखे लगुडे शस्त्रे, शूले, काचघटे, गृहे विष्कम्भा चष्ठित्रे जनविशतितमे योगे च । [प्रणये च ।

**परिचय** पु० परि+चि अच। ज्ञातस्य पौन पुन्येन ज्ञाने,संस्तवे,

**परिचर्य्या** स्त्री० परिचर+क्यप । सेवायाम ।

**परिचाय्य** पु०परिचीयते सञ्चीयतेऽसौ चि ण्यत । यज्ञाग्नौ ।

**परिचारक** त्रि० परि+चर ण्वुल । सेवके भृत्ये ।

**परिच्छद** पु० परि+छद-णिच् घ ह्रस्व । उपकरणे कृत्स्नश्च स्वपदातौ, वस्त्रादिभूषणे, परिवारे च । 'सैनापरिच्छदच्छन्न'ति रघु ।

**परिच्छेद** पु० परि+छिद-घञ् । विशेषरूपेण इयत्ताकरणे, सर्गादिस्थानीये ग्रन्थस्य विच्छेदस्थाने च ।

**परिजन** पु० परिगतो जन । परिवारे, प्रतिपाल्ये जने ।

**परिणत** त्रि० परि+नम क्त णत्वम । परिपक्वे वृद्धि गते अवस्थान्तर प्राप्ते, तिर्यग्दन्तप्रहारिणि गज च

**परिणय** पु०परि+नी अच्। विवाहे।

**परिणाम** पु० परि+नम-घञ् । प्रकृतेरन्यथाभावे विकारे, रोगे, अर्थालङ्कारभेदे च ।

**परिणाह** पु० परि+नह घञ् । विस्तारे ।

**परिणेतृ** पु० परि+नी-तृच् । विवाहकर्त्तरि भर्त्तरि ।

**परितस्** अव्य० परि+तसिल् । सर्वत इत्यर्थे चतुर्द्दिक्षु ।

**परिताप** पु० परितप्यते, अल वा भावादौ घञ् । दुःखे, उष्णतायाम्, शोके, भये, कम्पे, नरकभेदे च । [विलापे च ।

**परित्राण** न० परि+त्रै ल्युट् । रक्षणे, अतिशये मदन्तस्य नि-

**परिदान** न० परिवर्त्तेन दानम् दा ल्युट् । विनिमये द्रव्यान्तरग्रहणेन द्रव्यान्तरदाने ।

**परिदेवन** न० परि+दिव-ल्युट् । अनुशोचने, विलापे, कस्य कर्मणोऽनुचितत्वधियानुतापे च । णिच्-युच् । परिदेवना अत्र, लाभे च स्त्री० । [विलये नामैरधोवस्त्रप्रकने ।

**परिधान** न० परिधीयते परि+धा कर्मणि ल्युट् । परिहित-

**परिधि** पु० परि+धा कि । चन्द्रसूर्य्यसमीपस्थे मेघादिघटकतया जायमाने वेष्टनाकारे मण्डले (सूर्य्यसभा) (चन्द्रसभा) यज्ञियवृक्षस्यार्थे निखातायां यज्ञियतरो पलाशादे शाखायाम्, गोलमण्डलस्य परितो वेष्टनस्थलमाने, परित पार्श्वे च ।

**परिधिस्थ** त्रि० परिधौ तिष्ठति स्था-क । परिचारके, युद्धादौ रथिनो रक्षार्थं परित स्थिते सैन्यादौ च ।

**परिपण** न० परिपण्यते व्यवह्रियतेऽनेन पन-घञ् । मूलधने

**परिपन्थक** पु० परिपन्थयति दोषास्थानं गच्छति ण्वुल् पन्थानं वर्ज्जयित्वा गच्छति वा पन्थ पन्थादेश । शत्रौ ।

**परिपन्थिन्** पु० परि+पन्थ-इनि । शत्रौ ।

**परिपाक** पु० परि+पच घञ् । नैपुण्ये, उत्तमपाके च ।

**परिपाकिनी** स्त्री०परिपाक+अस्त्यर्थे इनि । त्रिवृति (तेवोटी)

**परिपाटि(टी)** स्त्री० परि+पट-इन् । अनुक्रमे, आनुपूर्व्याम्

**परिपुष्करा** स्त्री० परित पुष्करं यस्य यस्याः । (गोरक्ष) गोडुम्बायाम् । [यमाने सूत्राकारे पदार्थे ।

**परिपेल** न० परि+पेल अच् । कैवर्त्तीमुस्तके पेलवमध्ये जा-

**परिपेलव** न० परित पेलव मृदुता यस्य । कैवर्त्तीमुस्तके ।

**परिप्लव** न० परि+प्लु अच् । चञ्चले अस्थिरे ।

**परिबर्ह** पु० परि+वर्ह घञ् । नृपयोग्ये हस्त्यश्वादिपरिच्छदे

**परिभ(भा)व** पु०परि+भू अप् घञ् वा । अनादरे, तिरस्कारे च

**परिभाषण** न०परि+भाष-ल्युट् । निन्दया दुष्टवचने व्याक्षेपे, नियमे च । [अनादृत्य बहुदायार्थे विधिविशेषायाम् ।

**परिभाषा** स्त्री० परि+भाष अ । कृत्रिमसंज्ञायाम् अवयवार्थ-

**परिभूत** त्रि० परि+भू क्त । तिरस्कृते, अनादृते च ।

**परिमण्डल** त्रि० परिगतो मण्डलम् । वर्त्तुलाकारे ।

**परिमल** पु० परि+मल-अच् । कुङ्कुमचन्दनादिमर्द्दने, मर्द्दनोद्भूते सुगन्धौ, परित सम्बन्धे च । 'सतां परिमल' इत्युद्भट

**परिमाण** न० परिमीयतेऽनेन परि+मा ल्युट् । (माप) तुलाङ्गुलप्रस्थादिभिर्द्रव्यस्य परिच्छेदे । [इयत्परिमाणे च ।

**परिमित** त्रि० परि+मा क्त । कृतपरिमाणे, युक्ते, यथा-

**परि(री)रम्भ** पु० परि+रभ घञ् मुम् च वा दीर्घ । आलिङ्गने

**परिवत्सर** पु० सवत्सरसञ्ज्ञकालभेदे वत्सरभेदे ।

**परिवर्जन** न० परिवर्ज्यते हन्यतेऽनेन वृज णिच् ल्युट् । मारणे । वृज-भावे-ल्युट् । त्यागे ।

**परि(री)वर्त्त** पु० परि+वृत भावे घञ् वा दीर्घः । विनिमये । आधारे, घञ् । युगान्ते काले, ग्रन्थविच्छेदे अध्यायादौ च कर्त्तरि अच् । कूर्म्मराजे । भावे ल्युट् । परिवर्त्तनं विनिमये ।

**परिवह** पु० परि+वह-अच् । सप्तवायुमध्यपातिनि वायुभेदे ।

**परि(री)वाद** पु० परि+वद-घञ् वा दीर्घ । अपवादे 'गुरो र्यत्र परीवाद' इति मनु ।

**परिवादिनी** स्त्री० परितो वदति स्वराचारमिव वदति वद-णिनि । सप्ततन्त्रीयुक्तायां वीणायाम् अपवादकर्त्र्यां स्त्रियाञ्च

**परि(री)वाप** पु० परि+वप घञ् वा दीर्घ । वपने । वप-णिच्-घञ् । मुण्डने । ल्युट् । परिवापणमप्यत्र ।

**परिवापित** त्रि० परि+वप वा-वा णिच् क्त । मुण्डिते ।

**परि(री)वार** पु० परिव्रियतेऽसौ अनेन वा परि+वृ घञ् वा दीर्घ । परिजने कुटुम्बादौ, खड्गकोषे, (खाप) परिवारे च ।

**परि(री)वाह** पु० परि+वह घञ् वा दीर्घ । जलोच्छ्वासे परित सम्पत्त्यागाद्भवति तु तथा स्मृ ।

**परिविन्न** त्रि० परिविद्यतेऽसौ कर्म्मणि क्त । ज्येष्ठे विवाहकाले अनूढे ज्येष्ठे । तादृश्यां भगिन्यां स्त्री० । ज्येष्ठानूढताकालेऽनुजोद्वाहरूप दोष परिवेदनं तेन इष्टम्, इति तस्य परिवेदनकर्मत्वम् ।

**परिवित्ति** पु० परिविद्यते परिवेदनजदोषेण युज्यतेऽसौ, परि+विद कर्म्मणि क्तिच् । "प्राग्विवाहात् अनूढे ज्येष्ठे

**परिवृढ** त्रि० परि+वृह क्त । अधिपे प्रभौ ।

**परिवेत्तृ** पु० परि+विद तृच् । ज्येष्ठेऽनूढे प्राग्विवाहकर्मपरिवेदनकर्त्तरि अनुजे भ्रातरि ।

**परिवेदन** न०परि वर्जयित्वा उचितकालं वेदन विवाह लाभो वा । ज्येष्ठे, अनूढे, अग्न्याधाने च कनिष्ठस्य विवाहकरणे, अग्न्याधानकरणे च दुःखदनके स्मृत्युक्ते दोषे ।

**परिवेदनी** स्त्री॰ परिविद्यते यया परि+विद करणे ल्युट् ङीप्। यामूढ्वा 'परिवेदनदोषो भवति तस्यां स्त्रियाम्, 'परिवेत्ता परिवित्ति यया च परिविद्यते। सर्वे ते नरकं यान्ति दातृयाजकपञ्चमा' इति मनुः।

**परिवेश** पु॰ परि+विश व्याप्तौ भावे घञ्। वेष्टने, मेघादि सपर्णोज्जायमाने चन्द्रार्कमण्डलस्य वेष्टनाकारे। 'वाताद्यै मण्डलीभूता सूर्य्याचन्द्रमसोः कराः। मालाभा व्योम्न दृश्यन्ते परिवेशस्तु स स्मृतः' इत्युक्ते मण्डले पदार्थे।

**परिवेषण** न॰ परि+विष-णिच् ल्युट्। भोजनार्थमन्नादेः भाजनपात्रे दाने।

**परिव्याध** पु॰ परि+व्यध-कर्त्तरि ण। अम्बुवेतसे।

**परिव्राज्** पु॰ परि+व्रज क्विप् नि॰। सर्वकर्माणि परित्यज्य आश्रमान्तरगामिनि चतुर्थाश्रमिणि यतौ।

**परिव्राज(क)** पु॰ परित्यज्य सर्वकर्माणि व्रजति व्रज-घञ् ण्वुल वा। चतुर्थाश्रमिणि यतौ। [प्रतिपादके ग्रन्थे।

**परिशिष्ट** न॰ परि+शिष क्त अवशेषे अस्त्यर्थे अच्। अवशिष्टार्थ

**परिश्रम** पु॰ परि+श्रम घञ् न वृद्धिः। व्यायामे क्लेशकारके आयासे।

**परिश्रय** पु॰ परि+श्रि-आधारे अच्। सभायाम्।

**परिषद्** स्त्री॰ परितः सीदत्यस्याम् सद क्विप्। सभायाम्, धर्मोपदेशकपण्डितसमुदाये च। [पार्श्वचरे परिश्रमे च।

**परिषद** पु॰ परितः सीदति गच्छति सद अच्। अनुचरे

**परिषद्वल** त्रि॰ परिषद्+अस्त्यर्थे वलच्। सभासदे।

**परिष्क(स्क)न्द** त्रि॰ परिष्कन्द्यते पर्य्यते परि+स्कन्द घञ् वा। षत्वम्। परपुष्टे। क्त। परिस्कन्नमप्यत्र वा पक्षे परिष्कन्न।

**परिष्कार** पु॰ परि+कृ घञ् सुट् च। भूषणे विद्यमानवस्तुनो गुणान्तरस्य सर्जनादौ, संस्कारे च। [गादिसंस्कारे च।

**परिष्कृत** त्रि॰ परि+कृ क्त सुट् च। भूषिते वेष्टिते, कृतमार्ज्ज

**परिष्वङ्ग** पु॰ परि+ष्वञ्ज घञ्। आलिङ्गने।

**परिसर** पु॰ परि+सृ अप्। नदीनगरपर्वतादेः समीपस्थाने, मृत्यौ, विधाने च। [न्तात् गमने च।

**परिसर्ग** पु॰ परितः सृज्यते सृज-घञ्। परितोवेष्टने सम

**परिसर्य्या** स्त्री॰ परि सृ यत्। सर्व्वतो गमने।

**परिस्पन्द** पु॰ परि+स्पन्द-घञ्। समन्तात् चलने कुसुमपत्रादि रचनाभेदे परिष्कारे, परिजने च।

**परि(री)स्रुत्** स्त्री॰ परिस्रवति धान्यादिना निःसरति स्रु क्विप् वा दीर्घः। मदिरायाम्। क्त। परिस्रुतमप्यत्र। [अनादरे च

**परि(री)हार** पु॰ परि+हृ घञ् वा दीर्घः। त्यागे, दोषापकरणे,

**परि(री)हास** पु॰ परि+हस-घञ् वा दीर्घः। केलौ।

**परीक्षक** त्रि॰ प्रमाणेन परीक्षते परि+ईक्ष ण्वुल्। प्रमाणोपन्यासेन विषयनिरूपके।

**परीक्षण** न॰ परि+ईक्ष-ल्युट्। प्रमाणेन वस्तुनिरूपणे।

**परीक्षा** स्त्री॰ परि+ईक्ष अ। दुष्टादुष्टत्वावलोकने प्रमाणेन वस्तुनिरूपणे, स्मृत्युक्ते दुष्टादुष्टत्वसाधके तुलादिप्रमाणे च

**परीष्टि** स्त्री॰ परि+इष क्तिन्। अन्वेषणायाम्, परिचर्य्यायां च

**परीसार** पु॰ परि+सृ घञ्। सर्व्वतोगमने।

**परुत्** अव्य॰ पूर्व्वस्मिन् वर्षे उत् परस्यान्तादेशः। गतवत्सरे

**परुत्न** त्रि॰ परुद्भव त्न। गतवर्षभवे पदार्थे।

**परुष** न॰ पॄ उषन्। निष्ठुरवचने। नीलीझिण्ट्याम् पु॰। चित्रवर्णे, कठोरे च त्रि॰।

**परुस्** न॰ पॄ-उसि। ग्रन्थौ, (गांट) पर्व्वणि च।

**परेत** त्रि॰ परा+इण क्त। मृते। [क्विप् वा। यमे।

**परेतराज(ज्)** पु॰ ६त॰ टच् समा॰, परेतेषु राजते राज अच्

**परेद्यवि** अव्य॰ परस्मिन्नहनि नि॰। परदिवसे इत्यर्थे।

**परेद्युस्** अव्य॰ परस्मिन्नहनि पर+एद्युस्। परदिने। [गवि।

**परेष्टुका** स्त्री॰ परैरिष्यते इष तु स्वार्थे कन्। बहुप्रसवायां

**परैधित** त्रि॰ परैरेधितः एध-णिच् क्त। अन्यपालिते।

**परोक्ष** अव्य॰ अक्ष्णः परम् अव्य॰ टच् नि॰। अप्रत्यक्षे, अतीताद्यर्थे। तद्विषये त्रि॰।

**परोष्णी** स्त्री॰ परा-उष्णा कर्म॰ गौरा॰ ङीष्। तैलपायिकायाम्

**पर्कटि** स्त्री॰ पृच अटि न्यङ्क्वा॰ कुत्वम् (पाकुड़) प्लक्षवृक्षे।

**पर्कटिन्** पु॰ पृच अटिनि नि॰ कुत्वम्। प्लक्षवृक्षे। [(पाकुड़)।

**पर्जन्य** पु॰ पृषु सेचने अन्य जान्तादेशः। इन्द्रे, मेघे, 'यज्ञाद्भवति पर्जन्यः' इति मनुः। मेघशब्दे च। दारुहरिद्रायां स्त्री॰

**पर्ण** हरितभावे चु॰ उभ॰ सक॰ सेट्। पर्णयति ते अपपर्णत् त

**पर्ण** न॰ पॄ न, पर्ण अच् वा। पत्रे पक्षे च सुपर्णो गरुडो मत इति पलाशवृक्षे पु॰। ताम्बूले न। पत्रयुक्ते त्रि॰।

**पर्णखण्ड** पु॰ पर्णमेव खण्डाते यस्य पुष्पहीनत्वात्। पुष्पहीने वनस्पतौ वृक्षे।

**पर्णचोरक** पु॰ पर्णं चोरयति चुर ण्वुल्। चोरनामगन्धद्रव्ये

**पर्णनर** पु॰ पर्णनिर्मितः नराकारः शवः। अस्थ्यलाभादौ स्मृत्युक्ते दाह्य शवप्रतिनिधीभूत पर्णैर्निर्मिते नराकारे।

**पर्णभेदिनी** स्त्री॰ पर्णानि भिनत्ति भिद णिनि। प्रियङ्गुवृक्षे

**पर्णलता** स्त्री॰ पर्णप्रधाना लता शाक॰। ताम्बूलीलतायाम्।

**पर्णवल्ली** स्त्री॰ पर्णं प्रधाना वल्ली शाक॰। पलाशीलतायाम्।

**पर्णशाला** स्त्री॰ पर्णैर्निर्मिता शाला शाक॰। पर्णनिर्मित

कुटीरे। [काथे गज्जातयामस्मर इति प्रसिद्धे।

पर्णाशन पु० पर्णानि अश्नाति अश-ल्यु। मेघे तस्य पत्रभक्षण

पर्णास(सि) पु० पर्णानि अस्यति अस-अच् इन् वा। तुलस्याम्

पर्णिन् पु० पर्ण+अस्त्यर्थे इनि। वृक्षे। माषपर्ण्यां स्त्री० ङीप्।

पर्द अपानवायुक्रियायां भ्वा०आत्म०अक०सेट्। पर्दते अपर्दिष्ट

पर्प गतौ भ्वा०पर०सक०सेट्। पर्पति अपर्पीत्।

पर्प न० पॄ प। तृणे, नवतृणे, खञ्जवाहनसाधने पीठादौ।

पर्पट पु० पर्प-अटन्। (क्षेतपापड़ा) क्षुपभेदे, पक्वदिद्विदलकृते (पापर) ख्याते पिष्टकभेदे, सौराष्ट्रमृत्तिकायाम्, उत्तरदेश-भवे सुगन्धिद्रव्ये च स्त्री० गौरा० ङीष्।

पर्व गतौ भ्वा०पर०सक०सेट्। पर्वति अपर्वीत्।

पर्यङ्क पु० परिगतोऽङ्कम् प्रा०। खट्वायाम्, योगपट्टे 'पर्यङ्क-ग्रन्थिबन्धद्विगुणितभुजगाश्लेषे'त्यादि मृच्छकटिकम्।

पर्यङ्कपादिका स्त्री० पर्यङ्क इव पादा यस्याः कप्याप्
कप्। कोशातक्याम्।

पर्यङ्कबन्ध पु० पर्यङ्कस्य योगपट्टस्य बन्धः बन्ध-घञ्। योग पट्टबन्धादिना पृष्ठजानुजङ्घाबन्धने 'पर्यङ्कबन्धं निविड' बिभेदे'ति कुमार। ल्युट्। अत्रैव न०।

पर्यटन न० परितोऽटनम्। पुनः पुनर्भ्रमणे।

पर्यनुयोग पु० परितोऽनुयोगः प्रश्नः। दूषणार्थं जिज्ञासा याम् 'एतेनापास्ति पर्यनुयोगोऽनवकाश' इति दायभाग।

पर्यन्त पु० परिगतोऽन्तं सीमाम्। प्रान्तभागे शेषसीमायाम्

पर्यन्तभू स्त्री० पर्यन्तस्य शेषसीमाया भूः। ग्रामादे शेषसीमास्थाने। परिसरे।

पर्यय पु० परिलङ्घ्य शास्त्रमौक्तकमर्यादाम् अय इण-अच्। शास्त्रलौकिकव्यवहारातिक्रमे व्याघाते।

पर्यवस्था स्त्री० परि+अव+स्था-अङ्। विरोधे, प्रतिपक्षवादे च। ल्युट्। तत्रैव न०। तच्च तत्कर्त्तरि त्रि०।

पर्यस्त त्रि० परि अस-क्षेपे क्त। निक्षिप्ते, प्रसिते, हते च।

पर्याण न० परि+या ल्युट् पु०। अश्वस्थाया पल्ययने (जिन्) इण-ल्युट्। पर्ययणमप्यत्र।

पर्याप्त न० परि+आप भावे क्त। यथेष्टे, तृप्तौ, सामर्थ्ये, नि वारणे, योग्यत्वे च। कर्त्तरि क्त। समर्थे, प्राप्ते च त्रि०।

पर्याप्ति स्त्री० परि+आप क्तिन्। मरणादितो निवारणे, प्रकामे, प्राप्तौ, तृप्ति, पर्याप्त्येन प्रतीप्तौ, न्यायमतसिद्धे समुदाय वर्त्तमानपदार्थानां सर्वत्र सम्बन्धरूपे सम्बन्धभेदे च।

पर्याय पु० परि+इण घञ्। अनुक्रमे, प्रकारे, अवसरे, निर्माणे, द्रव्यधर्मभेदे, समानार्थबोधके शब्दे च।

पर्यायशयन न० पर्यायेण क्रमेण शयनम्। यामिकभटानां क्रमेण शयने।

पर्युदञ्चन न० पर्युदञ्च्यते उद्ध्रियते कर्मणि ल्युट्। ऋणे

पर्युदस्त त्रि० परि+उद्+अस क्त। निवारित पक्षान्तराय-भून्यतया भेदार्थकनञा निषिध्यमाने 'यथा रात्रौ श्राद्धं न कुर्वीते'ति अत्र हि रात्रौ श्राद्धे न फलं न प्रत्यवाय इति रात्रि पर्युदस्ता तद्भिन्नकालावच्छेदेन श्राद्धम्।

पर्युदास पु० परि+उद्+अस-घञ्। निवारणे पक्षान्तराय शून्यतया भेदार्थकनञा बोध्ये 'प्राधान्यं हि विधेर्यत्र प्रति षेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' उक्तलक्षणे निषेधे च विवरणं दृष्टम्भिधाने।

पर्युषित त्रि० परिक्रम्य स्वकालमतिक्रम्य उषितम् वस क्त। (बासि) यातयामादौ पदार्थे, 'यातयाम गतरसं पूति पर्युषितञ्च यदि'ति मनुः।

पर्येषणा स्त्री० परितस्तर्कादिना एषणा परीक्षा। तर्कादिद्वारा पदार्थपरीक्षायाम्, अन्वेषणायाञ्च।

पर्व्व पूर्त्तौ भ्वा०पर०सक०सेट्। पर्व्वति अपर्व्वीत्।

पर्व्वत पु० पर्व्व अतच्, पर्व्वाणि भागाः सन्त्यस्य त वा। गिरौ भूधरे, दानार्थं कल्पिते पर्व्वताकारे धान्यादिराशौ, मुनि-भेदे 'नारदपर्व्वतौ त प्रययौ यत्र पर्व्वतस्य साक्षि'ति भारतम्, मत्स्यभेदे (पावदा) वृक्षे, शाकभेदे च।

पर्व्वतमोचा स्त्री० कृत०। गिरिकदल्याम्।

पर्व्वतवासिनी स्त्री० पर्व्वते वसति वस णिनि। आकाश-मांस्याम्, गायत्र्याञ्च।

पर्व्वतीय पु० पर्व्वते भव छ। (पाहाड़ीया) जातिभेदे 'पर्व्वतीयैः गणैरभूदि'ति रघुः। पर्व्वतजातमात्रे त्रि०।

पर्व्वन् न० पॄ वनिप्। उत्सवे, ग्रन्थौ (गांट) लक्षणभेदे प्रकारे, ग्रन्थविच्छेदस्थाने 'चतुर्द्दश्यष्टमी चैव अमावस्या च पूर्णि-मा। पर्व्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव चे'ति व्वनु क्तेषु पञ्चसु कालभेदेषु च। [स्त्री इव

पर्व्वयोनि पु० पर्व्व ग्रन्थिः योनिरुत्पत्तिस्थानं यस्य। इक्षुप्रभृ-

पर्व्वरुह् पु० पर्व्वणि रोहति रुह क्विप्। दाड़िमे। [(गाडदूवा)

पर्व्ववल्ली स्त्री० पर्व्वप्रधाना ग्रन्थियुक्ता वल्ली। मालादूर्व्वायाम्

पर्व्वसन्धि पु० पर्व्वणः सन्धिः। पञ्चदश्याः (पूर्णिमाया अमावस्या याः) प्रतिपदश्चान्तरासे चन्द्रसूर्य्यग्रहणयोग्ये काले।

पर्शुका स्त्री० पर्शुरिव कायति प्रकाशते कै क। पार्श्वस्थि तस्य परशधाकारत्वात् तथात्वम्। पञ्जरस्थ।

पर्ष स्नेहे भ्वा०आत्म०सक०सेट्। पर्षते अपर्षिष्ट।

**पाटी** स्त्री० पट-णिच् इन् ङीप् । धारायाम्, व्यक्तगणनायाम् लीलावत्यादौ (पाला) इति ख्याते क्षुपे च । [न्वारणे च
**पाठ** पु० पठ घञ् । अध्ययनायामुच्चारणे शब्दस्वरवर्णपूर्वको-
**पाठक** पु० पठति पाठयति वा ण्वुल् । अध्येतरि, अध्यापके च
**पाठशाला** स्त्री० ६त० । पाठमन्दिरे ।
**पाठा** स्त्री० पठ-कर्मणि घञ् टाप् । विद्धकर्ण्याम् (आकनादि)
**पाठिन्** पु० पठ-णिनि । चित्रकवृक्षे । पाठके त्रि० ।
**पाठीन** पु० पाठिं पृष्ठं नमयति नम ड दीर्घः । गुग्गुलुवृक्षे मत्स्यभेदे च (बोयाल) 'पाठीन रोहितावाद्यावि'ति मनुः पठ-ईनण् । पाठके त्रि० । पथ्यपीथ्याम्, कृष्ट च स्त्री० ।
**पाणि** पु० पण-इण् आयाभावः । करे, कुलिके वृक्षे च (कुलेखाडा)
**पाणिगृहीती** स्त्री० पाणिर्गृहीतो यस्याः ङीप् । भार्यायाम्
**पाणिग्रहण** न० पाणिर्गृह्यतेऽत्र ग्रह-आधारे ल्युट् । विवाहे । 'पाणिग्रहणसंस्कारः सवर्णास्तूपदिश्यते' इति मनुः । पाणिपीडनादयोऽप्यत्र ।
**पाणिघ** पु० पाणिं हन्ति, पाणिना वा हन्ति वादयति हन टक् कुत्वम् । पाणिताडके, पाणिना मृदङ्गादिवादके च ।
**पाणिनि** पु० पणिन पण तत० अस्त्यर्थे इनि तदपत्यम् अण् तस्य छात्र इञ् । अष्टाध्यायीव्याकरणादिकारके दाक्षीपुत्रे शालातुरीयनामभवे मुनिभेदे ।
**पाणिनीय** त्रि० पाणिनिना प्रोक्तम्, तस्येदम् वा छ । पाणिनिना कृते अष्टाध्यायीरूपादौ व्याकरणादौ ।
**पाणिभुज्** पु० पाणिभिरिव भुज्यते मोच्यते भुज मोटने क्विप् । उडुम्बरवृक्षे । पाणिना भुङ्क्ते भुज क्विप् । हस्तेन भक्षके त्रि० ।
**पाणिवाद** पु० पाणिं, पाणिना वा मृदङ्गादिकं वादयति वद-णिच् अण् अच् वा । हस्तताडके, हस्तेन मृदङ्गादिवादके च । ण्वुल् । पाणिवादकोऽप्यत्र ।
**पाणिसर्य्या** स्त्री० पाणिना सृज्यतेऽसौ सृज-ण्यत् । रज्जौ
**पाण्डर** पु० पडि-अर दीर्घश्च । मरुवकवृक्षे, श्वेतवर्णे च । तद्वति त्रि० । कुन्दपुष्पे, गैरिके च न० । [पुत्रे युधिष्ठिरादौ ।
**पाण्डव** पु० पाण्डोरपत्यम् अण् । चन्द्रवंशस्य नृपभेदस्य तनजे
**पाण्डु** पु० पडि कु नि० दीर्घः । चन्द्रवंश्ये नृपभेदे श्वेतवर्णे, केतकीधूलिसन्निभे पीतवर्णार्द्धे वर्णभेदे च । तद्वति त्रि० नागभेदे, श्वेतहस्तिनि, रोगभेदे, पटोलवृक्षे च पु० । माषपर्ण्यां स्त्री० ।
**पाण्डुकण्टक** पु० पाण्डुवर्णानि कण्टकानि यस्य । अपामार्गे
**पाण्डुकम्बल** पु० कर्म० । श्वेतवर्णप्रावारे । कम्बल इव पाण्डु राज० । प्रस्तरभेदे । [वर्णकम्बलप्रावृते रथे ।
**पाण्डुकम्बलिन्** पु० पाण्डुकम्बल+अस्त्यर्थे इनि । पाण्डु
**पाण्डुतरु** पु० कर्म० । धववृक्षे । [हस्तिनि, श्वेतसर्पे च ।
**पाण्डुनाग** पु० नाग इव पाण्डु राज० । पुन्नागवृक्षे, श्वेत-
**पाण्डुफल** पु० पाण्डूनि फलान्यस्य । पटोले । चिर्भट्यां स्त्री० ।
**पाण्डुर** पु० पाण्डुवर्णोऽस्त्यस्य र । श्वेतपीतमिश्रिते वर्णे । पडि-उर वृ० वृद्धि । श्वेतवर्णे च । तद्वति त्रि० कामलाख्ये रोगे, श्वित्ररोगे च न० । माषपर्ण्यां स्त्री० टाप् ।
**पाण्डुरङ्ग** पु० पाण्डुरङ्गमस्य शाक० । (पाटरांगा) शाके
**पाण्डुरद्रुम** पु० कर्म० । कुटजवृक्षे (कुडची) ।
**पाण्डुराग** पु० पाण्डुः रागो वर्णो यस्य । दमनकवृक्षे ।
**पाण्डुलोमशा** स्त्री० पाण्डूनि लोमानीवाङ्गानि सन्ति यस्याः श । माषपर्ण्याम् । श्वेतलोमवति त्रि० ।
**पात** पु० पत-घञ् पतने । पा-क्त । रक्षिते त्रि० । पत ण । ज्योतिषोक्ते क्रान्तिसाम्यसम्पादके राहुरूपे ग्रहभेदे ।
**पातक** न० पातयति अधो गमयति पत-णिच्-ण्वुल् । पातित्यसम्पादके पापे, पापजनके प्राणिवधादौ च ।
**पातञ्जल** न० पतञ्जलिना प्रोक्तम् अण् । पाणिनिसूत्रवार्त्तिकव्याख्यानरूपे 'अथ शब्दानुशासन'मित्यादिके महाभाष्ये, 'अथ योगानुशासन'मित्यादिके योगशास्त्रे च ।
**पाताल** न० पत-आलञ् । धरायास्तलस्थे भुवने, ज्योतिषोक्ते लग्नाच्चतुर्थे स्थाने च ।
**पातालनिवास** पु० नि+वस-आधारे घञ् पातालं निवासो यस्य । दैत्ये पातालनिलयादयोऽप्यत्र ।
**पातुक** त्रि० पत उकञ् पतनशीले । प्रपाते, जलहस्तिनि च पु०
**पात्र** न० स्त्री० पाति रक्षत्याधेयम्, पिबत्यनेन वा पा-ष्ट्रन् स्त्रियां ङीप् । जलाद्याधारे भोजनयोग्ये अमत्रे, विद्यादियुक्ते दानयोग्ये ब्राह्मणे 'ब्राह्मणः पात्रभाक्' इति स्मृतिः स्रुवादौ, तीरद्वयमध्यवर्त्तिनि जलाधारस्थाने, नाट्ये ऽभिनेये नायकादौ च न० ।
**पात्रीय** त्रि० पात्रे यज्ञपात्रे योग्यं छ । यज्ञद्रव्ये । स्वार्थे छ । योग्ये, 'विप्र पात्रीयतामियादि'ति स्मृतिः ।
**पात्रेसमित** त्रि० पात्रे भोजनपात्रासादनकाले एव समितः सङ्गतः । भोजनादन्यत्र अनुपस्थिते कार्य्यादक्षे । [च
**पाथ** न० पीयतेऽद थ । जले । पाति रक्षति थ । अग्नौ, सूर्य्ये
**पाथस्** न० पाति रक्षति, पीयते वा पा-पाने, रक्षणे वा असुन् थुक् च । जले, अन्ने च अन्नभोजने हि देहरक्षा ।
**पाथेय** त्रि० पथि हितं ढञ् । पथि भोजनोचिते द्रव्ये ।
**पाद्** पु० पद णिच् क्विप् । चरणे पादे । [ईषादेर्मूले च ।
**पाद** पु० पद्यते गम्यतेऽनेन करणे घञ् । चरणे, चतुर्थांशे,

पादकटक पु० पादस्य कटक इव । नूपुरे ।
पादकृच्छ्र पु० पादमितचतुर्थांशमित कृच्छ्रं शाक० । 'उपवासेन चैकेन पादकृच्छ्रउदाहृत' इत्युक्ते व्रतभेदे ।
पादग्रहण न० पादयोः ग्रहणं यत्र ।, पादग्रहणपूर्वके प्रणामभेदे 'अनूच्य पादग्रहणं गुरुं हि सामिवादनमिति मनु
पादचारिन् पु० पादेन चरति चर-णिनि ३त० । पदातौ । पद्भ्यां गन्तरि त्रि० ।
पादत्राण न० पादौ त्रायते येन त्रै-करणे ल्युट् । पादुकायाम्
पादप पु० पादेन मूलेन पिबति सिक्तं जलम् पा-क । वृक्षे । पादं पाति रक्षति पा क । पादपीठे । (गाछ)
पादप्ररुहा स्त्री० पादपं रोहति रुह-क । वन्दाकायाम् । (पर-
पादपीठ न० ६त० । पादस्थापनासने । 'सिंहासनं तस्य सपादपीठमिति भट्टि । पादुकायां स्त्री० टाप् ।
पादमूल न० ६त० । चरणस्याधोभागे ।
पादरोह पु० पादेन मूलेन रोहति रुह अच् । वटवृक्षे ।
पादवल्मीक न० पादस्य वल्मीकमिव । श्लीपदरोगे (गोद)
पादविक त्रि० पदवीं धावति ठक् । पथिके पथिधावके ।
पादविरजस् स्त्री० पादौ विरजसौ धूलिशून्यौ यस्याः । ५ब० । पादुकायाम् । [पोआ) दानादौ ।
पादशस् अव्य० पादं पादं ददाति करोति वा शस् । (पोआ-
पादशैल पु० पादाकारः शैलः । प्रत्यन्तपर्वते ।
पादस्फोट पु० । पादौ स्फोटयति अण् । रोगभेदे ।
पादाग्र न० ६त० । चरणाग्रभागे प्रपदे ।
पादाङ्गद न० पादस्य अङ्गदमिव । नूपुरे ।
पादात न० पदातीनां समूह अण् । सैन्यसमुदाये पादाभ्यां अतति गच्छति अच् । पदातौ सैन्ये । पादातिपादातिकावप्यत्र
पादुका स्त्री० पद णिच्-उ तत स्वार्थे कन् ह्रस्व । चर्ममये पादाच्छादने पदार्थे (जुता) । कनभावे पादूरप्यत्र ।
पादुकाकार पु० पादुकां करोति कृ अण् उप० । चर्मकारे पादूकृत्पादुकाकृदादयोऽप्यत्र ।
पाद्य न० पादाय पादप्रक्षालनाय साधु यत् । पादप्रक्षालनार्थे जले । अपां स्त्रीत्वेन स्त्रीत्वमपि । 'पाद्या पाद्या इत्यादि पाद्यदानमन्त्र । [आधारे ल्युट् । पानभाजने ।
पान न० पा ल्युट् । द्रवद्रव्यस्य गलाधःसंयोजने, रक्षणे च
पानगोष्ठी स्त्री० पानार्थं गोष्ठी सभा । (मज) पानार्थं सभायाम्
पानभाजन न० पीयतेऽस्मिन् पा ल्युट् कर्म० । पानपात्रे चषकपात्रादयोऽप्यत्र ।
पानीय न० पीयते यत् पा-कर्मणि अनीयर् । जले । पातव्ये रक्षितव्ये च त्रि० । [(पाना) कुम्भारास ।
पानीयपृष्ठज पु० पानीयपृष्ठे जलोपरि जायते जन ड ।
पानीयफल न० ६त० । (माखना) जलमध्यफलभेदे ।
पानीयमूलक न० पानीये मूलं यस्य कप् । सोमराज्याम् ।
पानीयशालिका स्त्री० पीयतेऽस्याम् आधारे अनीयर् तादृशी पानीयवितरणार्थं या या शाला स्वार्थे कन् । प्रपायाम् (जलछत्रभेदे) ।
पानीयामलक न० कर्म० । (पानिआमला) वृक्षभेदे ।
पान्थ पु० पन्थानं गच्छति पथिन्+ण पन्थादेश । पथिके ।
पाप न० पाति रक्षति आत्मानमस्मात् पा-अपादाने प । *नरकहेतौ दुरदृष्टे, तद्धेतौ हिंसादौ, ज्योतिषोक्तेषु क्रूरे* नवचन्द्ररविभौमादिषु ग्रहेषु । [पापनाशके त्रि० ।
पापघ्न पु० पापं हन्ति टक् । तिले तस्य हि दानेन पापनाशकत्वम् ।
पापचेली स्त्री० पुनः पुनः पचति पच-यङ्-अच् पापचो वायुस्तं चीरयति ईर-अण् टस्य च । (आकनादि) पाठालतायाम्
पापपुरुष पु० पापात्मकः पुरुषः पुरुषाकारः । तन्त्रोक्ते वामकुक्षिस्थे पापात्मके ध्येये नराकारे पदार्थे ।
पापशमनी स्त्री० पापं शम्यतेऽनया शम णिच्-करणे ल्युट् । ङीप् । शमीवृक्षे ।
पापात्मन् पु० पापयुक्त आत्मा अन्तःकरणं यस्य । पापान्विते जीवे 'पापात्मा पापसम्भव' इति पुराणम् ।
पाप्मन् पु० आप्नोति व्याप्नोति आप मनिन् नि० । पापे ।
पामन् न० पा मनिन् । विचर्चिकायां (खोस पाचडा) स्त्रीत्वमपि मन्नन्तात् ङीप् । पामाप्यत्र ।
पामघ्न पु० पामां हन्ति हन टक् । गन्धके । कटुक्यां स्त्री० ङीप् ।
पामन त्रि० पामाऽस्त्यस्य अस्त्यर्थे न । पामरोगवति ।
पामर त्रि० पाति क्विप् पा तयोधर्मं च म्रियतेऽनेन मृ घ । मूर्खे, नीचे, खले च । [टाप् । गुडूच्याम् ।
पामरोद्गारा स्त्री० पामरमुद्गिरति उद् गृ-अण् गौरादित्वात्
पामारि पु ६त० । गन्धके तद्धेतौ हि पामरोगनाश ।
पायस पु० पयसि दुग्धे संस्कृत अण् । परमान्ने । पय इव स्निग्धे त्रि० पायस दधिमन्थ' इति श्रुतिः । चन्दने च ।
पायु पु० पा-उण् । अपानवायुस्थाने ।
पाय्य न० मीयतेऽनेन मा ण्यत् नि० प इत्व । परिमाणे ।। पानीय त्रि० । निन्दनीय त्रि० । [रक्षणाद्य न ।
पार कर्म्मसमाप्तौ अद० चु० उभ० सक० सेट् । पारयति ते
पार न० पारयति अच् पारं परं तीरं पृ घञ् वा । नद्यादेः मध्ये परतीरे । पार अच् घञ् । पानभाजने ।

पारिप्लव पु० विप्लुति प्लु-णिनि पारी तं प्लवति गो-क। (पलाश पिपुल) स्याते वृक्षे।

पारिषद् त्रि० परिषदि सभः तिष्ठति वा अण्। सभास्थे सभ्ये। यञ्। पारिषद्योऽप्यत्र। [स्रज। मलये, कटके।

पारिहार्य्य पु० परिह्रियतेऽसौ परि+हृ-कर्मणि घञ् स्वार्थे

पारीण त्रि० पारं गच्छति पार-खञ्। पारगे, कर्मसमाप्तिकारके। [अर्जुने वृक्षे, पृथिवीपतौ च

पार्थ पु० पृथाया अपत्यम् अण्। पृथापुत्रे, युधिष्ठिरादौ,

पार्थिव पु० पृथिव्या ईश्वरः अण्। राजनि। पृथिव्याविकारः इदं वा अण्। भूमिभवे त्रि०। सीतायां स्त्री०। तगरपुष्पे न०

पार्व्वण त्रि० पर्वणि पूर्णिमादौ भवः अण्। पूर्णिमादिभवे 'न पारदः पार्वणशर्वरीश्वर' इति नैषधम् पर्वणि अमावस्यादौ विहितम् अण्। कृत्युक्ते श्राद्धभेदे न०। ष्ट-वनिप् मन्त्राद्यच.। स्वराभेदे पु०।

पार्व्वत पु० पर्व्वते भवः अण्। (पीड़ानिम) निम्बभेदे, पर्व्वत जातमात्रे त्रि०। मल्लक्यां, गोपालपूतिकायां, जीवन्त्यां, गौरक्षमृत्तिकायाम्, क्षुद्रपाषाणभेदायां, भानुक्यां, दुर्गायाञ्च स्त्री० ङीप्।

पार्व्वतीनन्दन पु० ६त०। कार्त्तिकेये, पार्वतीसुतादयोऽप्यत्र।

पार्व्वतेय न०पर्वते भवं ढक्। सौवीराञ्जने। सूर्य्यांशजक्षे पु०

पार्श्व पु०न०स्पृश-श्वण् धातोः पृ च। कक्षाधोभागे,समीपे,चक्रे, पृष्ठे च। पर्शूनां पार्श्वास्थ्नां समूहः पर्शु+अण्। पर्शुसमूहे न०

पार्श्वपरिवर्त्तन न० पार्श्वेन परिवर्त्तनम्। यत्पार्श्वमधःस्थापयित्वा शयितं तत्पार्श्वस्योर्द्ध्वीकरणे (पाशमोड़ा) पार्श्वस्य परावृत्तौ। हरेस्तद्भाद्रशुक्लद्वादश्यां कर्त्तव्ये पार्श्वपरिवर्त्तनाख्ये उत्सवभेदे च।

पार्श्वस्थास्थि न०कर्म०। (पाजर) शरीरपार्श्वस्थिते अस्थि,

पार्षद पु० पर्षदि भवसात स्थितो वा अण्। सभासदे। सञ् पार्षद्योऽप्यत्र।

पार्ष्णि पु०स्त्री० पृष-नि नि० हृद्धिः। पादपश्चे गुल्फस्याधोभागे। (गोड़ालि) पृष्ठे, सैन्यपृष्ठे, जिगीषायाञ्च पु०।

पार्ष्णिग्राह पु० पार्ष्णिं पृष्ठदं गृह्णाति अण्। विजयार्थं जिगमिषोः पश्चात्पृष्ठपार्ष्णिस्थि पृष्ठस्थे शत्रौ।

पाल रक्षणे चुरा०पर०सेट्। पालयति ते अपीपलत् त

पाल त्रि० पालयति पाल-अच्। रक्षके 'पालकोपविनाशे च पाले दण्डोविधीयते' इति स्मृतिः।

पालङ्क पु० पालयति पाल ङ्कन्। श्येनपक्षे, चित्रकाये च।

पालघ्न पु० पालं अस्य हन्ति हन्-टक्। छत्राके जलजन्तुभेदे

पालङ्क पु०पाल-भन्य०क्विप् पाला अङ्क्यते अङ्क-घञ्। (पालङ) शाकभेदे स्त्रीत्वमपि ङीप्। अत्रैव। कुन्दुरुवृक्षे स्त्री०गौ० ङीप्। कर्मणि यत् पालङ्क्याप्यत्र।

पालाश न० पलाशं पर्णमस्त्यस्य पलाशादण्। तेजपत्रे। तद्वर्णत्वस्य। हरिद्वर्णे पु० तद्वति, पलाशस्येदम् अण्। पलाशसंबन्धिनि च त्रि०। 'ब्राह्मणस्य पालाशोदण्ड' इति स्मृतिः

पालि(ली) पाल-इन् वा ङीप्। कोणे,पङ्क्तौ, प्रकायाम्, सेतौ, प्रान्तभागे,प्रशंसायां,क्रोड़े च। स्वार्थे कन्। कोणे,कर्णपाले च

पालिन्द पु० पालिं ददाति दा-क पृ० इम्। कुन्दुरुवृक्षे। श्यामालतायां स्त्री० गौरा० ङीष्।

पावक पु० पुनाति पू-ण्वुल्। वह्नौ, वैद्युताग्नौ च।

पावकि पु० पावक+अपत्यार्थे इञ्। कार्त्तिकेये स हि शिववीर्य्यात् वह्नौ निहिताज्जात इति पुराणम्।

पावन पु० पावयति पू-णिच्-ल्यु। अग्नौ, व्यासे, सिद्धके, पीतभृङ्गराजे च। गोमये, प्रायश्चित्ते, सम्भ्रमार्थे कर्मणि, च न०। पाव्यतेऽनया ल्युट् ङीप्। गङ्गायां, हरीतक्यां तुलस्याञ्च स्त्री०। पवित्रतासाधके त्रि०।

पाश पु० पश्यते बध्यतेऽनेन पश-घञ्। मृगपक्ष्यादिबन्धने रज्जुभेदे (फांद) रज्जुमात्रे च। केशाद्युत्तरं पाशः समूहार्थः। यथा केशपाशः। कर्णात् परः शोभार्थः। यथा कर्णपाशः शोभनकर्ण इत्यर्थः। छात्रादिभ्यः पाशप्। अप कृष्णजाल इत्याद्यर्थे।

पाशक पु० पश-ण्वुल्। द्यूतक्रीड़ासाधने गुटिकादौ (पाशा)।

पाशपाणि पु० पाशः पाणौ यस्य। वरुणे पाशहस्तादयो-प्यत्र पाश+इनि। पाशीत्यप्यत्र।

पाशुपत पु० पशुपतेरिदं, सोऽस्य देवता वा अण्। वकवृक्षे। व्रतभेदे, अस्त्रभेदे च न०। तद्भक्ते त्रि०। [विशेषणेन

पाशुपाल्य न०पशून् पालयति अण् तस्य भावः ततः ष्यञ्।

पाश्चात्त्य त्रि० पश्चाद् भवः त्यक्। पश्चिमदेशभवे।

पाश्या स्त्री० पाशानां समूहः यत्। पाशसमूहे।

पाष(ख)ण्ड पु० पाति रक्षति दुरितेभ्यः पा-क्विप् पाः वेदधर्मस्तं खण्डयति निष्फलं करोति, खण्डयति वा। 'पाखण्डाश्च असौपर्णं पाखण्डेन निगद्यते (प)खण्डयन्ति ते यस्मात् पा(ष)खण्डस्तेन कीर्त्तिता' इत्युक्ते वेदाचारत्यागिनि

पाषण्डिन् पु० पाषेद्धर्मं खण्डयति खण्ड+णिच् इनि। पाषण्डे

पाषाण पु० पिनष्टि पिष-संचूर्णने आनच् पृ०। प्रस्तरे अल्पार्थे ङीप्। (बाटखारा) तुलामानसाधने।

पाषाणदारक पु० पाषाणं दारयति दृ ण्वुल्। टङ्के

(पाथरकाटाछेनी) । युच् । पाषाणदारणोऽप्यत्र ।

पाषाणभेदन पु० पाषाणं भिनत्ति ल्यु । (हाड़जोड़ा) वृक्षभेदे । [वृक्षभेदे ।

पाषाणभेदिन् पु० पाषाणं भिनत्ति भिद्-णिनि (पाथरकुचि)

पि गतौ तु० सक० पर० अनिट् । पियति । अपैषीत् ।

पिक पुं० अपि-कायति कै क अपेरलोप । कोकिले ।

पिकप्रिया स्त्री० ६त० । महाजम्ब्वाम् ।

पिकबन्धु पुं० ६त० । आम्रवृक्षे ।

पिङ्ग पु० पिजि-वर्णे-अच् न्यङ्क्वा० कुत्वम् । मूषके दीपशिखाभे पिङ्गलवर्णे च । तद्वति त्रि० । हरिताले न० । गोरोचनायां, नालिकायां, दुर्गायाम् हरिद्रायां, हिङ्गुनि, वंशरोचनायाञ्च स्त्री० टाप् । गभीरके स्त्री० ङीप् ।

पिङ्गल पु० पिङ्गं लाति-ला-क, पिजि-कलच् वा कुत्वम् । नागभेदे, रुद्रे, सूर्य्यपारिपार्श्विके, वानरे, निधिभेदे, मुनिभेदे, मङ्गले पक्षे, स्थावरविषभेदे, क्षुद्रोलूके ६०वर्षमध्ये 'पिङ्गले चाल्पवृष्टिः । दुर्भिक्षं नर्मदातटे' इत्युक्तलक्षणे वत्सरभेदे, प्राकृतच्छन्दोग्रन्थकारके, नागछत्रे, मुनिभेदे, दीपशिखातुल्ये वर्णे च तद्वति त्रि० । 'कुमुदद्दिग्गजस्य योषिति' नाड़ीभेदे, राजनीतौ, शिंशपावृक्षे, वामनाख्यदिग्गजस्य योषिति, वेश्याभेदे च स्त्री० टाप् । 'यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गले'ति पुराणम् ।

पिङ्गलत्रौढ न० लौहं धातु कर्मं । पित्तले ।

पिङ्गाक्ष पु० पिङ्गे अक्षिणी यस्य षच् समा० । शिवे तस्य ललाटस्थनेत्रस्याग्निरूपत्वात्तथात्वम् । पिङ्गवर्णोऽप्यत्र ।

पिचण्ड पु० अपि+चम-ड तस्य नेत्वम् अपेरल्लोप० । उदरे, पशोरवयवे च । पृ० इत्त्वम् । पिचिण्डोऽप्यत्र । [वृहत्कुक्षौ

पिच(चि)ण्डिल त्रि० पिच(चि)ण्ड+अस्त्यर्थे इलच् । तुन्दिले,

पिचव्य पु० पिचवे तूलाय साधु यत् । कार्पासवृक्षे ।

पिच्छ न० पिच्छ-अच् । मयूरपुच्छे; चूडायाञ्च । लाङ्गूले पु० । शाल्मलिवृक्षे, पूगे, परम्परायाम्, कोषे, मोचायां, भक्तमण्डे, पङ्क्तौ, शिंशपावृक्षे, कौलिकायाम्, अश्वस्य चरणरोगभेदे च स्त्री० टाप् ।

पिच्छल त्रि० पिच्छ-कलच् । (पिछल) स्निग्धे मसृणे ।

पिच्छलदला स्त्री० पिच्छलं दलं यस्याः । बदरीवृक्षे, पिच्छलमस्तादयोऽप्यत्र । [शिंशपायाम्

पिच्छितिका स्त्री० पिच्छ-क्विप् ष० इट् तत स्वार्थे कन् ।

पिच्छिल त्रि० पिच्छा+अस्त्यर्थे इलच् । (पेचल) मसृणे स्निग्धे 'पिच्छिलानि च दधीनी'ति काव्यप्र० । भक्तमण्डे, उरसव्यञ्जनसूपादौ, मण्डयुक्तभक्ते च । शेल्मातकवृक्षे पुं० ।

पिच्छिलत्वच् पु० पिच्छिला त्वक् यस्य । नागरङ्गवृक्षे

पिच्छिलसार पु० पिच्छिलः सारोऽस्य । मोचरसे ।

पिज दीप्तौ वासे, बले च अक० हिंसायां दाने च सक० चु० उभ० सेट् इदित् । पिञ्जयति ते अपिपिञ्जत् त ।

पिञ्ज न० पिजि अच् । बले । कर्पूरभेदे पुं० । आकुले त्रि० । तूले, हरिद्रायां, अहिंसायां च स्त्री० । भावेऽप् । वधे पु० ।

पिञ्जट पु० पिजि-अटन् । नेत्रमले (पिचुटि) ।

पिञ्जर न० पिजि-अरच् । हरिताले, स्वर्णे, नागकेशरे, विहङ्गादिबन्धनस्थाने, देहास्थिरन्ध्रे च । अश्वभेदे पु० । पीतरक्तवर्णे, पीतवर्णे च पु० । तद्वति त्रि० ।

पिञ्जल न० पिजि-कलच् । हरिताले, कुशपत्रे च । अत्यन्ताकुलसैन्यादौ पु० । कुशानरवेदिति शाकफलद्रव्ये स्त्री० ङीप् । [(पाटज) ।

पिञ्जिका स्त्री० पिजि-ण्वुल् अत इत्वम् । तूलनालिकायां,

पिट शब्दे सङ्घाते च भ्वा० पर० सक० सेट् । पेटति अपेटीत् ।

पिट(क) पु० पिट-क, । वंशादिनिर्मिते पात्रभेदे पेटरा विस्फोटे त्रि० । स्वार्थे कन् अत्रैव ।

पुष्पनवलयुक्तकाष्ठेऽभिषेकभेदे । [ति अपुपुस्तत् त ।

**पुस्त** अन्ये, अनादरे, आदरे च चु॰उभ॰सक॰सेट् । पुस्तयति

**पुस्त** न॰पुस्त-अच् । 'मृदा वा दारुणा वापि वस्त्रेणाप्यथ चर्मणा लौहरत्नैः कृतं वापि पुस्तमित्यभिधीयते' इत्युक्ते लिप्यादि शिल्पकर्मणि । स्वार्थे कन् । 'लिप्याधारे ग्रन्थे, पु॰स्त्री॰ स्त्रीत्वे ङीप् ।

**पू** शोधे दि॰आत्म॰सक॰सेट् । पूयते अपविष्ट ।

**पू** शोधे भ्वा॰आ॰सक॰सेट् । पवते अपविष्ट । [अपविष्ट

**पू** शोधे क्र्यादि॰ प्रा॰ उभ॰ सक॰ सेट् पुनाति पुनीते अपावीत् ।

**पूग** पु॰ पू-गन् किञ्च । (सुपारि) वृक्षे, समूहे छन्दसि, भावे कण्टकिवृक्षे च ।

**पूज** पूजने चु॰उभ॰सक॰सेट् । पूजयति ते अपूपुजत् त ।

**पूजा** स्त्री॰ पूज-अ । अर्चने । ल्युट् । पूजनमप्यत्र न॰ ।

**पूजार्ह** त्रि॰ पूजामर्हति अण् । पूजनयोग्ये ।

**पूज्य** पु॰ पूज-यत् । श्वशुरे । पूजनीयमात्रे त्रि॰ ।

**पूण** राशीकरणे चु॰उभ॰सक॰सेट् । पूणयति ते अपूपुणत् त

**पूत** न॰पू क्त । अपनीततुषे, (आगड़ारहित) बहुलीकृते धान्ये च । व्रतादिना शुद्धे त्रि॰ । सत्ये । शङ्खे, श्वेतकुशे, विकङ्कतवृक्षे च पु॰ । दूर्वायां स्त्री॰ टाप् ।

**पूतक्रतायी** स्त्री॰पूतक्रतोरिन्द्रस्य पत्नी ङीप् ऐङ् च । शच्याम्

**पूतक्रतु** पु॰ क्रतुभिः पूतः, पूता पवित्रतासम्पादका क्रतवो यस्य यस्य वा । इन्द्रे ।

**पूतगन्ध** पु॰ पूतो गन्धो यस्य । बर्बरे (वावुइतुलसी)

**पूतकुश** न॰ कर्म॰ । श्वेतकुशे ।

**पूतना** स्त्री॰ पूतं करोति पूत+णिच्-युच् । हरीतक्यां, गन्धमांस्यां, बकासुरभगिन्यां, या विषाक्तं स्तन्यं पाययन्ती कृष्णेन हता । रोगभेदे,बालकमातृकाभेदे च 'पूतना जम्भकादय'

**पूतनारि** पु॰ ६त॰ । श्रीकृष्णे ।

**पूतफल** पु॰ पूतानि फलान्यस्य । पनसे (काटाल) ।

**पूति** न॰ पू क्तिच् । खट्टाशिपत्त्ये । क्तिन् । पवित्रतायाम् । पूयविशरणे दुर्गन्धे च क्तिच् । दुर्गन्धे । दुर्गन्धयति त्रि॰ ।

**पूतिक** न॰ पूत्या दुर्गन्धेन कायति कै-क । विष्ठायाम्, पूतिकरञ्जे पु॰ । शाकभेदे स्त्री॰(पुइ) 'पूतिका मल्लघातिके'ति ख्याति

**पूतिकरज(ञ्ज)** पु॰ पूतियुक्त करज (ञ्ज) (नाटाकरमचा) करञ्जभेदे । [दारुणि । मत्वार्थे कन् । सरलवृक्षे पु॰ ।

**पूतिकाष्ठ** ६त॰ पूते पावनार्थं काष्ठम् चतुर्थ्यर्थे ६त॰ । देव

**पूतिगन्ध** पु॰ पूतिर्दुष्टो गन्धो यस्य । गन्धके, इङ्गुदीवृक्षे च । कर्म॰ । दुर्गन्धे पु॰ ।

**पूतिगन्धि** पु॰ पूतिर्दुष्टो गन्धो यस्य इत् समा॰ । दुर्गन्धयति ।

**पूतितैला** स्त्री॰ पूति दुर्गन्धं तैलं यस्याः । ज्योतिष्मत्याम् ।

**पूतिपत्र** पु॰ पूतीनि पत्राण्यस्य । श्योनाकभेदे । [जम्बीरभेदे

**पूतिपुष्पिका** स्त्री॰ पूतीनि पुष्पाण्यस्याः । मातुलुङ्गायाम्

**पूतिफला(ली)** पूतीनि फलान्यस्याः वा ङीप् । सोमराज्याम् ।

**पूतिमयूरिका** स्त्री॰ पूतिर्मयूरीव तत इवार्थे कन् । अजमोदायाम् । [युक्तवायौ पु॰ ।

**पूतिमेद** पु॰ पूतिर्मेदोऽस्य । अरिमेदे विट्खदिरे । [दुर्गन्ध

**पूतिवात** पु॰ पूत्यै पवित्रतायै वातोऽस्य । बिल्ववृक्षे । कर्म॰।

**पूतिवृक्ष** पु॰ कर्म॰ । श्योनाकवृक्षे ।

**पूप** पु॰ पू पक् । पिष्टके (पिठा) ।

**पूपाष्टका** स्त्री॰ अष्ट परिमाणं यस्याः कन् अष्टका अष्टमी उपचारात् तत्कर्तव्यं श्राद्धम् पूपद्रव्यसाधनाष्टका । कर्म॰ अग्रहायण्याः परतः कृष्णाष्टमीविहिते श्राद्धे ।

**पूय** दुर्गन्धे अक॰ भेदने विशरणे च सक॰ दिवा॰ आत्म॰सेट् । पूयते अपूयिष्ट ।

**पूय** न॰ पूय-अच् । मथादिनि क्षते रक्तविकारभेदे (पुज) ।

**पूयारि** पु॰६त॰ । निम्बवृक्षे पूयनाशकादस्यापत्य । [अपूरि॰

**पूर** पूर्त्तौ प्रीणने च दिवा॰आत्म॰ सक॰ सेट् । पूर्यते अपूरि॰

**पूर** पु॰ पूर-क । जलसमूहे, खाद्यभेदे, व्रणशुद्धौ च ।

**पूरक** पु॰ पूर ण्वुल् । बीजपूरे, जम्बीरभेदे (टावा लेबु) अष्टाङ्गयोगप्रसिद्धे प्राणायामाङ्गे वायूर्ध्वपूरणरूपे व्यापारभेदे च । पूरणकर्त्तरि त्रि॰। मृतस्याशौचदिकदेहोत्तरं प्रेतदेहनिर्वाहकेऽशौचमध्ये देये पिण्डदानभेदे॰

**पूरण** न॰ पूर ल्युट् । अङ्कशास्त्रप्रसिद्धे गुणने, वृष्टौ, कुटन्नटे, वामतन्तुषु च । ल्यु । सेतौ, समुद्रे च पु॰ । मङ्गापूरणे पूरयितरि च त्रि॰ । यथा द्वयोः पूरणः । द्वितीयः ।

**पूरणी** स्त्री॰ पूर्यतेऽनया । पूरणसङ्ख्यायां यथा द्वयोः पूरणी द्वितीया । शाल्मलिवृक्षे च ।

**पूरित** त्रि॰ पूर क्त । पूर्णे, गुणिते च ।

**पूरुष** पूर उषन् । पुरुषे, नरे ।

**पूर्ण** त्रि॰ पूर-क्त नि॰ । पूरिते, शक्ते, समस्ते च ज्योतिषोक्तासु उभयपक्षयोः पञ्चमीदशमीपञ्चदशीषु च स्त्री॰ ।

**पूर्णकोष्ठा** स्त्री॰ पूर्णं कोष्ठं यस्याः । नागरमुस्तायाम् ।

**पूर्णपात्र** न॰ कर्म॰ । हर्षकाले पुत्रजन्मोत्सवादावृत्सवात् आकृष्य वस्त्रादेर्ग्रहणे, होमान्ते ब्रह्मदक्षिणार्थतया देये 'अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ च पुष्कलम् । पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते' इत्युक्तमानवति तण्डुलादौ ।

पूर्णमास पु० पूर्णमास्यां विहित अण्। पूर्णिमायां कर्त्तव्ये यागभेदे 'दर्शपूर्णमासाभ्यां यजेते'ति श्रुतिः। [तिथौ।

पूर्णमासी स्त्री० पूर्णो माश्चन्द्रमा यस्यां गौरा० ङीप्। पूर्णिमा-

पूर्णवीज पु० पूर्णानि वीजान्यत्र। बीजपूरे। (टाबालेबु)

पूर्णिमा स्त्री० पूर-क्तिन् नि० पूर्त्तिं पूरणं चन्द्रकलापूरणं निमीते मा-क। चन्द्रस्य पञ्चदशकलापूरणवत्यां तिथौ।

पूर्त्त न० पूर-क्त नि०। खातादिकर्मणि विश्वजनोद्देशेन जलाशयदानादौ। भावे क्त। पूरणे न०। कर्त्तरि क्त। पूरिते त्रि०

पूर्व(र्व) निवासे अद० निमन्त्रणे सक० चुरा० उभ० सेट् पक्षे भ्वा० पर०। पूर्व(र्व)यति पूर्व(र्व)ति अपुपूर्व(र्व)त्। अपूर्वी(र्वी)त्

पूर्व(र्व) त्रि० पूर्व(र्व)-अच्। प्रथमे, आदौ-दिग्देशकाले, अग्रजे, ज्येष्ठे भ्रातरि च। सर्वनामतास्य। [भगिन्यां स्त्री० ङीप्।

पूर्व(र्व)ज पु० पूर्व(र्व) जायते जन-ड। ज्येष्ठभ्रातरि। ज्येष्ठ-

पूर्व(र्व)दिक्पति पु० ६त०। इन्द्रे।

पूर्व(र्व)दिश् स्त्री० कर्म०। प्रथमसूर्योदयसम्बन्धायां दिशि।

पूर्व(र्व)देव पु० पूर्व(र्व) देवः प्रथमात् पापाचरणात् भ्रष्टः, अथ वा पूर्व(र्व) श्रेष्ठो देवः। असुरे।

पूर्व(र्व)देश पु० कर्म०। प्राच्यामवस्थिते जनपदे।

पूर्व(र्व)पक्ष पु० कर्म०। व्यवहारविवादस्थे व्यवहारे प्रतिज्ञारूपे प्रथमेऽवयवे, 'पूर्व(र्व)पक्षोऽभवेद्यस्य भवेद्यस्तस्य वादिनः' इति स्मृतिः। 'विषयो विशयश्चैव पूर्व(र्व)पक्षस्तथोत्तरम्। निर्णयश्चेति सिद्धान्तः शास्त्रेऽधिकरणं स्मृतमि'ति मीमांसोक्ते न्यायावयवभेदे सिद्धान्तविरुद्धकोटिप्रतिपादके वाक्ये।

पूर्व(र्व)पद न० कर्म०। व्याकरणोक्ते उत्तरपदादव्यवहिते प्राग्वर्त्तिनि, समासस्य प्रथमावयवे च सुप्तिङन्तरूपे पदे।

पूर्व(र्व)पर्वत पु० कर्म०। उदयाचले। यत्र सूर्यस्य प्रथमदर्शनं भवति पश्यति। तथा च विषमस्थितिरपि यत्र स्थानात् प्रथमं सूर्योदर्शनयोग्यो भवति तदेव स्थानं पर्वत इति व्यवह्रियते। पूर्व(र्व)शैल उदयाचल।

पूर्व(र्व)फल्गुनी स्त्री० द्विव०। अश्विन्यवधिके एकादशे नक्षत्रे।

पूर्व(र्व)वादिन् पु० व्यवहारे पूर्व(र्व) प्रथमं वदति वद-णिनि। प्रथमाभियोक्तरि वादिनि (फरियादी)।

पूर्वा(र्वा)षाढा स्त्री० अश्विन्यादिषु नक्षत्रेषु विंशतितमे नक्षत्रे।

पूर्वा(र्वा)ह्ण पु० पूर्व(र्व)मह्नः एकदेशिस० टच् समा० अह्नादेशः णत्वम्। त्रिधा विभक्तदिवसस्य प्रथमे भागे, 'पूर्वाह्णो वै देवाना'मिति श्रुतिः। प्रथमे अर्द्धदिने च 'आवर्त्तं चन्द्रदेवित्यं पूर्वा(र्वा)ह्णे प्रहरद्वये' इति पुराणम्। [दिवसे

पूर्वे(र्वे)द्युस् अव्य० पूर्व(र्व)स्मिन् दिवसे पूर्व+(र्व)+एद्युस्। प्रथम

पूल संघाते वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। पूलयति-ते पूलति। अपूपुलत् त अपूलीत्।

पूष वृद्धौ अक० भ्वा० पर० सेट्। पूषति अपूषीत्।

पूष पु० पूष-क। महाराष्ट्रदेशे (तूत) वृक्षे। पूषकोऽपि अत्रैव।

पूषन् पु० पूष-कनिन्। सूर्य्ये। [व्याप्रियते व्यापृत।

पृ व्यापारे तु० आत्म० अक० अनिट्। प्रायेणायम् व्याङ्पूर्व्वः।

पृ प्रीतौ स्वा० पर० सक० अनिट्। पृणोति अपार्षीत्।

पृ पालने जुहो० पर० सक० अनिट् वा दीर्घ०। पिपर्त्ति पिपृतः-पिप्रति। अपार्षीत्-अपारीत्। पपार -पपरतुः।

पृ पूर्त्तौ चु० उभ० सक० सेट्। पारयति-ते अपीपरत्-त।

पृक्का स्त्री० पृच-कन् न्यङ्क्वा० कुत्वम्। (पिडिङ्) शाकभेदे।

पृच सम्पर्के अदा० आत्म० अक० सेट्। पृक्ते अपर्चिष्ट। क्त। पृक्तम्।

पृच सम्पर्के रु० पर० अ० सेट्। पृणक्ति अपर्चीत्। क्त। पृक्तम्।

पृच संयमने अक० सम्पर्के सक० चु० उभ० पक्षे भ्वा० पर० सेट्। पर्चयति-ते पर्चति। अपीपृचत्-त अपपर्चत्-त अपर्चीत्।

पृच्छा स्त्री० प्रच्छ-अङ् संप्रसारणम्। प्रश्ने ज्ञातुमिच्छया कथनाय प्रेरणे।

पृज सम्पर्के, अदा० आ० सक० सेट्। पृक्ते अपर्जिष्ट। क्त। पृक्त।

पृड सुखे तु० पर० अक० सेट्। पृडति। अपर्डीत्।

पृण तर्पणे तु० पर० सक० सेट्। पृणति अपर्णीत्।

पृतना स्त्री० पृ-तनन्-किच्। [illegible]
[illegible]

पृथक्पर्णी स्त्री० पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे । [भेदे, विशेषे ।

पृथगात्मता स्त्री० पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।

पृथगात्मिका स्त्री० पृथक् भिन्न आत्मा यस्याः कप् । व्यक्तौ सामान्यधर्मस्य यथा सर्वत्र समरूपतया सर्वेनानुगमकत्वम् नैव व्यक्तेः तस्याः भिन्नभिन्नाश्रयत्वात् ।

पृथग्जन पु० पृथक् भिन्नो जनो यस्मात् । नीचे, मूर्खे, पामरे च

पृथग्विध त्रि० पृथक् भिन्ना भिन्ना विधा यस्य । नानारूपे ।

पृथग्बीज पु० पृथक् बीजं यस्य । भल्लातकवृक्षे (भेला) ।

पृथा स्त्री० कुन्तिभोजकन्यायाम् कुन्त्याम् ।

पृथाज पु० पृथायां जायते जन-ड । कुन्तीपुत्रे युधिष्ठिरादौ, अर्ज्जुनवृक्षे च । पृथात्मजादयोऽप्यत्र ।

पृथि(थ)वी स्त्री० प्रथते विस्तारमेति प्रथ षिवन् (षवन्)वा त्रि० सम्प्रसारणं षित्त्वात् ङीप् । धरायाम् क्षितौ ।

पृथिवीपति पु ६त० । स्वमतौ भूपतौ । पृथिवीपालादयोऽप्यत्र

पृथु पु० प्रथ-कु । सूर्य्यवंश्ये वेनराजस्य दक्षिणबाहुमन्थनजाते नृपभेदे, कृष्णजीरके च । महति, स्थूले, दक्षे च त्रि० । स्त्रियां ङीप् वा ।

पृथुक पु० न० । पृथुवत् कायति कै क । चिपिटके, 'द्विःखिन्नं पृथुकमिति स्मृतिः' । बालके पु० । 'पृथुकार्त्तस्वरपात्र'मिति हिङ्गुपत्र्यां, बालिकायाञ्च स्त्री० ।

पृथुकोल पु० कर्म० । राजबदरे ।

पृथुपत्र पु० पृथूनि पत्राण्यस्य । रक्तलशुने ।

पृथुपलाशिका स्त्री० पृथूनि पलाशान्यस्याः गौ० ङीष् स्वार्थे कन् । शठ्याम् ।

पृथुरोमन् पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । मत्स्ये

पृथुल त्रि० पृथु+स्वार्थे लच्, पृथु पृथुत्वमस्त्यस्य लच् वा । स्थूले । हिङ्गुपत्र्यां स्त्री० ।

पृथुशिम्ब पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे ।

पृथूदर पु० पृथु उदरं यस्य । मेषे, वृहत्कुक्षौ त्रि० ।

पृथ्वी स्त्री० पृथुल गुणयुक्ता स्त्री ङीप् । भूमौ, हिङ्गुपत्र्यां, स्थूलैलायाम्, पुनर्नवायां कृष्णजीरके च । स्वार्थे कन् पृथ्वीका । वृहदेलायाम् हिङ्गुपत्र्यां, कृष्णजीरके च ।

पृथ्वीकुरुबक पु० पृथ्व्या भूमौ कुरुबक इव शुभ्रत्वात् । श्वेतमन्दारके । [गजे, चित्रके वृक्षे च ।

पृदाकु पु० पर्द गतौ काकु सम्प्रसारणम् । सर्पे, वृश्चिके व्याघ्रे

पृश्नि त्रि० स्पृश नि, प्रच्छ नि वा पृ० । खर्व्वदुर्बलाल्पके, स्वल्पे च । रश्मौ, देवक्या जननीच स्त्री० । संज्ञायां कन् ।

कुम्भिकायां (पाना) स्त्री० वा ङीप् । [लतायाम् ।

पृश्निगर्भ पु० ६ब० । देवकीसूनौ श्रीकृष्णे । [विस्तातायां

पृश्निपर्णी स्त्री० पृश्नि अल्पं पर्णमस्याः ङीप् । (चाकुलिया)

पृष सेके भ्वा०आ०सक०सेट् । पर्षते अपर्षिष्ट ।

पृषत् न० पृष-अति क्विप् । विन्दौ । सेकयुक्ते त्रि० ।

पृषत पु० पृष-अतच् किच्च । शुभ्रविन्दुमति मृगभेदे, विन्दौ च

पृषताम्पति पु० ६त० अलुक् स० । वायौ ।

पृषताश्व पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य । वायौ

पृषत्क पु० पृषत्+संज्ञायां कन् । बाणे ।

पृषदश्व पु० पृषतो विन्दोरश्व इव वाहकत्वात् । वायौ ।

पृषदाज्य न० पृषद्युक्तं दधिविन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक० । दधिमिश्रे घृते ।

पृषन्ति पु० पृष-झच् किच्च । विन्दौ ।

पृषोदर त्रि० पृषदुदरे यस्य पृषो० नि० । विन्दुगर्भिते । [भेदे च

पृष्ठ न० पृष-थक् स्फुभाव । तनौ पश्चाद्भागे, वेदप्रसिद्धे स्तोम-

पृष्ठतस् अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।

पृष्ठदृष्टि पु० पृष्ठे पश्चात् दृष्टिरस्य । भल्लूके ।

पृष्ठवंश पु० ६त० । पृष्ठस्थे दण्डाकारेऽस्थ्नि । [हयादौ

पृष्ठवाह् पु० पृष्ठेन वहति वह ण्वि । पृष्ठेन शकटादिवाहके

पृष्ठ्य न० पृष्ठानां स्तोत्राणां समूहः यत् । स्तोत्रसमूहे । वहति यागभेदे, पृष्ठेन वहति यत् । पृष्ठवाहकाश्वादौ च त्रि० ।

पृष्णि स्त्री० प्रच्छ निङ् सम्प्रसारणं षत्वम् । रश्मिमात्रार्थे, पृष्ण्यां च

पॄ पालने पूर्त्तौ च क्र्या०प्वा०पर०सक०सेट् । पृणाति अपारीत्

पॄ पूर्त्तौ चु०उभ०सक०सेट् । पारयति ते अपीपरत् त ।

पेचक पु० पच वुन् इत्त्व । (पेंचा) उलूके, गजपुच्छमूलभागे, पर्यङ्के, यूके, मेघे च ।

पेचुली स्त्री० पच उलच् इत्त्व गौ०ङीष् । (कचु) शाकभेदे ।

पेटक पु० न० पिट-ण्वुल् । पुस्तकादीनां स्थापनार्थं वेत्रादिनिर्मिते पदार्थे, समूहे च । [कारफलयुते दले ।

पेटिका स्त्री० पेटीव कायति कै-क पृ० । (टेपारी) पेटका-

पेटी स्त्री० पिट-अच् गौरा० ङीष् । स्वल्पपेटके ।

पेण गतौ प्रेषे च सक० श्लेषे अक० भ्वा० पर० सेट् । पेणति अपेणीत् । घटि न ह्रस्वः । [घटि न ह्रस्वः ।

पेल कम्पे अक० गतौ सक० भ्वा० पर० सेट् । पेलति अपेलीत् ।

पेल न० पेल-अच् । पुंसश्चिह्ने अङ्गभेदे (अण्डकोष) । [च

पेलव त्रि० पेल-अच् पेलं वाति वा-क । कोमले, कृशे, विरले

पेव सेवने भ्वा०आत्म०सेट् । पेवते अपेविष्ट । घटि न ह्रस्व

पेश(ष)ल त्रि० पिश(ष)-अलच् । सुन्दरे, दक्षे, कोमले च ।

तुल्ये, प्रतिरूपे, प्रतिरोधे च । [रूपतायां सादृश्ये च ।
प्रतिच्छाया स्त्री० प्रतिरूपा छाया प्रा० । प्रतिमायां, प्रति-
प्रतिजागर पु० जागरस्य प्रतिनिधि । मनोवेक्षणाय स्थानमवे-
क्षणे ति नियोगे । [कारे भावप्रसिद्धि । (खालजिव) ।
प्रतिजिह्वा स्त्री० प्रतिरूपा जिह्वा । तालुमूलस्थे जिह्वा-
प्रतिज्ञा स्त्री० प्रति+ज्ञा अ । कर्त्तव्यतयोपदेशे साध्यत्वेन
पक्षनिर्देशे, यथा पर्वतोवह्निमान् इत्यादिवाक्यम् अनेन
वह्निमत्त्वेन पर्वतस्य निर्देश । व्यवहारे पक्षाभिप्रायके
'इदमनेन मम ग्रहीत न ददाती'ति वाक्ये च । ल्युट्
प्रतिज्ञानमप्यत्र न० ।
प्रतिज्ञात त्रि० प्रति+ज्ञा क्त । प्रायुक्तप्रतिज्ञाविषये 'ततोऽर्थी
लेखयेत् सद्यः प्रतिज्ञातार्थसाधन'मिति स्मृति ।
प्रतिदान न० प्रतिरूप तुल्यरूप दानम् प्रा०स० । विनिमये तु
ल्यरूपदाने, न्यस्तस्य द्रव्यस्य प्रत्यर्पणे च । [विपर्यये तिथि
प्रतिध्वनि पु० प्रतिरूपोध्वनि । प्रतिशब्दे 'प्रतिध्वनीनामक्षता
प्रतिध्वान पु० प्रति+ध्वन घञ् । प्रतिशब्दे ।
प्रतिनप्तृ पु० प्रतिनिहितो नप्ता पौत्र प्रा० । प्रपौत्रे ।
प्रतिनिधि पु० प्रति+निधीयते तुल्यरूपतया स्थाप्यते प्रति+
नि+धा कि । प्रतिरूपे, प्रतिमायां च ।
प्रतिपक्ष पु० प्रतिकूल पक्षो यस्य । शत्रौ व्यवहारे विरुद्ध-
पक्षे प्रतिवादिनि च । प्रा०स० । सादृश्ये ।
प्रतिपत्ति स्त्री० प्रति+पद क्तिन । प्रवृत्तौ, प्रागल्भ्ये, गौरवे
प्राप्तौ पदप्राप्तौ, कर्त्तव्यताज्ञाने च 'विषादलुप्तप्रतिपत्ति
विस्मितमि'ति रघु ।' [(छोटउच्चे)
प्रतिपन्नफला स्त्री० प्रतिपन्न फल यस्या । कुष्माण्डवृक्षे ।
प्रतिपद् स्त्री० प्रतिपद्यते उपक्रम्यते पक्षोऽनया प्रति+पद
क्विप् । पक्षारम्भके तिथौ ।
प्रतिपन्न त्रि० प्रति+पद क्त । अवगते स्वीकृते, 'प्रतिपन्न हि
विचेतनैरपी'ति कुमार । विक्रान्ते च । [च
प्रतिपादन न० प्रति+पद णिच् ल्युट् । दाने, बोधने, प्रतिपत्तौ
प्रतिप्रसव पु० प्रति+प्र+सू अप् । निषिद्धस्य पुन प्राप्तिसम्भा
वनायाम् । [रोधके त्रि०
प्रतिबन्ध पु० प्रति+बन्ध घञ् । कार्यप्रतिघाते । ण्वुल् । प्रति
प्रतिबन्धि(बन्दि) पु० प्रति+बन्ध (बन्द) भा इन । अनिष्टा-
पत्तिप्रसञ्जके वाक्ये ।
प्रतिबल पु० प्रतिकूल बल यस्य । 'शत्रौ प्रतिबलजये'दिति
वेणी० । प्रतिरूप बल यस्य । तुल्यबले त्रि० 'यो मे
प्रतिबलो लोके' इति चण्डी ।

प्रतिभय त्रि० प्रतिगत भयमस्मात । भयहेतौ भयङ्करे ।
प्रतिभा स्त्री० प्रति+भा अ । बुद्धौ, प्रत्युत्पन्नबुद्धौ च ।
प्रतिभू पु० प्रतिनिधि भवति भू क्विप् । लग्नके (जामिन) ।
प्रतिमा स्त्री० प्रति+मा अ । गजदन्तस्य बन्धे, सदृशीकरणे,
सदृशमृत्तिकाशिलादिमूर्त्तौ । 'प्रतिमायां शिलाबुद्धि'रिति
पुराणम् । ब० उत्तरपदस्य । सदृशे त्रि० । यथा इन्द्रप्रतिम
प्रतिमान न० प्रतिमीयतेऽनेन प्रति मि मा वा ल्युट । प्रति
बिम्बे प्रतिमायां, गजकुम्भस्याधोभागे दन्तयोर्मध्यस्थाने च
प्रतिमुक्त त्रि० प्रति+मुच+क्त । परिहिते, परित्यक्ते च ।
प्रतियत्न पु० प्रति+यत नङ । वाञ्छायाम्, उपग्रहे, निग्र-
हादौ, वन्द्या सतो गुणान्तराधानरूपे संस्कारे, यत्ने,
प्रतिग्रहे च । प्रतिरूपो यत्नो यस्य ब० प्रतियत्नयुक्ते त्रि०
प्रतियातना स्त्री० प्रति+यात्यतेऽनया यु० यत णिच । प्रति-
मायाम् प्रा०स० । तुल्यरूपयातनायाम् ।
प्रतियोगिन् त्रि० प्रतिरूप युज्यते प्रति+युज घिनुण् । प्रति
कूलसम्बन्धवति । यथा अभावस्य प्रतियोग्युपसम्बन्धवत्त्वात्
घटादिकस्य प्रतियोगी । विरुद्धपक्षे च ।
प्रतिरूप न० प्रतिगत रूपम् । प्रतिच्छायायां प्रतिबिम्बे च
प्रतिगत रूपमस्य ब० । सदृशे त्रि० । स्वार्थे कन । तत्रार्थे ।
प्रतिरोध पु० प्रति+रुध भावे घञ् । बाधे प्रतिबन्धे निरोधे
तिरस्कारे चौर्ये च । कर्त्तरि अच । चौरे । ण्वुल् तिरस्कारक
प्रतिलोम त्रि० प्रतिगत लोम आनुकूल्यमस्मात प्रति+लोमन्
अच समा० । वामे विपरीते
प्रतिलोमज पु० प्रतिलोमात् जात जन ड । उत्तमवर्णस्त्रियाम
अधमवर्णात् जाते सङ्कीर्णवर्णे । [शब्दे च ।
प्रतिवचन न० प्रतिरूप वचनम् । प्रतिवाक्ये उत्तरे विरुद्ध
प्रतिवात त्रि० प्रतिगतो वातो यत् । यस्मात् प्रदेशात् वायु
मत्यागच्छति तस्मिन् देशे 'प्रतिवातेऽनुवाते चे'ति भट्ट ।
प्रतिवादिन् पु० त्रि० प्रतिकूल वदति वद णिनि । प्रतिपक्षे
व्यवहारे प्रत्यर्थिनि अभियोक्ते (आसामी) 'कार्ये प्रति
वादिनो'ति स्मृति ।
प्रतिवासि(वेशि)न् त्रि० प्रत्यासन्न वसति (विशति) प्रति+वस
(विश) वा णिनि । (पड़शि) स्वहाससमवासिनि स्त्रियां
ङीप । 'इति हि प्रतिवासि(वेशि)नी'ति का०द०१५ ।
प्रतिविधान न० प्रति+वि+धा ल्युट । प्रतीकारे ।
प्रतिबिम्ब न० प्रतिरूप बिम्बम् । बिम्बसादृश्ये प्रतिच्छायायाम
प्रतिविषा स्त्री० प्रतिविध विष यया । अतिविषायाम् (आतइच)
प्रतिशासन न० प्रति+शास ल्युट । भृत्यादेर्निर्देशस्य नियोगे

प्रतिश्याय पु॰ प्रति+श्यै-ण । पीनसरोगे । [श्लेष्मे, ध्वाश्रये च

प्रतिश्रय पु॰ प्रतिश्रीयते प्रति+श्रि-अच् । यज्ञस्थे, सभायां,

प्रतिश्रव पु॰ प्रति+श्रु-अप् । स्वीकारे ।

प्रतिश्रुत् स्त्री॰ प्रतिरूपं श्रूयते श्रु-क्विप् । प्रतिशब्दे प्रतिध्वनौ

प्रतिषेध पु॰ प्रति+षिध-घञ् । निषेधे 'मा कुरु' इत्यादिना

निवारणे । ल्युट् । तत्रैव न॰ ।

प्रतिष्टम्भ पु॰ प्रति+स्तम्भ-घञ् षत्वम् । प्रतिबन्धे ।

प्रतिष्ठा स्त्री॰ प्रति+स्था-अङ् । स्थितौ, व्रतयागादेः समाप्तौ, चतुरक्षरपादके छन्दोभेदे, कूपादेः संस्कारे, व्रतानां समाप्तौ कर्त्तव्ये कर्मभेदे, आश्रये च 'मह्यं पुच्छं प्रतिष्ठे'ति श्रुतिः ।

प्रतिसर पु॰ प्रति-सृ-अच् । सैन्यपश्चाद्भागे, हस्तसूत्रे च ।

प्रतिसर्ग पु॰ प्रतिरूपः प्रतिकूलो वा सर्गः । ब्रह्मणः सृष्टि-त्वाया मरीच्यादिसृष्टौ प्रलये च । [निकायाम् (पददा)

प्रतिसीरा स्त्री॰ प्रतिषिनोति सीयते वा रक् दीर्घश्च । जव-

प्रतिसूर्य्यक पु॰ प्रतिरूपः सूर्य्यः स्वार्थे कन् । उपसूर्य्यक-मण्डले (सूर्य्यसभा) । तत्तुल्यवर्णे कृकलासे च ।

प्रतिसृष्ट त्रि॰ प्रति+सृज-क्त । प्रत्याख्याते, प्रेषिते च ।

प्रतिसोमा स्त्री॰ प्रतिनिहिता सोमा सोमवल्ली । महिषवल्ल्याम्

प्रतिहत त्रि॰ प्रति+हन-क्त । द्विष्टे, रुद्धे निरस्ते, प्रतिस्खलिते च

प्रति(ती)हार पु॰ प्रति+हृ-घञ् वा दीर्घः । द्वारे अण् । द्वारस्थे, मायाकारे च त्रि॰ स्त्रियां ङीप् । ण्वुल् । द्वारपाले त्रि॰ । णिनि । प्रतीहारीत्यप्यत्र, मायाकारे च । [त्रि॰

प्रतीक पु॰ प्रति+कन् नि॰ दीर्घ । अवयवे । प्रतिरूपे, विलोमे च

प्रतीक्षा स्त्री॰ प्रति-ईक्ष अ । अपेक्षायाम् ।

प्रतीक्ष्य त्रि॰ प्रति+ईक्ष-ण्यत् । पूज्ये 'प्रतीक्ष्यं तत्प्रतीक्ष्यायै पितृकन्ये' इति माघः । [प्रतीच्योऽप्यत्र

प्रतीचीन त्रि॰ प्रतीच्यां भवः ख । पश्चिमदिग्भवे । यत् ।

प्रतीत त्रि॰ प्रति-इण-क्त । ख्याते, ज्ञाते, हृष्टे, सादरे च ।

प्रतीति स्त्री॰ प्रति-इण-क्तिन् । ज्ञाने, ख्यातौ, आदरे, हर्षे च

प्रतीप त्रि॰ प्रति+अप्-कर्म॰ अच् नि॰ । प्रतिकूले । चन्द्रवंश्ये, नृपभेदे पु॰ । [णिनि । भार्य्यायाम् ।

प्रतीपदर्शिनी स्त्री॰ प्रतीपं प्रतिकूलं दर्शयति दृश-णिच्

प्रतीर न॰ प्रतीर्य्यते प्र+तीर-क । तटे, तीरे ।

प्रतीवाप पु॰ प्रति+वप-घञ् दीर्घः । गलितस्वर्णादेरवचूर्णने

प्रतोद पु॰ प्रतुद्यतेऽनेन तुद-घञ् । अश्वादिताडनदण्डे (चाबुक)

प्रतोली स्त्री॰ प्र+तुल अच् गौ॰ ङीष् । रथ्यायाम्, दुर्गाभ्यन्तरमार्गे, द्वारादौ निर्मिते पथि च ।

प्रत्न त्रि॰ प्र+त्न । पुरातने ।

प्रत्यक्पर्णी स्त्री॰ प्रत्यञ्चि पर्णान्यस्याः ङीप् । अपामार्गे प्रत्यक्पुष्पीत्यप्यत्र । [दृष्टे, नृपिधापनयोश्च ।

प्रत्यक्श्रेणी स्त्री॰ प्रतीची श्रेणीव अस्याः न कप् । दन्ती-

प्रत्यक्ष अव्य॰ प्रतिरूपमक्ष्णः अव्ययी॰ अच् । इन्द्रियजन्ये ज्ञानभेदे । अर्श आद्यच् । तद्विषये त्रि॰ ।

प्रत्यग्र त्रि॰ प्रतिगतमग्रमग्रत्वम् प्रा॰ । नूतने, शोधिते च ।

प्रत्यङ्गिरा स्त्री॰ देवीभेदे ।

प्रत्यच् त्रि॰ प्रति+अन्च-क्विन् । पश्चिमकाले, पश्चिमदेशे च पश्चिमायां दिशि स्त्री॰ ङीप् । प्रतीची ।

प्रत्यनीक पु॰ प्रतिकूलमनीकं यस्य । रिपौ, विघ्ने च ।

प्रत्यन्त पु॰ प्रतिगतोऽन्तम् प्रा॰ । म्लेच्छदेशे । सन्निकृष्टदेशे त्रि॰

प्रत्यन्तपर्व्वत पु॰ प्रत्यन्तः सन्निकृष्टः पर्व्वतः । वृहत्पर्व्वत-समीपस्थे पर्व्वते ।

प्रत्यभियोग पु॰ प्रतिरूपोऽभियोगः । अभियुक्तेन प्रतिवादिना स्वाभियोगिनं प्रति अभियोगान्तरकरणे ।

प्रत्यभिवाद पु॰ प्रति+अभि+वद णिच्-घञ् । अभिवादस्य प्रतिरूपे आशीर्वचनादौ । ल्युट् । प्रत्यभिवादनमप्यत्र न॰ ।

प्रत्यय पु॰ प्रति+इण-अच् । शपथे, ज्ञाने, विश्वासे, अधीने, शब्दे, छिद्रे, आधारे, निश्चये, ख्यातौ, कारणे, 'अपेक्षते प्रत्ययमुत्तमं भि'ति कुमारः । व्याकरणोक्ते प्रकृतिं निमित्तीकृत्य विधीयमाने शब्दभेदे च ।

प्रत्ययित त्रि॰ प्रति+अय-क्त । आप्ते, विश्वस्ते, प्रतिगते च ।

प्रत्यर्थिन् त्रि॰ प्रत्यर्थयते प्रति+अर्थ-पीडने णिनि । शत्रौ, प्रतिकूलमर्थयते णिनि । व्यवहारे प्रतिवादिनि ।

प्रत्यर्पण न॰ प्रति+ऋ-णिच्-पुक्-ल्युट् । प्रतिदाने गृहीतस्य धनादेः पुनर्दाने ।

प्रत्यवसान न॰ प्रति+अव+सो-ल्युट् । भोजने ।

प्रत्यवसित त्रि॰ प्रति+अव+सो-क्त । भुक्ते ।

प्रत्यवस्कन्द पु॰ प्रति+अव+स्कन्द-घञ् । व्यवहारे चतुर्विधोत्तरमध्ये उत्तरभेदे । ल्युट् । 'अर्थिनाभिहितो योऽर्थः प्रत्यर्थी यदि तं तथा । प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं हि तदि'ति कात्यायनलक्षणे उत्तरभेदे औषधभेदे च न॰ ।

प्रत्यवस्थातृ त्रि॰ प्रत्यवतिष्ठते प्रतिपक्षतया तिष्ठति प्रति+अव+स्था-तृच् । प्रतिपक्षवादिनि शत्रौ ।

प्रत्यवाय पु॰ प्रति+अव+इण्-अच् । पापे ।

प्रत्याख्यात त्रि॰ प्रति+आ+ख्या-क्त । निराकृते दूरीकृते ।

प्रत्याख्यान न॰ प्रति+आ+ख्या ल्युट् । निराकरणे ।

प्रत्यादिष्ट त्रि॰ प्रति+आ+दिश-क्त । निरस्ते ।

प्रत्यादेश पु॰ प्रति+आ+दिश-घञ् । निराकरणे ।

प्रत्यालीढ न॰ प्रति+आ+लिह-क्त । आलीढं दक्षिणं पादं प्रत्यालीढन्तु वामकमित्युक्ते वामपादस्थापनेन दक्षिणपाद-प्रसारणरूपे धन्विनां स्थितिविशेषे । प्र॰स्वादिते त्रि॰।

प्रत्यासन्न त्रि॰ प्रति+आ+सद-क्त । अतिनिकटस्थे ।

प्रत्याहार पु॰ प्रति+आ+हृ-घञ् । योगशास्त्रप्रसिद्धे इन्द्रियाणां स्वस्वविषयेभ्यो निराकरणे ।

प्रत्युत्क्रम पु॰ प्रति+उद्+क्रम-घञ् न वृद्धिः । युद्धार्थोद्योगे, प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च ।

प्रत्युत्तर न॰ प्रतिरूपमुत्तरस्य । उत्तरस्योत्तरवाक्ये ।

प्रत्युत्थान प्रति+उद्+स्था-ल्युट् । अभ्युत्थाने आगतस्य सम्मा-ननार्थमासनादुत्थितौ । [तत्कालोचितबुद्धौ ।

प्रत्युत्पन्नमति त्रि॰ प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य ।

प्रत्युद्गमनीय न॰ प्रति+उद्+गम-अनीयर् । धौतवस्त्रयुग्मे, 'स्तद्वे ततप्रत्युद्गमनीयवस्त्रे'ति कुमारः पाठान्तरं प्रह्वे मेति न पुंस्त्वम् अभ्युत्थानयोग्ये, पूजनीये च त्रि॰ ।

प्रत्यूष पु॰ प्रत्यूषति रुजति कोपकान् ऊष-रुजायां क । प्रभाते, अष्टवसुमध्ये वसुभेदे च । असि । प्रत्यूषस् । प्रभाते

प्रत्यूह पु॰ प्रति+ऊह-घञ् । विघ्ने ।

प्रथ ख्यातौ भ्वा॰ आ॰ सक॰ सेट् घटा॰ । प्रथते अप्रथिष्ट । णिच् प्रथयति । अङ् प्रथा । [अपप्रथत् तत

प्रथ ख्यातौ चक॰ विक्षेपे सक॰ चुरा॰ उभ॰ सेट् । प्रथयति-ते

प्रथम त्रि॰ प्रथ-अमच् । प्रधाने, आद्ये च । जसि सर्वनामताऽस्य

प्रथा स्त्री॰ प्रथ-अङ् । ख्यातौ ।

प्रथित त्रि॰ प्रथ-क्त । ख्याते । [स्थूलत्वे ।

प्रथिमन् पु॰ पृथोर्भावः पृथु-इमनिच् प्रथादेशः । पृथुत्वे

प्रथुक पु॰ प्रथ-कुकन् । चिपिटके । [च ।

प्रदर पु॰ प्र+दृ-अप् । विदारणे, भङ्गे, नारीणां योनिरोगभेदे

प्रदीप पु॰ प्र+दीप-क । दीपे ।

प्रदीपन पु॰ प्रदीपयति जठराग्निम् प्र+दीप+णिच्-ल्यु । स्थावरे विषभेदे । प्रकाशके त्रि॰ ।

प्रदेश पु॰ प्र+दिश+घञ् । एकदेशे, 'विद्धः प्रदेशाखने'ति कुमारः । देशमात्रे च तर्जन्यङ्गुष्ठसम्मिते माने, भित्तौ च ।

प्रदेशन न॰ प्रदिश्यते दिश-ल्युट् । उपायनप्रदाने (भेटी) ।

प्रदेश(शि)नी स्त्री॰ प्रदिश्यतेऽनया प्र+दिश-करणे ल्युट् ङीप् । तर्जन्यां तया हि वस्तु निर्दिश्यते इति । प्रदेशिनी अत्रैव । [चतुर्मुखात्मकविष्णोर्मूर्तिभेदे च ।

प्रद्युम्न पु॰ प्रकृष्टं द्युम्नं बलं यस्य । कन्दर्पे वैष्णवागमोक्ते

प्रद्रव पु॰ प्र+द्रु-अप् । पलायने, घञ् । प्रद्रावोऽप्यत्र ।

प्रधन न॰ प्र+धा-क्यु । युद्धे ।

प्रधान न॰ प्र+धा-ल्युट् । सांख्यमतसिद्धायाम् सत्त्वरजस्तमो-रूपगुणत्रयात्मिकायां प्रकृतौ, तत्कार्ये बुद्धितत्त्वे, परमात्मनि, प्रशस्ते, श्रेष्ठे च । सेनामन्त्र्यभेदे पु॰ । श्रेष्ठे त्रि॰

प्रधि पु॰ प्रधीयते कोटान्तरे प्र+धा-कि । चक्रावयवकाष्ठ-मण्डलस्थाने रथनाभौ ।

प्रधूपिता स्त्री॰ प्र+धूप-क्त । सन्तापितायां 'व्यसनप्रधूपिता'-मितिकुमारः । ज्योतिषोक्तायां सूर्याक्रान्तायां दिशि च ।

प्रपञ्च पु॰ प्र+पचि-विस्तारे घञ् । विस्तारे, वैपरीत्ये, सञ्चये, प्रतारणे, संसारे च ।

प्रपथ्या स्त्री॰ प्रकृष्टा पथ्या प्रा॰स॰ । हरीतक्याम् ।

प्रपद न॰ प्रारब्धं पदम् प्रा॰स॰ । पादस्याग्रभागे ।

प्रपन्न त्रि॰ प्र+पद-क्त । शरणागते, 'प्रपन्नार्तिहरे! देवी'ति चण्डी

प्रपा स्त्री॰ प्रपीयतेऽस्यां प्र-पा-ड । पानीयगृहे (जलसत्रघरे)

प्रपाठक पु॰ प्रकृष्टः पाठोऽत्र कप् । वेदस्याध्यायविशेषभेदे

प्रपात पु॰ प्रपतत्यस्मात् पत-घञ् । तटरहिते निर्वृत्ते पर्वतस्थाने, निर्झरे, कूले, अवस्कन्दे च । भावे-घञ् पतने

प्रपितामह पु॰ प्रगतः पितामहो यस्मात्, प्रकृष्टः पितामहो वा । दक्षादिप्रजापतिस्रष्टायां प्रजाजनकानामुत्पादके चतुर्मुखे ब्रह्मणि, पितामहपितरि च । तत्पत्न्याम् स्त्री॰ ङीप्

प्रपुन्नाड(ट) पु॰ पुमांसं नाडयति नाटयति नड-भ्रंशे नट-अव-स्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा॰स॰ । चक्रमर्दे (चाकुन्दा) इति ख्याते । तस्य लवे प्रपुन्नाटोऽप्यत्र दद्रुमर्दने च

प्रपूरिका स्त्री॰ प्रकर्षेण पूर्यते कण्टकैः । पूर-घञ् टाप् स्वार्थे कन् । कण्टकार्याम् ।

प्रपौण्डरीक पु॰ पुण्डरीक+स्वार्थे अण् । प्रकृष्टं तदिव पुष्पं यस्य । गजमतुल्यायां चक्षुर्हितकारके पावनपर्णीहृद्यपत्रके गुल्मभेदे । [तत्र दीर्घायां स्त्री॰ ङीप् ।

प्रपौत्र पु॰ प्रगतः कारणतया पौत्रम् । पौत्रस्य पुत्रे,

प्रफुल्ल त्रि॰ प्र+फुल्ल-विकासने अच् । विकासयुक्ते । प्र+फल-क्त इत्वाभावे उत इत्वम् । प्रफुल्लमप्यत्र । 'लोभद्रुमं वात-मतः प्रफुल्ल (लत) मि'ति रघुः ।

प्रबन्ध पु॰ प्र+बन्ध-घञ् । संदर्भे, ग्रन्थादेः रचने च ।

प्रबन्धकल्पना स्त्री॰ ६त॰ । प्रबन्धकल्पनां स्तोकसत्यां प्राज्ञाः कथां विदुरित्युक्तलक्षणायाम् अल्पसत्यायां बहुमिथ्याकथायाम् ।

प्रबाल न॰ प्रकर्षेण बलति चलति ज्वलनादिना च । नवपल्लवे 'पुष्पं प्रवालोपहितं यदि स्यादि'ति कुमारः

रक्तवर्णे मणिभेदे, (लगा) वीणादण्डे च ।

**प्रबोध** पु० प्र+बुध घञ् । प्रकृष्टबुद्धौ, निद्राराहित्ये च ।

**प्रबोधन** न० प्र+बुध-णिच्-ल्युट् । कालादिष्वेशभि पूर्वगन्धस्य न्यूनताया प्रयत्नविशेषेण तदुद्दीपने ।

**प्रबोधनी** स्त्री० प्र+बुध्यतेऽनया प्र+बुध-ल्युट् । दुरालभायाम् प्रबुध्यते हरिरत्र । कार्त्तिकशुक्लैकादश्याम् । प्र+बुध-णिच्-णिनि ङीप् । प्रबोधिनी तत्रैव ।

**प्रभञ्जन** न० प्रभञ्जति वृक्षादीन् प्र+भञ्ज-युच् । वायौ ।

**प्रभद्र** पु० प्रकृष्टं भद्रमस्मात् ५ब० । निम्बवृक्षे ।

**प्रभव** पु० प्रभवत्यस्मात् प्र+भू-अप् । आद्यप्रकाशस्थाने, उत्पादके । 'क्व सूर्यप्रभवो वंश' इति रघु । ६०वर्षमध्ये वत्सरभेदे च । प्र+भू-भावे अप् । पराक्रमे जन्मनि च ।

**प्रभा** स्त्री० प्र-भा अङ् । दीप्तौ ।

**प्रभाकर** पु० प्रभां करोति कृ-अच्, सूर्ये मीमांसकभेदे च ।

**प्रभाञ्जन** पु० प्रभयाञ्जयति अनुज-णिच्-ल्यु । शोभाञ्जने ।

**प्रभात** न० प्र+भा-भावे क्त प्रकृष्टं भातमत्र । प्रातःकाले प्र+भा कर्त्तरि क्त । प्रभायुक्ते त्रि० ।

**प्रभाव** पु० प्र+भू घञ् । राज्ञां कोषदण्डजाते तेजसि, तेजसि, सामर्थ्ये, विक्रमे, शक्तौ, उद्भवे च ।

**प्रभाष** पु० प्र+भाष-अच् । अष्टवसुमध्ये वसुभेदे, प्रकृष्टकथने च ।

**प्रभास** पु० तीर्थभेदे 'प्रभास पुष्कराणि चे'ति स्नानमन्त्र ।

**प्रभिन्न** पु० प्र+भिद-क्त । स्रवन्मदे गजे । प्रभेदवति त्रि० ।

**प्रभु** पु० प्र+भू-डु । विष्णौ, शब्दे, पारदे च । स्वामिनि, अधिपतौ च त्रि० ।

**प्रभूत** त्रि० प्र+भू-क्त । प्रचुरे, उद्गते, भूते उन्नते च ।

**प्रभृति** अव्य० प्र+भृ क्तिच् । तदारभ्येत्यर्थे । ष० उत्तरपदस्य । तदादिके त्रि० ।

**प्रभेद** पु० प्रभिद्यतेऽनेन प्र+भिद घञ् । प्रकारे । भावे घञ् भेदे

**प्रभ्रष्टक** न० प्र+भ्रन्श क्त तत्र कन् । चूडातोलम्बमाने माल्ये

**प्रमथ** पु० प्र+मथ-अच् । शिवानुचरभेदे, अश्वे च । हरितक्यां स्त्री० ।

**प्रमथन** न० प्र+मथ ल्युट् । वधे, क्षोभने, विलोडने च ।

**प्रमथाधिप** पु० ६त० । शिवे, महादेवे ।

**प्रमद** पु० प्र+मद् अप् । हर्षे । प्रमाद्यत्यनेन अप् । धुस्तूरफले न० । कर्त्तरि अच् । प्रमत्ते त्रि० ।

**प्रमदवन** न० प्रमदस्य हर्षस्य वनम् । राज्ञोऽन्तःपुरस्थे वने ।

**प्रमदा** स्त्री० प्रमाद्यत्यनया अप् । उत्तमयोषिति ।

**प्रमदावन** न० प्रमदाया उचित वनम् । अन्तःपुरस्त्रीगमनयोग्ये वने प्रमदाकाननादयोऽप्यत्र ।

**प्रमनस्** त्रि० प्रहृष्टं मनो यस्य हृष्टपदलोप । प्रहृष्टचित्ते ।

**प्रमा** स्त्री० प्र+मा अङ् । यथार्थज्ञाने भ्रमभिन्ने ज्ञाने ।

**प्रमाण** न० प्रमीयतेऽनेन । प्रमाज्ञानसाधने इन्द्रियादौ, मर्यादायाम् शास्त्रे, सत्यवादिनि, हेतौ प्रमातरि च । 'न प्रमाणयदीन्दु'रिति रुद्रारामघम् । भावे ल्युट् । यथार्थज्ञाने ।

**प्रमातामह** पु० प्रकृष्टो मातामहो येन । आरब्धपदलोप । मातामहपितरि । तत्पत्न्यां स्त्री० ङीप् ।

**प्रमाद** पु० प्र+मद घञ् । कर्त्तव्ये अकर्त्तव्यत्वधिया ततो निवृत्तौ, अकर्त्तव्ये कर्त्तव्यत्वधिया तत्र प्रवृत्तौ वा अनवधानतायाम्

**प्रमापण** न० प्र+मीञ् हिंसाया स्वार्थे णिच्-आत्वे पुक् ल्युट् । मारणे ।

**प्रमिति** स्त्री० प्र+मा क्तिन् । प्रमायां यथार्थज्ञाने ।

**प्रमीत** त्रि० प्र+मीञ् हिंसायां क्त । मृते । 'प्रमीतौ पितरौ यस्ये'ति स्मृति' यज्ञार्थे हतपशौ च ।

**प्रमीला** स्त्री० प्र+मील अ । तन्द्रायाम् ।

**प्रमुख** न० प्रकृष्टं मुखमारम्भ । तदादित्वे । ष० उत्तरपदस्य । तदादिके, मान्ये, प्रथमे, प्रधाने, श्रेष्ठे च त्रि० । पुन्नागवृक्षे, समूहे च पु० ।

**प्रमुद्** त्रि० प्रकृष्टा मुद् यस्य । हृष्टे हर्षयुक्ते ।

**प्रमुदित** त्रि० प्र+मुद-क्त । हृष्टे हर्षयुक्ते ।

**प्रमेह** पु० प्र+मिह घञ् । रोगभेदे ।

**प्रमोचनी** स्त्री० प्रकर्षेण मुच्यते निस्त्वचीक्रियते भोजनार्थम् मुच-कर्मणि ल्युट् ङीप् । गोडुम्बायाम् (गोडुक) ।

**प्रमोद** पु० प्र+मुद-हर्षे घञ् । हर्षे ।

**प्रयत** त्रि० प्र+यम-क्त । पवित्रे, नियमयुक्ते च ।

**प्रयत्न** पु० प्र+यत-नङ् । कार्य्यानुकूले यत्नभेदे । 'प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारण'मिति न्यायोक्ते त्रिविधयत्नश्च आत्मगुण इति वैशेषिकादय बुद्धिधर्म इति सांख्यादय । प्रयासे च ।

**प्रयाग** पु० प्रकृष्टो यागो यस्मात् ५ब० । गङ्गायमुनयो सङ्गमजाते तीर्थभेदे, इन्द्रे शतक्रतौ च । ५ब० । अश्वे अश्वमेधाङ्गत्वादस्य तथात्वम् । कर्म० । प्रकृष्टे यज्ञे ।

**प्रयाम** पु० प्र+यम-घञ् । महार्घतावशात् धान्यादौ जनानामादरातिशये ।

**प्रयास** पु० प्र+यस-घञ् । प्रयत्नशब्दार्थे, आयासे च । [लीलावती

**प्रयुत** न० दशलक्षसङ्ख्यायां तत्संख्याते च 'लक्षप्रयुतकोटय 'इति

**प्रयोक्तृ** त्रि० प्र-युज तृच् । प्रयोगकर्त्तरि अपदानादौ धनप्रयोगकर्त्तरि उत्तमर्णे, प्रयोजकमात्रे च ।

प्रयोग पु० प्र+युज घञ्। अनुष्ठाने वशीकरणे, निदर्शने, प्रवेशे च
प्रयोजक त्रि० कार्यादौ भृत्यादीन् प्रयुङ्क्ते प्र+युज-ण्वुल्।
निक्षेपस्य भृत्यादेः प्रेरके, व्याकरणोक्ते हेतुसंज्ञे कर्त्तरि च
प्रयोजन न० प्र+युज-ल्युट्। कार्ये, उद्देश्ये, हेतौ च।
प्रयोज्य त्रि० प्रयोक्तुं शक्यते प्र+युज-शक्यार्थे यत्।
नियोज्ये निक्षेप्ये भृत्यादौ। [घञ्। प्ररोहे
प्ररूढ त्रि० प्र+रुह-क्त। प्रवृद्धे, बहुमूले, जाते च। भावे
प्ररोह पु० प्र+रुह-अच्। अङ्कुरे 'इक्षुप्ररोह इवे'ति रघु।
आरोहे च।
प्रलम्ब पु० दैत्यभेदे। प्र+लम्ब-अच्। प्रकर्षेण लम्बमाने त्रि०।
प्रलम्बघ्न पु० प्रलम्बं हन्ति हन-टक्। बलदेवे प्रलम्बहादयोऽप्यत्र
प्रलय पु० प्रलीयतेऽस्मिन् प्र+ली अच्। सर्वपदार्थानां नाशो-
धिकरणे काले, महाप्रलयोदिनावसाने च। भावे घञ्। नाशे,
चेष्टाक्षये च 'प्रलयान्तोन्मिषिते विलोचने' इति कुमार।
प्रलाप पु० प्र+लप-घञ्। अनर्थकवाक्ये, निष्प्रयोजने उन्म-
त्तादिवाक्ये च।
प्रलापहन् पु० प्रलापं हन्ति हन-क्विप्। कुलत्थजातेऽञ्जने।
प्रवचन न० प्र+वच-ल्युट्। वेदाध्ययने, प्रकृष्टवाक्ये च।
प्रव(ब)ण पु० प्र+व(ब)ण-अच्। चतुष्पथे निम्नस्थाने, उदरे च
नम्रे, आयते, प्रगुणे क्षणे, प्रते, क्लिष्टे, व्यापृते, क्षीणे च त्रि०
प्रवयस् त्रि० प्रकृष्टं वयोऽस्य। प्रवृद्धे।
प्रवर पु० प्र+वृ अप्। सन्ततौ, गोत्रे, गोत्रप्रवर्त्तकमुनिव्यावर्त्तके
मुनिगणे च। श्रेष्ठे त्रि०। अगुरुचन्दने न०।
प्रवर्ग पु० प्र+वृज-घञ्। होमाग्निभेदे।
प्रवर्त्तक त्रि० प्रवर्त्तयति प्र+वृत णिच्-ण्वुल्। प्रवृत्तिजनके।
प्रवर्त्तना स्त्री० प्र+वृत णिच्-युच्। प्रवृत्तिजनकव्यापारे
विध्यादौ 'अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपी'ति भर्तृहरिः
प्रवर्ह त्रि० प्र+वृह-अच्। श्रेष्ठे, प्रधाने च।
प्रवह पु० प्रवह-अच्। वायुभेदे। भावे अप्। नगरादहिर्गमने
प्रवहण न० प्र+वह-करणे ल्युट्। मनुष्यवाह्ये वस्त्राच्छादिते
स्त्रीवाहने कर्णीरथे (महाफाल)।
प्रवाणी स्त्री० प्र+वे ल्युट् ङीप्। तन्तुवायशलाकायाम् (माकु)
प्रवाद पु० प्र+वद घञ्। परम्परागतवाक्ये, परस्परकथोप-
कथने च। [विसृष्टे दाने।
प्रवारण न० प्र+वृ-णिच् ल्युट्। काम्यदाने काम्यस्य उत्तम-
प्रवास पु० प्र+वस घञ्। विदेशवासे।
प्रवासन न० प्र+वस णिच्-ल्युट्। विदेशवासने 'सीताप्रवासन
पटो'रिव्युत्तरचरितम्। मारणे च।
प्रवासिन् त्रि० प्र+वस-णिनि। विदेशे वासिनि, 'प्रवासी
सुखमायाती'ति षट्पञ्चाशिका। [उत्तमाङ्गे च।
प्रवाह पु० प्र+वह-घञ्। प्रवृत्तौ, जलस्रोतसि, व्यवहारे,
प्रवाहिका स्त्री० प्रवाहयति मलं ण्वुल्। ग्रहणीरोगे।
प्रवाल पु० प्रकृष्टो बाहुः। कूर्परस्याधोभागे। [पाकाग्रे च।
प्रविदारण न० प्र+वि+दृ-णिच् ल्युट्। युद्धे, विदारणे
प्रविश्लेष त्रि० प्रकर्षेण विश्लेषो यस्य। विधुरे, प्रकर्षविश्लेषे च।
प्रविषा स्त्री० प्रकृष्टं विषं यया। अतिविषायाम्। (आतइच्)
प्रवीण त्रि० वीणया प्रगायति प्र+वीणा+णिच् अच्। निपुणे
प्रवृत्ति स्त्री० प्र+वृत-क्तिन्। प्रवाहे, वार्त्तायाम्, अवन्त्यादि
देशे, हस्तिमदे, न्यायोक्ते चिकीर्षाकृतिसाध्यताज्ञानाधीने
प्रयत्नभेदे च।
प्रवृद्ध त्रि० प्र+वृध-क्त। वृद्धियुक्ते, प्रौढे च।
प्रवेक त्रि० प्र+विच-घञ्। प्रधाने। [कम्बले
प्रवे(णि)णी स्त्री० प्र+वेण-इन् वा ङीप्। गजकुम्भस्थे चित्र-
प्रवेल पु० प्र+वेल-अच्। पीतमुद्गे (सोनामुग)
प्रवेश पु० प्र+विश-घञ्। अन्तर्गमने।
प्रवेशन न० प्रविश्यतेऽनेन विश-करणे ल्युट्। प्रधानद्वारे,
सिंहद्वारे च। भावे ल्युट्। प्रवेशे।
प्रवेष्ट पु० प्र+वेष्ट-अच्। बाहौ, बाहुनीचभागे हस्तिदन्तमांसे।
गजपृष्ठस्थाने च। [तापसाङ्गे स्त्री०।
प्रव्रजित पु० प्र+व्रज-क्त। परिव्राजिनि। भिक्षौ, मुण्डीर्याम्,
प्रव्रज्या स्त्री० प्र+व्रज-क्यप्। सन्न्यासे, सर्वकर्मत्यागेन विधा-
नेनाश्रमान्तरगमने।
प्रव्रज्यावसित पु० प्रव्रज्यातः सन्न्यासात् अवसितः च्युतः
अव+सो क्त। पतिताश्रमके।
प्रशंसा स्त्री० प्र+शंस अ। गुणाविष्कारेण स्तुतौ।
प्रशमन न० प्र+शम णिच् ल्युट्। वधे, शान्तिकरणे च
'लब्धप्रशमनस्वस्थमि'ति रघु। शान्तौ च 'सर्वाबाधा-
प्रशमनमि'ति चण्डी।
प्रशस्त त्रि० प्र+शंस क्त। प्रशंसनीये, श्रेष्ठे, क्षेमे च।
प्रश्न पु० प्रच्छ नङ्। जिज्ञासायाम् ज्ञातमिच्छया कथनाय प्रेरणे
प्रश्नी स्त्री० प्रच्छ+नङ् ङीप्। कुम्भिकायाम् (पाना)।
प्रश्रय पु० प्र+श्रि अच्। प्रणये।
प्रश्रित त्रि० प्र श्रि क्त। विनीते।
प्रष्ठ त्रि० प्र+स्था-क त्रि० षत्वम्। अग्रगामिनि, श्रेष्ठे च।
प्रष्ठौही स्त्री० प्रष्ठं प्रथमगर्भं वाति वह-ण्विप्। प्रथमगर्भिण्याम्
प्रष्ठवाह् पु० प्रष्ठं वहति ण्वि। युगपार्श्वस्थे हलादौ, युगपार्श्वे

प्रथमयोर्मिते, दृष्टे च । [चप्रविष्ट । णिच् प्रसयति

**प्रस** प्रसवे गतौ च सक० दिवा० आ० सेट् घटा० । प्रस्यते

**प्रसक्त** त्रि० प्र+सन्ज क्त । प्रसङ्गविषये ।

**प्रसक्ति** स्त्री० प्र+सन्ज क्तिन् । प्रसङ्गे, आपत्तौ, अनुमितौ च

**प्रसङ्ग** पु० प्र+सन्ज घञ् । आपत्तौ, सम्बन्धभेदे प्रकृतस्योपेक्षा-नर्हत्वरूपे सङ्गतिभेदे अनुक्ते अर्थोद्देशेन तत्कर्मणा-न्यस्य सिद्धिरूपे अवान्तरकार्यनिर्माणे, प्रसक्तौ, प्रस्तावे च

**प्रसत्ति** स्त्री० प्र+सद क्तिन् । नैर्मल्ये प्रसन्नतायाम् । [स्त्री०

**प्रसन्न** त्रि० प्र+सद क्त । निर्मले, सन्तुष्टे, लताकुसुम्भभेदे च सुरायां

**प्रसन्नता** स्त्री० प्रसन्नस्य भावः तल । प्रसादे लताकुसुम्भभेदे ।

**प्रसभ** न० प्रगता सभा सभाधिकारोऽत्र । बलात्कारे, 'प्रसभोद्धृतारि'रिति रघु ।

**प्रसर** पु० प्र+सृ अप अच् वा । प्रभवे, वेगे, समूहे युद्ध-नीवारे निकटाभिगमने प्रणयादिविस्तरणे सैन्यादेः सर्वतो व्याप्तौ च । [स्त्रीत्वस्य तत्र ङीप्

**प्रसर्पण** न० प्र+सृप ल्युट । सैन्यानां सर्वतोव्याप्तौ च

**प्रसव** पु० प्र+सू अप् । गर्भमोचने । उत्पत्तौ, कार्यरूपे फले च 'अदभ्रराधर विवृ प्रसवस्य गीयते' इतिकुमार ।

**प्रसवबन्धन** न० प्रसवस्य पुष्पस्य बन्धनम् बन्ध करणे ल्युट । वृन्ते (बोंटा) ।

**प्रसवित्री** स्त्री० प्र+सू तृच् । जनन्याम् ।

**प्रसव्य** त्रि० प्रगत सव्य वामाचम । प्रतिकूल ।

**प्रसहा** स्त्री० प्र+षह अच् । हट्यायाम् ।

**प्रसह्य** अव्य० प्र+षह ल्यप् । हठादित्यर्थे । 'प्रसह्य तेजोभि-रसंख्यतां गते'रिति माघ । [कामचौरे

**प्रसह्यचौर** पु० प्रसह्य बलात्कारेण चौर । (डाकाइत) । प्र

**प्रसाद** पु० प्र+सद घञ् । नैर्मल्ये, अनुग्रहे, काव्यगुणभेदे, स्वास्थ्ये, प्रसन्ने देवनैवेद्ये, गुरुजनभुक्तावशिष्टे च ।

**प्रसादना** स्त्री० प्र+सद णिच्-युच् । सेवायाम् ।

**प्रसाधक** त्रि० प्रसाधयति भूषयति प्र+षिध णिच् ण्वुल् । निष्पादकेऽलङ्कर्त्तरि च स्त्रियां टाप् । 'प्रसाधिकालम्बित-मग्रपाद'मिति रघुः । सैरिन्ध्र्यां स्त्री० टाप् ।

**प्रसाधन** न० प्र+षिध णिच ल्युट । कृत्रिमभूषणे वेशे । करणे ल्युट । कङ्कतिकायाम् स्त्री० ङीप् ।

**प्रसाधित** त्रि० प्र+षिध णिच-क्त । अलङ्कृते निष्पादिते च ।

**प्रसारण** न० प्र+सृ णिच ल्युट् । विस्तारकरणे क्रियाभेदे च

**प्रसारणी** स्त्री० प्र+सृ णिच ल्यु गौरा० ङीप् । (गन्धभादाल) लताभेदे ।

**प्रसारिणी** स्त्री० प्र+सृ णिनि । लज्जालुलतायाम् ।

**प्रसारिन्** त्रि० प्र+सृ णिनि । विस्तारकारके ।

**प्रसित** त्रि० प्र+सो क्त । आसक्ते । [निगडादौ

**प्रसिति** स्त्री० प्र+षि-बन्धने करणे क्तिन । बन्धनसाधने,

**प्रसिद्ध** त्रि० प्र+षिध क्त । भूषिते, ख्याते च ।

**प्रसू** स्त्री प्र+सू क्विप । जनन्याम्, कदल्यां वीरुधि, घोटक्याम्

**प्रसूति** स्त्री० प्रसू क्तिन् । प्रसव, अपत्ये, उदरे मातरि च ।

**प्रसूतिका** स्त्री० प्रसूतेव कन् । जातसन्तानायां स्त्रियाम् ।

**प्रसूतिज** न० प्रसूत्या जायते जन ड । दुःखे, प्रसवादिजन्य दुःख हि सर्वलोकसिद्धम् । [त्रि० ।

**प्रसून** न० प्र+सू क्त तस्य न । पुष्पे, फले च । जातमात्रे

**प्रसृत** पु० प्र+सृ क्त । अर्द्धाञ्जलौ, प्रहृष्टे प्रणादिते, विनीते, वेगिते, गते नियुक्ते च त्रि० । जङ्घायां स्त्री० ।

**प्रसेवक** पु० प्र+षिव ण्वुल । वीणाप्रान्तस्थे काष्ठे ।

**प्रस्कन्न** पु० ऋषिभेदे । स्कन्द क्त तस्य न । अवस्कन्दयुक्ते त्रि०

**प्रस्तर** पु० प्र+स्तॄ अच । पाषाणे, मणौ च ।

**प्रस्तार** पु० प्र+स्तॄ घञ् । तृणवने, पल्लवादिरचितशय्यायां, छन्दो-ग्रन्थोक्ते व्यक्तिभेदप्रदर्शनार्थे 'प्रस्तारे गुरुं लघु न्यस्य प्रथ-मस्य गुरोरध । यथोपरि, तथा शेष'मित्युक्ते प्रक्रियाभेदे च

**प्रस्ताव** पु० प्र+स्तु घञ् । अवसरे प्रकरणे, प्रसङ्गे च ।

**प्रस्तावना** स्त्री० प्र+स्तु-णिच्-युच् । आरम्भे, सूत्रधारेण नट्यादिभिः सह प्रस्तुताभिनेयकथाप्रसङ्गार्थं कथनीये वाक्य-भेदे 'नटी विदूषको वापि वा' इति सा० द० ६प० ।

**प्रस्तुत** त्रि० प्र+स्तु क्त । प्रकरणप्राप्ते, प्रासङ्गिके, उपस्थिते उद्यते, प्रतिपन्ने, प्रकर्षेण स्तुते च ।

**प्रस्थ** पु० प्र+स्था-क । चतुःकुडवात्मके आढकचतुर्थांशे वा मान्या-दे । परिमाणभेदे विस्तारे च । पर्वतस्य वासयोग्यभूमौ पु०न०

**प्रस्थान** न० प्र+स्था ल्युट । जिगीषोर्युद्धार्थगमने, गमनमात्रे च

**प्रस्फोटन** न० प्र+स्फुट-करणे ल्युट । शूर्पे । भावे ल्युट । ताडने, विकाशने, पाके च । [स्नु । प्रास्रवति पर्वते पु०

**प्रस्रवण** न० प्र+स्रु ल्युट् । अविच्छेदेन सवज्जले, उत्से, स्वेदे च ।

**प्रस्राव** पु० प्रस्रु घञ् । मूत्रे । [स्यादेर्भागे ।

**प्रहर** पु० प्रह्रियते यामिकढक्कादिरस्मिन् प्र+हृ अप । दिवस

**प्रहरण** न प्रह्रियतेऽनेन हृ-ल्युट । अस्त्रे कर्णीरथे च । आधारे ल्युट । युद्धे । भावे ल्युट । प्रहारे, दमे च ।

**प्रहर्षणी** स्त्री० प्रहर्षयत्यनया हृष ल्युट ङीप । हरिद्रायाम त्रयोदशाक्षरपादके छन्दोभेदे च । तत्र प्रहर्षणोत्येके । [६प०

**प्रहसन** न० प्र+हस ल्युट् । हासे, दृश्यकाव्यरूपकभेदे च । सा०

**प्रहसन्ती** स्त्री० प्र+हस-शतृ ङीप् । यूथिकायां, वासन्त्याञ्च ।

**प्रहस्त** पु० प्रसृतो हस्तः प्रा० । विस्तृताङ्गुलिके पाणौ, रावण-
सेनापतिभेदे च । [मोसदोहिण्याम् ।

**प्रहारवल्ली** स्त्री० प्रहारस्य वेदनोपशमना वल्ली शाक० ।

**प्रहि** पु० प्रह्रियतेऽत्र प्र+हृ-इन् डिच्च । कूपे ।

**प्रहित** त्रि० प्र+हि-क्त । क्षिप्ते, निरस्ते, प्रेरिते च । सूपे न०

**प्रहेलिका** स्त्री० दुर्बोधार्थप्रश्नाय प्रश्ने (हेयालि) 'तरुण्यालि-
ङ्गितः कण्ठे नितम्बस्थानमाश्रितः । गुरूणां सन्निधानेऽपि कः
कूजति मुहुर्मुहु'रित्यादिरूपे, कस्योत्तरम् 'पदम्पूर्णजलः कलशः'

**प्रह्लाद** पु० प्र+ह्लद-घञ् । हिरण्यकशिपोर्दैत्यस्य पुत्रभेदे

**प्रह्व** त्रि० प्र+ह्वे-क । नम्रे विनीते, आसक्ते च ।

**प्रांशु** त्रि० प्रकृष्टा अंशवोऽस्य । उच्चे, उन्नते ।

**प्राकाम्य** न० प्रकामस्य भावः ष्यञ् । अष्टविधैश्वर्यमध्ये, इच्छा-
नभिघातरूपे ऐश्वर्ये स्वाच्छन्द्यानुमतौ च । 'प्राकाम्यं ते
विभूतिष्वि'ति कुमारः । [कारे, प्राचीरादौ ।

**प्राकार** पु० प्रकीर्यते प्र-कॄ-घञ् दीर्घः । इष्टकादिरचिते वेष्टना-

**प्राकृत** त्रि० प्रकृष्टमकृतमपकार्यं यस्य । नीचे । प्रकृतेरयम्
अण् । प्रकृतिसम्बन्धिनि । प्रकृत्या स्वभावेन निर्वृत्तः
अण् । स्वभावसिद्धे । प्रकृतेः संस्कृतशब्दात् आगतः
अण् । नाटकादौ प्रसिद्धे अपभ्रंशशब्दभेदे ।

**प्राकृतप्रलय** पु० कर्म० । कार्यब्रह्मणो नाशे तेन सह
कार्यजातस्य प्रकृतौ लये, तत्काले च ।

**प्राकृतमित्र** कर्म० । स्वभावसिद्धे मित्रे, विषयानन्तरस्यन्पप-
स्मात् प्राकृतशत्रोः व्यवहितोत्तरविषयस्थे नृपे ।

**प्राकृतशत्रु** पु० कर्म० । विषयानन्तरवर्त्तिनि नृपे ।

**प्राक्तन** त्रि० प्राचि काले, देशे, प्राच्यां दिशि, वा भवः ट्यु
तुट् च । प्राग्भवे । 'प्रपेदिरे प्राक्तनजन्मविद्या' इति कु० ।

**प्रागभाव** पु० प्रागवर्त्ती अभावः । इह कपाले घटो भविष्यती
त्यादिप्रतीतिसिद्धे अभावभेदे ।

**प्रागुदीची** स्त्री० प्राच्या उदीच्याश्चान्तराला दिक् 'दिग्नामा-
न्यन्तराले' इति स० । पूर्वोत्तरदिशि ऐशानकोणे ।

**प्राग्ज्योतिष** न० कामरूपदेशे तद्देशस्थे ब० ब० ।

**प्राग्भार** पु० प्रकृष्टो भारः । उत्कर्षे परभागे, 'मांसमस्रिक्क-
मज्ज 'प्राग्भारः' इति प्रबोधचन्द्रोदयः । पर्वताग्रभागे च ।

**प्राग्रहर** त्रि० प्रकर्षेण अग्रे ह्रियतेऽसौ अच् । श्रेष्ठे ।

**प्राग्र्य** त्रि० प्रकर्षेणाग्रे भवः यत् । श्रेष्ठे ।

**प्राग्वंश** पु० प्राक् वंशः सपत्नीकयजमानादिगृहदायोऽत्र ।
हविर्धानात् पूर्वभागस्थे यजमानादिस्थित्यर्थे गृहे ।

**प्राघार** पु० प्र+घृ-क्षरणे घञ् दीर्घः । यज्ञादौ वह्निरुपरि-
घृतादेः क्षरणे । [वज्रादौ च ।

**प्राघुण** पु० प्र+आ-घुण-क । अतिथौ । [अजिरे, पथ-

**प्राङ्गण** न० प्रकृष्टमङ्गनं पूर्व० णत्वम् । गृहभूमौ (उठान)

**प्राङ्न्याय** पु० 'आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽ-
भिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते' इत्युक्ते
व्यवहारस्य उत्तरभेदे ।

**प्राच्** त्रि० प्र-अन्च्-क्विन् । पूर्वस्मिन् काले देशे च । स्त्रियां
ङीप् प्राची । सा च पूर्वस्यां दिशि, तन्त्रोक्ते पूज्यपूजकयो
र्मध्यदेशे च ।

**प्राचीन** त्रि० प्राक्+भवार्थे ख । पूर्वदिग्देशादौ भवे । (आक-
नादि) वनतिक्तायाम्, रास्नायाञ्च स्त्री० टाप् ।

**प्राचीनबर्हिस्** पु० । इन्द्रे, नृपभेदे च ।

**प्राचीनामलक** न० कर्म० । पानीयामलके ।

**प्राचीनावीत** न० 'सव्यं बाहुं समुद्धृत्य दक्षिणे तु द्विजातयः ।
प्राचीनावीतमित्युक्तं पैत्रे कर्मणि योजये'दित्युक्ते, श्राद्धादौ
वामकरे बहिष्कृते सति दक्षिणस्कन्धार्पिते यज्ञसूत्रादौ ।

**प्राचीर** न० प्राचीयते प्र+आ-चि-क्रन् दीर्घश्च । सर्वतो
वेष्टनाकारे इष्टकादिनिर्मिते आवरणे (पाचिर) । [पुत्रे च

**प्राचेतस** पु० वाल्मीकिमुनौ प्राचीनबर्हिषः नृपस्य पुत्रे, वरुणस्य

**प्राच्य** पु० प्राचि भवः । शरावत्या नद्याः प्राग्दक्षिणे देशे ।

**प्राजक** पु० प्र+अज-ण्वुल् वीभावाभावः । सारथौ ।

**प्राजन** न० प्र+अज-ल्युट् । तोदने पश्वादेश्चालनदण्डे (पाचनी)

**प्राजापत्य** पु० प्रजापतिर्देवताऽस्य यञ् । अष्टविवाहमध्ये
विवाहभेदे, 'त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परञ्च नाश्नीयात् प्राजापत्यमितिस्मृतमिति' इत्युक्ते
द्वादशाहसाध्ये व्रतभेदे न० । प्रजापत्यधिदेवताके पदार्थे
त्रि० । प्रव्रज्यामात्रे सर्वस्वदक्षिणकेष्टिभेदे स्त्री० ।

**प्राजिट** पु० प्र-अज-इट् वीभावाभावः । सारथौ ।

**प्राज्ञ** पु० प्रकर्षेण जानाति प्र-ज्ञा-क स्वार्थे अण् । पण्डिते ।
राजपुत्रे च । प्रज्ञाऽस्त्यस्य अण् । बुद्धिमति, दक्षे च त्रि०
प्रज्ञा+स्वार्थे अण् । बुद्धौ, प्राज्ञस्य पत्नी ङीप् । प्राज्ञपत्न्यां
स्त्री० । [प्रचुरे त्रि० ।

**प्राज्य** न० प्रकृष्टमाज्यं प्र+अञ्ज-क्यप् वा । प्रकृष्टघृते ।

**प्राञ्जल** त्रि० प्र+अञ्ज-अलच् । सरले, सुबोधे च ।

**प्राड्विवेक** पु० अर्थिप्रत्यर्थिनौ पृच्छति प्रच्छ-क्विप् प्राट्; तयो-
र्वाक्यं विरुद्धाविरुद्धतया विवेचयति वि+विच-घञ् कर्म० ।
राजनियुक्ते व्यवहारदर्शके, 'विवादानुगतं पृष्ट्वा पूर्ववाक्यं

प्रयत्नत । विचारयति येनासौ प्राड्विवेकस्तत स्मृत' इति स्मृति । अत्र प्राड्विवाक इति केचित् पठन्ति ।

प्राण पु० प्र+अन घञ् । हृदयस्थे नासाग्रवर्त्तिनि वायौ, काव्यजीवने रसे, वायुमात्रे, बले च । पञ्चवृत्तिके देहस्थे वायुभेदे, इन्द्रिये च ब०व० ।

प्राणद पु० प्राण ददाति दा क । जले, अन्ने च । जीवकवृक्षे पु० । हरितक्यां, ऋद्धिवृक्षे च स्त्री० । प्राणदातरि त्रि० 'प्राणदा यमदूतिके' त्युद्भट ।

प्राणनाथ ६त० । पत्यौ ।

प्राणमयकोष पु० रागादिकर्मेन्द्रियसहित प्राणपञ्चकमधुर कोषवदाच्छादकत्वात् कोष इव । वेदान्तोक्ते जीवस्वरूपाच्छादके, कर्मेन्द्रियसहिते प्राणपञ्चके ।

प्राणसंयम पु० प्राणस्य प्राणरूपवृत्तिभेदस्य नासाग्रवर्त्तिनो वायो संयमो यत्र व्यापारे । प्राणायामे तेन हि व्यापारेण प्राणवायोर्वहिर्निःसरणप्रतिरोधेन प्राणसंयम इति योगशास्त्रादिप्रसिद्धम । [पत्न्याम ।

प्राणसमा स्त्री० प्राणै समा तुल्या प्रियत्वात् । प्रियतमायां

प्राणायाम पु० प्राण प्राणवायुरायम्यते संयम्यते येन आ+यम घञ् । योगादिशास्त्रप्रसिद्धे प्राणवायोर्निरोधसाधने व्यापारे । वहिःस्थप्राणवायोरुत्कर्षणरूपपूरणेन, देहस्थस्य तस्य कुम्भवत् निश्चलतया रोधेन, निरुद्धस्य तस्य क्रमेण वहिर्निःसारणरूपरेचनेन च प्राणवायोर्यद्विनियोगरूप वश्यतासम्पादनमित्यसौ व्यापारसमुदाय प्राणायाम इत्युच्यते 'प्राणाख्यमनिल वश्यमभ्यासात् कुरुते तु यत । प्राणायाम स विज्ञेय' इत्युक्तलक्षणे प्राणायामशब्दस्य पूरणकुम्भकरेचनरूपव्यापारसमुदाये रूढिरिति केचित् प्रत्येकस्मिन्नपि रूढिरित्यन्ये विस्तरो वृहदभिधाने ।

प्राणिद्यूत न० प्राणिभि मेषकुक्कुटादिभि पणपूर्व द्यूत देवनम् दिव भावे क्त । प्राणिभि पणपूर्वके देवने ।

प्राणिन् पु० प्राण+अस्त्यर्थे इनि । जीवे चेतने ।

प्रातःकृत्य न० प्रात प्रभाते कृत्य कर्त्तव्यम । प्रभाते कर्त्तव्ये शौचस्नानादौ । [प्रातरुपास्ये मन्त्ररूपे देवभेदे ।

प्रातःसन्ध्या स्त्री० प्रातरुपास्या सन्ध्या । वैदिके तान्त्रिके च

प्रातर् अव्य० प्र+अत अर । प्रभाते, 'प्रात कालो मुहूर्त्तांस्त्रीनि'ति इत्युक्ते सूर्योदयावधिकत्रिमुहूर्त्तकाले च ।

प्रातराश पु० अश्यते भुज्यते अश घञ् प्रात प्रभाते आशो भोजनम् । प्रात काले भोज्ये ।

प्रातिका स्त्री० प्र+अत ण्वुल् टाप् । जवावृक्षे ।

प्रातिपदिक पु० प्रतिपदि दृश्यते ठञ् । अग्नौ, 'इन्द्राग्नी यत्र हूयेते इति श्रुतौ यत्र प्रतिपदीत्यर्थ । व्याकरणोक्ते 'अर्थवद् अधातुरप्रत्यय प्रातिपदिकमि'त्याद्युक्ते प्रत्ययप्रत्ययान्तभिन्ने धातुभिन्ने कृत्तद्धितसमासनिष्पन्ने च शब्दभेदे न० ।

प्रातिभाव्य न० प्रतिभुवो भाव । (जामिनी) प्रतिभुवोभाव 'प्रातिभाव्यागत सुत' इति स्मृति । [स्वासाधारणे धर्मे

प्रातिस्विक न० प्रतिस्वे एकैकस्मिन् भव ठक । प्रत्येकपदार्थ

प्रातिहारिक त्रि० प्रतिह्रियतेऽनेन प्रतिहार कापट्यं माया स प्रयोजनमस्य ठक् । मायाकारके । [विद्याध्ययनादौ ।

प्राथमकल्पिक त्रि० प्रथमकल्पे भव ठक । प्रथमारम्भोचिते

प्राथमिक त्रि० प्रथमे भव ठञ् । प्रथमकालभव । स्त्रियां ङीप्

प्रादुर्भाव पु० प्रादुस्+भू घञ् । प्रकाशे आविर्भावे ।

प्रादुस् अव्य० प्र+अद-उसि । स्फुटत्वे, प्रकाशे, नाम्नि, सम्भावनायां, वृत्तौ च ।

प्रादेश पु० प्र+दिश घञ् दीर्घ । तर्ज्जनीसहितविस्तृताङ्गुष्ठे देशमात्रे च 'अङ्गुष्ठस्य प्रदेशिन्या व्यास प्रादेश उच्यते' इत्युक्ते परिमाणभेदे च ।

प्रादेशन न० प्र+आ+दिश ल्युट् । दाने ।

प्राध्व पु० प्रगतोऽध्वानम् अच् समा० । रथादौ, प्रकृष्टोऽध्वा प्रा०स० प्रकृष्टे पथि । नम्रे, बद्धे च त्रि० । [तायाम्

प्राध्वम् अव्य० प्र+आ+ध्वन डमि । आनुकूल्ये, बन्धने, गम

प्रान्त पु० प्रकृष्टोऽन्त । शेषसीमायाम् ।

प्रान्तर न० प्रकृष्टमन्तरं व्यवधान यत्र । दूरगम्ये पथि । वृक्षादिच्छायाशून्ये पथि, वने, कोटरे च ।

प्राप्तपञ्चत्व त्रि० प्राप्त पञ्चत्व मरण येन । मृते ।

प्राप्तरूप त्रि० प्राप्त रूप येन । मनोहरे, पण्डिते च ।

प्राप्ति स्त्री० प्र+आप क्तिन् । वृद्धौ, लाभे, भाग्यान्तरगतौ, महतो अणिमाद्यैश्वर्यमध्ये ऐश्वर्यभेदे उदये च ।

प्राप्य त्रि० प्र+आप ण्यत् । गम्ये लभ्ये च । व्याकरणोक्ते 'क्रियाकृतविशेषाणा सिद्धिर्यत्र न विद्यते दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यत' इत्युक्ते कर्मभेदे न० ।

प्राभृत न० प्र+आ+भृ क्त । उपढौकनद्रव्ये । [illegible]

प्रामाद्य पु० प्रमादाय हित ष्यञ् । वासकवृक्षे ।

प्रामाणिक त्रि० प्रमाणेन निर्वृत्त विदित ठञ् । प्रत्यक्षादिप्रमाणसिद्धे, शास्त्रसिद्धे च स्त्रियां ङीप् ।

प्रामाण्य न० प्रमाणस्य भाव । तद्वति तत्प्रकारकत्वरूपे ज्ञानधर्मे, तच्च न्यायमते परतोग्राह्य मीमांसकादिमते स्वत समाग्र्या वा ग्राह्यमिति भेद विस्तरो वृहदभिधाने ।

प्री तर्पणे सक० चु० उभ० अनिट् । प्राययति ते अपिप्रयत्-त ।

प्रीणन न० प्री णिच्-नुक्-ल्युट् । तर्पणे । [ण्यन्त त्रि० ।

प्रीत त्रि० प्री क्त वा कर्त्तरि क्त । हृष्टे । तस्य भावे प्रीणो-

प्रीति स्त्री० प्री भावे क्तिन् । हर्षे, आमोदे, तृप्तौ च ।

प्रु गतौ भ्वा० आत्म० सक० अनिट् । प्रवते अप्रोष्ट ।

प्रुट मर्द्दने भ्वा० पर० सक० सेट् । प्रोटति अप्रोटीत् ।

प्रुष सम्योकरणे भ्वा० पर० सक० सेट् । प्रोषति अप्रोषीत् क्त्वा वेट् । [अप्रोषीत् ।

प्रुष सेके पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर० सेट् । प्रुष्णाति

प्रुष्ट त्रि० प्रुष-क्त । दग्धे ।

प्रेक्षा स्त्री० प्रकर्षेण प्रमाणादिना ईक्षा । पर्य्यालोचनायाम् ।

प्रेक्षावत् त्रि० प्रेक्षा अस्त्यर्थे मतुप् मस्य व । समीक्ष्यकारिणि

प्रेङ्खा स्त्री० प्र+इखि घञ् । दोलायाम्, परिभ्रमणे, सार्थकगतौ, नृत्यभेदे, नृत्ये च ।

प्रेङ्खित त्रि० प्र+इखि-क्त । कम्पिते ।

प्रेङ्खोल दोलने अ० चुरा० उ० सक० सेट् । प्रेङ्खोलयति ते अप्रेङ्खोलत् त । प्रस्योपसर्गत्वमपीत्यन्ये, तेन प्राञ्चिखोलत् त ।

प्रेत पुं० प्र+इण क्त । नरकस्थे जीवे, पिशाचभेदे, आतिवाहिक देहोत्तर जायमाने देहभेदे, 'मृते सपिण्डीकरणे नर संवत्सरात् परम् प्रेतदेह परित्यज्य भोगदेह प्रपद्यते इति स्मृति, मृते च ।

प्रेतकर्म्मन् न० ६ त० । मृतस्य दाहादिके सपिण्डीकरणान्ते कर्म्मणि

प्रेतगृह न०, ६ त० । श्मशाने प्रेतपुरादयोऽप्यत्र । [नदीभेदे ।

प्रेतनदी स्त्री० प्रेतगम्या नदी । यमद्वारस्थे वैतरणीनामके

प्रेतशिला स्त्री० गयातीर्थस्थे प्रेतोद्धारणार्थे शिलाभेदे ।

प्रेत्य अव्य० प्र+इण ल्यप् । लोकान्तरे 'प्रेत्य संज्ञा नास्ती ति स्मृति । [इन्द्रे, वायौ च पु० ।

प्रेमन् पु० न० प्रियस्य भाव इमनिच् प्रादेश । स्नेहे, नर्म्मणि च

प्रेयस् त्रि० अतिशयेन प्रिय ईयसु प्रियस्य प्रादेश । अतिशय प्रिये । स्त्रियां ङीप् प्रेयसी सा च प्रियतमाया, योषिति च

प्रेरण न० प्र-ईर-णिच्-ल्युट् । प्रेषणे निकृष्टस्य भृत्यादे कार्यादौ नियोगे । णिच् युच् । प्रेरणाप्यत्र स्त्री० ।

प्रेष गतौ भ्वा० पर० सक० सेट् । प्रेषति अप्रेषीत् ।

प्रे(प्रै)ष पु० प्र+इष-घञ् वा वरद्रूपम् । प्रेषणे, पीडने च ।

प्रेष्ठ त्रि० अतिशयेन प्रिय इष्ठन् प्रादेश । अतशय प्रिये ।

प्रे(प्रै)ष्य पु० प्र-इष ण्यत् वा वरद्रूपम् । दासे । प्रेरणीये त्रि० आज्ञाया स्त्री० । [पशूनां हनने च ।

प्रोक्षण न० प्र+उक्ष ल्युट् । समन्तात् सेचने, वधे, यज्ञार्थ

प्रोक्षित त्रि० प्र+उक्ष-क्त । सिक्ते, हिंते, यज्ञार्थं संस्कृते मांसादौ च 'भक्षयेत् प्रोक्षितं मांस'मिति स्मृति ।

प्रोञ्छन न० प्र+उछि-ल्युट् । मार्जने (पोंछा) ।

प्रोत त्रि० प्र-वे क्त । गुम्फिते, स्यूते, खचिते च । वस्त्रे न० ।

प्रोत्फल पु० प्रकर्षेण उत्फलति प्र+उद्+फल-अच् । पिच्छलाङ्गलाकारपुष्पवति वृक्षभेदे ।

प्रोथ पर्य्याप्ततायाम् सामर्थ्ये च भ्वा० उभ० सक० सेट् । प्रोथति ते अप्रोथीत् अप्रोथिष्ट । चङि न ह्रस्व ।

प्रोथ पु० न० । प्रु-थन् । अश्वनासिकायाम् । कट्या, शाटके, स्त्रीगर्भे, गर्त्ते, भीषणे, स्फिचि, अश्वमुखे च पु० । मान्ये, स्थापिते, प्रथिते च त्रि० ।

प्रोषित त्रि० प्र+वस क्त इट् । प्रवासं गते विदेशं गते ।

प्रोषितभर्त्तृका स्त्री० प्रोषित भर्त्ता यस्या कप् । विदेशस्थपतिकाया नायिकायाम् ।

प्रो(प्रौ)ष्ठ पु० प्रकृष्ट ओष्ठोऽस्य वा वृद्धि । (पुटि) मत्स्यभेदे गवि च । स्त्री ङीप् । प्रोष्ठीत्यप्यत्र ।

प्रो(प्रौ)ष्ठपद पु० प्रो(प्रौ)ष्ठो गौस्तस्येव पद यस्य । भाद्रपदाख्ये नक्षत्रविशेषे तेन युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् वा न वृद्धि । चान्द्रभाद्रमासे ।

प्रो(प्रौ)ष्ठपदा स्त्री० ब० व० प्रो(प्रौ)ष्ठस्य गोरिव पदान्यस्या । भाद्रपदनक्षत्रे पूर्वभाद्रपदतारायां उत्तरभाद्रपदतारायाञ्च चतुर्नक्षत्रात्मकत्वात् बहुत्वम् । [वृद्धि । भाद्रपौर्णमास्याम् ।

प्रो(प्रौ)ष्ठपदी स्त्री० प्रोष्ठ(प्रौ)पदा भयुक्ता पौर्णमासी अण् वा

प्रौढ त्रि० प्र+वह क्त वृद्धि । प्रवृद्धे, प्रगल्भे, निपुणे च नायिकाभेदे 'तरुणी त्रिंशता मता पञ्चपञ्चाशता प्रौढे त्युक्तवयस्का या स्त्रियाम् च स्त्री० टाप् ।

प्रौढपाद पु० 'आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा । कृतावसक्थिको यस्तु प्रौढपाद स उच्यते' इत्युक्तलक्षणे आसनारूढपादे वस्त्रादिना कटिजङ्घाबन्धनेन स्थिते जने ।

प्रौढि स्त्री० प्र+वह क्तिन् वृद्धि । सामर्थ्ये, उद्यमे च ।

प्लक्ष भक्षणे भ्वा० उभ० सक० सेट् । प्लक्षति अप्लक्षीत् ।

प्लक्ष पु० प्लक्ष्यते कीटै प्लक्ष-घञ् । (पाकुड) वृक्षे, प्लक्षद्वीपस्थिते द्वीपभेदे च ।

प्लव पु० प्लु-भावे अप् । प्लवने । कर्त्तरि अच् । भेलके (भेला) भेके, मेषे, वानरे, श्वपचे, जलकाके, प्लवगे, पर्कटीवृक्षे, कारण्डवखगे, शब्दे, रिपौ, जलभेदे जलकुक्कुटे, जलचरपक्षिमात्रे मारणादौ च । कैवर्त्तीमुस्तके, गन्धतृणे

प्लवग पु० प्लवन् सन् गच्छति गम-ड ह० । वानरे,

फलपाकिन् पु० फलपाकोऽस्त्यस्य । गर्दभाण्डे ।
फलपुष्पा स्त्री० फलानि पुष्पाणीव यस्याः । पिण्डखर्जूर्याम्
फलपूर पु० फलेन पूरं पूर्णं पूर-क । वीजपूरे । कन् । तत्रैव
फलप्रिया स्त्री० फलं प्रियं यस्याः । प्रियङ्गौ । [अतभेदे
फलभोग पु०६त०। फलानां कर्मफलानां सुखदुःखादीनां भोगे
फलमुख्या स्त्री० फलेन मुख्या श्रेष्ठा । अजमोदायाम् ।
फलमुद्गरिका स्त्री० उद् गिरति इन् फलं मुद्गरि यस्याः ।
पिण्डखर्जूर्याम् । [फले न० ।
फलवर्त्तुल पु० फलं वर्त्तुलं यस्य । कालिङ्गे वृक्षे । तत्-
फलवृक्षक पु० फलप्रधानो वृक्षः स्वार्थे कन् । पनसवृक्षे ।
फलशालिन् त्रि० फलेन शालते श्लाघते णिनि । फलयुक्ते
स्त्रियां ङीप् । [वदरवृक्षे ।
फलशैशिर पु० शिशिरं मासभेदः अण् फलं शैशिरं यस्य ।
फलश्रेष्ठ पु० फलेन श्रेष्ठ प्रशस्यतरः । आम्रवृक्षे ।
फलस न० फलं स्यति सो क । पनसवृक्षे ।
फलस्नेह पु० फले स्नेहो यस्य । अक्षोटवृक्षे । [त्रियाम् स्त्री०
फलाढ्या त्रि० फलेनाढ्या सम्पन्ना । फलयुक्ते । काष्ठकद
फलाध्यक्ष पु० फलमध्यक्षमिव यस्य । राजादने । फलदा-
नाध्यक्षे ईश्वरे पु० । फलसाक्षीत्यादयोऽप्यत्र ।
फलाम्ल न० फलमम्लं यस्य । वृक्षाम्ले । अम्लवेतसे पु० ।
फलिन त्रि०फल+अस्त्यर्थे इनच् । फलयुक्ते तादृशे वृक्षे पु०
फलिन् त्रि० फल+अस्त्यर्थे इनि । फलयुक्ते तादृशे वृक्षे पु०
प्रियङ्गुवृक्षे स्त्री० ङीप् ।
फली स्त्री० फलमस्त्यस्याः अच् गौ०ङीष् । प्रियङ्गुवृक्षे ।
फलेग्रहि पु० फले यहं इन् । योग्यकाले फलधरे वृक्षे ।
'फलेग्रहीन् हंसीति' भट्टिः । इन् । फलेग्राहिरप्यत्र ।
फलेन्द्र पु० फलेन इन्द्र ऐश्वर्यान्वितः । राजजम्बूवृक्षे ।
फलेरुहा स्त्री० फले रोहति रुह क । पाटलिवृक्षे ।
फलोत्तमा स्त्री० फलेन उत्तमा । द्राक्षाभेदे ।
फलोदय पु० ६त० । फलोत्पत्तौ लाभे, स्वर्गे, हर्षे च ।
फल्गु त्रि० फल उ गुक् च । रम्ये,सारे, निरर्थके च गयास्थे
स्थे नद्यां स्त्री० । (फागु) इति ख्याते धूलिरूपे पदार्थे,
काकोदुम्बरिकायाम्, वसन्तकाले मिथ्यावाक्ये च पु०।
फल्गुन पु० फल्गु सुवर्णभेदो नीयतेऽस्मिन् नी ड । फाल्गुनेमासि
फल्गुनी स्त्री० फल उनन् गुक् गौ० ङीष् । काकोदुम्बरिका
याम् । अश्विन्यवधिकेएकादशे, द्वादशे च नक्षत्रे च ब०व०
फल्गुवाटिका स्त्री० फल्गुर्भूत्वा वाटीव इवार्थे कन् । काको-
दुम्बरिकायाम् ।

फल्गुहस्ताक पु० फल्गु रम्यं हस्ताकं यस्य । श्योनाकभेदे ।
फल्गूत्सव पु० फल्गुनिमित्तक उत्सव । फाल्गुनपौर्णमास्यां
हिन्दु कर्त्तव्ये (आवीर) फल्गुद्रव्यकरणे उत्सवे ।
फल्य न० फलाय हितं यत् । पुष्पे । [वन्नौ) च ।
फाण्ट पु० स्फाय णिच् क्त। गुडविकारे, करम्भे (दधिमिश्रित-
फाणित न० फण णिच् क्त । गुडविकारभेदे (फेणी) ।
फाण्ट न० फण क्त नि० । अनायासेन कृते । 'क्षिलेऽप्यतोये
मृदिते फाण्टं तदभिधीयते' इत्युक्ते क्वाथभेदे ।
फाल न० फलाय फलाय हितम् अण्, फल्यते विदार्यते
भूमिरनेन वा घञ् । स्वनामख्याते लाङ्गलमुखस्थे लौह-
भेदे। फालमस्त्यस्य अच् । बलदेवे, महादेवे च पु० । फलस्य
विकारः अण् । कार्पासवस्त्रे त्रि० । फालकरणके दिव्य-
दीक्षाभेदे न० । फलेषु भवः अण् । जम्बीरबीजादौ पु०।
फाल्गुन पु० फल उनन् गुक् च स्वार्थे प्रज्ञाद्यण् । अर्जुने
मध्यमपाण्डवे, अश्विन्यवधिके एकादशे द्वादशे नक्षत्रे च
स्त्री० ब०व० ङीप् । फल्गुनीभिर्युक्ता पौर्णमासी अण् ।
चान्द्रफाल्गुनमासपौर्णमास्यां स्त्री० ङीप् । साऽस्मिन्मासे
अण् । चैत्रावधिके द्वादशे मासे पु०।वर्षस्य हि चैत्रादित्वम्
फाल्गुनिक पु०, फाल्गुनी फल्गुनीनक्षत्रयुक्ता पौर्णमासी
अस्मिन् मासे ठञ्। चैत्रावधिके द्वादशे मासे ।
फु पु० फल-डु । मन्त्रोच्चारणपूर्व्वके फूत्कारे, तुच्छवाक्ये च
फुट त्रि० स्फुट क पृ० । विदीर्णे, प्रस्फुटिते च ।
फु(फू)त् अव्य० फल डुति पृ० वा दीर्घः । अनुकरणशब्दे ।
फुल्ल विकाशे भ्वा०पर०अक०सेट् । फुल्लति अफुल्लीत् । [न०
फुल्ल त्रि० फुल्ल-विकाशे अच् । विकसिते । पुष्पे ।
फेण(न) पु० स्फाय न पृ० पक्षान्तरे णत्वम् । दुग्धजलादेर-
पर्युपरिस्थे बुद्बुदाकारे पदार्थे (फेना) अस्य णान्ततामपि
'दृक्षश्रेण्यां नदीतीरे निनदे भ्रुवतीवदिरे । यथा सारस्वता
मत्वा अम्बरे फेणवत्ता इत्युक्तौ पक्षे दन्तौरेफेण दन्त्यस्य
इकारेण पृथुगादर्थं । डिमे च। गुडविकारभेदे स्त्री०ङीप्
फेणा(ना)ग्र न० ६त० । बुद्बुदे ।
फेणि(नि)ल त्रि० फेन+अस्त्यर्थे इलच् । फेनविशिष्टे
कोलिफले, मदनवृक्षफले च न० । बदरवृक्षे, अरिष्टवृक्षे
च पु० । [तद्गुणयोगात् धूर्ते, हिंस्रे च त्रि० ।
फेरव पु० फे इत्यव्यक्तो रवोऽस्य । शृगाले, राक्षसे च ।
फेरु पु० फे इत्यव्यक्तं रौति रु-डु । शृगाले ।
फेल(ला) न०स्त्री०फेल घञ् वा टाप् । भुक्तावशिष्टे, उच्छिष्टे
फेल गतौ भ्वा०पर०स०सेट् । फेलति अफेलीत् । चङि न ह्रस्व

दिविष्ठये तस्यावश्यमङ्गीकार्यत्वात् ।

**बलात्कार** पु० बलात्+कृ-घञ् । बलपूर्वककरणे, हठाकारे च

**बलात्मिका** स्त्री० बलमेवात्मा स्वरूपं कारणत्वात् यस्याः स्वार्थे कन् अतइत्वम् । (हातिशुंडा) हस्तिशुण्डीवृक्षे ।

**बलाढ्या** स्त्री० बलाय आढ्या । (बेलियाडा) क्षुपभेदे ।

**बलानुज** पु० अनुजायते अनु+जन-ड ६त० । श्रीकृष्णे ।

**बलामोटा** स्त्री० बलमामोटयति आ+मुड-अच् । नागदमन्याम् । अयन्तलोऽन्ति मामादिकी तथात्वे ङीष् स्यात् ।

**बलाय** पु० बलस्याय स्थानम् अय यस्य । वरुणवृक्षे ।

**बलाराति** पु० बलस्य तन्नामासुरस्याराति । इन्द्रे । बलमथनप्रभृतयोऽप्यत्र । [फुल । पानीयामलके

**बलाम्लक** पु० बलाय सामर्थ्याय अलति पर्याप्नोति अल-

**बलाहक** पु० बलं वनमाजहाति आ+हा कुन् । मेघे मुस्तके, पर्वते, दैत्यभेदे, नागभेदे च । [कन्द । गुग्गुलुकन्दे

**बलाह्वकन्द** पु० बलं सामर्थ्यमाह्वयति आ+ह्वे-क तादृश

**बलि** पु० बल इन् । पूजोपहारे, दद्यात् 'तौ बलिं चैव निजगात्रात्सुचितस'मिति चण्डी राजग्राह्ये भागे, उपप्लवे, चामरदण्डे, गृहस्थकर्त्तव्यपञ्चयागाख्ये भूतयज्ञे, 'बलिकर्म्म तत कुर्य्यादि'ति स्मृतिः । दैत्यभेदे विरोचनपुत्रे च 'येन बद्धो बलीराजा दानवेन्द्रो महाबलो'ति रक्षाबन्धनमन्त्र । जरया श्लथचर्मणि स्त्री० वा ङीप् । 'गृहस्थस्तु यदा पश्येत् बलीपलितमात्मन' इति स्मृति । उदरावयवे । 'बलित्रयं चारु बभार बाले'ति कुमार । गुह्यस्थे अङ्कुराकारे मांसपिण्डे, गृहदारुभेदे च (पाड) स्त्री० स्वार्थे कन् । तत्र, अतिबलायाञ्च ।

**बलिध्वंसिन्** पु० बलिं ध्वंसयति स्वस्थानात् पातयति ध्वन्स-णिच्-णिनि । विष्णौ वामनावतारेण हि तस्य तथात्वम् ।

**बलिन(भ)** त्रि० बलि+अस्त्यर्थे इन भ वा । जरया शिथिलचर्मयति

**बलिन्** त्रि० बलमस्त्यस्य इनि । बलवति । उष्ट्रे, महिषे, वृषे, शूकरे, बलरामे कुन्दवृक्षे, कफे, माषे च पु० । (बेलियाडा) क्षुपे स्त्री० ङीप् ।

**बलिपुष्ट** पु० बलिना पूजोपहारद्रव्येण पुष्ट पुष-क्त । काके

**बलिप्रिय** पु० बलिन प्रीणाति प्री-क । लोध्रद्रुमे ।

**बलिभुज्** पु० बलिं पूजोपकरणद्रव्यं गृहस्थदत्तबलिं वा भुङ्क्ते क्विप् । काके ।

**बलि(ली)मुख** पु० बलि(ली)युक्तं मुखमस्य प्राक० । वानरे ।

**बलिष्ठ** त्रि० अतिशयेन बली बलिन्+इष्ठन् । अत्यन्तबलवति । उष्ट्रे पु० ।

**बलिसद्मन्** न० ६त० । पाताले बलिपुरादयोऽप्यत्र । [प्रान्ते(प्रान्त)

**बलीक** पु० न० बालयति आप्नोति बल ईकन् नि० । पटल

**बलीयस्** त्रि० अतिशयेन बली बलिन्+ईयसु । अत्यन्तबलवति

**बलीवर्द** पु० वृ-क्विप् वर् ई लक्ष्मीश्च वय ईवरी तो ददाति दा-क ईवर्द' बली चासौ ईवर्द्दश्चे'ति । वृषे ।

**बल्य** न० बलाय हितं बल+यत् । प्रधानधातौ, शुक्रे, बलसाधने च । अश्वगन्धायाम्, अतिबलाया, प्रसारिण्याञ्च स्त्री० ।

**बल्ह** स्तुतौ दाने, वधे, च सक० याचने द्विक० भ्वा० आत्म० सेट् । बल्हते अबल्हिष्ट ।

**बष्क(ष्क)यि(यी)नी** स्त्री० बष्क गतौ अयन् इ०बष्क य' एक वा वत्सम् बष्क(ष्का)योऽस्यास्ति इनि ङीप् । समथस्थे वत्सम् । चिरप्रसूताया गवि । बष्का(ष्का)यं नयतीति नी-ड गौ०ङीष् समस्यत्वे पूर्व्व०पातम् । बष्का(ष्का)यणी(णी)त्यप्यत्र

**ब(व)ह** वृद्धौ भ्वा०आत्म०अक०सेट् इदित् । बं(वं)हते अब(वं)हिष्ट । महिशाङ्कर्यादयमोष्ठ्यादिरिति मार्द्धिनीयाः । दन्त्योष्ठ्यादिरिति वोपदेव ।

**ब(व)हु** त्रि० बं(व)हि कु नलोप । त्रिप्रभृत्यनेकसङ्ख्यान्विते, विपुले च । स्त्रियां वा ङीप् ब(व)ह्वी ।

**ब(व)हुकण्टक** पु० ब(व)हूनि कण्टकान्यस्य । क्षुद्रगोक्षुरे । (गोखुरी) क्षुपभेदे । [कण्टकारिकायाम्

**ब(व)हुकण्टा** स्त्री० ब(व)हव कण्टा कण्टका यस्या ।

**ब(व)हुकन्द** पु० ६ब० । सूरणे (ओल) । कर्कट्यां स्त्री० ।

**ब(व)हुकर** त्रि० ब(व)हु करोति कृ-अच् । (फराश) मार्ज्जनकरे । सम्मार्ज्जन्या स्त्री०गौ०ङीप् । क अच् ६त० उष्ट्रे । अनेककार्य्यकरे त्रि० ।

**ब(व)हुकर्णिका** स्त्री० ब(व)हव कर्णा इव पर्णान्यस्य । आखुकर्ण्याम् । [मूर्व्वा, अम्बष्ठपत्रिकाया, जीरके च स्त्री० ।

**ब(व)हुगन्ध** पु० ६ब० । कुन्दुरुके । त्वचे, (तेजपात) न० ।

**ब(व)हुगन्धदा** स्त्री० ब(व)हुगन्धं ददाति दा-क । मृगभेदे ।

**ब(व)हुग्रन्थि** पु० ६ब० । झाबुके (झाउ) ।

**ब(व)हुच्छिन्ना** स्त्री० ब(व)हु यथा तथा तु छिद्यते स्म छिद क्त तस्, दस्य च न । बन्दगुडूच्याम् ।

**ब(व)हुतिक्ता** स्त्री० ब(व)हु यथा तथा वाहुल्येन वा तिक्ता । काकमाच्याम् ।

**ब(व)हुतिथ** त्रि० ब(व)हूनां पूरणः ब(व)हु+डट् तिथुक् च । अनेकसङ्ख्याने, 'काले गते बहुतिथे, रघुवंश ।

**ब(व)हुत्र** अव्य० ब(व)हु त्रल् । अनेकेषु स्थानादिषु ।

**ब(व)हुत्वच्** पु० ६ब० । भूर्ज्जपत्रवृक्षे । स्वार्थे कन् तत्रैव ।

**ब(व)हुदुग्ध** पु० ब(व)हूनि दुग्धानीव चूर्णानि शुभ्रवर्णत्वात् यस्य । गोधूमे । प्रचुरक्षीरवत्यां गवि, स्नुहीवृक्षे च स्त्री०। स्वार्थे कन् अत इत्त्वम् । स्नुहीवृक्षे ।

**ब(व)हुधा** अव्य० ब(व)हु+प्रकारे-धाच् । अनेकप्रकारे

**ब(व)हुपत्र** पु० इत्व० । पलाण्डौ अनेकपर्णयुक्ते त्रि० । जिङ्गिन्याम्, हस्तजम्भार्याम्, तुलस्याम्, हृहत्याम्, गोरक्षदुग्धायाम्, जतुकायाञ्च स्त्री० गौ० ङीप् । तत सञ्ज्ञायां कन् । भूम्यामलक्याम्, मेथिकायाम्, महाशतावर्याञ्च ।

**ब(व)हुपर्ण** पु० इत्व०। सप्तच्छदवृक्षे तस्य प्रतिपर्णं सप्तसप्तपर्णवत्त्वात् । अनेकपर्णयुक्ते त्रि०। मेथिकायां स्त्री० ङीप्। तत सञ्ज्ञायां कन् । आखुकर्ण्यां स्त्री०टाप् । [वृक्षाशयात्तम्

**ब(व)हुपाद्(द)** पु०इत्व०। पा अत्यलोपः । वटवृक्षे अनेक शिफा-

**ब(व)हुपुत** ब(व)हव पुत्रा इव पर्णान्यस्य। सप्तच्छदे। अनेक-पुत्रादव भूमान्यस्य । शतमूल्यां स्त्री० ङीप् ।

**ब(व)हुपुष्प** पु०इत्व० । निम्बवृक्षे । सञ्ज्ञायां कन् अत इत्त्वम्। धातक्यां स्त्री० । [तुल्यमधुरलवणत्वात् मुञ्जतृणे पु०

**ब(व)हुप्रज** त्रि०इत्व० । बहुसन्तानवति। शूकरे पु० । प्रजा

**ब(व)हुफल** पु०इत्व० । कदम्बवृक्षे विकङ्कते, तेज फले च । अनेकफलयुक्ते त्रि०। माषपर्ण्याम्, खर्विकायाम्, काशमर्य्याम्, त्रिपुष्याम्, (गमा) क्षुद्रकारवेल्लाम्, भूम्यामलक्याञ्च स्त्री० । सञ्ज्ञायां कन् अत इत्त्वम् । भूमिबदर्यां स्त्री०। आमलक्यां स्त्री० ङीप् ।

**ब(व)हुमञ्जरी** स्त्री० इत्व० सञ्ज्ञात्वात् न कप । तुलस्याम् ।

**ब(व)हुमल** पु० इत्व० । सीसके । अनेकमलयुक्ते त्रि० ।

**ब(व)हुमूर्त्ति** स्त्री०इत्व० । वनकार्पासे । नानाकारवति त्रि०

**ब(व)हुमूल** त्रि०इत्व० । अनेकमूलवति । शिग्रौ पु० । सञ्ज्ञायां कन् । उशीरे न० । शतावर्य्यां स्त्री० टाप् । आजन्यां ङीप्

**ब(व)हुरसा** स्त्री०इत्व०। महाज्योतिष्मत्याम् । नानारसवत्यां त्रि०

**ब(व)हुरूप** पु०इत्व० । सर्ज्जरसे (धुना) शिवे, विष्णौ, हिरण्यगर्भे, कामे, केशे च । नानारूपवति त्रि० ।

**ब(व)हुरोमन्** त्रि० इत्व० अनेकरोमवति रोमशे । मेषे पु० ।

**ब(व)हुल** त्रि० ब(व)हि कुलच् त्रि० नलोपः । अनेकसङ्ख्यान्विते प्रचुरे । ब(व)हूनि लाति ला-क । अग्नौ कृष्णवर्णे च पु० । महति त्रि० । कृष्णपक्षे पु० 'ब(व)हुलेऽपि गते निशाकरे' इति कुमार । आकाशे न० । नीलिकायां नीलवर्णायां गवि च स्त्री०। कनच पु०। ब(व)हुल । प्रचुरे त्रि० अग्निदैवतत्वात् कृत्तिकानक्षत्रे स्त्री०टाप् ब०व० ।

**बहुलगन्धा** स्त्री० इत्व० । एलायाम् ।

**ब(व)हुलच्छद** पु० इत्व० । रक्तशोभाञ्जने ।

**ब(व)हुलीकृत** त्रि० ब(व)हुल+च्वि कृ क्त । (आगड़ा) तुषस्थापनार्थेन राशीकृते खलस्थे धान्ये, राशीकृतमात्रे च ।

**ब(व)हुवल्क** पु० इत्व० । प्रियाले । (पियासाल) ।

**ब(व)हुवारक** पु० ब(व)हून् वारयति वारि-णिच् अण्, तत कन्, ण्वुल् वा । श्लेष्मातके (लोना आता) ।

**ब(व)हुविस्तीर्णा** स्त्री० ब(व)हु यथा तथा विस्तीर्णा वि+स्तृ क्त । (कुकुर) कुविकावृक्षे । [त्रि०

**ब(व)हुवीज** पु० इत्व०। (आता) आतमे वृक्षे । प्रचुरवीजवति

**ब(व)हुवीर्य्य** पु० इत्व० । विभीतके, (वयड़ा) तण्डुलीयशाके, (नटेशाक) शाल्मलिवृक्षे, मरुवके च। भूम्यामलक्यां स्त्री०।

**ब(व)हुव्रीहि** त्रि० इत्व० । अनेकधान्यादियुक्ते । व्याकरणोक्ते प्रायेण अन्यपदार्थप्रधाने समासभेदे पु० ।

**ब(व)हुशस्** अव्य० ब(व)हु+शस् । अनेकशब्दानिरूपणे 'गुण कृत्ये ब(व)हुशो नियोजिता' इति कुमार ।

**ब(व)हुशल्य** पु० इत्व० । रक्तखदिरे। अनेकशल्ययुक्ते त्रि० ।

**ब(व)हुशाल** पु० ब(व)हुभिः शाल्यते शल-सञ्ज्ञायां कर्त्तरि घञ् । स्नुहीवृक्षे । [युक्ते त्रि०

**ब(व)हुशिखा** स्त्री० इत्व० । जलपिप्पल्याम् । अनेकशिखा

**ब(व)हुसार** पु० इत्व० । खदिरे । अनेकसारवति त्रि० ।

**ब(व)हुसुता** स्त्री० ब(व)हव सुता इव मूलान्यस्याः । शतमूल्याम् । अनेकपुत्रवति त्रि० । [नानायुक्ते त्रि०

**ब(व)हुसूति** स्त्री०इत्व० । अनेकप्रसववत्यां गवि । ब(व)हुस

**ब(व)हुस्रवा** स्त्री० ब(व)हु यथा तथा स्रवति स्रु अच् । शल्लकीवृक्षे । अनेकधा क्षरणवति त्रि० ।

**ब(व)ह्वृच** पु०इत्व० अच् समा०। ऋग्वेदे । ऋक्षे न० । तदभिज्ञे त्रि० । तत्पत्न्यां स्त्री० । [बाध(वा)डिष् ।

**बा(वा)ड** आप्लावने सक० स्नाने अक०भ्वा०आ०सेट् । बा(वा)डते

**बाडव** न० वडवानां समूहः अण् । घोटकसमुदाये । वाड़ मज्जन-मज्जन् तत्र द वा बाड़ो दृष्टि तं वाति वा क । ब्राह्मणे पु० । वड़वायां जात अण् । और्व्वे समुद्रस्थे कालाग्निभेदे पु० । बाड़वाग्न्यादयोऽप्यत्र पु० ।

**बाडवेय** पु०द्वि० वडवाया अपत्ये ढक्। अश्विनीकुमारयोः ।

**बाडव्य** न० बाडव+समूहे यत् । विप्रसमुदाये ।

**बा(वा)ण** पु० वण शब्दे वण गतौ वा सञ्ज्ञायां कर्त्तरि घञ् । शरे, गोस्तने, (वाट) विरोचनसुते दैत्यभेदे, केवले च । शरपुङ्खे स्त्री० । नीलझिण्टिकायाम् पु०स्त्री० । मेदिन्यां दन्त्योष्ठ्य दिलेन पठित रायमुकुटादय वणशब्दे इति धातु-

प्रकृतिकत्वमाङ्गरतोऽस्योभयविधादित्वम् ।

बा(वा)णलिङ्ग न० बाणदैत्येन सपूज्याविसृज्य नर्मदायां निक्षिप्ते शिवलिङ्गभेदे । शिवार्थे इष्टदभिधाने ।

वाणिज्य न० वणिजो भावः, कर्म वा ब्राह्मणादित्वात् ष्यञ् । क्रयविक्रयादौ 'वाणिज्येन गतस्य मे स्फुटपते' इति शा०२प०

वाणि(णी) वण इञ् णिच् । वस्त्रादीनां वयनक्रियायाम् । वा ङीप् । वस्त्रादीनां वयनक्रियायां, वाक्ये, सरस्वत्याञ्च ।

बा(वा)दर पु० स्त्री० व(ब)दर+स्वार्थेऽण् । कार्पासवृक्षे, ब(व)दरस्येद तस्य विकारो वा अण् । कार्पाससूत्रे न० । तद्वस्त्रादौ त्रि० । [बा(वा)दरिरपत्य ।

बा(वा)दरायण पु० ब(व)दर्य्यां भवः फक् । वेदव्यासे । इञ् ।

बाध पु० बाध घञ् । प्रतिरोधे । न्यायमते साध्याभाववत्पक्षे । यथा वह्निमुष्णो वह्न्याभाववान् ह्रदो बाधः । बाध कर्त्तरि अच् । प्रतिबन्धके त्रि० । भावे घञ् । बोधप्रतिबन्धे, पीडने, उपद्रवे च । [घटि न ह्रस्व ।

बाध विहतौ भ्वादि० आत्म० सक० सेट् । बाधते अबाधिष्ट ।

बाधक त्रि० बाध ण्वुल् । प्रतिबन्धके । स्त्रीणां ऋतुकाले प्रजाजननशक्तिप्रतिरोधके रोगभेदे पु० ।

बाधिर्य्य न० बधिरस्य भावः ब्राह्मणादित्वात् ष्यञ् । श्रवणशक्तिराहित्ये रोगभेदे । [अपत्ये ।

बान्धकिनेय पु० स्त्री० बन्धक्या अपत्यं ढक् इनङ् च । असत्या

बान्धव पु० बन्धु+स्वार्थे, इदमर्थे वा अण् । बन्धुशब्दार्थे, पितृमातृसम्बन्धिनि भ्रातृत्रादौ च ।

बाल पु०न० (बाला) गन्धद्रव्यभेदे । मूर्खे, शिशौ च त्रि० । केशे पु० । अर्शआदित्वादस्त्यर्थे अच् । अश्वशिशौ, अश्ववालधौ, हस्तिवालधौ, नारिकेले, पशुपुच्छे च पु० ।

बालक बाल+स्वार्थे कन् । शिशौ, (बाला) गन्धद्रव्ये च । अङ्गुरीयके न० । अश्वकरिपुच्छयोः, वलये च पु० ।

बालकप्रिया स्त्री० बालकं प्रीणाति प्री क । इन्द्रवारुण्यां (राखालशसा) कदल्याञ्च ।

वाल(लि)खिल्य पु० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु पुलस्त्यकन्यायां क्रतोः पुत्रेषु मुनिभेदेषु ।

बालग्रह पु० ६त० बालानां पीडके उपग्रहभेदे 'बालग्रहाभिभूतानां बालानां शान्तिकारक'मिति चण्डी ।

बालतनय पु० बालास्तनया इव पत्राण्यस्य । खदिरे बालदलबालपत्रादयोऽप्यत्र पु० ।

बालधि पु० बाला धीयन्तेऽत्र धा कि । केशयुक्तलाङ्गूले ।

बालपुष्पी स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् । स्वार्थे कन् । तत्रैव ।

बालभोज्य पु० ६त० । चणके । बालकभक्षणीये त्रि० ।

बालमूषिका स्त्री० कर्म० । क्षुद्रमूषिकायाम् ।

बालव्यजन न० बाला एव व्यजनम् । चामरे । 'कुर्वन्ति बालव्यजनैश्चमर्य्य' इति कुमार ।

बालहस्त पु० बालानां केशानां समूहः बाल+हस्त । केशसमूहे । बाला हस्त इव यत्र । पशूनां लाङ्गूले ।

बाला स्त्री० बाला केशाकाराः पदार्थाः सन्त्यस्य अच् । नारिकेले, हरिद्रायां मल्लिकाभेदे, वलये, त्रुटौ, एतदुभाषा (बाला) गन्धद्रव्यभेदे, अम्बष्ठायां, नीलझिण्ट्याम् षोडशवर्षीयायां स्त्रियां, कन्यायाञ्च । स्वार्थे कन् । तत्रैव बालुकायां, कर्णभूषणे (कानबाला) एलायाञ्च । [अपत्ये ।

बालि पु० बल इञ् णिच्च । इन्द्रपुत्रे कपिराजे । णिनि । बाली ।

बालिश त्रि० बाड इन् बाडि शङ्क श्यति शो क डस्य लः । मूर्खे, शिशौ च 'बालिशगालि । शयानं भिक्षुकर्त' । बाला सन्त्यस्य इति बाली मूर्खा शेतेऽत्र शी ड । उपधाने न० । [बालिहन्त्रादयोऽप्यत्र पु० ।

बालिहन् पु० बालिं बालिनं वा हन्ति हन क्विप् । रामे ।

बालु पु० बल उण् । एलबालुकनामगन्धद्रव्ये । स्वार्थे कन् । तत्रैव न० । पानीयामलके पु० । सिकतासु स्त्री० ।

बालुकायन्त्र न० ६त० । औषधपाकार्थे यन्त्रभेदे ।

बालुकी स्त्री० पु० बल उक गौरा० ङीष् । कर्कटीभेदे । इ० लुक् । बालुङ्क्यप्यत्र ।

बालेय पु० बलेरपत्यं बलये हितं वा ढक् । रासभे, दैत्यभेदे, अङ्गारवल्ल्यां च । कोमले, बलिहिते च त्रि० ।

बालेयशाक पु० बलये हित ढक् कर्म० (बामनहाटि) शाकभेदे

बालेष्ट पु० बालानामिष्टः इष क्त । ब(व)दरे । बालकाभीष्टे त्रि० ।

बाल्य न० बालस्य भावः, कर्म वा वयोवचनत्वात् ष्यञ् । 'आ षोडशाद्भवेद्बाल' इत्युक्ते अवस्थाभेदे ।

बा(वा)ष्प(ष्प) पु० बाध प० गत्व सत्व वा । नेत्रजले, ऊष्मणि च

बा(वा)ह्र प्रयत्ने भ्वादि० आत्म० अक० सेट् । बाहते अबाहिष्ट । घटि न ह्रस्व ।

बाहु पु० बाध-कु धस्य ह । भुज कफोण्यध्यङ्गुलिपर्य्यन्तेऽवयवे

बाहुज पु० बाहुभ्यां ब(व)ह्मबाहुभ्यां जायते जन ड । क्षत्रिये 'बाहू राजन्यः कृत' इति श्रुतिः । [बाहुत्रे लौहचर्म्मादौ ।

बाहुत्र पु० न० बाहु त्रायते त्रै क । धनुःपातवारणार्थे चर्म

बाहुदा स्त्री० (करतोया) नदीभेदे । सा हि अवगाहनात् लिखितस्य मुने छिन्नबाहू पुनर्ददाविति पुराणम् ।

बाहुमूल न० ६त० । कक्षे (काँक) ।
बाहुयुद्ध न० ३त० । मल्लयुद्धे ।
बाहुल पु० बहुलानां कृत्तिकानामिय (स्वामी) अण् वह्नौ । बहुलाभिर्युक्ता पौर्णमासी अण् । कार्त्तिकपौर्णमास्यां स्त्री । तत्र मासे पुनरण् । चान्द्रकार्त्तिकमासे पु० ।
बाहुलेय पु० ब(व)हुलानामपत्यं ढक् । कार्त्तिकेये ।
बि(वि)ट आक्रोशे भ्वा०पर०सक०सेट् । बे(वे)टति अबे(वे)टीत् ।
बिद अवयवे भ्वा०पर०सक०सेट् इदित् । बिन्दति अबिन्दीत्
बि(वि)न्दु पु० बिदि उ विद उ नि० वा । अल्पेऽर्थे ।
बिल भेदने वा चुरा०उभ०पक्षे तु०पर०सक०सेट् । बेलयति ते बिलति । अबीबिलत् त अबेलीत् ।
बिस क्षेपे दि०पर०सक०सेट् । बिस्यति । अबिसत्-अबेसीत् ।
बीभत्स त्रि० बध निन्दायां स्वार्थे सन् कर्म्मणि घञ् । पापिनि, जुगुप्सिते, घृणाविषये च । नाट्यादौ प्रसिद्धे जुगुप्सास्थायिभावके रसभेदे, अर्ज्जुने च पु० । तद्रसविषये विकृतमांसादौ त्रि० । उ । बीभत्सु । अर्ज्जुने पु० ।
बुक्क कुक्कुरादिशब्दे कथने च वा चु०उभ०पक्षे भ्वा० पर सक० सेट् । बुक्कयति ते बुक्कति अबुबुक्कत् त अबुक्कीत् ।
बुक्क न० बुक्क अच् । हृदयस्थे मांसपिण्डे, अग्रमांसे, हृदये च अस्य स्त्रीत्वमपि स्त्रीत्वे टाप् गौ०ङीष् वा । बुक्काघातैर्युम तन्निकटे प्रोद्भूताकेन राधं त्युद्भट । छागे,(बोका) समये, च पु० । शोणिते स्त्री० टाप् । ङी० । बूक्कबुक्के अपि हृदये ।
बुक्काग्रमांस न० ६त० । हृदयस्थे मांसपिण्डाकारे अग्रमांसे ।
बुट हिंसायां चुरा०उभ० पक्षे भ्वा०पर०सक०सेट् । बोटयति ते । बोटति । अबुबुटत त । अबोटीत् ।
बुड त्यागे संवरणे च तु०कुटा०सक० सेट् । बुडति अबुडीत्
बुद निशामने भ्वा०उ०सक०सेट् । बोदति ते । अबुदत् अबोदीत् अबोदिष्ट । क्त्वा वेट् ।
बुद्ध पु० बुध क्त । भगवतोऽवतारभेदे येन वेदतत्कर्म्मणो निन्दा कृता । जागरिते ज्ञानवति च त्रि० ।
बुद्धि स्त्री० बुध क्तिन् । ज्ञाने, सांख्योक्ते प्रथमे अष्टविध धर्म्मवति प्रकृतिपरिणामभेदे, अन्तःकरणविशेषे, वेदान्तोक्ते निश्चयात्मकवृत्तिमति अन्तःकरणे च ।
बुद्धीन्द्रिय न०६त० । मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके । बुद्धीन्द्रियमिति प्रोक्तमित्युक्तेषु इन्द्रियेषु ।
बुद्बुद न० बुद् क० ए० द्वित्वम् । जलस्य गोलाकारे विकारभेदे
बुध ज्ञापने भ्वा०प०सक०अनिट् । बोधति अबौत्सीत् विभ गुप
बुध ज्ञाने भ्वा०उभ०सक०सेट् । बोधति ते । अबुधत् अबोधीत् अबोधि अबोधिष्ट । क्त्वा० वा ण पक्षे क । बोध बुध
बुध ज्ञाने दि० आ०सक०अनिट् । बुध्यते अबोधि अबोधिष्ट ।
बुध पु० बुध-क । पण्डिते, बृहस्पतिभार्य्यायां तारायां चन्द्रेण जनिते पुत्रे ग्रहभेदे, तस्य रोहिण्या प्रतिपालनात् रौहिणेयत्वम् ।
बुधरत्न न० बुधप्रियं रत्नं शाक० । मरकतमणौ । [साम
बुधा स्त्री० बोधति ज्ञापयति रोगिणं बुध ज्ञापने क । जटामा-
बुधाष्टमी स्त्री० बुधवारयुताष्टमी शाक० । चैत्रपौषहरिशयनादीतरत्र काले बुधवारयुतायां शुक्लपक्षाष्टम्यां, तत्कर्त्तव्यव्रते च
बुधित त्रि० भ्वा०उभ० बुध क्त इट् । ज्ञाते ।
बुध्न न० बन्ध नक् नलोप बुधादेशश्च । वृक्षमूले मूलमात्रे च "इषुर्बुध्नोदराश्रितिरिति वेदविद्भिः शास्त्रेषूक्तम् ।
बुन्द निशामने भ्वा० उभ०सक० सेट् । बुन्दति ते । अबुदत् अबुन्दीत् । अबुन्दिष्ट । क्त्वा वेट् ।
बुन्ध निशामने भ्वा० उभ०सक०सेट् क्त्वा वेट् । बुन्धति ते अबुधत् अबुन्धीत अबुन्धिष्ट ।
बुन्ध बन्धे चु०उभ०सक० सेट् । बुन्धयति ते अबुबुन्धत् त ।
बुभुक्षा स्त्री० भुज-सन्-अ । भोजनेच्छायां क्षुधायाम् ।
बुभुक्षित त्रि० बुभुक्षा+तार० इतच् । क्षुधायुक्ते "बुभुक्षितं किं द्विकरेण भुङ्क्ते" इत्युद्भट ।
बुल मज्जने चु० उभ० अक० सेट् । बोलयति ते अबूबुलत्
बुष(स) न० बुस्यते उत्सृज्यते बुस उत्सर्गे क पृ० वा षत्वम् । (आगड़ा) तुच्छधान्ये फलरहितधान्ये ।
बुस उत्सर्गे दि०पर०सक०सेट् । बुस्यति अबुसत् अबोसीत्
बुस्त आदरे अनादरे च चु०उभ०सक०सेट् । बुस्तयति ते अबुबुस्तत् त । [भक्ष्यस्य त्वाचे चर्वे (भुजि) मांसपिण्डकभेदे च
बुस्त न० बुस्यते नाद्रियते आद्रियते वा बुस्त घञ् । पनसादि
बॄ इच्छायां भृतौ च क्र्या०प०पर सक० सेट् । बृणाति अबारीत्
बे(वे)ह प्रयत्ने भ्वा०आत्मने सक०अनिट् । बे(वे)हते अबे(वे)हिष्ट वहि न ह्रस ।
बोध पु बुध घञ् । ज्ञाने, जागरणे च । ज्वलादि-बुध-ण । ज्ञानवति त्रि० । ल्युट् । बोधकोपन त्रि । णिच् ल्युट् । सूचके त्रि०
बोधकर पु० बोधं निशान्ते जागरणं करोति कृ अच् । निशान्ते प्रबोधकरे वैतालिके । ज्ञापके त्रि० ।
बोधन न० बुध णिच्-ल्युट् । विज्ञापने आश्विनमासादि शुक्लनवम्यां तद्दीपने, जागरणे च । नवमं बोधनं कुर्यादिति पुराणम् । 'आर्द्रायां बोधनं कुर्यादिति स्मृतिः ।
बोधनी स्त्री० बोध्यतेऽनया, अच्च वा बुध णिच्-ल्युट् ।

**ब(ब्र)ह्मर्षि** पु० ब(ब्र)ह्मा ऋषिः चतुर्मुखतुल्यो वा ऋषिः वेदस्य वक्ता । वेदवक्तृषु वशिष्ठादिषु ऋषिषु ।

**ब्रह्मर्षिदेश** पु० ६त० । 'कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूरसेनकाः । एष ब(ब्र)ह्मर्षिदेशो वै' इति मनूक्ते, कुरुक्षेत्रादिदेशचतुष्टये । [ब(ब्र)ह्मस्वरूपे च ।

**ब(ब्र)ह्मलोक** पु० ६त० । ब्रह्माधिष्ठाने भुवने सत्यलोके तदीय

**ब(ब्र)ह्मवर्चस** न० ब(ब्र)ह्मणा वेदाध्ययनेन तदनुष्ठानेन च कृतं वर्चः तेजः अच् समा० । वेदाध्ययनजन्ये तेजसि 'ब(ब्र)ह्मवर्चसकामस्य कार्य्यो विप्रस्य पञ्चमे' इति मनुः ।

**ब(ब्र)ह्मवादिन्** पु० ब(ब्र)ह्म वेदं वदति पठति णिनि । वेदपाठके ब(ब्र)ह्म शुद्धं चैतन्यं सर्व्वात्मकतया वदति वेत्ति वा वेदान्तप्रतिपाद्यसर्व्वात्मकब(ब्र)ह्मणि शुद्धचैतन्यं वदति बोधयति ब(ब्र)ह्मबोधके शास्त्रे । [न शास्त्रे ।

**ब(ब्र)ह्मविद्या** स्त्री० ६त० शुद्धचैतन्यात्मकस्य ब्रह्मणोऽभेदे-

**ब(ब्र)ह्मबि(वि)न्दु** पु० ब(ब्र)ह्मणि वेदपाठकाले बि(वि)न्दुः । वेदाध्ययनकाले निःसृतजलबि(वि)न्दौ । [सत्ये पुराणभेदे

**ब(ब्र)ह्मवैवर्त्त** न० अष्टादशमहापुराणमध्ये अष्टादशसहस्र

**ब(ब्र)ह्मशल्य** पु० ब(ब्र)ह्मेव स्वच्छं शल्यं कण्टकाद्यं यस्य । (बावला) वृक्षभेदे । [ग्रन्थभेदे ।

**ब(ब्र)ह्मसंहिता** स्त्री० वैष्णवाचारसिद्धान्ते अध्यायशतात्मके

**ब्रह्मसायुज्य** न० सह युनक्ति युज् क्विप् सयुक् तस्य भावः सायुज्यं ६त० । ब(ब्र)ह्मभावे ।

**ब(ब्र)ह्मसू** पु० ब(ब्र)ह्माणं सूतवान् सू क्विप् । चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे, तस्यावतारभेदे उषापतौ च

**ब(ब्र)ह्मसूत्र** न० ब(ब्र)ह्मणि वेदग्रहणकाले उचितं सूत्रम् । यज्ञोपवीते, ब्रह्मप्रतिपादके शारीरकसूत्रे च ।

**ब्रह्महत्या** स्त्री० हन क्यप् ६त० । विप्रहनने ।

**ब(ब्र)ह्महन्** त्रि० ब(ब्र)ह्माणं हतवान् हन क्विप् । विप्रहत्याकारिणि । 'ब(ब्र)ह्मघ्ना न भवत्यन्यो ब(ब्र)ह्महा द्वयसोऽपि सः । यस्त्वात्मानं हतो गर्भः स तेन ब(ब्र)ह्मघ्नो हतः' इत्युक्ते उपजीवति, श्रुतो लक्षणोच्छ्रेदे च जीवोतिसाङ्गलिध्वनि । गुरोरपि च कर्त्तव्यमन्यथा 'ब्रह्महा' भवेदित्यादिस्मृत्युक्तातिदेशिकब(ब्र)ह्महत्यायामयुक्ते च पु० ।

**ब(ब्र)ह्मकृत** न० ब(ब्र)ह्मणे विप्राय अतिथये हुतं दत्तम् । नित्यकर्त्तव्यपञ्चयज्ञान्तर्गतेऽतिथिपूजनरूपे यज्ञभेदे

**ब(ब्र)ह्माञ्जलि** पु० ब(ब्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ विनयाञ्जलिः, सर्वविशेषज्ञापनार्थं वा अञ्जलिः सङ्कुचितपाणिः । वेदपाठार्थं गुरुनिकटे कार्य्ये विनयाञ्जलौ, सर्वविशेषार्थज्ञापनाय कृतसङ्कोचे पाणिद्वये च ।

**ब्रह्माणी** पु० ब(ब्र)ह्माणम् आनयति जीवयति अन णिच् अण् पूर्व्वपत्वम् । ब्रह्मशक्तौ 'हंसयुक्ते विमानेस्था साक्षसूत्रकमण्डलुः । आयाता ब(ब्र)ह्मणः शक्तिः ब(ब्र)ह्माणी साभिधीयते' इति चण्डी । 'ब्रह्माणी ब(ब्र)ह्मजननादि'ति पुराणम् । ब्रह्मशब्दात् ङीप् आनुक् चेति त्वपाणिनीयम्

**ब(ब्र)ह्माण्ड** न० ६त० । 'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् यज्ञे स्वयं ब(ब्र)ह्मा सर्व्वलोकपितामहः' इति मनूक्ते ब(ब्र)ह्मणः उत्पादके अण्डाकारे भुवनकोषे 'ब(ब्र)ह्माण्डभाण्डोदरभ्राम्यन्ति खण्डशचण्डमेति' वीरचरितम् । तत्प्रमाणस्वरूपादिकं तु बृहदभिधाने ज्ञेयम् ।

**ब(ब्र)ह्मावर्त्त** पु० 'सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब(ब्र)ह्मावर्त्तं प्रचक्षते' इति मनूक्ते देशभेदे

**ब(ब्र)ह्मासन** न० ब(ब्र)ह्मणो ध्यानार्थमासनम् । ईश्वरध्यानार्थे आसने स्वस्तिकपद्मासनादौ ।

**ब(ब्र)ह्मी** स्त्री० ब्रह्मण इयम् अण् टिलोपः ङीप् पु०-वत् ह्रस्वः । (बामनहाटी) शाकभेदे । [बृहदभिधाने ।

**ब(ब्र)ह्मीघृत** न० मेधास्वरबलादिकारके घृतभेदे विस्तरो

**ब(ब्र)ह्मोपनेतृ** पु० ब(ब्र)ह्माणं विप्रमुपनयते तद्धेतुदण्डहेतुत्वात् उप-नी तृच् । पलाशवृक्षे 'विप्रस्य पालाशो दण्ड' इति स्मृतिः ।

**ब्रा(ब्रा)ह्म** न० ब्रह्मण इदम्, तेन प्रोक्तम् वा अण् टिलोपः । अङ्गुष्ठमूले तीर्थे, तेन हि तीर्थेन द्विजाचमनं विहितमिति तस्य तत्सम्बन्धित्वम् 'ब्राह्मेण ब्रा(ब्रा)ह्मेन तीर्थेन द्विजो नित्यमुपस्पृशेत्' इति स्मृतिः । ब(ब्र)ह्मणोक्ते अष्टादशपुराणान्तर्गते पुराणभेदे च । विवाहभेदे नारदे च पु० । सरस्वत्याम्, सोमलतायां ब्रह्मीशाके (बामनहाटि) शाकभेदे च स्त्री० आहृतानां गुरुकुलात् विप्राणां पूजको भवेत् । नृपाणामक्षयो ह्येष ब(ब्रा)ह्मो धर्म्मो विधीयते इति मनूक्ते राज्ञो धर्म्मभेदे पु० । मातृभेदे स्त्री० ङीप् 'ब्रा(ब्रा)ह्मी नारायणी तथेति तन्त्रम् ।

**ब्रा(ब्रा)ह्मण** पु० ब(ब्र)ह्म वेदं शुद्धं परचैतन्यं वा वेत्त्यधीते वा अण् ब(ब्र)ह्मणो जातावित्यण् न टिलोपः । ब्रह्मणो मुखजातत्वात् ब्रह्मणोऽपत्यम् अण् तेन न टिलोपः । विप्रे जातिभेदे । तस्याः स्त्री० । 'ब(ब्र)ह्म जानाति ब्राह्मण' इत्युक्ते परब(ब्र)ह्मज्ञे त्रि० । स्त्रियां ङीप् तत्पत्न्यां स्त्री० टाप् ।

**ब्रा(ब्रा)ह्मणब्रुव** पु० ब्रा(ब्रा)ह्मणं जातिमात्रं आत्मानं ब्रूते । 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्यादिकञ्च यः । नैमित्तिकं च

वणिके द्वितीये नक्षत्रे, पोषकलतायाञ्च स्त्री० ङीप् ।

**भरण्य** न०भरणाय हितम् यत् । मूल्ये, वेतने च । स्त्रीत्वमपि

**भरण्यभुज्** त्रि०भरण्यं वेतनं भुङ्क्ते भुज-क्विप् । वैतनिके कर्मकरे

**भरत** पु० भरं तनोति तन-ड । (जड़भरत) इति ख्याते मुनिभेदे, नाट्यशास्त्रस्य, अलङ्कारशास्त्रस्य च कर्त्तरि मुनिभेदे। शबरे, तन्तुवाये, क्षेत्रे, कैकयीसुते रामानुजे च । भरतेन प्रोक्तम् भारतं नाट्यशास्त्रमधीयते अण् तस्य लुक् । नटेषु । दुष्मन्तेन शकुन्तलायामुत्पादिते नृपभेदे पु० तस्यापत्यानि इञ् तस्य बह्वषु लुक् । भरतवंश्ये नृपे पु०ब०व० ।

**भरतखण्ड** न० भरतस्य नृपस्य चिह्नितं खण्डम् । भारतवर्षान्तर्गते कुमारिकाख्ये खण्डे ।

**भरतवर्ष** न०इत० । भारते वर्षे ।

**भरताग्रज** पु० इत० । दशरथज्येष्ठपुत्रे श्रीरामे ।

**भरद्वाज** पु० ज्येष्ठस्य भ्रातुरुतथ्यस्य पत्न्यां ममतायां बृहस्पतिना जनिते मुनिभेदे । [तस्य नक्षत्रे । भरिणी

**भरित** पु० भ-इतच् । हरिद्वर्णे । तद्वति त्रि० । स्त्रियां ङीप्

**भर्ग** पु० भ्रस्ज-घञ् भस्मादेशे कुत्वम् । शिवे, ज्योतिः पदार्थे, आदित्यान्तर्गते ऐश्वरे तेजसि,'आदित्यान्तर्गतं वर्चो भर्गाख्यं तन्मुमुक्षुभिः । जन्ममृत्युविनाशाय दुःखस्य त्रिविधस्य च ध्यानेन पुरुषैर्यश्च द्रष्टव्यं सूर्य्यमण्डले' इति याज्ञवल्क्य- तस्य तेजस ऐश्वरत्वं 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति गीतायामुक्तम् । भावे घञ् भर्जने च । [धातरि च त्रि० ।

**भर्त्तृ** पु० भृ तृच् । स्वामिनि, अधिपतौ, राजनि च । पोषके,

**भर्त्तृदारक** पु० भर्त्तुरधिपस्य राज्ञः दारकः पुत्रः । नाट्योक्तौ राजकुमारे । तत्कन्यायां स्त्री० कन् । भर्त्तृदारिका ।

**भर्त्तृहरि** पु० भर्त्ता हरिरिव । स्वनामख्याते वाक्यपदीयादिग्रन्थकर्त्तरि विक्रमादित्यस्य ज्येष्ठे भ्रातरि राजभेदे ।

**भर्त्स** अभिक्षेपे, चुरा०उभ०सक०सेट् । भर्त्सयति ते अबभर्त्सत् त

**भर्त्सन** न०भर्त्स-ल्युट् । अपकारवचने अभिक्षेपे तिरस्कारे, याञ्चकारोपेक्षस्मयोक्तौ । युच् । भर्त्सनाप्यत्र स्त्री० ।

**भर्त्सपत्रिका** स्त्री० भर्त्सं निन्दनीयं पत्त्रमस्याः कप् अत इत्त्वम् । अश्मभेदोषध्याम् ।

**भर्व** हिंसायां भ्वा०पर०सक०सेट् । भर्वति अभर्वीत् ।

**भर्मन्** न०भृ मन्, भर्मन् वा । स्वर्णे, भृतौ, नाभौ, धुस्तूरे च

**भर्ब** हिंसि भ्वा०पर०सक० सेट् । भर्बति अभर्बीत् ।

**भल** वधे दाने निरूपणे च भ्वा०आ०सक०सेट् । भलते अभलिष्ट

**भल्ल** निरूपणे चु०भ्वा०उभ०सेट् । भालयति अबीभलत ।

**भलता** स्त्री० भाति-भा-क्त कर्म० । राजवलालतायाम् । [स्त्रीत्

**भल्ल** दाने, वधे, निरूपणे च भ्वा०प०सक०सेट् । भल्लति अभ

**भल्ल** पु० भल्ल-अच् । भल्लूके । अस्त्रभेदे पु०न० । स्वार्थे कन् भल्लुके पु० । वा गौरा०ङीप् तत्रैव । स्वार्थे कन् । भल्लकाप्यत्र

**भल्लपुच्छी** स्त्री० भल्लस्य पुच्छमिव पुष्पमस्याः ङीप् । (गोरक्षतण्डुला) क्षुपभेदे ।

**भल्लात** पु०भल्ल भल्लास्त्रमिवाततिः स्वर्शिनम् अत-अच् । (भेला) वृक्षभेदे, स्वार्थे कन् । अत्रैव गौ०ङीप् । भल्लातक्यप्यत्र ।

**भल्लु(ल्लू)क** पु० भल्ल उ(ऊ) क । (भालुक) जन्तुभेदे ।

**भव** पु०भू-भावे अप् । जन्मनि, सत्तायाम्, प्राप्तौ च । भवत्यस्मात् अपादाने अप् । जलमूर्त्तिधरे महादेवे, जलस्य पृथिवीहेतुत्वेन तद्रूपस्य शिवस्य जन्महेतुत्वम् । आधारे अप् । संसारे । कर्त्तरि अच् । भव्ये, (चालता) वृक्षे, मङ्गले च ।

**भवत्** त्रि० भा-डवतु । युष्मदर्थे, सर्वनामता चास्य । भवान् भवत्यौ पुन भवत्पुत्र । भू शतृ । वर्त्तमानकालार्थे भवन् कर्त्तरि च भवन् स्त्रियामुभयत्र ङीप् शतुर्नस्य नुम् ।

**भवदीय** त्रि० भवतस्त्वदीयम् छ भदत्वम् जश्त्वाच । त्वदीये । [जन्मनि, सत्तायाञ्च ।

**भवन** न० भू-आधारे ल्युट् । गृहे । भावे ल्युट् । भावे,

**भवादृश्(श)क्ष** त्रि० भवत इवेव दर्शनमस्य भवत्+दृश क्विप् टक् क्स वा । भवत्तुल्ये जने । [दुर्गायाम् ।

**भवानी** स्त्री०भवस्य पत्नी भव+ङीप् आनुक् च । शिवभार्य्यायाम्

**भवाभीष्ट** पु० भवस्य महादेवस्याभीष्ट अभि+इष-क्तः । गुग्गुलौ । [तद्वति त्रि० ।

**भविक** न० भवाय हितम् ठन् । मङ्गले । अर्श आद्यच् ।

**भवितव्य** न० भू भविष्यति कर्त्तरि च नि० तव्य । अवश्यभव्ये 'भवितव्यं भवत्येव यद्विधेर्मनसि स्थित'मिति । [च

**भवितव्यता** स्त्री० भवितव्यस्य भावः तल् । अवश्यम्भावे, भाग्ये

**भविष्णु** त्रि० भू इष्णुच् । भवनशीले ।

**भविष्य(त्)** पु० भू-लृट् तस्य शतृ स्य च पृ० वा तलोपः । भाविनि काले । तत्कालवर्त्तिनि पदार्थे त्रि० । स्त्रियाम् ङीप् नुम च 'अप्याशेषोभविष्यन्त्या' इति रघुः । तलोपपक्षे टाप् । उत्तरपदस्य त्रि० । 'यद्भविष्यो विनश्यती'ति पञ्चतन्त्रम् । भविष्यमधिकृत्य कृते पुराणभेदे न० ।

**भव्य** त्रि० भू कर्त्तरि नि० यत् । भाविनि 'अवश्यभव्येष्वनवग्रहग्रहा'इति नैषध (चालता) फलभेदे मङ्गले च न० । शुभे, सत्ये, योग्ये च न० तद्वति त्रि० । "करेणौ, गजपिप्पल्यां च स्त्री० ।

भष कुक्कुरशब्दे भ्वा०पर०अक०सेट्। भषति अभषीत्-अभाषीत्
भषक पु० भष क्वुन्। कुक्कुरे। [अभसीत्।
भस दीप्तौ अक० भर्त्से सक०जु०पर०सेट्। बभस्ति। अभासीत्-
भस्त्रा स्त्री० भस-ष्ट्रन्। चर्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्मनिर्म्मिते यन्त्रभेदे। (याता) गौ० ङीप्। अत्रैव। स्वार्थे कन् टाप् न ह्रस्वम्। भस्त्रकाप्यत्रैव।
भस्मक न० भस्म करोति कृ-ड। (भस्मकीट) बहुभोजनकारके रोगभेदे। भस्मैव इवार्थे कन्। कलधौते रूप्ये, विडङ्गे च।
भस्मगन्धा स्त्री० भस्मन इव गन्धोऽस्याः। रेणुकाख्यगन्धद्रव्ये। स्वार्थे कन् अत इत्वम्। अत्रैव। [गन्धद्रव्ये।
भस्मगन्धिनी स्त्री० भस्मन इव गन्धोऽस्त्यस्या इनि। रेणुकाख्ये
भस्मगर्भ पु० भस्म गर्भे यस्य। तिनिशवृक्षे, कपिलशिंशपायां च। रेणुकाख्यगन्धद्रव्ये स्त्री० टाप्।
भस्मन् न० भस-मनिन्। (छाइ) दग्धगोमयादिविकारे।
भस्मरोहा स्त्री० भस्मनि रोहति रुह-अच्। दग्धिकायाम्।
भस्मसात् अव्य० भस्म कार्त्स्न्येन सम्पन्नं करोति भस्मन्+साति। साकल्येन भस्मरूपकरणे।
भा दीप्तौ अदा० पर० अक० अनिट्। भाति। अभासीत्।
भा स्त्री० भा-अङ्। टाप्। दीप्तौ।
भाक्त त्रि० भक्तौ गौण्यां वृत्तौ आगत अण्। औपचारिके गौण्या वृत्त्या बोधितेऽर्थे। भक्तस्यान्नस्येदम् अण्। अन्नसम्बन्धिनि त्रि०।
भाग पु० भज-भावे घञ्। भजने। कर्मणि घञ्। अंशे, रूप-वस्तुनोऽर्द्धे, एकदेशे, भाग्ये, 'त्रिंशांशकलया राशेर्भाग इत्यभिधीयते' इति ज्योतिषोक्ते राशेः त्रिंशांशे च।
भागधेय न० भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम्। भाग्ये। भागेन धीयतेऽसौ धा-यत्। राजदेये करे। भागो धीयतेऽस्मै धा-सम्प्रदाने यत्। दायादे सपिण्डे।
भागवत त्रि० भगवत भगवत्या वा इदम् सोऽस्य देवता वा अण्। भगवत भगवत्या वा भक्ते, तत्सम्बन्धिनि च 'भक्ता इव भागवता भवन्ती'त्युद्भट तयोः सम्बन्धिगुणवर्णने पुराणे उपपुराणे च न०। 'यत्र श्रुतं भागवतं पुराणमि'ति पुराणम् इत्व तत्र पुराणत्वं क्व वोपपुराणत्वं तद्विद्भिमाने विस्तरेण निरूपयिष्यते। [दायादे।
भागशस् अव्य० भागं भागं इत वीप्सार्थे शस्। एकैकभागतः
भागहर त्रि० भागमंशं हरति अधिकारित्वेन गृह्णाति हृ-अच्। अंशभागिनि।
भागहार पु० भज्यते इति भागो विभाज्यस्तस्य हारो, हरणम् हृ-घञ्। अङ्कशास्त्रोक्ते भाज्यस्य विभागकरणे।
भागिन् त्रि० भज-घिनुण्। अंशविशिष्टे। [स्त्री० ङीप्।
भागिनेय पु० भगिन्या अपत्यम् ढक्। स्वसृपुत्रे। तत्कन्यायां
भागीरथी स्त्री० भगीरथेन निर्वृत्ता आनीता तत्सम्बन्धिनी वा अण्। गङ्गायाम्। 'भागीरथीनिर्झरशीकराणा'मिति कु०
भागुरि पु० स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे।
भाग्य न० भज-ण्यत् कुत्वम्। शुभाशुभसूचके कर्म्मणि। भाग प्रयोजनमस्य यत्। भागार्हे त्रि०।
भाङ्गीन न० भङ्गायाः विजयायाः भवनं क्षेत्रं खञ्। (भाङ) भङ्गाभवनयोग्ये क्षेत्रे। यञ्। भाङ्ग्यमप्यत्र। [भाजत् त
भाज पृथक्करणे, अद०चु०उभ०सक०सेट्। भाजयति ते अब
भाजन न० भाज्यतेऽनेन भाज-ल्युट्। पात्रे, आधारे, योग्ये च
भाजी स्त्री० भाज-कर्म्मणि घञ् नि० ङीप्। भक्तव्यञ्जनभेदे।
भाज्य त्रि० भाज्यते विभज्यते भाज-कर्म्मणि यत्। विभजनीये 'भाज्यो हरः शुध्यति यद्गुणः स्यादि'ति लीलावती।
भाटक न० भट-पोषणे ण्वुल्। परगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने। (भाडा)
भाण पु० भण-घञ्। 'भाणः स्याद्धूर्त्तचरित' इत्याद्युक्तलक्षणे दृश्यकाव्यभेदे साहि० द०।
भाण्ड न० भा-अण्डच्, भण-ड-स्वार्थे अण् वा। पात्रे, तैलाद्याधारे भाजने, (भाँड़) नटभेदे, (भाड़ार) 'मञ्चाण्ड-भाण्डोदरे'ति चौरचरितम्। वणिजां मूलधने, अश्वभूषायां, नदीकूलद्वयमध्ये पात्रे च। गर्द्दभाण्डे वृक्षे पु०। भण्डस्य भाव अण्। भण्डचरित्रे न०(भाड़ामि)।
भाण्डारिन् पु० भाण्डमृच्छति ऋ-णिनि। (भाण्डारी) अन्नादिद्रव्यस्थेषु कृताधिकारे।
भाण्डिवाह पु० भाण्डिं क्षुराद्याधारं (भाडि) वहति अण्। नापिते। भाण्डि+अपत्यर्थे अञ्। भाण्डिकोऽप्यत्र। [भेदे च
भाण्डीर पु० भण्ड ईरन् स्व० पृ०। वटवृक्षे, वृन्दावनस्थे वटवृक्ष-
भाति स्त्री० भा-क्तिन्। शोभायाम्।
भाद्र पु० भद्राभिर्युक्ता पौर्णमासी भाद्री सा अस्मिन् मासे अण्। चैत्रादितः षष्ठे चान्द्रे मासि। तस्याभौद्रपौर्णमास्यां स्त्री० ङीप्। भद्रेव स्वार्थे अण्। पूर्वोत्तरभाद्रपदान्यतरक्षे न०। 'भाद्रद्वये सागरे' इति ज्योतिषम्।
भाद्रपदा स्त्री० ब०व०। भद्रपदे अण् भाद्रं भाद्रमिव पद-पादाम्। अश्विन्यादितः पूर्वोत्तरप्रोष्ठपदयोः। तद्युक्ता पौर्णमासी अण् ङीप्। भाद्रपदा पौर्णमास्य-स्मिन् मासे अण्। चान्द्रे भाद्रे मासि। [अगौर्वे

प्रक्षाले दन्तधावने । स्नाने भोजनकाले च षट्सु मौनं समाचरेदि'ति स्मृतिः ।

मौनिन् त्रि॰ मौनमस्त्यस्य इनि । वाग्व्यापाररहिते । मुनौ पु॰

मौरजिक त्रि॰ मुरजवादनं शिल्पमस्य ठक् । मृदङ्गवादनशीले

मौर्ख्य न॰ मूर्खस्य भावः ष्यञ् । जाड्ये, मूर्खतायाञ्च ।

मौर्वी स्त्री॰ मूर्वा लता तत्तन्तुना निर्वृत्ता अण् । धनुर्गुणे, अजमक्षायाञ्च ।

मौल त्रि॰ मूलं वेत्ति मूलादागतो वा अण् । भूम्यादेरागमादि-मूलज्ञे, 'ये परम्परया मौलाः सामन्ताः स्वामिनं विदु' रिति स्मृतिः मूलादागते च ।

मौलि पु॰स्त्री॰ मूलस्यादूरभवः इञ् । चूडायां, किरीटे, संयतकेशेषु च । अशोकवृक्षे पु॰ । भूमौ स्त्री॰ वा ङीप् ।

मौषल न॰ मुषलस्येदम् मुषलमण् । मुषलतुल्यनिषेधे 'गङ्गायां मौषलं स्नानं महापातकनाशन'मिति पुराणम् । मुषल-मधिकृत्य कृतो ग्रन्थ अण् । महाभारतान्तर्गते 'मुषल कुलनाशन'मित्यादिप्रतिपादके षोडशे पर्वणि ।

मौहूर्त्त पु॰ मुहूर्त्तप्रतिपादकं शास्त्रं वेत्त्यधीते वा अण् । ज्योतिःशास्त्रज्ञे । ठक् । तत्रैव ।

म्ना अभ्यासे भ्वा॰पर॰सक॰अनिट् । मनति अम्नासीत् । [त

म्रक्ष सयोजने म्लेच्छने च चु॰उ॰स॰सेट् । म्रक्षयति ते अमम्रक्षत्

म्रक्ष सङ्घाते सयोजने च भ्वा॰पर॰सक॰सेट् । म्रक्षति अम्रक्षीत्

म्रक्षण न॰ म्रक्ष ल्युट् । सयोजने, राशीकरणे, तैले अभ्यञ्जने च

म्रद गतौ भ्वा॰ पर॰ सक॰ सेट् क्वा वेट् । म्रदति अम्रदत् अम्रादीत् अम्रदीत् । [अङ् म्रदा

म्रद् मोदे भ्वा॰आ॰सक॰सेट् घटा॰ । म्रदते अम्रदिष्ट । म्रदयति

म्रदिमन् पु॰ मृदोर्भावः मृदु+इमनिच् म्रदादेशः । मृदुत्वे ।

म्रदिष्ठ त्रि॰ अतिशयेन मृदुः इष्ठन् म्रदादेशः । अतिमृदुलवति । ईयसुन् । म्रदीयानप्यत्र त्रि॰ । स्त्रियां ङीप् । [चीत्

म्रुच गतौ भ्वा॰पर॰सक॰सेट् क्वावेट् । म्रोचति अम्रुचत् अम्रो-

म्रुञ्च गतौ सर्वं म्लुचवत् । म्रुञ्चति अम्रुचत् अम्रुञ्चीत् ।

म्रेट(ड) उन्मादे भ्वा॰पर॰सक॰सेट् । म्रेट(ड)ति अम्रेटी(डी)त् घटि न ह्रस्वः ।

म्लक्ष चु॰ म्रक्षवत् सर्वम् । म्लक्षयति ते । अमम्लक्षत् त ।

म्लान त्रि॰ म्लै-क्त । मलिने म्लानियुक्ते च ।

म्लानि स्त्री॰ म्लै-क्तिन् । कान्तिक्षये । [च त्रि॰

म्लिष्ट न॰ म्लेच्छ क्त नि॰ । अविस्पष्टवाक्ये तद्वाक्ययुक्ते, म्लाने

म्लुच गतौ भ्वा॰पर॰सक॰सेट् क्वा वेट् । म्लोचति । अम्लुचत्-अम्लोचीत् ।

म्लुञ्च गतौ म्लुचवत् सर्वम् । म्लुञ्चति अम्लुचत् अम्लुञ्चीत् ।

म्लेच्छ अपशब्दे वा॰चु॰उभ॰ पक्षे भ्वा॰पर॰सक॰सेट् । म्लेच्छ-यति ते म्लेच्छति अमम्लेच्छत् त अम्लेच्छीत् ।

म्लेच्छ पु॰ म्लेच्छ-घञ् । अपशब्दे 'म्लेच्छो ह वा एषयदपशब्द' इति श्रुतिः । कर्त्तरि अच् । पामरजातौ, नीचजातौ च पु॰ पापरते त्रि॰ हिङ्गुले न॰ ।

म्लेच्छकन्द पु॰ म्लेच्छप्रियः कन्दः । लशुने ।

म्लेच्छजाति स्त्री॰ म्लेच्छाभिधा जातिः । गोमांसादिभक्षके किरातादिजातिभेदे ।

म्लेच्छदेश पु॰ म्लेच्छाधारो देशः । चातुर्वर्ण्याचाररहिते देशे

म्लेच्छभोजन न॰ म्लेच्छैर्भुज्यते कर्मणि ल्युट् । यावके अन्नभेदे ।

म्लेच्छमण्डल न॰ ६त॰ । म्लेच्छदेशे । [म्नात्मस्मपत्वा

म्लेच्छमुख न॰ म्लेच्छानां मुखमिव रक्तत्वात् । ताम्रे म्ले-

म्लेच्छित न॰ म्लेच्छ-क्त । अपशब्दे असंस्कृतशब्दे ।

म्लेट(ड) उन्मादे भ्वा॰पर॰सक॰सेट् । म्लेट(ड)ति अम्लेटी-(डी)त् । घटि न ह्रस्वः । [न ह्रस्व

म्लेव सेवने भ्वा॰आ॰सक॰सेट् । म्लेवते अम्लेविष्ट । घटि

म्लै कान्तिक्षये भ्वा॰पर॰सक॰अनिट् । म्लायति म्लासीत् ।

## य

य पु॰ या-ड । वायौ, यशसि, योगे, गतौ च । यम-ड । संयमे । या-कर्त्तरि ड । यातरि त्रि॰ ।

यकृत् न॰ यं संयमं करोति कृ-क्विप् तुक् च । कुक्षौ-दक्षिण-भागस्थे मांसपिण्डे । तद्दर्शके रोगे च ।

यकृद्दात्रिका स्त्री॰ यकृतः दात्रमिव सादृश्य यस्याः कप् । तैल-पायिकायाम् (तेलापोका) ।

यकृद्वैरिन् पु॰ यकृतो रोगभेदस्य वैरी हन्ता । रोहितकवृक्षे

यक्ष पूजायां चु॰आ॰सक॰सेट् । यक्षयते अययक्षत ।

यक्ष पु॰ यक्ष्यते यक्ष-कर्मणि घञ् । देवयोनिभेदे, तदीश्वरे कुबेरे इन्द्रगृहे च ।

यक्षकर्द्दम पु॰ यक्षप्रियः कर्दमः । 'कुङ्कुमागुरुकस्तूरीकर्पूरं चन्दनं तथा । महासुगन्धमित्युक्त नामतो यक्षकर्दम' इत्युक्ते समभागेन मिश्रिते कुङ्कुमादौ ।

यक्षतरु पु॰ यक्षाणां वासयोग्यस्तरुः । वटवृक्षे यक्ष्ण रयोस्तम

यक्षधूप पु॰ यक्षे पूजने योग्यो धूपः । (धुना) सर्जरसे ।

यक्षराज पु॰ यक्षाणां राजा टच् समा॰ । कुबेरे । यक्षेषु राजते राज-क्विप् । यक्षराड्प्यत्र पु॰ ।

यज्ञराति त्रि० यज्ञप्रिया रात्रि । कार्त्तिकपूर्णिमारात्रौ।
यज्ञामलक न० यज्ञाणामामलकमिव । पिण्डखर्जूरफले।
यज्ञावास पु० ६त० । यज्ञानामावास । वटवृक्षे।
यज्ञोडुम्बरक न०यज्ञाणामुडुम्बरमिव इवार्थे कन् । अश्वत्थफले
यज्ञघ्नी स्त्री० यज्ञान् हन्ति हन-टक् ङीप् । द्राक्षायाम् ।
यज्ञ्मन् पु० यज मनिन् । रोगभेदे ।
यज देवपूजने, दाने, सङ्गतौ च भ्वा० उभ०यजादि०अनिट् ।
यजति ते अयाक्षीत् अयष्ट । [इति श्रुति ।
यजति पु० यज-अतिप् । यागभेदे । 'यजतिषु ये यजामहे'
यजन न० यज-ल्युट् होतादिना पशुधीराज्यादिभि मन्त्र-
पूर्वक वह्नौ प्रक्षेपरूपे यागे। ल्यु। उत्तरपदस्य समभि-
व्याहृतदेवादेर्यष्टरि त्रि० यथा देवयजन इत्यादि [श्रवति
यजमान पु० यज-शानच् होत्रादे र्नियोक्तरि प्रधानकर्मकर्-
यजि पु० यज इन्। यष्टरि, यागे, यजधातौ च ।
यजुर्वेद पु० यजुषा ऋक्सामभिन्नाना मन्त्राणां प्रतिपादको
वेद । वेदभेदे स च शुक्लकृष्णभेदेन द्विधा तद्विवरण वृहदभिधाने
यजुस् न० यज उसि । ऋक्सामभिन्ने पादच्छेदरहिते मन्त्रभेदे
यज्ञपशु पु० इज्यते, हविर्दीयतेऽत्र वा यागार्थकयजेर्भावे आ-
धारे वा न यज्ञ यज्ञार्थे पशु । अश्वे, छागे च ।
यज्ञपुरुष पु० यज्ञरूप पुरुष । विष्णौ ।
यज्ञभूषण पु० यज्ञम् भूषयति भूष णिच् ल्यु । श्वेतदर्भे ।
यज्ञयोग्य पु० यज्ञे योग्य । उडुम्बरवृक्षे तस्य समिदादिभि र्हि
यज्ञ साध्यते ।
यज्ञवल्ली स्त्री० यज्ञार्था वल्ली । सोमवल्लयाम्।
यज्ञवराह पु० यज्ञरूपोवराह । आदिवराहे भगवदवतारभेदे
यज्ञवाट पु० ६त० । यज्ञस्थाने ।
यज्ञवृक्ष पु० यज्ञार्थ वृक्ष । वटवृक्षे।
यज्ञश्रेष्ठा स्त्री० यज्ञेषु तत्साधनेषु श्रेष्ठा । सोमवल्लयाम् ।
यज्ञसार पु० यज्ञेषु यज्ञसाधनेषु सार श्रेष्ठ' । यज्ञोडुम्बरवृक्षे
यज्ञसूत्र न० यज्ञार्थ योग्य सस्कृत वा सूत्र शाक०। उपवीते
यज्ञाङ्ग पु० यज्ञस्याङ्ग साधनत्वेनास्यस्य अच् । यज्ञोडुम्बरे,
खदिरे, कृष्णपदिकायाञ्च । ते हि समिद्रूपचर्मादिना यज्ञ
सम्पादयन्ति । [यज्ञाङ्गे च
यज्ञान्त पु०६त० । अवभृथे यज्ञसमाप्तौ स्नानादिक्रियाभेदे,
यज्ञिक पु०यज्ञ यज्ञाङ्ग साधनत्वेनास्यस्य ठन् । पलाशे तस्य
समिदादिभिर्हि यज्ञनिष्पादनात ।
यज्ञिय त्रि० यज्ञाय हित च । यज्ञकर्मयोग्ये । द्वापरयुगे पु०
यज्ञियदेश पु०कर्म०। यज्ञकर्मयोग्यदेशे 'कृष्णसारस्तु चरति
मृगो यत्र स्वभावत । स ज्ञेयो यज्ञियोदेश' इत्युक्ते देशे ।
यज्ञीय पु० यज्ञाय हित तस्येद वा छ । यज्ञोडुम्बरे । याग
सम्बन्धिनि त्रि० । [स्ववमादसे' इति श्रुति ।
यज्ञीयब्रह्म पादप पु०६त०। विकङ्कतवृक्षे (वइचि) 'वैकङ्कतीं
यज्ञेश्वर पु० यज्ञस्य प्रवर्त्तयिता ईश्वर । विष्णौ ।
यज्ञेष्ट न०७त०। दीर्घरोहितवृक्षे ।
यज्ञोडम्बर पु० यज्ञार्थ उडुम्बर । स्वनामख्याते वृक्षे ।
यज्ञोपवीत न० यज्ञेन सस्कृतमुपवीतम् । यज्ञसूत्रे उपनयन
संस्कारेण पवित्रीकृते त्रिवृति ऊर्द्ध्वकृते वामस्कन्धात् दक्षि-
णकुक्षितो लम्बमानतया धृते सूत्रभेदे ।
यज्वन् पु० यज-भूते क्वनिप् । विधानेन कृतयागे।
यत ताडने उपस्करे च चु०उ०स०सेट् ।यातयति। अयीयतत् त
यत यत्ने भ्वा०आत्म०अक०सेट् । निशायामनिट् । यतते अयतिष्ट
यतस् अव्य० यद्+तसिल् । यस्मादित्यर्थे ।
यतम त्रि०एषा मध्ये य यद्+डतमच्। एषा मध्ये यद्यर्थे
यतर त्रि०। अनयोर्मध्ये य यद्+डतरच्। अनयोर्मध्ये यदर्थे
यति पु० यतते मोक्षाय यत इन् । परिव्राजके सन्यासिनि।
यम्यते जिह्वा अत्र यम क्तिन् । छन्दोग्रन्थविख्याते
जिह्वाया विश्रामस्थाने उच्चारणकालविच्छेदे स्त्री०। सा
च 'क्वचित् छन्दसान्ते यतिरभिहिता पूर्वकृतिभि पदान्ते
सा शोभा व्रजति पदमध्ये त्यजति चे'त्याद्युक्ता सुप्तिङन्त-
पदान्ते एव छन्दोग्रन्थानुसारेण जिह्वाया विश्रामरूपो
च्चारण भावरूपा । यद्-डति । यत्परिमाणे ब०व०त्रि० ।
यतिचान्द्रायण न० यतिनैव कर्त्तव्य चान्द्रायण व्रतभेद ।
'अष्टावष्टौ समश्नीयात् पिण्डान् मध्यन्दिने स्थिते । निय
तात्मा हविष्याशी यतिचान्द्रायण चरदि'त्युक्ते व्रतभेदे
यतिन् पु० यमन यत यम क्त यतमनेन इनि । सन्यासिनि
परिव्राजके । विधवायां स्त्री० ङीप्।
यत्न पु० यत नङ् । आयासे, उद्योगे, वैशेषिकोक्ते प्रवृत्तिनिवृ-
त्तिजीवनयोनिरूपत्रैविध्यापन्ने गुणभेदे च। स च आत्मगुण
इति नैयायिकादय चित्तगुण इति साङ्ख्यवेदान्तिना ।
यत्र अव्य० यद्+त्रल् । यस्मिन्नित्यर्थे ।
यत्र सङ्कोचने वा चु० उभ०पक्षे भ्वा०पर० सक०सेट् इदित् ।
यन्त्रयति त यन्त्रति अययन्त्रत् त अयन्त्रीत् ।
यथा अव्य० यद्+प्रकारे थाल् । यत् प्रकारेत्यर्थे, सादृश्ये,
योग्यतायां, आनुरूप्ये पदार्थान तिक्रमे च । [दाव
यथाकाम अव्य० काममनतिक्रम्य अव्ययी०। स्वाच्छन्द्ये यथेष्टता
यथाकामिन् त्रि० यथ काम स्वाच्छन्द्यमस्त्यस्य इनि ।

स्वेच्छाचारिणि जने । स्त्रियां ङीप् ।

**यथाक्रम** अव्य० क्रमस्य आनुरूप्यं तस्यानतिक्रमो वा अव्ययी० । क्रमानुरूप्ये, क्रमानतिक्रमे च ।

**यथाजात** त्रि० जातं समयविशेषमनतिक्रम्य यथाजातं तदस्यास्ति अच् । मूर्खे, नीचे च ।

**यथातथ** अव्य० तथानतिक्रम्य अनतिरिक्तौ अव्ययी० । याथार्थ्ये यस्य वस्तुनो यद्रूपं भवितुमुचितं तथारूपभावे । यथायथमप्यत्रार्थे । [व्यभिचारे सत्यस्वरूपे अर्शआद्यच् । सत्ये त्रि०

**यथार्थ** अव्य० अर्थमनतिक्रम्य अव्ययी० । सत्यतायाम् अर्थस्या-

**यथार्ह** अव्य० अर्हं योग्यतामनतिक्रम्य अव्ययी० । यथायोग्ये ततः अर्श आद्यच् । सत्यभूते पदार्थे त्रि० ।

**यथार्हवर्ण** पु० यथार्हं यथायोग्यं वर्णयति वर्ण-अण् । चरे

**यथाशक्ति** अव्य० शक्तेरानुरूप्यम् आनुरूप्येऽव्ययी० । शक्तेरानुरूप्ये, शक्त्यनुसारे । [शास्त्रानुसारे

**यथाशास्त्र** अव्य० शास्त्रस्यानुरूप्यम् अनतिक्रमो वा अव्ययी० ।

**यथास्थित** अव्य० यथा येन रूपेण स्यात् योग्यं तथास्थितम् । योग्यतायाम् अव्ययी० । सत्यतायाम् । अर्श आद्यच् । सत्ये त्रि०

**यथास्व** अव्य० स्वस्यानतिक्रमोऽव्ययी० । याथार्थ्ये । अर्श आद्यच् । यथार्थे त्रि० ।

**यथेप्सित** अव्य० ईप्सितस्यानतिक्रमः अव्ययी० । स्वाच्छन्द्ये, अर्श आद्यच् । यथाभीष्टे त्रि० यथेष्टमप्यत्र । [उचिते त्रि०

**यथोचित** अव्य० उचितस्यानतिक्रमः । औचित्ये, अर्श आद्यच् ।

**यद्** त्रि० यज-अदि डिच्च । (ये) इत्येवं बुद्धिविशेषविषये अस्य उक्तार्थे सर्वनामता । दस्मादित्यर्थे अव्य० ।

**यदा** अव्य० यद्+दाच् । यस्मिन् काले इत्यर्थे ।

**यदि** अव्य० यद्+णिच्-इन् णलोप० । पक्षान्तरे, सम्भावनायाञ्च

**यदु** पु० ययातिनृपतेः ज्येष्ठपुत्रे, यस्य वंशे श्रीकृष्णावतारः तस्य गोत्रापत्यमण् बह्वषु तस्य लुक् । यदुवंश्ये दशार्हदेशे च ब०व० ।

**यदुनाथ** पु० यदूनां नाथो रक्षकत्वात् । श्रीकृष्णे, यदुपत्यादयोऽप्यत्र । ['यदृच्छालाभसन्तुष्ट' इति गीता

**यदृच्छा** स्त्री० यद्+ऋच्छ-अ+टाप् । स्वातन्त्र्ये, स्वैरतायाम्,

**यद्युवा** अव्य० यदि च उ च वा च द्व० । यद्यर्थे पक्षान्तरद्योतने, 'यद्युवाऽस्तरसम्भारस्तर्हि मनुनैवे'ति स्मृतिः यद्युवा उभयं विकोर्वैदिति च तिथ्यादितत्त्वम् । [भर्तृहरिकारिका ।

**यद्वा** अव्य० यच्च वा च द्व० । पक्षान्तरे 'यद्वाभ्युदययोग्यते'ति

**यन्तृ** पु० यम-तृच् । सारथौ, हस्तिपालके च । संयमयुक्ते त्रि०

**यन्त्र** न० यत्रि-घञ् । संयमने, तन्त्रोक्ते देवाद्यधिष्ठाने चक्रभेदे पात्रभेदे, सुगमतया ज्योतिश्चक्राद्यवेक्षणसाधने पदार्थभेदे, सूत्रधारादेर्वेधकादौ (तुरपिन्) (भमर) (कुन्द) पदार्थे

**यन्त्रक** न० यन्त्रमिव इवार्थे कन् (कुंद) दारुभ्रामकयन्त्रभेदे

**यन्त्रगृह** न० ६त० । तैलिकयन्त्रालये (धानिघर)

**यन्त्रगोल** पु० यन्त्रमिव ज्योतिश्चक्राकृतिगोलयन्त्रमिव गोलः वर्त्तुलः । कलायभेदे (मटर) [पीडायाम् स्त्री० टाप्

**यन्त्रण** न० यन्त्र-ल्युट् । नियमने, रक्षणे, बन्धने च । युच् ।

**यन्त्रपेषणी** स्त्री० यन्त्रेणेव पिष्यतेऽनया पिष-ल्युट् । (याता) पेषणयन्त्रे ।

**यभ** मैथुने भ्वा० पर० सक० अनिट् । यभति अयाप्सीत् ।

**यम** उपरतौ भ्वा० पर० सक० अनिट् क्त्वावेट् । यच्छति अयंसीत् यन्ता । [अयीयमत् त अययामत् त

**यम** परिवेषणे चु० उ० सक० सेट् वा घटा० । यमयति यामयति

**यम** पु० यम-घञ् । 'अहिंसा सत्यवचनं ब्रह्मचर्य्यमकल्कता । अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि चे'त्युक्ते अहिंसादौ, इन्द्रियादीनां संयमने च । यमयति अच् । प्राणिनां शुभाशुभकर्म्मानुसारेण दण्डविधायके ईश्वरानुयुक्ते दक्षिणस्थे देवभेदे तत्स्वामिकत्वात् काके च । एकगर्भजायमाने यमजे त्रि० । स्वात्मत्वेन यमसम्बन्धिनि शनौ, द्वित्वसंख्यायां योगे च पु० ।

**यमक** न० 'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते' इत्युक्ते शब्दालङ्कारभेदे ।

**यमकोटि** पु० स्त्री० भूगोलस्य चतुर्थपादान्तरिते लङ्कातः पूर्वस्यां स्थितायां देवनिर्म्मितायां पुर्याम् 'लङ्का कुमध्ये यमकोटिरस्याः प्रागि'ति सिद्धान्तशिरोमणिः ।

**यमज** त्रि० द्वि० व० । यमः एकदा एकत्र गर्भे सहचरः सन् जायते जन-ड । एकदा एकगर्भजातयोः ।

**यमदूतिका** स्त्री० यमस्य दूतीव इवार्थे कन् । तिन्तिडीवृक्षे

**यमद्रुम** पु० यमस्य द्रुमः । यमद्वारस्थे शाल्मलिवृक्षे तत्तुल्यलौहमयकीलाकीर्णवृक्षेण हि नारकिपीडनात्तस्य यमद्रुमत्वम् । [द्वितीयायां यात्रायां सर्वपर्मिति ज्योतिषम्

**यमद्वितीया** स्त्री० ६त० । कार्त्तिकशुक्लद्वितीयायाम् 'तथा यम

**यमदग्नि** पु० मुनिभेदे ।

**यमन** न० यम-ल्युट् । बन्धने, उपरमे च । यमयति ल्यु । यमे पु०

**यमप्रिय** पु० ६त० । वटवृक्षे ।

**यमराज** पु० यमानां चतुर्दशानां राजा यमनियामको राजा वा टच् समा० । प्रेतानां शासनि धर्मराजे । यमेषु राजते राज-क्विप् । यमराडप्यत्र ।

यमल न० यमं योगं लाति ला-क। युग्मे, छन्दोभेदे च।
यमलपत्त्र पु० यमलानि युग्मानि पत्त्राणि यस्य। अश्मन्तकवृक्षे
यमवाहन पु० यमं वाहयति स्थानात् स्थानान्तरं नयति। वह-स्वार्थे णिच्-ल्यु। महिषे।
यमानी स्त्री० यच्छति अग्निमान्द्यमनया यम-करणे ल्युट् पृ० वा आलस्। अजमोदायाम्। स्वार्थे कन्। तत्रैव।
यमुना स्त्री० यम उनन्। कालिन्द्या नद्यां, यमभगिन्याम् सूर्यसुतायाम् दुर्गायाञ्च।
यमुनाभ्रातृ पु० ६त०। यमे। [त्रिजे राजभेदे
ययाति पु० यस्य वायोरिव याति सर्वत्र गतिरस्य। नहुषा-
ययु पु० या-कु द्वित्वञ्च। अश्वमेधीयेऽश्वे, अश्वमात्रे च।
यव पु० यु-अच्। स्वनामख्याते शूकधान्यभेदे 'वसन्ते सर्वशस्यानां जायते पत्रशातनम् मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः' इति मीमांसा। स्वार्थे कन्। अत्रैव।
यवक्य न० यवानां भवनं क्षेत्रं यत् कुक् च। यवभवने क्षेत्रे
यवक्षार पु० यवजातः क्षारः। यवजातक्षारभेदे लवणभेदे (सोरा) च।
यवज पु० यवात् जायते जन-ड। यवक्षारे, यवान्याञ्च।
यवतिक्ता स्त्री० यवाकारं तिक्तं फलं यस्याः। रास्नायां शङ्खिन्याञ्च।
यवन पु० यु-ल्यु। देशभेदे, तद्देशस्थे जने ब०व०। वेगे, अधिकवेगवदश्वे, गोधूमे गर्जरवणे, तुरुष्कजातौ ययातिपुत्रस्य तुर्वसोर्वंश्ये जातिभेदे च। वेगवति त्रि०
यवनद्विष्ट पु० यवनैर्द्विष्ट द्विष-क्त। गुग्गुलौ।
यवनप्रिय न० ६त०। मरिचे।
यवनाचार्य्य पु० ताजकादिज्योतिःशास्त्रकारके पण्डितभेदे
यवनानी स्त्री० यवनानां लिपिः ङीष् आनुक् च। यवनानां लिप्याम्।
यवनारि स्त्री० यवनस्यारिः। श्रीकृष्णे। [भेदे
यवनाल पु० यवानामिव नाला (नाडा) यस्य। (देधान) धान्य
यवनालज पु० यवानां नालात् काण्डात् (नाडा) जायते। यवक्षारे। [(कानात्) जवनिकायाम्
यवनिका स्त्री० युवन्त्यस्यां यु-ल्युट् ङीप् कन् पत हस्वम्।
यवनी स्त्री० यु-ल्युट् ङीप्। यवानीनामकौषधौ यवनभार्यायाञ्च। 'यवनीमुखपद्मानां मिति रघुः।
यवनेष्ट न० ६त०। सीसके। मरिचे पलाण्डौ लशुने राजपलाण्डौ निम्बे च पु०। खर्जूर्यां स्त्री० टाप्।
यवफल पु० यवाकारं फलमस्य। वंशे कुटजे च यस्य फलमिन्द्रयव इत्युच्यते, जटामांस्याञ्च।
यवमध्य न० यवाकृति मध्यं यस्य। चान्द्रायणभेदे प्रथमदिनादापञ्चदशदिनमेकैकग्रासवृद्ध्या, तदुत्तरं च आपञ्चदश दिनं क्रमेणैकैकग्रासह्रान्या मासमाधे व्रते तस्य मध्यदिवसानां हि बहुलग्रासवत्त्वेन यवमध्यतुल्यत्वम्।
यवलास पु० यवेन लस्यते सत्ताया कर्त्तरि घञ्। यवक्षारे।
यवशूक पु० यवानां शूक कारणत्वेनास्त्यस्य अच्। यवक्षारे यवशूकजादयोऽप्यत्र।
यवस न० यु असच्। घासे, तृणे च। [(याउ)
यवागू स्त्री० यूयते मिश्र्यते यु-आगू। षड्गुणजलपक्वे द्रवभेदे
यवाग्रज पु० यवस्याग्रात् शूकात् जायते जन ड। यवक्षारे, यवान्याञ्च।
यवानी स्त्री० दुष्टो यव ङीष् आनुक् च। (जोयानि) पदार्थे
यवापत्य न० यवस्यापत्यमिव तज्जातत्वात्। यवक्षारे।
यवाम्लज न० यवजाताम्लाज्जायते जन ड। सौवीरके।
यवास पु० यु-आस। दुरालभायाम्, खदिरभेदे च। गुण्डासिनी तृणे स्त्री० टाप्। स्वार्थे कन्। तत्रैव।
यविष्ठ त्रि० अतिशयेन युवा युवन्+इष्ठन् यवादेश अतितरुणे
यवीयस् त्रि० अतिशयेन युवा युवन्+ईयसुन् यवादेश 'अग्रमयं यवीयाय' इति श्रुति। कनिष्ठे स्त्रियां ङीप्।
यवोत्थ न० यवादुत्तिष्ठति उद्+स्था-क। सौवीरके।
यव्य न० यवानां भवनं क्षेत्रं यत्। यवभवनयोग्ये क्षेत्रे। युतचन्द्रार्काभ्याम् यत्। चान्द्रे मासे पु०। 'यव्यद्वयं आरभ्यादि सर्वा नद्योरजस्वला' इति स्मृति।
यशःपटह पु० यशः व्यापकः पटहः। ढक्कायाम् वाद्यभेदे।
यशःशेष त्रि० यश एव शेषोऽस्य। मृते। कीर्त्तिशेषादयोऽप्यत्र
यशस् न० यश अशन् धातौ' युच्। शौर्यादिप्रभूते ख्यातिपरपर्याये पदार्थे।
यशस्या स्त्री० यशसे हिता यशस्+यत्। जीवन्त्याम् ऋद्धिनामौषधौ च। यश साधने त्रि०। 'धन्यं यशस्यमायुष्यमिति।
यशस्वत् त्रि० यशस्+मतुप् मस्य व। यशोविशिष्टे। त्रिनि। यशस्विन्यप्यत्र स्त्रियां ङीप्। जीवन्त्याम् तत, ज्योति व यवतिक्तायां, वनकार्पास्याञ्च।
यशोद पु० यशो ददाति दा-क। पारदे। यशोदादयः त्रि० नन्दगोपपत्न्यां स्त्री०। 'नन्दगोपस्य जाया यशोदागर्भसम्भवा' इति चण्डी।
यष्ट पु० यज-तृच्। यागकर्त्तरि।

यष्टि स्त्री० यज-क्तिन् नि०। ध्वजादिदण्डे, भुजाद्यवलम्बने दण्डे च क्लिच्। तन्त्रौ, हारलतायां, भार्ग्यां, मधूकायां (यष्टिमधु) वा ङीप्। मल्लभेदे च।

यष्टीक न० यष्ट्या कायति कै-क। यष्टीमधौ, लताभेदे।

यष्टीपुष्प पु० यष्टीव पुष्पमस्य। जीवद्वृक्षे।

यष्टीमधु पु० यष्ट्यां मधु यस्य। (यष्टिमधु) ख्यातनामख्याते लताभेदे

यस् यत्ने दिवा०पचे भ्वा०पर०अक०सेट्। यस्यति यसति संयस्यति संयसति अनुयस्यति अयसत् अयासीत् अयसीत्।

या गतौ अदा०पर०सक०अनिट्। याति अयासीत्।

याग पु० यज-घञ्। मन्त्रकरणके वह्न्यादाधिकरणे हविःप्रक्षेपरूपे यज्ञे।

याच याचने भ्वा० उभ० द्विक० सेट्। याचति ते अयाचीत् अयाचिष्ट। चङि न ह्रस्वः। अयुयाचयुः। याचितम्।

याचक त्रि० याच-ण्वुल्। याच्ञाकारके।

याचन न० याच-ल्युट्। याच्ञायाम्। युच्। याचनाप्यत्र स्त्री०

याचनक त्रि० याच-ल्यु, स्वार्थे कन्। याचके।

याचित न० याच-भावे क्त। याचनकृतौ याच्ञायाञ्च। कर्मणि क्त। प्रार्थिते त्रि०। [ऋणगृहीते (धार्चोया द्रव्य)

याचितक न० याचितेनाधिगतम् कन्। धनेच्छया धनस्वामितो

याच्ञा स्त्री० याच-नङ्। प्रार्थनायाम्।

याजक पु० याजयति यज-णिच्-ण्वुल्। धनादिलाभाय परार्थं यज्ञकर्त्तरि ऋत्विगादौ।

याज्ञवल्क्य पु० मुनिभेदे।

याज्ञसेनी स्त्री० यज्ञसेनस्य द्रुपदराजस्यापत्यं स्त्री० अत इञ् ङीप्। द्रौपद्यां पाण्डवभार्य्यायाम्।

याज्ञिक पु०यज्ञाय हित० यज्ञः प्रयोजनमस्य वा ठक्। दर्भभेदे, खदिरे,पलाशे, अश्वत्थे याजके ऋत्विगादौ, यजमाने च।

याज्य न० इज्यतेऽत्र यज-ण्यत्। यागस्थाने देवप्रतिमायाञ्च 'याज्यं चैतमब्रवीत्'मिति ऋत्विग्व्याख्यायां दायभागे याज्य यागस्थानं देवता चेत्युक्तम् याजनीये त्रि०। करणे ण्यत्। ऋग्विशेषे स्त्री०।

यातना स्त्री० चु० यत-युच्। तीव्रवेदनायाम्।

यातयाम त्रि० यातो गतो याम उषितसमयो यस्य। जीर्णे पर्युषिते 'यातयामं गतरस'मिति गीता। उच्छिष्टे, परिभुक्ते च। [यातौ गन्तव्ये त्रि०

यातव्य पु० यायतेऽसौ या-तव्य। अपायो युद्धार्थमभिगम्ये

यातायात न० यातञ्चायातञ्च या-भावे क्त आ+या-भावे क्त समाहारद्व०। गमनागमनयोः।

यातु पु०या-तु। राक्षसे। गन्तरि त्रि०। [राक्षसहन्तरि त्रि०

यातुघ्न पु० यातुं राक्षसं गन्धेन हन्ति हन-टक्। गुग्गुलौ,

यातुधान पु० यातु इति धीयतेऽभिधीयते धा-ल्युट्। राक्षसे

यातृ स्त्री० या-तृच्। देवरपत्न्याम् (या) यातरौ। तृन्। गन्तरि त्रि० यातारौ। [दैर्ध्ये तृन्ये‍नोत्वभेदे रथयानादौ च

यात्रा स्त्री० या-ष्ट्रन्। जिगीषया राज्ञां गमने, गमनमात्रे,

यात्रिक त्रि० यात्रायै हितम्। उत्सवे, उपाये, गमनहितेनक्षत्रादौ च।

याथातथ्य न० तथा तद्रूपस्यौचित्यम् अव्ययी० तस्य भावः ष्यञ्। यद्वस्तु यथा भवितुं युक्तं तस्य तथाभावे।

याथार्थ्य न० यथार्थस्य भावः। सत्यत्वे वास्तविकत्वे।

यादःपति पु० यादसां जलजन्तूनां पतिः। वरुणे, समुद्रे च

यादव पु० यदोर्गोत्रापत्यमण्। यदुवंश्ये स्त्रियां ङीप्। तत्प्रधाने श्रीकृष्णे पु०। यदूनामिदम् अण्, गोमहिष्यादिके धने न० दुर्गायां स्त्री० ङीप्।

यादस् न० या-असुन् दुक् च। जलजन्तुमात्रे।

यादसांनाथ पु०६त०अलुक्समा०। वरुणे,समुद्रे च। यादसांपत्यादयोऽप्यत्र।

यादृश(क्ष)(श्) त्रि० यस्येव दर्शनमस्य यद्+दृश-कञ्,(ट) क्विप् वा। यत्सदृशे यथाविधे। टान्तात् स्त्रियां ङीप्।

यादृच्छिक त्रि० यदृच्छया आगतः ठक्। यथेच्छया प्राप्ते।

यान न० या-भावे ल्युट्। गमने,उपचितशक्तेः राज्ञः भूवराद्यैदिरषां कृत्वा रिपोराक्रन्दनाय गमने च। करणे ल्युट्। गमनसाधने रथादौ।

यापन न० या-णिच्-ल्युट्। कालादौ क्षेपणे, निरसने च।

याप्य त्रि० या-णिच्-ण्यत्। निन्द्ये अधमे, क्षेपणीये नि०प्र० पमप्रतिकार्ये उपशमनीये रोगभेदे च।

याप्ययान पु० याप्यं यानं पुंभिर्ज्जनितं वा यदुङ्‌न्यास्यात् दवदश-द्वाताद्या यानम् (भद्रापावा) शिविकायाम्। [इति धा०

याम पु० यम-घञ्। समये प्रहरे च 'यामोयात तथापि नायातः'

यामघोष पु० यामे घोषोऽस्य। कुक्कुटे। घटिकायन्त्रभेदे स्त्री०

यामल न० यमल+स्वार्थेऽण्। युगले, तन्त्रशास्त्रभेदे च।

यामवती स्त्री० यामाः बहवः चित्तरंजनायुक्ताः अन्त्याः भूम्नि मतुप् मस्य वः। रात्रौ, हरिद्रायाञ्च।

यामातृ पु० जायां माति तृच् नि०। जामातृशब्दार्थे।

यामि स्त्री०यम-इन्। कुलस्त्रियां भगिन्यां 'यामयोयानि गे० हानीति मनुः।

यामित न० ज्योतिषोक्ते वश्याद्यम्भाषी स्तम्भे स्थाने।

**यामित्रवेधः** पु० यामित्रे सप्तमस्थाने वेधः पापग्रहसंयोगः विवाहादौ वर्ज्ये पापात् सप्तमग' शशीत्याद्युक्ते योगभेदे ।

**यामिनी** स्त्री० यामाः त्रिसंख्याताः सन्त्यस्य बाहुल्ये इनि। रात्रौ, हरिद्रायाञ्च ।

**यामिनीपति** पु०६त०। चन्द्रे, कर्पूरे च। रजनीपादयोऽप्यत्र ।

**यामी** स्त्री० यमस्येयम् यमो देवतास्या वा अण् । दक्षिणस्यां दिशि यमसम्बन्धिन्यां यातनायां च । यामि+वा ङीप् । यामिशब्दार्थे । [कृष्णत्वात् यामुनजलतुल्यत्वम्

**यामुनेष्टक** न० यमुनायां भवं तदिष्टकम्। सीसके तस्य

**याम्य** पु० यामी दिक् निवासोऽस्य यत्। अगस्त्ये, चन्दनवृक्षे च यमोदेवतास्य। यमसम्बन्धिनि त्रि०। दक्षिणदेशस्थे त्रि०

**याम्यायन** न० याम्यायाम् अयनं सूर्यस्य गतिः। दक्षिणायने रवेः कर्कटसंक्रान्तितः परेषु षट्सु मासेषु ।

**याम्योद्भूत** पु० याम्ये दक्षिणदेशे उद्भूतः। श्रीतालवृक्षे ।

**यायजूक** पु० यज-यङ्-ऊक। पुनःपुनर्यागशीले ।

**यायावर** पु० देशाद्देशान्तरं याति या-यङ्-वरच्। अश्वमेधीयाश्वे जरत्कारुमुनौ च। अनवरतगमनशीले त्रि० ।

**याव** पु०यु-अप् स्वार्थे अण्। अलक्ते। स्वार्थे कन्। तत्र। याव इव कन् (कुलतीकलाइ) ब्रीहिभेदे ।

**यावत्** त्रि० यत् परिमाणमस्य मतुप्। यत्परिमाणे। यावति। साकल्ये, व्याप्तौ, सीमायाञ्च अव्य० ।

**यावत्तावत्** अव्य० यावच्च तावच्च द्व०। वीजगणितप्रसिद्धे अव्यक्तमानानयनाय कल्प्ये प्रथमे राशौ। [परिमाणपूरणे

**यावतिथ** त्रि० यावतां पूरणः यावत्+डट् इथुक् च। यावत्

**यावन** पु० यु-णिच्-ल्यु। सिह्लाख्यगन्धद्रव्ये ।

**यावनाल** पु० यवनाल एव स्वार्थे अण्। धान्यभेदे ।

**यावनालशर** पु० यावनाल इव शरः। शरभेदे ।

**यावनाली** स्त्री० यावनालस्य विकारः अण् ङीप्। यावनालभवायां शर्करायाम् ।

**यावशूक** पु० यवशूकस्य विकारः अण्। यवक्षारे ।

**याष्टीक** पु० यष्टिः प्रहरणमस्य ईकक्। यष्ट्या योद्धरि ।

**यास** पु० यस-कर्त्तरि संज्ञायां घञ्। दुरालभायाम् ।

**यु** मिश्रणे अमिश्रणे च अ०पर०सक०सेट्। यौति अयावीत् ।

**यु** बन्धे क्र्या०उ०सक०अनिट्। युनाति युनीते अयौषीत् अयोष्ट

**यु** निन्दने चु०आत्म०सक०सेट्। यावयते अयीयवत ।

**युक्त** त्रि० युज-क्त। मिलिते। अभ्यस्तयोगे योगिनि पु०। उचिते, न्यायागतद्रव्यादौ च न० ।

**युक्तरसा** स्त्री०युक्तो रसो यस्याः। रास्नायां (काटाशामरवी)

**युक्ति** स्त्री० युज-क्तिन्। न्याये, व्यवहारे, अनुमाने तत्साधकलिङ्गज्ञानादौ,'युक्तिरर्थावधारणमि'त्युक्ते नाटकाङ्गविशेषे च

**युग** वर्ज्जने भ्वा०पर०सक०सेट् इदित्। युङ्गति अयुङ्गीत् ।

**युग** न०युजि-अच् पृ० नलोपः। युग्मे, द्वित्वसंख्यान्विते, सत्यत्रेताद्वापरकलिरूपे कालविशेषे तत्प्रमाणं वृहदभिधाने। ऋद्धिनामौषधे, हस्तचतुष्कपरिमाणे च। रथाद्यङ्गभेदे पु० (जोयाल)। [कालखण्डभेदे

**युगकीलक** पु० ६त०। रथाद्यङ्गयुगधारणार्थे कीलकाकारे

**युगन्धर** पु० युगं रथस्य युगकाष्ठं धरति धृ-खच्। रथस्य युगकाष्ठासञ्जने कुवराख्ये काष्ठभेदे, पर्वतभेदे च ।

**युगपद्** अव्य० युगमिव पद्यते पद-क्विप्। एककाले इत्यर्थे ।

**युगपत्त्र** पु०युगमिव संहतं पत्त्रमस्य। कोविदारवृक्षे स्वार्थे कन्। तत्रैव। शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम् ।

**युगपार्श्वग** पु० युगपार्श्वे गच्छति गम-ड। अभ्यासार्थं लाङ्गलपार्श्वे बद्धे वृषे । [न्विते च

**युगल** न० युगं द्वित्वं विद्यतेऽस्यस्य लच्। युग्मे, द्वित्वसंख्या-

**युगलाख्य** पु० युगलेन वररूपेण व्यञ्जनवर्णद्वयेनाख्यायते आ+ख्या-क। बब्बुरवृक्षे । [तत्काले च ।

**युगान्त** पु०युगानां सत्यादीनामन्तस्तदुपलक्षितः कालः। प्रलये,

**युग्म** न० युज-मक् पृ० जस्य गः। द्वित्वसंख्यान्विते (जोडा) युगले। 'युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः। रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा। प्रतिपद्यप्यमावस्या तिथ्योर्युग्मं महाफलमि'त्युक्ते तिथिविशेषयोगे मिथुनराशौ च

**युग्मपत्त्र** पु० युग्मानि पत्त्राण्यस्य। रक्तकाञ्चनवृक्षे। युग्मपर्णादयोऽप्यत्र। संज्ञायां कन्। शिंशपावृक्षे स्त्री० टाप् अतइत्त्वम्

**युग्मफला** स्त्री० युग्मानि फलानि यस्याः। इन्द्रचिर्भिट्याम्, वृश्चिकाल्यां च। [युगवाहकेऽश्वादौ त्रि० ।

**युग्य** न० युगमर्हति यत्। वाहने याने। युगं वहति यत् ।

**युच्छ** प्रमादे भ्वा०पर०सक०सेट्। युच्छति अयुच्छीत् ।

**युज** संगमे युतौ च वा चु० उभ० पक्षे भ्वा० पर० सक०सेट्। योजयति ते योजति अयूयुजत् त अयोजीत् ।

**युज** युतौ रु०उ०सक०अनिट्। युनक्ति युङ्क्ते उद्युङ्क्ते प्रयुङ्क्ते नियुनक्ति। अयुजत् अयौक्षीत् अयुक्त ।

**युज** योगे समाधौ दिवा०अक०अनिट्। युज्यते अयुक्त ।

**युज** निन्दायां चु०आ०सक०सेट्। योजयते अयूयुजत ।

**युज्** पु० दि०युज-क्विप्। समाधिमति। युक् युजौ। रु० युज-क्विप्। संयोगवति त्रि० युङ् युञ्जौ युञ्जः ।

**युञ्जान** पु० युज-शानच्। योगविशेषवति भावनासहकारेण

सर्व्वपदार्थानां धातरि, रथसारथौ, त्रिषु च ।
युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट ।
युत त्रि० यु-क्त । संयुक्ते, मिलिते, अमिलिते च ।
युतक न० यु-क्त युत क वा ततः स्वार्थे कन् । संशये, युगे, स्त्रीवसनाञ्चले, चरणाये, यौतके धने, मैत्रीकरणे, सन्धे, शूर्पाये च । संयुक्ते त्रि० ।
युतवेध पु० विवाहादौ वर्ज्ये चन्द्रेण सह पापग्रहयोगे ।
युद्ध न० युध-क्त । शस्त्रादिक्षेपणव्यापारे, योधने, तदाधारे संग्रामे, ज्योतिषोक्ते ग्रहाणां गतिभेदकृते, योधनरूपे परस्परमिलनविशेषे च ।
युध युद्धे दिवा०आ०सक०अनिट् । युध्यते । अयुद्ध ।
युध्(धा) स्त्री० युध-सम्प० क्विप् वा टाप् । युद्धे ।
युधान पु० युध-कानच् । क्षत्रिये । [वत्सम् । पाण्डवश्रेष्ठे ।
युधिष्ठिर पु० युधि युद्धे स्थिर गविष्ठिरवत् स्थिर इति
युप विमोहे दिवा०पर०अक०सेट् । युप्यति अयुपत् अयोपीत्
युयुधान पु० युध-कानच् द्वित्वम् । इन्द्रे, सात्यकिनामनि यादवे क्षत्रियभेदे, क्षत्रियमात्रे च । [त्या युवजरतीत्यप्यत्र ।
युवखलति स्त्री० युवतिरेव खलति । (टाक्) रोगवत्याम् युव-
युवति(ती) स्त्री० युवन्+ति ङीप् वा । यौवनयुक्तायां स्त्रियाम् । युवन् ङीप् । यूनीत्यप्यत्र ।
युवतीष्टा स्त्री० इष्टुतोमाभिदा । स्वर्णयूथिकायाम् ।
युवन् त्रि० यु-कनिन् । श्रेष्ठे निसर्गबलवति । 'आषोडशाद्भवे-द्बालस्तरुणस्तत उच्यते' इत्युक्तवयस्के तरुणे च ।
युवनाश्व पु० सूर्य्यवंश्ये, मान्धातृपितरि नृपभेदे ।
युवराज पु० युवैव राजा टच् समा० । राजयोग्यक्रियत्कार्य्य-करे राजपुत्रे ।
युष भजने भ्वा०पर०सक०सेट् । योषति अयोषीत् ।
युष्मद् त्रि० युष मदिक् । संबोध्यचेतने भवच्छब्दार्थे तस्य चोक्तार्थे सर्व्वनामता, त्रिषु लिङ्गेषु समरूपता च ।
यूक पु०स्त्री० यू-क्विप् कन् । मत्कुणे, (उकुण) स्त्रीत्वे टाप् ।
यूति स्त्री० यु क्तिन् नि० दीर्घ । मिश्रीकरणे ।
यूथ न० यु थक् पृ० दीर्घ । सजातीयसमुदाये ।
यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने । यूथपादयोऽप्यत्र ।
यूथिका स्त्री० यु थक् पृ० दीर्घ स्वार्थे कन् अत इत्वम् टाप् । यष्ट्यामके, पाठायां, यूथ्याम् (युइफुल) ।
यूथी स्त्री यु थक् पृ०दीर्घ गौ०ङीप् । (युइफुल) पुष्पप्रधाने वृक्षे
यूप पु०न० दु-पक् पृ० दीर्घ । यज्ञीयपशुबन्धनकाष्ठभेदे, दान-धर्मादिप्रसिद्ध्यर्थे स्तम्भे च । जयस्तम्भे पु० ।

यूपकटक पु०६त० । यज्ञसमाप्तिसूचककाष्ठस्य शिरस्थे वल-याकारे काष्ठमये पदार्थे । [यूपद्रुमादयोऽप्यत्र
यूपद्रु पु० यूपाय द्रु प्रकृतिविकृतिभावात् ४त० । खदिरवृक्षे
यूष वधे भ्वा०पर०सक०सेट् । यूषति अयूषीत् ।
यूष पु०न० यूष क थ०पक्ष य । मुद्गादिक्वाथे । ब्रह्मदारुवृक्षे पु० ।
येष यत्ने भ्वा०आ०अक०सेट् । येषते अयेषिष्ट । षडिन लुक्व
योक्त्र न० युज्यतेऽनेन युज-ष्ट्रन् । ईषादण्डादौ युगबन्धनार्थे दामनि (योत) ।
योग पु० युज-भावादौ घञ् । सयोगे, मेलने, उपाये, वर्म्मादि-धारणे, ध्याने 'योगश्चित्तवृत्तिनिरोध' इति पातञ्जलोक्ते सर्व्वविषयेभ्योऽन्तःकरणवृत्तेर्निरोधे, 'संयोगं योगमित्याहु-र्जीवात्मपरमात्मनो'रित्युक्ते जीवात्मपरमात्मनोरैक्ये, युक्तौ, छले, अलब्धार्थलाभचिन्तायाम्, देहस्थैर्य्ये गन्धादीनां प्रयोगे, समुदायशब्दस्यावयवार्थसम्बन्धे, 'योगबलं समाख्ये'ति मीमांसका । 'योगः कर्मसु कौशल'मित्युक्ते यथास्थितवस्तुनो ऽन्यथारूपप्रतिपादने, यथा संसारबन्धहेतोरपि कर्म्मणो बन्धमोक्षहेतुत्वम् । ज्योतिषोक्तेषु रविचन्द्रयोगाधीनेषु विष्कुम्भादिषु, सप्तविंशतौ पदार्थेषु तिथिवारनक्षत्राणाम् अन्यतरायतमानां योगविशेषे, अमृतयोग अर्द्धोदय-योग इत्यादि उपाधौ च योगाधमनविक्रीतमिति स्मृति ।
योगक्षेम न०योगश्च क्षेमश्च समाहार० द्व० । अलब्धलाभवृ-त्त्याऽहिते लब्धपरिरक्षणे 'योगक्षेमं वहाम्यह'मिति पुरा०
योगज न०योगात् जायते जन-ड । अगुरुचन्दने । योगजात मात्रे त्रि० । न्यायाद्युक्ते प्रयत्नादिसाधने अलौकिकसन्निक-र्षभेदे पु० । [दानप्रतिग्रह'मिति स्मृत्युक्ते सोपाधिक दाने
योगदान न० योगेन छलेन उपाधिना वा दानम् । 'योग-
योगनिद्रा स्त्री० योगरूपा निद्रा । प्रलय परमेश्वरस्य सर्व्वजीवसंहाररूपया योगरूपे व्यापारे 'योगनिद्रासदेहुव' इति चण्डी तदधिष्ठात्र्यां दुर्गायाञ्च ।
योगपट्ट न० योगाभ्यासार्थं पट्टम् । योगिधार्य्ये पट्टवस्त्रभेदे ।
योगपीठ पु०न० यागयोग्य पीठमासनम् । पद्मादीनामासनभेदे
योगमाया स्त्री० योगस्य माया । भगवतो जगत्सर्जना-दीयां शक्ती, 'योगमायासमावृत' इति भागवतम् । तद-धिष्ठात्र्यां दुर्गायाञ्च । [ध्विय स्त्री०
योगरङ्ग पु०योगेन रङ्गोऽस्य । (नारङ्गी) नागरङ्गे योगरङ्गा-
योगरूढ पु० योगोऽवयवशक्तिः रूढिः समुदायशक्तिः एत-योरस्त्यच् । अवयवशक्त्या समुदायशक्त्या च अर्थबोधक पङ्कजादिशब्दे यथा हि पङ्कजशब्दः पङ्कजनकर्तृत्वरूप'र-

शक्तार्थविशिष्टपद्मत्वविशिष्टस्य बोधः। उभयार्थबोधनाच्च पङ्कजाते-कुमुदादौ, स्थलजाते-पद्मे च न तत्पदप्रयोगप्रसङ्ग'

**योगवाहिन्** पु॰योगेन वहति वह-णिनि। पारदे,क्षारभेदे च

**योगाचार** पु॰ योगेनाचरति आ+चर-घञ्। बौद्धभेदे तन्मताचारविवरणं बृहदभिधाने।

**योगाधमन** न॰ योगेन छलेनोपाधिना बाधनम्। सोपाधिके छलहेतुके च बन्धकदाने। 'योगाधमनविक्रीत'मिति स्मृतिः

**योगारूढ** पु॰ योगमारूढः आ+रुह-क्त। 'यदा तु नेन्द्रियार्थेषु न कर्म्मस्वनुषज्जते। सर्व्वसंकल्पसन्यासी योगारूढस्तदोच्यते'इत्युक्ते योगिभेदे 'योगारूढस्य तस्यैव शम कारणमुच्यते' इति गीता। [आसनभेदे

**योगासन** न॰ योगार्थमासनम्। योगशास्त्रोक्ते स्वस्तिकादौ

**योगिन्** त्रि॰ युज-घिनुण्। 'आत्मौपम्येन सर्व्वत्र समं पश्यति योऽर्ज्जुन! सुखं वा यदि वा दुःखं स योगी परमो मत' इत्यादिगीताद्युक्तयोगयुक्ते संयोगवति च त्रि॰ स्त्रियां ङीप्। सा च तत्र, दुर्गाया तच्छक्तिभेदेषु नारायण्यादिषु चतुःषष्टिप्रकारेषु, प्रतिपन्नवमी इत्युक्ते पूर्व्वादिदिग्भेदाद् तिथिभेदेषु च। [दुर्गायां स्त्री॰ ङीप्।

**योगीश्वर** पु॰ ६त॰। याज्ञवल्क्यमुनौ योगिनां श्रेष्ठे च।

**योगेश्वर** पु॰ ६त॰। श्रीकृष्णे, 'योगेश्वर! ततो मे त्वं दर्शयात्मान मिति गीता। दुर्गायां वन्ध्याकर्कोट्यां च स्त्री॰ङीप्

**योगेष्ट** न॰ योगाय योजनार्थमिष्टम्। सीसके।

**योग्य** त्रि॰ योगमर्हति यत् युज-ण्यत् वा। योगार्हे, उचिते, निपुणे, शक्ते च। पुष्यनक्षत्रे पु॰। ऋद्धिनामौषधे न॰

**योग्यता** स्त्री॰ योग्यस्य भाव तल्। सामर्थ्ये,शाब्दबोधसाधने 'पदार्थे तत्र तद्वत्ता योग्यता परिकीर्त्तिते'त्युक्ते तत्पदार्थे तत्पदार्थवत्तारूपे, परस्परान्वये बाधाभावरूपे वार्थे च।

**योग्या** स्त्री॰ योगमर्हति यत् युज-कृत्यम् ण्यत् वा। अभ्यासे शास्त्राभ्यासे, सूर्य्यस्त्रियाञ्च।

**योग्यानुपलब्धि** स्त्री॰योग्यस्य प्रत्यक्षादिना ज्ञानयोग्यमर्हस्यानुपलब्धिरज्ञानम्। न्यायाद्युक्ते अभावग्राहके साधनभेदे। तथाहि घटादिसत्त्वे तत्र घटाभावोनानुपलभ्यते तस्य प्रतियोगिनो घटादे सत्त्वेऽपि तत्प्रत्यक्षकारणसामग्र्या सत्त्वेन तत्प्रत्यक्षस्याभावात् किन्तु घटास्याभावो गृह्यते पिशाचाद्यभावस्य तु न प्रत्यक्षता तत्प्रतियोगिपिशाचादेर्दर्शनायोग्यत्वात्

**योजन** न॰ युज-भावादौ ल्युट्। संयोगे। णिच्-ल्युट्। संयोगकरणे। चतुर्षु क्रोशेषु। 'प्रथमगमदद्दा योजने' इति लीलावती।

**योजनगन्धा** स्त्री॰ योजनं व्याप्य गन्धो यस्याः। कस्तूर्य्याम्, सीतायां, व्यासमातरि-सत्यवत्याञ्च। स्वार्थे कन् अत इत्त्वम्। तत्रैव। [त्वात्। मञ्जिष्ठायाम्

**योजनपर्णी** स्त्री॰ योजनं व्याप्य पर्णान्यस्याः विस्तीर्णपर्ण-

**योजनवल्ली** स्त्री॰ योजनं व्याप्य वल्लीव। मञ्जिष्ठायाम्। स्वार्थे कन् अत इत्त्वम्। तत्रैव।

**योत्र** न॰ यु-ष्ट्रन्। योक्त्रे (योत)।

**योद्धृ** पु॰ युध-तृच्। युद्धकर्त्तरि।

**योध** पु॰ युध-अच्। युद्धकारके। भावे घञ्। युद्धे।

**योधन** न॰ युध-भावे ल्युट्। युद्धे। करणे ल्युट्। अस्त्रादायुधे। कर्त्तरि ल्यु। युद्धकर्त्तरि पु॰।

**योधसंराव** पु॰ योधाय युद्धाय संराव॰ आह्वानम्। योधाना युद्धार्थे परस्पराह्वाने। [शस्त्रभेदे।

**योनल** पु॰ यवस्य नल इव काण्डोऽस्य पृ॰उत्त्वम्। (देधान)

**योनि** पु॰ स्त्री॰ यु-नि। मण्यादीनामुत्पत्तिस्थाने-आकरे, कारणे,जले, स्त्रीणामसाधारणचिह्ने, तद्देवताके पूर्व्वफल्गुनीनक्षत्रे च। स्त्रीत्वे वा ङीप्। [युजेऽण्डजे च देहे।

**योनिज** न॰ योनिस्थानात् जायते जन-ड। देहभेदे जरा-

**योनिमुद्रा** स्त्री॰ योन्याकारा मुद्रा। तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे लक्षणन्तु बृहदभि॰

**योषा** स्त्री॰ युष-अच् टाप्। स्त्रियाम् नार्य्याम्।

**योषित्** स्त्री॰युष-इति। नार्य्याम् हलन्ताद्वा टाप्। योषिताप्यत्र

**योषित्प्रिया** स्त्री॰ ६त॰। हरिद्रायाम्।

**यौक्तिक** त्रि॰ युक्तित आगत ठक्। युक्तिसिद्धे, योग्ये च। युक्तौ अधिकृत॰ ठक्। नर्म्मसचिवे पु॰।

**यौगिक** त्रि॰योगात् प्रकृतिप्रत्ययार्थसम्बन्धात् अधिगत ठक्। प्रकृतिप्रत्ययलभ्यार्थवाचके शब्दे यथा पाचकादिशब्द पाककर्त्तृवाचक। योगे योग्य ठक्। योगयोग्ये। [न लुख॰

**यौट** संबन्धे भ्वा॰पर॰सक॰ सेट्। यौटति अयौटीत्। चडि

**यौड** यौटवत् सर्व्वम्। यौडति अयौडीत्। [लब्धे धने

**यौतक** न॰ युतकाले विवाहकालेऽधिगतम् कप्। विवाहकाले

**यौतव** न॰ युतस्य भाव अण्। परिमाणे। [धने।

**यौतुक** न॰ योतुर्योगकालस्तत्र लब्धं कप्। विवाहकाले लब्धे

**यौधेय** पु॰ योध एव ढक्। योद्धरि। व। योधेयोप्यत्र।

**यौन** त्रि॰ योनित योनिसम्बन्धात् आगतम् अण्। मापे, योनेरयमण्। वैवाहिकसम्बन्धे पु॰।

**यौवत** न॰ युवतीनां समूहः अण्। युवतिसमुदाये।

**यौवन** न॰ यूनो भाव' अण्। तारुण्ये अवस्थाभेदे। 'आ यो-

उमाद् भवेद्यावत् सुतरणतत उच्यते। इत्यः स्यात् कामते-
ह्नं' मित्युक्तेऽवस्थाभेदे।

यौवनकण्टक पु०न० यौवनस्य कण्टक इव चिह्नम्। (वयस्
फोड़ा) व्रणभेदे।

यौवनदशा स्त्री० कर्म्म०। तारुण्ये अवस्थाभेदे।

यौवनलक्षण न० ६त०। स्तने, लावण्ये च।

यौष्माक त्रि० युष्माकमिदम् युष्मद् अण् युष्माकादेशः। युष्मत्
सम्बन्धिनि। खञ्। यौष्माकीणोऽप्यत्र त्रि०।

## र

र पु० रा-ड। वह्नौ, उष्णे, कामानले च।

रंहस् न० रहि असुन्। वेगे। [कृत् त

रक स्वादे माप्तौ च चु०उ०सक० सेट्। राकयति-ते अरीर-

रक्त न० रञ्ज-करणे क्त। कुङ्कुमे, ताम्रे, सिन्दूरे, हिङ्गुले च।
शरीरस्थे रसपाकजन्ये मांसहेतौ रुधिराख्ये धातुभेदे
च। भावे क्त। रागे। कुसुम्भे हिज्जले रोहितवर्णे च पु०
तद्वति त्रि०। कर्त्तरि-क्त। अनुरक्ते क्रीड़ारते च त्रि०।
कर्म्मणि-क्त। नील्यादिभिरञ्जिते त्रि०। करणे क्त। मञ्जि-
ष्ठायां, लाक्षायां, गुञ्जायाञ्च स्त्री० टाप्।

रक्तक पु० रक्तं रुधिरमिव कायति कै-क, स्वार्थे कन् वा।
अम्लानवृक्षे, बन्धूकवृक्षे, रक्तशोभाञ्जने, रक्तैरण्डे च। रुधिरे
रक्तवस्त्रे च न०। अनुरागिणि विनोदिनि च त्रि०।

रक्तकन्द पु० रक्तवर्णः कन्दोऽस्य। विद्रुमे प्रवाले।

रक्तकमल न० रक्तं कमलमिव। रक्तवर्णोत्पले। पु०। रक्त-
कमलमप्यत्र न०।

रक्तकरवीर पु० कर्म्म०। रक्तवर्णपुष्पककरवीरवृक्षे।

रक्तकाञ्चन पु० कर्म्म०। रक्तवर्णपुष्पककाञ्चनवृक्षे।

रक्तकाण्डा स्त्री० रक्त काण्डोऽस्याः। रक्तपुनर्नवायाम्।

रक्तकुमुद न० कर्म्म०। रक्तवर्णपुष्पककैरवे। कर्म्म०। रक्तकै-
रवरक्तकोकनदे अप्यत्र न०।

रक्तकुसुम पु० रक्तानि कुसुमान्यस्य। पारिभद्रे (पालदामादार)

रक्तकेशर पु० रक्ताः केशरा अस्य। पारिभद्रे, पुन्नागवृक्षे च।

रक्तखदिर पु० शाकवो रक्तवर्णः खदिरः। रक्तवर्णसारके
खदिरवृक्षे।

रक्तगन्धक न० रक्तेन गन्धकमिव। बोले (गन्धरस)

रक्तघ्न पु० रक्तं हन्ति हन-टक्। रोहितकवृक्षे। दूर्वायां स्त्री०

रक्तचन्दन न० कर्म्म०। रक्तवर्णसारे चन्दनभेदे।

रक्तचित्रक न० कर्म्म०। (लालचिता) क्षुपभेदे।

रक्तचूर्ण न० कर्म्म०। सिन्दूरे।

रक्तझिण्टी स्त्री० कर्म्म०। (लालझांटि) पुष्पप्रधानकवृक्षभेदे।

रक्ततुण्ड पु० रक्तं तुण्डमस्य। शुकपक्षिणि।

रक्तत्वचा स्त्री० रक्तं त्वचं यस्याः। गोमूत्रिकायाम्।

रक्तत्रिवृत्(ता) स्त्री० कर्म्म०। (लालतेओड़ि) वृक्षभेदे।

रक्तदन्तिका स्त्री० रक्ता दन्ता यस्याः ङीप् संज्ञायां कन्
अत इत्त्वम्। दाड़िमीरूपे दुर्गामूर्त्तिभेदे 'भक्षयन्त्याश्च
तानुग्रान् वैप्रचित्तान् महासुरान्। रक्ता दन्ता भविष्य-
न्तीत्युपक्रम्य ततो मां देवताः सर्वे मर्त्यलोके च मानवाः।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिका'मिति चण्डी।

रक्तदला स्त्री० रक्तानी दलान्यस्याः। नालिकायाम् (नालते)

रक्तदृश् पु० रक्ता दृक् नेत्रमस्य। कपोते। रक्तनेत्रादयोऽप्यत्र

रक्तधातु पु० कर्म्म०। गैरिके, ताम्रे च। देहस्थे रुधिररूपे
रसधातुजाते मांसधातुहेतौ धातुभेदे च।

रक्तनाल पु० रक्तो नालोऽस्य। जीवशाके।

रक्तप पु० रक्तं पिबति पा-क। राक्षसे। रक्तपानकर्त्तरि
त्रि०। जलौकायां, डाकिन्याञ्च स्त्री०।

रक्तपत्त्रिका स्त्री० रक्तानि पुष्पपत्त्राण्यस्याः कप् अत
इत्त्वम्। रक्तपुष्पजवायाम्, राखायाञ्च।

रक्तपल्लव पु० ६ब०। अशोकवृक्षे।

रक्तपाकी स्त्री० रक्तः पाकः फलं यस्याः ङीप्। बृहत्याम्।

रक्तपाद पु० ६त०। शुकपक्षिणि। खञ्जाखी लतायां, हंसपदाञ्च
स्त्री० ङीप्। [कायाम्। (जोंक)।

रक्तपायिनी स्त्री० रक्तं पातुं शीलमस्याः पा+णिनि। जलौ-

रक्तपारद पु०न० कर्म्म०। हिङ्गुले।

रक्तपित्त न० रक्ताय दुष्टं पित्तम् यस्मात्। रोगभेदे 'रक्त-
पित्तात् भवेत् कास' इति वैद्यकम्।

रक्तपुष्प पु० रक्तं पुष्पमस्य। करवीरे, रोहितकवृक्षे, रक्तका-
ञ्चनवृक्षे, दाड़िमवृक्षे, रक्तकवृक्षे, बन्धूकवृक्षे, पुन्नागवृक्षे च
स्वार्थे कन्। पलाशे। कर्म्म०। रक्तवर्णकुसुमे न०। पर्पटे,
शाल्मलिवृक्षे, जवावृक्षे च स्त्री० टाप्।

रक्तपुष्पिका स्त्री० रक्तानि पुष्पाणि यस्याः ङीप् अत इत्त्वम्।
लज्जालुलतायाम्, रक्तपुनर्नवायाम्, भूमिपाटल्यां च।

रक्तपुष्पी स्त्री० रक्तानि पुष्पाण्यस्याः ङीप्। पाटलिवृक्षे
(पारुल) जवायाम्, आवर्त्तकीवल्लीनाम्, नागदमन्याम्
करुणीवृक्षे च। [लिकाले।

रक्तपूरक न० रक्तं रुधिरं पूरयति वेगात् पूर-ण्वुल्।

रक्तप्रसव पु० रक्तवर्णः प्रसवः पुष्पमस्य। करवीरे रक्त

म्लाने च। [टाप् (तेलाकुचा)।

रक्तफल पु० रक्तानि फलान्यस्य। वटवृक्षे। बिम्बिकायां स्त्री०

रक्तवालुक न० कर्म०। सिन्दूरे रक्तवालुकाप्यत्र स्त्री०।

रक्तमञ्जर पु० रक्तवर्णा मञ्जरी अस्य अच्। निचुलवृक्षे।

रक्तमूला स्त्री० ६त०। लज्जालुलतायाम्।

रक्तमेह पु० कर्म०। रोगभेदे।

रक्तमोक्षण न० ६त०। रुधिरस्रावणे। [कन् तत्रैव।

रक्तयष्टि स्त्री० रक्तवर्णा यष्टिरस्याः। मञ्जिष्ठायाम्। स्वार्थे

रक्तरेणु पु० रक्ता रेणवोऽस्य। पलाशकलिकायाम्।

रक्तलशुन न० कर्म०। (नालरशुन) मूलभेदे।

रक्तला स्त्री० रक्तं रुधिरं छेदत्वेनास्त्यस्याः लच् तत् लाति सेव-नात् ला-क वा। काकतुण्ड्याम्।

रक्तवटी स्त्री० रक्तवर्णा वटीव। मसूरिकायाम्।

रक्तवर्ग पु० रक्तानां वर्गः समुदायः। दाडिमकिंशुकलाक्षा-बन्धूकहरिद्राजवाकुसुम्भपुष्पमञ्जिष्ठारक्तचन्दने समूहे।

रक्तवर्ण पु० रक्तो वर्णोऽस्य। इन्द्रगोपकीटभेदे। कर्म०। रोहितरूपे पु०।

रक्तवर्द्धन पु० रक्तं रुधिरं वर्द्धयति वृध-णिच् ल्यु। वार्त्ताकौ

रक्तवर्षाभू पु० वर्षाया भवति भू-क्विप् कर्म०। रक्तपुनर्नवायाम्

रक्तवीज पु० रक्तवर्णानि वीजान्यस्य। दाडिमे। रक्तं रुधिरमेव वीजमुत्पत्तिकारणं यस्य। 'रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः। समुत्पतति मेदिन्यास्तत्प्रमाणस्तदा सुर' इति सप्तशतीप्रतिपादितेऽसुरभेदे।

रक्तवृन्ता स्त्री० रक्तवर्णं वृन्तं यस्याः। शेफालिकायाम्।

रक्तवृष्टि स्त्री० ६त०। दैवकृतोपद्रवभेदे रुधिरवर्षणे।

रक्तशालि पु० कर्म०। (लालधान) धान्यभेदे।

रक्तशिग्रु पु० कर्म०। (लालसजना) वृक्षभेदे।

रक्तशीर्षक पु० रक्तं शीर्षमस्य कप्। सरलद्रुमे।

रक्तशृङ्गिक न० रक्तं शृङ्गमिवास्त्यस्य ठन्। विषभेदे।

रक्तसन्ध्यक न० रक्ता सन्ध्येव कन्। रक्तवर्णे कह्लारे, पद्मे च

रक्तसरोरुह न० कर्म०। रक्तपद्मे।

रक्तसर्षप पु० कर्म०। (राइसर्षा) राजिकायाम्।

रक्तसहा स्त्री० रक्तं सहते सह-अच्। रक्ताम्लाने।

रक्तसार न० रक्तः सारोऽस्य। रक्तचन्दने। अम्लवेतसे पु०।

रक्तसौगन्धिक न० कर्म०। (मालपद्म) रक्तवर्णकह्लारे।

रक्ताकार पु० रक्तवर्ण आकारो मूर्त्तिर्यस्य। प्रवाले।

रक्ताक्ष पु० रक्ते अक्षिणी यस्य षच् समा०। पारावते, महिषे, चकोरे, सारसे च। रक्ते नेत्रयति, क्रूरे, भये च त्रि०। स्त्रियां ङीष्

रक्ताङ्ग न० रक्तमङ्गं यस्य यस्माद्वा। कुङ्कुमे। मङ्गलग्रहे कम्पिल्ले (कमलाकचर्चा) च पु०। प्रवाले पु०न०। जीवन्त्याम्, मञ्जिष्ठायाञ्च स्त्री० ङीप्।

रक्ताति(ती)सार पु० रक्तमिश्रितोऽति(ती)सारः। वैद्यकप्रसिद्धे रोगभेदे।

रक्ताधार पु० ६त०। देहावरके चर्मणि। [शोके

रक्तापह न० रक्तं रुधिरमपहन्ति अप+हन-ड। गन्धरसे

रक्तापामार्ग पु० कर्म०। (लाल आपाङ्) क्षुपभेदे।

रक्ताम्लान पु० कर्म०। रक्तमहासहालतायाम्।

रक्तालु पु० कर्म०। (मकरकन्द) आलुभेदे।

रक्तिका स्त्री०। रक्तेव कन् अत इत्त्वम्। गुञ्जायां, राजिकायां, परिमाणभेदे च।

रक्तेक्षु पु० कर्म०। (काजला) इक्षुभेदे।

रक्तैरण्ड पु० कर्म०। (लालभेरण्डा) वृक्षभेदे।

रक्तोत्पल न० कर्म०। कोकनदे लोहितवर्णे पद्मे। रक्तोत्पलमिव पुष्पमस्त्यस्य अच्। शाल्मलिवृक्षे (शिमुल) पु० रक्तमुत्पलमिव। गैरिके न०। [तद्वति त्रि०।

रक्तोत्पलाभ पु० रक्तोत्पलस्य कोकनदस्येवाभा यस्य। रक्तरूपे

रक्ष पालने भ्वा०पर०सक०सेट्। रक्षति अरक्षीत्।

रक्षःसभ न० रक्षसां राक्षसानां सभा। राक्षससमूहे।

रक्षक त्रि० रक्ष-ण्वुल्। रक्षाकर्त्तरि स्त्रियां टाप् अत इत्त्वम्

रक्षणि(णी) स्त्री० रक्ष अनि वा ङीप्। त्रायमाणालतायाम्

रक्षस् न० रक्ष्यते हविरस्मात् रक्ष-अपादानेऽसुन्। राक्षसे।

रक्षा स्त्री० रक्ष-अ टाप्। रक्षणे। रक्षति अच् टाप्। जतुनि, भस्मनि च स्त्री०। रक्ष-अच्। रक्षके त्रि०।

रक्षापत्र पु० रक्षार्थं पत्रमस्य। भूर्जपत्रवृक्षे।

रक्षित त्रि० रक्ष्यतेऽत्र रक्ष-क्त। भावे क्त। उपाधिभेदे तदुपाधिविशिष्टजनकृते वैद्यकग्रन्थभेदे च।

रक्षिवर्ग पु० रक्षिणां वर्गः। सैन्यादिरक्षक (प्रहरिगण)

रक्षोघ्न न० रक्षो हन्ति हन टक्। काञ्जिके, हिङ्गुनि च। तद्गन्धाघ्राणमात्रेणापि रक्षसामपसरणम्। भल्लातकवृक्षे श्वेतसर्षपे च पु०। ऋग्वेदादिप्रसिद्धे 'कृणुष्व पाजः' इत्यादिके सूक्तभेदे न०। वचायां स्त्री०। राक्षसघातकद्रव्यमात्रे त्रि०

रक्षोहन् पु० रक्षो हन्ति हन+क्विप्। गुग्गुलौ तद्गन्धघ्राणादि राक्षसानामपसरणम्। श्वेतसर्षपे च। राक्षसहन्तरि त्रि० 'रक्षोहा वलगहन इति यजुर्वेदः'।

रक्ष्य पु० रक्ष यत्। साध्ये।

रघु सर्पणे भ्वा०पर०अक०सेट् इदित्। रङ्घति अरङ्घीत्।

रख सर्पणे भ्वा०पर०सक०सेट् । रखति अरखीत् अराखीत्
रग शङ्कायाम् भ्वा०प०सक०सेट् घटा० एदित् । रगति अर
गीत् । रगयति ।
रग गतौ भ्वा० पर० सक० सेट् इदित् । रङ्गति अरङ्गीत् ।
रग स्वादे आप्तौ च चु०उभ०सक०सेट्। रागयति अरीरगत् त
रघ दीप्तौ चु० उभ०सक०सेट् इदित् । रङ्घयति ते अररङ्घत्
रघ गतौ भ्वा०आ० सक० सेट् इदित् । रङ्घते अरङ्घिष्ट ।
रघु पु० लघ-उ लस्य रत्वम् । सूर्य्यवंश्ये दिलीपसूनौ नृपतिभेदे
रघोरपत्यमण् बहुषु लुक् । रघुवंश्ये अजप्रभृतौ क्षत्रिये
ब०व० । तान् अधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां
तस्य लुक् । कालिदासप्रणीते ऊनविंशतिसर्गात्मके
महाकाव्यभेदे पु० । [पुत्रे श्रीरामे ।
रघुनन्दन पु० रघून् नन्दयति नन्द-णिच् ल्यु । दशरथज्येष्ठ-
रघुनाथ पु० रघूणां नाथः रक्षकत्वात् श्रेष्ठत्वाद्वा । श्रीरामे
रघुपत्यादयोऽप्यत्र ।
रघुवंश पु०६त० । रघुकुले । तमधिकृत्य कृतो ग्रन्थः आख्या-
यिकायां तस्य लुक् । कालिदासप्रणीते ऊनविंशतिसर्गा-
त्मके महाकाव्यभेदे ।
रघुवंशतिलक पु०रघुवंशे तिलकइव । दशरथज्येष्ठपुत्रे श्रीरामे
रघुवर पु० रघुषु वरः श्रेष्ठः । श्रीरामे ।
रघूद्वह पु०रघुषु उद्वहः रघ्वादिभारधारक उद्+वह-अच् ।
दशरथज्येष्ठपुत्रे श्रीरामे ।
रङ्क त्रि० रकि-अच् । कृपणे, मन्दे च ।
रङ्कु पु० रकि-उ । मृगविशेषे ।
रङ्ग पु०रगि-अच् । धातुभेदे, (राङ) रन्ज भावे घञ् । रागे
आधारे घञ् । रणभूमौ, नाट्यस्थाने च । करणे घञ् ।
नृत्ये, टङ्कणे, (सोहागा) खदिरसारे च ।
रङ्गज न० रङ्गात् रङ्गधातोर्जायते जन-ड । सिन्दूरे ।
रङ्गजीवक पु० रङ्गेण रञ्जनेन जीवति जीव-ण्वुल् । (रङ्रेज)
चित्रिभेदे, चित्रकरे, नाट्यजीविनि च ।
रङ्गद पु० रङ्गं रञ्जनं रागं ददाति दा-क । टङ्कणे, खदिरसारे च
रङ्गदायक पु० रङ्गं ददाति दा-ण्वुल् । कङ्गुनि, (काङ्नी)
धान्यभेदे । [रक्तादिना हि मौक्तिकरागसम्भवः ।
रङ्गपत्री स्त्री० रङ्गाय पत्रमस्याः ङीप् । नीलीवृक्षे तत्पत्र-
रङ्गपुष्पी स्त्री० रङ्गाय पुष्प्यति अच् ङीप् । नीलीवृक्षे ।
रङ्गभूमि स्त्री० रज्यतेऽत्र रन्ज-घञ् कर्म० । नाट्यभूमौ
'रङ्गभूमिं समासाद्येति' भा०इ०प० । मल्लभूमौ च ।
रङ्गमातृ स्त्री० रङ्गस्य रागस्य मातेवोत्पादिका । लाक्षायाम्
कुट्टिन्याञ्च सा हि नायकयोर्वार्त्तादिद्वारा रागं वर्द्धयति ।
रङ्गलासिनी स्त्री० रङ्गं रागं लासयत्युल्लासयति छन्दस्येन
लस-णिच्-णिनि । शेफालिकायाम् ।
रङ्गवीज न० रङ्गस्येव बीजमुत्पत्तिसाधनं यस्य । रूप्ये रजते
रङ्गशाला स्त्री० रज्यतेऽत्र कर्म० । (नाचघर) नाट्यगृहे ।
रङ्गाजीव पु० रङ्गं रञ्जनं नाट्यस्थानं वा आजीवति आ+
जीव अण् । (रङ्रेज) शिल्पिभेदे, चित्रकरे, नटे च ।
रङ्गारि पु०रङ्गस्य रिरिव जारकत्वात् । करवीरे तद्रसयोगेनैव
रङ्गस्य जीर्णता ।
रङ्गावतारक पु० रङ्गे नाट्यस्थानेऽवतरति वेशान्तरपरिग्र-
हेण अव+तॄ-ण्वुल् । नटे, शैलूषे । णिनि । उक्तार्थे ।
रङ्गिणी स्त्री० रङ्गमिव शुभ्राणि मूलानि सन्त्यस्याः इनि ।
शतमूल्याम्, कैवर्त्तिकाख्यलतायां च । रङ्गयुक्ते त्रि० ।
रंहस् न० रंहि-असुन् । वेगे । [ल्युट् । तत्रैव न० ।
रचना स्त्री० रच-युच् । रचने, पुष्पपत्रादेर्विन्यासे । भावे
रच रचनायां अद० चु०उभ०सक०सेट् । रचयति ते अररचत् त
रज न० रन्ज क । स्त्रीकुसुमे । परागे, रेणौ गुणभेदे च पु०
रजक पु० रजति रन्ज-ण्वुल् नलोप । वस्त्रादेः रागकारके
जातिभेदे (धोपा) ।
रजत न०रन्ज-अतच् नलोप । रूप्ये, गजदन्ते, रुधिरे, हारे,
शैले, स्वर्णे, धवले च । शुक्लगुणवति त्रि० ।
रजताचल पु० रजतकल्पितोऽचल । दानार्थं कल्पिते, रजत-
मये पर्वते । रजतमिव शुभ्रोऽचलः । कैलासपर्वते रज-
तगिर्य्यादयोऽप्यत्र पु० ।
रजन न० रन्ज-ल्यु । रागे । [हरिद्रायां, जतुकायाञ्च ।
रजनि(नी) स्त्री० रज्यतेऽत्र रन्ज-कनि वा ङीप् । रात्रौ
रजनीकर पु० रजनीं सतत करोति कृ-ट । चन्द्रे ।
रजनीगन्धा स्त्री० रजन्यां गन्धो यस्याः । तन्नामख्याते
पुष्पप्रधाने वृक्षे । [भटे च ।
रजनीचर पु० रजन्यां चरति चर-ट । राक्षसे, चौरे, यामिक
रजनीजल न० रजन्या जलमिव । नीहारे ।
रजनीपुष्प पु० रजन्यां हरिद्राया इव पुष्पमस्य । (पूति-
करञ्जा) करञ्जभेदे ।
रजनीमुख न०६त० । प्रदोषे सूर्य्यास्तकालात् सार्द्धघटा-
त्मके, घटीत्रयात्मके वा काले । [शेफालिकायाम्
रजनीहासा स्त्री० रजन्यां हासो विकासो यस्याः । शेफा-
रजस् न० रन्ज-असुन् नलोप० । पुष्परेणौ, परागे, धूलौ,
सांख्योक्ते चेष्टादिकारके प्रकृतिगुणभेदे च ।

रजस्वल त्रि० रजोऽस्यास्ति वलच् । रजोयुक्ते । महिषे पु० आर्त्तववत्यां स्त्रियां स्त्री० ।

रज्जु स्त्री० सृज-उ नि० । बन्धनसाधने दामनि (दडि) वेण्याञ्च

रञ्जक न० रञ्जयति रन्ज-णिच्-ण्वुल् । हिङ्गुले प्रीतिकारके त्रि० । काम्पिल्लवृक्षे पु० (डहरकरमचा) ।

रञ्जन न० रज्यतेऽनेन रन्ज-करणे ल्युट् । रक्तचन्दने, मञ्जिष्ठायां, नील्यां, गुरुडारोचनिकायां, (कमलागुडि) शेफालिकायां, हरिद्रायां, पर्पट्याञ्च स्त्री० ङीप् । भावे ल्युट् । रागे । ल्यु । रागजनके त्रि० । मुञ्जतृणे न० । संज्ञायां कन् । कट्फले पु० ।

रट भाषणे भ्वा०पर०सक०सेट् । रटति अराटीत् अरटीत् 'माघे मासि रटन्त्याप' इति स्मृतिः ।

रटन्ती स्त्री० रट-शतृ ङीप् । 'माघे मासासिते पक्षे रटन्त्याख्या चतुर्दशी । तस्यां प्रदोषसमये पूजयेत् सुखभागिनी'मित्युक्तायां माघकृष्णचतुर्दश्याम् ।

रठ भाषणे भ्वा०पर०सक०सेट् । रठति अराठीत् अरठीत् ।

रण गतौ भ्वा०पर०सक०सेट् । रणति अराणीत् अरणीत् घटादि० । रणयति ।

रण रवे भ्वा०पर०अक०सेट् । रणति अराणीत् अरणीत् ।

रण न० रणन्ते यत्रातिशब्दं रण-घञर्थे क । युद्धे, भावे क । शब्दे, क्वणे, गतौ च पु० । [कन् । उद्वेगे अतिशये च ।

रणरणक पु० रण· शब्दस्तत्प्रकारः द्वित्वम् ततः संज्ञायां

रणसङ्कुल न० रणमेव सङ्कुलम् । तुमुलयुद्धे ।

रण्ड पु० रण-ड तस्य नेत्त्वम् । धूर्त्ते, विफले अर्द्धाङ्गविच्छिन्नतया छिन्नावयवे त्रि० मूषिकपर्ण्यां विधवायाञ्च स्त्री० । स्वार्थे कन् । अफलवृक्षादौ ।

रण्डाश्रमिन् पु० रण्ड विफल· प्रजाहीनत्वात् आश्रमः अस्यास्ति इनि । 'वर्षाण्यष्टचत्वारिंशत्परे यदि । स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः' इत्युक्त वयसि स्त्रीवियुक्ते पुरुषे ।

रत न० रम भावे क्त । रमणे स्त्रीपुंसयोः सङ्गमे मैथुने, गुह्ये च । कर्त्तरि क्त । अनुरक्ते त्रि० ।

रति स्त्री० रम-क्तिन् । रागे, गुह्ये, रमणे तदधिष्ठात्र्यां कामदेवपत्न्यां च । [सुरतसाध्ये मैथुने ।

रतिक्रिया स्त्री० रतये रतिरूपा वा क्रिया व्यापारः । स्त्रीपुम

रतिपति पु० ६त० कन्दर्पे रतिकान्तादयोऽप्यत्र ।

रतिप्रिय पु०६त० । कामदेवे । ६ब० । रमणप्रिये त्रि० ।

रतिमन्दिर न० ६त० । रतिगृहे स्त्रीणामपत्यमार्गे च

रतिरमण पु० रतिं रमयति रम-णिच्-ल्यु । कामदेवे ।

रतिलक्ष न० रतेर्लक्षं पदम् । मैथुने ।

रतिसत्वरा स्त्री० रतिं सत्वरयति सत्वरा+करोत्यर्थे णिच्-अण् । (पिड्ङ्ग) शाके ।

रत्न न० रमतेऽत्र रम-न तान्तादेशः । माणिक्यादिप्रस्तरे, स्वस्वजातिषु श्रेष्ठे, माणिक्ये, हीरके च ।

रत्नकन्दल पु० रत्नेषु कन्दल इव रक्तत्वात् । प्रवाले ।

रत्नकूट पु० रत्नमयकूट· शृङ्गमस्य । पर्व्वतभेदे ।

रत्नगर्भ पु०रत्नयुक्तं गर्भं मध्यं यस्य । समुद्रे, कुवेरे च । पृथिव्यां सगुत्वायां नार्याञ्च स्त्री० ।

रत्नद्वीप पु०न० । रत्नमयो द्वीपः । तन्त्रोक्ते सुधासमुद्रमध्यस्थिततया ध्येये रत्नमयेऽन्तरीपे । [निर्मितायां धेन्वाम् ।

रत्नधेनु स्त्री० रत्नकल्पिता धेनुः । दानार्थं कल्पितायां रत्न-

रत्नपारायण न० रत्नानां पारायणं साकल्येन स्थानम् । सर्व्वरत्नाधारे 'रत्नपारायणं नाम्ना लङ्के'ति भट्टिः ।

रत्नमुख्य न० रत्नेषु मुख्यम् । हीरके । [रत्नयुक्ते त्रि०

रत्नवती स्त्री० रत्नानि सन्त्यस्याः मतुप् मस्य वः । पृथिव्याम्

रत्नसानु पु० रत्नानि सानावस्य । सुमेरुपर्व्वते ।

रत्नसू स्त्री० रत्नानि सूते सू-क्विप् । पृथिव्याम् ।

रत्नाकर पु०६त० समुद्रे रत्नोत्पत्तिस्थाने, मणिखनौ च ।

रत्नाचल पु० रत्ननिर्मित· अचलः । दानार्थं कल्पिते रत्ननिर्मिते पर्व्वते । [भूषणभेदे ।

रत्नाभरण न० रत्नघटितमाभरणम् शाक० । (जड़ाओ)

रत्नावली स्त्री०६त० । रत्नसमूहे, तद्घटिते हारे, वत्सराजपत्नीभेदे च रत्नावलीमधिकृत्य कृत· ग्रन्थो॰ण् आख्यायिकायां तस्य लुक् । श्रीहर्षकृते चतुरङ्कात्मके नाटिकाभेदे । [ङीप् ।

रत्नि पु०स्त्री० ऋ-कत्निच् । 'बद्धमुष्टिहस्तपरिमाणे । स्त्रीत्वे वा

रथ पु० रम्यतेऽनेन अत्र वा रम-क्थन् । स्वनामख्याते यानभेदे, देहे च 'आत्मानं रथिनं विद्धि शरीरं रथमेव चे'ति गीता । पादे, वेतसवृक्षे, तिनिशवृक्षे च ।

रथकड्या स्त्री० रथानां समूह रथ+कड्यच् । रथसमूहे ।

रथकार पु० रथं करोति कृ-अच्-अण् वा । रथनिर्माणकारके (सूत्रधार) वर्णसङ्करभेदे ।

रथकुटुम्बिन् पु० रथस्य कुटुम्बीव पालकत्वात् । सारथौ ।

रथगर्भक पु० रथस्य गर्भमिव इवार्थे कन् । नर्य्यादि स्कन्धवाह्ययाने (पालकी) ।

रथगुप्ति स्त्री० रथस्य गुप्तिः सङ्घट्टवारणार्थं रथा उपधारगुप्तावरणम् । रथस्य सङ्घट्टवारणार्थं गुप्तस्थाने ।

**रथचरण** पु० रथस्य चरण इव गतिहेतुत्वात्। रथचक्रे तन्नामनामके चक्रवाकविहगे रथपादादयोऽप्यत्र।

**रथद्रु** पु० रथनिर्माणाय द्रुः रथनामको वा द्रुः। तिनिशवृक्षे

**रथन्तर** त्रि० रथेन तरति तॄ-खच् मुम् च। रथनेतरि। 'अभित्वा शूर' इत्यस्यामृचि गीते सामभेदे न०। [उत्सवभेदे

**रथयात्रा** स्त्री०रथस्य यात्रा। आषाढशुक्लद्वितीयाया कर्त्तव्ये

**रथाङ्ग** न० अङ्ग्यते गम्यतेऽनेन अगि-करणे घञ् ६त०। चक्रे रथाङ्गशब्द वाचकत्वेनास्त्यस्य अच्। चक्रवाके पु०।

**रथाङ्गपाणि** पु० रथाङ्गं चक्रं पाणौ यस्य। चक्रधरे विष्णौ

**रथाभ्र** पु० रथत्वाभियतेऽसौ आ+भ-मूल० क। वेतसवृक्षे।

**रथाभ्रपुष्प** पु०अभ्रमिव पुष्पमस्य रथनामकोऽभ्रपुष्प कर्म०। वेतसवृक्षे। [रथेन युद्धकारके च।

**रथारोहिन्** पु० रथम रोहति आ+रुह णिनि। रथिनि

**रथिक** पु० रथो युद्धसाधनाधारत्वेनास्त्यस्य ठन्। रथिनि। इत रथिर। इन। रथिन। इनि। रथी एतेष्वत्र।

**रथोपस्थ** न० रथस्य उपस्थ इव। रथमध्ये।

**रथ्य** पु० रथ वहति यत्। रथवाहके घोटके। रथस्येद यत्। रथसम्बन्धिनि त्रि०रथस्य तद्गमनस्य योग्या सरणि। मार्ग-पथे, अभ्यन्तरमार्गे, रथानां समूह यत्। रथसमूहे च स्त्री०

**रद** उत्खाते भ्वा०प०सक०सेट्। रदति अरादीत् अरदीत्।

**रद** पु०रदति उत्खनति रद-अच्। दन्ते। भावे अच्। उत्खनने

**रदच्छद** पु०रदान् छादयति छद णिच्-घ ह्रस्व। ओष्ठयो रदनादिच्छदादयोऽप्यत्र।

**रदन** पु० रद-ल्यु। दन्ते, भावे ल्युट्। विदारणे। [रदा

**रध** हिंसने पाके च दि०पर०सक०वेट्। रध्यति अरधत् रधिता-

**रन्ज** रागे, (वर्णान्तरापाने) स्वा० आसक्तौ अक०भ्वा०उभ० अनिट्। रजति ते अरङ्क्षीत् अरङ्क्त। घटा० रञ्जयति मृगमारणे तु रजयति।

**रन्ज** रागे आसक्तौ दिवा०उभ०सक०अनिट्। रज्यति रज्यते अराङ्क्षीत् अरङ्क्त। घटा० रञ्जयति। रजयति

**रन्तिदेव** पु० रम बाहुल्येन तिच् कर्म०। चन्द्रवंश्ये नृपभेदे कुक्कुरे च। [श्वमदे, इन्दुरट।

**रन्धन** न०रन्ध-पाके ल्युट् नुमागम। पाके सूपकारे। रन्धन

**रन्ध्र** न० रम क्विप् ध्र मूल क कर्म०। छिद्रे, दूषणे, ज्योतिषोक्ते लग्नादष्टमस्थाने च।

**रन्ध्रकण्ट** पु०रन्ध्रे रन्ध्रे कण्टा कण्टकोऽस्य। आवर्त्तमुदकाख्ये

**रन्ध्रवंश** पु० रन्ध्रयुक्तो वंश शाक०। (वेणुवांशय) वंशभेदे।

**रप** व्यक्तायां वाचि भ्वा०प०सक०सेट्। रपति अरापीत् अरपीत्

**रफ** गतौ हिंसे च भ्वा०प०सक०सेट्। रफति। अरफीत्-अराफीत्। इदित्त्वपक्षम्। रम्फति अरम्फीत्।

**रब** गतौ सक० प० शब्दे अक० आ० भ्वा० सेट् इदित्। रम्बति-ते अरम्बीत् अरम्बिष्ट।

**रभ** औत्सुक्ये भ्वा०आ०अक०अनिट्। रभते आरब्ध।

**रभ** शब्दे भ्वा०आ०अक०सेट् इदित्। रम्भते अरम्भिष्ट।

**रभस** पु० रभ-असच्। वेगे,हर्षे,औत्सुक्ये,पौर्वापर्याविचारे च

**रम** क्रीडायां भ्वा०आ०ज्वला०अक०अनिट्। रमते विरमति उपरमति अरंस्त उपारंसीत्। क्त्वा वेट्। घ राम

**रम** पु० रम-अच्। कान्ते अशोकवृक्षे कामदेवे च।

**रमठ** न० रम अठन्। हिङ्गुनि। स्वार्थेऽण्। अत्रैव न०।

**रमठध्वनि** पु०रमठ इति शब्देन ध्वन्यते ध्वन-इन्। हिङ्गुनि

**रमण** पु०रमयति रम-णिच् ल्यु। कामदेवे गर्द्दभे, वृषणे महारिष्टे (निम) पत्यौ। 'रमण! त्वामनुयामीति कुमार। जम्बुद्वीपान्तर्गते रम्यकनाम्नि वर्षे च। रम भावे ल्युट्। सुरते। करणे ल्युट्। पटोलमूले, कन्। जघने च न०। रम्यतेऽनया ल्युट् ङीप्। नार्याम्, उत्तमनार्यां, बालास्यवृक्षे च स्त्री०।

**रमणीय** त्रि० रम्यतेऽत्र रम-आधारे-ल्युट्। सुन्दरे।

**रमल** न० ज्योति शास्त्रभेदे।

**रमा** स्त्री० रमयति रम अच्। लक्ष्म्याम्।

**रमापति** पु० ६त०। नारायणे रमानाथतत्कान्तादयोऽप्यत्र।

**रमाप्रिय** न० ६त०। पद्मे। विष्णौ पु०।

**रम्भ** पु० रभि-अच्। वेणौ, महिषासुरजनकऽसुरभेदे च। कदल्याम्, अप्सरोभेदे, वेश्यायां, गवां ध्वनौ, गौर्याञ्च स्त्री०।

**रम्भातृतीया** स्त्री० मार्गशीर्षे शुक्लतृतीयायाम्, उपचारात्, तत्र कर्त्तव्ये व्रतभेदे च।

**रम्य** त्रि०रम्यतेऽस्मिन् यत्। सुन्दरे, मनोहरे च। चम्पक वकवृक्षे, च पु०। पटोलमूले न०। संज्ञायां कन्। जम्बुद्वीपस्य नवसु वर्षेषु मध्ये 'इलावृतेन सुमेरोस्तु चैवस्य चोत्तरेण च' वायव्य रम्यक नामयुक्ते वर्षभेदे।

**रम्यपुष्प** पु० रम्याणि पुष्पाण्यस्य। शाल्मलिवृक्षे।

**रम्या** स्त्री० रम्यतेऽत्र यत्। स्थलपद्मिन्याम्, रात्रौ च।

**रय** गतौ भ्वा०आ०सक० सेट्। रयते अरयिष्ट।

**रय** पु० रय अच्। वेगे, प्रवाहे च। [प्रभव, नेत्ररोमाणि च

**रल्लक** पु० रम क्विप् तथाभूते सन् ला-क कर्म०। मृगभेदे

**रव** गतौ भ्वा० आ०सक०सेट् इदित्। रवते अरविष्ट।

**रव** पु० रु-भावे अप्। शब्दे।

रवण पु० रु-युच्। कोकिले, उष्ट्रे च। कांस्ये न०। शब्दकारके, तीक्ष्णे च त्रि०।

रवि पु० रु-इन्। सूर्य्ये, अर्कवृक्षे च।

रविज पु० रवेर्जायते जन-ड। शनौ, सावर्णिमनौ, वैवस्वते मनौ, सुग्रीवे, वानरे, यमे च यमुनायां स्त्री० रवितनयादयोऽप्यत्र।

रविनाथ न० रविर्नाथः प्रकाशकत्वात् यस्य। पद्मे, बन्धूके च

रविनेत्र पु० रविर्नेत्रं यस्य। विष्णौ। रविलोचनादयोऽप्यत्र

रविप्रिय न० ६त०। रक्तकमले। करवीरे पु०।

रविरत्न न० रवेः प्रियं रत्नम्। माणिक्ये, ताम्रे च।

रविलौह न० रवेः प्रियं लौहं धातुः। ताम्रे।

रश स्वने सौ०पर०अक० सेट्। रशति। अराशीत् अरशीत्।

रशना स्त्री० रश-युच्। काञ्च्याम्, जिह्वायाञ्च।

रश्मि पु० अश-मि धातोरुट् रश-मि वा। किरणे, अश्वादिदामनि च पक्ष्मे न०।

रस स्वने भ्वा०प०अक० सेट्। रसति। अरासीत्-अरसीत्।

रस आस्वादे चु०उ०सक० सेट्। रसयति-ते अररसत्-त

रस पु० रस्यते रस-अच्। आस्वाद्ये, रसनेन्द्रियग्राह्ये माधुर्य्यादिगुणभेदे, देहस्थे भुक्ताद्यादेः प्रथमपरिणामे, 'सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रस' इत्युक्ते धातुभेदे माधुर्य्यादिरसवति, गुडादौ, पुष्पस्य मधुनि, अलङ्कारोक्ते भङ्गारिव्यभिचारिसहकारिव्यङ्ग्ये रत्यादिस्थायिभावके शृङ्गारादौ रूपे, वीर्य्ये, माधुर्य्यादिगुणे, रागे, द्रवे, पारदे, जले च गन्धरसे पु० न०।

रसकर्पूर न० रसेन कर्पूरमिव। (रसकर्पूर) गन्धद्रव्यभेदे।

रसकेशर न० रसेन केशरमिव नागकेशरतुल्यगन्धित्वात्। कर्पूरे

रसगन्ध पु०न० रसे गन्धोऽस्य। बोले गन्धरसे स्वार्थे कन् तत्रैव। [हिङ्गुले च।

रसगर्भ न० रसो गर्भे यस्य। पित्तलधातुद्रवजे रसाञ्जने,

रसघ्न पु० रसं पारदं हन्ति हन-टक्। टङ्कणे (सोहागा)

रसज न० रसात् भुक्तान्नसारात् प्रथमं ततो जायते जन-ड। रुधिरे। रसात् इक्षुप्रभृतेः द्रवात् जायते जन-ड। गुडे, मद्यकीटे च पु०। रसभवादयोऽप्यत्र।

रसज्ञा स्त्री० रसं जानाति अनया ज्ञा-क। जिह्वायाम् रसज्ञानसाधने जिह्वास्थानस्थे इन्द्रिये।

रसज्येष्ठ पु० रसेषु ज्येष्ठः श्रेष्ठः। मधुररसे शृङ्गाररसे च।

रसतेजस् न० रसस्य भुक्तान्नसारस्य तेजः सारः। रुधिरे।

रसदालिका स्त्री० रसार्थं दल्यते रस-दल-णिच्-ण्वुल् गौ०ङीप् कन्। पुण्ड्रेक्षौ (पुंड़ि आख)।

रसधातु पु० रसाख्यो द्रवरूपो, वा धातुः। पारदे।

रसधेनु स्त्री० दानार्थं कल्पितायाम् इक्षुरसनिर्मितायां धेनौ।

रसन न० रस-ल्युट्। शब्दे ध्वनौ च करणे ल्युट् जिह्वायां 'पिबेन दूने रसने सितापी'ति नैषध।

रसना स्त्री० रस्यतेऽनया। रस-करणे ल्युट् अजा० टाप्। जिह्वायां, रास्नायां, काञ्च्यां, रज्जौ च। [याम्।

रसनेत्रिका स्त्री० रसो नेत्रमिव अस्याः ठन्। मनःशिला-

रसपाकज पु० रसपाकेन जायते जन-ड। गुडे।

रसफल पु० रसो जलं फले यस्याः। नारिकेलवृक्षे।

रसमाणिक्य न० रसेन पारदेन माणिक्यमिव तत् पाकजत्वात्। स्वनामख्याते पदार्थे।

रसराज पु० रसेषु रसो राजेव श्रेष्ठत्वात् रसः द्रव इव राजते वा पारदे रसनाथादयोऽप्यत्र। [मस्य वः। पाकस्थाने।

रसवती स्त्री० रस आस्वाद्यद्रव्यमन्नादि अस्त्यस्याम् मतुप्

रसशोधन न० रसं पारदं द्रवीभूतं द्रव्यं स्वर्णादि वा शोधयति शुध-णिच्-ल्यु। टङ्कणे (सोहागा)।

रसस्थान न० रसस्य पारदस्य स्थानम्। हिङ्गुले। [व्याम्।

रसा स्त्री० पाकजः रसो माधुर्य्यादिरूपोऽस्त्यस्याः अच्। पृथि-

रसाग्रज न० रसस्य पित्तलधातुद्रवस्याग्रात् जायते जन-ड। रसाञ्जने।

रसाञ्जन न० रसजातं पित्तलधातुजमञ्जनम्। स्वनामख्याते 'रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनमि'त्युक्ते पदार्थे

रसाढ्य पु० रसेन मधुररसेनाढ्यः। आम्रातके। रसवति त्रि०।

रसातल न० रसायास्तलम्। पातालभेदे सप्तमे भूमेरधोभागे

रसाधिक पु० रसाय द्रवाय स्वर्णादिद्रावणाय अधिकः आदीयमानत्वात्। टङ्कणे। रसेनाधिका। काकोडुम्बरिकायां स्त्री०।

रसान्तर न० अन्योरसः मयूर० नि०। प्रकृतरसादन्यस्मिन् रसे,

रसाभास पु० रस इव आभासते आ+भास-अच्। अलङ्कारोक्ते 'अनौचित्यप्रवृत्तत्वे आभासो रसभावयोरि'त्युक्ते पश्वादिपरनायकगतशृङ्गारादौ रसे। [अम्लवेतसे पु०।

रसाम्ल न० रसेनाम्लम्। वृक्षाम्ले, चुक्रे च (चुकपालङ्)

रसायन न० रसस्यायनमिव। तक्रे पथ्याम्, विषभेदे वैद्यकप्रसिद्धे औषधभेदे च गरुड़े, विडङ्गे च पु०।

रसायनफला स्त्री० रसायनमौषधविशेष इव फलं अस्याः। हरितक्याम्।

रसायनश्रेष्ठ पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे।

विबुध पु० वि+बुध-क । पण्डिते, देवे, विबुधसख इति भट्टिः । चन्द्रे च ।

विभक्त त्रि० वि+भज-क्त । पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समा इति स्मृतिः । भावे क्त । विभागे न० ।

विभक्ति स्त्री० वि+भज-क्तिन् । विभागे 'संख्याकर्म्माद्यर्थमान्ये शक्तिमान् प्रत्ययस्तु य' । सा विभक्तिर्द्विधा प्रोक्ते'त्युक्तल-क्षणे प्रत्ययभेदे च ।

विभव पु० वि+भू-अप् । धने, मोक्षे, सर्व्वमूर्त्तसंयोगरूपे, ऐश्वर्य्ये षष्टिसंवत्सरमध्ये 'हृष्टाः पुष्टाः जनाः सर्व्वे विभवेऽब्दे वरानने !' इत्युक्ते वर्षभेदे च ।

विभा स्त्री० वि+भा-अङ् । किरणे, शोभायां, प्रकाशे च ।

विभाकर पु०विभां प्रकाशं करोति कृ-अच् । सूर्य्ये, अर्कवृक्षे च

विभाग पु० वि+भज-भावे घञ् । भागे । कर्मणि घञ् । अंशे, शास्त्रोक्ते पूर्व्वस्वामिसम्बन्धाधीनस्वत्वस्य तत्सम्बन्धाधीनजातस्वत्व-व्यञ्जकव्यापारभेदे । [गयोग्ये, भजनीये धनादौ ।

विभाज्य त्रि० विभक्तुमर्हति वि+भज-अर्हार्थे ण्यत् । विभा-

विभाण्डक पु० मुनिभेदे ।

विभात न० वि+भा-क्त । प्रभाते ।

विभाव पु० वि+भू-घञ् । परिचये, अलङ्कारोक्ते रसस्योद्दी-पके आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द० । [त्युक्तलक्षणे अलङ्कारभेदे ।

विभावना स्त्री० 'प्रसिद्धकारणाभावात् कार्य्योत्पत्तिर्विभावने'

विभावरी स्त्री० वि+भा-क्वनिप् ङीप् वनोर च । रात्रौ, हरिद्रायां, कुट्टिन्याम्, अनुरक्तयोषिति, मुखरस्त्रियाम्, मेदोवृक्षे च । [चित्रकवृक्षे, वारभेदे च ।

विभावसु पु०विभायुक्तं वसु यस्य । सूर्य्ये, अर्कवृक्षे, वह्नौ,

विभाषा स्त्री० विरुद्धा भाषा वि+भाष-अ । व्याकरणोक्ते प्राप्तिसमाप्तिफलके 'नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने

विभिन्न त्रि० वि+भिद क्त । प्रकाशिते, विदलिते, विभक्ते च ।

विभीतक पु० विशेषेण भीत इव स्वार्थे कन् । (बयड़ा) वृक्षे ।

विभीषण पु० विशेषेण भीषयते भी-णिच् षुक् च ल्यु । रावणभ्रातरि राक्षसे, नलतृणे च । [भयप्रदर्शने ।

विभीषिका स्त्री० वि+भी-णिच्-षुक् च भावे ण्वुल् ।

विभु पु०वि+भू-डु । सर्व्वमूर्त्तसंयुक्ते, प्रभौ, महादेवे ब्रह्मणि च ।

विभूति स्त्री० वि+भू-क्तिन् । अणिमा 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्य्ये च ।

विभूषा स्त्री० वि+भूष-अ । शोभायां, भूषणे च ।

विभ्रम पु०वि+भ्रम-घञ् । स्त्रीणां शृङ्गाराङ्गचेष्टाभेदे 'विभ्रम-स्त्वरयाऽकाले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थान वैपरीत्ये च 'युवसु विभ्रमसङ्गनानामि'ति कुमार० । विशेषेण, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च ।

विभ्राज् त्रि० वि+भ्राज-क्विप् । भूषणादिना दीप्ते ।

विमत त्रि० वि+मन-क्त । विरुद्धमतियुक्ते । [व्याकुलचित्ते

विमनस्(स्क) त्रि० विविधं मनो यस्य वा कप् । चिन्तादिना

विमर्द पु० विमृद्यतेऽसौ वि+मृद घञ् । (कालकासुन्दिया) वृक्षे । चक्रमर्द्दके च । भावे घञ् । मर्द्दने ।

विमर्शन न० वि+मृश-ल्युट् । परामर्शे, न्यायोक्ते साध्य-व्याप्यहेतुमत्त्वेन पक्षनिश्चये, वितर्के च । घञ् तत्रैव पु० ।

विमर्ष पु० वि+मृष-घञ् । विमर्शे, नाटकाङ्गभेदे च ।

विमल त्रि० विगतो मलो यस्मात् । स्वच्छे, निर्मले, विगतो मलो यस्याः ब०व० । (चामारकषा) सप्तम्यायाम् जग न्नाथक्षेत्रस्थे देवीभेदे च स्त्री० ।

विमातृ स्त्री० विरुद्धा माता । मातृसपत्न्याम् ।

विमातृज पु० विमातुर्जायते जन-ड । सापत्ने भ्रातरि ।

विमान पु०न० वि+मन घञ् वि+मा ल्युट् वा । देवयाने, रथे, सार्व्वभौमगृहभेदे च । अश्वे पु० यानमात्रे परिमाणे च न०

विमार्ग पु० विरुद्धो मार्गः । कुपथे निन्दिताचारे ।

विमुख त्रि० विरुद्धमनुकूलं मुखमस्य । बहिर्मुखे, विरक्ते च ।

विमुद्र त्रि० विगता मुद्रा सङ्कोचभावो यस्य । विकसिते, मुद्रारहिते च ।

विम्ब पु० न० । वी+वन्-बुक् ह्रस्वो । दर्पणादौ आत्ममानप्रति-बिम्बाश्रये,कमण्डलौ च । सूर्य्यादिमण्डले च कृकलासे पु० । बिम्बायाः फलम् अण् तस्य लुप् । बिम्बिकाफले ।

विम्बजा स्त्री० बिम्बं फलं जायतेऽस्याः जन-ड । बिम्बिकायां (तेलाकुचा) ।

विम्बट पु० बिम्बमटति अट-अच् शक० । सर्षपे ।

विम्बा(म्बी) स्त्री० बिम्बमस्त्यस्याः अच् गौरा० ङीष् (तेलाकुचा) लताभेदे । स्वार्थे कन् । तत्र, सूर्य्यादिमण्डले च ।

वियत् न० वि+यम-क्विप् मलोपे तुक् । आकाशे ।

वियद्गङ्गा स्त्री० वियत्स्था गङ्गा । स्वर्गङ्गायां मन्दाकिन्याम् ।

वियात त्रि० वि+या-क्त । धृष्टे, निर्लज्जे च ।

वियोग पु० वि+युज-घञ् । विच्छेदे । पु०। अभियोगे [त्रि०

वियोगिन् पु० वि+युज-घिनुण् । चक्रवाके, पक्षिणि, विच्छेदवति

विरक्त त्रि० वि+रञ्ज-क्त । विरक्ते, विरते च ।

विरङ्ग पु० वि+रन्ज-घञ् । कङ्कुष्ठे ।
विरचित त्रि० वि+रच-क्त । कृते, निर्म्मिते च ।
विरजस्तमस् त्रि० विगते रजस्तमसी यतः । सत्त्वगुणप्रधाने ।
विरजस् विगतं रजो यस्याः । गतार्त्तवायां स्त्रियाम् । रजोगुणहीने त्रि० ।
विरजा स्त्री० विशेषेण रज्यते रन्ज-अच् । दूर्व्वायां, गोलोकस्थे राधासखीभेदे तच्छापाज्जायमाने नदीभेदे च ।
विर(रि)ञ्चि पु० वि+रच अच् इन् वा मुम् च । जगत्स्रष्टरि ।
विरण न० विशिष्टो रणो मूलमस्य । उशीरे (वेणारमूल) ।
विरत त्रि० वि+रम क्त । निवृत्ते । [रराहित्ये च ।
विरति स्त्री० वि+रम-क्तिन् । निवृत्तौ, विषयसेवायां-व्यापा-
विरल त्रि० वि+रा-कलच् । अवकाशे, विच्छिन्ने, अनिविडे च
विरह पु० वि+रह-घञ् । विच्छेदे, अभावे, शृङ्गाररसस्य विप्रलम्भाख्ये अवस्थाभेदे च ।
विरहित त्रि० वि+रह-क्त । त्यक्ते, हीने च । [रागशून्ये त्रि०
विराग पु वि+रन्ज-घञ् । रागाभावे, विगतो रागो यस्य ।
विराज् पु० विशेषेण राजते क्विप् । क्षत्रिये ब्रह्माण्डात्मकस्थूलदेहाभिमानिनि आदिपुरुषे, छन्दोभेदे च ।
विराट पु० विशेषेण राटो यत्र । देशभेदे, तद्देशाधिपे नृपे च ।
विराध पु० राक्षसभेदे ।
विराधन न० वि+राध-ल्युट् । पीडायाम् ।
विराम पु० वि+रम-घञ् । अवसाने, विरतौ, निवृत्तौ च ।
विराल पु० वि+डल-घञ् डस्य रः । विडाले मधुभेदे ।
विराव पु० वि+रु-घञ् । शब्दे रवे० । विगतरवे त्रि० ।
विरिञ्च पु० वि+रिच-अच् मुम् च । विष्णौ जगत्स्रष्टरि वेधसि, शिवे च । इन् । तत्रैवार्थे । [रिते च
विरूढ त्रि० विशेषेण रोहति वि+रुह-क्त । जाते, अङ्कु-
विरूप त्रि० विकृतं रूपमस्य । दुष्टरूपयुक्ते, निन्दिते च पिप्पलीमूले न० । अतिविषायां, दुरालभायाञ्च स्त्री० ।
विरूपाक्ष पु० विरूपे विकटे अक्षिणी यस्य षच् समा० । महादेवे । विकटनेत्रे त्रि० ।
विरेक पु० वि+रिच-घञ् । मलादेरधोनिःसरणे, अतिरेके च
विरेचन न० वि+रिच-णिच्-ल्युट् । मलादेर्निःसारणे, 'ज्वरमध्ये विरेचनमिति वैद्यकम् । विरेचयति वि+रिच-णिच्-ल्यु । मोक्षके पु० । भेदकमात्रे त्रि० ।
विरोक पु०न० वि+रुच-घञ् चस्य कः । छिद्रे, सूर्यकिरणे पु० ।
विरोचन पु० वि+रुच-युच् । सूर्ये अर्कवृक्षे, वह्निमित्रारि महासुरबलेः पितृभेदे, चन्द्रे च रोचयति रुच-णिच् ल्यु । रोहितकवृक्षे, श्योनाकवृक्षे, पूतिकरञ्जे च पु० । रुचिकरे त्रि०
विरोध पु० वि+रुध-घञ् । वैरे विरुद्धतायाम् न्यायोक्ते साध्येनासामानाधिकरण्यरूपे हेतुदोषे, यथा वह्निमान् जलादित्यत्र जलरूपहेतोर्वह्निना सामानाधिकरण्यं नास्ति ।
विरोधन न० वि+रुध-ल्युट् । वैरे ।
विरोधिन् पु० वि+रुध-णिनि । रिपौ, षष्टिसंवत्सरमध्ये 'जायते मानुषे कष्टं विरोधिनि न संशय' इत्युक्तलक्षणे वत्सरभेदे च ।
विरोधोक्ति स्त्री० अर्थालङ्कारभेदे, परस्परविरोधिवचने च ।
विल स्मृतौ तु०भ०सक०सेट् । विलति अवेलीत् ।
विल न० विल-क । छिद्रे, गुहायाञ्च । विलस्तत्सदृशकारणत्वेनाख्यस्य अच् । घोटकोत्तमे, वाजिनो 'विलयोनय' इति कुमारः । वेतसे च पु० ।
विलक्ष पु० विलक्ष-अच् विस्मययुक्ते ।
विलक्षण त्रि० विशिष्टं लक्षणमस्य । विभिन्ने, विशेषयुक्ते च । निष्प्रयोजनस्थितौ च न० । दानार्थं काञ्चनरूपमूर्त्तियुक्तशय्याभेदे स्त्री० । 'अशौचान्तात् द्वितीयेऽह्नि शय्यां दद्यात् विलक्षणामि'ति स्मृतिः ।
विलग्न त्रि० विशेषेण लग्नं लस्ज-क्त तस्य नः जस्य गः । संलग्ने । मध्यभागे, कटौ, उदितमेषादिराशौ च न० । 'गोचरे वा विलग्नेवे'ति ज्योतिषम् । [काले
विलम्ब पु० वि+लबि-घञ् । विलम्बने अशीघ्रत्वे प्रतीक्षणीय
विलम्बित त्रि० वि+लबि-क्त । अशीघ्रे, मन्दे च मध्यन्दत्ये न०
विलय पु० वि+ली-अच् । प्रलये, नाशे च ।
विलला स्त्री० वि+लल-अच् । श्वेतवचायाम् । [गोधाया च
विल(ले)शय पु० विले शेते-शी अच् वा अलुक्स० । सर्पे, मूषिके,
विलाप पु० वि+लप-घञ् । परिदेवनोक्तौ ।
विलास पु० वि+लस-घञ् । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इत्युक्ते स्त्रीणां शृङ्गारचेष्टाभेदे, चेष्टाविशेषे, दीप्तौ च ।
विलासिनी स्त्री० विलासोऽस्त्यस्य इनि ङीप् । नार्य्यां, वेश्यायाञ्च । भोगवति त्रि० सर्पे, लम्पे, वह्नौ, स्मरे, महादेवे चन्द्रे च पु० ।
विलीन त्रि० वि-ली-क्त । प्राप्तद्रवीभावे घृतादौ, विरत, नष्टे च 'विलीनाशेषपातकेति भागवतम् ।
विलेपन न० विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये पिष्टे शटे वा चन्दनकुङ्कुमादौ । कर्म्मणि ल्युट् ङीप् । यवागूवा, एतेषादाः स्त्रियाञ्च स्त्री० ।

विलेप्य पु० वि+लिप-यत् । यवाग्वाम् विलेपनीये त्रि० ।
विलोचन न० वि+लुच-करणे ल्युट् । नेत्रे, भावे ल्युट् । दर्शने
विलोडित न० वि+लोड-क्त । तक्रे । आलोडिते त्रि० ।
विलोम त्रि० विगतं लोम यत्र अच् समा० । विपरीते, अर-
    घट्टके न० सर्पे, कुक्कुरे वरुणे च पु० ।
विलोमजिह्व पु० विलोमा विपरीता जिह्वा यस्य । गजे ।
विलोमवर्ण पु० विलोमज स्वरत्यसुक्ततया व्युत्क्रमजो वर्ण० ।
    उत्तमस्त्रियामधमवर्णेन जनिते सङ्कीर्णे वर्णे ।
विलोमी स्त्री० विशिष्टं लोम केशो यस्याः ब० व० अच् गौरा०
    ङीप् । आमलक्याम् ।
विलोल त्रि० वि+लुल अच् । चञ्चले, विशेषसतृष्णे च ।
विल्ल न० विल ल किप् तस्य नेत्त्वम् । आलवाले । [हीकन्दे
विल्लमूला स्त्री० विल्लमालविलमिव वेष्टित मूलमस्याः । वारा-
विल्व पु० विल-वन् किप् । श्रीफलवृक्षे, तत्फलादौ,
    परिमाणे च न० । [पदार्थे शुष्कविल्वीत्थफल
विल्वपेषिका स्त्री० विल्वस्य पेषोऽस्त्यस्य ठन् । (वेलशुठा)
वि(वी)वध पु० वि+वध-अच् वा दीर्घः । धान्यतण्डुलादेराहरणे
    भारे स्कन्धवहनयोग्ये (वाक) काष्ठभेदे च ।
विवर न० वि+वृ-अप् । छिद्रे, दोषे च ।
विवरण न० वि+वृ-ल्युट् । व्याख्याने, तत्कारके ग्रन्थभेदे च ।
विवरनालिका स्त्री० विवरयुक्तं नालमस्त्यस्या ठन् । वेणौ(वांश)
विवर्ण त्रि० विरुद्धो वर्णोऽस्य । अधमे, नीचे च ।
विवर्त्त पु० वि+वृत-घञ् । नृत्ये, समुदाये, अपवर्त्तने वेदान्तोक्ते
    कारणात् विषमसत्ताकतया उत्पद्यमाने कार्ये च । यथा
    रज्जोः रजतम् ब्रह्मणो जगत् ।
विवश त्रि० विगतो वश आयत्तता यस्य । अस्वतन्त्रे, व्याकुले
    च 'विवशा कामवधूरिति' कुमारः, कृतदोषे च ।
विवस्वत् पु० वि+वस-क्विप् अस्त्यर्थे मतुप् मस्य वः । सूर्ये,
    अर्कवृक्षे, अरुणे, देवे च ।
विवाद पु० विरुद्धो वादः । 'ऋणादिदायकलहे द्वयो बंहुतरस्य
    वा । विवादो व्यवहारश्च मुद्दवलये व्यवहारे, कलहे च ।
विवाह पु० वि-वह-घञ् । दारपरिग्रहे, तदङ्गके व्यापारे च
विवाहित पु० विवाहो जातोऽस्य तार-इतच् । जातविवाहे ।
विवाह्य त्रि० वि+वह-ण्यत् । विवाहयोग्ये, विशेषेण वाह्ये च
विविक्त त्रि० वि+विच-क्त । निर्जने, पवित्रे, असंयुक्ते च ।
    कर्मणि-क्त । विवेकिनि त्रि० । दुर्भगायां स्त्रियां स्त्री० ।
विविध त्रि० विभिन्ना विधा यस्य । नानाप्रकारे ।
विवीत पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र । प्रचुर-
    तृणघासादियुक्ते देशे ।
विवृत त्रि० वि+वृ-क्त । विस्तृते व्याख्याते च ।
विवृति स्त्री० वि+वृ क्तिन् । विस्तारे व्याख्याने च ।
विवेक पु० वि+विच-घञ् । याथार्थ्येन वस्तुस्वरूपावधारणे,
    प्रकृतिपुरुषयोर्भेदज्ञाने च ।
विवोढृ पु० वि+वह तृच् । जामातरि ।
विव्वोक पु० वि+वा कु तस्य ओक स्थानम् । 'गर्वाभिमाना-
    दिष्टेपि विव्वोकोऽनादरक्रिये'त्युक्तलक्षणे स्त्रीणां शृङ्गार-
    चेष्टाभेदे ।
विश प्रवेशे तु० पर० सक० अनिट् । विशति अविक्षत् ।
विश् पु० विश-क्विप् । मनुजे, वैश्ये च ।
विशङ्कट त्रि० वि+शङ्कटच् । विशाले । [च त्रि० ।
विशद पु० वि+शद-अच् । शुभ्रवर्णे । तद्वति विमले, व्यक्ते
विशय पु० वि+शी अच् । संशये 'विषयोविशयश्चैवेति' मीमांसा
विशर पु० वि+शॄ अप् । वधे ।
विशल्यकृत् पु० विशल्यं तत्प्रहारवेदनानिवृत्तिं करोति कृ-
    क्विप् । (झापरमाली) वृक्षे ।
विशल्या स्त्री० विगतं शल्यं तत्प्रहारवेदना यस्याः ब० व० ।
    अग्निशिखावृक्षे, दन्तीवृक्षे, गुडूच्याम्, त्रिपुटायां अजमो-
    दायाञ्च । विगतशल्ये त्रि० ।
विशसन न० वि+शस-हिंसने ल्युट् । मारणे ।
विशसन पु० विशस्यतेऽनेन ल्युट् । खड्गे, 'असिर्विशसनः खड्ग
    इति खड्गकोशम् । [तक्ष, मारिते
विशस्त त्रि० वि+शस-क्त । शासिते अतीते च । वा इट् ।
विशाख पु० विशाखानक्षत्रे भवः अण् । कार्त्तिकेये । धन्विनां
    स्थितस्थानपादावस्थाने, पुनर्नवायां, याचने च ।
विशाखज पु० विविधा शाखा यस्य तथा सन् जायते
    जन क । नारङ्गे, विशाखानक्षत्रजाते त्रि० ।
विशाखा स्त्री० विविधा शाखा प्रकारो यस्याः । नक्षत्रभेदे
    तत्कोऽदिन्यथवाधिके षोडशे नक्षत्रे कठिल्लके च ।
विशारण न० वि+शॄ-स्वार्थे णिच् ल्युट् । मारणे ।
विशारद पु० विशालं ददाति दा क लस्य रः । बकुलवृक्षे
    शुद्धकुशलाक्षमायां स्त्री० पण्डिते, प्रगल्भे, श्रेष्ठे च त्रि० ।
विशाल त्रि० वि+शालच् । विस्तीर्णे, महति च । मृगभेदे,
    खगभेदे च पु० । इन्द्रवारुण्याम्, महेन्द्रवारुण्यां नदी-
    भेदे च स्त्री० विशाला शिरला नगरीति प्रसिद्धम् । [विशाल
विशालता स्त्री० विशालस्य भावः तल् । दीर्घविस्तारे । [वृक्षे
विशालत्वक् पु० विशालं विस्तीर्णं त्वक् यस्य । सप्तच्छदवृक्षे
विशालतैलगर्भ पु० विशालं विस्तीर्णं तैलं गर्भे फलमध्ये यस्य ।

विशालत्वच् पु० विशाला त्वक् यस्य । सप्तच्छदे वृक्षे ।
विशालपत्र पु० विशालं पत्रमस्य । कापालो,तालवृक्षे च ।
विशालाक्ष पु० विशाले अक्षिणी यस्य मधुमभा० । महादेवे, गरुडे,विष्णौ च तद्गुणे,लि०पार्व्वत्यां नागदन्त्यां च स्त्री०ङीप्
विशाली स्त्री० वि+शालच् गौरा०ङीप् । अजमोदायाम् ।
विशिख पु०विशिष्टा विगता वा शिखा यस्य । शरवृक्षे, वाणे, तोमरे च द्वय० शिखारहिते लि० । नालिकायाम् रथ्यायाञ्च स्त्री० ।
विशिष्ट लि० वि+शिष-क्त । युक्ते, विलक्षणे, विशेषयुक्ते च ।
विशिष्टाद्वैत न०रामानुजस्युक्ते प्रकृतिविशिष्टस्य ब्रह्मणोऽद्वयत्वे
विशीर्ण लि० वि+श-क्त । शुष्के, जरावस्थापन्ने च ।
विशीर्णपर्ण पु० विशीर्णं पर्णमस्य । निम्बवृक्षे ।
विशुद्ध लि० वि+शुध-क्त । दोषरहिते, विशदे च ।
विशुद्धि स्त्री० वि+शुध-क्तिन् । शोधने,दोषराहित्ये च ।
विशृङ्खल लि०विगता शृङ्खला पद्धति र्यस्याः । परिपाटीशून्ये
विशेष पु० वि+शिष-घञ् । प्रभेदे, प्रकारे, व्यक्तौ, तिलके, 'अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तितः' इति वैशेषिकोक्ते पदार्थभेदे, अर्थालङ्कारभेदे च ।
विशेषक पु०न०विशेषयति वि+शिष-णिच्-ण्वुल् । ललाटकृते तिलके । विशेषकर्त्तरि लि० 'त्रिभिर्श्लोकैर्विशेषकमि'त्युक्ते एकवाक्यतापन्ने श्लोकत्रये न० ।
विशेषगुण पु० कर्म० । वैशेषिकोक्ते 'बुद्ध्यादिषट्कं स्पर्शादिचतुष्कं स्नेहभावने । स्वाभाविकद्रवत्वञ्च अदृष्टं शब्द एव च'इत्युक्तेषु गुणभेदेषु ।
विशेषण न० विशिष्यतेऽनेन वि+शिष-ल्युट् । भेदकधर्मे गुणक्रियादौ यथा नीलम् उत्पलं चलो गौरित्यादौ गुण क्रियादिर्भेदकधर्म्म ।
विशेषविधि पु० विशेषे विधिः।सामान्यविशेषयोर्मध्ये विशेष गोचरे विधाने यथा ब्राह्मणेभ्यो दधि दीयतां माथुराय तक्रमित्यत्र माथुरस्यास्य ब्राह्मणविशेषत्वेन तद्विषये दधिदानं परास्य तक्रदानविधि ।
विशेषित लि० वि+शिष-णिच्-क्त। भेदिते विशेषणयुक्तीकृते च
विशेषोक्ति स्त्री० अर्थालङ्कारभेदे ।
विशेष्य लि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिष-ण्यत् । गुणादिभिर्भेद्ये,भावच्छेद्ये, पदार्थे धर्म्मिणि च ।
विशोक पु० विगतः शोकः यस्मात् यस्य वा । अशोकवृक्षे शोकरहिते लि० । योगशास्त्रोक्ते चित्तवृत्तिभेदे स्त्री० ।
विशोधनी स्त्री० विशुध्यतेऽनया शुध-ल्युट् ङीप् । दन्तीवृक्षे भावे ल्युट् । शोधने न० वि+शुध-ल्यु । शोधनकारके लि० ।
विशोधिन् लि० वि+शुध-णिच् णिनि । शोधनकारके लि० । नागदन्त्यां स्त्री०ङीप् ।
विश्र(श्रा)णन न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः । दाने ।
विश्रब्ध लि० वि+श्रम्भ-क्त । विश्वस्ते 'विश्रब्धं परिचुम्ब्य' इति सा० । शान्ते, अनुद्धते, गाढे च ।
विश्र(श्रा)म पु० वि+श्रम घञ् वा वृद्धिः । विरामे प्रवृत्त व्यापारस्यावसाने च । [वधे च ।
विश्रम्भ पु० वि+ श्रम्भ-घञ् । विश्वासे, प्रणये, केलिकलहे
विश्राव पु० वि+श्रु-घञ् । प्रसिद्धौ ख्यातौ च ।
विश्रुत पु० वि+श्रु-क्त । विख्याते ।
विश्लिष्ट लि० वि+श्लिष-क्त। वियुक्ते, शिथिले च ।
विश्लेष पु० वि+श्लिष-घञ् । वियोगे शैथिल्ये च ।
विश्व न०विश-व । जगति संसारे । तदभिमानिनि जीवे पु० । श्राद्धदेवविशेषे पु० ब०व० सकले लि० तदर्थेऽस्य सर्व्वनामता ।
विश्वकर्म्मन् पु० विश्वेषु कर्म व्यापारो यस्य । सूर्ये, देवशिल्पिनि, मुनिभेदे, परमेश्वरे च ।
विश्वकृत् पु० विश्वं करोति क-क्विप् । विश्वकर्म्मणि,परमेश्वरे च
विश्वकेतु पु०विश्वे केतवोऽस्य । अनिरुद्धे ।
विश्व(ष्व)क्सेन विश्व(ष्व)क्सेनायस्य।विष्णौ, प्रियङ्गुवृक्षे स्त्री०।
विश्वगन्ध पु० विश्वतो गन्धोऽस्य। बोले,अभिरसे,पलाण्डौ च
विश्वगन्धा स्त्री० विश्वे सकला गन्धा यस्याः । पृथिव्याम् ।
विश्वग्रन्थि स्त्री० विश्वतो ग्रन्थिर्यस्याः । हंसपदीलतायाम्
विश्व(ष्व)द्रु अव्य०विश्वमञ्चति क्विप् विश्व(षु) आदेशः । सर्व्वत इत्यर्थे विश्वगामिनि लि० अद्र्यागमे विश्व(ष्व)द्र्यञ्च ।
विश्वधारिणी स्त्री० विश्वं धारयति धृ-णिनि । पृथिव्याम्
विश्वपर्णी स्त्री० विश्वतः पर्णान्यस्याः । भूम्यामलक्याम् ।
विश्वप्सन् पु० विश्वं प्साति भक्षति प्सा-कनिन् । वह्नौ,चन्द्रे देवे, विश्वकर्म्मणि, भूमौ च।
विश्वभेषज न० विश्वेषां भेषजम् । शुण्ठ्याम् ।
विश्वम्भर पु० विश्वं बिभर्त्ति भृ-खच् मुम् च । इन्द्रे, विष्णौ च । पृथिव्यां स्त्री० ।
विश्वरूपक न० विश्वं रूपमस्य कप् । कृष्णागुरुणि ।
विश्वरेतस् पु० विश्वं रेतोऽजस्य यस्य । चतुर्मुखे ब्रह्मणि ।
विश्वरोचन पु० विश्वानु रोचयति रुच-णिच्-ल्यु । माडोषमाक
विश्ववेदस् पु० विश्वं वेत्ति विद-असुन्। इन्द्रादौ देवे,सर्व्वज्ञे च
विश्वसार न० विश्वेषां सारम् । तन्त्रभेदे । संज्ञायां कन् । (कपिमनसा) वृक्षे पु० ।

**रावणगङ्गा** स्त्री० रावणनिर्मिता गङ्गा नदी। सिंहलदेशस्थे नदीभेदे। [पुले।

**रावणारि** पु०६त०। श्रीरामे रावणान्तकादयोऽप्यत्र। [ज्येष्ठ-

**रावणि** पु० रावणस्यापत्यम् अत इञ्। मेघनादाख्ये रावण

**राश** शब्दे भ्वा०आ०अक०सेट्। राशते अराशिष्ट चङि न ह्रस्वः

**राशि** पु० अश्नुते व्याप्नोति अश्-इन् धातोरुडागमश्च। धान्यादीनां पुञ्जे, ज्योतिश्चक्रस्य द्वादशांशे मेषादौ, ‘इष्टे राशिप्रसिद्धये’ इति लीलावतीप्रसिद्धे व्यक्ताव्यक्तगणभेदे।

**राशिचक्र** न० राशिघटितं चक्रं वृत्तम्। मेषादिद्वादशराशियुक्ते गोलाकारे वायुवशेन पूर्वतः पश्चात् अनिशं बंभ्रम्यमाणे ज्योतिर्मये ‘सप्तविंशतिभिर्ज्योतिश्चक्रं स्तिमितवायुग’मित्युक्ते ज्योतिश्चक्रे।

**राशिभोग** पु० राशीनां स्वस्वगत्या ग्रहैर्भोगः भज-घञ् कुत्वम्। रव्यादीनां स्वस्वगत्यनुसारेण राशिषु गतिभेदे।

**राशी(शि)कृत** पुत्र अराशिः राशिः कृतः राशि+अभूततद्भावे च्वि, तदर्थे समासो वा (ढेरी) पुञ्जीकृते एकत्रस्थीकृते।

**राष्ट्र** न० राज-ष्ट्रन्। जनपदे ‘गौडं राष्ट्रमनुत्तममिति, प्रबोधचन्द्रोदय’। उपद्रवे च। [कारिकायाम्।

**राष्ट्रिका** स्त्री० राज-ष्ट्रन् षित्वात् ङीष् स्वार्थे कन्। कण्ट-

**राष्ट्रिय** पु० राष्ट्रे भवः घ। नाट्योक्तौ राजश्याले। ख्य तत्रार्थे। उभावपि राष्ट्रभवे त्रि०।

**रास** पु० रस-घञ् रास-अच् वा। शब्दे, ध्वनौ, धवले शृङ्खलावच्छक्र द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदे, कोलाहले च।

**रासभ** पु० रास-अभच्। गर्द्दभे।

**रासभवन्दिनी** स्त्री० रासभस्य वन्दिनीव। मल्लिकायाम्।

**रासमण्डल** न० रासार्थं शृङ्खलावच्छक्रत् द्वयोर्द्वयोर्मध्यस्थित्या क्रीडाभेदेन मण्डलं मण्डलाकारेण भ्रमणं यत्र। रासक्रीडाधारस्थाने, श्रीकृष्णस्य तदुत्सवाङ्गे मण्डपभेदे च।

**रासेश्वरी** स्त्री० ६त०। राधिकायाम्। [आमडा)

**रास्ना** स्त्री० रस-नप्। स्वनामख्यातायां लतायाम् (काढा

**राहु** पु० रह-उण्। त्यागे, त्यक्तरि, ज्योतिश्चक्रस्थे सूर्यकिरणसंपर्काभावेन जायमानपृथिवीच्छायाधिष्ठातरि ग्रहभेदे सिंहिकासुते दानवे च।

**राहुच्छत्त्र** न० राहोर्ग्रहस्य छत्त्रमिव। आर्द्रके।

**राहुदर्शन** न० राहोर्दर्शनं यत्र। चन्द्रसूर्ययोरुपरागरूपे पर्वणि ‘स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने’ इति स्मृतिः तेन उपरक्तेऽपि चन्द्रे सूर्ये च तस्य दृश्यता नान्यदा

**राहुमूर्द्धभिद्** पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद्-क्विप्। विष्णौ अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थित्वाऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्छिच्छेदेति पुरा०

**राहुरत्न** न० राहोः प्रियं रत्नम्। गोमेदमणौ।

**राहुस्पर्श** पु० राहोः स्पर्शः स्वाधिष्ठितभूच्छायाद्वारा यत्र। चन्द्रसूर्ययोः उपरागरूपे ग्रहणे।

**राहूच्छिष्ट** पु० ६त०। लशुने।

**राहूत्सृष्ट** पु० ६त०। लशुने।

**रि** गतौ तु०पर०सक०अनिट्। रियति अरैषीत्। [त्रि०

**रिक्त** त्रि०न० रिच क्त। शून्ये, वने, निरर्थके च। स्वार्थे कन्। तत्रैव

**रिक्ता** स्त्री० रिच-क्त। उभयपक्षयोश्चतुर्थीनवमीचतुर्दशीतिथिषु

**रिक्तभाण्ड** न० रिक्तं भाण्डम्। तैलादिशून्ये भाण्डे।

**रिक्तहस्त** त्रि० रिक्तो धनादिशून्योहस्तो यस्य। निर्द्धने, भूरिदान दिना व्ययितधने च।

**रिक्थ** न० रिच-थक्। धने। मिताक्षराद्युक्ते अप्रतिबन्धे दाये च ‘स्वामी रिक्थक्रयसंविभागेत्यादि स्मृतिः।

**रिक्थहारिन्** त्रि० रिक्थं दायं हरति गृह्णाति। दायग्राहिणि पुत्रादौ। अण्। रिक्थग्राहोऽप्यत्र।

**रिक्थिन्** त्रि० रिक्थं ग्राह्यत्वेनाऽस्त्यस्य इनि। दायहारिणि दायादे ‘उभयोरप्यसौ रिक्थी’ति स्मृतिः।

**रिख** सर्पणे भ्वा०पर०अक०सेट् इदित्। रिङ्खति अरिङ्खीत्। अनिदित्पक्षमित्येके रेखति अरेखीत्।

**रिग** गतौ भ्वा०पर०सक०सेट् इदित्। रिङ्गति अरिङ्गीत्

**रिङ्गण** न० रिगि-ल्युट्। स्खलने। रिखि ल्युट्। रिङ्खणमप्यत्र

**रिच** सम्पर्के वियोगे च वा चु०उभ०पक्षे भ्वा०पर०सक०सेट्। रेचयति ते रेचति। अरीरिचत् त अरेचीत्।

**रिच** विरेके (अतिशय पुरीषोत्सर्गे) रुधा०उभ०सक० अनिट्। रिणक्ति रिङ्क्ते अरिचत् अरैक्षीत् अरिक्त।

**रिज** भर्जने भ्वा०आ०सक०सेट्। रेजते अरेजिष्ट।

**रिपु** पु० रप-उ-पृ०। शत्रौ, चोरनामगन्धद्रव्ये, ज्योतिषोक्ते लग्नापेक्षया षष्ठस्थाने च। [भेदे शत्रुघातके त्रि०।

**रिपुघातिनी** स्त्री० रिपुं हन्ति हन णिनि। (कुकुर) वन्ध्या-

**रिपुञ्जय** त्रि० रिपुं जयति जि-खच्। शत्रुजयिनि, स्वपनेदेष्ठ०

**रिन्फ** वधे तु०प०सक०सेट्। रिम्फति अरिम्फीत्।

**रिप्फ** पु० रिफ-अच् पृ०। लग्नापेक्षया द्वादशे स्थाने।

**रिफ** कुत्सने तु०पर०सक०सेट्। रेफति अरेफीत्।

**रिफ** हिंसायां निन्दायां बोधने च सक० आत्म०याम् अक०तु०पर०सेट्। रिफति अरेफीत्।

**रिम्ब** गतौ भ्वा०पर०सक०सेट् इदित्। रिम्बति अरिम्बीत्।

रिभ रवे भ्वा०पर०सक०सेट् । रेभति अरेभीत् ।
रिरंसा पु० रम-सन्-अ । रमणेच्छायाम् ।
रिवि गतौ भ्वा०पर०सक० सेट् इदित् । रिण्वति अरिण्वीत् ।
रिश हिंसायां तु०पर०सक०अनिट् । रिशति अरिक्षत् ।
रिश्य पु० रिश्यते रिश-क्यप् । मृगभेदे ।
रिष वधे भ्वा० पर०सक०सेट् । रेषति अरेषीत् ।
रिष्ट न० रिष-क्त । मङ्गले, अशुभे च । भावे क्त । नाशे, पापे च । अशुभादिमति त्रि० । खड्गे, रक्ताशियौ च पु० । स्वार्थे कन् । तेषु । [रन्ध्रे पु०
रिष्टि स्त्री० रिष-रिश-वा क्तिन् । अशुभे, खड्गभेदे च । क्षिप्
रिह वधे भ्वा०पर०सक०सेट् । रेहति अरेहीत् । [रीषः ।
री क्षरणे दि०आ०अक०अनिट् । रीयते अरेष्ट निष्ठातस्य न
री गतौ वधे च सक० रवे अक० क्र्या० पा० अनिट् । रिणाति अरैषीत् ।
रीढा स्त्री० रि-क्त ढत्वं नेत्त्वम् । रीढाकरञ्च ।
रीढाकरञ्च पु० कर्म० । स्वनामख्याते हले ।
रीढा स्त्री० रिह-क्त इडभावः । अवज्ञायाम् ।
रीण त्रि० री-क्त । क्षरिते स्रुते ।
रीति स्त्री० री-क्तिन् । पित्तले, प्रचारे, क्षरणे, लौहकिट्टे, सीमायां, गतौ, स्वभावे, अलङ्कारोक्ते गौडादिरचनाभेदे च ।
रीतिक न० रीतिरिव कायति कै-क । पुष्पाञ्जने स्त्रीत्वमपि स्वार्थे कन् । पित्तले न० ।
रीतिपुष्प न० रीतेः पुष्पमिव । कुसुमाञ्जने ।
रीव आदाने, संवरणे च भ्वा० उ०सक०सेट् । रीवति ते अरीवीत् अरीविष्ट । चङि न ह्रस्व० ।
रु ध्वनौ अदा०प०अक०सेट् । रौति-रवीति अरावीत्-अरौषीत्
रु वधे गतौ च भ्वा० आ०सक० अनिट् । रवते अरोष्ट ।
रुक्प्रतिक्रिया स्त्री० रुजः प्रतिक्रिया प्रतीकारः प्रति+कृ-भावे श । चिकित्सायाम् ।
रुक्म न० रुच-मन् नि० कुत्वम् । काञ्चने, धुस्तूरे, लौहे, नागकेशरे च । [सर्पकारे आतिभेदे ।
रुक्मकारक पु० रुक्मं तद्विकारं भूषणं करोति कृ-ण्वुल् ।
रुक्मिन् पु० रुक्मं विद्यतेऽस्य इनि । राजभेदे । स्वर्णालङ्कारयुक्ते त्रि० । रुक्मिराजकन्यायां भीष्मकन्यायां स्त्री० ङीप् ।
रुक्ष त्रि० रूक्ष-अच् ह्र० वा दीर्घः । अचिक्कणे, निष्ठुरे, कठोरे च । [अरोटिष्ट ।
रुग्ण त्रि० रुज-क्त । रोगान्विते, भग्ने च । [अरुरुचत्
रुच दीप्तौ प्रीतौ च भ्वा०आ०अक०सेट् । रोचते लुङि उ०

रुचक न० रुच-कुन् । सर्जिकाक्षारे, माङ्गल्ये द्रव्ये, उत्कटे, अश्वभूषणे, माल्ये, सौवर्चले व्यासाद्यरसे, रोचनायाम्, विडङ्गे, लवणे च । वीजपूरे, दन्ते, निष्के, कपोते च पु० । [च ।
रुच्(चा) स्त्री० रुच-सम्प०क्विप् वा टाप् । दीप्तौ, शोभायां, प्रकाशे
रुचि(ची) स्त्री० रुच-कि वा ङीप् । अनुरागे, आसक्तौ, स्पृहायाम्, अभिलाषे, किरणे, शोभायां, बुभुक्षायां, गोरोचनायां च । प्रजापतिभेदे पु० ।
रुचिर त्रि० रुचिं राति ददाति रा-क । मनोहरे, सुन्दरे, मधुरे च । मूलके, कुङ्कुमे, लवङ्गे च न० । गोरोचनायाम् स्त्री० ।
रुचिराञ्जन पु० अज्यतेऽनेन अन्ज-करणे ल्युट् रुचिरः शोभायुक्तोऽञ्जनः । शोभाञ्जने ।
रुच्य त्रि० रुचये हितः यत् । सुन्दरे, रुचिकरे च । सौवर्चले न० । पत्यौ, कतकवृक्षे, शालिधान्ये च पु० ।
रुच्यकन्द पु० रुच्य० रुचिकरः कन्दो मूलमस्य । शूरणे (ओल)
रुज भञ्जने तु०प०सक०अनिट् । रुजति अरौक्षीत् निष्ठातस्य नः । रुग्णः ।
रुज हिंसायां चु० उभ०सक०सेट् । रोजयति ते अरूरुजत्
रुज्(जा) स्त्री० रुज-सम्प० क्विप् वा टाप् रुज-बाहु० वा । रोगे, भङ्गे, मेषा, कुष्ठे च (कुड़) ।
रुजाकर न० रुजां रोगं करोति कृ-अच् । कर्मरङ्गफले (कामराङ्गा) रोगकारके त्रि० ।
रुट चौर्ये भ्वा०पर०सक०सेट् इदित् । रुण्टति अरुण्टीत् ।
रुट रोषे सक० दीप्तौ अक० चु०उ०सेट् । रोटयति ते अरूरुटत् त
रुट दीप्तौ प्रतिघाते च भ्वा० आ०अक० सेट् । रोटते लुङि उभ० अरुटत् अरोटिष्ट । [ठिष्ट
रुठ उपघाते भ्वा०पर०सक०सेट् । रोठति अरोठीत् । [अरो
रुठ प्रतीघाते भ्वा०आ०सक०सेट् । रोठते लुङि उ० अरुठत्
रुठि गतौ चौर्ये सक० मन्दीभावे पङ्गूभावे च अक०भ्वा० पर० सेट् इदित् । रुण्ठति अरुण्ठीत् ।
रुण्ड पु० रुटि-अच् पृ० ठस्य डः । मूर्द्धशून्ये देहे कबन्धे ।
रुत न० रु-क्त । रवे पशुपक्षिभ्रमरादीनां शब्दे । [अरोदीत् ।
रुद् रोदने अदा० पर० रुदा० अक० सेट् । रोदिति अरुदत्
रुदित न० रुद-भावे क्त । क्रन्दने । कर्त्तरि क्त । कृतरोदने त्रि०
रुद्ध त्रि० रुध-क्त । आवरणादिना वेष्टिते कृतप्रतिरोधे च ।
रुद्र पु० रोदिति रुद-रक् । शिवस्य मूर्त्तिभेदे "सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वमिति श्रुतिः । [illegible] सुरेश्वरः । [illegible] त्रिनं । [illegible]

एकादशसु शिवमूर्त्तिभेदेषु ।

रुद्रज पु० रुद्रात् जायते जन-ड । शिववीर्य्यजाते पारदे ।

रुद्रजटा स्त्री० रुद्रस्य जटेव पिङ्गत्वात् जटिलत्वात् । स्वनामख्याते लताभेदे ।

रुद्रपत्नी स्त्री० ६त० । दुर्गायाम् अतस्याञ्च (मसिना)

रुद्रप्रिया स्त्री० ६त० हरितक्याम् दुर्गायाञ्च ।

रुद्रविंशति स्त्री० रुद्रस्वामिका विंशतिः । प्रभवादिषु षष्टिवत्सरेषु अन्तिमेषु विंशतिवर्षेषु ।

रुद्रसावर्णि पु० चतुर्द्दशसु मनुषु मध्ये, द्वादशे मनौ ।

रुद्राक्रीड़ न० रुद्रस्याक्रीड़ा यत्र । श्मशाने ।

रुद्राक्ष पु० रुद्रस्याक्षीव यच्च । स्वनामख्याते वृक्षे ।

रुद्राणी स्त्री० रुद्रस्य पत्नी रुद्र+ङीप् आनुक् च । शिवपत्न्याम्

रुद्रारि पु० रुद्र अरिर्यस्य । कामदेवे ।

रुद्रावास पु० ६त० । कैलाशे, काश्याम् श्मशाने च ।

रुध कामे दि० आ० सक० अनिट् प्रायेणानुपूर्व्वः । अनुरुध्यते अन्वरुद्ध । [अरौत्सीत्

रुध आवरणे, रु० उभ० सक० अनिट् । रुणद्धि रुन्धे अरुधत्

रुधिर न० रुध-किरच् । शरीरस्थे ,रसपाकजन्ये धातुभेदे । मङ्गलग्रहे' रक्तवर्णे च पु० तद्वर्णवति त्रि० ।

रुप आकुलीकरणे दि० पर० सक० सेट् । रुप्यति-अरुपत् । अरोपीत् ! [भेदे च

रुमा स्त्री० रु-मक् । सुग्रीववानरभार्य्यायाम् लवणस्थाने देश-

रुरु पु० रु-क्रु । मृगभेदे । [रु-युक् । रुबूकोऽप्यत्र

रुवु पु० रु-उ । एरण्डवृक्षे । कन् । तत्र, रक्तैरण्डे च पु० ।

रुश हिंसायां तु० पर० सक० अनिट् । रुशति अरुक्षत् ।

रुष वधे भ्वा० पर० सक० सेट् । रोषति अरोषीत् ।

रुष क्रोधे दि० पर० अक० सेट् । रुष्यति अरुषत् अरोषीत् ।

रुष क्रोधे चु० उभ० अक० सेट् । रोषयति ते अरूरुषत् त ।

रुष्(षा) स्त्री० रुष-संप० क्विप् वा टाप् । क्रोधे ।

रुषित त्रि० रुष-क्त वा इट् । क्रोधयुक्ते इडभावपक्षे रुष्टोऽप्यत्र

रुह उद्भवे भ्वा० पर० अक० अनिट् । रोहति अरुहत् । अव्या० ।

रुह त्रि० रुह-क । जाते । दूर्व्वायां स्त्री० उत्तरपदस्थः तस्मादुद्भूते त्रि० यथा भूरुहः शाखिरुहम् ।

रूक्ष पारुष्ये कठोरतायाम् स्निग्धेतरे च । चु० भ्वा० अक० सेट् । रूक्षयति ते अरुरूक्षत् त । [स्त्री० ।

रूक्ष त्रि० रूक्ष-अच् । अचिक्कणे, परुषे च । वृक्षे पु० ।

रूक्षगन्ध पु० रूक्षो गन्धो यस्य । गुग्गुलौ ।

रूक्षदर्भ पु० कर्म० । हरिदर्भे कुशभेदे ।

रूक्षपत्त्र पु० रूक्षं पत्त्रमस्य । शाखोटवृक्षे ।

रूक्षप्रिय पु० रूक्षं प्रियं यस्य । रूक्षभौषधे ।

रूढ त्रि० रुह-क्त । जाते, प्रसिद्धे च 'रूढिरस्यास्ति अच् । प्रकृतिप्रत्ययार्थमनपेक्ष्य समुदायशक्त्यार्थबोधके शब्दे यथा । घटः गौरित्यादि । [शिष्य शब्देन समुदायशक्त्यार्थस्यबोधने च

रूढि स्त्री० रुह-क्तिन् । जन्मनि, प्रसिद्धौ, प्रकृतिप्रत्ययार्थमन-

रूप रूपान्वितकरणे अक० चुरा० उभ० सक० सेट् । रूपयति ते अरुरूपत् त ।

रूप न० रूप-क भावे अच् वा । स्वभावे, सौन्दर्य्ये, पशौ, नाम्नि, शब्दे, ग्रन्थावृत्तौ, दृश्यकाव्ये नाटकादौ, श्लोके, शब्द-धातूनां विभक्तियोगेन निष्पन्नशब्दे, शुक्लादिवर्णे च तद्वति त्रि० । उत्तरपदस्थः सदृशार्थे त्रि० यथा पितृरूपस्तनयः मातृरूपा कन्या । एकसंख्यान्विते न० 'रूपं भजेत् स्यात् परिपूर्त्तिकाल' इति लीलावती । 'यकाव्यक्तं शोधयेदन्यपक्षात् रूपाण्यन्यस्येतरस्माच्च पक्षादिति बीजगणितोक्ते अव्यक्तराशिसहचरितव्यक्तसंख्यान्विते च ।

रूपक न० रूपयत्यस्य रूप-अच् कन् । अभिनयप्रदर्शके दृश्यकाव्यप्रभेदे, रूपमस्यस्य वुण् । मूर्ते त्रि० रूप+स्वार्थे कन् । शुक्लादिवर्णे, आकारे च रूपकं रूपितारोपादित्युक्ताऽरोक्ते अर्थालङ्कारभेदे, गुञ्जात्रयपरिमाणे, रजते च ।

रूपधारिन् त्रि० रूपं धारयति धारि-णिनि । रूपवति, सौन्दर्य्यान्विते, वेशान्तरग्राहिणि नटे च ।

रूपवत् त्रि० रूप+मतुप् मस्य वः । शुभ्रादिरूपविशिष्टे, सौन्दर्य्ययुक्ते, आकारविशिष्टे च । [वेश्यायाम् ।

रूपाजीवा स्त्री० रूपं सौन्दर्य्यमाजीवति आ+जीव-अच् ।

रूपिका स्त्री० रूपमस्त्यस्य ठन् । श्वेतार्कवृक्षे ।

रूप्य न० रूपाय आहन्यते स्वर्णादि यत् । अलङ्कारादिनिर्म्माणाय आहन्यमाने स्वर्णे रजते च स्वार्थे यत् । रजतमात्रे । सुन्दरे त्रि० । [रूपत् त ।

रूप्याध्यक्ष पु० रूप्येषु अध्यक्षः । कोषाध्यक्षे । [ते अरू-

रूष धूल्यादिनामिश्रीकरणे अद० चु० उभ० सक० सेट् । रूषयति

रूषक पु० रूष-ण्वुल् । वासके वृक्षे ।

रूषित त्रि० रूष-क्त । धूल्यादिभिर्मिश्रिते, अचिक्कणीकृते च

रे अव्य० रु-डे डिच्च । नीचादेः सम्बोधने । [शङ्कः

रेक शङ्कायां भ्वा० आ० स० सेट् । रेकते अरेकिष्ट । पत्ति च

रेक पु० रिच-घञ् । विरेचने । रेक-अच् । शङ्कायां, नीचे, भेके च । रेक-अ । शङ्के स्त्री० टाप् ।

रेखा स्त्री० लिख-अच् लस्य रः । चक्रे, छद्रे, आभोगे,

विन्दुपुञ्जकृते दण्डाकारेण चिह्नभेदे, पङ्क्तौ च।

रेचक न॰ रेचयति रिच-णिच् ण्वुल्। कङ्कुष्ठे, यवक्षारे, जय-
पाले, तिलकवृक्षे च। पुरीषनिःसारणकारके त्रि॰।

रेचन न॰ रिच्-ल्युट्। मलभेदनेन तनूनि सारणे।

रेचनक पु॰ रिच्यतेऽनेन ल्युट् संज्ञायां कन्। कम्पिल्लवृक्षे।
कनभावे वा ङीप्। रेचनी रेचनाप्यत्र स्त्री॰।

रेची स्त्री॰ रेचयति अच् गौ॰ ङीष्। कम्पिल्लवृक्षे, अङ्कोठे च।

रेज दीप्तौ भ्वा॰ आत्म॰ अक॰ सेट्। रेजते अरेजिष्ट। चङि
न ह्रस्वः। [अरेटिष्ट। चङि न ह्रस्वः

रेट याचने वाचि च द्वि॰ भ्वा॰ उभ॰ सेट्। रेटति ते अरेटीत्

रेणु पुंस्त्री॰ री-णु। परागे, धूलौ, पांशौ च। पर्पटे पु॰।

रेणुका स्त्री॰ रेणुना कायति कै-क। भरिचाकृतौ सुगन्धि-
द्रव्ये, जमदग्निपत्न्यां परशुराममातरि च।

रेणुकासुत पु॰ ६त॰। परशुरामे रेणुकात्मजादयोऽप्यत्र।

रेणुरूषित पु॰ रेणुभिः रूषितः। गर्दभे। धूलिधूसरे त्रि॰

रेणुसार पु॰ रेणुरिव सारोऽस्य। कर्पूरे। स्वार्थे कन्। तत्रैव

रेतस् न॰ री-असुन् तुट् च। पुंसो रक्तादिपरिपाकजन्ये देह-
स्थे सन्तानहेतुके चरमधातौ शुक्रे, शिववीर्य्ये पारदे च।

रेप शब्दे अक॰ गतौ सक॰ भ्वा॰ आत्म॰ सेट्। रेपते अरेपिष्ट
चङि न ह्रस्वः।

रेप त्रि॰ रेप-अच्। निन्दिते, क्रूरे, कृपणे च।

रेफ पु॰ र+इफ। रकारात्मके वर्णे। रिफ-अच्। कुत्सिते
त्रि॰ असुन् रेफस्। क्रूरे, अधमे, दुष्टे कृपणे च त्रि॰।

रेव(ब) गतौ सक॰ प्लुतौ अक॰ भ्वा॰ आ॰ सेट्। रेव(ब)ते अरे-
वि(बि)ष्ट। चङि न ह्रस्वः।

रेभ शब्दे भ्वा॰ आत्म॰ अक॰ सेट्। रेभते अरेभिष्ट। चङि न ह्रस्व

रेवत पु॰ रेव-अतच्। जम्बीरे आरग्वधे बलरामश्वशुरे राजभेदे

रेवती स्त्री॰ रेवतस्यापत्यम् अण् ङी॰। रेवतराजकन्यायां बलदेव-
पत्न्याम्। रेव-अतच् गौ॰ ङीष्। अश्विन्यवधिक सप्तविं-
शतिसंख्याते नक्षत्रे, तत्संख्यायां, मातृकाभेदे स्त्रीगव्याम्,
नदीभेदे, दुर्गायाञ्च। [६त॰। रेवतीशादयोऽप्यत्र

रेवतीरमण पु॰ रेवतीं रमयति रम णिच्-ल्यु। बलरामे।

रेवन्त पु॰ रेव-झच्। गुह्यकाधिपतौ सूर्य्यसुतभेदे।

रेवा स्त्री॰ रेव-अच्। नर्मदाख्यनद्याम्।

रेष हिंसायां (घोटकशब्दे) भ्वा॰ आत्म॰ अक॰ सेट्। रेषते अरे-
षिष्ट। चङि न ह्रस्वः।

रै शब्दे भ्वा॰ पर॰ अक॰ अनिट्। रायति अरासीत्।

रै पु॰ रा रै। धने, स्वर्णे च।

रैत्य त्रि॰ रीतेः पित्तलस्य विकारः रीति+ष्यञ्। पित्तल-
मये पात्रादौ।

रैवत पु॰ रेवत्या नद्या अदूरो देशः अञ्। द्वारिकासमीपस्थे
पर्व्वतभेदे स्वर्णालुवृक्षे, शिवे, दैत्यभेदे च। रेवत्या अप-
त्यम्। चतुर्द्दशसु मनुषु मनुभेदे।

रैवतक पु॰ रैवतएव कन्। रैवतपर्व्वते।

रोक न॰ रुच् कन् तस्य नेत्त्वम्। छिद्रे 'तन्मे रोकं च शोकश्च त'
इति नौकायाम् च। रुच-घञ् नि॰ कुत्वम्। क्रयभेदे,
दीप्तौ च पु॰। [(कुट)

रोग पु॰ रुज-घञ्। धातुवैषम्यजाते व्याधौ, कुष्ठौषधे च

रोगघ्न न॰ रोगं हन्ति हन-क। औषधे, वैद्यकशास्त्रे च
रोगनाशके त्रि॰।

रोगराज पु॰ ६त॰ टच् समा॰। राजयक्ष्मव्याधौ।

रोगलक्षण न॰ रोगो लक्ष्यते ज्ञायतेऽनेन लक्ष-ल्युट्। रोगा-
नुमापके धातुवैषम्यहेतुके चिह्नभेदे।

रोगशिला स्त्री॰ रोगाय तन्निवृत्तये शिला। मनःशिलायाम्

रोगहृ न॰ रोग हन्ति हन-ड। औषधे, हन क्विप् रोग-
हन्। रोगहन्तरि-वैद्यादौ त्रि॰।

रोगहर त्रि॰ रोगं हरति हृ-अच्। व्याधिनाशके द्रव्यादौ

रोगहारिन् पु॰ रोगं हरति हृ-णिनि। चिकित्सके वैद्ये

रोगितरु पु॰ रोगिप्रियस्तरुः शाक॰। अशोकवृक्षे।

रोगिन् त्रि॰ रोग+अस्त्यर्थे इनि। व्याधियुक्ते स्त्रियां ङीप्।

रोचन पु॰ रुच-ल्यु रोचयति वा ल्यु। कूटशाल्मलिवृक्षे
श्वेतशोभाञ्जने, पलाण्डौ, करञ्जे, अङ्कोटे, आरग्वधे
दाडिमे च। उत्तमया नार्य्या, रक्तकह्लारे गोपित्ते, गोरो-
चनायाञ्च स्त्री॰ टाप्। रुचिकारके त्रि॰।

रोचनक पु॰ रोचनाय रुचिजननाय कायति कै-क। जम्बीरे

रोचनफल पु॰ रोचनं रुचिकरं फलमस्य। बीजपूरके जम्बी-
रभेदे, चिर्भ्यां स्त्री॰।

रोचना स्त्री॰ रोचयतीति कर्त्तरि संज्ञायां ल्युट् अजा॰ टाप्
मनःशिलायाम्, गोरोचनायां, श्यामस्त्रियाम्, श्वेतशिंशपे,
गन्धद्रव्यभेदे (गुडारोचना) च। [त्रि॰

रोचमान पु॰ रुच-शानच्। अश्वग्रीवास्थरोमावर्त्ते। रुचियुक्ते

रोचिष्णु त्रि॰ रुच-इष्णुच्। दीप्तिशीले।

रोचिस् न॰ रुच-इसुन्। प्रभायाम्।

रोची स्त्री॰ रोचयति रुच्-णिच्-अच् गौ॰ ङीष्। हिल-
मोचिकायाम्। [(रुटी)

रोटिका स्त्री॰ रुट ण्वुल्। गोधूमादिचूर्णनिर्म्मित पिष्टकभेदे

रोड अनादरे भ्वा०पर०सक०सेट्। रोडति अरोडीत् चड्निन ह्रस्व। [सञ्ज्ञायां कन्। यवासायाम्।

रोदन न०रुद-ल्युट्। क्रन्दने,करणे ल्युट् ङीप्। दुरालभायां

रोदस् न० रुद-असुन्। स्वर्गे भूमौ च गौरा०ङीष् रोदसी-त्यप्यत्र द्यावाभूम्यो स्त्री०द्वि०व०।

रोध पु० रुध-घञ्। रोधने, आवरणे च। [प्रतिबन्धे न०

रोधन त्रि० रुणद्धि रुध ल्यु। रोधकर्त्तरि, भावे ल्युट्।

रोधस् न० रुध-असुन्। नद्यादिकूले।

रोध्र न० रुध रन्। पापे, अपराधे लोध्रवृक्षे च।

रोध्रपुष्प पु० रोध्रस्य लोध्रस्येव पुष्पमस्य। मधूकवृक्षे (मौल)

रोध्रपुष्पिणी स्त्री० रोध्रइव पुष्पाति पुष्पविकासे णिनि। धातकीवृक्षे (धाइफुल)

रोप पु०रुह णिच्-हस्य प कर्म्मणि अच्। बाणे। भावे अच्। रोपणे, धान्यादेर्जननाय अङ्कुरादेरारोपणे च। छिद्रे न०।

रोपण न० रुह-णिच्-हस्य प ल्युट्। जनने, अञ्जनभेदे, रुप-ल्युट्। विमोहने, अन्यथाभूतस्य वस्तुनोऽन्यथा ज्ञापने। [रारोपणे

रोपित त्रि० रुह-णिच् हस्य प क्त। वृक्षादेर्जननाय ह्रताङ्कु-

रोमक न० रोमेव निविडं कायति कै-क। (रूम) नगरे, पांशुलवणे च।

रोमकन्द पु० रोम्णा युक्त कन्दो मूलमस्य। पिण्डालौ।

रोमकपत्तन न०कर्म्म०। (रूम) नगरभेदे।

रोमकूप पु० रोम्णां कूपइव। रोमाधारे विवरे 'न रोम कूपौघमिषादिति नैषधम्।

रोमकेशर न० रोमभि केशर सिंहस्कटेव। चामरे।

रोमगुच्छ न० रोमभिर्गुच्छ स्तवकमिव। रोमसमुदायात्मके चामरे। कन्। अत्रैवार्थे। [(रोंया)

रोमन् न०रु मनिन्। देहजाते अङ्कुराकारे केशतुल्ये पदार्थे

रोमन्थ पु० रोम मथ्नाति मन्थ-अण् पृ० नलोप। भुक्तस्य घासादे पशुभिरुद्गीर्य्य चर्वणे 'रोमन्थमभ्यस्यतीति'।

रोमभूमि स्त्री०६त०। चर्म्मणि।

रोमलता स्त्री० रोमाणि लतेव। रोमराजौ।

रोमविकार पु० ६त०। रोमोद्गमे।

रोमश त्रि० रोमाणि सन्त्यस्य श। प्रचुररोमयुक्ते। मेषे, पिण्डालौ,शूकरे, कुम्भीराश्च पु०(प'ना)

रोमहर्ष पु० रोम्णां हर्षइव तद्व्यञ्जकत्वात्। रोमाञ्चे, हर्षौ त्तुकुल्यादिभि रोमकूपे जायमाने कण्टकाकारे पदार्थे। ल्युट्। रोमहर्षणमप्यत्र न०।

रोमहर्षण पु० रोमाणि हर्षयति हृष-णिच्-ल्यु। विभीतक वृक्षे मुनिभेदे च।

रोमाञ्च पु० रोम्णामञ्च उद्गम अनुच-अच्। रोमहर्षे।

रोमाञ्चित त्रि०रोमाञ्च जातोऽस्य तार० इतच्। जातपुलके

रोमाली स्त्री०६त०। रोमावलौ तदुद्गमसाधने तारुण्याव-स्थायाञ्च। [लुच् रोमवति त्रि०

रोमालु पु० रोमयुक्त आलु शाक०। पिण्डालौ। रोम+आ-

रोमालुविटपिन् स्त्री०रोमालु रोमयुक्त विटपी। कुम्भीवृक्षे

रोमावलि(ली) स्त्री०६त०। रोमश्रेणी नाभेरूर्द्ध्वस्थरोमपङ्क्तौ, तदुपलक्षिते तारुण्यावस्थायाञ्च। [द्भिदादयोऽप्यत्र

रोमोद्गम पु०रोम्णामुद्गम० उद्-गम-घञ्। रोमहर्षे। रोमो-

रोरुदा स्त्री० रुद यङ्-अ टाप्। अतिशयरोदने।

रोल पु० रु लच्। पानीयामलके।

रोलम्ब पु०रौति रु विच् रौ सन् लम्बते गच्छति लम्ब-अच् कर्म्म०, रोड अम्बच् डस्य लो वा। भ्रमरे।

रोष पु० रुष-घञ्। क्रोधे। [युक्ते त्रि०

रोषण पु०रुष-युच्। पारदे,निकषप्रस्तरे,ऊषरभूमौ च क्रोध०

रोह पु० रुह अच्। अङ्कुरे। रोहणकर्त्तरि त्रि०।

रोहण पु० रुह्यतेऽसौ रुह-ल्युट्। पर्व्वतभेदे।

रोहन्त पु० रुह-झच्। वृक्षभेदे, वृक्षमात्रे च। लताभेदे, लतायाञ्च स्त्री० गौ० ङीष्।

रोहि पु० रुह-इन्। बीजे, वृक्षे च। धार्म्मिके त्रि०।

रोहिण न० रुह इनन्। पञ्चदशधा विभक्तदिनस्य नवमे भागे 'कुर्य्यादारोहिणं बुध' इति स्मृति रोहिणी देवताऽस्य अण्। रौहिणमप्यत्र। वटवृक्षे, रोहितकवृक्षे च पु०

रोहिणी स्त्री० रुह इनन् गौ ङीष्। स्त्रीगव्याम्, अश्विन्यव-धिके चतुर्थे नक्षत्रे,वसुदेवपत्न्यां बलभद्रमातरि, विद्युति, कटुकम्भ्रा लतायां, सोमवल्के च। रोहित+स्त्रियां ङीष् तस्य नत्वे णत्वम्। रक्तवर्णायां स्त्रियाम्। सा च हरित क्याम्, काश्मर्य्याम्, मञ्जिष्ठायाञ्च।

रोहिणीपति पु० ६त०। चन्द्रे वसुदेवे च रोहिणीनाथादयोऽप्यत्र

रोहिणीव्रत न० रोहिणीयुक्ताष्टम्यां व्रतम्। रोहिण्युपल-क्षितायां भाद्रकृष्णाष्टम्यां कर्त्तव्ये उपवासरूपे व्रते।

रोहित् पु०रुह इति। सूर्य्ये,वर्णभेदे च। लताभेदे,मृग्याञ्च स्त्री

रोहित न० रुह-इतच्। रुधिरे, सरले, इन्द्रचापे, स्वनाम ख्याते मत्स्यभेदे,रोहितकवृक्षे च। रक्तवर्णे पु०तद्वति त्रि०। कन्। उक्तार्थे, मत्स्यभेदे स्वनामख्याते वृक्षे च।

रोहिताश्व पु० रोहितवर्णा अश्वा यस्य। वह्नौ।

**रोहितेय** पु० रोहितएव स्वार्थे ढ। रोहितकवृक्षे।

**रोहिन्** पु० रोहति पुनश्छिन्नोऽपि प्रादुर्भवति रुह, णिनि। रोहितकवृक्षे। रोहणवति त्रि०। स्त्रियां ङीप्।

**रोहिष** पु०रुह-इषन्। स्वनामख्याते वृक्षे।

**रौक्ष्य** न० रूक्षस्य भावः ष्यञ्। पारुष्ये अचिक्कणतायाञ्च।

**रौचनिक** त्रि० रोचनया रक्तः अण्। रोचनया रक्ते।

**रौट**(ऋ) अनादरे भ्वा० पर०सक० सेट्। रौटति अरौटीत्। चङि न ह्रस्वः।

**रौद्र** न०रुद्रो देवतास्य अण्। सूर्य्यतापे,उग्ररसे च। तद्वति, भीषणे च त्रि०। दुर्गायां रुद्रजटावृक्षे च स्त्री० ङीप्।

**रौप्य** न० रूप्यमेव अण्। रजते। [तत्रैवार्थे

**रौम** न०रुमायां नद्यां भवः अण्। शाम्भरिलवणे। स्वार्थे कन्

**रौरव** पु० रोरूयतेऽत्र रु-यङ्-क्विप् तेन प्राप्यं तस्येदं वा अण्। नरकभेदे लक्षणंवर्षदभिमाने। चञ्चले,धूर्त्ते, घोरे च पु०

**रौहिण** पु० रुह-इनन् स्वार्थे अण्। चन्दनवृक्षे।

**रौहिणेय** पु० रोहिण्यां भवः ढक्। बुधग्रहे, बलरामे च। मरकतमणौ न०। गोवत्से दि०।

**रौहिष** न० रुह-इषन् स्वार्थेऽण्। मृगभेदे रोहितमत्स्ये च दूर्वायां, रोहिषघ्नयाञ्च स्त्री० ङीप्।

## ल

**ल** पु० ला-क। इन्द्रे, तन्त्रोक्ते भूमिदेवताके मन्त्रभेदे न०

**लक** आस्वादे प्राप्तौ च चु०उ०स०सेट्। लाकयति ते अलीलकत् त

**लकच** पु० लक-अचन्। लिकुचवृक्षे (मादार)।

**लकुच** पु० लक-उचन्। (मादार) वृक्षभेदे।

**लक्तक** पु० लक-क्त नि० संज्ञायां कन्। अलक्तके (आलता)

**लक्तकर्म्मन्** पु० लक्तं करोति कृ-मनिन्। रक्तवर्णलोध्रे।

**लक्ष** दर्शने,अङ्कने च चु०उभ०स०सेट्। लक्षयति ते अललक्षत् त

**लक्ष** न० लक्ष अच्। पदे, चिह्ने, व्याजे,शरव्ये च। दशायुतसंख्यायां स्त्री० न०। [बोधके शब्दे।

**लक्षक** त्रि० लक्षयति लक्षणयार्थम् लक्ष-ण्वुल्। लक्षणयार्थ

**लक्षण** न० लक्ष्यतेऽनेन लक्ष-करणे ल्युट्। इतरभेदानुमापके चिह्ने,यथा पृथिव्या गन्धोलक्षणं स हि पृथिवीं परस्मात् भिन्नतया अनुमापयति। 'स्वरूपं तटस्थं' द्विधा लक्षणं स्यात् स्वरूपे प्रविष्टं स्वरूपादिभिन्नं'मित्युक्ते स्वरूपलक्षणे तटस्थलक्षणे च यथा आकाशो विलम् सच्चिदानन्दो ब्रह्मेति। आकाशत्वम्, जगज्जन्मादिकर्तृ ब्रह्मेति। स्वरूपे,यथा घटस्वरूपं यस्य। नाम्नि,व्यवहारोपयोगिनि चिह्ने च। कर्त्तरि ल्यु। स्वरूपप्रतिपादके 'चोदनालक्षणार्थोधर्म्म'इति जैमिनिसूत्रम् चोदना विधिवाक्यमेव लक्षणं स्वरूपज्ञापिका यस्य तादृशोऽर्थः धर्मः इति तदर्थः। शब्दसाधुताप्रतिपादके व्याकरणादिसूत्रे च न० 'लक्षणं त्वनभिज्ञानामि'ति। कर्म्मणि ल्युट्। प्रतिपाद्ये यथा 'इत्थं द्वादशलक्षणेति माधवीयन्यायमाला द्वादशानां लक्षणानां प्रतिपाद्यविषयाणां समाहारः इति तदर्थः। लक्ष-युच्। शब्दनिष्ठवाच्यार्थसंबद्धार्थबोधकतारूपे 'मुख्यार्थबाधे तद्योगे ययान्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वापि लक्षणा शक्तिरर्पितेत्युक्ते, वृत्तिभेदे स्त्री०। यथा गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गाशब्दस्य जलप्रवाहरूपे स्वार्थेऽन्वयासम्भवात् तत्सम्बद्धतीरादिबोधकता। सा च बहुधा विस्तरो दृश्यभिधाने। लक्ष्मणे,सारसपक्षिणि च पु० तत्स्त्रियां स्त्री०

**लक्षित** त्रि० लक्ष-कर्म्मणि क्त। लक्षणया बोधितेऽर्थे, ज्ञाते, अनुमिते च कर्त्तरि क्त। लक्षणाश्रये, लक्षकशब्दे च।

**लक्ष्मन्** न० लक्ष-मनिन्। चिह्ने,प्रधाने च। स्वार्थे अण् ए०। सारसपक्षिणि दशरथपत्न्याः सुमित्रायाः ज्येष्ठात्मजे च पु०। श्वेतकण्टकार्य्यां, सारसपक्षिस्त्रियाम्, औषधभेदे च स्त्री०

**लक्ष्मी** स्त्री० लक्ष-ई-मुट् च। शोभायां,कान्तौ,विष्णोःपत्न्याम्, सम्पत्तौ, ऋद्ध्यौषधे, वृद्धिनामौषधे, फलिनीवृक्षे, स्थलपद्मिन्याम्, हरिद्रायां, शम्यां, मुक्तायां, द्रव्ये च।

**लक्ष्मीकान्त** पु ६त०। विष्णौ, राजनि च लक्ष्मीपत्यादयोऽप्यत्र। 'विहाय लक्ष्मीपतिलक्ष्म'ति भारविः।

**लक्ष्मीपुत्र** पु०६त०। कामदेवे, गन्धर्वभेदे, अश्वे, कुशे, च।

**लक्ष्मीवत्** पु० लक्ष्मीः शोभास्त्यस्य मतुप् मस्य वः। पनसे श्रीयुक्ते त्रि० स्त्रियां ङीप्। [चन्द्रे, उच्चैःश्रवसि च

**लक्ष्मीसहज** पु० लक्ष्म्या सह क्षीराब्धौ जायते जन-ड।

**लक्ष्य** न० लक्ष यत्। वेधार्थमुद्दिश्यमाने शरव्ये। लक्षणया बोध्येऽर्थे, उद्देश्ये, ज्ञेये, अनुमेये च त्रि०।

**लख** गतौ भ्वा०पर०सक०सेट्। लखति। अलखीत्-अलाखीत् इदित्त्वयम् लङ्खति अलङ्खीत्।

**लग** सङ्गीभावे सक० गतौ भ्वा०सक०प०सेट्। लङ्गति अलङ्गीत्

**लग** सङ्गे भ्वा० पर०सक०सेट् एदित्। लगति अलगीत् घटा० लगयति। 'लग्नेव तस्या लगति स्मे'ति नैषधम्।

**लग** स्वादे प्राप्तौ च सक०चु०उभ०सेट्। लागयति ते अलीलगत् त

**लगित** त्रि० लग क्त। संसक्ते।

**लगुड**(ल)(र) पु० लग-उलच् डस्य रो वा। दण्डाकारे काष्ठनिर्म्मिते पदार्थे (लाठी)।

लग्न न॰ लस्ज-क्त तस्य न । मेघादिराशीनामुदये लज्जिते त्रि॰ । लग-क्त प्र॰ । संसक्ते त्रि॰ । स्तुतिपाठके पु॰ । लग्नस्य द्रव्यार्थं कन् । प्रतिभुवि । (जामिन) 'खादको वित्तहीनः स्यात् लग्नकोवित्तवान् यदी'ति स्मृतिः' ।

लग्निका स्त्री॰ नग्नेव कन् पृ॰ । अदृष्टरजस्कायां स्त्रियाम् ।

लघ अभोजने सीमातिक्रमगतौ च भ्वा॰आ॰स॰सेट् इदित् । लङ्घते अलङ्घिष्ट । 'कल्लोलिनीवल्लभमुल्ललङ्घे', इति नाटकम्

लघ शोषणे भ्वा॰पर॰सक॰सेट् इदित् । लङ्घति अलङ्घीत् ।

लघ प्रकाशे चु॰उ॰अ॰सेट् इदित् । लङ्घयति-ते अललङ्घत् त

लघ आस्वादने चु॰उभ॰सक॰सेट् । लाघयति-ते अलीलघत्-त

लघिमन् पु॰ लघोर्भावः इमनिच् डित्व । लघुत्वे लाघवे, येनोर्द्ध्वगतिसम्भव । ईश्वरस्य ऐश्वर्य्यभेदे च ।

लघिष्ठ त्रि॰ अतिशयेन लघु इष्ठन् डिद्भाव । अतिशय-लघुत्वयुक्ते । ईयसुन् । लघीयानप्यत्र स्त्रियां ङीप् ।

लघु त्रि॰ लघि-कु नि॰ नलोप । शीघ्रे कृष्णागुरुणि, वीरणमूले च । पृक्कानामौषधौ स्त्री॰ । नि सारे, लाघवगुणान्विते, ह्रस्वे, मनोहरे च त्रि॰। व्याकरणोक्ते ह्रस्वसंज्ञके अकारादौ वर्णे, ज्योतिषोक्तेषु 'पुष्याश्विहस्ता लघु'रित्युक्ते पुष्यादिनक्षत्रेषु च पु॰ । लघुतावत्यां स्त्रियां स्त्री॰ वा ङीप् ।

लघुकाश्मर्य्य पु॰ कर्म॰ । कट्फले वृक्षे ।

लघुचिर्भटा स्त्री॰ कर्म॰ । खर्गेवारौ कर्कटीभेदे ।

लघुदन्ती स्त्री॰ कर्म॰ । क्षुद्रदन्तीवृक्षे ।

लघुद्राक्षा स्त्री॰ कर्म॰ । काकलीद्राक्षायाम् । [चन्दने ।

लघुनामन् पु॰ लघुवर्णयुक्तं नाम वाचकशब्दो यस्य । अगुरु

लघुपत्रक पु॰ लघूनि क्षुद्राणि पत्राण्यस्य कप् । (गुडारोचना) लताभेदे ।

लघुपुष्प पु॰ लघु पुष्पं यस्य । भूमिकदम्बे ।

लघुबदर पु॰ कर्म॰ । क्षुद्रकोलौ । भूबदर्य्याम् स्त्री॰ ङीप् ।

लघुब्राह्मी स्त्री॰ कर्म॰ । क्षुद्रब्राह्म्याम् । [क्षुद्राग्निमन्थे ।

लघुमन्थ पु॰ । अग्निमन्थ मन्थ पूर्व्वपदलोप कर्म॰ ।

लघुलय न॰ लघु शीघ्रं लीयते ली-अच् । वीरणमूले ।

लघुसदाफला स्त्री॰ सदा फलं यस्याः कर्म॰ । क्षुद्रोडुम्बरिकायाम् (छोट डुमर) ।

लघुहेमदुग्धा स्त्री॰ कर्म॰ । क्षुद्रोडुम्बरे (छोट डुमर) ।

लघूदुम्बरिका स्त्री॰ कर्म॰ । (छोट डुमर) उडुम्बरभेदे ।

लङ्का स्त्री॰ लक-अच् मुम् च । स्वनामख्यातायां पुर्य्याम् ।

लङ्काधिप पु॰ ६त॰ । रावणे लङ्कानाथादयोऽप्यत्र ।

लङ्कायि(पि)का स्त्री॰ लङ्कामयते आप्नोति वा ण्वुल् । पृक्कायां (पिडिङ) शाकभेदे । [वृक्षभेदे । लङ्कावासिनि त्रि॰

लङ्कास्थायिन् पु॰ लङ्कायां तिष्ठति स्था णिनि । (लङ्कासिज)

लङ्कोपिका स्त्री॰ लङ्कायामुप्यते वप-ण्वुल् पृ॰ । पृक्कायाम् । (पिडिङशाक) । [प्लवने च ।

लङ्घन न॰ लघि-ल्युट् । अभोजने, अतिक्रम्य गमने, क्रमणे,

लछ चिह्नकरणे भ्वा॰पर॰सक॰सेट् । लच्छति अलच्छीत् ।

लज व्रीडायाम् भ्वा॰आ॰सक॰सेट् । लजते अलजिष्ट ।

लज तिरस्कारे भ्वा॰पर॰सक॰सेट् इदित् । लञ्जति अलञ्जीत् ।

लज अपवारणे चुरा॰ उ॰सक॰सेट् । लाजयति ते अलीलजत् त

लज भाषणे हिंसायां दाने च सक॰सामर्थ्ये वासे च अक॰चुरा॰ सेट् इदित् । लञ्जयति-ते अललञ्जत् त ।

लज भासने अद॰चु॰उभ॰सक॰सेट् । लजयति-ते अललजत् त

लजकारिका स्त्री॰ लजं लज्जां करोति कृ ण्वुल् अत इत्त्वम् । लज्जालुलतायाम् ।

लज्जा स्त्री॰ लस्ज-अ । अकार्यप्रवृत्तौ परदर्शने दुष्टत्वधिया ततो निवृत्तिसाधने चित्तवृत्तिभेदे ।

लज्जालु स्त्री॰ लस्ज-आलुच् । लताभेदे । लज्जावति त्रि॰ ।

लज्जाशील त्रि॰ लज्जा शीलयति शील-अण् । लज्जाविशिष्टे ।

लज्जित पु॰ लज्जा जाताऽस्य तार॰ इतच् । जातलज्जे व्रीडिते

लज्जिरी स्त्री॰ लज्जा अस्त्यर्थे इरच् गौ॰ ङीष् । लज्जालुलताभेदे ।

लञ्ज भासने अद॰चु॰उभ॰अक॰सेट् । लञ्जयति ते अललञ्जत्त

लट बाल्यभावे अक॰ उक्तौ द्वि॰ भ्वा॰ पर॰ सेट् । लटति । अलाटीत् अलटीत् ।

लटपर्ण न॰ लटं दुष्टं पर्णमस्य । त्वचे (दारचिनि) ।

लट्वा स्त्री॰ लट-व । (भाडाकरभचा) करञ्जभेदे, वाद्यभेदे, ग्रामचटके, कुसुम्भे, भ्रमरके च ।

लड विलासे भ्वा॰पर॰अक॰सेट् । लडति । अलाडीत्-अलडीत्

लड उत्क्षेपे जिह्वाचालने च भ्वा॰पर॰सक॰ सेट् । लडति अलाडीत्-अलडीत् घटा॰ । लडयति ।

लड उपसेवे चु॰उभ॰सक॰सेट् । लाडयति ते अलीलडत् त ।

लड व्याप्तौ चु॰उभ॰सक॰सेट् । लाडयति-ते अलीलडत् ।

लड भाषणे द्वि॰ना चु॰ पक्षे भ्वा॰ पर॰ सेट् इदित् । लण्डयति ते लण्डति । अललण्डत् त अलण्डीत् ।

लड उत्क्षेपणे वा चुरा॰ उभ॰ पक्षे भ्वा॰ पर॰ सक॰ सेट् इदित् । लण्डयति-ते लण्डति । अललण्डत् त अलण्डीत् ।

लड क्षेपणे अद॰ चु॰उभ॰सक॰सेट् । लडयतिते अललडत् त ।

लड्डुक पु॰ लड-डु तस्य नेत्त्वम् स्वार्थे कन् । गोधूमादिचूर्ण

निर्मिते (लाड्) मिष्टान्नभेदे 'पृथुलड्डुकलनीति' नैषधम्
क्लीबमपि।

लगुड् पु॰ लडि-उन्। (लगुड) इति ख्याते दैवभेदे।

लत व्याघाते सौ॰ पर॰सक॰सेट्। लतति अलतीत् अलातीत्

लता स्त्री॰ लत-अच्। शाखारहिते गुडूच्यादौ।

लताकरञ्ज पु॰ लतारूप॰ करञ्जः। करञ्जभेदे।

लताकस्तूरिका स्त्री॰ लताया कस्तूर्या इव सुगन्धो यस्याः।
कस्तूरीगन्धयुक्तपत्रवत्याम् लतायाम्।

लतातरु पु॰ लतेव दीर्घस्तरुः। तालवृक्षे, शालवृक्षे, नागरङ्गवृक्षे च। लताद्रुमादयोऽप्यत्र। [लताभेदे।

लतापनस पु॰ लतायां पनसमिव स्थूलं फलमस्य। (तरमुज)

लतार्का स्त्री॰ लतेव विस्तीर्णा अर्का। (पिडिङ्ग) शाकभेदे।

लताफल न॰ लतायां फलमस्य। पटोले।

लतामरुत् स्त्री॰ लतायां मरुत् वायुर्यस्याः। पृक्कायां तस्य-
गन्धेन हि वायुवृद्धिरिति वैद्यकम्।

लतायष्टि स्त्री॰ लतापि यष्टिरिव। मञ्जिष्ठायाम्।

लतायावक न॰ लतायां यावकमिव। प्रवाले।

लतार्क पु॰ लतयाऽर्क इव। हरितपलाण्डौ।

लप कथने भ्वा॰पर द्वि॰ सेट्। लपति। अलापीत्-अलपीत्।
घञि न वृद्धिः। [ल्युट्। कथने।

लपन न॰ लप्यते उच्यतेऽनेन लप-करणे ल्युट्। मुखे। भावे

लपित त्रि॰ लप-कर्मणि-क्त। कथिते। भावे क्त। कथने न॰।

लब आलम्बने सक॰शब्दे अक॰भ्वा॰आत्म॰ सेट् इदित्। लम्बते
अलम्बिष्ट।

लब्ध त्रि॰ लभ-कर्मणि क्त। प्राप्ते।

लब्धवर्ण पु॰लब्धो वर्णो वर्णनं प्रशंसा ज्ञानवत्त्वेन येन। पण्डिते

लभ शब्दे अक॰भ्वा॰ आत्म॰ सेट् इदित्। लम्भते अलम्भिष्ट

लभ प्राप्तौ सक॰भ्वा॰आत्म॰अनिट्। लभते। अलब्ध। लब्धिमः

लमक पु॰ रम वुन् रस्य लः। विङ्गे जारे। [व्यापके त्रि॰

लम्पट पु॰ रम-अटन् नुक् च रस्य लः। परस्त्रीषु लोलुपे,

लम्ब पु॰ लबि-अच्। नर्त्तके, कान्ते, उत्कोचे, अङ्गयाङ्गौके
त्रिभुजादिक्षेत्रे भुजकर्णयोर्मध्यस्थे लम्बमाने स्थले च
'लम्बगुणं भूम्यर्द्धं स्पष्टं त्रिभुजे फलं भवती'ति लीलावती
दीर्घे, लम्बमाने च त्रि॰।

लम्बकर्ण पु॰ लम्बः कर्णो यस्य। छागे, हस्तिनि, राक्षसे,
श्येनपक्षिणि, अङ्कोठवृक्षे च। लम्बमानकर्णवति त्रि॰कर्म॰।
लम्बमाने श्रोत्रे पु॰।

लम्बकेश त्रि॰ लम्बः दीर्घः केशः यस्य। दीर्घकेशाढ्ये।
कुशमये विष्टरे। दीर्घकेशयुक्ते त्रि॰। कर्म॰। दीर्घे केशे।

लम्बदन्ता स्त्री॰ लम्बोदीर्घः दन्त इव बीजकण्टको यस्य
सिंहलद्वीपभवपिप्पल्याम्। दीर्घदन्तवति त्रि॰ कर्म॰ दीर्घे
दन्ते पु॰। [भावे ल्युट्। अवलम्बने न॰।

लम्बन न॰लम्ब्यते ल्यु। नाभिदेशपर्यन्तं लम्बमाने माल्यादौ

लम्बबीजा स्त्री॰ लम्बं दीर्घं बीजं यस्याः। सिंहलदेशजात-
पिप्पल्याम्। [लक्ष्म्या, गौर्याञ्च।

लम्बा स्त्री॰ लम्बते लबि-अच्। तिक्ततुम्ब्यां (तितलाउ)।

लम्बोदर पु॰ लम्बं दीर्घमुदरं यस्य। गणेशे, तारानाम्न्या
देव्यां स्त्री॰ ङीप्। तुन्दोदरवति त्रि॰।

लय गतौ भ्वा॰आत्म॰सक॰सेट्। लयते। अलयिष्ट।

लय पु॰ली-अच्। संश्लेषे विनाशे, नृत्यगीतवाद्यानामैकतान
तालरूपे साम्ये च। लीयतेऽत्र। सर्व्वभूतचरकरे प्रलयकाले, ईश्वरे च

लर्ब गतौ भ्वा॰पर॰सक॰ सेट्। लर्बति अलर्बीत्।

लल इच्छायां चु॰उभ॰सक॰सेट्। लालयति-ते अलीललत् त

लल इच्छायां अद॰चु॰उभ॰सक॰सेट्। ललयति ते अललत् त

ललज्जिह्व पु॰ ललन्ती आस्वादास्वादनाय चलन्ती जिह्वा
यस्य। कुक्कुरे, उष्ट्रे, हिंस्रपशौ च। चलद्रसनायुक्ते त्रि॰।

ललन न॰लड वुन् डस्य लः। चालने। केलौ,बाले, शालवृक्षे,
पियालवृक्षे च पु॰। लल-ल्यु। जिह्वायां, नार्याञ्च स्त्री॰।

ललनाप्रिय पु॰ कर्म॰। कदम्बे। ह्रीबेरे न॰। जिह्वाप्रिये,
रमणीवल्लभे च त्रि॰।

ललन्तिका स्त्री॰ लड भावे स्वार्थे कन् अत इत्वम् डस्य लः
नाभिदेशपर्यन्तंलम्बमाने माल्यादौ। [काम्यस्थेटद्रुमभेदे,(कपाल)

ललाट न॰ लड अच् डस्य लः लम्बमटति अट-अण्। अल-

ललाटन्तप पु॰ललाटं तापयति तप-णिच् खश् मुम् च। सूर्ये
ललाटतापके त्रि॰'लिपिर्ललाटन्तपनिष्ठुरे'ति नैषधम्।

ललाटपट्ट न॰ ललाट पट्टमिव विस्तीर्णम्। प्रशस्तललाटे
ललाटफलकादयोऽप्यत्र। [ललाटस्थे चिह्ने च।

ललाटिका स्त्री॰ ललाटे आवध्यते ठन्। ललाटभूषणे,

ललाम न॰ लल-अच् तममति अम अण्। प्रधाने, ध्वजे,
शृङ्गे,नालधौ,चिह्ने,भूषायां च घोटके पु॰। नान्तमपि।

ललामक न॰ ललाम तिलकमिव स्वार्थे कन्। ललाटपर्यन्तं
सम्यग्न्यस्ते माल्यभेदे।

ललित न॰ लल-क्त। शृङ्गारादिगुणे चेष्टाभेदे, स्वरभेदे पु॰।
सुन्दरे, ईप्सिते त्रि॰ लड-क्त डस्य लः। चालने न॰ कस्तूर्यां
नदीभेदे स्त्री॰। [व्रतभेदे च।

ललितासप्तमी स्त्री॰ भाद्रशुक्लसप्तम्याम्, तद्दिनकर्त्तव्ये

**लव** पु० लू-अप् । लेशे, विनाशे, छेदने, श्रीरामपुत्रे, कालपरिमाणभेदे, गोलाङ्गूललोम्नि, वाले च ।

**लवङ्ग** न० लू अङ्गच् । स्वनामख्याते वृक्षे । स्वार्थे कन् तत्रैव

**लवङ्गकलिका** स्त्री० लवङ्ग कलिकेव । लवङ्गे ।

**लवण** न० लू ल्युट् पृ०णत्वम् । रसभेदे, तत्प्रधाने सैन्धवसौवर्चलविडादिरूपे पदार्थे च । तदुत्पत्तिस्थाने सिन्धुदेशे, समुद्रे, मधुदैत्यसुते असुरभेदे च पु० । लवणरसयुक्ते, लावण्यवति च त्रि० । नदीभेदे, महाज्योतिष्मत्यां, दीप्तौ च स्त्री० ।

**लवणकिंशुका** स्त्री० लवणरसान्वित किंशुक तन्नामकं पलाशं यस्याः । महाज्योतिष्मत्याम् ।

**लवणक्षार** पु० लवणमय क्षार । लवणरसयुक्ते क्षारे ।

**लवणखनि** स्त्री० ६त० । शाम्भरिलवणोत्पत्तिस्थाने ।

**लवणधेनु** स्त्री० दानार्थं कल्पितायां लवणनिर्मितायां धेनौ ।

**लवणाचल** पु० दानार्थं कल्पिते अचलाकारे लवणस्तूपे ।

**लवणाब्धि** पु० लवणमयोऽब्धि । लवणप्रचुरसमुद्रे । लवणसमुद्रादयोऽप्यत्र । [(करकचलवण) ।

**लवणाब्धिज** न० लवणाब्धेर्जायते जन ड । सामुद्रलवणे

**लवणोत्तम** न० लवणेषु उत्तमम् । सैन्धवलवणे ।

**लवणोद** पु० लवणमयमुदकं यस्य उद देश । लवणसमुद्रे ।

**लवन** न० लू ल्युट् । छेदने, (लोना आता) वृक्षे स्त्री० ङीप् ।

**लवली** स्त्री० लव लेशं लाति ला क गौ०ङीष् । (नोयाड़) वृक्षे ।

**लवित्र** न० लूयतेऽनेन लू-इत्र । दात्रे । [अलीलष(ष)(स)त् त

**लष(ष)(स)** शिल्पयोगे चु०उ०अक०सेट् । लाष(ष)(स)यति ते

**लशु(शू)न** न० लश उनन् ऊनन् वा । रशुने ।

**लष** स्पृहायां दिवा०भ्वा०उभ०सक०सेट् । लष्यति ते लषति ते-अलषीत् । अलाषीत् अलषिष्ट । [सीत् अलसीत्

**लस** श्लेषे क्रीड़ायां दीप्तौ च अक०भ्वा०पर०सेट । लसति-अला

**लसा** स्त्री० लसति लस अच् । हरिद्रायाम् ।

**लसीका** स्त्री लस ईकक । इक्षुरसे ।

**लस्ज** व्रीडायां भ्वा०आ०अक०सेट् । लज्जते अलज्जिष्ट । निष्ठायामनिट् तस्य नत्व । लग्न ।

**लस्त** त्रि० लस क्त नि० इडभाव । श्लिष्टे, क्रीड़िते, शिल्पयुक्ते च । स्वार्थे कन् । धनुर्मध्यभागे पु० ।

**लहरि(री)** स्त्री० लेन-इन्द्रेणेव ह्रियते ऊर्द्ध्वगमनाय हृ-कर्म्मणि इन् वा ङीप् । महातरङ्गे ।

**ला** आदाने अदा०पर०सक०अनिट । लाति अलासीत् ।

**लाक्षणिक** त्रि० लक्षणया बोधयति ठक् । लक्षणया अर्थबोधके शब्दे । अस्त्यर्थे ठन् स्वार्थे अण् । लक्षणयुक्ते ।

**लाक्षण्य** त्रि० लक्षणं वेत्ति ष्यञ् । शुभाशुभलक्षणज्ञे । अस्त्यर्थे ष्यञ् यत् वा । लक्षणयुक्ते 'ल(ला)क्षण्या स्त्रिय उद्वहे'दिति स्मृति । [पदार्थे ।

**लाक्षा** स्त्री० लक्ष्यतेऽनया लक्ष-अ पृ० वृद्धि । (ला) ख्याते

**लाक्षातरु** पु० लाक्षयो नतरु । (ला) द्रव्यसाधने वृक्षे लाक्षवृक्षादयोऽप्यत्र ।

**लाक्षातैल** न० लाक्षया पक्वं तैलम् । वैद्यकप्रसिद्धे तैलभेदे ।

**लाक्षाप्रसाद** पु० लाक्षाया प्रसादो यस्य । पट्टिकालोध्रे ।

**लाक्षाप्रसाधन** न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रूप एव प्रसाधनम् । अलक्तके ।

**लाक्षारस** पु० लाक्षानि सृतो रस इव । अलक्तकरसे ।

**लाख** शोषे, भूषणे, दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर०सेट । लाखति अलाखीत् चङि न ह्रस्व । [ह्रस्व

**लाघ** सामर्थ्ये भ्वा०आ०अक०सेट् । लाघते अलाघिष्ट चङि न

**लाघव** न० लघोर्भाव अण् । लघुत्वे, आरोग्ये च । [पदार्थे

**लाङ्गल** न० लगि कलच् पृ० वृद्धि । स्वनामख्याते भूमिकर्षके

**लाङ्गलदण्ड** पु० ६त० । लाङ्गलमध्यस्थे काष्ठमये दण्डे (ईश)

**लाङ्गलपद्धति** स्त्री० लाङ्गलखाता पद्धति रेखा । सीतायाम् लाङ्गलखातक्षेत्रस्थभूमिरेखायाम् ।

**लाङ्गलिकी** स्त्री० लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ०ङीष् । (विषलाङ्गला) वृक्षभेदे । तत्र भव अण् । विषभेदे पु० ।

**लाङ्गलिन्** पु० लाङ्गल प्रहरणत्वेनास्त्यस्य इनि । बलरामे लाङ्गलदण्ड इव दीर्घ आकारोऽस्त्यस्य इनि । नारिकेलवृक्षे । [(काचड़ा) शाकभेदे ।

**लाङ्गली** स्त्री० लाङ्गलाकार पुष्पमस्त्यस्याः अच् गौरा०ङीष् ।

**लाङ्गूल** न० लगि ऊलच् पृ० । पश्चूनां पायावर्त्तिनि रोमगुच्छे ।

**लाङ्गूलिका** स्त्री० लाङ्गूलाकारोऽस्त्यस्याः ठन् । पृश्निपर्ण्याम्

**लाङ्गूलिन्** पु० लाङ्गूलमस्त्यस्य इनि । वानरे तदाकारपुष्पवति ऋषभौषधे च ।

**लाछ** अङ्कने भ्वा०पर०सक सेट् इदित् । लञ्छति अलाञ्छीत् ।

**लाज** भर्त्सने भ्वा०पर०सक०सेट् । लाजति अलाजीत् । इदि दयमयम । लाञ्जति अलाञ्जीत् ।

**लाज** न० लाज-अच् घञ् वा । उशीरे । आर्द्रतण्डुले पु० । भृष्टधान्ये (खइ) पु०ब०व० स्त्रीत्वमप्यत्र । [भावे ल्युट् । अङ्कने ।

**लाञ्छन** न० लाञ्छ्यते लाछि कर्म्मणि ल्युट् । चिह्ने, नामनि च

**लाट** पु० लट सख्याया घञ् । देशभेदे, वस्त्रे, जीर्णालङ्कारे, विदग्धपुरुषे च । [शब्दालङ्कारभेदे ।

**लाटानुप्रास** पु० लाटस्य विदग्धस्य प्रिय कर्म० । अलङ्कारोक्ते

लाड क्षेपे अद०चु०उभ०सक०सेट् । लाडयति ते अललाडत् त

लाभ पु० लभ्यते लभ-कर्मणि घञ् । मलधनादितोऽधिके लभ्यमाने धने । भावे घञ् । प्राप्तौ । [रोयस कप् । वीरणमूले

लामज्जक न० लायते ला क्विप् ला अदीपभान मज्जा या

लालन न०चु०लल-ल्युट् । स्नेहपूर्वकपालने ।[घोटोडदे च

लालसा स्त्री० लस स्पृह् वा यङ् अ। अतिशयेच्छायाम् गर्भि

लाला स्त्री० चु० लल-अ टाप् । मुखजजललवे ।

लालाटिक पु० ललाट प्रभोर्भाग्य पश्यति ठञ् । प्रभुभाग्योपजीविनि-कार्याक्षमे । ललाटात् ललाटस्थभाग्यात् आगत, तस्येद वा ठञ् । भाग्याधीने त्रि० 'प्राप्तिस्तु लालाटिकी'त्युक्ते ललाटदर्शिनि त्रि० ।

लालाविष पु० लालाया विषमस्य । लूतादौ कीटे ।

लालाद्राव लाला द्रावयति द्रु णिच् अण् । लूताकीटे ।

लालित्य न० ललितस्य भाव ष्यञ् । सौन्दर्ये, मनोहरत्वे 'नैषधे पदलालित्य'मित्युक्ते । [घञ् । छेदने

लाव पु० लू कर्त्तरि घञ् । पक्षिभेदे । स्वार्थे कन् । तत्रैव भावे

लावण न० लवणे संस्कृतम् अण् । लवणसंस्कृत औषधादौ ।

लावणिक न० लवणे संस्कृतम् ठञ् । लवणे संस्कृतौषधादौ, लवण पण्यमस्य ठञ् । लवणविक्रयोपजीविनि वणिग्भेदे

लावण्य न० लवणस्य भाव ष्यञ् । लवणत्वे,'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते'इत्युक्ते देहसौन्दर्यभेदे च ।

लासिका स्त्री० लस ण्वुल् । नर्त्तक्याम् इ० । लासकाप्यत्र ।

लास्य न० लस-ण्यत् । नृत्ये, वाद्यनृत्यगीतत्रिके । 'स्त्रीनृत्य लास्यमुच्यते' इत्युक्ते स्त्रीनृत्ये च । स्वार्थे कन् तत्रैव ।

लिकुच पु० लकुच+इ० इत्त्वम् । (मान्दार) वृक्षे ।

लिक्षा(क्षा) स्त्री लक्ष अ इ०वा इत्त्वम् वा कप । यकाख्ये 'जालान्तरगत भानौ यच्चाणुदृश्यते रज । तैस्त्वष्टभिर्भवेल्लिक्षे'त्युक्ते परिमाणभेदे । [दिरप्ययम्

लिख लेखने तुदा०पर०सक०सेट् । लिखति अलेखीत् । कुटा-

लिख गतौ भ्वा०पर०सक० सेट इदित् । लिङ्खति अलिङ्खीत् ।

लिखन न० उ० लिख ल्युट् । लेखने, लिपौ च ।

लिखित न० लिख भावे क्त । लेखने । आधारे क्त । लिपौ, विवादे अर्थसाधके पत्रादौ च 'प्रमाण लिखित'मित्यादौ

लिग गतौ भ्वा०पर०सक०सेट् इदित् । लिङ्गति अलिङ्गीत् ।

लिग चित्रीकरणे चुरा०उभ०सक०सेट् इदित् । लिङ्गयति ते । अलिलिङ्गत त ।

लिङ्ग पु० लिगि-अच् । चिह्ने, पुंसोऽसाधारणचिह्ने, अनुमानसाधने हेतौ, साङ्ख्योक्ते प्रधाने, शिवमूर्त्तिभेदे, व्याप्ये, व्यक्ते शब्दनिष्ठे पदसाधुताप्रयोजके धर्मभेदे, अर्थप्रकाशनसामर्थ्ये च । 'समता च लिङ्गमिति' मीमांसका ।

लिङ्गक पु० लिङ्गेन कायति कै-क । कपित्थवृक्षे ।

लिङ्गवर्द्धिनी स्त्री० लिङ्ग पुरुषचिह्नभेद वर्द्धयति वृध णिच् णिनि । अपामार्गे ।

लिङ्गवृत्ति पु० लिङ्ग सन्न्यासादिवेशधारणमेव वृत्ति जीविका यस्य । जीविकार्थसन्न्यासचिह्नादिधारिणि कपटपरिव्राजके

लिङ्गिनी स्त्री० लिङ्गमिवाकारोऽस्त्यस्या इनि ङीप् । (पञ्चगुरिया) लताभेदे ।

लिङ्गिन् त्रि० लिङ्गमस्त्यस्य इनि । चिह्नवति, जीविकार्थसन्न्यासादिचिह्नवति, मत्तलिङ्गवति-गजे च पु० ।

लिप लेपने, तुदा०उभ०सका०सक०अनिट् । लिम्पति ते अलिपत् अलिपत अलिप्त । [लेखने च ।

लिपि(पी) स्त्री० लिप-इक् वा ङीप् । लिखिताक्षरके पत्रे,

लिपिक(का)र पु० लिपि करोति कृ अच् अण् वा । लेखके ।

लिप्त त्रि० लिप-क्त । भुक्ते, लतचन्दनादिलेपे, मिलिते, विषदिग्धे च । ज्योतिषोक्ते राशे षष्टिभागात्मके कलाख्ये भागे । 'लिप्तार्द्धहीन यदि पूर्णमेवदि'ति ताजकम् इत्था-लककाले पु० । स्वार्थे कन् । अत इत्त्वम् । तत्रैव ।

लिप्तक पु० कुत्सित लिप्तम् कन् । विषाक्तबाणे ।

लिप्सा स्त्री० लभ-सन्-अ । लाभेच्छायाम् ।

लिम्पाक पु० लिप-आकन् इ० । जम्बीरभेदे(पातिलेबु)खरे च

लिवि(वी) स्त्री० लिप इक् इ० पस्य व० वा ङीप् । लिपिशब्दार्थे लिविकरादयोऽपि लिपिकराद्यर्थे । [अलिचत

लिश श्लेषे अल्पीभावे च दि० आ० अक० अनिट् । लिश्यते

लिश गतौ तु०पर०सक०अनिट् । लिशति अलिक्षत ।

लिह आस्वादने अदा० उभ० स०अनिट् । लेढि लीढे । अलक्षत् त । [न । लीन

ली श्लेषे दिवा०आ०अक०अनिट् । लीयते अलेष्ट । निलीतस्य

ली श्लेषे क्र्या०प०पर०अक०अनिट् । लिनाति अलैषीत् ।

ली द्रावणे चु०उभ०सक०पक्षे भ्वा०प०अनिट् । लाययति ते लापय त ते लयति अलीलयत् त अलीलपत् त अलैषीत्

लीढ त्रि०लिह-आस्वादे क्त । आस्वादित, स्पृष्टे च ।

लीला स्त्री० ली-क्विप् लिय लाति अच् । केलौ,विलासे,शृङ्गारादिचेष्टायाम् क्रीडायाञ्च ।

लीलावती स्त्री० लीला+अस्त्यर्थे मतुप् मस्य व । विलासवत्यां स्त्रियां भास्कराचार्यस्य पुत्र्याम्,तत्कृते अङ्कग्रन्थभेदे,

न्यायशास्त्रप्रसिद्धे 'माया स्त्रजतीत्यादिके' पदार्थप्रतिपादके ग्रन्थभेदे, पुराणप्रसिद्धे वेश्याभेदे च। [देववने च।

**लीलोद्यान** न० लीलार्थमुद्यानम्। क्रीडनार्थे आरामे,

**लुक्कायित** त्रि०लुच्यतेलुनुच-अपनयने क्विप् लुक् कायो यस्य तादृशइवाचरति लुक्काय+क्विप्-क्त। अन्तर्हितदेहे गुप्तदेहे

**लुज** कथने यद्दधातोरर्थे च चुरा०उभ०सक० सेट् इदित्। लुञ्जयति ते अलुलुञ्जत् त।

**लुञ्चित** त्रि० लुनुच णिच् क्त। अपसारिते दूरीकृते।

**लुट** दीप्तौ अक० प्रतिघाते सक०भ्वा० आत्म०सेट्। लोटते लुङि उभ० अलुटत् अलोटिष्ट।

**लुट** स्तेये भ्वा०पर०सक०सेट् इदित्। लुण्टति अलुण्टीत्।

**लुट** दीप्तौ चु०उभ०सक०सेट्। लोटयति ते अलूलुटत् त।

**लुट** विलोडने हरणे च सक० पर०सेट्। लुटति अलुटत्। चङि वा ह्रस्व। [ठीत्

**लुठ** विलोडने विमोटने च भ्वा पर०सक०सेट्। लोठति अलो

**लुठ** गतौ चौर्ये च सक०खञ्जीभावे आलस्ये च अक० भ्वा०पर० सेट् इदित्। लुण्ठति अलुण्ठीत्। [अलोठिष्ट।

**लुठ** प्रतीघाते भ्वा०आ०लुङि उ०सक०सेट्। लोठते। अलुठत्-

**लुठ** उपघाते भ्वा०पर०सक०सेट्। लोठति अलोठीत्।

**लुट** लोटे तु०कु०प०अक०सेट्। लुटति अलुटीत्।

**लुठ** चौर्ये चु०उभ०सक०सेट्। लोठयति ते अलूलुठत् त।

**लुठन** न०,चु० लुठ-ल्युट्। अश्वादेर्भूम्यादौ श्रमापनयनार्थं पुनःपुनरङ्गचालने (लोटा)।

**लुठित** त्रि०लुठ क्त। भूरिकृताङ्गपरावर्त्तने।

**लुड** मन्थने भ्वा०पर०सक०सेट्। लोडति अलोडीत्। [डीत्।

**लुड** संवृतौ सक० क्षेपे अक०तु०कु०पर०सेट्। लुडति अलु-

**लुण्ट** अवज्ञायां चौर्ये च वा चु०उ०पक्षे भ्वा०प०सक०सेट्। लुण्टयति ते लुण्टति अलुलुण्टत् त अलुण्टीत्।

**लुण्टक** पु० लुण्ट ण्वुल्। (नटिया) शाकभेदे।

**लुण्टाक** त्रि० लुटि-काकन्। चौरे स्त्रियां गौ० ङीष्।

**लुण्ठक** त्रि० लुठि-ण्वुल्। चौरे।

**लुण्ड** चौर्ये चु०उ०सक०सेट्। लुण्डयति ते अलुलुण्डत् त

**लुथ** वधे सक०क्लेशे अक०भ्वा पर०सेट् इदित्। लुन्थति अलुन्थीत्

**लुन्च** अपनयने भ्वा०पर सक०सेट्। लुञ्चति अलुञ्चीत्।

**लुप** छेदने विनाशने च तु०स०उ०स०अनिट्। लुम्पति ते अलुपत् अलुप्त। चङि वा ह्रस्व। अलूलुपत् अलुलोपत्।

**लुप** आकुलीभावे दिवा०पर०अक० सेट्। लुप्यति अलुपत् अलोपीत् नित्यमङ् इत्येके।

**लुप्त** न० लुप-क्त। अपहृतधने नष्टे। छिन्ने त्रि०।

**लुब** अर्द्दने वा चु०उ०पक्षे भ्वा०पर०सक० सेट् इदित्। लुम्बयति ते लुम्बति। अलुलुम्बत् त अलुम्बीत्। [च त्रि०

**लुब्ध** पु० लुभ-क्त। व्याधे। स्वार्थे कन् तत्रैव। लम्पटे लोलुपे

**लुभ** विमोहने तु०पर०अक० सेट्। लुभति अलोभीत्।

**लुभ** आकाङ्क्षायां दि०प०स०सेट्। लुभ्यति। अलुभत्-अलोभीत्

**लुल** विमर्द्दने सौ०पर०सक०सेट्। लोलति। अलोलीत्।

**लुलाप** पु० लुल-घञर्थे क तमाप्नोति अण्। महिषे।

**लुलित** त्रि०लुल-क्त। आन्दोलिते, चालिते च 'अथ लुलितपतत्रिमालमि'ति भट्टिः।

**लुष** चौर्ये भ्वा०पर०सक सेट्। लोषति अलोषीत्।

**लुष** हिंसायां सौ० पर०सक०सेट्। लोषति अलोषीत्।

**लुह** आकाङ्क्षायां भ्वा पर०सक० अनिट्। लोहति अलुक्षत्।

**लू** छेदने क्र्या०उ०उभ०सक० सेट्। लुनाति लुनीते अलावीत्

**लूता** स्त्री०लू-तक्। कीटभेदे (माकड्सा)। स्वार्थे कन् अतइत्त्वम्। तत्रैव।

**लून** त्रि० लू-क्त निष्ठातस्य न'। छिन्ने।

**लूम** न० लू मक्। लाङ्गूले।

**लूष** वधे स्तेये च चु० उभ० सक० सेट्। लूषयति ते अलूलुषत्

**लेख** पु० लिख्यते चित्रादि पटेऽसौ लिख कर्मणि घञ्। देवे भावे घञ्। लेखने। कर्मणि घञ्। लेख्ये त्रि०। आधारे घञ्। पत्रे लिपौ च 'निर्णीतिरेऽर्थे लेखेने'ति माघ।

**लेखक** पु० लिख-ण्वुल्। लिपिकरे।

**लेखन** न० लिख ल्युट्। पत्रादौ वर्णादिविन्यासे, छर्दने च। आधारे ल्युट्। भूर्जपत्रे लिख्यतेऽनया ल्युट्। लेखनसाधने स्त्री०ङीप्। 'मस्याधार लेखनीह्ये'ति स्मृतिः।

**लेखनिक** पु० लेखनं शिल्पमस्य ठन्। लिपिकरे।

**लेखर्षभ** पु० लेख ऋषभ इव श्रेष्ठत्वात्। इन्द्रे।

**लेखहार** पु० लेखं हरति हृ-अण्। पत्रवाहके। ण्वुल्। लेखहारकोप्यत्र। [स्त्रियां घञ् टाप्। लिपौ।

**लेखा** स्त्री० लिख अ टाप्। रेखायां, पङ्क्तौ च। आधारे

**लेख्य** त्रि० लिख-ण्यत्। लेखनीये। व्यवहारे साक्ष्यादौ लेटके पत्रभेदे न०।

**लेख्यपत्र** पु० लिख्यतेऽत्र ण्यत् लेख्यं पत्रं यस्य। तालवृक्षे।

**लेप** गमनेभ्वा०आत्म०सक०सेट् चङि न ह्रस्व। लेपते अलेपिष्ट

**लेप** पु० लिप-लेप-वा घञ्। भोजने,लेपने च। कर्मणि घञ्। सुधायाम् (कलिचुन)। [पलगण्डे

**लेपक** पु० लिम्पति लिप-ण्वुल्। लेपनकरे जातिभेदे।

लेपन न॰ लिप-ल्युट् । (लेपा) इति ख्याते व्यापारे । कर्मणि ल्युट् । तरलनामगन्धद्रव्ये ।

लेलिहान पु॰ लिह-यङ् कानच् पु॰ यलोपः । सर्पे, पुन पुनः लेहनकरे ताराादिदेवतापूजाङ्गे अङ्गुल्यादिविन्यासविशेष रूपे मुद्राभेदे स्त्री॰ । तल्लक्षणं डुहदभिधाने ।

लेश पु॰ लिश-अल्पीभावे घञ् । अल्पे, लवे च ।

लेष्टु पु॰ लेष-तुन् । लोष्टे । [दनोऽपत्य ।

लेष्टुघ्न पु॰ लोष्टुं हन्ति हन क । लेष्टभेदके मुद्गरे । लेष्टुभे-

लेह पु॰ लिह-घञ् । आहारे, आस्वादे (चाटा) व्यापारभेदे च । भावे ल्युट् । लेहनमप्यत्र न॰ ।

लेहिन पु॰ लिह-इनन् । टङ्कणे (सोहागा) ।

लेह्य त्रि॰ लिह-ण्यत् । जिह्वया आस्वाद्ये । अमृते न॰ ।

लैङ्ग न॰ लिङ्गमधिकृत्य कृतो ग्रन्थः अण् । अष्टादशसु महापुराणेषु तृतीये पुराणे, लिङ्गं तदाकारः अस्त्यस्यां फलेषु यस्याः अण् ङीप् । लिङ्गिनीडचे । तस्येदमण् । लिङ्गसम्बद्धे त्रि॰ । [गतो वा ठण् । लिङ्गादिभिः कल्पिते ।

लैङ्गिक त्रि॰ लिङ्गेनानुमापकचिह्नादिना आपादितज्ञात आ-

लोक दीप्तौ चु॰उ॰सक॰सेट् । लोकयति ते अलूलुकत् त ।

लोक दर्शने भ्वा॰आ॰सक॰सेट् । लोकते अलोकिष्ट । चङि न ह्रस्वः । अलुलोकत ।

लोक पु॰ लोक्यते ऽसौ लोक-घञ् । भुवनेषु, जने च ।

लोकपाल पु॰ लोकान् पालयति पा-णिच् अण् । लोकपालके नृपे, इन्द्रादिदिक्पाले, विनायकादिषु पञ्चसु । लोकरक्षकमात्रे त्रि॰ । लोकनाथादयोऽप्यत्र ।

लोकबान्धव पु॰ लोकानां बान्धवः सर्वकर्मप्रवर्त्तकत्वात् । सूर्ये

लोकमातृ स्त्री॰ लोकानां मातेव रक्षिका । लक्ष्म्याम् ।

लोकलोचन पु॰ लोकैर्लोच्यतेऽनेन लुच-ल्युट् । सूर्ये । ६त॰ । सूर्ये न॰ । लोकनेत्रादयोऽप्यत्र न॰ ।

लोकवाह्य त्रि॰ वहिश्चरति वहिस्+ष्यञ् टिलोपश्च ५त॰ । लोकवहिर्भूते । [चार्वाकमते ।

लोकायत न॰ लोकेषु आयतम् विस्तीर्णम् अनायाससाध्यत्वात् ।

लोकायतिक पु॰ लोकायतं तन्त्रतम् अस्त्यस्य ठन् । चार्वाके ।

लोकालोक पु॰ लोक्यतेऽसौ लोकः न लोक्यतेऽसौ कर्म॰ । स्वनामख्याते सूर्यकिरणसम्पर्कसीमापर्वते । तस्य च पार्श्वयोरातपानातपसम्बन्धात्तथात्वम् ।

लोकेश पु॰ ६त॰ । ब्रह्मणि, नृपतौ, पारदे च । [न ह्रस्व

लोच दीप्तौ चु॰उ॰स॰सेट् । लोचयति ते अलुलोचत् त चङि

लोच दर्शने भ्वा॰आ॰स॰सेट् । चङि न ह्रस्वः । लोचते अलोचिष्ट

लोचक न॰ लोच ण्वुल् । मांसपिण्डे, अक्षितारके, कज्जले, स्त्रीणां ललाटाभरणे, नीलवस्त्रे, कर्णपूरे, कदल्यां, मूर्व्वायां सर्पकञ्चुके च ।

लोचन न॰ लोच्यतेऽनेन करणे ल्युट् । नेत्रे । भावे ल्युट् । दर्शनक्रियायाम् । युच् । दर्शने आलोचने च स्त्री॰ टाप् ।

लोचनहिता स्त्री॰ ६त॰ । तुत्थाञ्जने । (तुंते) । [स्याम्

लोचमस्तक पु॰ लोच्यते इति लोचं मस्तकं यस्य । मयूरशि-

लोट(ड) उन्मादे भ्वा॰पर॰सक॰सेट् चङि न ह्रस्वः । लोट-(डो)ति । अलोटी(डी)त् ।

लोणा स्त्री॰ लवणमस्येवते भक्षणसमये अण् पृ॰ । चुक्राम्लिकायाम्, लोणाम्लाऽप्यत्र स्त्री॰ । [पृ॰ । लवणजे क्षारभेदे ।

लोणार न॰ लवणम्ऋच्छति कारणत्वेन ऋ-अण् उप॰ ।

लोत न॰ लू-तन् । चौरधने,लोप्त्रे,(वमाल) चिह्ने च । नेत्राम्बुनि, लवणे च पु॰ ।

लोत न॰ लू-इन् । चक्षुर्जले, चौरितधने च ।

लोध पु॰ रुध-अच् रस्य लः । स्वनामख्याते वृक्षे ।

लोध्र पु॰ रुध-रन् रस्य लः । (लोध) ख्याते वृक्षे ।

लोप पु॰ लुप-घञ् । विनाशे, छेदने, आकुलीभावे, व्याकरणोक्ते अदर्शनरूपे नाशे च । लोपयति स्त्रीणां रूप गर्भम् अच् । अगस्त्यमुनिपत्न्यां स्त्री॰ ।

लोपामुद्रा स्त्री॰मुदं राति रा-क कर्म॰ अगस्त्यमुनिपत्न्याम्

लोप्त्र न॰ लुप-ष्ट्रन् । कोयधने स्त्रीत्वमपीच्छन्ति तत्पक्षे ङीप् ।

लोभ पु॰लुभ-आकाङ्क्षायाम् घञ् । परद्रव्येषु अतिशयिताभिलाषे

लोभिन् त्रि॰ लुभ-णिनि । परद्रव्येष्वतिलष्यावति ।

लोभ्य पु॰ लुभ-यत् । मुद्गे । लोभनीयपदार्थे त्रि॰ । [लाङ्गूले च

लोम न॰ लू-मन् । देहजाते केशाकारे रोमाख्ये द्रव्ये, तद्वति

लोमकर्ण पु॰ लोमबहुलं कर्णौ यस्य शाक॰ । शशके ।

लोमकूप पु॰ लोम्नां कूप इव । रोमाधारे बिम्बाकारे, गर्त्ते

लोमघ्न न॰ लोमानि हन्ति हन-टक् (टाक) रोगभेदे ।

लोमन् लू मनिन् । देहस्थे केशतुल्ये (रोंया) पदार्थे ।

लोमपाद पु॰ लोमयुक्तौ पादावस्य । अङ्गदेशस्य नृपभेदे ।

लोमश पु॰ लोमानि बाहुल्येन सन्त्यस्य श । मुनिभेदे । लोमयुक्ते त्रि॰ काकजङ्घायां, जटामांस्यां, वचायाम्, शुकशिम्ब्याम् महामेदायां, बलाया च स्त्री॰ ।

लोमशकाण्डा स्त्री॰ लोमश इव काण्डोऽस्याः । कर्कट्याम् ।

लोमशपर्णिका स्त्री॰ लोमशानीव पर्णानि सन्त्यस्याः ठन् । माषपर्ण्याम् ।

लोमशपुष्पक पु॰ लोमशमिव पुष्पमस्य । शिरीषवृक्षे ।

वंशक्षीरी स्त्री॰ वंशस्य क्षीरमिवास्त्यस्य अच् गौरा॰ ङीष्। वंशरोचनायाम्।

वंशज पु॰ वंशात् जायते जन-ड। वंशवृक्षजाते यवाकारे द्रव्ये। सत्कुलजाते त्रि॰। वंशरोचनायां स्त्री॰ टाप्।

वंशतण्डुल पु॰ ६त॰। वेणुजाते तण्डुलाकारे पदार्थे।

वंशधर त्रि॰ वंशं धरति। कुलाविच्छेदकारके वंशवर्द्धनोऽप्यत्र।

वंशनेत्र न॰ वंशस्येव नेत्रमस्य। इक्षुमूले।

वंशपत्त्र पु॰ वंशस्य पत्त्रमिव पत्त्रमस्य। नलनामके तृणे ६त॰ वंशदले न॰। नाडीहिङ्गौ स्त्री॰ गौ॰ ङीष्। स्वार्थे कन् तत्रैव

वंशपत्त्रक न॰। वंशपत्त्रमिव कन्। हरिताले।

वंशपत्त्रपतित न॰ सप्तदशाक्षरपादके छन्दोभेदे।

वंशपीत पु॰ वंशस्तत्पत्त्रमिव पीतः। कणगुग्गुलौ।

वंशपुष्पा स्त्री॰ वंशस्य पुष्पमिव पुष्पमस्याः। सहदेवीलतायाम्

वंशपूरक न॰ वंशस्येव पूरकं यस्य। इक्षुमूले।

वंशरो(लो)चना स्त्री॰ वंशेषु रोचते रुच-ल्यु वा रस्य लः। वंशपर्व्वस्थिते श्वेतवर्णे कर्पूराकारे द्रव्ये। (वंशलोचन)।

वंशशर्करा स्त्री॰ वंशस्य शर्करेव। (वंशलोचन) पदार्थे।

वंशस्तनित न॰। द्वादशाक्षरपादके छन्दोभेदे।

वंशस्थविल न॰। द्वादशाक्षरपादके छन्दोभेदे।

वंशाग्र न॰ वंशस्य अग्रं शूलम्। वंशाङ्कुरे।

वंशाङ्कुर पु॰ ६त॰। (कोंड़) इति ख्याते पदार्थे।

वंशिका न॰ वंशोऽस्त्यस्य ठन् वंश इव वा कन्। अगुरुचन्दने

वंशीधर पु॰ वंशीं वंशजवाद्यं धरति धृ-अच्। श्रीकृष्णे।

वंश्य त्रि॰ वंशे सत्कुले जातः यत्। सत्कुलजाते। [अवङ्किष्ट

वक्क कौटिल्ये अक॰ गतौ सक॰ भ्वा॰ आ॰ सेट् इदित्। वङ्कते

वक पु॰ वकि-अच् पृ॰ नलोपः। स्वनामख्याते विहगे, स्वनामख्याते पुष्पवृक्षे, कुबेरे, राक्षसभेदे, यो भीमेन हतः। औषधादिपाचनयन्त्रभेदे, श्रीकृष्णेन हते दैत्यभेदे च।

वकजित् पु॰ वकं जितवान् जि-क्विप् उप॰ स॰। श्रीकृष्णे भीमसेने च वकारि-वकाद्योऽप्यत्र।

वकधूप पु॰ वक इव शुभ्रो धूपः। वृक्षधूपे।

वकपञ्चक न॰। कार्त्तिकशुक्लपक्षस्यैकादश्यादितिथिपञ्चके।

वकपुष्प पु॰ वक इव शुभ्रं पुष्पमस्य। स्वनामख्याते पुष्पवृक्षे

वकवृत्ति पु॰ वकस्येव, स्वार्थपरा वृत्तिर्यस्य। 'अधोदृष्टि नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वकव्रतचरो द्विज' इत्युक्तलक्षणे परवञ्चके जने।

वकव्रतधर पु॰ वक इव व्रतं धारयति धृ-अच्। 'अधोदृष्टि नैष्कृतिकः स्वार्थसाधनतत्परः। शठो मिथ्याविनीतश्च वक-व्रतधरो द्विज' इत्युक्ते स्वार्थसाधनतत्परे वञ्चके विप्रादौ।

वकव्रतिन्(क) पु॰ वकव्रत+अस्त्यर्थे इनि ठन् वा। वकव्रतधरे।

वकुल पु॰ वकि-उलच् नलोपः। स्वनामख्याते पुष्पवृक्षे। कटुकायां स्त्री॰ टाप्। काकोल्यां ङीप् पृ॰। वकुलोऽपि वकुले पु॰

वक्क गतौ भ्वा॰ आत्म॰ सक॰ सेट्। वक्कते अवक्किष्ट।

वक्तव्य न॰ वच-तव्य। कुत्सिते, हीने, दुष्टे च 'दिवा वक्तव्यता पात्रे' इति स्मृतिः। कथनीये त्रि॰। भावे क्त। कथने न॰

वक्तृ त्रि॰ उचितं वक्तुं वक्ति वच-तृच्। उचितवक्तृवादिनि

वक्त्र न॰ वक्त्यनेन ष्ट्रन्। मुखे, तगरमूले, वसनभेदे, छन्दोभेदे च

वक्त्रभेदिन् पु॰ वक्त्रं भिनत्ति भिद-णिनि। तिक्तरसे। मुखविदारके त्रि॰। [नागरङ्गे ६त॰। मुखगर्भे।

वक्त्रवास पु॰ वक्त्रं वासयति सुरभीकरोति वासि-अण्।

वक्त्रशोधिन् पु॰ वक्त्रं शोधयति शुध-णिच्-णिनि। जम्बीरे मुखशोधके ताम्बूलादौ त्रि॰। स्त्रियां ङीप्।

वक्त्रासव पु॰ वक्त्रस्यासव इव। अधररसे।

वक्र न॰ वकि-रन् पृ॰ नलोपः। नदीवङ्के। शनैश्चरे, मङ्गलग्रहे, रुद्रे, त्रिपुरासुरे, पर्व्वते, कुटिलगतौ च पु॰। तद्वति त्रि॰ 'राहुकेतू सदा वक्रा'विति ज्योतिषम्।

वक्रकण्ट पु॰ वक्रः कुटिलः कण्टः कण्टकोऽस्य। बदरवृक्षे ततः संज्ञायां कन्। खदिरवृक्षे।

वक्रखड्ग पु॰ कर्म॰। करवाले।

वक्रग्रीव पु॰ वक्रा ग्रीवा यस्य। उष्ट्रे। कुटिलग्रीवायुते त्रि॰

वक्रपुच्छ पु॰ वक्रं पुच्छं यस्य। कुक्कुरे वक्रलाङ्गूलादयोऽप्यत्र।

वक्रपुष्प न॰ वक्राणि पुष्पाण्यस्य। वकवृक्षे, पलाशवृक्षे च।

वक्रशल्या स्त्री॰ वक्रं शल्यमिव पत्त्रादि यस्याः। कुटुम्बिनीवृक्षे

वक्राङ्ग पु॰ वक्राण्यङ्गान्यस्य। हंसे। कुटिलावयववति त्रि॰। कर्म॰ कुटिलदेहे न॰।

वक्रिमन् न॰ वक्रस्य भावः इमनिच्। कौटिल्ये 'वक्रितवक्रिम मे चित्त मिति मालतीमाधवम् पृ॰ षद्लोपश्च।

वक्रोक्ति स्त्री॰ कर्म॰। कुटिलोक्तौ. 'वक्रोक्तिः काव्यजीवितमि'त्यलङ्कारोक्ते काव्यादौ, काकुवचने च।

वक्ष रोषे भ्वा पर॰ अक॰ सेट्। वक्षति अवक्षीत्।

वक्षस् न॰ वह-असुन् सुट् च। हृदये उरसि।

वक्षः(क्ष)स्थल न॰ वक्षःस्थलमिव वा विसर्गलोपः। हृदयवक्षसि

वक्षोज पु॰ वक्षसि जायते जन-ड। स्तने 'वक्षोजपानकृदि'त्युद्भटः। [अवक्षीत् अवाक्षीत्।

वक्षोरुह पु॰ वक्षसि रोहति रुह-क। स्तने। [अवक्षत् वक्षति

वख गतौ भ्वा॰ पर॰ सक॰ सेट् इदित्। वङ्खति अवङ्खीत् अविद-

वटपत्त्र पु० वटस्येव पत्त्रमस्य । सिताकेअहवे, पाषाणभेदी-
वटी स्त्री० वट-अच् गौरा ङीष् । गोलाकारे (वडी) पदार्थे स्वार्थे कन् ह्रस्व । वटिकाप्यत्र स्त्री० ।
वटु पु० वट-उ । माणवके ब्रह्मचारिणि च ।
वटुक पु० वट-उक । बालके, भैरवभेदे च ।
वठ असहायकरणे भ्वा०आत्म०सक०सेट् इदित् । वण्ठते अवण्ठिष्ट
वठ सामर्थ्ये भ्वा०पर०अक०सेट् । वठति । अवाठीत्-अवठीत् ।
वठर पु० वठ-अरन् । मूर्खे, अम्बष्ठे च । शठे, मन्दे च त्रि० ।
वड विभजने चु०उभ०सक०सेट् इदित् । वण्डयति ते । अववण्डत् त
वड वेष्टने विभागे च भ्वा०आ०स०सेट् इदित् । वण्डते अवण्डिष्ट
वड आरोहणे सौ०पर०सक०सेट् । वडति । अवाडीत्-अवडीत्
वडभि भी) स्त्री० वड्यते आरुह्यतेऽत्र वड-अभि वा ङीप् (छदनि) गृहचूडायाम् प्रासादाग्रस्थगृहे च (चिलेघर) ।
वडा स्त्री० वड-अच् । स्वनामख्याते पिष्टकभेदे ।
वडिश न०वड इन् वडिं श्यति शो-क । मत्स्यधारणार्थे वक्रलौह कण्टकयुक्ते पदार्थे,'वडिशेन झषीरिवाशानि'ति वृन्दावनचम्पूः
वड्र त्रि० बल-रक् लस्य डः । वृहति । [षड्विंश स्तुवः
वण शब्दे भ्वा०पर०सक०सेट् । वणति अवाणीत्-अवणीत् ।
वण्ट विभाजने अद०चु०उभ०सक०सेट् । वण्टयति ते अववण्टत् त
वण्ट पु० वण्ट-अच् । भागे, दात्रादेः धारणस्थाने (बांट) अकृतोद्वाहे त्रि० । (डेङ्गो) ।
वण्टक पु० वण्ट-घञ् । स्वार्थे कन् । भागे । ण्वुल् । विभाजके
वण्ठ त्रि० वण-ठ तस्य नेत्त्वम् । खर्वे (बेटे)
वण्ड त्रि० वडि-अच् । अकृतोद्वाहे, छिन्नाद्यङ्गविकले (बेंडे) च
वत् अव्य० वा-डति । सादृश्ये च तत्प्रत्ययान्तोपलक्षार्थे अव्य० ।
वत अव्य० वन-क्त । खेदे, अनुकम्पायाम्, हर्षे, विस्मये, आमन्त्रणे च
वतंस पु०अव+तनुस-घञ् अवाल्लोपः । कर्णभूषणभेदे, शेखरे, शिरोभूषणे, भूषणमात्रे च ।
वतण्ड पु०अव+तडि अच् अवाल्लोपः । मुनिभेदे । [स्त्रियाम्
वतोका स्त्री०अवगतं तोकं यस्याः अवाल्लोपः । अपत्यहीनायां
वत्स न० वद-स । वक्षःस्थले । गवादिशिशौ त्रि० । वत्सरे पु०
वत्सक न०वत्स इव इवार्थे कन् । पुष्पकासीसे । कुटजे, इन्द्रयवे च
वत्सकबीज न० वत्सस्य कुटजस्य बीजम् । इन्द्रयवे ।
वत्सतर पु०स्त्री० अल्पः वत्सः तरप् । क्षुद्रवत्से, अप्राप्तदमन काले गवादौ । स्त्रियां ङीप् । वत्सतरी । [विषभेदे ।
वत्सनाभ पु०वत्सान् पशुशिशून् नभ्यति हिनस्ति नभ-अण् ।
वत्सपत्तन न० वत्सस्य वत्सराजस्य पत्तनम् । उत्तरदेशस्थायां कौशाम्ब्यां नगर्याम् ।

वत्सपाल पु० वत्सान् पालयति पाल-अण् । श्रीकृष्णे ।
वत्सर पु० वस-सरन् । द्वादशमासात्मके काले । [वत्सी
वत्सराज पु०चन्द्रवंश्ये नृपभेदे । 'वत्सराजचरितमि'ति रत्ना-
वत्सरान्तक पु० वत्सरस्यान्तं करोति अन्त+णिच्-ण्वुल् । फाल्गुनमासे वत्सरस्य चैत्रादिकत्वात् फाल्गुनस्य तद-न्तकत्वम् । [तद्वति त्रि० ।
वत्सल त्रि०वत्सं लाति ला-क । स्नेहयुक्ते वात्सल्ये रसे पु० ।
वत्साक्षी स्त्री०वत्सस्याक्षीव अक्षि अस्य षच्समा० । गोडुम्बायाम् (गोमक) । [गुडूच्याम् ।
वत्सादनी स्त्री० वत्सैरद्यते प्रियत्वेन अद-ल्युट् ङीप् ।
वद स्तुतौ अक० अभिवादने सक० भ्वा०आ० सेट् इदित् । वन्दते अवन्दिष्ट । [अवदिष्ट
वद वाक्ये सन्देशे च भ्वा०उभ सक०सेट् । वदति ते अवादीत्
वद वाचि भ्वा०पर०सक०सेट् यजा० । वदति अवादीत् उवाद ।
वद वाक्ये सन्देशे च सक०चुरा०उभ०सेट् । वादयति ते अवीवदत्
वद त्रि० वदति वद-अच् । वक्तरि । [कथने न०
वदन न० उद्यतेऽनेन वद-करणे ल्युट् । मुखे । भावे ल्युट् ।
वदा(द)न्य पु० वद-अन्यच् उ० वा दीर्घः । भूरिदानशीले ।
वदाम न० वद-आमन् । (वदाम) फलभेदे ।
वदाल पु० वद-आल । पाठीनमत्स्ये (बोयाल) स्वार्थे कन् तत्र
वदावद पु० अत्यन्तं वदति वद-अच् नि० । बहुवक्तरि ।
वधू स्त्री० उह्यते पितृगेहात् पतिगृहं वह-ऊ धुकच् । भार्य्यायाम् नवोढायां पुत्रजायायाम् स्नुषायां पत्न्याञ्च ।
वधूजन पु० कर्म० नारीजने । [इत्युक्ते भाषापरि० ।
वधूटी स्त्री० अल्पा वधूः टी अल्पवयस्कायाम् नार्य्यां 'गोपवधूटी
वन सेवने सक० शब्दे अक० भ्वा०पर०सेट् । वनति अवानीत्-अवनीत् । [अवतीत् । वनः वानः । वनयति ।
वन व्यापारे भ्वा०पर०सक०सेट् घटा० । वनति अवानीत्-
वन य चने क्रिक० तना० आ० सेट् । वनुते अवनिष्ट ।
वन उपकारे उपतापे च सक० शब्दे अक० चुरा० उ० पक्षे भ्वा० प० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत्-अवानीत् ।
वन न०स्त्री० वन अच् । वृक्षसमुदायात्मके अरण्ये । स्त्रीत्वे ङीप् । 'वनी समवदत् पिकाभिके'ति नैषधम् जले, निवासे, आलये च ।
वनकदली स्त्री० ६त० । काष्ठकदल्याम् ।
वनकन्द पु० वनजातः कन्दः । अरण्यजाते सूरणे ।
वनकार्पासी स्त्री वनोद्भवा कार्पासी । (बनकापास) गुल्मभेदे

वन्य न॰ वने भव यत । त्वचे (दारचिनि)। वनशूरणे वाराहीकन्दे देवनले च पु । वनजातमात्रे त्रि॰ । वनानां जलानां समूह यत् । जलसमूहे स्त्री॰।

वप बीजवपने, तन्तुवपने मुण्डने च सक॰भ्वा॰ उभ॰ अनिट् यजा॰। वपति ते अवाप्सीत् अवप्त । उप्तिम ।

वपन न॰ वप ल्युट । केशमुण्डने बीजाधाने तन्त्वाधाने च

वपनी स्त्री॰ उप्यतेऽनया अत्र वा वप ल्युट् ङीप्। नापितास्त्रे तन्तुशालायां, (तान्तघर) यन्त्रभेदे (माकु) च ।

वपा स्त्री॰ वप अच्। मेदसि (चरवि) छिद्रे च । 'वपाया हविष इति श्रुति । [वप-उसि । शरीरे, प्रशस्ताकारे च ।

वपुस् न॰ उप्यन्ते देहान्तरभोगसाधनबीजीभूतानि कर्माण्यत्र

वपुष्टमा स्त्री॰ अतिशयेन वपु प्रशस्ताकृति तमप् मतम। पद्मचारिण्याम् लतायाम् ।

वप्तृ पु॰ वप तृच् । जनके, कवीश्वरे च। बीजादिवापके त्रि॰ ।

वप्र पु॰ न॰ उप्यतेऽत्र रन् । दुर्गनगरादौ परिखायां उद्धृतमृत्तिकाकूपे । चेत्रे, रेणौ, तटे, सीसके च न॰ । जनके, प्राचीरे, प्रजापतौ च पु॰ । मञ्जिष्ठायाम् स्त्री॰।

वभ्र गतौ भ्वा॰पर॰सक॰ सेट् । वभ्रति अवभ्रीत् ।

वम उद्गारे भ्वा॰ पर सक॰ सेट फणा॰ज्वला॰ । वमति अवमीत् । टु वमथु । व वाम ।

वमथु पु॰ वम अथुच् । वमने ।

वमन न॰ वम ल्युट् । मर्द्दने, अर्द्दने, आहुतौ, अधिकनिष्ठारणे च 'स्तनाभिष्यन्दवमन'मिति कुमार । वमे पु॰। जलौकायां स्त्री॰ गौ॰ ङीप् ।

वमि स्त्री॰ वम इन् अर्द्दने । अग्नौ पु॰। धूर्त्ते त्रि॰।

वमित पु॰ वम णिच् क्त । कृतोद्गार ।

वय गतौ भ्वा॰ आ॰ सक॰ सेट् । वयते अवयिष्ट ।

वयस् न॰ अज असुन् वीभाव । विहगे, बाल्याद्यवस्थायाम् 'वया'तिपातोद्गतवात ति नैषधम् यौवने च ।

वय(य)स्थ पु॰स्त्री॰ वयसि यौवने तिष्ठति स्था क । तरुणे त्रिभीतक्यां स्त्री॰ । 'वयस्था नागरामला'दिति वैद्यकम्।

वयस्य पु वयसा तुल्य यत् । समानवयस्के। सख्यां स्त्री॰ ।

वयुन न॰ वय उनन् । ज्ञाने। देवतागारे पु॰ ।

वयोधस् पु॰ वयो यौवनं धत्ते धा असुन् । तरुणे ।

वर ईप्से चुर॰उ॰सक॰सेट् । वरयति ते अववरत् त ।

वर न॰ व्रियते वृ-अप् वर अच् वा । कुङ्कुमे, वरणभेदे 'वर भाषान् परिहर्स्ये' इति रुक्मम्। भावे अप् वर-अच् वा। दर्भ्यादम् मार्गने, आवरणे वटने च । कर्मणि अप्। अभीष्टे, श्रेष्ठे च त्रि॰ । जारे, गुग्गुलौ, जामातरि, पत्यौ च पु॰ । [वस्त्रभेदे च ।

वरक पु॰ वृ-वुन् । वनमुद्गे, पर्पटे, तृणधान्यभेदे (चीना)

वरचन्दन न॰ कर्म॰ । कालीये, देवदारुणि कुसुम्भबीजे च ।

वरट न वृ-अटन्। कुन्दपुष्पे। कीटभेदे (बोलता) हंसे च पु स्त्री॰

वरण न॰ वृ ल्युट् । कन्यादिदानाय जामात्रादेरभ्यर्थनानुकूले व्यापारभेदे वेष्टने, ऋत्विगादेः नियाग नियोगाय पूजनादौ, उष्ट्रे, प्राकारे, वरुणवृक्षे च । काशीस्थे नदीभेदे (बारुणी) ख्याते पदार्थे च स्त्री॰ । [सध्यवटौ च ।

वरण्ड पु॰ वृ-अण्डच् (वयसफोडा) मुखरोगभेदे मातङ्गयुद्धार्थ

वरण्डक पु॰न॰ वृ अण्डच् । स्वार्थे कन् । वरण्डशब्दार्थ वर्त्तुले, भित्तौ च । विशाले लमणे, भीते च त्रि॰ ।

वरण्डालु पु॰ वरण्ड+आलु। एरण्डवृक्षे ।

वरतिक्त पु॰ वर श्रेष्ठस्तिक्तो रसो यस्य । कुटजवृक्षे। पाठाया (आकनादि) स्त्री॰ । स्वार्थे कन् तत्रैव ।

वरत्रा स्त्री॰ वृ-अत्रच् । हस्तिकक्ष्यारज्जौ ।

वरत्वच पु॰ वरा त्वचा यस्य । निम्बवृक्षे ।

वरद त्रि॰ वर ददाति दा क । अभीष्टदातरि, प्रसन्ने च । तच्चिह्नसूचके हस्तादिविन्यासरूपे मुद्राभेदे न॰ 'अभय वरदश्चैव दर्शिवे' इति तन्त्रम् । कन्यायाम् अश्वगन्धायाम्, आदित्यभक्तायां, दुर्गायाञ्च स्त्री॰ ।

वरदाचतुर्थी स्त्री॰माघशुक्लचतुर्थ्याम्। 'तामधिकृत्य 'चतुर्थीवरदा नाम तस्यां गौरी सुपूजिते'ति स्मृति । [न॰

वरफल पु॰ वर फलमस्य । नारिकेले वृक्षे । कर्म॰। श्रेष्ठे फल

वरमुखी स्त्री॰ वर मुख यस्या ङीप्। रघुशानामगन्धद्रव्ये ।

वरम् अव्य॰ वृ-अम् । ईषदभीष्टे । [पतिम्वरायां कन्यायाञ्च

वरम्वरा स्त्री॰ वर वृणोति खच् । (चाकुलिया) चक्रमर्द्दयाम्।

वररुचि त्रि॰ वरा रुचिरस्य । श्रेष्ठप्रीतिमति । पाणिनिसूत्र वार्त्तिककारे कात्यायनमुनौ, विक्रमादित्यसभास्थे पण्डित भेदे च , [प्राग्नवरे त्रि॰ ।

वरलब्ध पु॰ वर उत्कर्षं पुष्पेषु लब्धो दम परम्॰। चम्पक

वरला स्त्री॰ वरटा+पृ॰ टस्य ल । हंस्यां (बोलुता) कीटभेदे च गौरा॰ ङीष् । हंसाप् । [मञ्जियाम् ।

वरवर्णिनी स्त्री॰वर श्रेष्ठो वर्ण प्रशस्तरूपस्य इनि। उत्त-

वरवाह्लीक न॰ कर्म॰ । कुङ्कुमे ।

वरा स्त्री॰ वृ-अच् । हरितकीविभीतकामलकाख्ये फलत्रिक । रेणुकानामगन्धद्रव्ये, गुडूच्याम्, मेदायां, ब्राह्म्याम्, शिफे, पाठायाम्, हरिद्रायाञ्च ।

**वराक** पु० वृ-षाकन् । शिवे । युद्धे न० । अवरे, शोचनीये च त्रि०

**वराङ्ग** न० कर्म० । मस्तके । व्रियते आव्रियते गुप्यते वृ अप्, कर्म० । गुह्ये योनौ, गुडत्वचि च । ६ब० । गजे विष्णौ कामदेवे च पु० । श्रेष्ठावयवयुक्ते त्रि० । स्वार्थे कन् । गुडत्वचि (दारचिनि) न० हरिद्रायाम् स्त्री० गौ०ङीष् ।

**वराङ्गिन्** पु० वराङ्गमस्त्यस्य इनि । अम्लवेतसे । श्रेष्ठाङ्गवति त्रि०

**वराट** पु० वरमल्पमटति अट-अण् । कपर्दे । क्षुद्रो वराट ङीप् । क्षुद्रकपर्दे, स्वार्थे कन् । तत्रार्थे 'वराटकानां दशक-द्वयं यदि'ति लीलावती अट ण्वुल् । पद्मबीजाधारे कोषे, रज्जौ च पु० ।

**वराटकरजस्** पु० वराटक इव रजोऽस्य । नागकेशरे वृक्षे

**वरादन** न० वरै र्नृपैरद्यते अद-ल्युट् । राजादने (पियासाल)

**वराम्र** पु० वर आम्र इव । करमर्दे ।

**वरारोह** पु० वर आरोहो मध्यं यस्य । हस्तिनि । प्रशस्त-नितम्बवत्यां स्त्रियां च स्त्री० ।

**वराशि** पु० वरम् वरणमश्नुते अश-इन् । स्थूलवस्त्रे ।

**वरासन** न० वराय वरणीयायास्यते क्षिप्यते अस-ल्युट् । जवापुष्पे । कर्म० । उत्तमे आसने, न० । वरं पतिमस्यति अस ल्यु । पिङ्गे, जारे पु० । वरान् श्रेष्ठानपि अस्यति दूरीकरोति ल्यु । द्वारपाले पु० ।

**वरासि** पु० वरायावरणायास्यते अस-इन् । स्थूलवस्त्रे ।

**वराह** पु० वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् आ+हन ड । शूकरे यज्ञवराहाख्ये भगवतोऽव-तारभेदे च । पर्वतभेदे, मुस्तके, शिशुमारे, वाराहीकन्दे, द्वीपभेदे च । [वृक्षभेदे ।

**वराहकन्द** पु० वराहस्य कं सुखं ददाति । स्वनामख्याते

**वराहकान्ता** स्त्री० वराहस्य कान्ताऽभीष्टा । वराहकन्दे ।

**वराहक्रान्ता** स्त्री० वराहेण क्रान्तेव । लज्जालुलतायाम् ।

**वराहिका** स्त्री० वराहो भक्ष्यत्वेनास्त्यस्य ठन् । कपिकच्छ्वाम्

**वराही** स्त्री० वराहो भक्ष्यत्वेनास्त्यस्या अच् गौरा० ङीष् । भद्रमुस्तायाम् ।

**वरिवस्** न० वृ-इवसुन् नि० इट् च । पूजने ।

**वरिवसि(सि)त** त्रि० वरिव पूजनं करोति क्यच्-क्त वा यलोप । पूजिते ।

**वरिवस्या** स्त्री० वरिवस्+करणे क्यच् च । पूजने शुश्रूषायाम्

**वरिष्ठ** त्रि० अतिशयेन उरु इष्ठन् वरादेश० । उरुतमे । तित्तिरिविहगे पु० । आदित्यभक्तायां स्त्री० । [पत्न्याम्

**वरी** स्त्री० वरी शतावरी पूर्वपदलोप० । शतावर्याम्, सूर्य-

**वरीयस्** त्रि० अतिशयेन उरु श्रेष्ठ ईयसु वरादेश० । उरुतमे विष्कम्भादिषु मध्ये योगभेदे पु० ।

**वरी(लो)वर्द** पु० वृध यङ्-लुक् अच् पृ० रस्य वा ल । वृषभे ।

**वरुड** पु० वृ-उडन् । अन्त्यजजातिभेदे 'रजकश्चर्मकारश्च नटो वरुड एव चे'ति स्मृति ।

**वरुण** पु० वृ उनन् । पश्चिमाशापतौ जलेशे स्वनामख्याते, देवभेदे, जले, सूर्ये च । [भवे मद्ये ।

**वरुणात्मजा** स्त्री० वरुणस्य जलस्यात्मजेव जन्यत्वात् । जल

**वरुणानी** स्त्री० वरुणस्य पत्नी ङीप् आनुक् च । वरुणपत्न्याम्

**वरूथ** न० वृ-ऊथन् । तनुत्राणे वर्मणि । रथगुप्तिस्थाने परप्रहाररक्षार्थमावृते स्थाने पु० ।

**वरूथिनी** स्त्री० वरूथोऽस्त्यस्याः इनि । सेनायाम् ।

**वरेण्य** न० वृ-एन्य । कुङ्कुमे । प्रधाने, प्रार्थनीये च त्रि०

**वरोट** न० वराण्युटानि दलान्यस्य । मरुबकपुष्पे ।

**वर्कर** पु० वृक अरन् । तरुणपशौ, मेषशावके, छागमात्रे च ।

**वर्ग** पु० वृज-घञ् । सजातीयसमूहे यथा मनुष्यवर्गः पशुवर्गः । समानधर्मभिः प्राण्यप्राणिभि कृते समूहे च यथा कवर्गः चवर्गः । ग्रन्थपरिच्छेदे यथा स्वर्गवर्गः पातालवर्गः । अङ्कशास्त्रोक्ते समानाङ्कद्वयस्य परस्परगुणने, यथा द्विकस्य चत्वारि, त्रिकस्य नव, चतुष्कस्य षोडश, इत्यादि । "वर्गं मूलं पदं कृति"मिति लीलावती । त्यागे च ।

**वर्गमूल** न० वर्गस्य समद्विघातात्मककृत. मूलम् । अङ्कशास्त्र-प्रसिद्ध समाङ्कद्वयेन गुणाङ्कसङ्ख्याया यन्मूलं घातसाधनं तत्र । यथा षोडशानां चत्वारि, नवानां त्रयः चतुर्णां द्वौ इत्यादि ।

**वर्गोत्तम** पु० वर्गेषु षट्सु क्षेत्रादिषु उत्तम नवांश । 'चराणां प्रथमे चांशे स्थिराणां पञ्चमे तथा द्व्यात्मकानाञ्च नवमे वर्गोत्तम इति स्मृत' इति ज्योतिषोक्ते विभागकालस्व-राशेर्नवांशभेदे । [शिलायाम् ।

**वर्च** दीप्तौ भ्वा० आ० अक० सेट् । वर्चते अवर्चिष्ट । [कर्च

**वर्चस्** न० वर्च-असुन् । रूपे, शुक्रे, तेजसि, विष्ठायाञ्च, कंसादौ

**वर्चस्विन्** त्रि० वर्चस्+मत्वर्थे विनि । तेजस्विनि ।

**वर्जन** न० वृज-ल्युट् । त्यागे, मारणे, हिंसायां च ।

**वर्ण** स्तुतौ विस्तारे शुक्लादिवर्णकरणे उद्योगे दीपने च चुर० उभ० स० सेट् । वर्णयति ते वर्णयति ते अववर्णत् त

**वर्ण** वर्णने चु० उभ० सक० सेट् । वर्णयति ते अववर्णत त ।

**वर्ण** न० वर्ण-अच् । कुङ्कुमे । ब्राह्मणादिजातौ, शुक्लादिरूपे, भेदे, अकारादावक्षरे च पु० । करणादौ घञ् । वर्णवि,

गुणे,अङ्गरागे च । स्वर्णे, व्रतभेदे, विलेपनद्रव्ये च।भावे घञ् । विलेपने, स्तुतौ, गीतक्रमे, चित्रे च।

वर्णक न० वर्णयति वर्णि-ण्वुल् । हरिताले, अनुलेपनयोग्ये पिष्टे घृष्टे वा चन्दनादौ द्रव्ये च । विट्ठलादौ पु०स्त्री० मण्डने न० । एकस्यैव सूत्रादेः मंवान्तरव्याख्यानरूपे ग्रन्थभेदे न० 'लिङ्गास्थले तृतीयवर्णके' इति मिताक्षरा ।

वर्णकूपिका स्त्री० वर्णानामक्षराणां लेखनाय क्षुद्रः कूपः कूपी सैव कन् । मस्याधारे । [चित्रकरे ।

वर्णचारक पु० वर्णं शुक्लादिरूपं चारयति चर णिच्-ण्वुल् ।

वर्णज्येष्ठ पु० वर्णेषु ज्येष्ठः प्रथमसृष्टत्वात् । अग्रजे, विप्रे । सस्वापेक्षया ज्येष्ठवर्णे त्रि० 'वर्णज्येष्ठा च या नारीति स्मृतिः

वर्णतुलि(ली) स्त्री० वर्णानां लेखनसाधनं तूलिः । लेखन्याम् स्वार्थे कन् । अत्रैव ।

वर्णद न०वर्णं ददाति दा-क। कालीयके गन्धद्रव्ये। वर्णप्रदे त्रि०

वर्णदात्री स्त्री०वर्णं रूपं ददाति दा-तृच् ङीप् । हरिद्रायाम् वर्णदातरि त्रि० ।

वर्णदूत पु० वर्णा एव दूतो यत्र । लिपौ ।

वर्णधर्म्म पु०न०६त० । विप्रादीनामसाधारणे धर्म्मे यथा विप्रस्य याजनाध्यापनप्रतिग्रहादि, क्षत्रियस्य प्रजापालनादि।

वर्णसङ्कर पु० संकीर्य्यते सम्+कॄ-अप् वर्णतः सङ्करः। विप्रादिभ्यो वर्णेभ्योऽनुलोमप्रतिलोमजाते मूर्द्धाभिषिक्तादौ जातिभेदे 'जायते वर्णसङ्करः' इति गीता ।

वर्णा स्त्री०प्रशस्तवर्णोऽस्त्यस्याः फलत्वात् अर्शआद्यच्।आढक्याम् ।

वर्णाङ्का स्त्री० वर्णा अक्षराणि अङ्क्यन्तेऽनया अङ्क-अच् । लेखन्याम् । [अकारादावक्षरे मन्त्रभेदे

वर्णात्मन् पु० वर्ण आत्मा स्वरूपं यस्य । ध्वन्यात्मकादिन्नवर्णे

वर्णार्ह पु० वर्णं स्तुतिमर्हति अर्ह-अण् । मुद्गे । [न्याम्

वर्णिका स्त्री०वर्णा अक्षराणि लेख्यत्वेन सन्त्यस्याः ठन्। लेख-

वर्णित त्रि० वर्ण-क्त । स्तुते,कृतवर्णने, रूपान्तरमापादिते च

वर्णिनी स्त्री०प्रशस्तवर्णः अस्त्यस्याः इनि ङीप्। हरिद्रायाम्

वर्णिन् पु०वर्णोऽस्त्यस्य इनि । चित्रकरे, लेखके ब्रह्मचारिणि च 'अथाह वर्णी विदितो महेश्वर'इति कुमारः विप्रादिजातौ च 'वर्णिनां हि वधो यत्र'ेति स्मृतिः । [क्षुरे च

वर्त्तक पु०वृत-ण्वुल्। (भाटर) पक्षिभेदे । वर्त्तकापत्न्यस्य

वर्त्तन न०वृत-ल्युट्।वृत्तौ स्थितौ। णिच्-भावे ल्युट्।स्थापने। णिच्-करणे-ल्युट्। जीवनोपाये न० । तर्कुपीठे स्त्री० ङीप्। युच् । वर्त्तिमति, वर्त्तिष्णौ च त्रि०। वामने पु० ।

वर्त्तनी स्त्री०वर्त्तते पादागम । वृत-णिच्-आधारे ल्युट्। पथि

वर्त्तमान पु०वृत-शानच् । कालभेदे शब्दप्रयोगाधारे आरब्धापरिसमाप्ते काले । तत्कालवृत्तौ त्रि० । [लौहभेदे

वर्त्तलोह न० वर्त्तयते वृत-णिच्-अच् कर्म० । आवर्त्तनयोग्ये

वर्त्ति(र्त्ती) स्त्री० वृत-इन् वा ङीप् । लेखे, नयनाञ्जने, गात्रानुलेपने, दीपदशायाञ्च ।

वर्त्तिक पु० वृत तिकन् । (वटेर) विहगभेदे । वर्त्मनि वर्त्तते वृत, अच् वर्त्तः तत्र साधुः हितो वा ठन् । भारे ।

वर्त्तिन् त्रि० वृत,णिनि । वर्त्तनशीले ।

वर्त्तिष्णु त्रि०वृत-इष्णुच् । वर्त्तनशीले । [काले। तद्वृत्तौ त्रि०

वर्त्तिष्यमाण पु० वृत-शानच् लृटः सद्वेति सट् । भविष्यत्-

वर्त्तुल त्रि०वृत-उलच् । गोलाकारे पदार्थे। स्वञ्जने न०। कलायभेदे पु० ।तर्कुपीठ्याम् स्त्री० । गजपिप्पल्याम् स्त्री० ङीप् ।

वर्त्मन् न० वृत-मनिन् । पथि, आचारे, 'आ मनोर्वर्त्मनः इति रघुः । नेत्रच्छदे च ।

वर्त्मनि स्त्री० वृत-अनि मुट् च। पथि ।

वर्द्ध छेदने, पूरणे च चु०उ०स०सेट् । वर्द्धयति ते अववर्द्धत् त ।

वर्द्ध पु०वृध-अच् । शाकम्भ (सामनहाटि) घञ् । पूरणे,छेदे च

वर्द्धक पु० वृध ण्वुल्। शाकमयष्टौ (सामनहाटी) पूरके,छेदके च

वर्द्धकि पु० वृध-अच् कप ढि कर्म०। त्वष्टरि (छुतार) ।

वर्द्धकिन् पु०वर्द्धक-वर्द्धोऽस्त्यस्य इनि। त्वष्टरि(छुतार) जातिभेदे

वर्द्धन न० वृध-ल्युट् । छेदने, पूरणे च । वृध-णिच्-ल्यु । वृद्धिकारके त्रि० । 'करोमि चितिवर्द्धन'मिति भट्टिः । वृध-ल्यु । वृद्धियुक्ते त्रि०। [सनालंपात्रभेदे च (वद्न)

वर्द्धनी स्त्री० वर्द्धतेऽनया वृध-णिच्-ल्युट् । संमार्ज्जन्याम्,

वर्द्धमान पु० वृध-शानच् । एरण्डवृक्षे । वृद्धिशीले त्रि० । शरावे (सत्पात्रभेदे) विष्णौ, धनिनां, स्तम्भभेदे, देशभेदे, नगरभेदे च । वृद्धियुक्ते त्रि०।

वर्द्धापन न० वर्द्धं छेदं करोति वर्द्ध+णिच्-आप् च ततोभावे ल्युट् । नाडीच्छेदनकर्माङ्गे संस्कारभेदे ।

वर्द्धित न० वृध-णिच्-क्त । छेदिते, पूरिते, प्रस्तुते च ।

वर्द्धिष्णु त्रि० वृध-इष्णुच् । वृद्धिशीले ।

वर्ध्र न० वृध-रन् । चर्म्मणि । चर्म्मरज्ज्वां स्त्री० ङीप् ।

वर्फ गतौ वधे च भ्वा०पर०सक०सेट् । वर्फति अवर्फीत् ।

वर्म्मकण्टक पु० वर्म्म इव कण्टकोऽस्य । बर्बुरे ।

वर्म्मकषा स्त्री० वर्म कषति कष् । (चामकषा) सप्तलायाम्

वर्म्मन् न० वृ मनिन् । कवचे सन्नाहे । क्षत्रियोपाधौ पु० ।

वर्म्महर पु० वर्म्म हरति हृ-अच् । कवचधारणयोग्ये वयसामेदे तरुणे ।

वर्म्मित त्रि० वर्म्म करोति णिच् क्त । कृतसन्नाहे, उद्युक्ते च ।
वर्य्य त्रि० वृ-यत् । प्रधाने, श्रेष्ठे च । कामदेवे पु० । पीताम्बराया कन्यायाः, कन्यामात्रे च स्त्री० । [मक्षिकाभेदे ।
वर्वणा स्त्री० वर्वति वणति शब्दायते अच् । (भणभणे)
वर्व्व(र्ब्ब)र न० वर्व(र्ब)-अरच् हिङ्गुले, पीतचन्दने, गन्धरसे च । पामरे मूर्खे च त्रि० 'यत्वमिच्छसि वर्वरा' इत्युद्भटः । केशभेदे (बाउरी) देशभेदे कृष्णार्जके । (कालतुलसी) वृक्षे च पु० । शस्त्रायां कन् । चन्दनभेदे शाकभेदे च पु० । पुष्पभेदे, मक्षिकाभेदे च स्त्री० (बाबुइ) वृक्षे स्त्री० टाप् ङीप् वा ।
वर्वा(र्वी) स्त्री० वर्व(र्ब) अच् । (बाबुइ) वृक्षभेदे ।
वर्वुर पु० वर्व-उरच् । (बाबला) वृक्षभेदे ।
वर्ष पु० न० वृष-अच् । वृष्टौ जम्बुद्वीपांशभेदे जम्बुद्वीपे च । कर्त्तरि अच् । मेघे, द्वादशमासात्मके काले च । प्रभवादिषु षष्टिवत्सरेषु पु० ।
वर्षकेतु पु० वर्षस्य केतुरिव । रक्तपुनर्नवायाम् ।
वर्षपर्व्वत पु० वर्षाणां चिह्नभूतः सीमाभूतो वा पर्व्वतः । 'हिमवान् हेमकूटश्च निषधो मेरुरेव च । चैत्रः कर्णी च शृङ्गी च सप्तैते वर्षपर्व्वताः' इत्युक्तेषु पर्व्वतेषु ।
वर्षपाकिन् पु० वर्षेण पाकोऽस्त्यस्य इनि । आम्रातकवृक्षे । तस्य हि सकुन्मोद्गमात् प्रायेण वत्सरानन्तरं फलपाकः ।
वर्षपुष्पा स्त्री० वर्षकाले पुष्पमस्याः । सहदेवीलतायाम् ।
वर्षप्रिय पु० वर्षं प्रियोऽस्य । चातकपक्षिणि ।
वर्षवर पु० वर्षं रेतोवर्षणं वृणोति आवृणोति वृ-अच् । 'ये त्वल्पसत्त्वाः प्रथममात्मीयाः स्त्रीस्वभाविनः । जात्या न दुष्टाः कार्य्येषु तेवै वर्षवराः स्मृताः' इत्युक्तलक्षणे राजामन्तःपुररक्षके षण्डे (खोजा) । 'नष्टं वर्षवरैरि'ति रत्नावली ।
वर्षवृद्धि पु० वर्षस्य वृद्धिरधिकता यस्मिन् । जन्मतिथौ, तद्दिन-कर्त्तव्ये पूजादौ च । 'युगाद्या वर्षवृद्धिश्चे'ति स्मृतिः ।
वर्षा स्त्री० ब० व० । वर्षन्ति मेघा यत्र । श्रावणभाद्रात्मके मासद्वये ऋतौ 'वर्षासु च मघासु चे'ति स्मृतिः ।
वर्षाङ्गी स्त्री० वर्षासु अङ्गमस्याः । पुनर्नवायाम् । [illegible]
वर्षापगम पु० वर्षाणामपगमो यत्र । शरत्काले ऋतौ ।
वर्षाभव पु० वर्षासु भवति भू-अच् । रक्तपुनर्नवायाम् ।
वर्षाभू पु० वर्षासु भवति भू-क्विप् । भेके, इन्द्रगोपे, महीलतायाञ्च । पुनर्नवायां, भेक्यां च स्त्री० । वर्षाभवमात्रे त्रि० । वर्षाभ्वी पुनर्नवायाम् स्त्री० ङीप् ।
वर्षामद पु० वर्षासु माद्यति मद-अच् । मयूरे ।
वर्षिष्ठ त्रि० अतिशयेन वृद्धः इष्ठन् वर्षादेश । अतिशयवृद्धे
वर्षीयस् त्रि० अतिशयेन वृद्धः । वृद्ध+ईयसुन् वर्षादेश । अतिवृद्धे स्त्रियां ङीप् ।
वर्षुक त्रि० वृष उकञ् । वर्षणशीले ।
वर्षोपल पु० वर्षस्य वृष्टेरुपल प्रस्तर इव । करकायाम् । (शिल)
वर्ष्मन् न० वृष-मनिन् । देहे ।
वर्ह वधे सक० दीप्तौ अक० चु० उभ० सेट् । वर्हयति ते अववर्हत्
वर्ह उत्कर्षे भ्वा० आ० सक० सेट् । वर्हते अवर्हिष्ट । [यत्ने च ।
वर्ह न० वर्ह-अच् । मयूरपिच्छे, ग्रन्थिपर्णे वृक्षे, अग्नौ, दीप्तौ,
वर्हि(र्हि)कुसुम न० वर्हिरिव कुसुममस्य ष० सलोप । ग्रन्थिपर्णे । वर्हि कुमादयोऽप्यत्र ।
वर्हिपुष्प न० वर्हिः वह्निरिव पुष्पमस्य । ग्रन्थिपर्णे ।
वर्हिःशुष्मन् पु० वर्हिः कुशः शुष्म बलमस्य । वर्हो कुशेन हि वह्निरुद्दीप्यते । [धत्तूरम् । ह्रीबेरे ।
वर्हि(र्हि)ष्ठ न० वर्हिरिव तिष्ठति स्था-क वा विसर्गलोप
वर्हिण पु० वर्हमस्त्यस्य इन । मयूरे । इनि । 'वर्हीत्यप्यत्र
वर्हिर्ज्योतिस् पु० वर्हिषा कुशेन ज्योतिरस्य । वह्नौ ।
वर्हिर्मुख पु० वर्हिर्वह्निर्मुखं यस्य । देवे तद्द्वारैव हि देवा हविरश्नन्ति ।
वर्हिषद् पु० ब० व० वर्हिषि विप्रपाणिरूपेऽग्नौ सदन्ति वर्हिस्-षद-क्विप् पु० । पितृगणभेदे 'अग्निष्वात्ता वर्हिषद उष्मपा आज्यपास्तथे'ति स्मृतिः । [वह्नौ
वर्हिष्केश पु० वर्ह-दीप्तौ इसुन् वर्हिः दीप्तिमान् केशो यस्य ।
वर्हिस् स्त्री० वृहि इसुन् नि० नलोपश्च । यज्ञे 'वर्हिषि रजतं न देयमिति श्रुतिः । ग्रन्थिपर्णे चित्रके च (चिते) कुशे पु० न० 'वर्हिर्देवसदन'मिति श्रुतिः वर्ह-इसुन् । दीप्तियुक्ते त्रि०
वल संवरणे भ्वा० आ० सक० सेट् वा घटा० । वलते अवलिष्ट
वल न० बल्यते अनेन वल क सैन्ये, बलशब्दार्थे च ।
वलक्ष पु० वल क्विप् अक्ष अच् कर्म० । धवले वर्णे तद्वति त्रि०
वलभि(भी) स्त्री० वल्यते आच्छाद्यते वल अभि वा ङीप् । वडभीशब्दार्थे गोपानस्याम् ।
वलय पु० न० वल अयन् । हस्तपादकटकादौ । उपरवेष्टनस्य तदाकारवेष्टने यथा भूवलयम् । वेष्टनभूमौ, गोले च ।
वलयित त्रि० वलयमिव आचरितम् वलय-क्विप् क्त । वेष्टिते ।
वला स्त्री० वल-अच् । (वेडेला) औषधिभेदे ।
वलाक पु० स्त्री० वल-आकन् । वकपक्षिणि स्त्रियां टाप् ।
वलाहक पु० वारि वहति पृ० । वलाहकशब्दस्यार्थे मेघादौ
वलिर त्रि० वल-अच् वल वक्रत्वमस्त्यस्य इरच् । केकरे ।
वलिशु न० वलिना उपहारद्रव्येण श्यति नश्यति शो कु । वडिशशब्दार्थे

वलीक न० वल्यते संव्रियतेऽनेन ईकन् । वलीकशब्दार्थे पटले
वलून त्रि० वलं देहोत्थापनमस्त्यस्य ऊनच् । बलविशिष्टे ।
वल्क भाषणे चु०उ०द्वि०सेट् । वल्कयति ते अववल्कत् त ।
वल्क न० वल संवरणे कक् कस्य नेत्त्वम् । वृक्षादीनां त्वचि,
वल्कले, मत्स्यानां त्वचि शल्के (आंइस) खण्डे च ।
वल्कतरु पु० वल्काय तरुः । पट्टिकालोध्रे, गुवाकवृक्षे च ।
वल्कद्रुम पु० वल्कप्रधानो द्रुमः । भूर्जपत्रवृक्षे ।
वल्कल न० वल-कलन् कस्य नेत्त्वम् । त्वचे । (दारचिनि) वृक्ष
त्वचि (छाल) पु० न० ।
वल्कलोध्र पु० वल्कभवो लोध्रः । पट्टिकालोध्रे ।
वल्ग गतौ प्लुतगतौ च भ्वा०पर०सक०सेट् । वल्गति अवल्गीत्
वल्गा स्त्री० वल्ग अ । (लागाम) अश्वमुखस्थे रज्जुभेदे ।
वल्गित न० वल्ग-क्त । अश्वस्य गतिभेदे, गमने, बहुभाषणे च ।
वल्गु पु० वल संवरणे उ-गुक् च । छागे । मनोहरे त्रि० ।
संज्ञायां कन् । चन्दने, वने, पणे च न० । चारुणि सुन्दरे च त्रि०
वल्गुपत्त पु० वल्गूनि पत्राणि यस्य । वनमुद्गे ।
वल्भ भक्षणे भ्वा० आत्म०सक० सेट् । वल्भते अवल्भिष्ट ।
वल्मिकि पु० वल-इकि मुट् च । } कीटविशेषकृते मृत्तिका
वल्मीक पु० वल-ईक मुट् च । } स्तूपे (उयेर ढिपि ।
वल्यु(ल्यू)ल छेदने पवित्रताकरणे च अद० चुरा०उभ०सक०
सेट् । वल्यु ल्यूलयति-ते अववल्यु(ल्यू)लत् त ।
वल्ल संवरणे भ्वा०आ०सक सेट् । वल्लते अवल्लिष्ट ।
वल्ल पु०वल्ल-अच् । गुञ्जात्रयपरिमाणे 'वल्लस्त्रिगुञ्जः' इति लीला०
वल्लकी स्त्री० वल्ल-कुन् गौ० ङीष् । वीणायाम् शल्लकीवृक्षे च ।
वल्लभ पु० वल्ल-अभच् । दयिते, अध्यक्षे, उत्तमाश्वे च ।
वल्लभपाल पु० वल्लभं पालयति पाल-अण् । अश्वपाले ।
वल्लर न० वल्ल-अरन् । क्षेत्र गुरुणि, गहने, कुञ्जे च ।
वल्लरि(री) स्त्री० वल्ल अरिन् वा ङीष् । मञ्जर्यां, मेथिकायां च
वल्लव पु०वल्लवत् तं वाति वा-क । गोपे, पाचके, भीमसेने च
वल्लि(ल्ली) स्त्री० वल्ल-इन् वा ङीष् । लतायाम् पृथिव्याश्च
दोषान्तरे । अजमोदायां, कैवर्त्तिकायाम्, चव्ये च ।
वल्लीज न० वल्ल्यां जायते जन-ड । मरिचे ।
वल्लीदूर्वा स्त्री० वल्लिरूपा दूर्वा । मालादूर्वायाम् ।
वल्लीबदरी स्त्री० वल्लीरूपा बदरी । भूबदर्याम् ।
वल्लीमुद्ग पु० वल्लीप्रधानः मुद्गः । वनमुद्गे (मुग नि)
वल्लीवृक्ष पु० वल्लीव दीर्घो वृक्षः । शालवृक्षे ।
वल्लुर न० वल्ल-उरन् । कुञ्जे, मञ्जर्यां, क्षेत्रे, निर्जनस्थाने
शाद्वले, गहने च ।

वल्लूर त्रि० वल्ल-ऊरन् । अन्तपादिना शुष्कमांसे,शूकरमांसे,
वनक्षेत्रे, वाहने, उषरभूमौ च ।
वल्ल्या स्त्री० वल्ल-यत् । धात्रीवृक्षे ।
वल्वज पु० वलते भुवं वेष्टयति वल-क्विप् तादृशः सन् वजति
गच्छति वज-अच् । उलपे तृणभेदे । (बाबुइ) वृक्षभेदे स्त्री०
वल्ह दीप्तौ चु०उ०अक०सेट् । वल्हयति ते अववल्हत्-त ।
वल्ह उत्कर्षे भ्वा० आ०अक०सेट् । वल्हते अवल्हिष्ट ।
वव पु० वा-ड मकारे द्वित्वम् । ज्योतिषोक्ते तिथ्यर्द्धात्मके प्रथमे
करणे । [अवशीत् ।
वश स्पृहायाम् अदा०पर०सक०सेट् स्वपा० । वष्टि अवाशीत्
वश पु० न० वश-अच् । आयत्तत्वे, प्रभुत्वे च आयत्ते त्रि० ।
वशंवद त्रि०वशं वशकरं मधुरं, वशोऽहमिति वा वदति वद-
अच् मुम् च । प्रियवाक्यवादिनि, मधुरवादिनि, 'तवाहं
वश' इति वादिनि च ।
वशक्रिया स्त्री० वशस्य क्रिया करणम् कृ-श । वशीकरणे ।
वशग त्रि० वशं गच्छति गम-ड । वशीभूते ।
वशवर्त्तिन् त्रि० वशे वर्त्तते वृत-णिनि । वशीभूते ।
वशा(सा) स्त्री० वश-(वस) अच् । बन्ध्यायां योषायां, कन्यायां,
करिण्यां, स्त्रीगव्यां च । [स्त्री० ।
वशिक त्रि० वशोऽस्त्यस्य ठन् । शून्ये आयत्ते च अगुरुचन्दने
वशित्व न० वशिनो भाव० त्व । स्वातन्त्र्ये, ईश्वरस्य ऐश्वर्य-
भेदे च । तल् । वशिताऽप्यत्र स्त्री० । ०
वशिन् त्रि०वशोऽस्त्यस्य इनि । जितेन्द्रिये,स्वाधीने, स्वतन्त्रे च
वशिर न०वश-इरच् । समुद्रलवणे गजपिप्पल्याम्, चव्ये च।पु०
वशि(सि)ष्ठ पु०अतिशयेन वशी इष्ठन् इनेर्लुक् पृ०वा षस्य सः ।
अतिशयजितेन्द्रियतायुक्ते मुनिभेदे ।
वशीकरण न० अवशः वशः क्रियतेऽनेन वश-च्वि-कृ-ल्युट् ।
तन्त्रादुक्ते वशतासम्पादके मणिमन्त्रादौ ।
वशीर पु० वश-ईरन् । गजपिप्पल्याम् ।
वश्य न० वश-यत् । लवङ्गे । आयत्ते त्रि० ।
वष वधे भ्वा०पर०सक०सेट् । वषति अवषीत् अवाषीत् ।
वषट् अव्य० वह-डषटि । देवोद्देश्यकहविस्त्यागे ।
वषट्कार पु० वषट्+कृ-घञ् । देवोद्देशकत्यागरूपे यज्ञे ।
वषट्कृत त्रि० वषट् इति कृतम् कृ-क्त । हुते ।
वष्क गतौ भ्वा०आ०सक०सेट् । वष्कते । अवष्किष्ट ।
वष्कय पु० वष्क-अयन् । एकहायने वत्से ।
वष्कयणी स्त्री० वष्कयमेकहायनवत्सं नयति स्वामान्तरं
नी-ड गौ०ङीष् णत्वम् । चिरप्रसूतायां गवि ।

वष्कयिणी स्त्री० वष्कय एकहायनो वत्सोऽस्त्यस्या इनि। चिरप्रसूतायां गवि। [अवीवसत् त

वसं नम्रतायां अक० वधे सक० चु० उभ० सेट्। वासयति ते

वस स्तम्भे दिवा०पर० सक० सेट्। वस्यति अवसत् अवासीत्। क्त्वा वेट्।

वस निवासे भ्वा पर०सक० अनिट् यजा०। वसति अवात्सीत्

वस आच्छादने अदा०आ सक० सेट् यजा०। वस्ते अवसिष्ट।

वस वासने अद०चु०उभ सक०सेट्। वसयति ते अववसत् त।

वसति(ती) स्त्री० वस-अति वा ङीप्। वासे यामिन्याम्, 'वसतीरुषित्वे'ति रघुः, निकेतने, स्थाने च।

वसन न० वस-ल्युट्। वस्त्रे, छादने, निवासे, वस्त्रभूषणे च

वसन्त पु० वस-झ। मधुमाधवात्मके ऋतुभेदे, रागभेदे च।

वसन्तक पु० वसन्ते कायति कै-क। श्योनाकवृक्षे।

वसन्तकुसुमाकर पु० प्रमेहरोगनाशके औषधभेदे।

वसन्तजा स्त्री० वसन्ते जायते जन ड। माधवीलतायाम्।

वसन्ततिलक न० चतुर्दशाक्षरपादके छन्दोभेदे।

वसन्तदूत पु० वसन्तस्य दूत इव। कोकिले, आम्रवृक्षे, पञ्चमस्वरे च। माधवीलतायाम्, पाटलीवृक्षे, गणिकारिकायाञ्च स्त्री० ङीप्।

वसन्तद्रु पु०वसन्तस्य प्रधान द्रु। आम्रवृक्षे। वसन्तवृक्षादयोऽप्यत्र

वसन्तसख पु० वसन्तस्य सखा अच् समा०। कामदेवे।

वसा स्त्री० वस-अङ्। मांसजाते, देहस्थे,धातुभेदे मेदसि, मांसरोहिण्यां लतायाञ्च।

वसु न० वस उ। धने, रत्ने, वृद्ध्यौषधे, श्यामे,स्वर्णे, जले च। वकवृक्षे,सूर्ये, वह्नौ,रश्मौ, गणदेवताभेदे, अष्टसङ्ख्यायाञ्च पु०। मधुरे शुष्के च त्रि०। दीप्तौ, वृद्ध्यौषधौ च स्त्री०। वसुदेवताके धनिष्ठानक्षत्रे पु०।

वसुक पु०वसु इव कायति कै-क। अर्कवृक्षे वकवृक्षे च।

वसुच्छिद्रा स्त्री०वसुसङ्ख्यातानि छिद्राण्यस्याः। महामेदायाम्

वसुदेव पु० वसुना दीव्यति दिव अच्। श्रीकृष्णजनके यादवे क्षत्रियभेदे। [सुतादयोऽप्यत्र।

वसुदेवभू पु० वसुदेवात् भवति भू-क्विप्। श्रीकृष्णे वसुदेव-

वसुधा स्त्री० वसूनि धीयन्तेऽस्यां धा क। पृथिव्याम्।

वसुधारा स्त्री० वसोर्वेदिराजस्य प्रियार्थं धारा घृतादिसन्तति। माङ्गल्येषु वेदिराजवसूद्देशेन दीयमानायां घृतादिधारायाम्।

वसुन्धरा स्त्री० वसूनि धारयति धृ-खच् मुम् च। पृथिव्याम्

वसुमती स्त्री० वसूनि सन्त्यस्यां मतुप्। पृथिव्याम्।

वसुहट्ट पु० वसूनां हट्ट इव। वकवृक्षे। [अववस्तत् त

वस्त वधे गतौ च सक०याचने द्वि०चु०उभ०सेट्। वस्तयति ते

वस्त पु० वस्यते बध्यते वस्त घञ्। छागे।

वस्तक न० वस्त इव कायति कै-क। कृत्रिमलवणे।

वस्तकर्ण पु० वस्तस्य कर्ण इव पत्त्रमस्य। शालवृक्षे।

वस्तगन्धा स्त्री० वस्तस्येव गन्धोऽस्याः। अजगन्धायाम्।

वस्तमोदा स्त्री० वस्तस्येव मोदो यस्याः। अजमोदायाम्।

वस्ति पु०वस्ते आच्छादयति मूत्रम् वस-तिच्। नाभेरधोभागे मूत्राधारे स्थाने,वासे च वसनदशायां स्त्री० व०व०। [अम्बष्ठवृक्षे।

वस्तिकर्माढ्य पु० वस्तिकर्मणा तच्छोधनव्यापारेणाढ्यः।

वस्तिमल न० ६त०। मूत्रे।

वस्तु न० वस-तुन्। द्रव्ये। पदार्थे, सत्यपदार्थे च।

वस्तुक न०वस्तु+स्वार्थे कन्। वास्तुके, शाकभेदे,श्वेतवस्तोशाके च

वस्त्य न० वस्तौ साधु यत्। गृहे।

वस्त्र न० वस-ष्ट्रन्। परिधानाद्युपयुक्ते कार्पासादौ वसने।

वस्त्रकुट्टिम न० वस्त्रनिर्मितं कुट्टिमं यत्र। वस्त्रगृहे (ताबु)।

वस्त्रगृह न० वस्त्रनिर्मितं गृहम् शाक०। (ताबु) वस्त्रनिर्मिते गृहे।

वस्त्रग्रन्थि पु० ६त०। नीव्याम्। [लिकायाम्।

वस्त्रपुत्तिका स्त्री० वस्त्रनिर्मिता पुत्तिका। वस्त्रनिर्मितपुत्त

वस्त्रभूषणा स्त्री० वस्त्रस्य भूषणं यस्याः ५ब०। मञ्जिष्ठायाम्। शाकरण्डवृक्षे पु०।

वस्त्ररञ्जन पु० वस्त्रं रञ्जयति रन्ज-णिच्-ल्यु। कुसुम्भे।

वस्न न०वस मन्। वेतने, द्रव्ये च। धने,त्वचि,मृत्यौ च मूल्ये पु०

वस्नसा स्त्री० वस्नं स्यति षो-क। स्नायौ।

वस्वौकसारा स्त्री० वसूनामोकस्य सारो यत्र। इन्द्रनगर्याम् इन्द्रनद्यां, कुवेरपुर्याञ्च।

वह दीप्तौ चु०उ० अक०सेट् इदित्। वंहयति ते अववंहत्।

वह प्रापणे भ्वा० उ०द्विक० यजा० अनिट्। वहति ते अवाक्षीत् ऊढा। [पथि, नद्दे च।

वह पु० उह्यतेऽनेन वह-घञ्। वृषस्कन्धदेशे, घोटके, वायौ,

वहल पु० वह-अलच्। पोते, दृढे त्रि०।

वहलगन्ध न० वहलो दृढो गन्धो यस्य। शम्बरचन्दने।

वहलचक्षुस् पु० वहलानि चक्षूंषीव पुष्पाण्यस्य। मेषशृङ्ग्याम् (गाडरसिङ्गा)।

वहलत्वच पु० वहला कठिना त्वचा यस्य। श्वेतलोध्रे।

वहला स्त्री० वहलानि पुष्पादीनि सन्त्यस्याः अर्श आद्यच्। शतपुष्पायाम् स्थूलैलायाञ्च।

वहित्र न॰ वह-इत्र । पोते जलयाने । स्वार्थे कन् । अत्रैवार्थे

वहिरङ्ग न॰बहि: प्रकृतेर्बाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्यया-
दिनिमित्तके प्रकृत्युरावयवादिकार्य्ये ।

वहिरिन्द्रिय न॰ वहिर्देहाद्बाह्यस्य पदार्थस्य ग्राहकमिन्द्रि-
यम् । शब्दादिबाह्यविषयग्राहकेषु श्रोत्रादिषु ।

वहिर्मुख त्रि॰ वहि: बाह्यविषये मुखं प्रवणता यस्य । बाह्य-
विषयासक्तमनस्के विषयासक्ते जने,विमुखे च ।

वहिस् अव्य॰ वह-इसुन् । बाह्ये । [विभीतकवृक्षे ।

वहेडुक पु॰ वह-अच् वहः एडुक इव इहत् काण्डो यस्य ।

वह्नि पु॰ वह-नि । अग्नौ, चित्रकवृक्षे, भल्लातके, निम्बूके
तन्त्रोक्ते रकारे च । 'वर्गाद्यं वह्निसंस्थ'मिति श्यामास्तोत्रम् ।

वह्निकरी स्त्री॰ वह्निं देहस्थवह्निं करोति उद्दीपयति कृ-ट
ङीप् । धात्री वृक्षे (धाइफुल) वह्न्युद्दीपके त्रि॰ ।

वह्निकाष्ठ न॰ वह्नेर्दीप्त्यादाहानुकूलं काष्ठम् । दाहागुरुणि ।

वह्निगन्ध पु॰ वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे (धुना)

वह्निगर्भ पु॰ वह्निर्गर्भे यस्य । वंशे, शमीवृक्षे स्त्री॰ ।

वह्निज्वाला स्त्री॰ वह्नेर्ज्वालेव पीडाकारकत्वात् । धातकीवृक्षे

वह्निदीपक पु॰ वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच्
ण्वुल् वह्निरिव दीप्यति दीप-ण्वुल् वा । कुसुम्भे अग्न्यु-
द्दीपके त्रि॰ अजमोदायाम् स्त्री॰ ।

वह्निनी स्त्री॰ वह्निं नयति नी-ड गौ॰ङीप् । जटामांस्याम्

वह्निपुष्प स्त्री॰ वह्निरिव तापकं पुष्पं यस्य । धातकीवृक्षे ।

वह्निभोग्य न॰६त॰ । घृते । [गणिकारीवृक्षे ।

वह्निमन्थ पु॰ वह्निर्वह्निजननाय मथ्यतेऽसौ मन्थ-घञ् ।

वह्निमित्र पु॰ वह्निर्मित्रं यस्य । वायौ ६त॰ । तत्रैव न॰

वह्निरेतस् पु॰ वह्नौ निषिक्तं रेतो येन । शिवे । वह्नौ हि
निषिक्तात् शिववीर्य्यात् गङ्गादिसंक्रमेण कार्त्तिकेयोत्पत्तिः

वह्निलोहक न॰ वह्नेः प्रियं लोहं धातुः स्वार्थे कन् । कांस्ये

वह्निवधू स्त्री॰ ६त॰ । अग्निभार्य्यायां स्वाहायाम्, तदा-
त्मके मन्त्रे च । वह्निजायादयोऽप्यत्र ।

वह्निवर्ण न॰ वह्नेरिव वर्णोऽस्य । रक्तोत्पले ।

वह्निवल्लभ पु॰ वह्नेर्वल्लभ उद्दीपकत्वात् । सर्जरसे, (धुना)

वह्निबीज न॰ वह्नेर्देहस्थाग्नेर्बीजमिव उद्दीपकत्वात् ।
जीरके, वह्निरेखाके तन्त्रोक्ते रकारे च ।

वह्निशिख न॰ वह्नेरिव रक्ता शिखाऽस्य । कुसुम्भे । कलि-
कार्यां, धातक्यां स्त्री॰ ।

वह्निसख पु॰ ६त॰ । वायौ । देहस्थाग्नेरुद्दीपके जीरके ।

वह्य न॰ वह यत् । शकटे, वाहनमात्रे च ।

वा सुखाप्तौ अक॰ गतौ सेवने च सक॰ चुरा॰ उभ॰ सेट् ।
वापयति ते अवीवपत् त ।

वा गमने हिंसने च अदा॰पर॰सक॰अनिट् । वाति अवासीत् ।

वा अव्य॰ वा-क्वि । विकल्पे, सादृश्ये, अवधारणे, समुच्चये,
वितर्के, पादपूरणे च ।

वांशिक पु॰ वंशो तद्वादनं शिल्पमस्य ठक् । वंशीवादनशीले

वांशी स्त्री॰ वंशे भवः अण् ङीप् । वंशरोचनायाम् ।

वाक पु॰ वच-घञ् । वचने 'नमोवाकं प्रशास्महे' इत्युत्तरचरि-
तम् ग्रन्थभेदे च 'वाकोवाक्ये तद्वासेत्यादि' छान्दोग्यम् ।
बकस्येदम् अण् । बकसम्बन्धिनि त्रि॰ ।

वाकुची स्त्री॰वाति क्विप् वाः कुच-सङ्कोचे क गौ॰ङीप्कर्म॰।
(हाकुच) ओषधिभेदे । [वचनयुक्ते ।

वाक्पति पु॰६त॰ । बृहस्पतौ, वाचः पतिरिव । निर्दोषोक्ति

वाक्पथ पु॰ वाचः पन्थाः विषयः अच् समा॰ । वाक्यविषये

वाक्पारुष्य न॰ वाचा पारुष्यम् । 'देशजातिकुलादीनामा-
क्रोशोन्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदु-
च्यते' इत्युक्तलक्षणे अष्टादशविवादान्तर्गते विवादभेदे ।

वाक्य न॰वच-ण्यत् चस्य कः । 'वाक्यं स्याद्योग्यताकाङ्क्षासत्ति-
युक्तः पदोच्चय' इत्युक्ते स्वार्थबोधसमाप्ते पदसमुदाये ।

वाक्ष स्पृहायां भ्वा॰पर॰सक॰सेट् इदित् । वाङ्क्षति अवाङ्क्षीत्

वागीश पु॰वाचामीशः । बृहस्पतौ 'वागीशाद्याः सुमनस इति
न्यायमाला । सरस्वत्यां स्त्री॰ "वागीशा हृदये यस्ये'ति
श्रीधरः ।

वागीश्वर पु॰६त॰ । बृहस्पतौ गुरौ च तत्पत्न्यां सरस्वत्यां स्त्री॰
ङीप् 'वागीश्वरी म्ब्वस्नातां फुल्लेन्दीवरलोचनाम् । वागी-
श्वरेण संयुक्ता'मिति तन्त्रम् ।

वागुजी स्त्री॰ वाचा गुज्यते ध्वन्यते गुज-क गौरा॰ ङीप् ।
सोमराज्याम् । [पाशादौ ।

वागुरा स्त्री॰ वा-हिंसने उर गुक् च । मृगार्थं मृगबन्धन-

वागुरावृत्ति पु॰ वागुरा मृगबन्धनपाशादिरेव वृत्तिर्जी-
विका यस्य । व्याधे । [व्याधे

वागुरिक पु॰ वागुरा प्रहरणं यस्य वागुरयाचरति वा ठक् ।

वागुम्बर पु॰६त॰ । वाक्यक्षोभे वक्तृश्लाघायां च ।

वाग्दण्ड पु॰ वाचो वागिन्द्रियस्य दण्डः संयमनम् । मित-
भाषणे वाक्यसंयमे च । [भर्त्सनायां कन्यायां म

वाग्दत्ता स्त्री॰ वाचा दत्ता । विधिना वाक्यमात्रेण दायं

वाग्दुष्ट त्रि॰ वाचा दुर्वचनेन दुष्टः । पद्मेपि वागानुप्रदत्तस्य
तया वचनेन दूषिते । 'वाग्दुष्टं भावदुष्टं च वर्ज्जयेदितिस्मृतिः

**वाग्देवता** स्त्री० वाचां देवता। सरस्वत्यां 'वाग्देवता चरितचित्रितचित्तसद्मे'ति जयदेवः। वाग्देव्यादयोऽप्यत्र।

**वाग्मिन्** त्रि० वाच्+अस्त्यर्थे ग्मिनि चस्य कः तस्य लोपः। प्रशस्तवाक्यवक्तरि। बृहस्पतौ पु०।

**वाग्यत** त्रि० वाचि वागिन्द्रियव्यापारे यतो येन। मौने 'वाग्यतस्त्रिषवणं चरेदि'ति स्मृतिः।

**वाङ्मय** त्रि० वाक्स्वरूपम् मयट् चस्य कः। वाक्यस्वरूपे शास्त्रे

**वाङ्मती** स्त्री० 'हिमाद्रेस्तुङ्गशिखरात् प्रोद्भूता वाङ्मती नदी'त्युक्ते नदीभेदे। सा च मिथिलादेशसन्निकटतया वहति

**वाचंयम** त्रि० वाचां यच्छति वाचा+यम-खच् मुम् ह्रस्वश्च। मितभाषिणि। मौनावलम्बिनि मुनौ पु०।

**वाचक** पु० वक्ति अभिधावृत्त्या बोधयति ण्वुल्। 'साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचक' इत्युक्ते शब्दभेदे। कथके त्रि०। वाचयति वच-णिच्-ण्वुल्। पुराणादिपाठके त्रि० 'वाचकः पूजितो येनेति' पुराणम्।

**वाचन** न० वच-णिच्-स्वार्थे वा णिच् ल्युट्। पठने कथने च युच्। पठने स्त्री०। [भाषादौ।

**वाचनिक** त्रि० वचनेन निर्वृत्तम् ठक्। वाक्यनिष्पादिते

**वाचस्पति** पु० ६त० अलुक् समा०। बृहस्पतौ।

**वाच्(चा)** स्त्री० उच्यतेऽसौ अनया वा वच-क्विप् नि० वा टाप्। वाक्ये, वागिन्द्रिये च।

**वाचाट** त्रि० वाक्+कुत्सायां बाहुल्येऽस्त्यर्थे आटच् भत्वात् न कः। कुत्सितबहुभाषिणि। आलच्। वाचालोऽप्यत्र।

**वाचिक** त्रि० वाचा कृतम् वाच्+ठक् भत्वात् न कः। वाक्यनिष्पादिते भाषादौ। [वाक्यनैर्मल्ये च।

**वाचोयुक्ति** स्त्री० ६त० अलुक् स०। वाचादर्शितयुक्तौ

**वाच्य** न० वच-भावे ण्यत् न कः। दूषणे, प्रतिपादने, कथने च। कर्मणि ण्यत्। दूष्ये, प्रतिपाद्ये, अभिधया बोध्यार्थे च।

**वाञ्छ** कामे भ्वा० पर० सक० सेट् इदित्। वाञ्छति अवाञ्छीत्।

**वाज** न० वज-घञ्। अन्ने घृते, जले, यज्ञे च। शरपक्षे, वेगे च पु०

**वाजपेय** पु० न० वाजमन्नं घृतं वा पेयमत्र। यागभेदे।

**वाजपेयिन्** पु० वाजपेय+अस्त्यर्थे इनि। वाजपेययागकर्त्तरि उपचारात् तद्यष्टे च।

**वाजसनेयिन्** पु० वाजसनेय' अध्येतृत्वेनास्त्यस्य इनि। यजुर्वेदशाखाभेदाध्यायिनि विप्रादौ। तद्भ्रष्टेन्या कर्माई शूद्रे च 'शूद्रा वाजसनेयिनः इति स्मृति। [इन् तत्रैव।

**वाजिदन्त** पु० वाजिनो दन्त इव पुष्पमस्य। वासके। स्वार्थे

**वाजिन्** पु० वाजः वेगः पक्षो वा अस्त्यस्य इनि। घोटके, वाणे, वासके च वेगवति त्रि०। स्त्रियां ङीप्। सा च अश्वगन्धायाञ्च

**वाजिन** न० वाजिभ्योदेयम् अण्। आमिक्षानिःसृतजले 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमि'ति, श्रुतिः।

**वाजिपृष्ठ** पु० वाजिन इव पृष्ठमस्य। अम्लानवृक्षे।

**वाजिभक्ष** पु० भक्ष्यते भक्ष-कर्म्मणि घञ् ६त०। चणके।

**वाजिभोजन** पु० वाजिभिर्भुज्यते भुज-कर्म्मणि ल्युट्। मुद्गे

**वाजीकरण** न० अवाजी वाजीव क्रियतेऽनेन वाजिन्+च्वि कृ-ल्युट्। 'यद्द्रव्यं पुरुषं कुर्य्यात् वाजिवत् सुरतक्षमम्। तद्वाजीकरणं ख्यातमि'त्युक्ते वीर्य्यवृद्धिकारके औषधभेदे

**वाञ्छा** स्त्री० वाछि-अ। इच्छायाम् इष्टसाधनताधीजन्येऽभीष्टविषये चित्तवृत्तिभेदे। [वास्तुभूमौ स्त्री०

**वाट** पु० वट-घञ्। पथि, स्थाने, प्रतिस्थाने च। गौ० ङीप्।

**वाटिका** स्त्री० वट-ण्वुल्। वास्तुभूमौ (बेड़ियाला) क्षुपे, हिङ्गुपत्र्याञ्च। [क्षुपभेदे।

**वाट्या** स्त्री० वाट्यै हिता तत्र साधुर्वा यत्। (बेड़ियाला)

**वाट्याल** पु० वाटीमलति भूषयति अल-अण्। (बेड़ियाला) क्षुपभेदे गौरा० ङीप्। तत्रैव स्त्री०। ण्वुल्। तत्रैवार्थे पु०

**वाड** आप्लावे भ्वा० आ० अ० सेट् चङि न ह्रस्वः। वाडते अवाडिष्ट

**वाडवेय** पु० वडवायां भवः ढक्। समुद्रस्थे वह्नौ वडवानले।

**वाढ** न० वह-क्त नि०। अतिशये, तद्युक्ते त्रि०। पु० मान्तावम्। प्रतिज्ञायां, स्वीकारे च अव्य०।

**वाण** पु० वण-घञ्। शरे, गवां स्तने, दैत्यभेदे, केवले, वह्नौ, काण्डावयवे, भद्रमुञ्जे, कादम्बरीग्रन्थकारके कविभेदे च 'पञ्च वाणस्तु वाण'इति प्रसन्नराघवम्। नीलझिण्टी पु० स्त्री०

**वाणपुर** न० ६त०। शोणितपुरे कोटरीपुराख्ये पुरभेदे।

**वाणवार** पु० वाणं परप्रक्षिप्तं वारयति वृ० वृ-अण्। योधादेर्योलाकारे सन्नाहे कवचे।

**वाणहन्** पु० वाणं हतवान् हन-ताडने भूते क्विप्। श्रीकृष्णे वाणजिदादयोऽप्यत्र। [ङीप्। वाक्ये, तद्देवतायाञ्च

**वाणि** स्त्री० वण-इण् वा ङीप्। वयने, वाणदण्डे, वेमनि,

**वात** गतौ सेवायां सुखीकरणे च सक० अद० चु० उभ० सेट्। वातयति ते अववातत् त।

**वात** पु० वा-क्त। स्पर्शमात्रविशेषगुणके भूतभेदे पवने, देहस्थे धातुभेदे च। गन्तरि त्रि०। आर्त्ते, धृष्टवादके च 'प्रभात वाताहतीति भट्टि.।

**वातक** पु० वात इव चञ्चलः इवार्थे कन्। अश्वगन्धायाम् आरे च

**वातकिन्** त्रि० वातोऽस्त्यस्य इनि कुक् च। वातरोगयुक्ते।

वातकेतु पु० ६त० । धूलौ रजसि ।

वातघ्नी स्त्री० वातं रोगभेदं हन्ति हन-टक् ङीप् । शालप र्ण्याम् (शालपानि) अश्वगन्धायां, सिंहपुच्छ्याम् (?) विशुड़ीक्षुपे च ।

वातध्वज पु० ६त० । मेघे । [वृक्षे

वातपोथ पु वातं रोगभेदं पुथ्यति हिनस्ति पुथ-अण् । पलाश

वातप्रमी स्त्री० वातं प्रमिणोति प्र+मा- ई किच्च । शीघ्रगे मृगे

वातमज पु० वातमनुलक्ष्य अजति अज-अच् व्यभावः । मृगभेदे ।

वातमृग पु० वातानुगो मृगः शाक० । शीघ्रगे मृगभेदे ।

वातरक्त न० वातज दुष्टं रक्तम् रुधिरं यत्र । रोगभेदे ।

वातरक्तघ्न पु० वातजरक्तं रोगभेदं हन्ति टक् । कुक्कुरवृक्षे (कुकुरसोङा) ।

वातरक्तारि पु०६त० । (गुलुञ्च) ख्यातायां लतायाम् ।[वृक्षे ।

वातरङ्ग पु० वातस्येव सततं रङ्गश्चलनमस्य । चलदले अश्वत्थ

वातरायण पु० वा क्त ततस्तरम् वातरमयनं यस्य णत्वम् । उन्मत्ते,प्रयोजनशून्ये पुरुषे, काण्डे, करपत्रे, कूटे, सरलद्रुमे च

वातरूप पु०वातेन रूप्यते रूप-घञ् । वातूले, उत्कोचे, इन्द्र-चापे च । [द्रव्ये त्रि० ।

वातल पु० वातं रोगभेदं लाति ला-क । चणके । वायुकारके

वातव्याधि पु० वातेन कायस्य धातुभेदेन जनितो व्याधिः शाक० । वातरोगे । [फलवृक्षे ।

वाताद पु० वाताय वातनिवृत्तये अद्यतेऽसौ अद-घञ् (बादाम)

वातापि पु० अगस्त्यनाशितेऽसुरभेदे । 'आतापिर्भक्षितो येन वातापिश्च महाबलः । समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु इति भोजनान्ते पाठ्यमन्त्रः । [अगस्त्ये मुनौ ।

वातापिसूदन पु० वातापिं सूदयति हिनस्ति सूद-ल्यु ।

वातामोदा स्त्री० वातेनामोदो यस्याः । कस्तूर्याम् ।

वातायन न० वातस्यायनं गतिर्येन । गवाक्षे वातस्येव शीघ्र मयनं गतिरस्य । अश्वे पु० ।

वातायु पु० वातमयते अय-उण् । हरिणे ।

वातारि पु० वातस्य रोगभेदस्यारिः । एरण्डवृक्षे, शतमूल्यां, शेफालिकायां, यवान्यां, भार्ग्यां, स्नुह्यां, विडङ्गे, सूरणे, भल्लातके, जतुकायाञ्च ।

वाताश्व पु० वात इव शीघ्रगोऽश्वः । अश्वजातिभेदे अश्वोत्तमे ।

वाति पु० वा-क्तिच् । वायौ ।

वातिक पु०वातादागतः ठक् । देहस्थवायुधातुजन्ये रोगभेदे ।

वातिग पु० वातिं वायुं गच्छति गम-ड । वार्त्ताकौ गम-अण् वातिगमोऽप्यत्र । [सम् च । वार्त्ताकौ ।

वातिङ्गण पु० वातिं देहस्थवातं वेगात् गणयति गण-अण् ।

वातीय न० वाताय वातनिवृत्तये हितः छ । काञ्जिके ।

वातुल पु० वातानां समूहः उलच् । वातसमूहे ।

वातूल त्रि० वात+अस्त्यर्थे ऊलच् । वातरोगयुक्ते उन्मत्ते समूहार्थे ऊलच् वातसमूहे पु० । [नोनः । वायुहीने त्रि०

वातोना स्त्री० वातमूनयति ऊन-अण् । गोजिह्वाक्षुपे वाते-

वात्या स्त्री० वातानां समूहः यत् । वातसमूहे 'जितस्य वात्या-मयचक्रे'ति नैषधम् ।

वात्सक न० वत्सानां समूहः वुञ् । वत्ससंघे ।

वात्सल्य न० वत्सलस्य भावः ष्यञ् । पुत्रादिस्नेहात्मगुणे रसभेदे

वात्स्य पु० वत्सस्यापत्यं यञ् । गोत्रप्रवर्त्तके मुनिभेदे ।

वात्स्यायन पु० वत्सस्य गोत्रापत्यं युवा वत्स+यञ् ततो युनि फक् । वत्सगोत्रोत्पन्ने न्यायसूत्रभाष्यकारके पक्षिलस्वामिनि मुनौ

वाद पु० वद-घञ् । तत्त्वबुभुत्सया कथने, 'प्रमाणतर्कसाधनोपा-लम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरि-ग्रहो वाद' इति गौतमोक्ते विचारात्मके वाक्यभेदे च ।

वादन न०वद-णिच्-कर्मणि ल्युट् । मृदङ्गादिवाद्ये । भावे ल्युट् । मृदङ्गादिताडनरूपे व्यापारे । [निर्मिते वस्त्रादौ ।

वादर न० वदरायाः कार्पास्याः विकारः अण् । कार्पाससूत्र-

वादरङ्ग पु० वादरं वदरासंबन्धिपत्रादिसादृश्यं गच्छति गम खच् डिच्च । अश्वत्थवृक्षे ।

वादरत त्रि० वादे विवादे रतः रम-क्त । अनुदिनविवादशीले

वादरा स्त्री० वातं वायुं राति ददाति रा-क पृ० तस्य दः । कार्पास्याम् ।

वादरायण पु० वदरीप्रधानं स्थानं वादरं वदयनं स्थानं यस्य । नित्यं वदरिकाश्रमवासिनि वेदव्यासे । स्वार्थे इञ् । वादरायणिरप्यत्र । अपत्ये इञ् । व्यासपुत्रे शुकदेवे ।

वादल न०वातं लाति आच्छादयति ला क पृ० तस्य दः । मधुयष्टौ

वादाम न० वातमम्यति हिनस्ति अम-अण् पृ० तस्य मः । स्वनामख्याते फलभेदे ।

वादित्र न०वद-णिच्-इत्र । मृदङ्गादिवाद्ये ।

वादिन् त्रि० वदति वद-णिनि । वक्तरि-अर्थिनि,विवादकर्त्तरि, विचारस्थले प्रथमपक्षप्रतिपादके च ।

वाद्य न० वद-णिच्-यत् । वादनीये मृदङ्गादौ ।

वाद्यभाण्ड न०कर्म० । वादनीयपात्रे । [नित्य । चण्डि न पुंसः

वा(बा)ध विघाते भ्वा०आत्म०सक० सेट् । वा(बा)धते अवा(बा)-

वा(बा)ध पु० वा(बा)ध-घञ् । प्रतिरोधे, प्रतिबन्धे, न्यायोक्ते साध्याभाववत्त्वेन ज्ञाने, अवा(बा)धाप्यत्र, पीडायाञ्च स्त्री० ल्युट् । वा(बा)धनमप्यत्रार्थे न० ।

वृ-णिच्-णिनि। वायुसञ्चारिण्यां देहस्थशिरायाम्।

**वायुसख** पु० वायोः सखा सहचरः अच् समा०। अग्नौ।

**वायुसखि** पु० वायुः सखा यस्य। अग्नौ।

**वाय्वास्पद** न० ६त०। वायुसञ्चारस्थाने आकाशे।

**वार्** न० पु० वृ-क्विप्। जले।

**वार** पु० वृ-घञ्। समूहे अवसरे स्वयोग्यकाले (पाला) 'वारोऽङ्कराजस्य सुरि'ति मा० १५०। द्वारे, शिवे, कुब्जवृक्षे, क्षणे सूर्य्यादिग्रहाणां अधिकृते दिने, यथा रविवारः रविस्वामिकं दिनम् इत्यादि। मद्यपात्रे च।

**वारक** त्रि० वारयति वृ-णिच्-ण्वुल्। प्रवृत्तिनिरोधके। अश्वगतिभेदे, अश्वविशेषे च पु०।

**वारण** न० वृ-णिच् ल्युट्। प्रवृत्तिप्रतिरोधे, निषेधे कुक्षादिधारणे च। गजे पु०। बाणवारे कवचे पु०न०।

**वारणबुषा(सा)** स्त्री० वारणं बुष्यति बुष-क पृ०। कदल्याम्

**वारणवल्लभा** स्त्री० ६त०। कदल्याम्।

**वारटा** स्त्री० वारं जलं वर्त्मत्वेन इष-क। भान्ये। [वेश्यायाम्

**वारमुख्या** स्त्री० वारे वेश्यावृन्दे मुख्या। बहुजनसत्कृतायां

**वारंवारम्** अव्य० वृ-णमुल् द्वित्वम्। पौनःपुन्ये।

**वारलीक** पु० वार्जलं अलीकं यत्र। (वानुइ तलवी) तृणे।

**वारयितृ** पु० स्त्री० वृ-तृच्। पत्यौ। वारणकर्त्तरि त्रि०।

**वारयोषा** स्त्री० वारस्य जनसमूहस्य योषा साधारणत्वात्। वेश्यायाम्। ६त०। वारवध्वादयोऽप्यत्र।

**वारवाण** पु०न० वार्यते वृ-घञ् वारो वार्यो बाणो यस्य। कवचे

**वारवाणि** स्त्री० वारं समूहं वणते वण इञ् वा ङीप्। वेश्यायाम्

**वाराणिधि** स्त्री० वारां जलराशीनां निधिराधारः नि+धा-कि अलुक् समा०। समुद्रे।

**वाराणसी** स्त्री० वरणा च असी च सीमात्वेनास्त्यस्या अण् पृ०। काशीनगरे वराणस्यप्यत्र।

**वाराह** पु० वराहस्येदं भिन्नत्वात् अण्। महापिण्डीतक वृक्षे वराहसम्बन्धिनि त्रि०। [ङीप्। अश्वगन्धायाम्।

**वाराहकर्णी** स्त्री० वराहस्येव वाराहस्येव कर्णः पत्रमस्याः

**वाराहपत्री** स्त्री० वाराहस्य कर्ण इव पत्रमस्याः ङीप्। अश्वगन्धायाम्।

**वाराहाङ्गी** स्त्री० वाराहमिवाङ्गमस्याः ङीप्। दन्तीवृक्षे।

**वाराही** स्त्री० वराहस्येयम् अण् ङीप्। अष्टमातृकामध्ये वराह शक्तौ, 'वाराही नारसिंही चेति स्मार्त्तपाठः। वराहक्रान्तायाम् वराहयोषिति च।

**वारि** न० वृ-इञ्। जले, ह्रीबेरे च। वार्यतेऽनया वृ-णिच्-इञ् वा ङीप्। गजबन्धन्याम् 'वार्य्यर्गलाभङ्ग इव प्रवृत्त' इति रघुः। वाचि सरस्वत्याम् च स्त्री।

**वारिकण्टक** पु०न० वारिणः कण्टक इव। शृङ्गाटके।

**वारिकर्णी** स्त्री० वारिणि कर्ण इव पत्रमस्याः ङीप्। कुम्भ्याम् (पाना) स्वार्थे कन्। तत्रैव। [स्वार्थे कन्। तत्रैव।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात्। शृङ्गाटके

**वारिचत्वर** पु० वार्य्येव चत्वररूपमस्याधारत्वात्। कुम्भिकायाम्

**वारिचर** पु० वारिषु चरति चर-अच्। मत्स्ये जलचरजन्तुमात्रे त्रि०। [स्यात् शैवाले

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुपुच्छाकृति-

**वारिज** न० वारिणि जायते जन-ड। पद्मे, लवङ्गे, गौरसुवर्णे, लवणभेदे च। शङ्खे, शम्बूके च पु०। [च

**वारितस्कर** पु० वारिणस्तस्कर इवापहारकत्वात्। सूर्य्ये, मेघे

**वारित्रा** स्त्री० वारिणस्त्रायते त्रै-क। छत्रे। [त्रि०

**वारिद** न० वारि ददाति दा-क। मेघे, मुस्तके च। जलदातरि

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-कि ६त०। समुद्रे वारिनिध्यादयोऽप्यत्र। [(पाना)

**वारिपर्णी** स्त्री० वारिणि पर्णान्यस्याः ङीप्। कुम्भिकायाम्

**वारिपालिका** स्त्री० वारीणि पालयति आवृणोति पाल-ण्वुल्। कुम्भिकायाम् (पाना)। [कायाम् (पाना)।

**वारिपृश्नी** स्त्री० वारिणि पृश्निः पर्णमस्याः ङीप्। कुम्भि-

**वारिबदरा** स्त्री० वारिसमीपभवा बदरेव। प्राचीनामलके।

**वारिबालक** न० वारिणो बालक इव। ह्रीबेरे

**वारिभव** न० वारिणो भवति प्रभवति भू-अच्। स्रोतोञ्जने।

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य। मेघे

**वारिमूली** स्त्री० वारिणि मूलमस्याः ङीप्। कुम्भ्याम् (पाना)

**वारिरथ** पु० वारिणि रथ इव गमनसाधनम्। भेलके।

**वारिराशि** पु० वारीणां राशियोऽत्र। समुद्रे। [त्रि०

**वारिरुह** न० वारिणि रोहति रुह-क। पद्मे, जलजातमात्रे

**वारिवदन** न० वारियुक्तं वदनं यस्मात्। प्राचीनामलके तत्सेवने हि मुखे वारिनिःस्रावः।

**वारिवर** न० वारि वृणोति वृ-अच्। करमर्दके। [बदर्य्याम्।

**वारिवल्लभा** स्त्री० वारि वल्लभमस्याः जलसिक्तत्वात्।

**वारिवाह** पु० वारीणि वहति वह-अण्। मेघे।

**वारिश** पु० वारिणि समुद्रजले शेते शी-ड। विष्णौ।

**वारीश** पु० ६त०। समुद्रे, वरुणे च। वारिनाथादयोऽप्यत्र।

**वारुण** न० वरुणस्येदम् अण्। जले, वरुणसम्बन्धिनि त्रि०।

**वारुणि** पु० वरुणस्यापत्यम् इञ्। अगस्त्यमुनौ भृगुप्रजा-

त्वात् मैत्रावरुणापत्यत्वाच्च तथात्वम् ।

**वारुणी** स्त्री॰ वरुणोदेवतास्य वरुणस्येदं वा अण् ङीप् । पश्चिमदिशि, मदिरायाम्, शतभिषानक्षत्रे, दूर्व्वायां, गण्डदूर्व्वायाम्, इन्द्रवारुण्यां, शतभिषानक्षत्रयुक्तचैत्र-कृष्णत्रयोदश्यां, वरुणस्त्रियाञ्च ।

**वारेन्द्री** स्त्री देशभेदे, (वारेन्द्रभूमि) (राजसाही) वङ्गदेशप्रदेशे

**वार्त्त** न॰ वृत्ति+अण् । आरोग्ये । निरामये, वृत्तिशीले च त्रि॰ । दुर्गायां, कृषिकर्म्मणि, वृत्तौ, जनश्रुतौ, वृत्तान्ते, काल-कर्त्तृके भूतनाशने च स्त्री॰ 'अस्मिन् महामोहमये कटाहे सूर्य्याग्निना रात्रिदिनेन्धनेन । मासर्त्तुदर्व्वीपरिघट्टनेन भूतानि कालः पचतीति वार्त्ता इति भारतम् ।

**वार्त्ताक** पु॰ वार्त्तमारोग्यमाकयति गमयति अक-णिच्-अण् । वार्त्ताकौ । स्त्रियामपि तत्पक्षे ङीप् । वृ॰ स्वल्पम् वार्त्ता कुरस्तत्र स्त्री॰ 'वार्त्ताकुरेषा गुणसम्प्रयुक्ते'ति वैद्यकम् ।

**वार्त्तावह** पु॰ वार्त्तामावहति आ+वह-अण् । कृषिवाणिज्या जीविनि वणिग्भेदे । वृत्तान्तवाहके त्रि॰ ।

**वार्त्तिक** न॰ वृत्तिरूपेण कृतो ग्रन्थ ठक् । 'उक्तानुक्तदुरुक्तार्थ व्यक्तकारि तु वार्त्तिक'मित्युक्ते सूत्रादुक्ताद्यर्थाविष्कारके ग्रन्थभेदे ।

**वार्द्दर** न॰ वारि जलाय दीर्य्यते दृ-अप् । दक्षिणावर्त्तशङ्खे, काकचिञ्चायाम्, कृष्णनावीजे, कृमिजे, आम्रवीजे च । वारेः दरम् । जले । [समूहे वृद्धस्य भावे कर्म्मणि च ।

**वार्द्धक** न॰ वृद्धानां समूहः तस्य भाव कर्म्म वा वुञ् । वृद्ध

**वार्द्धक्य** न॰ वृद्धस्य भाव' कर्म वा ष्यञ् कुक् च । वृद्धत्वे ।

**वार्द्धि** पु॰ वारि जलानि धीयन्तेऽत्र धा-कि उप॰ । समुद्रे ।

**वार्द्धिभव** न॰ वार्द्धौ समुद्रे भवति भू-अच् । सामुद्रलवणे ।

**वार्द्धुषि** पु॰ वृद्ध्या जीवति इण् वृद्धेर्वृधुषिभाव । वृद्ध्याजीवे । स्वार्थे कन् । तत्रैव । [वृद्ध्याजीविनि

**वार्द्धुषिन्** त्रि॰ वृद्धि+अस्त्यर्थे इनि प्रकृतेः नि॰ वार्धुषिभाव ।

**वार्द्धुष्य** न॰ वार्द्धुषेर्भाव' ष्यञ् । धान्यादेर्वर्द्धनोपाये (वाडिदेया)

**वार्द्ध्रीणस** पु॰ वारि जलानि धयति धा-क्विप् वार्द्ध्री नसा नासिका यस्य णत्वम् वृ॰ । गण्डके । वृ॰ वार्ध्रीणस' । 'त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम् । वार्ध्रीणस' प्रोच्यतेऽसौ' इत्युक्ते पशुभेदे 'वार्ध्रीणसस्य मांसेन तृप्तिर्द्वा-दशवार्षिकी'ति मनु' ।

**वार्म्मण** न॰ वर्म्मणां समूह' अण् न टिलोपः । कवचसमूहे ।

**वार्म्मिण** न॰ वर्म्मिणां समूह' अण् न टिलोपः । कवचिसमूहे

**वार्मुच्** पु॰ वारि जलानि मुञ्चति मुच-क्विप् । मेघे ।

**वार्षिक** त्रि॰ वर्षे वर्षासु वा भव' ठञ् । वत्सरभवे, वर्षाकालभवे च । त्रायमाणालतायां न॰ स्त्री॰ स्त्रीत्वे ङीप् । वर्षक-र्त्तव्यायां पूजायां स्त्री॰ ङीप् । 'शरत्काले महापूजा क्रियते या च वार्षिकी'ति चण्डी ।

**वार्हत** न॰ वृहत्या फलम् अण् तस्य न लुप् । वृहतीफले ।

**वार्हद्रथ(थि)** पु॰ वृहद्रथस्यापत्यमण्, इञ् वा । वृहद्रथराज पुत्रे जरासन्धे नृपे ।

**वार्हस्पत्य** न॰ वृहस्पतिना प्रोक्तमधीते अञ् । चार्व्वाके । तेन प्रोक्तं तस्येदं वा अञ् । नीतिशास्त्रे, बौद्धागमे च वृहस्पति सम्बन्धिनि त्रि॰ । [द्वितीये करणे ।

**वालव** पु॰ वल-घञ् ष॰ लघ्वलनमस्त्यास्ति व । तिथ्यर्द्धात्मके

**वाल्क** न॰ वल्केन निर्वृत्तमण् । वल्कजाते वस्त्रे । [मुनिभेदे

**वाल्मिकि** पु॰ वल्मिकौ भवः इञ् । रामायणग्रन्थकर्त्तरि

**वाल्मीक(कि)** पु॰ वल्मीके भव' अण् इञ् वा । मुनिभेदे ।

**वावदूक** त्रि॰ वद यङ् लुक्-ऊकञ् । बहुवदनशीले वक्तरि

**वावय** पु॰ वय-यङ्लुक् अच् । (वावुइ) तुलसीभेदे ।

**वावृत** संभक्तौ दि॰ आत्म॰ सक॰ सेट् क्त्वावेट् । वावृत्यते अवा-वर्त्तिष्ट । 'ततो वावृत्यमाना से'ति भट्टि ।

**वावृत्त** त्रि॰ वावृत-क्त । कृतवरणे ।

**वाश** तिरश्चां शब्दे अक॰ आह्वाने सक॰ दि॰ आत्म॰ सेट् चङि न ह्रस्वः । वाश्यते अवाशिष्ट । 'उद्वाश्यमानः पितर'मिति भट्टि

**वाशा** स्त्री॰ वां गतिं श्यति शो-क । वासके । स्वार्थे कन् तत्रैव

**वाशित** न॰ वाश-भावे क्त । तिरश्चां शब्दे, आह्वाने च ।

**वाशिता** स्त्री॰ वाश-क्त । करिण्याम्, स्त्रीमात्रे च ।

**वाशि(सि)ष्ठ** न॰ वशि(सि)ष्ठस्येदम् अण् तेन प्रोक्तं वा अण् । वशिष्ठप्रणीते उपपुराणभेदे, योगशास्त्रभेदे च । वशि(सि)ष्ठसम्बन्धिनि त्रि॰ । गोमत्यां नद्यां स्त्री॰ ङीप् ।

**वाश्र** न॰ वाश-रक् । गृहे, चतुष्पथे च । दिवसे पु॰ ।

**वाष्प(स्प)** पु॰ वा-प पु(सु)क् च । ऊष्मणि, लौहे, चक्षुर्जले च संज्ञायां कन् । मारिषशाके (नटिया) हिङ्गुपत्र्यां स्त्री॰ गौ॰ ङीष् । वाष्पी(स्पी)+कन् । वाष्पि(स्पि)काप्यत्र । 'न

**वास** सुरभीकरणे अ॰ चु॰ उ॰ सक॰ सेट् । वासयति ते अववासत्-

**वास** पु॰ वस-घञ् । गृहे वस्त्रे अवस्थाने, वास-अच् । वासके, सुगन्धे च । [वासक' कासनाशक' इति वैद्यकम् ।

**वासक** पु॰ वास-ण्वुल् । स्वनामख्याते वृक्षे 'येन तेन प्रकारेण

**वासकसज्जा** स्त्री॰ 'कुरुते मण्डनं या तु सज्जिते वासवेश्मनि । सा तु वासकसज्जा स्या'दित्युक्तलक्षणे नायिकाभेदे वासकसज्जाप्यत्र ।

वासगृह न० वासयोग्यं गृहम्। मध्यगृहे।

वासतेयी स्त्री० वसतये हिता ढक्। रात्रौ। वसतियोग्ये त्रि० 'वनेषु वासतेयेष्विति भट्टिः।

वासन न० वास-ल्युट्। सुरभीकरणे धूपने, वारिधान्याम्, वस्त्रे, वासस्थाने, ज्ञाने च वस णिच् ल्युट्। निक्षेपाधारे, निक्षेपार्थे मुद्राङ्किते च। [सुरभीकरणे च

वासना स्त्री० वास-युच्। प्रत्याशायां ज्ञाने, स्मृतिहेतौ, संस्कारे,

वासन्त पु० वसन्तस्येदम् वसन्ते भव वा अण्। वसन्तप्रिये उष्ट्रे, कोकिले च। वसन्तभवे-मलयवायौ मुद्गे, कृष्णमुद्गे मदनद्रुमे च। तत्कालभवे त्रि०। यूथ्यां माधवीलतायां, पाटलायां नवमल्लिकायां, तत्कालेपूज्यायां-दुर्गायाञ्च स्त्री०

वासयोग पु० वासेन गन्धेन योगोऽत्र। (आबिर) चूर्णभेदे

वासर पु०न०। वस-अरन्। दिवसे। नागभेदे पु०।

वासव पु० वसुरेव स्वार्थेऽण् वसूनि सन्त्यस्य वा अण्। इन्द्रे वसोरपत्यं स्त्री अण् ङीप्। व्यासमातरि मत्स्यायाम् स्त्री०।

वासवदत्ता स्त्री० वासवदत्तामधिकृत्य कृतो ग्रन्थः अण् आख्यायिकायां तस्य लुक्। वासवदत्ताचरिताख्यापके ग्रन्थभेदे। ३त० इन्द्रदत्ते त्रि०।

वासस् न० वस-असि। वस्त्रे।

वासागार न० वासयोग्यमगारम्। वासयोग्ये गृहे गृहमध्ये

वासि(सी) स्त्री० वस-इञ् वा ङीप्। कुठारभेदे (वाइस)

वासित त्रि० वास-क्त। सुरभीकृते।

वासिनी स्त्री० वासोऽस्त्यस्या इनि। शुक्लझिण्ट्याम्।

वासु पु० वस-उण्। विष्णौ।

वासुकि पु० वसुना रत्नेन कायति कै क स्वार्थे इञ्। सर्पराजे 'भगिनी वासुके स्त्वये'ति मनसास्तोत्रम्।

वासुदेव पु० वसुदेवस्यापत्यम् अण्। विष्णौ।

वासुदेवप्रियङ्करी स्त्री० ६त०। शतावर्य्याम्, श्रीकृष्णप्रियकारिण्यां दुर्गायाञ्च।

वास्रा स्त्री० वास-र। नाट्योक्तौ मातायाम्।

वास्तव न० वस्तोरण्। सद्भूते पदार्थे। [पदार्थे।

वास्तविक त्रि० वस्तुतो निर्वृत्तम् ठञ्। सत सिद्धे सद्भूत

वास्तव्य त्रि० वसति वस-तव्य णित्०। वासकर्त्तरि, वासयोग्ये स्थाने, वसतौ च पु०। [स्वार्थे कन्। शाकभेदे।

वास्तु पु० वस-तुण्। वासयोग्यभूमौ, गृहनिर्माणस्थाने शाके च।

वास्तूक न० वास्तु कन् पु० दीर्घः। वास्तुशाके त्रिलोमक स्त्री० गौरा० ङीष्।

वास्तेय त्रि० वस्तेरिदम् वस्तये हितं वा ढक्। वस्तिसम्बन्धिनि वासयोग्ये च।

वास्तोष्पति पु० ६त० अलुक्समा०। इन्द्रे, वास्तुभूमिपतौ च।

वास्त्र पु० वस्त्रेणावृतो रथः अण्। वस्त्रेण सम्यगावृते रथे।

वास्रेय पु० वास्याय हित ढक्। नागकेशरे।

वाह् यत्ने भ्वा० आ० अक० सेट् चङि न ह्रस्व। वाहते अववाहिट

वाह पु० उह्यतेऽनेन अश्वादिना वा वह घञ्। अश्वे 'वाहो भारचतुष्टयमि'त्युक्ते परिमाणभेदे च। [द्वयोर्मध्यत्व

वाहद्विषत् पु० वाहं द्वेष्टि द्विष शतृ ६त०। महिषे वाहरिपा·

वाहन न० वाहयत्यनेन वह-णिच्-ल्युट्। रथादौ याने।

वाहस पु० वाहं गतिं स्यति षो-क। अजगरे, सुनिषण्णके (सुषनि) शाके च। [इ०। गजकुम्भस्याधोभागे।

वाहित्थ न० वहतीति णिनि वाही-तस्मिन् तिष्ठति स्था-क

वाहिनी स्त्री० वाहोऽस्त्यस्या इनि ङीप्। सेनायां, वहति वह-णिनि। नद्याम् 'वाहिन्य पार्श्वमेता न जहतीति काव्यप्रकाश।

वाहिनीपति पु० ६त०। सेनापतौ, समुद्रे च।

वाहीक पु० वह-ईकण्। जातिभेदे (जाट)। गौर्वाहीक इति अलङ्कार। देशभेदे च।

वाहु पु० वह-उण्। भुजे अवयवभेदे, अङ्कशास्त्रोक्ते क्षेत्र व्यवहारे भुजाकारे रेखाभेदे च।

वाहुमूल न० ६त०। भुजद्वयस्य मध्ये कक्षरूपे अङ्गे।

वाहुवार पु० वाहुं वारयति वृ-णिच्-अण्। श्लेष्मातकवृक्षे

वाह्य न० वाहं चालनमर्हति यत्, वह-ण्यत् वा। अश्वादौ याने, वानरे च। बहिर्भव० ष्यञ् टिलोप। बहिर्भवे त्रि०।

वाह्येन्द्रिय न० वाह्यपदार्थानां शब्दादीनां ग्रहणयोग्यमिन्द्रियम्। शब्दादिग्राहके श्रोत्रादौ इन्द्रिये।

वाह्लि(ह्ली)क पु०। वह-क्लिप् स्वार्थे कन्। देशभेदे। तद्देशजाते-कुङ्कुमे, हिङ्गुनि न०।

वि अव्य० वा-कि। नियोगे, विशेषे- निश्चये, असहने, निषेधे, हेतौ, अव्याप्तौ, ईषदर्थे, परिभवे, शुद्धौ, अवलम्बने, ज्ञाने, गतौ, आलस्ये, पालने च। विहगे पु०। [पूर्यते तस्मिन्

विंश त्रि० विंशते पूरण विंशति+डट्। येन विंशतिसङ्ख्या

विंशक न० विंशतेरवयव वुन्। विंशतिसंख्यायाम्। विंशतिरधिका दीयतेऽस्मिन् शते ग्रामो लाभो वृद्धि वा-डुन्। प्रतिशत विंशत्यधिकलाभादौ 'शाकट्या विंशं शतमिति भट्टि०।

विंशति स्त्री० द्वे दशतौ नि०। द्विदशकसंख्यायां, तत्संख्याते च

विगीत त्रि० वि+गै-क्त । निन्दिते ।
विगीति स्त्री० वि+गै-क्तिन् । निन्दायाम् ।
विगुण त्रि० विरुद्धो गुणोऽस्य । गुणरहिते ।
विगूढ त्रि० वि+गुह-क्त । गर्हिते,गुप्ते च । [वाक्यस्थे पदे च
विगृहीत त्रि० वि+ग्रह-क्त । गृहीते, व्याकरणोक्ते विग्रह-
विग्र त्रि० विगता नासिकाऽस्य ग्रादेशः । विगतनासिके ।
विग्रह पु० वि+ग्रह-अच् । देहे, विभागे, युद्धे, समासादिवृत्ति
समानार्थकवाक्यभेदे, विशेषज्ञाने च । [त्मके काये ।
विघटिका स्त्री०विभागः घटिकायाः । घटिकाषष्टिभागे पला-
विघटित त्रि० वि+घट-क्त । वियोजिते विशेषेण रचिते च ।
विघट्टित त्रि० वि+घट्ट-क्त । चालिते, वियोजिते च ।
विघस पु० वि+अद-अप् । भोजनशेषे,आहारे च सिक्थके न०
विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमश्नाति अश-
णिनि । देवपितृकार्यानन्तरं तदशिष्टभोजिनि ।
विघात पु० वि+हन-क्त । व्याघाते,आघाते च ।
विघातिन् त्रि० वि+हन-णिनि । निवारके । नाशके, नष्टे च
'नित्यशायं यत् निमित्तो विघाती'ति व्याकरणम् । ण्वुल् ।
विघातकोऽप्यत्र ।
विघ्न पु० वि+हन-क । व्याघाते अन्तराये, कृष्णपाकफलायाञ्च
विघ्ननाशक पु० ६त० । गणेशे विघ्नविनाशनादयोऽप्यत्र ।
विघ्नराज पु० विघ्ने राजते अच् । गणेशे । विघ्नेशादयोऽप्यत्र
विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे ।
विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।
विघ्नेशानकान्ता स्त्री० ६त० । श्वेतदूर्वायाम् ।
विच पृथक्करणे रु०जु०च उ०सक०अनिट् । विनक्ति विवेक्ति
विङ्क्ते वि विक्ते । अविचत् अवैक्षीत् ।
विचकिल पु० विच+क्विप् किल-क कर्म्म० । मदनवृक्षे ।
विचक्षण पु० वि+चक्ष-ल्यु । पण्डिते नागदन्त्यां, स्त्री०टाप्
विचयन न० वि-चि-ल्युट् । अन्वेषणे, पुष्पादिचयने च ।
विचर्चिका स्त्री० वि+चर्च ण्वुल् । पामनि रोगभेदे ।
विचार पु० वि+चर-घञ् । तत्त्वनिर्णये, तदनुगुणे वाक्यसोमे च
विचारण न० वि+चर-णिच्-ल्युट् । मीमांसायाम् । युच् ।
तत्रैव स्त्री० ।
विचि(ची) पु० स्त्री० विच-इन् । तरङ्गे स्त्रीत्वपक्षे वा ङीप् ।
विचिकित्सा स्त्री० वि+कित-स्वार्थे सन् अ । सन्देहे ।
विचित्र न०विशेषेण चित्रम् । कर्बुरवर्णे । तद्वति, आश्चर्य्ये च
त्रि० । स्वार्थे कन् । भुर्जपत्रवृक्षे पु० ।
विचित्रवीर्य्य पु० शान्तनुपत्नीसत्यवत्याः पुत्रभेदे ।
विचित्राङ्ग पु०विचित्रमङ्गं यस्य (चिते) व्याघ्रभेदे,आश्चर्य्यदेहे त्रि०
विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । दुष्टचित्ते
विशिष्टचित्ते च । [क्त । विशेषेण चेष्टायाम् न० ।
विचेष्टित त्रि० विगतं चेष्टितमस्य । चेष्टाशून्ये, वि+चेष्ट भावे
विच्छ दीप्तौ चु उभ सक०सेट् । विच्छयति ते अविविच्छत् त
विच्छ गतौ तु० पर० आयपक्षे उ० सक०सेट् । विच्छायति
विच्छायते विच्छति । अविच्छायीत् अविच्छायिष्ट अविच्छीत्
विच्छन्दक पु० विशिष्टः छन्दोऽयत्र कप् । देवगृहभेदे ।
विच्छाय न० वीनां पक्षिणां छाया नपुंसकत्वम् । पक्षिसमूह-
च्छायायाम् । विगता च्छाया यस्य । छायारहिते त्रि० ।
विच्छित्ति स्त्री० वि+छिद-क्तिन् । अङ्गरागे हारभेदे, छेदे,
विनाशे, विच्छेदे, स्त्रीणां चेष्टाभेदे च । [छेदने न०
विच्छिन्न त्रि० वि+छिद-क्त । विभक्ते, समालब्धे च भावे-क्त ।
विच्छेद पु०वि+छिद-घञ् । वियोगे,सन्ततिराहित्ये, विभागे च
विज पृथक्करणे जु०उभ०सक०अनिट् । वेवेक्ति वेविक्ते अवि-
जत् अविजीत् अविक्त ।
विज भये कम्पे च रु०प०अक०सेट् । विनक्ति अविजीत् । [विग्नः
विज भये कम्पे च तु०आ०अ० अनिट् । विजते अविजिष्ट । क्त-
विजन त्रि० विगतो जनो यस्मात् । निर्जने ।
विजनन न० वि+जन-ल्युट् । गर्भमोचने, प्रसवे, उद्भवे च ।
विजय पु० वि+जि-कर्त्तरि अच् । अर्जुने, विमाने यमे च ।
भावे अच् । जये, परिभवपूर्व्वकपराजये च ।
विजयकुञ्जर पु० विजयाय कुञ्जरः । राजवाहनगजे ।
विजया स्त्री०आश्विनशुक्लपक्षीयदशम्याम् उमायाः सखीभेदे,
'कथयत विजये'ति मुद्राराक्षसम् । दुर्गायां, जयन्त्यां,
शेफालिकायां, मञ्जिष्ठायां, शमीभेदे, अग्निमन्थे, भङ्गायाम्,
(सिद्धि) वचहादशीमध्ये, 'यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं
भवेत् । तदा सा तु महापुण्या द्वादशी विजया स्मृते'त्युक्ते
द्वादशीभेदे, 'शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत् ।
सप्तमी विजया नाम'त्युक्ते सप्तमीभेदे च । [विजयिनि ।
विजातीय त्रि० विभिन्नां जातिं धर्मम्अर्हति छ । विभिन्नधर्म्मा-
विजिगीषा स्त्री० विजेतुमिच्छा वि+जि-सन् अ । स्पोदर-
पूरणेच्छया निन्दनीयकर्मादौ प्रवृत्तौ तन्निन्दाऽश्रवने,
विजयेच्छायाञ्च । उ । विजिगीषुः । जयेच्छावति त्रि० ।
विजिन न० विज-इन किञ्च । वने व्यञ्जनभेदे ।
विजुल पु० विज-उलच् किञ्च । शाल्मलीकन्दे ।
विजृम्भण न० वि-जृभि-ल्युट् । विकाशे, मुखविकाशजनकेऽगभूते
वायुव्यापारभेदे (हाइतोला) ।

विजृम्भित त्रि० वि+जृभि-क्त । विकसिते भावे क्त । प्रकाशे
विज्जुल न० विज-उलच् लुट् च । त्वचे (दारचिनि) ।
विज्ञ पु० विशेषेण जानाति ज्ञा-क । प्रवीणे, पण्डिते च ।
विज्ञात त्रि० वि+ज्ञा-क्त । ख्याते, ज्ञाते च ।
विज्ञान न० वि+ज्ञा-ल्युट् । ज्ञाने, कर्मणि, शिल्पादिज्ञाने, वेदान्तोक्ते अविद्यावृत्तिभेदे च ।
विज्ञानमयकोष पु० विज्ञानात्मक कोषरवावरकत्वात् । ज्ञानेन्द्रियसहिते बुद्धिवृत्तिभेदे ।
विज्ञानिक त्रि० विज्ञानमस्त्यस्य ठन् । विज्ञ नयुक्ते ।
विट आक्रोशे सक० स्वने अक०भ्वा०पर०सेट् । वेटति अवेटीत्
विट पु०विट-क ।विङ्गे, जारे, शृङ्गाररसनायकानुचरे धूर्त्ते, 'विट ! विटपममुमिति माघ । पर्व्वतभेदे, लवणभेदे, खदिरभेदे, नाट्ङ्गरङ्गे, मूषिके च ।
विटङ्क न० वि टकि-अच् । कपोतपालिकायां प्रासादाद्यग्रस्थे काष्ठनिर्मिते कपोतावासस्थाने । (पायराखोप)
विटप पु०न० । विटं विस्तार पाति पा-क । शाखायां, पल्लव-विस्तारे, स्तम्बे, पल्लवे च विटपालके त्रि० 'विट ! विटप-ममुन्दद्स्वे'ति माघ ।
विटपिन् पु० विटप+अस्त्यर्थे इनि । वृक्षे, वटवृक्षे च ।
विटलवण न० विडिव लवणम् पु० । विड्लवणे ।
विटि(टी) स्त्री० विट-कि वा ङीप् । पीतचन्दने ।
विट्खदिर पु०"विडिव दुर्गन्ध खदिर" । (गुयेवावला) वृक्षे
विट्चर पु० विष्ठु-विष्ठायां चरति चर-अच् । ग्राम्यसूकरे
विट्पति पु० विशते विश-क्विप् विश० कन्याया पति । जामातरि । [त्रि०] पक्षिभेदे ।
विट्सारिका स्त्री० विडिव दुर्गन्ध० सारिका । (गुयेसा-
विड आक्रोशे भ्वा०पर०सक०सेट् । वेडति अवेडीत् ।
विड न० विड क । लवणभेदे । [त्रि०
विडङ्ग पु०न०विड-अङ्गच् । स्वनामख्याते औषधभेदे।'अभिधा
विडम्बन न०वि-डबि-ल्युट् ।तिरस्कारणे अनुकरणे च। वृत्।
विडम्बनायत स्त्री०। 'इयञ्च तेऽन्या पुरतो विडम्बनेति कु०
विडाल पु० विड-कालन् । स्वनामख्याते पशुभेदे, नेत्रपिण्डे, नयनौषधिभेदे च । विडाली स्त्री० ङीप् । संज्ञायां कन् । हरिताले न० । स्वार्थे कन् विडाले पशौ पु० ।
विडीन न० वि+डी-क्त । पक्षिणां गतिभेदे ।
विडुल पु० विड कुलन् । वेतसवृक्षे । [पु० वा कौत् । इन्द्रे ।
वि(डौ)डोजस् पु० विष-क्विप् विट् व्यापकमोजो यस्य
विड्गन्ध न० विष इव गन्धोऽस्य । विड्लवणे ।
विड्लवण न० विडिव दुर्गन्धं लवणम् । स्वनामख्याते लवणभेदे
विड्वराह पु०विट्प्रियो वराह शाक० । ग्राम्यसूकरे 'लशुनं विड्वराहञ्चे'ति मनु० ।
वितंस पु० वि+तनुस-घञ् । पक्षिणां बन्धनसाधने रज्जुप्रभृतौ
वितण्डा स्त्री०वि-तडि-अ । स्वपक्षाव्यवस्थापनेन परपक्षमात्र निराकरणे कथाभेदे, कलम्बीशाके च ।
वितथ त्रि०वि+तन क्थन् ।मिथ्याभूते पदार्थे, स्वार्थे यत्।तत्रैव
वितस्तु स्त्री० वि+तस-रु उङ् च । पञ्चाबदेशस्थे नदीभेदे ।
वितरण न० वि+तॄ ल्युट् । दाने ।
वितर्क पु० वि+तर्क घञ् । सन्देहे, ऊहे च ।
वितर्द्दि स्त्री० वि+तर्द-इन् वा ङीप् । वेदिकायाम् । पु० । वितर्द्दिरप्यत्र स्त्री०वा ङीप् ।
वितल न० विशेषेण तलम् । पातालभेदे ।
वितस्ति पु०स्त्री० वि+तस-क्तिच् । प्रादेशाङ्गुलपरिमाणे विस्तृत सकनिष्ठाबद्धाङ्गुष्ठमानपरिमाणे । [च । चन्द्रातपे पु०न०
वितान न० वि+तन-घञ् । वृत्तिभेदे, अवसरे, यज्ञे, विस्तारे
वितानमूलक न० वितानं विस्तीर्णं मूलमस्य कप् । उशीरे
वितुन्न न० वि तुद-क्त । सुनिषण्णके संज्ञायां कन् । भाव्ये ।
वित्त त्यागे चुरा०पु०उभ०स०सेट् । वित्तयति ते अविवित्तत् त
वित्त न०विद्यते लभ्यते विद-क्त । धने। विद-क्त । ख्याते, विचारिते, ज्ञाते, लब्धे च त्रि० ।
वित्ति स्त्री० विद-क्तिन् । ज्ञाने, लाभे, विचारे च ।
वित्तेश पु०६त० । कुबेरे ।
विथ याचने भ्वा०आ०द्वि०क०सेट् चङि न ह्रस्व । वेथते अवेथिष्ट
विद सुखाद्यनुभवे,आख्याने, वादे च सक०वादे अक०चु० उभ० सेट् । वेदयति ते अवीविदत् त ।
विद लाभे तु०उभ सक०अनिट् । विन्दति ते। अविदत् अवित्त
विद सौवासे रुधा०आ०सक०अनिट् । विन्ते अवित्त ।
विद भावे, दिवा०आ०अक०अनिट् । विद्यते अवित्त ।
विद ज्ञाने अदा०पर०सक०सेट् । वेत्ति-वेद । अवेदीत् ।
विदग्ध त्रि० वि+दह-क्त । नागरे, निपुणे, पण्डिते च । नायिकाभेदे स्त्री० । विशेषेण दग्धे त्रि० ।
विद् पु० विद-क्विप् । पण्डिते, बुधग्रहे च ।
विद पु० विद-क । पण्डिते, बुधग्रहे च ।
विदथ पु० विद कथन् । योगिनि, ज्ञानिनि च ।
विदर न० वि+दॄ-अप् । (फणिमनसा) वृक्षे विदारणे पु० ।
विदर्भ पु०स्त्री०विगता दर्भा कुशायत ।कुण्डिननगरे(नागपुर)
विदल न० विशेषेण दल्यते दल-घञर्थे क। द्विधाभूते दाडिम

कन्के, वंशादिपाले च । कलायादौ, रक्तवाञ्जने पिष्टके च
पु० विऽति (तियोड़ि) स्त्री० । दल-शून्ये त्रि० ।

विदा स्त्री० विद-अङ् । ज्ञाने बुद्धौ च ।

विदार पु० वि+दृ-घञ् । विदारणे जलोच्छ्वासे च ।

विदारक पु० वि+दृ-ण्वुल् । जलमध्यस्थतरुशिलादौ विदारण कर्त्तरि त्रि० शुष्कनदादेर्जलधारणयोग्ये गर्त्ते न० ।

विदारण न० वि+दृ-णिच्-ल्युट् । भेदने, मारणे, विडम्बे च । युद्धे पु० स्त्री० । कर्णिकारवृक्षे पु० ।

विदारी स्त्री० । विदारोऽस्त्यस्याः अच् गौ० ङीष् । शाल-पर्ण्याम् । (शालपानी) भूमिकुष्माण्डे च ।

विदारीगन्धा स्त्री० विदार्य्याः भूमिकुष्माण्डस्येव गन्धोऽस्याः । शालपर्ण्याम् (शालपान) ।

विदाहिन् न० वि+दह-णिनि । दाहजनकद्रव्ये ।

विदित त्रि० विद-क्त । ज्ञाते, प्रार्थिते च । भावे-क्त । विख्यातौ उपगमे, ज्ञाने च । तदस्यास्ति अच् । ज्ञातरि । 'विदितः समाययावित्ति भारवि ।

विदिश् स्त्री० विगता दिशम् । दिशोर्मध्ये (कोण) ।

विदु पु० विद-कु । हस्तिकुम्भमध्यभागे ।

विदुर त्रि० विद-कुरच् । नागरे, धीरे, ज्ञातरि च । कौरवाणां मन्त्रिणि दासीगर्भजाते धर्म्मावतारभेदे च पु० ।

विदुल पु० विद-कुलच् । वेतसे, जलवेतसे, गन्धद्रव्ये च ।

विदूर न० विशिष्टं दूरम् । अविदूरे तद्वति पदार्थे त्रि० 'विदूरे केयूरे, कुरु, इति साहि०दर्प० । वैदूर्य्यमणिसम्भवस्थाने पु० 'विदूरभूमिर्नवमेघशब्दा'दिति कुमार० ।

विदूरज न० विदूरे देशभेदे जायते जन-ड । वैदूर्य्यमणौ ।

विदूरथ पु० । सूर्य्यवंश्ये नृपभेदे ।

विदूराद्रि पु० विदूरे देशेऽद्रिः पर्व्वतः । पर्व्वतभेदे । यत वैदूर्य्यमणिरुत्पद्यते । [छन्दोभेदे । परनिन्दके त्रि० ।

विदूषक पु० विदूषयति वि+दूष-णिच्-ण्वुल् । शृङ्गारसम-

विदेश पु० विभिन्नो देशः । देशान्तरे, 'भाग्याभावे भवति मरणं मध्यमानां विदेशे' इत्युद्भट० ।

विदेह पु० विगतो देहः देहसम्बन्धो यस्य । जनकवंश्ये नृपे, तद्देशे च कैवल्यमुक्तियुते, देहसम्बन्धशून्ये च त्रि० मिथिलादौ स्त्री० ।

विदेहकैवल्य न० कर्म० । 'न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते इत्याद्युक्ते जीवन्मुक्तस्य देहपातानन्तरं निर्व्वाणमोक्षे ।

विद्ध त्रि० व्यध क्त । छिद्रिते, क्षिप्ते, दुर्गे, बाधिते ताडिते च ।

विद्धकर्णी पु० विद्धः कर्णइव पत्रमस्य । (आकनादि) पाठायाम् स्त्रीत्वमपि तत्रैव ङीप् ।

विद्यमान पु० विद-शानच् । वर्त्तमानकाले, तद्वति पदार्थे त्रि०

विद्या स्त्री० विद क्यप् । ज्ञाने । तत्त्वसाक्षात्कारे 'विद्यया मृतमश्नुते' इतिश्रुतिः । दुर्गायां, गणिकारिकारवृक्षे, तन्त्रोक्ते देवीमन्त्रे च । 'तस्य विद्या न सिध्यती'ति श्यामारह० ।

विद्याचण(ण) त्रि० विद्यया ख्याते चण(प) विद्ययाविख्याते ।

विद्याचुञ्चु पु० विद्यया वित्त्यात- चुञ्चु । विद्यया ख्याते ।

विद्यादल पु० विद्यायै ज्ञानाय दल्यतेऽसौ । भूर्जवृक्षे ।

विद्यादान न०६त० अध्यापने, पुस्तकदाने च ।

विद्याधन न० विद्यया लब्धं धनम् । विद्ययालब्धे 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्व्वकम् । विद्याधनन्तु तद्विद्यादि'ति 'शिष्यादार्त्विज्यतः प्रश्नं सन्दिग्धप्रश्ननिर्णयात् ज्ञानशंसनतो वादाल्लब्धं प्राध्ययनाच्च यत् । विद्याधनन्तु तत् प्राहुरि'ति 'शिल्पिष्वपि हि धर्मोऽयमिल्यपरम्य परं निरस्य वादेन विद्यया द्यूतपूर्व्वकम् । विद्याधनं तु तद्विद्यादित्युक्ते धने ।

विद्याधर पु० विद्यां मन्त्रादिकं धरति धृ अच् । देवयोनिभेदे

विद्युत् स्त्री० विद्योतते वि+द्युत-क्विप् । तडिति, सन्ध्यायाञ्च

विद्युत्प्रिय न० ६त० । विद्युदाकर्षके कांस्ये, धातौ ।

विद्युन्माला स्त्री० अष्टाक्षरपादके छन्दोभेदे । [रोगभेदे ।

विद्रधि पु०नेत्यनेन विद हृदयं दधाति दध-कि पु० । हृदय

विद्रधिनाशन पु० विद्रधिं नाशयति नश-णिच्-ल्यु । शोभाञ्जने

विद्रा(द्रा)व पु० वि+द्रु-अप् घञ् वा । पलायने, क्षरणे, द्रुते च

विद्रुत त्रि० वि+द्रु-क्त । प्राप्तद्रवे, पलायिते च । [किसलये

विद्रुम पु० विशिष्टो द्रुमः । प्रवालवृक्षे विशिष्टो द्रुमोयतः

विद्रुमलता स्त्री० विद्रुमस्य लतेव । नलीनामगन्धद्रव्ये स्वार्थे कन् तत्रैव । [विद्रधि ।

विद्वत्कल्प त्रि० ईषदसमाप्तो विद्वान् विद्वस्+कल्पप् । ईषद्दूने

विद्वत्तम पु० अतिशयेन विद्वान् विद्वस्+तमप् । अतिपण्डिते तरप् विद्वत्तरोऽप्यत्र । [विद्वत्कल्पे । देश्य । तल्पेय ।

विद्वद्देशीय त्रि० ईषदसमाप्तो विद्वान् विद्वस्+देशीयर् ।

विद्वस् त्रि० विद क्वसु । प्राज्ञे, पण्डिते, आत्मज्ञानयुक्ते च ।

विद्विष् पु० विशेषेण द्वेष्टि द्विष-क्विप् । शत्रौ अविद्विषोऽप्यत्र ।

विद्वेष पु० वि+द्विष-घञ् । वैरिभावे शत्रुतायाम् ।

विद्वेषण न० वि+द्विष-णिच्-ल्युट् । तन्त्रोक्ते अभिचारकर्म भेदे येन शत्रूणां परस्परविद्वेषो भवति तद्विधि व्यापारे । वि+द्विष-ल्युट् । विद्वेषे ।

विध विधाने, तु॰पर॰सक॰सेट् । विधति अवेधीत्

विध पु॰ स्त्री॰ विध-क अच् वा । विधाने, गजभक्ष्यान्ने, प्रकारे, वेधे, ऋद्धौ च । वेतने, कर्मणि च स्त्री॰ ।

विधवा स्त्री॰ विगतो धवो यस्या । मृतपतिकायां स्त्रियाम् ।

विधातृ पु॰ वि+धा-तृच् । प्रजापतौ, ब्रह्मणि, कामदेवे, मदिरायां, भृगुमुनिपुत्रभेदे । विधानकर्त्तरि त्रि॰ । स्त्रियां ङीप् सा च पिप्पल्याम् ।

विधान न॰ वि+धा-ल्युट् । करणे, विधौ, गजभक्ष्यान्ने च ।

विधानज्ञ पु॰ विधानं जानाति ज्ञा-क । पण्डिते । विधिज्ञे त्रि॰

विधायक त्रि॰ वि+धा-ण्वुल् । विधानकर्त्तरि ।

विधि पु॰ वि+धा-कि । जगत्स्रष्टरि ब्रह्मणि, भाग्ये, क्रमे, 'चिकीर्षोत्कृतिसाध्यत्वेष्टसाधनत्वविषयो विधिरि'त्युक्ते प्रवर्त्तनारूपे नियोगे, तज्जनके वाक्ये, विष्णौ, कर्मणि, गजभक्ष्यान्ने, वैद्ये, अप्राप्तप्रापकरूपे वाक्यभेदे, संज्ञा च परिभाषा च विधिर्नियम एव च 'अतिदेशोऽधिकारश्चे'ति व्याकरणोक्ते सूत्रभेदे ।

विधिज्ञ त्रि॰ विधिं क्रमं जानाति ज्ञा-क । विधानक्रमज्ञे

विधित्सा स्त्री॰ विधातुमिच्छा वि+धा-सन् अ । विधानेच्छायाम्

विधिदेशक पु॰ विधिं विधानं दिशति दिश+ण्वुल् । विधिदर्शिनि सदस्ये, गुरौ च ।

विधिवत् अव्य॰ विधिमर्हति विधि+वति । विध्यनुसारे ।

विधु पु॰ व्यध-कु । चन्द्रे, कर्पूरे, विष्णौ, ब्रह्मणि, शङ्करे, वायौ च

विधुत त्रि॰ वि+धु-क्त । कम्पिते, त्यक्ते च ।

विधुनन न॰ वि+धु-णिच्-नुक् च । चालने ।

विधुन्तुद पु॰ विधुं तुदति तुद खश् मुम् च । राहौ ।

विधुर त्रि॰ विगता धूर्यस्य अच् समा॰ । विश्लिष्टे, विकले च विगता धूः । वैकल्ये, विश्लेषे च न॰ ।

विधुवन न॰ वि+धु-ल्युट् । कम्पने । [न्ती'ति श्रुतिः

विधूत त्रि॰ वि+धू-क्त । कम्पिते त्यक्ते च । 'विधूतपाप्मानस्तेभ्या-

विधेय त्रि॰ वि+धा-यत् । विधातुं योग्ये, वचनस्थे आयत्ते विधिना बोधिते च ।

विध्वंस पु॰ वि+ध्वन्स-घञ् । नाशे ।

विनत त्रि॰ वि+नम क्त । प्रणते भुग्ने, शिक्षिते च । गरुडमातरि कश्यपपत्नीभेदे, पिटकीभेदे च स्त्री॰ । [पुभयत ।

विनतासूनु पु॰ ६त॰ । अरुणे, गरुडे च । विनतात्मजादयो

विनद पु॰ विशेषेण नदति नद-अच् । (जातियान) वृक्षे ।

विनम्रक न॰ विशेषेण नम्रमिव स्वार्थे कन् । तगरपुष्पे ।

विनय पु॰ वि+नी-अच् । शिक्षायां, प्रणामे, अनुनये च । वि+नी-कर्त्तरि अच् । विनययुक्ते, जने, निभृते, क्षिप्ते, जितेन्द्रिये च । वचनस्थिते आयत्ते ।

विनयग्राहिन् त्रि॰ विनयं शिक्षां गृह्णाति ग्रह-णिनि ।

विनयस्थ त्रि॰ विनये तिष्ठति स्था क । वचनग्राहिणि आयत्ते

विनशन न॰ वि+नश-ल्युट् । विनाशे, कुरुक्षेत्रस्थे तीर्थभेदे ।

विना अव्य॰ वि+ना । वर्ज्जने, अन्तरेणेत्यर्थे ।

विनाकृत त्रि॰ विनेति कृतम् विना+कृ क्त । त्यक्ते, रहिते च

विनायक पु॰ वि+नी-ण्वुल् । गणेशे, गरुडे, विघ्ने, गुरौ च विनययुक्ते त्रि ।

विनाश पु॰ वि+नश-घञ् । ध्वंसे, अदर्शने च ।

विनाशोन्मुख त्रि॰ विनाशाय उन्मुख उद्यत । नष्टप्राये ।

वि(वी)नाह पु॰ वि+नह-घञ् वा उपसर्गदीर्घ॰ । कूपमुखपिधाने

विनिद्र त्रि॰ विगता निद्रा यस्य । प्रकाशिते, निद्राहीने च ।

विनिपात पु॰ वि+नि+पत-घञ् । निपाते दैवादिकृते व्यसने, अपमाने च । [द्रव्यान्तरग्रहणे, बन्धके च ।

विनिमय पु॰ वि+नि+मि-अच् । परिवर्त्ते तुल्यद्रव्यदानेन

विनियोग पु॰ वि+नि+युज-घञ् । क्रियासु प्रवर्त्तने 'अनेनेदन्तु कर्त्तव्यं विनियोगः प्रकीर्त्तित' इत्युक्ते अनुष्ठानक्रमविधाने च 'आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव चे'ति स्मृतिः ।

विनीत त्रि॰ वि+नी-क्त । विनययुक्ते, कृत-दण्डे, क्षिप्ते, अपनीते, निभृते च । सुशिक्षिताश्वे, दमनवृक्षे च पु॰ ।

विनीय पु॰ वि+नी-क्यप् । कल्के, पापे च ।

विनेतृ त्रि॰ वि+नी तृच् । शिक्षके । नृपे पु॰ ।

विनेय त्रि॰ वि+नी-यत् । शिक्षणीये, प्राप्ये च ।

विनोक्ति स्त्री॰ अलङ्कारोक्ते अर्थालङ्कारभेदे ।

विनोद पु॰ वि+नुद-घञ् । कौतूहले, क्रीडायां, खण्डने च ।

विन्दु पु॰ विद-उ नि॰ । जलकणे भ्रुवोर्मध्ये, रेखागणितोक्ते विभागानर्हे चिह्नभेदे, अनुस्वारे च । ज्ञातरि, दातरि, वेदितव्ये च त्रि॰ । [भेदे स्वार्थे कन् । तत्रैव ।

विन्दुजाल न॰ ६त॰ । हस्तिशुण्डाग्रस्थिते विन्दुसङ्घे चिह्न-

विन्दुपत्र पु॰ विन्दवः पत्रे यस्य । भूर्ज्जपत्रे ।

विन्दुसरस् न॰ विन्दुभिः कृतं सरः । सरोवरभेदे ।

विन्धपत्री स्त्री॰ विध क ष॰ मुम् च विन्धं पत्रमस्याः ङीप् । (वेतपुठ) क्षुपभेदे । [एलायां, वनकोद्रवे च (नोयाड) स्त्री॰

विन्ध्य पु॰ विध-यत् ष॰ मुम् च । पर्वतभेदे व्याधे च ।

विन्ध्यवासिनी स्त्री॰ विन्ध्येऽचले वसति वस-णिनि ङीप् । यशोदागर्भजातायां दुर्गायाम् ।

विन्ध्याचल पु॰ कर्म॰ । विन्ध्यपर्वते ।

विन्ध्याटवी स्त्री॰ विन्ध्यस्था अटवी । विन्ध्यपर्वतस्थे वनभेदे

विन्न त्रि० विद-क्त। विचारिते, लाभे, ज्ञाते, स्थिते च।
विन्याक पु० वि+नि+अक-घञ्।। (आतियान) वृक्षे।
विन्यास पु० वि+नि+अस-घञ्। स्थापने, रचने, तन्त्रोक्ते मन्त्राद्युच्चारणपूर्व्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च।
विप क्षेपे चु० उभ०सक० सेट्। वेपयति-ते अवीविपत् त।
विपक्त्रिम त्रि० विपाकेन निर्वृत्तः। वि+पच-क्त्रि मपच्। विपाकाधीनजाते 'विपक्त्रिमज्ञानगतिरिति' भट्टिः।
विपक्ष त्रि०विरुद्धः पक्षो यस्य। शत्रौ, प्रतिकूलपक्षावलम्बिनि च। विरुद्धः पक्षः कर्म० स०। प्रतिकूले पक्षे।
विपञ्ची स्त्री० वि+पचि-अच् गौरा० ङीप्। वीणायाम् स्वार्थे कन् अत इत्त्वम्। तत्रैव।
विपण पु० वि+पण घञर्थे क। विक्रये।
विपणि पु०स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप्। पण्यविक्रयशालायाम् (हाटकाला) हट्टे च।
विपत्ति स्त्री० वि+पद-क्तिन्। आपदि, नाशे, यातनायाञ्च
विपथ पु० विरुद्ध' पन्थाः अच् समा०। निन्दितमार्गे
विपद्(दा) स्त्री० वि+पद-सम्प० क्विप् वा टाप्। विपत्तौ।
विपन्न त्रि० वि+पद-क्त। विपद्युक्ते, नष्टे च। सर्पे पु०।
विपरीत त्रि० वि+परि+इण्-क्त। प्रतिकूले।
विपर्णक पु० विगतानि पर्णान्यस्य कप्। पलाशवृक्षे।
विपर्य्यय पु० वि+परि+इण्-अच्। व्यतिक्रमे।
विपर्य्यस्त त्रि० वि+परि+अस-क्त। व्यतिक्रान्ते पराहते च।
विपर्य्यास पु० वि+परि+अस-घञ्। वैपरीत्ये, व्यतिक्रमे उत्क्रमे च।
विपल पु०विभागः पलस्य। पलषष्टिभागे कालभेदे। [पण्डिते
विपश्चित् पु० विप्रकृष्टं चेतति वि+प्र+चित-क्विप् पृ०।
विपाक पु० वि+पच भावे घञ्। पाके, स्वेदे च। कर्म्मणि घञ्। कर्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे।
विपाश(शा) स्त्री०विगत पाशो यस्याः। स्वनामख्याते नदीभेदे
विपिन न० वप-इनन् पृ०। वने।
विपुल त्रि०वि+पुल विस्तारे क। विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च। आर्य्याछन्दोभेदे स्त्री०।
विपुलास्रव स्त्री० विपुलं रसं स्रवति अण्। घृतकुमारीवृक्षे।
विप्र पु० वप-रन् पृ० अत इत्त्वम् वि+प्रा-क वा। ब्राह्मणे।
विप्रकार पु० वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।
विप्रकाष्ठ न०विशेषेण प्राति प्रा क विप्रं काष्ठं यस्य। तूलवृक्षे
विप्रकर्ष पु० वि+प्र+कृष-घञ्। दूरत्वे।
विप्रकृत त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृताः काले' इति कुमा०रः।
विप्रकृष्ट त्रि०वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन्। तत्रैवार्थ
विप्रचित्ति पु० वि+प्र+चित-क्तिच्। दानवभेदे।
विप्रतिपत्ति स्त्री० वि+प्रति+पद-क्तिन् विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिष्विति' स्मृतिः। संशये, विकारे च।
विप्रतिपन्न त्रि० वि+प्रति+पद-क्त। सन्देहयुक्ते कृतविरोधे च
विप्रति(ती)सार पु० वि+प्रति+सृ-घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च। [च
विप्रयुक्त त्रि० विप्र+युज-क्त। वियुक्ते, विरहिते च। [वियोगे
विप्रयोग पु० वि+प्र+युज-घञ्। विप्रलम्भे, विरोधे विसंवादे
विप्रलब्ध त्रि० वि+प्र+लभ-क्त। वञ्चिते, 'प्रिय कृत्वा च सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेये'त्युक्तलक्षणे नायिकाभेदे स्त्री०।
विप्रलम्भ पु० वि+प्र+लभ-घञ् मुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तरयुक्तयोर्भावो युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गारावस्थाभेदे।
विप्रलाप पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थककथने। [वृक्षे, अशोकवृक्षे।
विप्रलोभिन् पु० विप्रलोभयति लुभ+णिच्-णिनि। किरात
विप्रश्निका स्त्री०विशेषेण प्रश्नो यस्याः पृ्व० कप् अत इत्त्वम्। दैवज्ञायां स्त्रियाम्। [धीनतायाम्।
विप्रसात् अव्य० विप्राधीनं करोति विप्र+साति। विप्रा-
विप्रस्व न० ६त०। विप्रस्वामिके धने।
विप्रिय पु० विरुद्धं प्रिय प्री क।। अपराधे, अप्रिये च कृत वानसि विप्रियं न मे इति कुमार ६ष। विगतप्रिये त्रि०।
विप्रुष् स्त्री० वि+प्रुष-क्विप्। बिन्दौ, वेदपाठकाले मुखनिर्गत जलबिन्दौ च।
विप्रोषित त्रि० वि+प्र+वस-क्त गतप्रवासे।
विप्लव पु० वि+प्लु-अप्। परचक्रपतिराष्ट्रादितो भये राष्ट्रोपद्रवे प्र
विप्लाव पु०वि+प्लु घञ्। अश्वस्य गतिभेदे समन्तात् जलप्लावे च।
विप्लुत त्रि०वि+प्लु क्त। व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य्यः' इति स्मृतिः।
विफल त्रि० विगतं फलमस्य। निरर्थके। केतक्यां स्त्री०।
विबध पु० विगतो बधो हननं गतिर्यस्मात्। स्कन्धेन धान्यतण्डुलादौ 'निरुद्धविबधासार'ेति माघ० ए०दीर्घ भारे च।
विबन्ध पु० विबध्नाति मलम् वि+बन्ध-घञ्। रोगभेदे।

विबुध पु० वि+बुध-क । पण्डिते, देवे, विबुधसख इति भट्टिः । चन्द्रे च ।

विभक्त त्रि० वि+भज-क्त । पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समा इति स्मृतिः । भावे क्त । विभागे न० ।

विभक्ति स्त्री० वि+भज-क्तिन् । विभागे 'संख्याकारकबोधयित्री विभक्तिः' । सा विभक्तिर्द्विधा प्रोक्ते'त्युक्तलक्षणे प्रत्ययभेदे च ।

विभव पु० वि+भू-अप् । धने, मोक्षे, सर्वमूर्त्तसंयोगरूपे, ऐश्वर्य्ये षष्टिसंवत्सरमध्ये 'हृष्टाः पुष्टाः जनाः सर्वे विभवेऽब्दे वरानने!' इत्युक्ते वर्षभेदे च ।

विभा स्त्री० वि+भा-अच् । किरणे, शोभायां, प्रकाशे च ।

विभाकर पु० विभां प्रकाशं करोति कृ-अच् । सूर्य्ये, अर्कवृक्षे च

विभाग पु० वि+भज-भावे घञ् । भागे । कर्मणि घञ् । अंशे, स्वत्वे पूर्वस्वामिस्वत्वनाशोत्तरं तत्सम्बन्धाधीनजातस्वत्व व्यञ्जकव्यापारभेदे । [गयोग्ये, भजनीये धनादौ ।

विभाज्य त्रि० विभक्तुमर्हति वि+भज-अर्हार्थे ण्यत् । विभा-

विभाण्डक पु० मुनिभेदे ।

विभात न० वि+भा-क्त । प्रभाते ।

विभाव पु० वि+भू-घञ् । परिचये, अलङ्कारोक्ते रसस्योद्दीपके आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द०प० । [त्युक्तलक्षणे अलङ्कारभेदे ।

विभावना स्त्री० 'प्रसिद्धकारणाभावात् कार्य्योत्पत्तिर्विभावने'

विभावरी स्त्री० वि+भा-क्वनिप् ङीप् वनोर च । रात्रौ, हरिद्रायां, कुट्टिन्याम्, अनुरक्तयोषिति, मुखरस्त्रियाम्, मेदोवृक्षे च । [चित्रकण्ठे, हारभेदे च ।

विभावसु पु० विभायुक्ता वसवोऽस्य । सूर्य्ये, अर्कवृक्षे, वह्नौ,

विभाषा स्त्री० विरुद्धा भाषा वि+भाष अ । व्याकरणोक्ते प्राप्तिकप्राप्तिफलके 'नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने

विभिन्न त्रि० वि+भिद क्त । प्रकाशिते, विदलिते,विभक्ते च ।

विभीतक पु० विशेषेण भीत इव स्वार्थे कन् । (वयड़ा) वृक्षे ।

विभीषण पु० विशेषेण भीषयते भलन् भी णिच् षुक् च ल्यु । रावणभ्रातरि राक्षसे,नलवृक्षे च । [भयप्रदर्शने ।

विभीषिका स्त्री० वि+भी-णिच्-षुक् च धात्वर्थनिर्द्देशे ण्वुल् ।

विभु पु० वि+भू-डु । सर्वमूर्त्तसंयुक्ते, प्रभौ,महादेवे ब्रह्मणि च ।

विभूति स्त्री० वि+भू-क्तिन् । भस्मनि 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्य्ये च ।

विभूषा स्त्री० वि+भूष-अ । शोभायां, भूषणे च ।

विभ्रम पु० वि+भ्रम-घञ् । स्त्रीणां शृङ्गाराङ्गचेष्टाभेदे 'विभ्रम-स्त्वरयाकाले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थान वैपरीत्ये च 'शुक्लापाङ्गैर्विभ्रममण्डनानामि'ति कुमारः । विशेषेण, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च ।

विभ्राज् त्रि० वि+भ्राज-क्विप् । भूषणादिना दीप्ते ।

विमत त्रि० वि+मन-क्त । विरुद्धमतियुक्ते । [व्याकुलचित्ते

विमनस्(स्क) त्रि० विविधं मनो यस्य वा कप् । चिन्तादिना

विमर्द्द पु० विमृद्यतेऽसौ वि+मृद घञ् । (कानकासुन्दिया) वृक्षे । चक्रमर्द्दके च । भावे घञ् । मर्द्दने ।

विमर्शन न० वि+मृश-ल्युट् । परामर्शे, न्यायोक्ते साध्यव्याप्यहेतुमत्त्वेन पक्षनिश्चये, वितर्के च । घञ् तत्रैव पु० ।

विमर्ष पु० वि+मृष-घञ् । विचारे, नाटकाङ्गभेदे च ।

विमल त्रि० विगतो मलो यस्मात् । स्वच्छे, निर्म्मले, विगतो मलो यस्याः ब०व० । (चामारकषा) सप्तलायाम् जगन्नाथक्षेत्रस्थे देवीभेदे च स्त्री० ।

विमातृ स्त्री० विरुद्धा माता । मातृसपत्न्याम् ।

विमातृज पु० विमातुर्जायते जन-ड । सापत्ने भ्रातरि ।

विमान पु०न० वि+मन घञ् वि+मा ल्युट् वा । देवयाने, रथे, सार्व्वभौमगृहभेदे च । अश्वे पु० यानमात्रे परिमाणे च न० ।

विमार्ग पु० विरुद्धो मार्गः । कुपथे निन्दिताचारे ।

विमुख त्रि० विरुद्धमननुकूलं मुखमस्य । बहिर्मुखे, निवृत्ते च ।

विमुद्र त्रि० विगता मुद्रा मुकुलीभावो यस्य । विकसिते, मुद्रारहिते च ।

विम्ब पु० न० । वी+वन्-मुमूह्रस्वौ । दर्पणादौ भासमानप्रतिबिम्बाश्रये,कमण्डलौ च । सूर्य्यादिमण्डले च कृकलासे पु० । विम्बायाः फलम् अण् तस्य लुप् । बिम्बिकाफले ।

विम्बजा स्त्री० विम्बं फलं जायतेऽस्याः जन-ड । बिम्बिकावृक्षे (तेलाकुचा) ।

विम्बट पु० विम्बमटति अट-अच् शक० । सर्षपे ।

विम्बा(म्बी) स्त्री० विम्बमस्त्यस्याः अच् वा गौ०ङीष् ।(तेलाकुचा) लताभेदे । स्वार्थे कन् । तत्र, सूर्य्यादिमण्डले च ।

वियत् न० वि+यम-क्विप् मलोपे तुक् । आकाशे ।

वियद्गङ्गा स्त्री० वियतस्था गङ्गा । स्वर्गङ्गायां मन्दाकिन्याम् ।

वियात त्रि० वि+या-क्त । धृष्टे, निर्लज्जे च ।

वियोग पु० वि+युज-घञ् । विच्छेदे । इ०।पतिवियोगे [त्रि०

वियोगिन् पु० वि+युज-घिनुण् । चक्रवाके,पक्षिणि,विच्छेदवति

विरक्त त्रि० वि+रन्ज-क्त । विरक्ते, विरते च ।

**विन्न** त्रि० विद-क्त। विचारिते, प्राप्ते, ख्याते, स्थिते च।
**विन्याक** पु० वि+नि+अक-घञ्। (ज्ञातियान) वृक्षे।
**विन्यास** पु० वि+नि+अस-घञ्। स्थापने, रचने, तन्त्रोक्ते मन्त्रादुच्चारणपूर्व्वकं हृदयादिषु अङ्गुल्यादीनामर्पणे च।
**विप** क्षेपे चु० उभ०सक० सेट्। वेपयति-ते अवीविपत् त।
**विपक्तिम** त्रि० विपाकेन निर्वृत्त। वि+पच-क्त्रि मप्च्। विपाकाधीनजाते 'विपक्तिमज्ञानगतिरिति' भट्टिः।
**विपक्ष** त्रि० विरुद्ध' पक्षो यस्य। शत्रौ, प्रतिकूलपक्षावलम्बिनि च। विरुद्धः पक्ष' कुग० स०। प्रतिकूले पक्षे।
**विपञ्ची** स्त्री० वि+पचि-अच् गौरा० ङीष्। वीणायाम् स्वार्थे कन् अत इत्त्वम्। तत्रैव।
**विपण** पु० वि+पण घञर्थे क। विक्रये।
**विपणि** पु०स्त्री० वि+पण-इन् स्त्रीत्वपक्षे वा ङीप्। पण्य-विक्रयशालायाम् (हाटचाला) हट्टे च।
**विपत्ति** स्त्री० वि+पद-क्तिन्। आपदि, नाशे, यातनायाञ्च
**विपथ** पु० विरुद्ध पन्थाः अच् समा०। निन्दितमार्गे
**विपद्(दा)** स्त्री० वि+पद-सम्प० क्विप् वा टाप्। विपत्तौ।
**विपन्न** त्रि० वि+पद-क्त। विपद्युक्ते, नष्टे च। सर्पे पु०।
**विपरीत** त्रि० वि+परि+इण्-क्त। प्रतिकूले।
**विपर्णक** पु० विगतानि पर्णान्यस्य कप्। पलाशवृक्षे।
**विपर्य्यय** पु० वि+परि+इण्-अच्। व्यतिक्रमे।
**विपर्य्यस्त** त्रि० वि+परि+अस-क्त। व्यतिक्रान्ते परावृत्ते च।
**विपर्य्यास** पु० वि+परि+अस-घञ्। वैपरीत्ये, व्यतिक्रमे उत्क्षेपे च।
**विपल** पु० विभागः पलस्य। पलषष्टिभागे कालभेदे। [पण्डिते
**विपश्चित्** पु० विप्रकृष्ट' चेतति वि+प्र+चित-क्विप् पृ०।
**विपाक** पु० वि+पच-भावे घञ्। पाके, खेदे च। कर्म्मणि घञ्। कर्म्मफलपरिणामे जात्यायुर्भोगरूपे पदार्थे।
**विपाश्(शा)** स्त्री०विगत पाशो यस्याः। स्वनामख्याते नदीभेदे
**विपिन** न० वप-इनन् पृ०। वने।
**विपुल** त्रि०वि+पुल-विस्तारे क। विस्तीर्णे, अगाधे, मेरुपश्चिमस्थे भूधरे, मेरौ, हिमाचले च। आर्य्याछन्दोभेदे स्त्री०
**विपुलारस** स्त्री० विपुलं रसं स्रवति अण्। घृतकुमारीवृक्षे।
**विप्र** पु० वप-रन् पृ० अत इत्त्वम् वि+प्रा-क वा। ब्राह्मणे।
**विप्रकार** पु- वि+प्र+कृ-घञ्। अपकारे, तिरस्कारे।
**विप्रकाष्ठ** न०विशेषेण प्राति प्रा क विप्र' काष्ठ' यस्य। तूलवृक्षे
**विप्रकर्ष** पु० वि+प्र+कृष-घञ्। दूरत्वे।
**विप्रकृत** त्रि० वि+प्र+कृ-क्त। उपद्रुते, तिरस्कृते च 'तस्मिन् विप्रकृता काले' इति कुमारः।
**विप्रकृष्ट** त्रि०वि+प्र+कृष-क्त। दूरस्थे। स्वार्थे कन्। तत्रैवार्थ
**विप्रचित्ति** पु० वि+प्र+चित-क्तिच्। दानवभेदे।
**विप्रतिपत्ति** स्त्री० वि+प्रति+पद-क्तिन् विरोधे, 'परस्परं मनुष्याणां स्वार्थे विप्रतिपत्तिष्विति' स्मृतिः। संशये, विकारे च।
**विप्रतिपन्न** त्रि० वि+प्रति+पद-क्त। संदेहयुक्ते कृतविरोधे च
**विप्रति(ती)सार** पु० वि+प्रति+सृ-घञ् वा दीर्घः। अनुतापे, अनुशये, रोषे च। [च
**विप्रयुक्त** त्रि० विप्र+युज-क्त। वियुक्ते, विरहिते च। [वियोगे
**विप्रयोग** पु० वि+प्र+युज-घञ्। विप्रलम्भे, विरोधे विसंवादे
**विप्रलब्ध** त्रि० वि+प्र+लभ-क्त। वञ्चिते, 'प्रिय कृत्वा च सङ्केतं यस्या नायाति सन्निधिम् विप्रलब्धेति सा ज्ञेये'त्युक्तलक्षणे नायिकाभेदे स्त्री०।
**विप्रलम्भ** पु० वि+प्र+लभ-घञ् मुम् च। विसंवादे, वञ्चने, विरहे च 'युक्तायुक्तयोर्भावो युक्तयोर्वाथवा मिथः अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेय' इत्युक्ते शृङ्गारावस्थाभेदे।
**विप्रलाप** पु० वि+प्र+लप-घञ्। विरोधोक्तौ परस्परविरुद्धार्थककथने। [वृक्षे, अयोकवृक्षे।
**विप्रलोभिन्** पु० विप्रलोभयति लुभ+णिच्-णिनि। किरात
**विप्रश्निका** स्त्री०विशेषेण प्रश्नो यस्याः पृ०. कप् अत इत्त्वम्। दैवज्ञायां स्त्रियाम्। [धीनतायाम्।
**विप्रसात्** अव्य० विप्राधीनं करोति विप्र+साति। विप्रस-
**विप्रस्व** न० द्व०। विप्रस्वामिके धने।
**विप्रिय** पु० विरुद्धं प्रिय प्री क।। अपराधे, अप्रिये च 'कृत वानसि विप्रियं न मे इति कुमार इव० विगतप्रिये त्रि०।
**विप्रुष्** स्त्री० वि+प्रुष-क्विप्। बिन्दौ, वेदपाठकाले मुखनिर्गत जलबिन्दौ च।
**विप्रोषित** त्रि० वि+प्र+वस-क्त। गतप्रवासे।
**विप्लव** पु० वि+प्लु-अप्। परचक्रतिराष्ट्रादितो भये राष्ट्रोपद्रवे प्र
**विप्लाव** पु०वि+प्लु घञ्। अश्वस्य गतिभेदे समन्तात् जलप्लावे च।
**विप्लुत** त्रि वि+प्लु क्त। व्यसनयुक्ते, उपद्रुते च 'अविप्लुतब्रह्मचर्य्यः' इति स्मृति'।
**विफल** त्रि० विगतं फलमस्य। निरर्थके। केतक्यां स्त्री०।
**विबध** पु० विगतो बधो हननं गतिर्यस्मात्। संघट्टेन धान्यतण्डुलादौ 'निरुद्धविबधासारे'ति माघ० पृ०दीर्घ. भारे च।
**विबन्ध** पु० विबध्नाति मलम् वि+बन्ध-घञ्। रोगभेदे।

विबुध पु० वि+बुध-क । पण्डिते, देवे, विबुधसख इति भट्टिः । चन्द्रे च ।
विभक्त त्रि० वि+भज-क्त । पृथक्कृते, विभिन्ने, कृतविभागे च 'अविभक्ता विभक्ता वा सपिण्डाः स्थावरे समा इति स्मृतिः । भावे क्त । विभागे न० ।
विभक्ति स्त्री० वि+भज-क्तिन् । विभागे 'संख्याकारकव्याप्यसामान्ये शक्तिमान् प्रत्ययस्तु यः । सा विभक्तिर्द्विधा प्रोक्ते'त्युक्तलक्षणे प्रत्ययभेदे च ।
विभव पु० वि+भू-अच् । धने, मोक्षे, सर्व्वमूर्त्तसंयोगरूपे, ऐश्वर्य्ये षष्टिसंवत्सरमध्ये 'हृष्टाः पुष्टा जनाः सर्व्वे विभवेऽब्दे वरानने!' इत्युक्ते वर्षभेदे च ।
विभा स्त्री० वि+भा-अच् । किरणे, शोभायां, प्रकाशे च ।
विभाकर पु० विभा प्रकाशं करोति कृ-अच् । सूर्य्ये, अर्कवृक्षे च
विभाग पु० वि+भज-भावे घञ् । भागे । कर्मणि घञ् । अंशे, स्वत्वे पूर्व्वस्वामिस्वत्वनाशोत्तरं तत्सम्बन्धाधीनजातस्वत्वव्यञ्जकव्यापारभेदे । [प्रयोग्ये, भजनीये धनादौ ।
विभाज्य त्रि० विभक्तुमर्हति वि+भज-अर्हार्थे ण्यत् । विभा-
विभाण्डक पु० मुनिभेदे ।
विभात न० वि+भा-क्त । प्रभाते ।
विभाव पु० वि+भू-घञ् । परिचये, अलङ्कारोक्ते रसस्योद्दीपके आलम्बनादौ 'विभावेनानुभावेन व्यक्तः सञ्चारिणा तथे'ति सा०द०। [त्युक्तलक्षणे अलङ्कारभेदे ।
विभावना स्त्री० 'प्रसिद्धकारणाभावात् कार्य्योत्पत्तिर्विभावने'
विभावरी स्त्री० वि+भा-क्वनिप् ङीप् वनोर च । रात्रौ, हरिद्रायां, कुट्टिन्याम्, चतुरक्तयोषिति, स्वैरस्त्रियाम्, मेदोवृक्षे च । [चित्रकवृक्षे, हारभेदे च ।
विभावसु पु० विभायुक्ता वसवोऽस्य । सूर्य्ये, अर्कवृक्षे, वह्नौ,
विभाषा स्त्री० विरुद्धा भाषा वि+भाष अ । व्याकरणोक्ते प्राप्तिकप्राप्तिफलके 'नवेति विभाषे'त्युक्तलक्षणे विकल्पविधाने
विभिन्न त्रि० वि+भिद क्त । प्रकाशिते, विदलिते, विभक्ते च ।
विभीतक पु० विशेषेण भीत इव स्वार्थे कन् । (वयडा) वृक्षे ।
विभीषण पु० विशेषेण भीषयते भयनु भी णिच् षुक् च ल्यु । रावणभ्रातरि राक्षसे, नलतृणे च । [भयप्रदर्शने ।
विभीषिका स्त्री० वि+भी-णिच्-षुक् च धात्वर्थनिर्देशे ण्वुल् ।
विभु पु० वि+भू-डु । सर्व्वमूर्त्तसंयुक्ते, प्रभौ, महादेवे ब्रह्मणि च ।
विभूति स्त्री० वि+भू-क्तिन् । अणिमादि 'अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा । ईशित्वं च वशित्वञ्च तथा कामावसायिते'त्युक्ते ऐश्वर्य्ये च ।
विभूषा स्त्री० वि+भूष-अ । शोभायां, भूषणे च ।
विभ्रम पु० वि+भ्रम-घञ् । स्त्रीणां शृङ्गाराङ्गचेष्टाभेदे 'विभ्रमस्त्वरयाकाले भूषास्थानविपर्य्यय' इत्युक्ते त्वरया भूषास्थानवैपरीत्ये च 'यत्राङ्गनानां विभ्रममण्डनानामि'ति कुमारः । विशेषेण, भ्रान्तौ, शोभायां, सन्देहे, भ्रमणे च ।
विभ्राज् त्रि० वि+भ्राज-क्विप् । भूषणादिना दीप्ते ।
विमत त्रि० वि+मन-क्त । विरुद्धमतियुक्ते । [व्याकुलचित्ते
विमनस्(स्क) त्रि० विचित्रं मनो यस्य वा कप् । चिन्तादिना
विमर्द्द पु० विमर्द्द्यतेऽसौ वि+मृद घञ् । (कानकासुन्दिया) वृक्षे । चक्रमर्द्दके च । भावे घञ् । मर्द्दने ।
विमर्शन न० वि+मृश-ल्युट् । परामर्शे, न्यायोक्ते साध्यव्याप्यहेतुमत्त्वेन पक्षनिश्चये, वितर्के च । घञ् तत्रैव पु० ।
विमर्ष पु० वि+मृष-घञ् । विचारे, नाटकाङ्गभेदे च ।
विमल त्रि० विगतो मलो यस्मात् । स्वच्छे, निर्मले, विगतो मलो यस्याः ५ब० । (चामारकपा) सप्तलायाम् जगन्नाथक्षेत्रस्थे देवीभेदे च स्त्री० ।
विमातृ स्त्री० विरुद्धा माता । मातृसपत्न्याम् ।
विमातृज पु० विमातुर्जायते जन-ड । सापत्ने भ्रातरि ।
विमान पु०न० वि+मन-घञ् वि+मा ल्युट् वा । देवयाने, रथे, सार्व्वभौमसद्मभेदे च । अश्वे पु० यानस्य ले परिमाणे च न० ।
विमार्ग पु० विरुद्धो मार्गः । कुपथे निन्दिताचारे ।
विमुख त्रि० विरुद्धमननुकूलं मुखमस्य । बहिर्मुखे, निवृत्ते च ।
विमुद्र त्रि० विगता मुद्रा सङ्कुलीभावो यस्य । विकसिते, मुद्रारहिते च ।
विम्ब पु० न० । वी+वन्-समृद्ध्यो । दर्पणादौ भासमानप्रतिबिम्बाश्रये, कमण्डलौ च । सूर्य्यादिमण्डले च कृकलासे पु० । बिम्बायाः फलम् अण् तस्य लुप् । बिम्बिकाफले ।
विम्बजा स्त्री० बिम्बं फलं जायतेऽस्याः जन-ड । बिम्बिकावृक्षे (तेलाकुचा) ।
विम्बट पु० बिम्बमटति अट-अच् शक० । सर्षपे ।
विम्बा(म्बी) स्त्री० बिम्बमस्त्यस्याः अच् वा गौ० ङीष् । (तेलाकुचा) लताभेदे । स्वार्थे कन् । तत्र, सूर्य्यादिमण्डले च ।
वियत् न० वि+यम-क्विप् मलोपे तुक् । आकाशे ।
वियद्गङ्गा स्त्री० वियत्स्था गङ्गा । स्वर्गङ्गायां मन्दाकिन्याम् ।
वियात त्रि० वि+या-क्त । धृष्टे, निर्लज्जे च ।
वियोग पु० वि+युज-घञ् । विश्लेषे । ६० । परवियोगे [त्रि०
वियोगिन् पु० वि+युज-घिनुण् । चक्रवाके, पक्षिणि, विश्लेषवति
विरक्त त्रि० वि+रञ्ज-क्त । विक्रिये, विरते च ।

विरङ्ग पु॰ वि+रन्ज घञ् । कङ्कुष्ठे ।
विरचित त्रि॰ वि+रच-क्त । कृते निर्म्मिते च ।
विरजस्तमस् त्रि॰ विगते रजस्तमसी यत । सत्वगुणप्रधाने ।
विरजस् विगतं रजो यस्याः । गतार्त्तवायां स्त्रियाम् । रजोगुणहीने त्रि॰ ।
विरजा स्त्री॰विशेषेण रज्यते रन्ज ञ्य । दूर्व्वायां, गोलोकस्थे राधासखीभेदे तच्छापाज्जायमाने नदीभेदे च ।
विर(ञ्चि)ञ्चि पु॰वि+रच अच् इन् वा मुम् च । जगत्स्रष्टरि ।
विरण न॰ विशिष्टो रणो मूलमस्य । उशीरे (वेणारमूल) ।
विरत त्रि॰ वि+रम क्त । निवृत्ते । [रराद्विते च ।
विरति स्त्री॰ वि+रम-क्तिन् । निवृत्तौ विषयसेवाया-व्यापा-
विरल त्रि॰वि+रा कलन् । अवकाशे, विच्छिन्ने, अनिविडे च
विरह पु॰ वि+रह-घञ् । विच्छेदे, अभावे, शृङ्गाररसस्य विप्रलम्भाख्ये अवस्थाभेदे च ।
विरहित त्रि वि+रह-क्त । त्यक्ते,हीने च । [रागमून्ये त्रि॰
विराग पु वि+रन्ज घञ् । रागाभावे, विगतो रागो यस्य ।
विराज् पु॰ विशेषेण राजते क्विप् । क्षत्रिये ब्रह्माण्डात्मकस्थूलदेहाभिमानिनि आदिपुरुषे, छन्दोभेदे च ।
विराट पु॰ विशेषो राटो यत्र । देशभेदे,तद्देशाधिपे नृपे च ।
विराध पु॰ राक्षसभेदे ।
विराधन न॰ वि+राध-ल्युट् । पीडायाम् ।
विराम पु॰ वि+रम-घञ् । अवसाने, विरतौ, निवृत्तौ च ।
विराल पु॰ वि+डल घञ् डस्य र । बिडाले मधुभेदे ।
विराव पु॰ वि+रु-घञ् । शब्दे ह्व॰ । विगतरवे त्रि॰ ।
विरिञ्च पु॰ वि+रिच अच् मुम् च । विष्णौ जगत्स्रष्टरि वेधसि, शिवे च । इन् । तत्रैवार्थे । [रिते च
विरूढ त्रि॰ विशेषेण रोहति वि+रुह-क्त । जाते अङ्कु-
विरूप त्रि॰ विकृतं रूपमस्य । कुरूपयुक्ते, निन्दिते च पिप्पलीमूले न॰ । अतिविषायां, दुरालभायाञ्च स्त्री॰ ।
विरूपाक्ष पु॰ विरूपे विकटे अक्षिणी यस्य षच् समा॰ । महादेवे । विकटनेत्रे त्रि॰ ।
विरेक पु॰ वि+रिच-घञ् । मलादेरधोनिःसरणे, अतिरेके च
विरेचन न॰ वि+रिच-णिच् ल्युट् । मलादेर्निःसारणे, ज्वरमध्ये विरेचनमिति वैद्यकम् । विरेचयति वि+रिच-णिच्-ल्यु । पीलुवृक्षे पु॰ । भेदकमात्रे त्रि॰ ।
विरोक पु॰न॰वि+रुच घञ् चस्य क । छिद्रे, सूर्य्यकिरणे पु॰ ।
विरोचन पु॰ वि+रुच युच् । सूर्य्ये अर्कवृक्षे, बलिपितरि प्रह्लादतनयेऽसुरभेदे, चन्द्रे च रोचयति रुच णिच् ल्यु । रोहितकवृक्षे,श्योनाकवृक्षे, पूतिकरञ्जे च पु॰ । रुचिकरे त्रि॰
विरोध पु॰ वि+रुध-घञ् । वैरे विरुद्धतायाम् न्यायोक्ते साध्येनासामानाधिकरण्यरूपे हेतुदोषे, यथा वह्निमान् जलादित्यत्र जलरूपहेतोर्वह्निना सामानाधिकरण्यं नास्ति ।
विरोधन न॰ वि+रुध-ल्युट् । वैरे ।
विरोधिन् पु॰ वि+रुध णिनि । रिपौ, षष्टिसंवत्सरमध्ये 'जायते मानुषे कष्टं विरोधिनि न संशयः' इत्युक्तलक्षणे वत्सरभेदे च ।
विरोधोक्ति स्त्री॰ अर्थालङ्कारभेदे,परवचनविरोधिवचने च ।
विल स्तृतौ तु॰प॰सक॰सेट् । विलति अवेलीत् ।
विल न॰ विल-क । छिद्रे, गुहायाञ्च । विलसत्तत्वकारणत्वेनास्त्यस्य अच् । घोटकोत्तमे, वाजिनो विलयोनय' इति कुमारः । वेतसे च पु॰ ।
विलक्ष पु॰ विलक्ष-अच् विस्मययुक्ते ।
विलक्षण त्रि॰ विशिष्टं लक्षणमस्य । विभिन्ने, विशेषयुक्ते च । निष्प्रयोजनस्थितौ च न॰ । दानाय काञ्चनपुरुषमूर्त्तियुतशय्याभेदे स्त्री॰ । 'अशौचानात् द्वितीयेऽह्नि शय्या दद्यात् विलक्षणामि ति स्मृतिः ।
विलग्न त्रि॰ विशेषेण लग्नं लस्ज क्त तस्य न जस्य ग । संलग्ने । मध्यभागे, कटौ, उदितमेषादिराशौ च न॰ । 'गोचरे वा विलग्ने वे'ति ज्योतिषम् । [काले
विलम्ब पु॰ वि+लबि-घञ् । विलम्बने अशीघ्रत्वे प्रतीक्षणीय
विलम्बित त्रि॰ वि+लबि-क्त । अशीघ्रे,मन्दे च मध्यन्दृत्ये न॰
विलय पु॰ वि+ली-अच् । प्रलये, नाशे च ।
विलला स्त्री॰ वि+लल अच् । श्वेतवचायाम् । [गोधायां च
विल(ले)शय पु॰ विले शेते-शी अच् वा अलुक्स॰ । सर्पे,मूषिके,
विलाप पु॰ वि+लप-घञ् । परिदेवनोक्तौ ।
विलास पु॰ वि+लस-घञ् । 'तात्कालिको विशेषस्तु विलासोऽङ्गक्रियादिषु' इत्युक्ते स्त्रीणां शृङ्गारचेष्टाभेदे, चेष्टाविशेषे, दीप्तौ च ।
विलासिनी स्त्री॰ विलासोऽस्त्यस्य इनि ङीप् । नार्य्यां, वेश्यायाञ्च । भोगवति त्रि॰ सर्पे, अग्नौ, वह्नौ, स्मरे, महादेवे चन्द्रे च पु॰ ।
विलीन त्रि॰ वि-ली-क्त । मांसद्रवीभावे घृतादौ, विरत, नष्टे च 'विलीनाशेषपातके'ति भागवतम् ।
विलेपन न॰ विलिप्यतेऽनेन करणे ल्युट् । गात्रानुलेपनद्रव्ये पिष्टे दृष्टे वा चन्दनकुङ्कुमादौ । कर्म्मणि ल्युट् ङीप् । यवाग्वां, सुवेशायां स्त्रियाञ्च स्त्री॰ ।

विलेप्य पु० वि+लिप-यत् । यवागाम् विलेपनीये त्रि० ।
विलोचन न० वि+लुच-करणे ल्युट् । नेत्रे, भावे ल्युट् । दर्शने
विलोडित न० वि+लोड-क्त । तक्रे । आलोडिते त्रि० ।
विलोम त्रि० विगतं लोम यत्र अच् समा० । विपरीते, अर-घट्टके न० सर्पे, कुक्कुरे वरुणे च पु० ।
विलोमजिह्व पु० विलोमा विपरीता जिह्वा यस्य । गजे ।
विलोमवर्ण पु० विलोमजः क्रमव्युत्क्रमतया व्युत्क्रमजो वर्णः । उत्तमस्त्रियामधमवर्णेन जनिते सङ्कीर्णे वर्णे ।
विलोमी स्त्री० विगिष्टं लोम केशो यस्याः पृ० अच् गौरा० ङीष् । आमलक्याम् ।
विलोल त्रि० वि+लुल-अच् । चञ्चले, विशेषचञ्चले च ।
विल्ल न० विल क किप् तस्य नेत्त्वम् । आलवाले । [हिङ्गौ न
विल्लमूला स्त्री० विल्लमालबिलमिव वेष्टितं मूलमस्याः । वारा-
विल्व पु० विल-वन् किच्च । श्रीफलवृक्षे, तत्फलादौ, परिमाणे च न० । [पिष्टके शुष्कविल्वाल्पमात्र
विल्वपेषिका स्त्री० विल्वस्य पेषोऽस्त्यस्य ठन् । (वेलशुठा)
वि(वी)वध पु० वि+वध-अच् वा दीर्घः । धान्यतण्डुलादेराहरणे भारे स्कन्धवहनयोग्य (वाक) काष्ठभेदे च ।
विवर न० वि+वृ-अप् । छिद्रे, दोषे च ।
विवरण न० वि+वृ-ल्युट् । व्याख्याने, तत्कारके ग्रन्थभेदे च ।
विवरनालिका स्त्री० विवरयुक्तं नालमस्त्यस्याः ठन् । वेणौ (बांश)
विवर्ण त्रि० विरुद्धो वर्णोऽस्य । अधमे, नीचे च ।
विवर्त्त पु० वि+वृत-घञ् । नृत्य, समुदाये, अपवर्त्तने वेदान्तोक्ते कारणात् विषमसत्ताकतया उत्पद्यमाने कार्ये च । यथा रज्जौ रजतम् ब्रह्मणो जगत् ।
विवश त्रि० विगतो वश आयत्तता यस्य । अस्वतन्त्रे, व्याकुले च 'विवशा कामवधूर्विबोधिता' इति कुमारः कृतरोधे च ।
विवस्वत् पु० वि+वस-क्विप् अस्त्यर्थे मतुप् मस्य व० । सूर्ये, अर्कवृक्षे, अरुणे, देवे च ।
विवाद पु० विरुद्धो वादः । 'यथादिव्यायकविर्हरो वेङ्कटरक्ष्य' वा । विवादो व्यवहारः' इत्युक्तलक्षणे व्यवहारे, कलहे च ।
विवाह पु० वि-वह-घञ् दारपरिग्रहे, तत्कर्मके व्यापारे च ।
विवाहित पु० विवाहो जातोऽस्य तार० इतच् । जातविवाहे ।
विवाह्य त्रि० वि+वह-ण्यत् । विवाहयोग्ये, विवाहेन पाह्ये च
विविक्त त्रि० वि+विच-क्त । निर्जने, पवित्रे, असंयुक्ते च । कर्मणि-क्त । विवेकिनि त्रि० । दुर्भगायां स्त्रियां स्त्री० ।
विविध त्रि० विभिन्ना विधा यस्य । नानाप्रकारे ।
विवीत पु० विशिष्टं वीतं गवादिप्रचारस्थानं यत्र । प्रचुर-तृणघासादियुक्ते देशे ।
विवृत त्रि० वि+वृ-क्त । विस्तृते व्याख्याते च ।
विवृति स्त्री० वि+वृ क्तिन् । विस्तारे व्याख्याने च ।
विवेक पु० वि+विच-घञ् । याथार्थ्येन वस्तुस्वरूपावधारणे, प्रकृतिपुरुषयोर्भेदज्ञाने च ।
विवोढृ पु० वि+वह तृच् । जामातरि ।
विव्वोक पु० वि+वा-क्त तस्य ओकः स्थानम् । 'गर्वाभिमाना-दिष्टेपि विव्वोकोऽनादरक्रिये'त्युक्तलक्षणे स्त्रीणां शृङ्गार-चेष्टाभेदे ।
विश प्रवेशे तु०पर०सक०अनिट् । विशति अविक्षत् ।
विश् पु० विश-क्विप् । मनुजे, वैश्ये च ।
विशङ्कट त्रि० वि+शङ्कटच् । विशाले । [च त्रि० ।
विशद पु० वि+शद-अच् । शुक्लवर्णे । तद्वति विमले, व्यक्ते
विशय पु० वि+शी-अच् । संशये 'विषयोविशयश्चैवेति' मीमांसा
विशर पु० वि+शॄ-अप् । वधे ।
विशल्यकृत् पु० विशल्यं तत्प्रहारवेदनानिवृत्तिं करोति कृ-क्विप् । (हापरमाली) वृक्षे ।
विशल्या स्त्री० विगतं शल्यं तत्प्रहारवेदना यस्याः पृ० । अग्निशिखवृक्षे, दन्तीवृक्षे, गुडूच्याम्, त्रिपुटायां अजमो-दायाञ्च । विगतशल्ये त्रि० ।
विशसन न० वि+शस-हिंसने ल्युट् । मारणे ।
विशसन पु० विशस्यतेऽनेन ल्युट् । खड्गे, 'असिर्विशसनः खड्ग इति खड्गकोलम् । [तम, मारिते
विशस्त त्रि० वि+शस-क्त । नाशिते अतीते च । वा इट् ।
विशाख पु० विशाखानक्षत्रे भवः अण् । कार्त्तिकेये । धन्विनां स्थितस्थानत्रयालपादावस्थाने, पुनर्नवायां, याचने च ।
विशाखज पु० विशिष्टा शाखा यस्य तथा सन् जायते जन-ड । नारङ्गे, विशाखानक्षत्रजाते त्रि० ।
विशाखा स्त्री० विशिष्टा शाखा प्रकारो यस्याः । सप्तविंशतिनक्षत्रमध्ये षोडशे नक्षत्रे कटिल्लके च ।
विशारण न० वि+शॄ-स्वार्थे णिच्-ल्युट् । मारणे ।
विशारद पु० विशालं ददाति दा क लस्य रः । बकुलवृक्षे पण्डिते, प्रगल्भे, श्रेष्ठे च त्रि० ।
विशाल त्रि० वि+शालच् । विस्तीर्णे, महति च । मृगभेदे, पक्षिभेदे च पु० । इन्द्रवारुण्याम्, उज्जयिन्यां नदी-भेदे च स्त्री० विशाला विस्तीर्णा नगरीति पुराणम् । [दिव्ये
विशालता स्त्री० विशालस्य भावः तल् । सर्वविस्तारे । [विशो
विशालतैलगर्भ पु० विशालं विस्तीर्णं तैलं गर्भे मध्ये यस्य ।

विशालत्वच् पु० विशाला त्वक् यस्य । सप्तच्छदे वृक्षे ।
विशालपत्र पु० विशालं पत्रमस्य । काशालौ, तालवृक्षे च ।
विशालाक्ष पु० विशाले अक्षिणी यस्य षच्समा० । महादेवे, गरुडे, विष्णौ च द्रष्टवेले, लि०पार्वत्यां नागदन्त्यां च स्त्री०ङीप्
विशाली स्त्री० वि+शालच् गौरा०ङीप् । अजमोदायाम् ।
विशिख पु० विगिष्टा विगता वा शिखा यस्य । शरवृक्षे, वाणे, तोमरे च द्व० शिखारहिते लि० । नालिकायाम् रथ्यायाञ्च स्त्री० ।
विशिष्ट लि० वि+शिष-क्त । युक्ते, विलक्षणे, विशेषयुक्ते च ।
विशिष्टाद्वैत न०रामानुजोक्ते प्रकृतिविशिष्टस्यब्रह्मणोऽद्वयत्वे
विशीर्ण लि० वि+शॄ-क्त । शुष्के, जरावस्थापन्ने च ।
विशीर्णपर्ण पु० विशीर्णं पर्णमस्य । निम्बवृक्षे ।
विशुद्ध लि० वि+शुध-क्त । दोषरहिते, विशदे च ।
विशुद्धि स्त्री० वि+शुध-क्तिन् । शोधने, दोषराहित्ये च ।
विशृङ्खल लि०विगता शृङ्खला पद्धति र्यस्याः । परिपाटीशून्ये
विशेष पु० वि+शिष-घञ् । प्रभेदे, प्रकारे, व्यक्तौ, तिलके, 'अन्त्योनित्यद्रव्यवृत्तिर्विशेषः परिकीर्त्तित' इति वैशेषिकोक्ते पदार्थभेदे, अर्थालङ्कारभेदे च ।
विशेषक पु०न०विशेषयति वि+शिष-णिच्-ण्वुल् । ललाटकृते तिलके । विशेषकर्त्तरि लि० 'विभिर्न्नैर्य विशेषकमि'त्युक्ते एकवाक्यतापन्ने श्लोकत्रये न० ।
विशेषगुण पु० कर्म० । वैशेषिकोक्ते 'बुद्ध्यादिषट्कं स्पर्शादिचतुष्कं स्नेहभावने । स्वाभाविकद्रवत्वञ्च अदृष्टं शब्दएव चे'त्युक्तेषु गुणभेदेषु ।
विशेषण न० विशिष्यतेऽनेन वि+शिष-ल्युट् । भेदकधर्म्मगुणक्रियादौ यथा नीलम् उत्पलं चलो गौरित्यादौ गुणक्रियादिर्भेदकधर्म्मः ।
विशेषविधि पु० विशेषे विधिः । सामान्यविशेषयोर्मध्ये विशेषगोचरे विधाने यथा ब्राह्मणेभ्यो दधि दीयतां शाण्डिल्याय तक्रमित्यत्र शाण्डिल्यस्य ब्राह्मणविशेषत्वेन दधियत्र दधिदानप्रवादेन तक्रदानविधिः ।
विशेषित लि० वि+शिष-णिच्-क्त । भेदिते विशेषणयुक्तीकृते च
विशेषोक्ति स्त्री० अर्थालङ्कारभेदे ।
विशेष्य लि० विशिष्यते भेद्यते गुणादिभिरसौ वि+शिषण्यत् । गुण दिभिर्भेद्ये, व्यवच्छेद्ये, पदार्थे धर्मिणि च ।
विशोक पु० विगतः शोको यस्मात् यस्य वा । अशोकवृक्षे शोकरहिते लि० । योगशास्त्रोक्ते चित्तवृत्तिभेदे स्त्री० ।
विशोधनी स्त्री० विशुध्यतेऽनया शुध-ल्युट् ङीप् । दन्तीवृक्षे भावे ल्युट् । शोधने न० वि+शुध-ल्यु । शोधनकारके लि० ।
विशोधिन् लि० वि+शुध-णिच् णिनि । शोधनकारके लि० । नागदन्त्यां स्त्री०ङीप् ।
विश्र(श्रा)णन न० वि+श्रण-णिच्-ल्युट् वा वृद्धिः । दाने ।
विश्रब्ध लि० वि+श्रम्भ-क्त । विश्वस्ते 'विश्रब्ध' परिचुम्बितेति सा० । शान्ते, अनुद्धते, गाढे च ।
विश्र(श्रा)म पु० वि+श्रम घञ् वा वृद्धिः । विरामे प्रवृत्तव्यापारस्यावसाने च । [वधे च ।
विश्रम्भ पु० वि+ श्रम्भ-घञ् । विश्वासे, प्रणये, केलिकलहे
विश्राव पु० वि+श्रु-घञ् । प्रसिद्धौ ख्यातौ च ।
विश्रुत पु० वि+श्रु-क्त । विख्याते ।
विश्लिष्ट लि० वि+श्लिष-क्त । वियुक्ते, शिथिले च ।
विश्लेष पु० वि+श्लिष-घञ् । वियोगे शैथिल्ये च ।
विश्व न०विश-व । जगति संसारे । तदभिमानिनि जीवे पु० । श्राद्धदेवविशेषे पु० ब०व० सकले लि० तदर्थेऽस्य सर्व्वनामता ।
विश्वकर्म्मन् पु० विश्वेषु कर्म व्यापारो यस्य । सूर्य्ये, देवशिल्पिनि, मुनिभेदे, परमेश्वरे च ।
विश्वकृत् पु० विश्वं करोति कृ-क्विप् । विश्वकर्मणि, परमेश्वरे च
विश्वकेतु पु० विश्वे केतवोऽस्य । अनिरुद्धे ।
विश्व(ष्व)क्सेन विषु(षु)ची सेनायस्य । विष्णौ, प्रियङ्गुवृक्षे स्त्री० ।
विश्वगन्ध पु० विश्वतो गन्धोऽस्य । बोले गन्धरसे, पलाण्डौ च
विश्वगन्धा स्त्री० विश्वे सकला गन्धा यस्याः । पृथिव्याम् ।
विश्वग्रन्थि स्त्री० विश्वतो ग्रन्थिर्यस्याः । हंसपदीलतायाम्
विश्व(ष्व)च् अव्य०विश्वमञ्चति क्विप् विषु(षु) आदेशः । सर्व्वतस्त्वर्थे विश्वगामिनि लि० अद्रागमे विश्व ष्व)द्र्यच्पत्र ।
विश्वधारिणी स्त्री० विश्वं धारयति धृ-णिनि । पृथिव्याम्
विश्वपर्णी स्त्री० विश्वतः पर्णान्यस्याः । भूम्यामलक्याम् ।
विश्वप्सन् पु० विश्वं प्साति भक्षति प्सा-कनिन् । अग्नौ, चन्द्रे देवे, विश्वकर्मणि, भूमौ च ।
विश्वभेषज न० विश्वेषां भेषजम् । शुण्ठ्याम् ।
विश्वम्भर पु० विश्वं बिभर्त्ति भृ-अच् मुम् च । इन्द्रे, विष्णौ च । पृथिव्यां स्त्री० ।
विश्वरूपक न० विश्वं रूपमस्य कप् । कृष्णागुरुणि ।
विश्वरेतस् पु० विश्वं रेतोजन्यं यस्य । चतर्मुखे ब्रह्मणि ।
विश्वरोचन पु० विश्वान् रोचयति रुच-णिच्-ल्यु । नाडीचशाके
विश्ववेदस् पु० विश्वं वेत्ति विद-असुन् । इन्द्रादौ देवे, सर्व्वज्ञे च
विश्वसार न० विश्वेषां सारम् । तन्त्रभेदे । संज्ञायां कन् । (फणिमनसा) वृक्षे पु० ।

विश्वसृज् पु० विश्वं सृजति सृज-क्विप्। चतुर्मुखे ब्रह्मणि।
विश्वस्त त्रि० वि+श्वस-क्त। जातविश्वासे, विश्वसितोऽप्यत्र त्रि० वा इट्। विधवायां स्त्रियां स्त्री०।
विश्वस्था स्त्री० विश्वतः तिष्ठति स्था-क। शतावर्य्याम्।
विश्वाची स्त्री० विश्वमञ्चति अञ्च क्विप्। अप्सरोभेदे।
विश्वात्मन् पु० विश्वमात्मा यस्य। विष्णौ।
विश्वामित्त्र पु० विश्वं मित्त्रमस्य पूर्व्वपददीर्घः। ब्रह्मर्षिभेदे गाधिसुते नृपे। [मित्रे च
विश्वामित्त्रप्रिय पु० ६त०। नारिकेले श्रीरामे च। [पर
विश्वाराज् पु० विश्वेषु राजते राज-क्विप्। विश्वेषां राज्ञनि,
विश्वावसु पु० विश्वेषां वसु यस्मात् ब० दीर्घः। गन्धर्व्वभेदे। रात्रौ स्त्री०।
विश्वास पु० वि+श्वस-घञ्। इदमित्थमेवेत्याकारे चित्तवृत्तिभेदे, प्रत्यये, श्रद्धायाञ्च।
विश्वेदेव पु० ब, व० कर्म्म० अलुक्स०। 'क्रतुदक्षौ वसुः सत्यः कामः कालस्तथा ध्वनिः। रोचकश्चाद्रवाश्चैव तथा चान्यः पुरूरवाः'। विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिताः' इत्युक्ते श्राद्धदेवभेदे। विश्वदेवस्तु वह्नौ पु०।
विश्वेश पु० ६त०। शिवे, विश्वेश्वरादयोऽप्यत्र।
विश्वौषध न०विश्वेषु रोगेषु औषधम्। शुण्ठ्याम्।
विष व्याप्तौ जु०उभ०सक०अनिट्। वेवेष्टि वेविष्टे। अविषत् अविक्षत् त।
विष विप्रयोगे क्र्या०पर०अक अनिट्। विष्णाति अविक्षत्
विष सेचने भ्वा०पर०सक० अनिट्। वेषति अविक्षत्।
विष् स्त्री० विष-क्विप्। विष्ठायाम्।
विष न० विष-क। जले, पद्मकेशरे, मृणाले, गन्धरसे, वत्सनाभे विषे च गरलमात्रे पु०न०।
विषकण्टकिनी स्त्री० विषयुक्तं कण्टकमस्या अस्ति इनि। वन्ध्याकर्कोट्याम्।
विषकण्ठ पु० विषं कण्ठे यस्य। शिवे।
विषघ्ना स्त्री० विषं हन्ति हन-ड नि० कुत्वञ्च। गुडूच्याम्।
विषघातिन् पु०विषं हन्ति हन-णिनि। शिरीषवृक्षे। विषनाशके त्रि०।
विषघ्न पु०विषं हन्ति हन क। शिरीषवृक्षे, यवासे, विभीतके, चम्पकवृक्षे च। हिलमोचिकायां (हेलेञ्चा) इन्द्रवारुण्याम्, वर्व्वरायाम्, भूम्यामलक्याम्, रक्तपुनर्नवायाम्, हरिद्रायाम्, वृश्चिकाल्याम्, महाकरञ्जे च स्त्री० ङीप्। विषनाशके त्रि०।
विषजिह्व पु० विषयुक्ता जिह्वेव पत्रमस्य। देवताडवृक्षे।
विषज्वर पु० विषमिव प्राणहन्ता ज्वरो यस्य। महिषे।
विषण्ड न० विशिष्टेन षण्डम्। मृणाले।
विषतिन्दु पु० विषयुक्तस्तिन्दुः। कुचीले।
विषद् न०वि+सद-अच्। पुष्पकासीसे शुक्लवर्णे पु०। तद्वति त्रि०
विषदन्तक पु० विषं दन्ते यस्य कप्। सर्पे।
विषधर पु०विषं धरति धृ अच्। सर्पे, 'विषधरविषमपि'त्युक्तेः
विषधर्म्मन् पु० विषस्येव धर्म्मोऽस्य अनिच् बस०। (आलकुषी) लतायाम्।
विषनाशन पु० विषं नाशयति नश-णिच्-ल्यु। शिरीषवृक्षे
विषनुद् पु० विषं नुदति नुद-क्विप्। श्योनाकवृक्षे।
विषपुष्प न० विषमिव नीलं पुष्पमस्य। नीलपद्मे। अव्। मदनवृक्षे। कर्म्म०। नीलपुष्पे न०।
विषम त्रि० विगतो विरुद्धो वा समं। असमे, अयुग्मे उन्नतानते, दारुणे, सङ्कटे च 'भिन्नचिह्नचतुष्पादं विषमं परिकीर्त्तितमि'त्युक्ते पद्यभेदे न०। [सप्तच्छदे।
विषमच्छद पु० विषमाः अयुग्मानि सप्त छदाः यस्य।
विषमज्वर पु० विषम उग्रो ज्वरः। ज्वरभेदे।
विषमनयन पु० विषमाणि अयुग्मानि त्रीणि नयनान्यस्य। शिवे। विषमनेत्रादयोऽप्यत्र।
विषमर्द्दनी स्त्री० विषं मृद्नातेऽनया मृद-ल्युट् ङीप्। गन्धनाकुल्याम्। स्वार्थे कन्। तत्रैव।
विषमस्थ त्रि० विषमे उन्नतानते सङ्कटे वा तिष्ठति स्था-क। उपद्रवप्राप्ते, सङ्कटस्थे, उन्नतानतदेशस्थे च।
विषमशिष्ट न० विषमं शिष्टं शासनम्। अनुचितशासने।
विषमायुध पु० विषमाणि अयुग्मानि पञ्च आयुधानि वाणा यस्य। कामे। विषमेष्वादयोऽप्यत्र।
विषय पु०विषिण्वन्ति स्वात्मकतया विषयिणं निरूपयन्ति सम्बध्नन्ति वा वि+षि-अच्। इन्द्रियगोचरे-शब्दादौ, देशे च।
विषयिन् न० विषयोऽस्त्यस्य इनि। ज्ञाने, इन्द्रिये च। विषयासक्ते त्रि०। राज्ञि, कामदेवे, धनौ च पु०।
विषरूपा स्त्री० विषं मूषिकविषं रूपयति अतिक्रामति रूप क। अतिविषायाम् (आतइच)।
विषलता स्त्री० विष-व्याप्तेव लता। इन्द्रवारुण्याम्।
विषविद्या स्त्री० विषाय तन्निवृत्तये विद्या। विषघ्नमन्त्रज्ञाने
विषवैद्य पु०विषे विषापहारे वैद्यश्चिकित्सकः।विषमन्त्रविद्यावति
विषशालूक पु० विषस्य मृणालस्य शालूक। पद्मकन्दे।
विषहन्त्री स्त्री०विषं हन्ति हन-तृच् ङीप्। अपराजितायाम्।

विषहारके लि०। [विषहारके लि०।
विषहरी स्त्री०विषं हरति हृ-अच् गौ०ङीप्। मनसादेव्याम्
विषहा स्त्री० विषं हन्ति हन-ड। देवदालीलतायाम्।
विषा स्त्री० विषं नाशत्वेनास्त्यस्याः अच्। (आतइच) अतिविषायाम्, बुद्धौ च।
विषाण न० विष+कानच्। पशुशृङ्गे, हस्तिदन्ते वराहदन्ते, कुष्ठौषधे, क्षीरकाकोल्याञ्च।
विषाणिका स्त्री० विषाणमस्त्यस्याः ठन्। स्तङ्ख्याम् (गाडर-शिङा) कर्कटशृङ्ग्याम्, आमलक्याञ्च।
विषाणिन् पु०विषाणमस्त्यस्य इनि। शृङ्गिणि, हस्तिनि च। शृङ्गाटके, वृषभौषधे च पु०।
विषाद पु० वि+षद-घञ्। अवसादे, जड़तायाञ्च।
विषादनी स्त्री० विषाय तन्निष्टत्तये अद्यतेऽसौ अद-ल्युट्। पलाशीलतायाम्।
विषान्तक पु० विषस्यान्तक इव। शिवे, विषहरे लि०।
विषापह स्त्री० विषमपहन्ति अप+हन-ड। इन्द्रवारुण्याम्, नागदमन्याम्, अर्कमूलायाञ्च (इसरमूल)।
विषाराति पु० ६त०। कृष्णधुस्तूरे।
विषारि पु०६त०। घृतकरञ्जे, महाचञ्चुशाके च। [सके
विषास्य पु० विषमास्ये यस्य। सर्पे विषाक्तमिवास्यमस्य। भल्ला
विषु अव्य०विष-कु। साम्ये, नानारूपे च।
विषुव न० विषु दिनरात्र्योः साम्यं वाति वा-क। समरात्रि दिनकालके अयनांशक्रमेण रवेः तुलामेषराशिसंक्रान्तिभेदे।
विषुवत् न० विषु साम्यमस्यास्ति मतुप् यवादि० मस वः। विषुवशब्दार्थे।
विषौषधी स्त्री० ६त०। नागदन्त्याम्।
विष्क हिंसायां चु आ०सक० सेट्। विष्कयते अविविष्कत। दर्शने उभ० विष्कयति ते अविविष्कत् त।
विष्कम्भ पु० वि+स्कन्भ-अच्। सूर्यचन्द्रयोगजातयोगमध्ये प्रथमे योगे,विस्तारे,प्रतिबन्धे, रूपकाङ्गभेदे, योगिनां बन्धभेदे,वृक्षे, अवष्टम्भके-कीलकादौ च।
विष्किर पु० विकिरति वि+कृ-क सुट्च। विहगे।
विटप न० विट-कपन् तुट् च। भुवने।
विष्टब्ध त्रि० वि+स्तन्भ-क्त। प्रतिरुद्धे अवरुद्धे।
विष्टम्भ पु० वि+स्तन्भ-घञ्। प्रतिबन्धे रोगभेदे च।
विष्टम्भिन् त्रि० वि+स्तन्भ-णिनि। प्रतिबन्धके रोगविशेषजनके च।
विष्टर पु० वि+स्तृ-अप् षत्वम्। 'पञ्चाशता भवेद्ब्रह्मा तदर्द्धेन तु विष्टरः' इति 'वामावर्त्तस्तु विष्टर'इति च स्मृत्युक्ते दर्भकृते आसनभेदे, आसनमात्रे, वृक्षे च। [विष्णौ।
विष्टरश्रवस् पु० विष्टरः कुशस्तद्दिव श्रवसी कर्णावस्य।
विष्टरुहा स्त्री० विष्टा भूमौ प्रविष्टा सती रोहति रुह-क। स्वर्णकेतक्याम्।
विष्टार पु० वि+स्तृ-घञ् षत्वम्। पङ्क्तिच्छन्दोभेदे।
विष्टि स्त्री० विश-क्तिन् क्तिच् वा। वेतनं विना भारादिवहनजन्ये क्लेशे, वेतने, कर्मणि, वर्षणे, प्रेषणे, तिथ्यर्द्धात्मककरणमध्ये सप्तमे करणे कर्मकरे-भृत्ये, वेतनं विना कर्मकरे च पु०।
विष्ठा स्त्री० विविधं तिष्ठति स्था-क षत्वम्। पुरीषे।
विष्णु पु० विष-व्यापने नुक्। व्यापके, परमेश्वरे, वह्नौ शुद्धे, धर्मशास्त्रकारके मुनिभेदे च 'मन्वत्रिविष्णुहारीते'ति स्मृतिः। 'यस्मात् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुर्विशधातोः प्रवेशनादि'त्युक्ते, वासुदेवेऽपि
विष्णुक्रान्ता स्त्री०३त०। अपराजितायाम् तस्याः विष्णुपरित्यक्तत्वात्तथात्वम्। [सिन प्रसिद्धः न्यायभाष्यकर्त्ता।
विष्णुगुप्त पु० चाणक्ये पण्डिते अयमेव वात्स्यायनपर्य्याय-
विष्णुतैल न० वैद्यकप्रसिद्धे तैलभेदे।
विष्णुधर्म्म पु० विष्णूपासनायोग्यो धर्मः शाक०। विष्णूपासने व्रते नियमभेदे उपचारात् तत्प्रतिपादके ग्रन्थे च।
विष्णुधर्म्मोत्तर न० विष्णुधर्म उत्तरः प्रधानः वर्ण्यत्वेन यस्य। संहिताभेदे।
विष्णुपद न० विष्णोः पदमिव व्यापकत्वात्। आकाशे।
विष्णुपदी स्त्री० विष्णुपदं कारणत्वेनास्त्यस्याः अच् गौरा० ङीष्। गङ्गायाम् वृषसिंहवृश्चिककुम्भराशौ रवेः संक्रान्तौ च।
विष्णुमाया स्त्री०६त०। विष्णोः परमेश्वरस्य माया। अघटनघटनपटीयस्याम् अविद्याशक्तौ, तदधिष्ठात्र्यां दुर्गायाञ्च।
विष्णुरथ पु० विष्णोः रथ इव गतिहेतुत्वात्। गरुडे।
विष्णुरात पु०विष्णुना रातः विष्णुर्वा रायात्जीवनमस्मै रा-क्त वा। परीक्षिदाख्येन्नृपे सहि गर्भस्थएव अश्वत्थाममोक्षेषु दग्धः सन् मृत० प्रसवानन्तरञ्च विष्णुना पुनर्जीवित इति भारतम्
विष्णुवल्लभा स्त्री० ६त०। तुलस्याम्, अग्निशिखावृक्षे च।
विष्णुवाहन पु०विष्णुं वाहयति स्थानान्तरं नयति वह णिच् ल्यु। गरुडे।
विष्णुवाह्य पु०विष्णुर्वाह्योऽस्य। गरुडे। [कुम्भयन्त्रे उद्गारे
विष्फार पु० वि+स्फुर णिच् अच आत् अच् षत्वम्। धनुर्गुणा-
विष्य त्रि० विशेषेण वध्यः विष+यत्। विशेषबध्ये।

विष्वक्सेन पु० विषुची सेना यस्य । विष्णौ विष्णुनिर्माल्य भक्षके, तद्गणभेदे च । प्रियङ्गौ स्त्री० । [चि

विष्वक्सेनप्रिया स्त्री० ६त० । लक्ष्मणाम् (चामर आलु) भेदे

विष्वाण न० वि+ध्वन-ल्युट् भक्षणे । भोजने ।

विष्वाण पु० वि+ध्वन-घञ् भक्षणे । भोजने ।

विस न० वि+षो-क । मृणाले ।

विसकण्ठिका स्त्री० विसं मृणालमिव कण्ठोऽस्याः ठन् । बलाकायाम् ।

विस उत्सर्गे दि०पर०सक०सेट् । विसति अवेसीत् ।

विसंवाद पु० वि+सम्+वद-घञ् । विप्रलम्भे, वञ्चने, अन्यथा स्थितस्य वस्तुनोऽन्यथा कथनादौ च ।

*विसकुसुम न० विसजातं कुसुमम् । पद्मे ।*

विसङ्कट पु० विशिष्टो सङ्कटो यस्मात् । सिंहे इङ्गुदीवृक्षे च ।

विसनाभि स्त्री० विसं नाभौ यस्य । पद्मिन्याम् पद्मसमूहे च

विसर पु० वि+सृ अप् । समूहे, विस्तारे च ।

विसर्ग पु० वि+सृज-घञ् । दाने, त्यागे, जलत्यागे, विसर्जनीयाख्ये वर्णभेदे, मोक्षे, मलये च भूतसर्गविसर्गादि मन्वन्तरपालनमिति श्रीधरः । [ल्युट् । प्रेरणे ।

विसर्जन न० वि+सृज-ल्युट् । दाने, त्यागे च । वि+सृज-णिच्

विसर्प पु० वि+सृप-अच् । रोगभेदे ।

विसर्पण न० वि+सृप-ल्युट् । प्रसारे ।

विसार पु० विसरति सर्पति वि+सृ घञ् । मत्स्ये ।

विसारिन् त्रि० वि+सृ-णिनि । प्रसरणशीले । मत्स्ये पु० । माषपर्ण्यां स्त्री० ङीप् । [पद्मसमूहे पद्मलतायाञ्च ।

विसिनी स्त्री० विसानां समूहः तद्युक्तो देशो वा इनि ।

विसूचिका स्त्री० विशिष्टा सूचीव स्वार्थे कन् । रोगभेदे ।

विसृत त्रि० वि+सृ-क्त । विस्तीर्णे ।

विसृत्वर त्रि० वि+सृ-क्वरप् । प्रसरणशीले । स्त्रियां ङीप् ।

विसृमर त्रि० वि+सृ कमरच् । विसरणशीले ।

विसृष्ट त्रि० वि+सृज-क्त । प्रेरिते 'रघवे विसृष्टः' इति रघुः त्यक्ते च । [रचितकामरिपावपि च ।

विस्त पु०न० विस उत्सर्गे क्त नि० इट् । सुवर्णकर्षे, कर्षीति

विस्तर पु० वि+स्तॄ-अप् । शब्दसमूहे, वाक्यसमूहे, विस्तारे, प्रणये, समूहे च । आधारे अप् । पीठे ।

विस्तार पु० वि+स्तॄ-संज्ञायां कर्त्तरि घञ् । विटपे भावे घञ् । विस्तीर्णतायाम् समासवाक्ये पदसमूहे च ।

*विस्तीर्ण त्रि० वि+स्तॄ-क्त । विपुले विस्तारयुक्ते विशाले च ।*

विस्तीर्णपर्ण न० विस्तीर्णानि पर्णान्यस्य । मानके ।

विस्तृत त्रि० वि+स्तृ-क्त । विस्तारयुक्ते । [वह्निकणे विषभेदे च

विस्फुलिङ्ग पु० विस्फुरति वि+स्फुर-डु बाहुः तद् लिङ्गमस्य ।

विस्फोट पु० विस्फुटति वि+स्फुट-अच् । (विषफोडा) पदार्थे, स्वार्थे कन् । स्फोटकभेदे विस्फोटकभया भेषपङ्क्तीति श्री तता कोलम् ।

विस्मय पु० वि+स्मि-अच् । आश्चर्ये, अद्भुते, रसभेदे च ।

विस्मयान्वित त्रि० ३त० । विस्मययुक्ते, आश्चर्ययुक्ते च ।

विस्मापन पु० विस्मि-णिच्-अच-आत् लुक् । कुहके, कामदेवे च । गन्धर्वपुरे न० । विस्मापनमप्यत्र ।

विस्मित पु० वि+स्मि-क्त । विस्मययुक्ते ।

विस्मृत त्रि० विस्मृ-क्त । स्मरणाविषये ।

*विस्मृति स्त्री० वि+स्मृ-क्तिन् । स्मरणाभावे ।*

विस्र न० विस-रक् । आमगन्धे ।

विस्रंस पु० वि+स्रन्स-घञ् । पतने, क्षरणे च ।

विस्रगन्धा स्त्री० विस्रो गन्धोऽस्याः । हपुषायाम् ।

विस्रगन्धि पु० विस्रस्येव गन्धोऽस्य इतस०। हरिताले ।

विस्रम्भ पु० वि+स्रम्भ-घञ् । विश्वासे, प्रणये, परिचये च ।

विस्रम्भिन् त्रि० वि+स्रम्भ-णिनि । विश्वासयुक्ते, प्रणयिनि च

विस्रसा स्त्री० वि+स्रन्स-क्त । जरायाम् ।

विस्रसा स्त्री० वि+स्रस आमगन्धोऽस्यस्याः अच् । हपुषायाम्

विहग पु० विहायसा गच्छति गम-ड नि० पक्षिणि पु० विहङ्गोऽप्यत्र

विहङ्गम पु० विहायसा गच्छति गम-खच् नि० पक्षिणि ।

विहङ्गराज पु० ६त० अच् समा० । गरुडे 'विहङ्गराजाङ्क तह रिति माघः । [श्यामञ्च ।

विहनन न० विहन्यते वि+हन-ल्युट् । तूलपिञ्जने, विघ्ने, हिं

विहर पु० वि+हृ अप् । वियोगे । ल्युट् । तत्रैव न० ।

विहसित न० वि+हस-क्त । मध्यमहासे ।

विहस्त त्रि० विगतो हस्तो हस्तावलम्बनं यस्य । व्याकुले । पण्डिते, षण्ढे च पु० ।

विहापित न० वि+हा-णिच्-क्त । दाने ।

विहायस् पु० न० वि+हय-असुन् णि० वृद्धिः । आकाशे पक्षिणि च स्वार्थे अच् । विहायसमप्याकाशे न० ।

विहार पु० वि+हृ घञ् । क्रीडार्थे पादाभ्यां गमने, भ्रमणे, स्कन्धे, लीलायां, बौद्धदेवालये, वैजयन्ते च ।

*विहित त्रि० वि+धा क्त । कृते, विधिना बोधिते च ।*

*विहीन त्रि० वि+हा-क्त । त्यक्ते, वर्ज्जिते च ।*

विहृत न० वि+हृ-भावे क्त । विहारे, स्त्रीणां चेष्टाभेदे च ।

विह्वल त्रि० वि+ह्वल-अच् । भयादिना व्याकुले, विलीने च ।

वी कान्तौ जनने च अक०गतौ व्याप्तौ क्षेपे भोजने च सक० अदा० उभ० अनिट्। वेति अवैषीत्।

वी(वि)काश पु०वि+काश-घञ् वा दीर्घः। रहसि, प्रकाशे च।

वीक्षण न० वि+ईक्ष करणे ल्युट्। नेत्रे। भावे ल्युट्। दर्शने

वीङ्खा स्त्री० वि+इखि अच्। ऋकारिकर्मोम्। अ। गतिभेदे, नृत्ये अश्वगतिभेदे, सन्धौ च।

वीचि(ची) पु०स्त्री० वे डीचि स्त्रीत्वे वा ङीप्। तरङ्गे, अव काशे, सुखे, अल्पे, किरणे च।

वीचितरङ्ग पु० वीचेरिव तरङ्गो यत्र। वीचितो यथा उत्तरोत्तरं तरङ्गजननमेवं शब्दजन्यजन्यादिरूपे न्याय-भेदे यथा शब्दस्य ढक्कादिदेशे उत्पन्नशब्दजन्यशब्दपरम्परया श्रोत्रेण सह सम्बन्धात् श्रवणम्।

वीचिमालिन् पु० वीचीनां माला ऽस्त्यस्य इनि। समुद्रे।

वीज व्यजने अद०चुरा०उभय०सक०सेट्। वीजयति ते अवि-वीजत् त। 'वीज्यते स हि संसुप्तः'इति कुमारः।

वीज न० वी-क्विप् जन-ड कर्म०। कारणे, शुक्रे, अङ्कुरे, तत्त्वावधाने, मज्जनि, अव्यक्तगणितभेदे, मन्त्रभेदे, धान्यादे फलादौ च।

वीजक पु० वीजेन कायति कै क। मातुलङ्गके। [वराटके।

वीजकोश पु० वीजानां कोश इवाधारः। पद्मवीजाधारे

वीजगर्भ पु० वीजानि गर्भे यस्य। पटोले।

वीजगुप्ति स्त्री० वीजानां गुप्तिर्यस्याम्। शिम्बायाम्।

वीजन न०वीज-ल्युट्। व्यजने। करणे ल्युट्। चामरादौ। वस्तुनि, चक्रवाके, जीवञ्जीवविहगे च पु०।

वीजपादप पु० वीजप्रधानः पादपः। भल्लातकवृक्षे।

वीजपुष्प न० वीजात् पुष्पं यस्य। मरुवके। [वीजपूर्णोऽप्यत्र

वीजपूर पु० पूर्यते पूर-घञ् ३त०। (टावा लेबु) जम्बीरभेदे

वीजफलक पु० वीजानि फले यस्य कप्। वीजपूरे जम्बीरे।

वीजमातृका स्त्री० वीजानां मातेव इवार्थे कन्। पद्मवीजे।

वीजरुह पु०वीजेन रोहति रुह-क। वीजमात्रजाते धान्यादौ

वीजरेचन न० वीज रेचयति रिच-ल्यु। वीजेषु मध्ये रेचके जयपालवीजे।

वीजवपन न० वीजानि उप्यन्तेऽत्र वप-आधारे ल्युट्। क्षेत्रे। भावे ल्युट्। वीजस्य उत्पादनार्थं क्षेपणे।

वीजरत्न न० वीज रत्नमिवास्य। माषकलाये।

वीजवृक्ष पु० वीजमात्राज्जातो वृक्षः। असनवृक्षे।

वीजसञ्चय पु० वीजानां वपनयोग्यधान्यादीनां सञ्चय सम्यक् सम्+चि-अच्। वपनयोग्यधान्यादिसमूहे।

वीजसू पु० वीजं सूते सू-क्विप्। पृथिव्याम्। [सृष्टे क्षेत्रे।

वीजाकृत त्रि० वीजेन सह कृष्टम् डाच् स क्त। वीजेन सह

वीजाम्ल न० वीजेनाम्लमिव। वृक्षाम्ले। [विशिष्टे त्रि०

वीजिन् पु०वीजमस्त्यस्य इनि। उत्पादकेपितरि। वीज

वीज्य त्रि० विशेषेण इज्यः वि+यज-क्यप्। कुलीने।

वीटि(टी) स्त्री० वि+इट-इन् वा ङीप्। (पानेर वीडा) सज्जिततताम्बूले। स्वार्थे कन्। तत्रैव।

वीणा स्त्री० अज न वीभाव पृ० णत्वम्। स्वनामख्याते वाद्यभेदे। [दण्डे।

वीणादण्ड पु० ६त०। वीणावाद्यस्थितालाबुपरिस्थे काष्ठ-

वीणावाद त्रि० वीणा वादयति वद-णिच्-अण्। वीणावादके

वीत न०वि-इण् क्त। युद्धासमर्थे हस्त्यश्वादिसैन्ये, अङ्कुशकर्मणि न्यायादुक्ते अनुमानभेदे च। शान्ते, गते च त्रि०।

वीतंस पु० वि-तनुस घञ् वा दीर्घ। मृगपक्षिणां बन्धनोप-करणे दामप्रभृतौ, विश्वासहेतुमावरणे च।

वीतशोक पु० वीत विगत शोको यस्मात् यस्य वा। अशोकवृक्षे, शोकहीने त्रि०। [क्विप्। घोटके पु०।

वीति स्त्री० वी-क्तिन्। गतौ, दीप्तौ, भोजने, याचने च।

वीतिहोत्र पु० वीतये पुरोडाशादिभक्षणाय हूयन्ते देवायत्र हु-त्रन्। वह्नौ। [वर्त्मनि, दृश्यकाव्यनाट्याङ्गभेदे च।

वीथि(थी) स्त्री०विथ-इन् पृ०वा ङीप्। पङ्क्तौ, श्रेणौ, गृहाङ्गे,

वीथ्यङ्ग पु० वीथिरङ्गमस्य। दृश्यकाव्यभेदे।

वीध्र त्रि० वि-इन्ध-रक्। निर्मले। नभसि, वायौ च पु०।

वीनाह पु० वि नह-घञ्। कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे।

वीप्सा स्त्री०वि+आप सन्-अच-ईत्-अ अभ्यासलोपश्च। व्याप्तौ

वीय अद०चु०आ०अक० सेट्। वीययते अविवीयत्।

वीभ शौर्यहेतुके उद्यमे विकत्थने च भ्वा०अक०सेट्। षङि न ह्रस्व०। वीभते अवीभिष्ट।

वीर न० अज-रक् वीभाव वीर-अच् वा। मरिचे, पद्ममूले, काञ्जिके,उशीरे च। संज्ञायां कन्। करवीरे,वेगवति शौर्ययुक्ते च त्रि० तन्त्रोक्ते कुलाचारे न०। तद्वति त्रि०। स्त्रियां स्त्री०।

वीरक पु० वि+ईर-ण्वुल्। करवीरे।

वीरण न० वि+ईर ल्यु। उशीरे (वेणारमूल)।

वीरतर न० वि+ईर-अच् तरप्। वीरणे, शूरतरे त्रि०।

वीरतरु पु० वि+ईर-अच् कर्म०। अर्जुनवृक्षे कोकिलाक्षे, भल्लातके, (भेला) विल्वभेदे च वीरवृक्षादयोऽप्यत्र। [याम्।

वीरपत्नी स्त्री०वीर पति र्यस्या नुक् ङीप् च। वीरभार्या

वीरपत्ना स्त्री॰ वीरयति वीर-अच् तथाभूत पत्त्र यस्याः । विजयायाम् भङ्गे ।
वीरपान(ण) न॰ वीराणां पानम् वा णत्वम् । युद्धाय युद्धखेदापनुत्तये वा सुरापानादौ । वीरर्ये न॰ ।
वीरभद्र पु॰ वीरो भद्रोऽस्य । अश्वमेधीयेऽश्वे वीरेषु भद्रश्च ।
वीररजस् न॰ वीर इव रजः रक्तत्वात् । सिन्दूरे ।
वीरसू स्त्री॰ वीरं सूते सू+क्विप् । वीरमातरि ।
वीरसेन पु॰ वीरा सेना यस्य । नलराजजनके नृपभेदे ।
वीरहन् पु॰ वीरयति शौर्य्यान्वितं करोति वीर-णिच् अच् । वीरो यज्ञाग्निस्तं हतवान् हन-क्विप् । नष्टाग्नौ विप्रे ।
वीरा स्त्री॰ वि+ईर-अच्, वीर+अच् वा । सुरानामगन्धद्रव्ये, क्षीरकाकोल्याम्, आमलक्याम्, एलवालुकायां, पतिपुत्रवत्यां स्त्रियां, रम्भायां, विदार्य्याम् दुग्धिकायाम्, क्षीरवेदार्य्यां, काकोल्यां, महाशतावर्य्यां, घृतकुमार्य्याम्, अतिविषायां, द्राक्षायाम्, मिश्रपाठके च (मिश्रु) ।
वीराम्ल पु॰ वीरयति शौर्य्यान्वित करोति वीर णिच-अच् कर्म्म॰ । अम्लवेतसे । [इरे युद्धचेले ।
वीराशंसन न॰ वीरैराशंस्यतेऽत्र आ+शन्स ल्युट् । भयवीरासन न॰ वीरस्येवासनम् । 'एकपादमथैकस्मिन् विन्यसेदूरुसंस्थितम् इतरस्मिन् तथा पश्चात् वीरासनमितीरितम्' मित्युक्ते आसनभेदे । [लतायाम् ।
वीरुध(धा) स्त्री॰ वि+रुध-क्विप् दीर्घ वा टाप् । विस्तृतायां
वीरेश्वर लि॰ ६त॰ । वीरपतौ । काशीस्थे शिवलिङ्गभेदे पु॰
वीर्य्य न॰ वीर-यत्, वीरस्य भावो यत् वा । देहस्थे चरमधातौ शुक्रे, पराक्रमे बले, प्रभावे, तेजसि, दीप्तौ च । [युक्ते च
वीर्य्यवत् लि॰ वीर्य्यमस्त्यस्य मतुप् मस्य व । बलवति, वीर्य्य-
वीवध पु॰ विशेषेण बध्यतेऽत्र बध घञ् न वृद्धिः । तण्डुलादिसम्पूर्णे, मार्गे, भारे च । [वाहके ।
वीवधिक पु॰ वीवध भारवहनं शिल्पमस्य ठन् । भार
वीवार पु॰विश्लिष्यतेऽत्र वि+वृ-घञ् दीर्घ । बुद्धमन्दिरभेदे । भावे घञ् । विहारे ।
वुग योगे भ्वा॰पर॰सक॰सेट् इदित । वुङ्गति अवुङ्गीत् ।
वुट हिंसायां चुरा॰उभ॰सक॰सेट् । वोटयति त अवूवुटत् त इदित्वेऽक वुण्टयति ते अवुवुण्टत् त । [अवुवुन्धत् त ।
वुध हिंसायां चुरा॰ उभ॰सक॰सेट इदित् । वुन्धयति ते
वुस(श) विभागे, उत्सर्गकरणे च दि॰पर॰सक॰सेट् । वुस्(श)स्यति अवोसीत्(शी)त् । [अवु वु स्रूषत् त ।
वूष(स) हिंसायां चुरा॰ उभ॰ सक॰ सेट् । वूष(स)यति ते

वृ आवरणे चु॰उ॰सक॰सेट् । वारयति ते अवीवरत् त ।
वृ सेवायां क्र्या॰आ॰सक॰सेट् । वृणीते 'वृणते हि विमृश्यकारिणम्' मिति भारविः । अवरीष्ट-अवरिष्ट-अवृत । [रीष्ट अवृत ।
वृ वरणे भ्वा॰उभ॰सक॰सेट् । वरति ते अवारीत् अवरिष्ट अव-
वृ वरणे स्वादि॰ क्र्या॰ च उभ॰ सक॰ सेट् । वृणोति वृणुते वृणाति वृणीते अवारीत् अवरिष्ट अवरीष्ट अवृत ।
वृंहित न॰ वृन्ह क्त । करिगर्जने ।
वृक आदाने भ्वा॰आत्म॰सक सेट् । वर्कते अवर्किष्ट ।
वृक पु॰ वृक-क । कुक्कुराकारे हरिणघातके व्याघ्रभेदे । काके, बकवृक्षे, क्षत्रिये, अनेकद्रव्यजन्ये धूपे, सरलद्रवे, उदरस्थे वह्निभेदे च अम्बष्ठायां स्त्री॰ वा गौरा॰ ङीष् । वृकस्त्रियां स्त्री॰ ङीप् ।
वृकदंश पु॰वृक दशति दन्श-अच् । कुक्कुरे । [दशाङ्गादौ धूपे
वृकधूप पु॰ वृक्यते वृक धज्यर्थे क कर्म॰ । नानाद्रव्यमिश्रिते
वृकधूर्त्त पु॰ वृक इव धूर्त्तः । शृगाले । (तेन्योड़ि) ।
वृकाक्षी पु॰ वृकस्येवाक्षि पुष्पमस्य षच् षमा॰ ङीष् । निवृति
वृकाराति पु॰ ६त॰ । कुक्कुरे वृकविरोधित्वात् ।
वृकोदर पु॰वृकनामाग्निरुदरे यस्य । 'यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहन । मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदर' इत्युक्ते भीमे 'नृपभूचे वचन वृकोदर' इति भारविः
वृक्ण लि॰ व्रश्च क्त । छिन्ने ।
वृक्ष वरणे भ्वा॰आ॰सक॰सेट । वृक्षते अवृक्षिष्ट । [कटजट्टे
वृक्ष पु॰ व्रश्च-क्स । व्रश्चनेऽपि जायमाने द्रुमे । क्षुद्र र्थे कन् ।
वृक्षचर पु॰ वृक्षे चरति चर-अच् । वानरे ।
वृक्षच्छाय न॰ ६त॰ । बहूनां वृक्षाणां छायायाम् ।
वृक्षधूप पु॰ वृक्षोऽपि धूपमत् साधनम् । सरलद्रुमे ।
वृक्षनाथ पु॰ ६त॰ । वटवृक्षे ।
वृक्षपाक पु॰ वृक्षस्य पाक विपाकरिव अटिलत्वात् । वटवृक्षे ।
वृक्षभवन न॰७त॰ । वृक्षस्य कोटरे । [वन्दायाम् (परगाछ) ।
वृक्षभक्षा स्त्री॰ वृक्षो भक्षो वेष्टकत्वात् भोजनीय इव यस्याः ।
वृक्षभेदिन् पु॰वृक्षं भिनत्ति भिद्-णिनि । वृक्षभेदक अस्त्रभेदे ।
वृक्षसङ्ग्र पु॰ वृक्षस्य यदि भूमौ भवति भू क्विप् । जलवेतसे ।
वृक्षरुहा स्त्री॰वृक्षे रोहति रुह-क । वन्दायाम्, अमरकाष्ठ

वृक्षाम्ल न० वृक्षजातमम्लम्। (तेतुल) वृक्षजाताम्लप्रधाने वृक्ष, चुक्राम्ले च।

वृक्षोत्पल पु० वृक्षमादीयमानमुत्पलं येन। कर्णिकारवृक्षे

वृच वृतौ रु०पर०सक०सेट्। वृचति। अवर्चीत्। निष्ठा अनिट्।

वृज त्यागे अदा०आत्म०सक०सेट् इदित्। वृङ्क्ते अवृक्षिट नेदिदम्ययम्। वृक्ते अवर्जिष्ट। निष्ठा अनिट्।

वृज त्यागे वा चु० उभ०पक्षे भ्वा० पर० सक०सेट्। वर्जयति ते वर्जति। अववर्जत्-अवीवृजत्। अवर्ज्जीत्। निष्ठा अनिट्

वृज वृतौ, त्यागे च रु०पर०सक०सेट्। वृणक्ति। अवर्ज्जीत्। निष्ठा अनिट्। वृक्त। [कुटिले त्रि०।

वृजन न० वृज्यतेऽत्र वृज-क्यु। पापे, आकाशे च केशे पुं०

वृजिन न० वृज-इनच् किच्च। पापे, भुग्ने त्रि०। केशे पु०।

वृण प्रीणने, तु०पर०सक०सेट्। वृणति अवर्णीत्।

वृण भक्षणे तना०उभ०सक०सेट्। वृणोति वर्णोति वृणुते अवर्णीत् अवर्णिष्ट। क्त्वा वेट्। [अववर्त्तत् त।

वृत दीप्तौ चु०उ०सक० सेट्। वर्त्तयति ते अवीवृतत् त

वृत वर्त्तने भ्वा० आ० लुङि लृटि लृङि च उभ०अक०सेट्। वर्त्तते। अवृतत् अवर्त्तिष्ट वर्त्स्यति वर्त्तिष्यते। क्त्वा वेट्।

वृत संभक्तौ,वरणे च दि०आ०स०सेट्। वृत्यते अवर्त्तिष्ट। क्त्वा वेट्

वृत त्रि० वृ-क्त। प्रार्थिते,कर्मादौ प्रार्थनादिना कृतनियोगे च।

वृति स्त्री० वृ-क्तिन्। वेष्टने (बेडा) 'वृतिञ्च तत्र कुर्वीते'तिस्मृ०

वृतिङ्कर पु० वृतिङ्करोति कृ-खच्। विकङ्कते (बइँचि)।

वृत्त न० वृत-भावे क्त। 'गुरुपूजा घृणा शौचं सत्यमिन्द्रियनिग्रह प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते' इत्युक्ते चरित्रे, पद्यभेदे,वृत्तौ च। वृत-कर्त्तरि क्त। अतीते दृढे, वर्त्तुले अधीते मृते जाते च त्रि० कूर्म्मे पु०।

वृत्तगन्धि न० वृत्तस्य पद्यभेदस्य इव गन्धो लेशोऽत्र इत् समा०। 'भवत्युत्कालिकाप्राय समासाढ्यं दृढाक्षरम्। वृत्तैकदेशसम्बन्धात् वृत्तगन्धि पुन स्मृत'मित्युक्ते गद्यभेदे।

वृत्ततण्डुल पु० वृत्तो वर्त्तुलस्तण्डुलोऽस्य। यावनाले। [व्याम्

वृत्तनिष्पाविका स्त्री० वृत्ता वर्त्तुला निष्पाविका। नखनिष्पा

वृत्तपर्णी स्त्री० वृत्तानि पर्णान्यस्याः ङीप्। महाशणपुष्पिकायाम्, पाठायाञ्च (आकनादि)।

वृत्तपुष्प पु० वृत्तानि वर्त्तुलानि पुष्पाण्यस्य। शिरीषवृक्षे।

वृत्तफल न० वृत्तं फलमस्य। मरीचे,दाड़िमे, बदरे च। वार्त्ताक्याम्, आमलक्याञ्च स्त्री०टाप्।

वृत्तमल्लिका स्त्री० वृत्ता मल्लिकेव। श्वेतार्के।

वृत्तबीज पु०वृत्तानि बीजान्यस्य। शिम्बायाम्। आढकामुस्त्री०

वृत्तस्थ पु० त्रि० वृत्ते गुरुपूजादौ चरित्रे तिष्ठति स्था क। गुरुपूजादिचरित्ररते। [सद्देये च

वृत्तान्त पु० वृत्तो जातोऽन्तो निर्णयो यस्मात्। संवादे,वाचिक

वृत्ति स्त्री० वृत-क्तिन्। वर्त्तने,स्थितौ, विवरणे च करणे क्तिन् जीविकायाम्। कौशिकीसात्वतीभारत्यारभट्याख्ये रचनाभेदे,वेदान्तोक्ते अन्तःकरणादेः परिणामभेदे च। 'बुद्धिवृत्तिचिदाभासावि'ति 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरि'ति च वे०

वृत्तिकर्षित त्रि०वृत्त्या कर्षितः। विषमस्थे,अल्पमात्रवृत्तिके च

वृत्र पु० वृत-रक्। अन्धकारे, रिपौ, त्वष्टृपुत्रे दानवभेदे, मेघे, पर्व्वतभेदे, मन्त्रे, शब्दे च।

वृत्रद्विष् पु० ६त०। इन्द्रे। वृत्ररिपादयोऽप्यत्र।

वृत्रहन् पु० वृत्रं हतवान् हन-क्विप्। इन्द्रे।

वृथा अव्य० वृ-थाल् किच्च। निरर्थके।

वृथादान न० कर्म०। निष्फलदाने स्मृतिप्रदर्शिते देवपित्रादार्थभिन्ने कार्य्ये-दानभेदे। [मांसे।

वृथामांस न० वृथा भूतं मांसम्। देवाद्यनुद्देशेन हतपशूनां

वृद्ध न० वृध-क्त। शैलजनामगन्धद्रव्ये। वृद्धदारके वृक्षे पु०। वृद्धियुक्ते, पण्डिते च त्रि०।

वृद्धकाक पु० कर्म०। द्रोणकाके।

वृद्धगङ्गा स्त्री० कर्म०। नदीभेदे।

वृद्धदारक पु० वृद्धं दारयति दृ-णिच्-ण्वुल्। वोरताडवृक्षे।

वृद्धफल पु० वृद्धं फलमस्य। वृद्धदारके वृक्षे।

वृद्धनाभि त्रि० वृद्धा नाभिरस्य। (गोद) वृहन्नाभियुक्ते।

वृद्धप्रपितामह पु० वृद्धः प्रपितामहात् राज०। प्रपितामहजनके। [पितरि।

वृद्धप्रमातामह पु० वृद्धः प्रमातामहात् राज०। प्रमातामहस्य

वृद्धबला स्त्री०कर्म०। महाशमङ्गायाम् वृद्धबलकरत्वात्तथात्वम्।

वृद्धराज पु० वृद्धेषु राजते राज-अच्। अम्लवेतसे।

वृद्धविभीतक पु० वृद्धः विभीतक इव। आम्रातके।

वृद्धश्रवस् पु० वृद्धेभ्यः शृणोति श्रु-असुन्, वृद्धेषु श्रवो यशो यस्येति वा। इन्द्रे।

वृद्धा स्त्री० वृध क्त। गतयौवनायां स्त्रियाम्।

वृद्धि स्त्री० वृध क्तिन्। समृद्धौ अभ्युदये, सम्पत्तौ,समूहे च। वृध कर्त्तरि क्तिच्। औषधिविशेषे, कलान्तरे, (सुद) 'वृद्धेरपि पुनर्वृद्धिरि'तिस्मृतिः। शैलेयगन्धद्रव्ये पु०।

वृद्धिका स्त्री० वृद्धि+स्वार्थे कन्। वृद्धिनामकौषधे।

वृद्धिजीविका स्त्री० वृद्धिरूपा जीविका। ऋणदानादिप्रयुक्तधनेभ्यो लाभरूपजीविकायाम्।

**वृद्धिश्राद्ध** वृद्धौ अभ्युदयाय श्राद्धम्। पुत्रादीनां संस्कारादौ पार्वणविधिके नान्दीश्राद्धे।

**वृद्ध्याजीव** त्रि॰ वृद्धिम् अधमर्णत॰ प्रयुक्तद्रव्याधिकलाभमाजीवति आ+जीव-अण्। वार्द्धुषिके। [अववर्द्धत् त।

**वृध** दीप्तौ चु॰ उभ॰ अक॰ सेट्। वर्द्धयति ते अवीवृधत् त

**वृध** वृद्धौ भ्वा॰ आत्म॰ लुङि लृटि लृङि च उभ॰ अक॰ वृता॰ सेट्। वर्द्धते अवृधत् अवर्द्धिष्ट वर्त्स्यति वर्द्धिष्यते। क्त्वा वेट्।

**वृन्त** न॰ वृ-क्त नि॰ मुम् च। (बोंटा) फलपत्रादिबन्धने।

**वृन्ताक** पु॰स्त्री॰ वृन्तमकति अक-अण्। वार्त्ताकौ स्त्रीत्वे गौ॰ ङीष्।

**वृन्तिता** स्त्री॰ वृन्तं जातमस्याः तार॰ इतच्। कटुकायाम्।

**वृन्द** न॰ वृण्यते वृणुते वा वृण-दन् वा दन् नि॰। समूहे दशार्बुदसंख्यायाञ्च, तुलस्यां, राधिकायां स्त्री॰।

**वृन्दार** त्रि॰ वृन्दमृच्छति ऋ-अण्। मनोहरे।

**वृन्दारक** पु॰ वृन्द+आर कन्। देवे। मुख्ये, मनोहरे च त्रि॰

**वृन्दावन** स्त्री॰ वृन्दाया विहारस्थानम् वनम्। मथुरासन्निकृष्टे वैष्णवे तीर्थभेदे। 'वृन्दावनं परित्यज्य पादमेकं न गच्छती'ति पुराणम्।

**वृन्दिष्ठ** त्रि॰ अतिशयेन वृन्दारको मुख्यः इष्ठन् वृन्दादेशः। अतिशयमुख्ये 'वृन्दिष्ठमासीत् वसुधाधिपानामि'ति भट्टिः ईयसुन् वृन्दीयानप्यत्र त्रि॰ स्त्रियां ङीप्।

**वृश** वृतौ दिवा॰पर॰सक॰ सेट्। वृश्यति अवृशत् अवर्शीत् पुषादिरयमित्येके तेन अवृशदित्येव।

**वृश** पु॰ वृश-क। वासकवृक्षे, उन्दुरे च ओषधिभेदे स्त्री॰।

**वृश्चिक** पु॰ व्रश्च-किकन्। (विछा) कीटभेदे, शूककीटे, (शुयापोका) मेषादित अष्टमे राशौ, ओषधिभेदे, मदनवृक्षे, कर्कटे, गोमयकीटे च।

**वृश्चिकप्रिया** स्त्री॰ वृश्चिकस्य शूककीटस्य प्रिया। पूतिकायाम्

**वृश्चिककर्णी** स्त्री॰ वृश्चिक इव कर्णो यस्याः। आखुकर्ण्याम्।

**वृश्चिका** स्त्री॰ वृश्चिकः नदिपमस्त्यस्य अच्। (विछाती) क्षुपभेदे

**वृश्चिकाली** स्त्री॰ वृश्चिक इवाचति पर्याप्नोति वेदनायै अच् गौरा॰ ङीष्। (बिछाती) क्षुपभेदे।

**वृश्चिपत्त्री** स्त्री॰ वृश्चिक इव पत्त्रं विषाक्तमस्य पृ॰ कलोपः ङीप्। वृश्चिकाल्याम्।

**वृश्चीर** पु॰ व्रश्च-कीरच्। श्वेतपुनर्नवायाम्।

**वृष** सेचने सक॰ भ्वा॰ पर॰ प्रजननसामर्थ्ये अक॰ सेट्। वर्षति अवर्षीत्। क्त्वा वेट्। [अवावर्षत।

**वृष** प्रजननसामर्थ्ये चुरा॰ आत्म॰ अक॰ सेट्। वर्षयते-अवीवृषत-

**वृष** पु॰ वृष-क। वृषभे पुङ्गवे, मेषादितो द्वितीये राशौ, वृक्षभेदे, एकादशमनुकालिके इन्द्रे, धर्म्मे, श्रृङ्गिमाले, मूषिके, शुक्रयुक्ते, वासकवृक्षे, वास्तुस्थानभेदे, शत्रौ, कामे, बलयुक्ते ऋषभनामौषधे, मयूरपिच्छे च।

**वृषण** पु॰ वृष-क्यु। अण्डकोषे।

**वृषदंशक** पु॰ वृषान् मूषिकान् दशति दन्श-ण्वुल्। बिड़ाले

**वृषध्वज** पु॰ वृषो ध्वजो यस्य। शिवे वृषकेतनादयोऽप्यत्र।

**वृषध्वाङ्क्षी** स्त्री॰ वृषो बलवान् ध्वाङ्क्षः काको यस्याः ब॰। गौरा॰ ङीष्। नागरमुस्तायाम्।

**वृषन्** पु॰ वृष-कनिन्। इन्द्रे, कर्णे, वृषे, अश्वे, इ॰खे च।

**वृषनाशन** पु॰ वृषान् मूषिकान् नाशयति नश-णिच्+ल्यु। बिड़ाले। [काणी) आखुकर्ण्याम्।

**वृषपर्णी** स्त्री॰ वृषस्य मूषिकस्य कर्ण इव पर्णमस्याः। (उन्दुर-

**वृषपर्वन्** पु॰ वृषे पर्व उत्सवो यस्य। शिवे, दैत्यभेदे च। वृषं बलकारं पर्व यस्य। भृङ्गराजवृक्षे, कशेरौ च।

**वृषभ** पु॰ वृष-अभच् किच्च। वृषे, श्रेष्ठे, जिनभेदे, कर्णच्छिद्रे, ऋषभनामौषधे च।

**वृषभगति** पु॰ वृषभेण गतिरस्य। शिवे वृषभयानादयोऽप्यत्र।

**वृषभध्वज** पु॰ वृषभो ध्वजोऽस्य। शिवे वृषभकेतनादयोऽप्यत्र।

**वृषभाची** स्त्री॰ वृषभस्य अक्षीव पुष्पाण्यस्याः। इन्द्रवारुण्याम्

**वृषभानु** पु॰। राधिकायाः पितरि।

**वृषभानुसुता** स्त्री॰ ६त॰। राधिकायाम्। [शुभे कर्मे च

**वृषल** पु॰ वृष-कलच्। शूद्रे, लशुने, घोटके, अधार्म्मिके, चन्द्र-

**वृषली** स्त्री॰ 'पितुर्गेहे च या नारी रजः पश्यत्यसंस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृते'त्युक्तायां पितृगृहे दृष्टरजस्कायामनूढायां कन्यायाम्। वृषल+भार्य्यायां जातौ वा ङीप्। वृषलजातिस्त्रियां, तद्भार्य्यायाञ्च, 'अश्राद्धा वृषलीपति'रिति 'वृषलीफेनपीतस्ये'ति च स्मृतिः।

**वृषलोचन** पु॰ वृषस्येव लोचनं यस्य। मूषिके। ६त॰। वृषनेत्रे न॰। ६ब॰। वृषतुल्यनेत्रे त्रि॰।

**वृषवाहन** पु॰ वृषो वाहनमस्य। शिवे वृषभवाहनादयोऽप्यत्र

**वृषस्यन्ती** स्त्री॰ वृषेण जननमिच्छति वृष+आभावे क्यच् सुक् च। कामुक्यां 'वृषस्यन्ती मा वृषस्यन्ती'ति भट्टि॰।

**वृषा** स्त्री॰ वृष॰ मूषिकस्याकारः पर्णमस्याः। मूषिकपर्ण्याम्।

**वृषाकपायी** स्त्री॰ वृषाकपेः पत्नी ङीप् ऐङ् च। लक्ष्म्यां, गौर्य्याम्, स्वाहायां, शच्यां, जीवन्त्याञ्च।

**वृषाकपि** पु॰ वृषं धर्म्मं न कम्पयति न+कपि-इन् नलोपः। महादेवे, विष्णौ, वह्नौ, इन्द्रे च।

**वृषाकर** पु॰ वृषस्य कामर्थ्यस्य करः कृ-अण्। माषे।

**वृषाङ्क** पु॰वृषः चिह्नोऽस्य । शिवे, भल्लातके, षण्डे च

**वृषि(षी)** स्त्री॰वृष-कि वा ङीप् । व्रतिनां कुशमयासनभेदे ।

**वृषोत्सर्ग** पु॰ उत्+सृज-घञ् इत॰। मृताद्युद्देशेन तत्पुत्रादिभिः क्रियमाणे विधानेन वृषस्य त्यागे 'वृषोत्सर्गश्च कर्त्तव्य' इति स्मृतिः । [वृष्यमाणे जले ।

**वृष्टि** स्त्री॰ वृष-क्तिन् । वर्षणे । कर्मणि क्तिन् । मेघादिभिः

**वृष्टिघ्नी** स्त्री॰ वृष्टिं हन्ति कारणत्वेन जहाति हन-क ङीप् । सूक्ष्मैलायाम् ।

**वृष्टिजीवन** त्रि॰वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। वृष्टिजलमात्राजीविनि चातके । [वृष्टिभवे त्रि॰ ।

**वृष्टिभू** पु॰ वृष्टौ तदुपलक्षिते काले भवति भू-क्विप् । भेके ।

**वृष्णि** पु॰ वृष नि किच्च । यादवे वंशे, श्रीकृष्णे, मेषे च ।

**वृष्णिगर्भ** पु॰ वृष्णेः यादवकुलं गर्भे यस्य । श्रीकृष्णे ।

**वृष्य** पु॰ वृषाय हितो यत्, वृष-क्यप् वा । माषे । शुक्रवृद्धिकारके त्रि॰ वाजीकरणे न॰ आमलक्यां शतावर्य्यां, ऋषभनामौषधे च स्त्री॰ ।

**वृष्यकन्दा** स्त्री॰ वृष्यः शुक्रवर्द्धकः कन्दो यस्याः। विदार्य्याम् ।

**वृष्यगन्धिका** स्त्री॰ वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम् । अतिबलायाम् ।

**वृष्यवल्ली** स्त्री॰कर्म॰। विदार्य्याम् । कन् अत इत्त्वम् । तत्रैव ।

**वृह दीप्तौ** वा चु॰उभ॰ सक॰ भ्वा॰ पर॰ इदित्। वृंहयति ते अववृंहत् त । वृंहति अवृंहीत् ।

**वृह वृद्धौ शब्दे** च अक॰भ्वा॰पर॰सेट् ।बर्हति अवृहत् अवर्हीत्

**वृह ध्वनौ वृद्धौ** च भ्वा॰प॰अक॰सेट् इदित् । वृंहति अवृंहीत्

**वृह वृद्धौ** भ्वा॰पर॰सक॰सेट् । वर्हति अवर्हीत् ।

**वृह उद्यमे** तु॰ पर॰अक॰वेट् । वृहति । अवर्हीत्-अवृक्षत् ।

**वृह वृद्धौ** भ्वा॰ आत्म॰अक॰ सेट् इदित् । वृंहते अवृंहिष्ट

**वृहच्चञ्चु** पु॰ वृहती चञ्चुरिव मञ्जरी यस्य । महाचञ्चुशाके ।

**वृहच्चित्त** पु॰ वृहत् उदारं चित्तं यस्मात् ५व॰ । फलपूरे

**वृहत्** त्रि॰ तु॰ वृह अति । महति । स्त्रियां ङीप् ।

**वृहती** स्त्री॰वृहत्+गौ॰ङीष्। महत्यां स्त्रियां,क्षुद्रवार्त्ताक्याम्। वारिधान्यां, वाचि, कण्टकारिकायाम्, नवाक्षरपादके छन्दोभेदे,उत्तरीयवस्त्रे च। स्वार्थे कन् । उत्तरीयवस्त्रे स्त्री॰

**वृहतीपति** पु॰ वृहतीनां वाचां पतिः वृहस्पतौ ।

**वृहत्कन्द** पु॰ वृहत् कन्दो यस्य । गृञ्जने, विष्णुकन्दे च ।

**वृहत्कन्द** पु॰ कर्म॰ । (खागड़ा) तृणभेदे ।

**वृहत्कालशाक** पु॰ कर्म॰ । (बड़ कालकासुन्दे) शाकभेदे ।

**वृहत्कुक्षि** पु॰ वृहत् कुक्षिर्यस्य । तुन्दिले ।

**वृहत्ताल** पु॰ कर्म॰। हिन्ताले ।

**वृहत्तिक्ता** स्त्री॰ कर्म॰ । पाठायाम् (आकनादि) ।

**वृहत्तृण** पु॰ वृहत्तृणं यत्र । वंशे ।

**वृहत्त्वच्** पु॰ वृहती त्वक् यस्य । (छातियान) वृक्षे ।

**वृहत्पत्र** पु॰ वृहत् पत्त्रमस्य । हस्तिकन्दे । (हातिकान्दा)

**वृहत्पाटलि** पु॰ पु॰ पट-अलि कर्म॰। धुस्तूरवृक्षे ।

**वृहत्पाद** पु॰ वृहत् पादो मूलमस्य । वटवृक्षे ।

**वृहत्पालिन्** पु॰ वृहतः पालयति पाल-णिनि । वनजीरके

**वृहत्पीलु** पु॰कर्म॰ । महापीलौ ।

**वृहत्फला** स्त्री॰ वृहत् फलं यस्याः । कटुतुम्ब्याम् ।

**वृहत्साम** न॰ कर्म॰ । 'त्वामिद्धि हवामहे' इत्यस्यामृचि गीयमाने साम्नि ।

**वृहदम्ल** पु॰कर्म॰ । (कामराङ्गा) वृक्षे ।

**वृहदेला** स्त्री॰कर्म॰ । स्थूलैलायाम् ।

**वृहद्गोल** न॰कर्म॰ । (तरमुज) लतावृक्षे ।

**वृहद्दल** न॰ वृहत् दलमस्य । पट्टिकालोध्रे, हिन्ताले च ।

**वृहद्धल** न॰कर्म॰। महालाङ्गले ।

**वृहद्भानु** पु॰ वृहद्भानुः किरणो यस्य । सूर्य्ये, चित्रकवृक्षे च

**वृहद्रथ** पु॰वृहन् रथोऽस्य। इन्द्रे,यज्ञपात्रभेदे,सामायववभेदे च

**वृहद्वल्क** पु॰ वृहत् वल्कमस्य। पट्टिकालोध्रे ।

**वृहद्वात** पु॰वृहन् वातो धातुभेदो यस्मात् ५ब॰। (देधान) वृक्षे

**वृहद्वारुणी** स्त्री॰कर्म॰। महेन्द्रवारुण्याम् ।

**वृहद्बीज** पु॰ वृहत् बीजमस्य । आम्रातके ।

**वृहन्नल** पु॰ वृहत् नलो यस्य । महापोटगले ।

**वृहन्नला(डा)** पु॰स्त्री॰वृहत् नलो यस्य वा लस्य डः । अर्जुने

**वृहस्पति** पु॰वृहत्याः वाचः पतिः पृ॰नि॰। जीवे देवाचार्य्ये

**वॄ वरणे** क्रया॰भ्वा॰उभ॰सक॰सेट्। वृणाति वृणीते अवारीत् अवरिष्ट-अवरीष्ट-अवृत्त । [अवासीत्

**वे तन्तौ** भ्वा॰उभ॰यला॰सक॰अनिट्। वयति ते अवासीत्

**वेग** पु॰ विज-घञ् । प्रवाहे, जवे,रेतसि, मूत्रविष्ठादिनि सारणयत्ने,न्यायोक्ते संस्कारभेदे, महाकाले च। [ङीप्

**वेगिन्** पु॰वेग+अस्त्यर्थे इनि। श्येनविहगे,वेगवति त्रि॰। स्त्रियां

**वेजाना** स्त्री॰ विज-अच् तमानयति आ-नी-ड । सोमराज्याम्

**वेण** वाद्यादाने, गतौ,ज्ञाने चिन्तायाञ्च भ्वा॰उभ॰सक॰सेट्। वेणति ते । अवेणीत् अवेणिष्ट। चङि न ह्रस्वः ।

**वेण** पु॰ वेण-अच् । वर्णसङ्करजातिभेदे, वर्णसङ्करकारके पृथुराजपितरि नृपभेदे च ।

**वेणि(णी)** स्त्री॰ वेण-इन् वा ङीप् । केशरचनाभेदे, जल-

वेधस् पु० वि+धा-असुन् गुण । हिरण्यगर्भे जगत्स्रष्टरि, विष्णौ, सूर्य्ये, श्वेतार्कवृक्षे पण्डिते च ।

वेधित पु० वेधोजातोऽस्य तार० इतच् । विद्धे छिद्रिते ।

वेधिनी स्त्री० विध-णिनि । जलौकायाम् (जोक)

वेन्या स्त्री० वन-ध पृ० । नदीभेदे । [पृस्व ।

वेप कम्पने भ्वा०आ० अक० सेट् । वेपते अवेपिष्ट । चङि न

वेपथु पु० वेप अथुच् । कम्पे ।

वेपन पु० वेप ल्युट् । कम्पने । [पु०न० ।

वेम पु० वे मन् न आलम् । वायदण्डे । मनिन् । अत्रैवार्थे

वेर न०अज-रन् वीभाव । देहे,वार्त्ताकौ,कुङ्कुमे च । संज्ञाया कन् । कर्पूरे । [ह्रस्व

वेल चालने भ्वा०प०सक० सेट् । वेलति अवेलीत् । चङि न

वेल कालोपदेशे, अ०चु०उ०अक०सेट् । वेलयति ते अविवेलत् त

वेल न० वेल अच् । उपवने । काले समये, मर्य्यादायां समुद्र-कूले च स्त्री० 'वेलामूले विभावरी परिक्षीणे'ति भट्टि ।

वेल्ल चालने भ्वा०पर०सक०सेट् चङि न ह्रस्व । वेल्लति अवेल्लीत्

वेल्ल पु०न० वेल्ल अच् । विडङ्गे । घञ् । चलने पु० ।

वेल्लज पु०वेल्ल अच् तथाभूत सन् जायते जन ड । मरिचे ।

वेल्लन न० वेल्ल-ल्युट् । अश्वादेर्भूमौ लुण्ठने काष्ठनिर्म्मिते पदार्थे (वेलुन) च आधारादूर्द्धायां स्त्री० ङीप् । [च त्रि०

वेल्लित न० वेल्ल-भावे क्त । गमने । कर्त्तरि-क्त । कम्पिते, कुटिले

वेल्लि (ल्ली) स्त्री० वेल्ल इन् वा ङीप् । लतायाम् । संज्ञाया कन् । (वेलसुठ) वृक्षे ।

वेवी कान्तौ गतौ व्याप्तौ क्षेपे भोजने च सक० प्रजनने अक० अदा०आत्म०सेट् जक्षादि० वैदिक एवायम् । वेवीते अवेविष्ट

वेश पु० विश घञ् । अलङ्कारादिना कृतरूपान्तरे, नेपथ्य कर्म्मणि, वेश्यागृहे, गृहमात्रे, प्रवेशे च ।

वेशधारिन् पु० वेशं धरति धृ-णिनि । छद्मेन रूपान्तरधारिणि, छद्मतपस्विप्रभृतौ ।

वेशन्त पु० विश-झच् । क्षुद्रसरोवरे, वह्नौ च ।

वेशर पु० वेश राति रा-क । अश्वतरे ।

वेश्मन् न० विश-मनिन् । गृहे ।

वेशमभू स्त्री० ६त० । गृहकरणयोग्ये स्थाने ।

वेश्य न० विश-ण्यत् वेशाय हितं वा यत् । वेश्यालये पाठायाम् (आकनादि) वारयोषिति च स्त्री० । [वेश्याजनालये च

वेष पु० विष-अच् घञ् वा । भूषणादिना रूपान्तरकरणे,

वेषण पु०विष ल्युट् । कासमर्द्दे (कालकासुन्दे)(धन्या) वृक्षे च

वेष्ट वेष्टने भ्वा०आत्म०सक०सेट् । वेष्टते अवेष्टिष्ट ।

वेष्ट पु० वेष्ट-घञ् अच् वा । वेष्टने, श्रीवेष्टे, वृक्षनिर्यासे च ।

वेष्टक न०वेष्ट-ण्वुल् । (पागडी) उष्णीषे । कुष्माण्डे,प्राचीरे च पु० ।

वेष्टन न० वेष्ट-ल्युट् । कर्णशष्कुल्याम्, उष्णीषे, मुकुटे च ।

वेष्टवंश पु० वेष्ट-अच् कर्म० । (वेडवांश) वंशभेदे ।

वेष्टसार पु० वेष्टस्य सार० । श्रीवेष्टे ।

वेष्टित त्रि० वेष्ट क्त । प्राचीरादिना व्यावृते, रुद्धे च ।

वेस गतौ भ्वा०प० सक०सेट् चङि न ह्रस्व । वेसति अवेसीत् ।

वेसन न० वेस-ल्युट् । हिद्दले, 'दालयश्चणकानान्तु निस्तुषा यन्त्रपेषिताः। तच्चूर्णं वेसनमिति'युक्ते चणकादिद्विदलचूर्णे च

वेसर पु० वेस-अरन् । अश्वतरे । [सर्पपादौ

वेसवार पु० वेस वारयति वृ-अच् । (बाटना) पिष्टधन्याक-

वेह यत्ने भ्वा०आ०अक०सेट् चङि न ह्रस्व० । वेहते अवेहिष्ट ।

वेहत् स्त्री० वि++हन अति मलोप । गर्भोपघातिन्यां स्त्रियाम् ।

वेहार पु० वि+हृ-घञ् पृ० । स्वनामख्याते देशभेदे । [ह्रस्व

वेह्ल गतौ भ्वा०पर०सक० सेट् । वेह्लति अवेह्लीत् चङि न

वै शोषे भ्वा० प०सक०सेट् अनिट् । वायति अवासीत् । निष्ठा-तस्य न । वान निर्वाण । [ण्विनि त्रि० ।

वै अव्य० वा-डै० । पादपूरणे,अनुनये,संबोधने च । [तल्लम्ब-

वैकक्ष न० विशेषेण कक्षति व्याप्नोति अण् । तिर्य्यक्कक्षाव लम्बिनि हारभेदे । वुन् । उरसि उपवीताकारेण धृते माल्यभेदे । [विकङ्कतसम्बन्धिनि त्रि०

वैकङ्कत पु०विकङ्कत+स्वार्थेऽण् । (वैंचि) वृक्षभेदे । तस्येदमण् ।

वैकल्पिक त्रि० विकल्पेन प्राप्त भवो वा ठञ् । पक्षप्राप्ते ।

वैकल्य न० विकलस्य भाव ष्यञ् । विकलत्वे ।

वैकुण्ठ पु० विकुण्ठे भव अण् विविधा कुण्ठा माया यस्य स्वार्थेऽण् वा । विष्णौ, गरुडे, इन्द्रे, सितार्ज्जके च ।

वैकृत न० विकृतस्य भाव अण् । विकारे ।

वैखरी स्त्री० विशेषेण ख राति रा क स्वार्थेऽण् । अर्थबोधके कण्ठस्थानादिषु उच्चार्य्यमाणे वर्णात्मके शब्दविशेषे ।

वैखानस पु० वि+खन ड अन-असुन् कर्म० स्वार्थेऽण् । वानप्रस्थे तापसभेदे 'वैखानसेभ्य श्रुतरामवार्त्ता' इति भट्टि ।

वैगुण्य न० विगतो विरुद्धो वा गुणोऽस्य तस्य भाव ष्यञ् । यत्र यदुचितं तस्य रूपान्तरतापादने अचायत्वे,असम्पन्नत्वे च

वैचित्र्य न०विचित्रस्य भाव ष्यञ् । नानारूपत्वे विलक्षणत्वे ।

वैजयन्त पु० विजयते वि+जि-झ स्वार्थेऽण् । इन्द्रप्रासादे, अग्निमन्थवृक्षे, दानवभेदे च पताकायां, जयन्तीवृक्षे च स्त्री० ङीप् ।

वैजिक न० प्रोजेन निर्दृत्तं ठक्। गिपुतैले। बीजाय हितम् ठक्। आत्मनि। स्वार्थे ठक्। कारणे। तस्येदं ठञ्। बीजसम्बन्धिनि त्रि०।

वैज्ञानिक पु० विज्ञानाय साधु ठक्। निपुणे विज्ञानमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। तदध्येतरि, तत्सम्बन्धिनि च त्रि०।

वैडालव्रत न०विडालस्येदम् अण् तदिव व्रतम्। 'यस्य धर्मध्वजो नित्य शक्रध्वज इवोच्छ्रित। प्रच्छन्नानि च पापानि वैडाल नाम तद्व्रतमि'त्युक्ते प्रकारेण धर्माचरणेन गुप्तपापाचारे।

वैडालव्रतिक पु० वैडालव्रतमस्त्यस्य ठन्। छद्मेन धर्मचारिणि छद्मतापसे। इनि। वैडालव्रतीत्यप्यत्र।

वैणव न० वेणूनां फलम् अण्, तस्य न लुप्। वेणुफले। वेणुसम्बन्धिनि त्रि०। [स्त्यस्य ठन्। वंशीवादके

वैणविक त्रि० वेणोर्विकार अण् वैणव वेणुवाद्य शिल्पम-

वैणिक त्रि० वीणा तद्वादन शिल्पमस्य ठक्। वीणावादके।

वैणुक न० वेणोर्विकार ठक्। गजचालनार्थे लौहमये वंशदण्डे। वेणुसद्वादन शिल्पमस्य ठक्। वाद्युवादके त्रि०

वैण्य(न्य) पु०वेण नोऽस्य पत्यम् यञ्। वेणसुते पृथुनामके नृपभेदे

वैतंसिक त्रि० वितंसेन मृगपक्ष्यादिबन्धनोपायेन चरति ठक्। मांसविक्रयोपजीवके व्याधे। [भृत्यादौ।

वैतनिक त्रि० वेतनेन जीवति ठक्। वेतनोपजीवके कर्मकरे

वैतरणी(णि) स्त्री० वितरणेन दानेन तरति अण् ङीप् वा ह्रस्व। यमद्वारस्थे नदीभेदे, 'यमद्वारे महाघोरे तप्ता वैतरणी नदी'ति पुराणम्।

वैतस पु० वतसएव स्वार्थेऽण्। अम्लवेतसे।

वैतानिक पु० वितानस्यायम् ठक्। श्रौतविधिनाऽग्निस्थापने 'दाहाद्दूर्द्ध्वमशौच स्यात् 'यस्य वैतानिको विधिरि'ति स्मृति

वैतालिक त्रि०विविधिस्ताल मङ्गलगीत्यादियन्त्रेण व्यवहरति ठक्। मङ्गलस्तुत्यादिभि र्घा प्रबोधकारके मागधादौ।

वैतालीय पु० मात्रावृत्तभेदे।

वैदग्ध न०स्त्री० विदग्धस्य चतुरस्य भाव अण् स्त्रीत्वपक्षे ङीप्। चातुर्य्ये, भङ्गौ च। ष्यञ्। वैदग्ध्यमप्यत्र न०।

वैदर्भ पु०विदर्भाणा जनपदाना राजा अण्। विदर्भदेश नृपे। वाक्यस्य कौटिल्ये न०। 'अङ्कतिरलङ्कत्तिर्वा वैदर्भी रीतिरुच्यते' इत्युक्ते काव्यरचनाभेदे स्त्री०ङीप्। विदर्भे भवा अण्। नलराजपत्न्या दमयन्त्याम् स्त्री० ङीप्।

वैदल न० विदलस्य विकार अण् भिक्षुकस्य भिक्षापात्रभेदे। पिष्टकभेदे पु०।

वैदिक पु० वेद वेत्त्यधीत वा ठञ्। वेदज्ञे ब्राह्मणे वेदेषु विहित ठक्। वेदोक्ते त्रि०। स्त्रियां ङीप् 'वैदिकी तान्त्रिकी सन्ध्या यथानुक्रमयोगत' इति तन्त्रम्।

वैदुष्य न० विदुषो भाव विद्वस्+ष्यञ्। पाण्डित्ये।

वैदूर्य्य न०विदूरे भव ष्यञ्। कृष्णपीतवर्णे विडालनेत्रतुल्ये मणिभेदे।

वैदेह पु० विशेषेण देह उपचयो यस्य स्वार्थे प्रज्ञाद्यण्। वणिग्जने। विदेहे भव अण् तत कन्। वणिग्जने शूद्रात् वैश्याजाते जातिभेदे च। ठक्। वैदेहिकोपि। वणिजि। विदेहाना राजा अण्। विदेहराजे जनके नृपे।

वैदेही स्त्री० विदेहेषु मिथिलादेशेषु भवा अण्। सीतायाम् जनकात्मजायाम्,हरिद्रायाम् पिप्पल्या, वणिक् स्त्रियाञ्च

वैद्य पु० विद्याऽस्त्यस्य अण्। पण्डिते 'नाविद्यानान्तु वैद्येने'ति स्मृति भिषजि, तद्व्यवसायके-वासकवृक्षे च।

वैद्यक न०वैद्य चिकित्सकमधिकृत्य कृतो ग्रन्थ कन्। आयुर्वेदे

वैद्यबन्धु पु०६त०। आरग्वधवृक्षे।

वैद्यमातृ स्त्री० वैद्यस्य मातेव। वासके तस्य वैद्यजीविकाङ्गरोगशान्तिकरत्वेन तत्पोषकत्वात् तन्मातृतुल्यत्वम्।

वैद्यसिंही स्त्री० वैद्यस्य सिंहीव। वासकवृक्षे।

वैद्या स्त्री० वैद्यस्येव प्रियत्वात् अण्। काकोल्याम्।

वैध त्रि० विधित आगत अण्। विधिप्रतिपाद्ये।

वैधात्र पु० विधातुरपत्यम् अण्। सनत्कुमारादौ मुनिभेदे।

वैधृति पु० विगता धृति र्यस्मात् प्र० वृद्धि। विष्कम्भादिषु मध्ये अन्तिमे योगे।

वैधेय त्रि० विधीयतेऽसौ वि+धा यत् तत स्वार्थे अण्। मूर्खे

वैधर्म्य न० विरुद्धो धर्मो यस्य तस्य भाव ष्यञ्। विरुद्धधर्मत्वे अन्यत्वयर्षे च। [विदनमि ति कुमार।

वैधव्य न०विधवाया भाव ष्यञ्। पतिविरहे 'नववैधव्यमसह्य-

वैनतेय पु० विनताया अपत्य ढक्। गरुडे, अरुणे च।

वैनयिक त्रि०विनये रत ठक्। शास्त्रज्ञानादिना विनयरते

वैनाशिक पु० विनाशं खण्डनमधिकृत्य कृतो ग्रन्थ ठक्। बौद्धागमे। उपचारात् तदभिज्ञे त्रि०।

वैनाशिक पु० विनाशमधिकृत्य कृतो ग्रन्थ ठक्। सर्वेषां क्षणभङ्गुरताप्रतिपादके बौद्धागमे तदभिज्ञे त्रि० विनाशाय हितम् ठक्। ज्योतिषोक्ते स्वजन्मनाडीनक्षत्रे जन्मनक्षत्रावधित्रयोविंशे नक्षत्रे। क्षपिके, परतन्त्रे च त्रि०। ऊर्णनाभे पु०।

वैनीतक पु०न०। विशेषेण नीयतेऽनेन करणे क्त तत स्वार्थे

कन् । परस्परया वाहने धि विक्रादौ ।
वैपरीत्य न० विपरीतस्य भाव ष्यञ् । विपर्य्यये ।
वैभव न० विभोर्भाव अण् । विभुत्वे विभूतौ ।
वैभ्राज न० विभ्राजइदम् अण् । देवोद्यानभेदे ।
वैमुख्य न० विमुखस्य भाव ष्यञ् । विमुखत्वे ।
वैमात्र पु० विमातुरपत्यम् अण् । सापत्ने भ्रातरि तथाभूत भगिन्या स्त्री० ङीप् । [भगिन्या स्त्री० ङीप्
वैमात्रेय पु० विमातुरपत्य ढक् । सापत्ने भ्रातरि तथाभूत
वैयाकरण त्रि०व्याकरणं वेत्त्यधीते वा अण् । व्याकरणाभिज्ञे
वैयाघ्र पु० व्याघ्रचर्मणा परिवृतो रथा अण् । व्याघ्रचर्म-परिवृते रथे ।
वैयाघ्रपद्य पु० व्याघ्रपदस्यापत्य यञ् । गोत्रकारके मुनिभेदे 'वैयाघ्रपद्यगोत्राय'ति, भीष्मतर्पणमन्त्र । [तिष्यपी ति भाव
वैयात्य न०वियातस्य भाव ष्यञ् । निर्लज्जत्वे 'वैयात्य सर
वैयासकि पु० व्यासस्यापत्यम् इञ् । व्यासस्यापत्ये शुकदेव ।
वैयासिकी स्त्री० व्यासेन प्रोक्ता ठञ् ङीप् । व्यासप्रणीतायां संहितायाम् ।
वेर न० वीरस्य भाव अण । विरोधे विद्वेषे ।
वैरकर त्रि० वैरं करोति कृ-ट । विरोधकारके ।
वैरक्त्य न० विरक्तस्य भाव ष्यञ् । विरागे ।
वैरनिर्यातन न० वैरस्य वैरकृतापकारस्य निर्यातनम् निर् यत णिच् ल्युट् । वैरकृतापकारप्रतीकारे ।
वैरप्रतीकार पु० ६त० । वैरकृतापकारस्य तत्स्वरूपापकार करणेन तस्य शोधने ।
वैरशुद्धि स्त्री० ६त० । वैरप्रतीकारे ।
वैराग्य न० विरागस्य भाव ष्यञ् । विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च ।
वैरदेव पु० वैरस्याय तन्नामकत्वात् कर्म० । अर्जुनवृक्षे ।
वैरानुबन्धिन् त्रि० वैर विद्वेषमनुबध्नाति णिनि । विद्वेषा नुरूपकारके, वैरानुगते च ।
वैरिन् त्रि० वैरमस्त्यस्य इनि । शत्रौ ।
वैरूप्य न० विरूपस्य भाव ष्यञ । विरूपत्वे, अननुरूपत्वे, व्यवस्थाभावे वस्तुनो विकारे च ।
वैरोच(न)नि पु०विरोचनस्यापत्यम् बाह्वादि इञ् वा । ब गिपुत्रे, सूर्य्यपुत्रे वलिराजनामके दानव च ।
वैलक्षण्य न० विलक्षणस्य भाव ष्यञ् । विलक्षणत्वे वैशिष्ट्ये ।
वैलक्ष्य न० विलक्षस्य भाव ष्यञ् । लज्जायां, स्वभाव-वैलक्षण्ये च 'वैलक्ष्यहेतोर्गति'मिति नैषधम् ।

वैल्व न० बिल्वस्य फलम् अण् तस्य न लुप् । बिल्वफले तत्सम्बन्धिनि त्रि० । [वार्त्ताकुे नेगसे (दोकानो) ।
वैवधिक त्रि० विवधेन धान्यादिभारवहेण व्यवहरति ठक् ।
वैवर्ण्य न० विवर्णस्य भाव ष्यञ् । विवर्णत्वे मालिन्ये ।
वैवस्वत पु० विवस्वतोऽपत्यम् तस्येद वा अण् । यमे शनौ, रुद्रभेदे च तत्सम्बन्धिनि त्रि० 'वैवस्वतकरक्रियेत्युद्भट दक्षिणदिशि स्त्री० ङीप् ।
वैवाहिक त्रि० विवाहाय हित साधु वा ठक् । विवाहयोग्ये 'वैवाहिकीं तिथि पृष्टा' इति कुमार विवाहेन सबद्धे कन्यापुत्रयो श्वशुरे, विवाहसम्बन्धिनि च त्रि० । पञ्चमे सप्तमे वापि येषां वैवाहिकी क्रियेति स्मृति ।
वैशम्पायन पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे ।
वैशस न० विशसस्य भाव स्वार्थे वा अण् । हिंसने हिंसके वा
वैशाख पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा अत्र मासे पुन अण् । स्वनामख्याते वर्षमध्ये द्वितीये चान्द्रे मासे तन्मासस्य पौर्णमास्यां स्त्री० ङीप् । विशाखा प्रयोजनमस्य ष्यञ् । मन्थानदण्डे । धनुर्द्धराणामवस्थानभेदे न० ।
वैशिष्ट्य न० विशिष्टस्य भाव ष्यञ् । विशेष्यविशेषणसम्बन्धे, विशिष्टबुद्धिनियामके सम्बन्धे, भेदे च ।
वैशेषिक न० विशेष पदार्थभेदमधिकृत्य कृतो ग्रन्थ ठञ् । कणादप्रणीते शास्त्रभेदे । तदधीते अण् । काणादशास्त्राभिज्ञे त्रि० । तस्येदम् अण् । काणादशास्त्रसम्बन्धिनि त्रि० ।
वैशेष्य न० विशेषस्य भाव ष्यञ् । वैशिष्ट्ये भेदे च 'वैशे-ष्यात्तद्वाद इति शाङ्कम । [ब्रह्मणाजब्जाते जातिभेदे
वैश्य पु० विशति उपभुङ्क्ते विश क्विप् स्वार्थे ष्यञ् । वर्णभेदे
वैश्यवृत्ति स्त्री० ६त० । कृषिवाणिज्यादौ ।
वैश्रवण पु० विश्रवसोऽपत्यम अण् विश्रवणादेश । कुबेरे ।
वैश्रवणालय पु० ६त० । वटवृक्षे कुबेरपुर्य्याञ्च । वैश्रवणा-वासादयोऽप्यत्र । [हविषेन दीयमाने बलौ ।
वैश्वदेव पु० विश्वेभ्यो देवेभ्यो देयो बलि अण । वैश्वदेवो-
वैश्वानर पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्व्वदीर्घ । वह्नौ, चित्रकवृक्षे, सामवेदावयवभेदे च ।
वैषम्य न० विषमस्य भाव ष्यञ् । विषमत्वे वैलक्षण्ये ।
वैषयिक त्रि० विषयेण निर्वृत्त ठञ् । विषयनिर्वृत्ते सुखादौ
वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येद वा अण । विष्णूपासके विष्णुसम्बन्धिनि च स्त्रियां ङीप् । वैष्णव्यां शक्तौ 'वैष्णवी समरे वैनमिति चण्डी । विष्णुसम्बन्धिनि त्रि० स्त्रियां ङीप् 'गायत्री वैष्णवी ह्येषेति स्मृति विष्णुधामनि न० ।

वैसारिण पु० विसरति वि+सृ-णिनि स्वार्थे अण् । मत्स्ये ।

वैहासिक पु० विहासेऽभिरतस्तं करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे विदूषके ।

वोढ़ पु० वह तृन् । मुनिभेदे 'वोढुः पञ्चशिखस्तथे'ति स्मृतिः

वोढ़ लि० वह-तृच् । वाहके स्वनामख्यातप्रायके 'भागीरथीनिर्झरसीकराणां वोढे'ति कुमारः । पाणिग्राहके पु० 'पितृवदा वोढुरेव ते' इति स्मृतिः । भारवाहके मूढे च त्रि० वृषभे पु० ।

वोण्ट पु० वा-उण्ट । (बोँटा) इति ख्याते वृन्ते ।

वोरव पु० वा-उर वोर वाति वा क । (बोरो) धान्यभेदे ।

वोल पु० या उलच् । गन्धरसे गन्धद्रव्यभेदे ।

वौषट् अव्य० वह-डौषट् । देवोद्देशेन हविस्त्यागे ।

व्यंसक पु० विगतोंऽसो यस्य कप् । धूर्त्ते 'मयूरव्यंसकादयश्चे'ति पाणिनिसूत्रम् ।

व्यंसित त्रि० वि+अंस-क्त । वञ्चिते ।

व्यक्त त्रि० वि-अनुज क्त । स्फुटे, प्रकाशिते, दृश्ये, प्राज्ञे, स्थूले, [च । विष्णौ पु०

व्यक्ति स्त्री० वि+अनुज-क्तिन् । प्रकाशे क्तिच् । जने पृथगात्मके, एकैकविशेषे च । [यस्य । विष्णौ पु० ।

व्यग्र त्रि० विगतमग्रं यस्य । व्याकुले, व्यासक्ते च । विशिष्टमग्रं

व्यङ्ग न० विगतं विकलं वाङ्गं कर्म० । विकलाङ्गे, विगतभङ्गं यस्य । अङ्गहीने त्रि० ।

व्यङ्ग्य त्रि० वि+अनुज-ण्यत् । व्यञ्जनया वृत्त्या बोध्येऽर्थे,प्रकाश्ये

व्यच व्याजे अक० सम्बन्धे सक० तु० कु० प० सेट् । विचति अविचीत् विव्याच ।

व्यजन न० वि+अज-ल्युट् । त लवृन्तके ।

व्यञ्जक पु० वि+अनुज-णिच्-ण्वुल् । हृद्गतभावादिप्रकाशके अभिनये, व्यञ्जनयार्थबोधके शब्दे च । प्रकाशकमात्रे त्रि०

व्यञ्जन न० विशेषेणाज्यते वि+अनुज-ल्युट् । सूपशाकादौ ओदनभोजनोपकरणे । वि+अनुज-णिच्-ल्युट् । अलङ्कारप्रसिद्धे वृत्तिभेदे । युच् । 'विरतास्वभिधाद्यासु ययार्थो बोध्यतेऽपरः' । सा वृत्तिर्व्यञ्जना नामे'त्युक्ते शब्दशक्तिभेदे ।

व्यञ्जित त्रि० वि+अनुज-णिच्-क्त । प्रकाशिते 'अव्यञ्जितवर्णतया इति कुमारः । व्यञ्जनावृत्त्या बोधितेऽर्थे च ।

व्यडम्बक पु०वि+अड-अच् डवि ण्वुल् कर्म०धाक । एरण्डवृक्षे

व्यतिकर पु० वि+अति कृ-अप् । सम्बन्धे, व्यसने च ।

व्यतिक्रम पु० वि+अति+क्रम घञ् न वृद्धिः । विपर्य्यये 'विवाहे च व्यतिक्रम' इति स्मृतिः ।

व्यतिरिक्त त्रि० वि+अति+रिच्-क्त । भिन्ने 'न तद्वद्वत्तिव्यतिरिक्तसाधनमे'तिकुमारः ।

व्यतिरेक पु० वि+अति+रिच-घञ् । विशेषे, व्यतिक्रमे, अभावे, विनेत्यर्थे, अर्थालङ्कारभेदे च ।

व्यतिषक्त त्रि०वि+अति+षञ्ज-क्त । मिलिते, मथिते च ।

व्यतिषङ्ग पु० वि+अति+षञ्ज-घञ् । परस्परमेलने ।

व्यती(ति)हार पु० वि+अति+हृ-घञ् वा दीर्घ । परीवर्त्ते परस्परैकजातीयक्रियाकरणे । [भुपेत इति रघुः ।

व्यतीत त्रि० वि+अति-इण्-क्त । अतीते 'व्यतीतकालस्त्वहम-

व्यतीपात पु० वि+अति+पत-घञ् दीर्घ । महोत्पातभेदे, विष्कम्भादिषु मध्ये योगभेदे 'श्रवणा च धनिष्ठार्द्रा नागदैवमस्तके । यद्यमा रविवारेण व्यतीपात स उच्यते'इत्युक्ते योगभेदे च ।

व्यत्यय पु० वि+अति+इण्-अच् । व्यतिक्रमे, विपर्य्यये च ।

व्यत्यास पु० वि+अति-अस-घञ् । विपर्य्यये ।

व्यथ भये चलने दुःखानुभवे च भ्वा० आ०अक०सेट् घटा० । व्यथते व्यथिष्ट । अङ् व्यथा ।

व्यथा स्त्री० व्यथ-अङ् । पीड़ायाम्, दुःखे च ।

व्यध ताड़ने दि०प सक०अनिट् । विध्यति अव्यात्सीत् ।

व्यध पु० व्यध अच् । वेधे, छिद्रीकरणे, भेदने च ।

व्यध्व पु० विरुद्ध अध्वा अनुसमा० । कुपथे ।

व्यप क्षये चुरा०उभ सक सेट् । व्यापयति ते अविव्यपत् त० ।

व्यपदेश पु०वि+अप+दिश-घञ् । कथने । संज्ञाया,छापधे च

व्यपरोपण न० वि+अप+रुह णिच् ल्युट् । छेदने ।

व्यपरोपित त्रि० वि+अप+रुह-णिच् क्त । छिन्ने ।

व्यपाकृति स्त्री वि+अप+आ+कृ-क्तिन् । निराकरणे, अस्वीकारे, निह्नवे च । [याथर्पिवषे च ।

व्यपाश्रय पु० वि+अप+आ+श्रि-अच् । आश्रये । [अवत

व्यपेक्षा स्त्री० वि+अप+ईक्ष अ । अपेक्षायां व्याकरणोक्ते

व्यभिचार पु०वि+अभि-चर-घञ् । निन्दिताचारे स्त्रिया परपुरुषगमने,पुरुषस्य परस्त्रीसंगमे,न्यायादिप्रसिद्धे हेतुदोषभेदे च

व्यभिचारिन् पु० वि+अभि+चर-णिनि । अलङ्कारोक्ते रसाङ्गभेदे निर्वेदादौ, न्यायोक्ते व्यभिचाररूपहेतुदोषवति पदार्थे च । परपुरुषगामिन्यां स्त्रियां स्त्री०ङीप् । [ति

व्यय गतौ भ्वादि०चु०उभ०सक०सेट् । व्ययति ते अवव्ययत्

व्यय गतौ भ्वा० उभ०सक०सेट् । व्ययति ते अव्ययीत् अव्ययिष्ट

व्यय नीदे चु०उभ०सक०सेट् । व्याययति ते अविव्ययत् त ।

व्यय पु० वि+इण-अच् । विगमे, धनादेस्त्यागे, ज्योतिषोक्ते लग्नात् द्वादशस्थाने च ।

**व्यर्थ** त्रि॰ विगतोऽर्थः प्रयोजनं वाऽस्य । निष्प्रयोजने, विफले, अर्थशून्ये च । [व्यन्दते च वदति त्रि॰ ।

**व्यलीक** न वि+अल-ईकन् । अकार्य्ये, कामजे, अपराधे, अप्रिये,

**व्यवकलन** न॰ वि+अव-कल-ल्युट् । वियोजने, विगमने, हीनतासम्पादने च । 'व्यवकलनमार्गेऽसौ'ति लीलावती ।

**व्यवकलित** त्रि॰ वि+अव+कल-क्त । वियोजिते ।

**व्यवच्छिन्न** त्रि॰ वि+अव+छिद-क्त । छिन्ने, विशेषिते च ।

**व्यवच्छेद** पु॰ वि+अव+छिद-घञ् । पृथक्करणे, विशेषकरणे, मोचने च ।

**व्यवधा** स्त्री॰ वि+अव+धा-अ । व्यवधाने ।

**व्यवधान** न॰ वि+अव+धा-ल्युट् । तिरोधाने द्रव्यान्तरेण द्रव्यान्तरस्याच्छादने च । [आच्छादके च ।

**व्यवधायक** त्रि॰ वि+अव+धा-ण्वुल् । व्यवधानकर्त्तरि,

**व्यवधि** पु॰ वि+अव+धा-कि । व्यवधाने ।

**व्यवसाय** पु॰ वि+अव+षो-घञ् । उद्यमे 'मरणव्यवसायबुद्धिमि'ति कुमार॰ उपजीविकायाम्, अनुष्ठाने, अवधारणे च 'व्यवसायात्मिका बुद्धिरि'ति गीता ।

**व्यवस्था** स्त्री॰ वि+अव+स्था अ । शास्त्रविहितस्य विषयान्तरपरिहारेण विषयविशेषे स्थापने, शास्त्रमर्य्यादायाञ्च ।

**व्यवस्थित** त्रि॰ वि+अव+स्था-क्त । विषयान्तरपरिहारेण विषयविशेषे अवस्थिते-शास्त्रविहिते पदार्थे ।

**व्यवस्थितविभाषा** स्त्री॰ कर्म॰ । व्याकरणोक्ते विषयान्तरपरिहारेण विषयविशेषेऽवस्थितरूपे विकल्पे ।

**व्यवहर्त्तृ** त्रि॰ वि+अव+हृ-तृच् । व्यवहारकर्त्तरि ।

**व्यवहार** पु॰ वि+अव+हृ-घञ् । अर्थविशेषबोधनाय शब्दविशेषप्रयोगे, ऋणादानादिमष्टादशसु विवादेषु । 'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तदि'ति स्मृतिः । 'परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु वाक्यात् न्यायाद्व्यवस्थानं व्यवहारउदाहृत' इत्युक्ते विवादनिर्णये, सहासनभोजनादौ च ।

**व्यवहारपद** न॰ ६त॰ । व्यवहारविषये ।

**व्यवहारमातृका** स्त्री॰ व्यवहारस्य विवादनिर्णयस्य मातेव पोषकत्वात् परिच्छेदकत्वाद्वा इवार्थे कन् । व्यवहारनिर्णयाय प्राड्विवाकादिकार्य्ये क्रियासमुदाये, विस्तरो शब्दार्थचि॰

**व्यवहारिक** त्रि॰ व्यवहारः प्रयोजनमस्य ठन् । व्यवहारयोग्ये लोकप्रसिद्धे घटपटादौ, स्त्रियां ङीप् । इङ्गुदवृक्षे पु॰

**व्यवहारिकसत्ता** स्त्री॰ कर्म॰ व्यवहारोपयिके सत्त्वे वेदान्तकल्पिते ब्रह्मभिन्नपदार्थमात्रस्य वस्तुतोऽसत्त्वेऽपि व्यवहारयोग्ये सत्त्वे येन घटादि व्यवह्रियते । तत्कार्य्यकरणोपयोगित्वेन कल्पिते घटादेरर्थक्रियाकारित्वलक्षणे सत्त्वे च ।

**व्यवहार्य्य** त्रि॰ वि+अव+हृ-ण्यत् । इदमित्थमेवेत्येवंरूपेण व्यवहारविषये येन सह भोजनादि क्रियते तस्मिंश्च ।

**व्यवहित** त्रि॰ वि+अव+धा-क्त । व्यवधानवति पदार्थे ।

**व्यवाय** पु॰ वि+अव+इण-घञ् । ग्राम्यधर्मे मैथुने, अन्तर्द्धाने शुद्धौ-च तेजसि न॰ । [स्त्रियां ङीप् ।

**व्यवायिन्** पु॰ वि+अव+इण्-णिनि । ग्राम्यधर्मकारके

**व्यसन** न॰ वि+अस-ल्युट् । विपत्तौ, भ्रंशे, कामजाते, कोपजाते च स्त्रीभोगमद्यपानादौ दोषे, दैवादिकृते उपद्रवे च ।

**व्यसनार्त्त** त्रि॰ व्यसनेनार्त्तः । दैवाद्युपद्रवयुक्ते ।

**व्यसनिन्** त्रि॰ व्यसनमस्त्यस्य इनि । व्यसनयुक्ते कामजादिमद्यपानादिरूपदोषयुक्ते, दैवाद्युपद्रुते च ।

**व्यसु** त्रि॰ विगता असवो यस्य । मृते, 'शेषे जातो भवेद्व्यसुरि'ति ज्योतिषम् ।

**व्यस्त** त्रि॰ वि+अस-क्त । व्याकुले, व्याप्ते, विभक्ते च 'व्यस्तरात्रिंदिवस्येति कुमार॰ विपरीते, 'व्यस्तविधिर्विलोम' इति लीलावती । समुदितपदार्थमध्ये एकैकस्मिन् । 'एते व्यस्ता समस्ता वे'ति स्मृतिः । समस्तभिन्ने च भावे-क्त । व्यतिक्रमे न ।

**व्याकरण** पु॰ व्याक्रियन्ते व्युत्पाद्यन्ते व्युत्पन्नतया प्रतिपाद्यन्ते शब्दा येन वि+आ+कृ-ल्युट् । वेदाङ्गे शब्दव्युत्पत्तिबोधके शास्त्रभेदे, वेदान्तोक्ते नामरूपाभ्यां जगतोविकाशने च ।

**व्याकुल** त्रि॰ वि+आ+कुल क । रोगादिना इतिकर्त्तव्यतानिश्चयविहीने । [रणे च

**व्याकृति** स्त्री॰ वि+आ+कृ-क्तिन् । भङ्गौ, प्रकाशने, व्याक-

**व्याकृत** त्रि॰ वि+आ+कृ-क्त । प्रकाशिते ।

**व्याकोश(ष)** त्रि॰ वि+आ+कुश(ष) अच् व्यागत॰ कोश(षा)त् प्रा॰ष॰ वा । प्रफुल्ले 'व्याकोश(षे)न्दीवराभ' इति तन्त्रम् ।

**व्याख्या** स्त्री॰ वि+आ+ख्या-अङ् । विवरणात्मके शब्दसमूहरूपे ग्रन्थभेदे कथने च ।

**व्याख्यात** त्रि॰ वि+आ+ख्या क्त । कथिते, विवृते च ।

**व्याघात** त्रि॰ वि+आ+हन घञ् । अन्तराये, प्रहारे, अर्थालङ्कारभेदे, परस्परविरुद्धे कथने, प्रतिबन्धभेदे 'व्याघातावधि रामङ्गे'ति खण्डनखण्डखाद्यम् । विष्कम्भादिसप्तविंशतियोगमध्ये योगभेदे च ।

**व्याघ्र** पु॰ वि+आ+घ्रा-क । जन्तुभेदे, रक्तैरण्डे, करञ्जे च ।

**व्याघ्रदल** पु॰ व्याघ्रपाद इव दलमस्य प्रा॰ । एरण्डवृक्षे ।

व्याघ्रनख न० व्याघ्रस्य नखमिव । नखीनामगन्धद्रव्ये व्याघ्रस्य नख इव दलान्यस्य । स्नुहीवृक्षे । ६त० । व्याघ्रनखे ।

व्याघ्रपाद(द्) पु० व्याघ्रस्य पाद इव मूलमस्य वा अन्त्यलोपः । विकङ्कतवृक्षे । मुनिभेदे च । [व्याघ्रलाङ्गूले ।

व्याघ्रपुच्छ पु० व्याघ्रस्य पुच्छ इव दलमस्य । एरण्डवृक्षे ६त० ।

व्याघ्रादनी स्त्री० व्याघ्रैरादाने अद-ल्युट् ङीप् । त्रिवृतायाम्

व्याघ्रास्य स्त्री० व्याघ्रस्येवास्यं यस्य । विडाले ।

व्याघ्री स्त्री० व्याघ्रस्येवाकारः कण्टकोऽस्त्यस्याः अच् गौ० ङीप् । कण्टकारिकायाम् । जातौ ङीप् व्याघ्रयोषिति ।

व्याज पु० वि+अज-घञ् वीभावाभावः । कपटे, वञ्चनाफले असत्यव्यवहारे कारणान्तरेण प्रवृत्तस्य कारणान्तरत्वेनोद्भावनरूपे अपदेशे च ।

व्याजनिन्दा स्त्री० ३त० । कपटनिन्दायाम्, अर्थालङ्कारभेदे च

व्याजस्तुति स्त्री० ३त० । कपटस्तुतौ, अर्थालङ्कारभेदे च ।

व्याजोक्ति स्त्री० ३त० । छलेनोक्तौ, अर्थालङ्कारभेदे च ।

व्याड पु० वि+अड-अच् । मांसभक्षके व्याघ्रादौ पशौ, सर्पे, इन्द्रे च वञ्चके त्रि० । [व्याघ्रनखाख्ये गन्धद्रव्ये ।

व्याडायुध न० व्याडस्य व्याघ्रस्यायुधं नख इवास्त्यस्य अच् ।

व्याडि पु० व्याकरणस्य संग्रहकारके कोषकारके च मुनिभेदे ।

व्याध पु० व्यध-ण । मृगहिंसके जातिभेदे ।

व्याधभीत पु० व्याधाद्भीतः भी-क्त । मृगे ।

व्याधि पु० वि+आ+धा-कि । रोगे, कुष्ठरोगे च ।

व्याधिघात पु० व्याधिं हन्ति-हन-अण् । आरग्वधे (सोन्दाल)

व्याधिहन्तृ त्रि० व्याधिं हन्ति हन-तृच् । वाराहीकन्दे ।

व्याधित त्रि० व्याधिर्जातोऽस्य तार० इतच् । व्याधियुक्ते ।

व्याधु(धू)त त्रि० वि+आ+धु-धू-वा-क्त । कम्पिते ।

व्यान पु० वि+अन-घञ् । देहस्थे सर्वशरीरव्यापके प्राणादिमध्ये वायुभेदे ।

व्यापक त्रि० विशेषेणाप्नोति वि+आप-ण्वुल् । अधिकदेशवृत्तौ, न्यायोक्ते स्वाधिकरणवृत्त्यभावप्रतियोगिनि च पदार्थे । तन्त्रोक्ते सर्वाङ्गसम्बन्धिनि न्यासभेदे च ।

व्यापन्न त्रि० वि+आ+पद क्त । मृते, विपद्युक्ते च ।

व्यापाद पु० वि+आ+पद घञ् । द्रोहचिन्तने । [विनाशे च ।

व्यापादन न० वि+आ+पद-णिच्-ल्युट् । मारणे, परानिष्ट

व्यापार पु० वि+आ+पृ-घञ् । 'व्यापारो भावना सैवोत्पादना सैव च क्रिया' इत्युक्तायां भावयितुः उत्पादनक्रियायाम् ।

व्यापारिन् त्रि० व्यापारोऽस्त्यस्य इनि । व्यापारवति कर-वादौ-व्यवसायवति वणिग्जने पु० ।

व्यापिन् त्रि० वि+आप-णिनि । व्यापके । विष्णौ पु० ।

व्यापृत त्रि० वि+आ+पृ-क्त । व्यापारयुक्ते ।

व्याप्त त्रि० वि+आप क्त । पूर्णे, न्यायोक्ते व्याप्तिमति पदार्थे यथा वह्नेर्व्याप्यो धूमः ।

व्याप्ति स्त्री० वि+आप-क्तिन् । ईश्वरस्य ऐश्वर्यभेदे, न्यायमते तदभाववति अविद्यमानत्वरूपे पदार्थे यथा वह्नेरभाववति जलादौ धूमो नास्तीति धूमादौ वह्नेर्व्याप्तिः ।

व्याप्य त्रि० वि-आप-ण्यत् । व्याप्ते । अल्पदेशवृत्तौ पदार्थे अनुमितिसाधने न० । [रागपरिभाषे ।

व्याम पु० वि+अम-घञ् । तिर्यक्पार्श्वतो विस्तृतयो र्बाह्वोरन्त

व्यायत त्रि० वि+आ+यम-क्त । दीर्घे, व्यायते, दूरे अतिशये च । भावे-क्त । दैर्घ्ये, व्यायामे च न० ।

व्यायाम पु० वि+आ+यम-घञ् । श्रमे, श्रमसाधने व्यापारे, मल्लानां श्रमकारके व्यापारे, पौरुषे, दुर्गसंस्कारे, विषये, व्यामपरिमाणे च ।

व्यायोग पु० वि+आ+युज घञ् । दृश्यकाव्यभेदे । [गज च

व्याल पु० वि+अड-घञ् डस्य लः । सर्पे । हिंसकपशौ, दुष्ट-

व्यालगन्धा स्त्री० व्यालस्य गन्धो लेशोऽस्त्यस्याः । काकोल्याम्

व्यालग्राह पु० व्यालान् सर्पान् गृह्णाति ग्रह-अण् । (सापुडे) सर्पधारिणि । णिनि । अत्रैव । [सर्पङ्गायाम् ।

व्यालजिह्वा स्त्री० व्यालस्य सर्पस्य जिह्वेव पत्रमस्याः । महा°

व्यालदंष्ट्र पु० व्यालस्य व्याघ्रस्य दंष्ट्रेव कण्टकमस्य । गोक्षुरे

व्यालनख पु० व्यालस्य व्याघ्रस्य नख इव । गन्धद्रव्यभेदे व्यालदलोपलन । [कर्कटीभेदे

व्यालपत्रा स्त्री० व्यालस्य पाद इव पत्रमस्याः । इर्वारौ

व्यालम्ब पु० विशेषेण आलम्बते वि+आ+लबि+अच् । रक्तैरण्डे । [द्रुमे । व्याघ्रनखाख्ये गन्धद्रव्ये पु०

व्यालायुध न० व्यालस्य व्याघ्रस्यायुधं नख इव । नखीनामगन्ध-

व्यावक्रोशी स्त्री० वि+अव+क्रुश-घञ् स्वार्थेऽण् । पर-स्पराक्रोशे । [परस्परहरणे

व्यावहारी स्त्री० वि+अव+हृ-घञ् स्वार्थे अण् ङीप् ।

व्यावहासी स्त्री० वि+अव+हस-घञ् स्वार्थेऽण् । परस्परहसने

व्याहत त्रि० वि+आ+हन-क्त । हते, निरस्ते च 'व्याहतगतिरुद्याने' इति कुमारः ।

व्याहति स्त्री० वि+आ+हन-क्तिन् । निवारणे ।

व्यास पु० व्यस्यति वेदान् वि+अस-अण् । पराशरपुत्रे मुनिभेदे, समासादिसमानार्थक विग्रहवाक्ये, विस्तारे, नीलकण्ठस्य मध्यस्थरेखायाम् 'ददर्श वापमद्रिणे च

व्यास उच्यते' इत्युक्ते पुराणपाठके विप्रे च ।

**व्यासक्त** त्रि॰ वि+आ+सन्ज-क्त । आसक्ते तत्परे,संलग्ने च

**व्यासङ्ग** पु॰ वि+आ+सन्ज-घञ् । कार्यान्तरत्यागेनैकपरत्वे आसक्तौ च । [सिद्धे च

**व्यासिद्ध** त्रि॰ वि+आ+सिध-क्त । राजाद्या दिनावरुद्धे नि-

**व्याहत** त्रि॰ वि+आ+हन-क्त । व्याघातयुक्ते ।

**व्याहार** पु॰ वि+आ+हृ-घञ् । वाक्ये उक्तौ ।

**व्याहृति** स्त्री॰ वि+आ+हृ-क्तिन् । उक्तौ,भूर्भुव:स्वरादिषु सप्तसु मन्त्रभेदेषु च ।

**व्युत्क्रम** पु॰ वि+उद्+क्रम-घञ् । क्रमवैपरीत्ये, व्यतिक्रमे च

**व्युत्थान** न॰ वि+उद्+स्था-ल्युट् । विरोधकरणे,स्वातन्त्र्यकरणे, प्रतिरोधने, नृत्यभेदे विशेषेण उत्थाने च । वि+उद्+स्था-क्तिन् । व्युत्थितिरप्यत्र स्त्री॰ ।

**व्युत्पत्ति** स्त्री॰ वि+उद्+पद-क्तिन् । विशेषेण उत्पत्तौ, शास्त्र जन्ये शब्दार्थज्ञानादिसम्पादे संस्कारभेदे, शब्दानामर्थाव-बोधकशक्तौ च । [संस्कारयुक्ते पुरुषे च

**व्युत्पन्न** त्रि॰ वि+उद्+पद-क्त । व्युत्पत्तियुक्ते शब्दे, तत्-

**व्युदस्त** त्रि॰ वि+उद्+अस-क्त । निराकृते ।

**व्युदास** पु॰ वि+उद्+अस-घञ् । निराकरणे ।

**व्युष** त्यागे अद॰चु॰उभ॰सक॰सेट् । व्युषयति ते अवुव्युषत् त

**व्युष्ट** त्रि॰वि+वस-क्त । दग्धे,वि+वस-क्त इडभावः। पर्युषिते, प्रभाते च । फले, दिवसे च न॰ ।

**व्युष्टि** स्त्री॰ वि+वस-क्तिन् । समृद्धौ, स्तुतौ, फले च ।

**व्युस** त्यागे दिवा॰पर॰सक॰सेट् । व्युस्यति अव्युसत् अव्युसीत्

**व्यूढ** त्रि॰ वि+वह-क्त । विशेषणविशेषेण स्थिते सैन्यादौ 'व्यूढां द्रुपदपुत्रेणे'ति गीता। संहते, 'व्यूढोरस्को वृषस्कन्ध इति रघुः । प्रवृद्धे, परिवृढे ते विवाहिते च त्रि॰ 'व्यूढा का चन कन्यके'ति प्रबोधचन्द्रोदयः ।

**व्यूढकङ्कट** त्रि॰ व्यूढःपरिहितः कङ्कट-वर्म येन । सन्नद्धकवचे

**व्यूत** त्रि॰ वि+वे-क्त । तन्तुभिर्ग्रथिते ।

**व्यूति** स्त्री॰ वि+वे-क्तिन् । वस्त्रादिवयनकर्मणि ।

**व्यूह** पु॰ वि+ऊह-अच्। समूहे निर्माणे च । सम्यक्तर्के, देहे सैन्ये, युद्धार्थं सैन्यस्थापनविन्यासविशेषे च । [पद्माङ्गके।

**व्यूहपार्ष्णि** पु॰ ६त॰ । युद्धार्थमवस्थापितसैन्य स्थितसैन्याग्रे

**व्ये** संवृतौ हतौ च भ्वा॰उभ॰सक॰अनिट् यजा॰ । व्ययति ते अव्यासीत् अव्यास्त विव्याय विव्यये ।

**व्यो** अव्य॰ वे-डो । शौचे, रोगे च ।

**व्योकार** पु॰ व्यो+कृ-अण् । लौहकारे ।

**व्योमकेश** पु॰ व्योम्नि केशो यस्य । शिवे महादेवे ।

**व्योमकेशिन्** पु॰ व्योमाकारः केशोऽस्यास्ति इनि । महादेवे ।

**व्योमचारिन्** पु॰ व्योम्नि चरति चर-णिनि । विहगे, देवे, गगनचलादौ च ।

**व्योमधूम** पु॰ व्योम्नः धूमइव नीलत्वात् । मेघे ।

**व्योमन्** न॰ व्ये-मनिन् पृ॰ । आकाशे, (याव) अभ्रके, जले च

**व्योममण्डल** न॰ व्योम मण्डलमिव । मण्डलाकारे आकाशे ६त॰ । पताकायाम् । [अकस्मादुत्थिते वायोर्निर्घाते च

**व्योममुद्गर** पु॰ व्योम्नोमुद्गर इव आघातहेतुत्वात् । गगनात्

**व्योमयान** न॰७त॰ । आकाशगमनयोग्ये वाहने विमाने ।

**व्योष** न॰ वि+उष-अच् । शुण्ठीमरीचपिप्पलीरूपे त्रिकटुनि

**व्रज** गतौ भ्वा॰पर॰सक॰सेट् । व्रजति अव्राजीत् । [जत् त

**व्रज** संस्कारे गतौ च चु॰उ॰सक॰सेट् । व्राजयति ते अविव्र-

**व्रज** पु॰ व्रज-घञर्थे क । समूहे, गोष्ठे, पथि, मथुरासमीपस्थे देशभेदे च ।

**व्रजनाथ** पु॰६त॰ । श्रीकृष्णे व्रजपालादयोऽप्यत्र । [श्रीकृष्णे।

**व्रजमोहन** पु॰ व्रजान् व्रजस्थान् मोहयति मुह-णिच्-ल्यु ।

**व्रजवर** पु॰ व्रजानां वरः प्रार्थनीयः । श्रीकृष्णे ।

**व्रजवल्लभ** पु॰ ६त॰ । श्रीकृष्णे ।

**व्रजाङ्गना** स्त्री॰ ६त॰ । व्रजस्य स्त्रियां गोप्याम् ।

**व्रज्या** स्त्री॰व्रज-क्यप् । पर्यटने, गमने,जिगीषोर्युद्धार्थंप्रयाणे च

**व्रण** शब्दे भ्वा॰पर॰अक॰सेट् । व्रणति अव्राणीत् अव्रणीत्

**व्रण** अङ्गक्षतौ अद॰चु॰उ॰सक॰सेट्। व्रणयति ते अवव्रणत् त

**व्रण** पु॰न॰ चु॰व्रण-अच् । क्षते ।

**व्रणकृत्** पु॰ व्रणं करोति कृ-क्विप् । भल्लातके, व्रणकारके त्रि॰

**व्रणद्विष्** पु॰ व्रणं द्वेष्टि द्विष-क्विप् । आम्रपर्णिकायाम् । व्रणघातके त्रि॰ ।

**व्रणहृ** पु॰व्रणं हन्ति हन-ड । एरण्डवृक्षे। गुडूच्याम् स्त्री॰ ।

**व्रणाश** पु॰ व्रणमश्नाति अश-अण् । घोषे,गन्धर्वे गडदूर्वे च

**व्रत** न॰व्रज-घ जस्य तः । भक्षणभेदे,पुण्यसाधने उपवासादि नियमभेदे च ।

**व्रतति(ती)** स्त्री॰ व्रत-अति पृ॰ वा ङीप् । लतायां विस्तारे च

**व्रतसंग्रह** पु॰ ६त॰ । व्रतग्रहणार्थं क्रतदीक्षायाम् ।

**व्रतादेश** पु॰ ६त॰ । उपनयनादिव्रतोपदेशे ।

**व्रतिन्** पु॰ व्रतमस्त्यस्य इनि । व्रतधारके,यजमाने च ।

**व्रश्च** छेदे तु॰पर॰सक॰ वेट् । वृश्चति अव्रश्चीत् अव्राक्षीत् ।

**व्रश्चन** पु॰ वृश्च्यतेऽनेन व्रश्च-ल्युट् । (कनि) स्वर्णादिच्छेदनार्थं पदार्थे । भावे ल्युट् । छेदने न॰ ।

व्रात पु० वृ-अतच् प्र०। समूहे।

व्रातीन त्रि० व्रातेन संघेन जीवति। संघजीविनि।

व्रात्य न०व्रातात् समूहात् च्यवति यत्। अध्ययनार्थे, संस्कार-हीने, जातिमात्रोपजीविनि, 'अत ऊर्द्ध्वं त्रयोऽप्येते यथा-कालमसंस्कृताः। सावित्रीपतिता व्रात्या' इति मनुः।

व्रात्यस्तोम पु० व्रात्ययोग्यः स्तोमः। यज्ञभेदे।

व्री वृतौ क्र्या०प्रा०पर०सक०अनिट्। व्रिणाति-व्रीणाति अव्रैषीत्

व्री गतौ दिवा०आत्म०सक०अनिट्। व्रीयते अव्रेष्ट-निष्ठातस्य नः। व्रीणः।

व्रीड क्षेपे सक०लज्जायाम् अक दि०प०सेट्। व्रीड्यति अव्रीडिष्ट

व्रीड पु० व्रीड-घञ्। लज्जायाम्। अ। तत्रैव स्त्री०।

व्रीण वधे वा चु०उभ० पक्षे भ्वा०पर०सक०सेट्। व्रीणयति ते व्रीणति अविव्रिणत् त अव्रीणीत्।

व्रीहि पु० व्री हि किच्। धान्यमात्रे, आशुधान्ये च। [मिश्र

व्रीहिक त्रि० व्रीहिरस्त्यस्य ठन्। धान्यवति। इति व्रीह्यादि०

व्रीहिकाञ्चन पु० व्रीहिषु काञ्चनं तद्रूपमस्त्यस्य अच्। मसूरे

व्रीहिपर्णी स्त्री० व्रीहेरिव पर्णान्यस्याः ङीप्। (शाल पान) क्षुपभेदे। [चर्म्मादौ।

व्रीहिमय पु० व्रीहिप्रचुरः मयट्। व्रीहिभिर्मिते हविर्द्रव्ये

व्रीहिराजिक पु० व्रीहिषु राजते राज-ण्वुल् ततःस्वार्थे ठ। (काङ्गनि) धान्यभेदे।

व्रुड संवरणे सक० संघाते अक० तु० कु० पर० सेट्। व्रुडति अव्रुडीत्। वि व्रुडति अव्रुडीत्।

व्रूष वधे वा चु०उभ०पक्षे भ्वा०पर०स०सेट्। व्रूषयते अवुव्रूषत्

व्रैहेय त्रि० व्रीहीणां भवनं क्षेत्रं ढञ्। व्रीहिभवनयोग्ये क्षेत्रे

व्ली गतौ वरणे च क्र्या०प्रा० पर सक०अनिट्। व्लीनाति व्लिनाति अव्लैषीत्।

# श

श न० शो-ड। मङ्गले। महादेवे, शस्त्रे च पु०।

शंयु त्रि० शमस्त्यस्य शम्+युस्। शुभान्विते।

शंव त्रि०शमस्त्यस्य शम्+व। शुभयुक्ते, मुषलाग्रलौहे वज्रे च पु०

शंवर न० शंवृणोति शम्+वृ-अच्। जले।

शंसा स्त्री० शन्स-अ। वाक्ये, वाञ्छायां, प्रशंसायाञ्च।

शंसित त्रि० शन्स-क्त। निश्चिते, हिंसिते, कथिते स्तुते च।

शंस्य त्रि०शन्स-ण्यत्। हिंस्ये, स्तुत्ये वाच्ये, च।

शक भासे अक० क्षमे सक०भ्वा० आ०सेट् इदित्। शङ्कते अशङ्किष्ट। [कीत् अशकिष्ट।

शक सामर्थ्ये अक० दि०उभ०सेट्। शक्यति ते अशाकीत्-अश-

शक सामर्थ्ये स्वा०पर०क०अनिट्। शक्नोति अशकत्-अशाक्षीत् पुषादिरित्येके तेन अशकदित्येव।

शक पु० शक-अच्। जातिभेदे, देशभेदे, स्वराज्यावधिवत्सराङ्क प्रवर्त्तके नृपभेदे, तदीये वत्सरे च। कलियुगे शककर्त्तृषु युधिष्ठिरः विक्रमादित्यः शालिवाहनश्चेति त्रयोगताः।

शकट पु०न० शक अटन्। यानभेदे, असुरविशेषे, स्वार्थे ङीप्। क्षुद्रशकटे स्वार्थे कन्। शकटिका तत्रैव।

शकटहन् पु०शकटमसुरभेदं हतवान् हन-भूते क्विप्। श्रीकृष्णे

शकटाख्या स्त्री० शकटाकारत्वात् तदाख्या यस्याः। रोहिणी-नक्षत्रे तस्याः शकटाकारचतुस्तारात्मकत्वेन तथात्वम्।

शकल पु० न० शक-कलच्। खण्डे, एकभागे, त्वचि वल्कले, शल्के, (आंश) च न०।

शकलिन् पु० शकलं शल्कमस्त्यस्ति इनि। मत्स्ये।

शकाब्द पु० शककर्त्तृनृपसंबन्धी अब्दः। शकनरपतिकन्प-राज्यावधिवत्सरे तत्संख्यायाञ्च।

शकार पु० 'मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः। सोऽय-मनूढाभ्राता राज्ञः श्यालः शकार' इत्युक्तलक्षणे राज्ञो-ऽनूढभार्य्याभ्रातरि।

शकारि पु० शकानां म्लेच्छजातिभेदानामरिः। विक्रमादित्ये।

शकुन न० शक-उनन्। शुभाशुभसूचकनिमित्ते-बाहुस्पन्दन-काकादिदर्शनादौ, पक्षिमात्रे, पक्षिभेदे, गृध्रे च पु०। [स्त्री०

शकुनज्ञ त्रि० शकुनं जानाति ज्ञा-क। निमित्ताभिज्ञे, दैवज्ञे

शकुनि पु० शक-उनि। पक्षिमात्रे, चिल्लपक्षिणि, सुबलराज-सुते दुर्य्योधनमातुले च। श्यामापक्षिणि स्त्री० ङीप्।

शकुनिप्रपा स्त्री० ६त०। पक्षिणां पानीयपात्रायाम्।

शकुन्त पु०शक-उन्त। पक्षिमात्रे, भासपक्षिणि, कीटभेदे च।

शकुन्तला स्त्री० शकुन्तैः लायते ला कर्म्मणि-क। मेनकागर्भ-जातायां विश्वामित्रसुतायाम् सा च जातमात्रा मातृतः त्यक्ता शकुन्तलालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्व्वविधिना व्यूढेति भारतम्।

शकुन्तलात्मज पु० ६त०। भरतनृपे।

शकुन्ति पु० शक-उन्ति। पक्षिमात्रे, भासपक्षिणि च।

शकुल पु० शक-उलच्। मत्स्यभेदे (शउल)। [कूर्म्मायाम्।

शकुलाक्षी स्त्री० शकुलस्याक्षीव अक्षि यस्याः ङीप्। गण्ड-

शकुलादनी स्त्री० शकुलैरद्यते अद-ल्युट्। (कट्की) शाक-भेदे जटामांस्यां, जलपिप्पल्यां, कट्फले च।

शकुलार्भक पु० शकुलस्यार्भक इव क्षुद्रत्वादाकारत्वात्। (गडुइ) मत्स्ये।

शकृत स्त्री० शक क्तन। विष्ठायाम्। [स्त्री० ङीप्।
शकृत्करि पु० शकृत् किरति कृ इन्। गवादीनां वत्से वत्सायां
शकृद्द्वार न० ६त०। मलद्वारे अपानस्थाने।
शक्वर पु० शक क्विप् कृ अच कर्म० शक करप् वा।
वृषे। चतुर्दशाक्षरपादके छन्दोभेदे नदीभेदे मेखलायाञ्च
स्त्री० ङीप। शक्वरीयपि चतुर्दशाक्षरपादके छन्दसि।
शक्त त्रि० शक क्त। समर्थे।
शक्ति स्त्री० शक क्तिन्। सामर्थ्ये स्त्रीदेवतायाञ्च। न्यायाद्युक्ते
कारणनिष्ठे कार्योत्पादनयोग्ये धर्मभेदे शब्दनिष्ठे अर्थ-
बोधकत्वरूपे वृत्तिभेदे अस्त्रभेदे च।
शक्तिग्रह पु० ६त०। शक्ते अर्थबोधकतारूपशक्तेर्ज्ञाने।
शक्तिग्राहक पु० शक्तिं गृह्णाति ग्रह ण्वुल्। कार्त्तिकेये
शक्तिं ग्राहयति बोधयति ग्रह णिच ण्वुल्। 'शक्तिग्रहं
व्याकरणोपमानात् कोषाप्तवाक्यात् व्यवहारतश्च वाक्यस्य
शेषाद्विवृतेर्वदन्ति' इत्युक्ते शक्तिबोधके हेतौ।
शक्तिधर पु० शक्तिं धरति धृ-अच्। कार्त्तिकेये सामर्थ्यधरे
त्रि० 'शक्तिधर कुमार' इति रघुः शक्तिभृदादयोऽप्यत्र।
शक्तिपर्ण पु० शक्तिरिव पर्णं यस्य। सप्तपर्णे।
शक्तिपाणि पु० शक्तिः पाणौ यस्य। कार्त्तिकेये शक्तिहस्ता-
दयोऽप्यत्र। [वीहरि।
शक्तिहेतिक पु० शक्तिर्हेतिः प्रहरणास्त्रं यस्य कप्। शक्त्या
शं(स)क्तु पु० स(स)च तुन्। (छातु) भ्रष्टयवादिचूर्णे।
शक्तुफला(ली) स्त्री० शक्तव इव सूक्ष्माणि फलान्यस्या वा
ङीप्। शमीवृक्षे।
शक्त्रि(क्ति) पु० वशिष्ठसुते मुते पराशरस्य पितरि मुनौ।
शक्र त्रि० शक रु। प्रियभाषिणि।
शक्य त्रि० शक यत्। शक्तियुक्ते शब्दा बोध्येऽर्थे, समर्थनीये,
साधयितुं योग्ये, वाक्ये च।
शक्यतावच्छेदक त्रि० ६त०। शक्यपदार्थस्य धर्मो येन धर्मेण
अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्मे। यथा घटशब्द
घटत्वेन घटं बोधयति अतश्चाद्धर्मो घटत्व घटशब्दस्य
शक्यतावच्छेदकम्। [मेचके च।
शक्र पु० शक रक्। इन्द्रे, कुटजवृक्षे, अर्जुनवृक्षे, ज्येष्ठानक्षत्रे,
शक्रगोप पु० शक्र शक्रधनुर्गोपायति समवर्णत्वात्। इन्द्रगोपे
शक्रज पु० शक्रात् जायते जन ड। काके। इन्द्रजन्ये त्रि०
शक्रजातादयोऽप्यत्र। [मेघनादे रावणे, इन्द्रजेतरि त्रि०।
शक्रजित् पु० शक्रं जितवान् जि-क्विप् तुक् च। रावणात्मजे
शक्रधनुस् न० ६त०। मेघनाम्नने शक्रधनुराकारे सूर्य-
किरणसम्पर्कजे पदार्थभेदे(रामधनुक)। [कारे पदार्थे।
शक्रध्वज पु० ६त०। भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजा-
शक्रनन्दन पु० ६त०। अर्जुने। इन्द्रानन्दके त्रि०।
शक्रपर्य्याय पु० शक्रस्य पर्यायो नाम नाम यस्य शक्र०।
कुटजवृक्षे ६त०। इन्द्रस्य वाचकशब्दे।
शक्रपादप पु० ६त०। देवदारुवृक्षे। [स्वार्थे कन्। तत्रैव।
शक्रपुष्पी स्त्री० शक्रस्येव पुष्पमस्याः ङीप्। अग्निशिखावृक्षे
शक्रभवन न०६त०। स्वर्गे। शक्रावासादयोऽप्यत्र। [स्याम्।
शक्रभूभवा स्त्री० शक्रस्यभूमि भवति भू अच्। इन्द्रवारु-
शक्रमातृ स्त्री० शक्रस्य मातेव। भार्ग्याम्। ६त०। इन्द्रजनन्याम्
शक्रमूर्द्धन् पु० शक्रस्येव शिखावान् मूर्द्धा यस्य। वल्मीके।
६त०। इन्द्रमस्तके शक्रशिर आदयोऽप्यत्र।
शक्रवल्ली स्त्री० शक्रप्रिया वल्ली। इन्द्रवारुण्याम्।
शक्रवाहन पु० शक्रं वाहयति वह णिच् ल्यु। मेघे इन्द्रवा-
हनादयोऽप्यत्र।
शक्रवीज न० शक्रस्य कुटजस्य वीजम्। इन्द्रयवे।
शक्रशाखिन् पु० शक्रनामकः शाखी। कुटजवृक्षे।
शक्रसारथि पु० ६त०। इन्द्रसारथौ मातलौ।
शक्रसुत पु० शक्रस्य सुतः। वालिनामके वानरराजे।
शक्रसुधा स्त्री० शक्रस्य सुधेव। पालङ्क्याम्।
शक्रसृष्टा स्त्री० ६त०। हरीतक्याम्।
शक्राख्य पु० शक्रस्येवाख्या यस्य। पेचके। [मिन्द्रपत्न्याम्।
शक्राणी स्त्री० शक्रस्य पत्नी ङीप् आनुक् च। पुलोमजाया-
शक्राशन न० शक्रेणाश्यते अश ल्युट्। भङ्गायाम्।
शक्राशन पु० शक्रं तन्नामानुते अश ल्यु। कुटजवृक्षे।
शक्रोत्थान न० शक्रस्य तद्ध्वजस्य उत्थानम्। शक्रध्वजस्यो-
त्थाने, तदुपलक्षिते उत्सवे च। ६त० शक्रोत्सवोऽप्यत्र।
शङ्कर पु० शं करोति कृ अच्। महादेवे कल्याणकरे त्रि०
शिवपत्न्यां स्त्री० ङीप्। [शुभत्वात्। कर्बरे।
शङ्करावास पु० ६त०। 'कैलासाचले शङ्करस्यावास इव
शङ्का स्त्री० शकि अ। त्रासे वितर्के, संशये च। [किते च।
शङ्कित त्रि० शङ्का जातास्य तार० इतच्। भीते सन्दिग्धे वित
शङ्कु पु० शकि उण्। स्थाणौ मत्स्यभेदे, शल्यास्त्रे, कीलके,
दशकोटिसंख्यायां, तत्संख्याते, महादेवे, कलुषे, पञ्चाशि
राजाङ्के, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थं काष्ठादि
निर्मिते, 'यवाङ्गुला तु सूक्ष्माग्रा काष्ठाद्यङ्कुशमूलिका।
शङ्कुरुक्ता भवेदि'त्युक्ते कीलभेदे च।
शङ्कुकर्ण पु० शङ्कुरिव कर्णोऽस्य। गर्दभे।

शकृत् क्ली० शक-ऋतन्। विष्ठायाम्। [स्त्री० ङीप्।
शकृत्करि पु० शकृतं किरति कॄ-इन्। गवादीनां वत्से वत्सायां
शकृद्द्वार न० ६त०। मलद्वारे अपानस्थाने।
शक्वर(रा) पु० शक-क्विप् वृ-अच् कर्म० शक-वरच् वा। वृषे। चतुर्दशाक्षरपादके छन्दोभेदे, नदीभेदे मेखलायाञ्च स्त्री० ङीप्। शक्वर्य्यपि चतुर्दशाक्षरपादके छन्दसि।
शक्त त्रि० शक-क्त। समर्थे।
शक्ति स्त्री० शक-क्तिन्। सामर्थ्ये स्त्रीदेवतायाञ्च। न्यायाद्युक्ते कारणनिष्ठे कार्य्योत्पादनयोग्ये धर्म्मभेदे, शब्दनिष्ठे अर्थबोधकताख्ये वृत्तिभेदे अस्त्रभेदे च।
शक्तिग्रह पु० ६त०। शक्तेः अर्थबोधकताख्यवृत्तेर्ज्ञाने।
शक्तिग्राहक पु० शक्तिं गृह्णाति ग्रह-ण्वुल्। कार्त्तिकेये शक्तिं ग्राहयति बोधयति ग्रह-णिच् ण्वुल्। 'शक्तिग्रहं व्याकरणोपमानात् कोशाप्तवाक्यात् व्यवहारतश्च वाक्यस्य शेषाद्विवृतेर्वदन्ती'त्याद्युक्ते शक्तिबोधके हेतौ।
शक्तिधर पु० शक्तिं धरति धृ-अच्। कार्त्तिकेये सामर्थ्यधरे त्रि० 'शक्तिधरः कुमारः' इति रघुः शक्तिभृदादयोऽप्यत्र।
शक्तिपर्ण पु० शक्तिरिव पर्णं यस्य। सप्तपर्णे।
शक्तिपाणि पु० शक्तिः पाणौ यस्य। कार्त्तिकेये शक्तिहस्तादयोऽप्यत्र। [योद्धरि।
शक्तिहेतिक पु० शक्तिर्हेतिः प्रहरणमस्य यस्य कप्। शक्त्या
शं(स)क्तु पु० श(स)ञ्च-तुन्। (छातु) भृष्टयवादिचूर्णे।
शक्तुफला(ली) स्त्री० शक्तव इव सूक्ष्माणि फलान्यस्याः वा ङीप्। शमीवृक्षे।
शक्त्रि(क्रि) पु० वशिष्ठमुनेः पुत्रे पराशरस्य पितरि मुनौ।
शक्नु त्रि० शक-नु। प्रियभाषिणि।
शक्य त्रि० शक-यत्। शक्तियुक्ते शक्त्या बोध्येऽर्थे, समर्थनीये, साधयितुं योग्ये, वाक्ये च।
शक्यतावच्छेदक त्रि० ६त०। शक्यपदार्थस्य धर्म्मो येन धर्म्मेण अर्थस्य शब्दसङ्केतविषयता तस्मिन् धर्म्मे। यथा घटशब्दः घटत्ववन्तं पदार्थं बोधयति अतस्तद्धर्म्मो घटत्वं घटशब्दस्य शक्यतावच्छेदकम्। [भिषजे च।
शक्र पु० शक-रक्। इन्द्रे, कुटजवृक्षे, अर्ज्जुनवृक्षे, ज्येष्ठानक्षत्रे,
शक्रगोप पु० शक्रं शक्रधनुर्गोपायति समवर्णत्वात्। इन्द्रगोपे
शक्रज पु० शक्रात् जायते जन-ड। काके। इन्द्रजन्ये त्रि० शक्रजातादयोऽप्यत्र। [मेघनादे रावणे, इन्द्रजेतरि त्रि०।
शक्रजित् पु० शक्रं जितवान् जि-क्विप् तुक् च। रावणात्मजे
शक्रधनुस् न० ६त०। मेघमध्यस्थे शक्रधनुराकारे सूर्य्यकिरणसम्पर्कजे पदार्थभेदे(रामधनुक)। [कारे पदार्थे।
शक्रध्वज पु० ६त०। भाद्रशुक्लद्वादश्यां पूज्ये इन्द्रदैवते ध्वजा-
शक्रनन्दन पु० ६त०। अर्ज्जुने। इन्द्रानन्दके त्रि०।
शक्रपर्य्याय पु० शक्रस्य पर्य्यायो नाम नाम यस्य शा०क०। कुटजवृक्षे ६त०। इन्द्रस्य वाचकशब्दे।
शक्रपादप पु० ६त०। देवदारुवृक्षे। [स्वार्थे कन्। तत्रैव।
शक्रपुष्पी स्त्री० शक्रस्येव पुष्पमस्याः ङीप्। अग्निशिखावृक्षे
शक्रभवन न० ६त०। स्वर्गे। शक्रावासादयोऽप्यत्र। [ण्याम्।
शक्रभूभवा स्त्री० शक्रस्य भुवि भवति भू-अच्। इन्द्रवारु-
शक्रमातृ स्त्री० शक्रस्य मातेव। भार्ग्याम्। ६त०। इन्द्रजनन्याम्
शक्रमूर्द्धन् पु० शक्रस्येव शिखावान् मूर्द्धा यस्य। वल्मीके। ६त०। इन्द्रमस्तके शक्रशिर आदयोऽप्यत्र।
शक्रवल्ली स्त्री० शक्रप्रिया वल्ली। इन्द्रवारुण्याम्।
शक्रवाहन पु० शक्रं वाहयति वह-णिच्-ल्यु। मेघे इन्द्रवाहनादयोऽप्यत्र।
शक्रबीज न० शक्रस्य कुटजस्य बीजम्। इन्द्रयवे।
शक्रशाखिन् पु० शक्रनामकः शाखी। कुटजवृक्षे।
शक्रसारथि पु० ६त०। इन्द्रसारथौ मातलौ।
शक्रसुत पु० शक्रस्य सुतः। वालिनामके वानरराजे।
शक्रसुधा स्त्री० शक्रस्य सुधेव। पालङ्क्याम्।
शक्रसृष्टा स्त्री० ६त०। हरीतक्याम्।
शक्राख्य पु० शक्रस्येवाख्या यस्य। पेचके। [मिन्द्रपत्न्याम्।
शक्राणी स्त्री० शक्रस्य पत्नी ङीप् आनुक् च। पुलोमजाया-
शक्राशन न० शक्रेणाश्यते अश-ल्युट्। भङ्गायाम्।
शक्राशन पु० शक्रं तदाभामश्नुते अश-ल्यु। कुटजवृक्षे।
शक्रोत्थान न० शक्रस्य तद्ध्वजस्य उत्थानम्। शक्रध्वजस्योत्थाने, तदुपलक्षिते उत्सवे च। ६त० शक्रोत्सवोऽप्यत्र।
शङ्कर पु० शं करोति कृ-अच्। महादेवे कल्याणकरे त्रि० शिवपत्न्यां स्त्री० ङीप्। [शुभ्रत्वात्। कर्पूरे।
शङ्करावास पु० ६त०। कैलासाचले शङ्करस्यावास इव
शङ्का स्त्री० शकि-अ। त्रासे, वितर्के, संशये च। [चिते च।
शङ्कित त्रि० शङ्का जातास्य तार० इतच्। भीते संदिग्धे चि-
शङ्कु पु० शकि-उण्। स्थाणौ मत्स्यभेदे, शल्यास्त्रे, कीलके, दशकोटिसंख्यायां, तत्सङ्ख्याते महादेवे, कलुषे, पत्त्रिराजाख्ये, मेढ्रे, नखीनामद्रव्ये, छायापरिमाणार्थं काष्ठादिनिर्म्मिते, 'अर्काङ्गुला तु सूच्यग्रा काष्ठाद्यङ्गुलमूलिका। महदंशा भवेदि'त्युक्ते कीलभेदे च।
शङ्कुकर्ण पु० शङ्कुरिव कर्णोऽस्य। गर्द्दभे।

शङ्कुतरु पु० शङ्कुयोग्यतरुः । शालवृक्षे शङ्कुत्वादियोग्यत्व ।

शङ्कुला स्त्री० शकि-उलच् । पत्रपरिकायाम् पूगच्छेदकास्त्रभेदे (जाँति) शङ्कुलाखण्ड इति सिद्धान्तकौमुदी ।

शङ्ख पु० न० शम-ख । स्वनामख्याते समुद्रजाते पदार्थे, ललाटास्थ्नि, निधिभेदे, नखीनामगन्धद्रव्ये, कर्णसमीपस्थे-अस्थ्नि नागभेदे, हस्तिदन्तमध्ये, दशनिखर्वसंख्यायां, तत्संख्याते च

शङ्खक न० शङ्खस्य विकारः कन् । शङ्खजाते वलयाकारे पदार्थे

शङ्खकार पु० शङ्खं तद्विकारं वलयाकारं पदार्थं करोति कृ-अण् । वर्णसङ्करजातिभेदे (शांखारी)

शङ्खचूर्ण न० ६त० । शङ्खजाते चूर्णे ।

शङ्खद्राविन् पु० शङ्खं द्रावयति द्रु-णिच्-णिनि । अम्लवेतसे

शङ्खधरा स्त्री० धृ-अच् ६त० । हिलमोचिकायाम् ।

शङ्खध्म पु० शङ्खं धमति ध्मा-क । शङ्खवादके । क्विप् । शङ्खध्मा इत्यप्यत्र । [मपि तत्र ङीप्

शङ्खनख पु० शङ्खस्य नख इव । क्षुद्रशङ्खे (जोङ्डा) स्त्रीत्व-

शङ्खपुष्पी स्त्री० शङ्ख इव पुष्पमस्याः ङीप् । (शङ्खाली) वृक्षे

शङ्खभृत् पु० शङ्खं बिभर्त्ति भृ-क्विप् तुक् च । विष्णौ ।

शङ्खमुख पु० शङ्ख इव मुखमस्य । कुम्भीरे ।

शङ्खिका स्त्री० शङ्खोऽस्त्यस्याः ठन् । (चोरकावका) क्षुपभेदे

शङ्खिन् पु० शङ्ख+अस्त्यर्थे इनि । विष्णौ, समुद्रे च ।

शङ्खिनी स्त्री० शङ्खोऽस्त्यस्याः इनि । चोरपुष्प्याम्, श्वेतचुक्रायां, यवतिक्तायां, स्त्रीभेदे, उपदेवताभेदे, (शाकचिन्नी) शङ्खवल्ल्यां स्त्रियाञ्च ।

शङ्खिनीफल पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे ।

शङ्खिनीवास पु० ६त० । शाखोटकवृक्षे ।

शच गतौ भ्वा०आ०स०सेट् इदित् । शञ्चते, अशञ्चिष्ट ।

शच कथने भ्वा०आ०सक०सेट् । शचते अशचिष्ट ।

शचि(ची) स्त्री० शच-इन् वा ङीप् । इन्द्रपत्न्याम् ।

शचीपति पु० ६त० । इन्द्रे । शचीभर्त्रादयोऽप्यत्र ।

शट(ठ) श्लाघायां चु०आ०सक०सेट् । शाट(ठ)यते अशीशट(ठ)त

शट सादे गतौ भेदे च भ्वा० पर० सक० रोगे अक० सेट् । शटति । अशाटीत्-अशटीत् ।

शट पु० शटति रुजति शट-अच् । अंशे, सिंहकेसरे, जटायाञ्च स्त्री० ।

शटि(टी) स्त्री० शट-इन् वा ङीप् । (शठी) स्वनामख्याते ओषधिभेदे । [अशाठीत्-अशठीत्

शठ वधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति

शठ श्लाघे चु० पर० अक० सेट् । शाठयति त अशीशठत् त

शठ दुष्टवचने चु० उभ० सक० सेट् । शठयति ते अशशठत् त

शठ न० शठ-अच् । तगरे, कुङ्कुमे, लौहे च । धुस्तूरे, मध्यस्थपुरुषे च पु० । धूर्त्ते त्रि० ।

शठता स्त्री० शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च ।

शठम्बा स्त्री० शठ-अच् अबि-अच् कर्म० स० । अम्बष्ठायाम् ।

शड संघाते रोगे च अक० भ्वा० प० सेट् इदित् । शण्डति अशण्डिष्ट ।

शण दाने भ्वा०पर०सक०सेट् । शणति अशाणीत् अशणीत्

शण पु० शण-अच् । स्वनामख्याते क्षुपभेदे ।

शणघण्टिका स्त्री० शणस्य घण्टेव इवार्थे कन् । शणपुष्पजाते घण्टाकारवति फले ।

शणपर्णी स्त्री० शणस्येव पर्णान्यस्याः ङीप् । अशनपर्ण्याम् ।

शणपुष्पी स्त्री० शणस्येव पुष्पमस्याः ङीप् (झनझने, वनशणे) स्वार्थे कन् । तत्रैव ।

शणसूत्र न० शणाज्जातम् सूत्रम् । शणजाते जाले ।

शणालुक पु० शण इवालुकः । आरेवतवृक्षे (शोणालु)

शणिका स्त्री० शणस्तत्पुष्पमस्त्यस्याः ठन् । शणपुष्प्याम् ।

शण्ड न० शडि-अच् । पद्मादिसमूहे, नपुंसके, वृषे च ।

शण्डिल पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे ।

शण्ढ पु० शण-ढ तस्य नेत्त्वम् । अन्तःपुररक्षके क्लीबे ।

शत न० शो-डतच् । स्वनामख्यातसंख्यायाम्, तत्संख्येते बहुसंख्यायां च । स्वार्थे कन् । तत्रैव न० ।

शतक त्रि० शतं परिमाणमस्य कन् । शतसंख्यायुक्ते ।

शतकुम्भ पु० शतं कुम्भा यत्र । स्वर्णखनिपर्वतभेदे ।

शतकोटि पु० शतं कोटयोऽस्याग्रे यस्य । वज्रे शतगुणिता कोटिः शाक० । शतगुणितकोटिसंख्यायां स्त्री० ।

शतक्रतु पु० शतं क्रतवोऽस्य । इन्द्रे ।

शतग्रन्थि स्त्री० शतं ग्रन्थयोऽस्य । दूर्वायाम् । [करञ्जे च

शतघ्नी स्त्री० शतं हन्ति हन-टक् । अस्त्रभेदे, वृश्चिकाल्याम्,

शततम त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।

शततारा स्त्री० शतमिषक् तारा शाक० । शतभिषानक्षत्रे ।

शतदन्तिका स्त्री० शत दन्ता इव सन्त्यस्य ठन् । नागदन्त्याम्

शतद्रु पु० शतधा द्रवति शत-द्रु-कु । नदीभेदे । [शतप्रकारे अव्य०

शतधा स्त्री० शतं पर्वाणि धत्ते धा-क । दूर्वायाम् । शत+धाच् ।

शतधामन् पु० शतं धामानि यस्य । विष्णौ ।

शतधार पु० शतं धारा कषाणि यस्य । वज्रे शतधारायुक्ते त्रि० । "वज्रोः प्रविश्य शतधारमि"ति श्रुतिः ।

शतधृति पु० शतं धृतयोऽस्य । इन्द्रे, ब्रह्मणि, स्वर्गे च ।

शतपत्त्र न० शतं बहूनि पत्त्राण्यस्य । पद्मे ।

शतपत्त्री स्त्री॰ शतं पत्राणि दला यस्याः ङीप् । (सेओती) पुष्पवृक्षभेदे स्वार्थे कन् । तत्रैव । [तिलकपर्ण्यभेदे ।

शतपथ पु॰ शतं पन्थानो यत्र अच् समा॰ । यजुर्वेदीयब्राह्मणा-

शतपथिक त्रि॰ शतपथं वेत्त्यधीते वा ठन् । शतपथब्राह्मणात्मक ग्रन्थाध्यायिनि ।

शतपद् न॰ शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादानुसा-रेण नामकरणोपयोगिप्रथमवर्णस्य चक्रे चक्रभेदे । शतं पादाः यस्याः पादभावः समा॰ ङीपि पद्भावः । कीटभेदे (कानखाड़) स्त्री॰ ।

शतपद्म न॰ शतदलयुक्तं पद्मम् । शतदलकमले, श्वेतपद्मे च ।

शतपर्व्वन् पु॰ शतं पर्व्वाणि ग्रन्थयो यस्य । वंशे, इक्षुभेदे च कटुकायां,वचायां,दूर्व्वायां च स्त्री॰ । कन् । तासु,यवे च

शतपाद् स्त्री॰शतं पादा यस्याः पाद्भावः । कीटभेदे (कानखाड़)

शतपादिका स्त्री॰ शतं पादा मूलान्यस्याः । काकोल्याम् ।

शतपुष्पा स्त्री॰शतं पुष्पाणि यस्याः । (सलुफा) शाकभेदे (मौरी) क्षुपभेदे च । कन् । तत्रैव ।

शतप्रसूना स्त्री॰ शतं प्रसूनानि यस्याः । (सुलफा) शाके

शतप्रास पु॰ शतं प्रासा इव फलानि यस्य । करवीरवृक्षे ।

शतभिषज् स्त्री॰शतं भिषज इव ताराः यत्र । शततारात्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शतभिषायल स्त्री॰ ।

शतभीरु स्त्री॰ शतं बहवो वियोगिनो भीरवो यस्याः ब॰ । मल्लिकायाम् तद्दर्शने हि वियोगिनां कामोद्दीपनात् ततो भीरुत्वम् ।

शतमख पु॰ शतं मखा यज्ञा यस्य । इन्द्रे ।

शतमन्यु पु॰ शतं मन्यवो यज्ञा यस्य, शते दैत्येषु मन्युः क्रोधो वा यस्य । इन्द्रे ।

शतमान पु॰न॰ शतेन मीयते मि-ल्युट् । पले, तत्परिमिते च

शतमारिन् पु॰ शतं मारयति मृ-णिच्-णिनि । विशिष्ट-चिकित्सके । [शतसङ्ख्यायुक्ते त्रि॰ ।

शतमुखी पु॰ शतं मुखानि यस्याः ङीप् । संमार्ज्जन्याम् ।

शतमूली स्त्री॰शतं मूलान्यस्याः ङीप् । दूर्व्वायां, स्तनामख्या-तायां वचायाञ्च ।

शतयष्टिक पु॰ शतं यष्टयो गुच्छा यस्य । शतगुच्छके हारभेदे

शतरुद्रीय न॰शतं रुद्रा देवता यस्य । यजुर्वेदोक्ते रुद्राध्याये

शतरूपा स्त्री॰ शतं रूपाण्यस्याः । ब्रह्मणः पत्न्याम् ।

शतवीर्य्या स्त्री॰ शतं वीर्य्याणि यस्याः ब॰ । श्वेतदूर्व्वायाम् ।

शतवेधिन् पु॰शतं विध्यति विध-णिनि । अम्लवेतसे ।

शतसहस्र न॰ शतगुणितं सहस्रम् शाक॰ । लक्षसङ्ख्यायाम् ।

शतसाहस्र त्रि॰ शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । लक्षसङ्ख्याते ।

शतह्रदा स्त्री॰शतं ह्रादाः शब्दायस्याः पृ॰ह्रस्वः । विद्युति ।

शताक्षी स्त्री॰ शतमक्षीणीव पुष्पाण्यस्याः अच् समा॰ ङीप् । शतपुष्पायाम् दुर्गायाञ्च ।

शताङ्ग पु॰ शतमङ्गान्यवयवायस्य । रथे, तिनिशवृक्षे च ।

शतानन्द पु॰ शतमानन्दयति अण् । गौतमपुत्रे अहल्यागर्भजे मुनिभेदे । शतजनानन्दके त्रि॰ । [शतसैन्यवति त्रि॰

शतानीक पु॰ शतमनीकानि यस्य । व्यासशिष्ये मुनिभेदे ।

शतार न॰ शतमाराण्यस्य । वज्रे ।

शतायुस् त्रि॰शतमायुर्वर्षकालोऽस्य । शतवर्षमितवयस्के 'शता युर्वै पुरुष' इति श्रुतिः । [मूल्याम् इन्द्रभार्य्यायाम्

शतावरी स्त्री॰ शतमावृणोति आ+वृ अच् गौ॰ङीप् । शत-

शतावर्त्त पु॰ शतमावर्त्ता यस्य । विष्णौ शतधा वर्त्तते णिनि । तत्रैव । [उत्तरलोपः । शतमूल्यां, शतपुष्पायाञ्च

शताह्वा स्त्री॰ शतं शतमूली शतपुष्पा वेति आह्वा यस्याः

शतिक त्रि॰ शतेन क्रीतः ठन् । शतेन क्रीते पदार्थे ।

शत्य त्रि॰ शतेन क्रीतः यत् । शतसंख्यातद्रव्येण क्रीते ।

शत्रु पु॰शद-त्रुन् । रिपौ, राज्ञां विषयानन्तरस्थे नृपे, ज्योति षोक्ते लग्नावधि षष्ठस्थाने, कामादिषु च । शातके त्रि॰

शत्रुघ्न पु॰ शत्रून् हन्ति हन-क । दशरथात्मजे सुमित्रागर्भजे लक्ष्मणानुजे ।

शद् शातने भ्वा॰पर॰सक॰अनिट् । शीयते अशदत् । शत्स्यति

शद् गतौ भ्वा॰पर॰सक॰अनिट् । शीयते अशात्सीत् ।

शनकावलि(ली) स्त्री॰शनैः कायति कै-क इ॰ तेषामावलिर्यत्र वा ङीप् । गजपिप्पल्याम् ।

शनपर्णी स्त्री॰शणस्येव पर्णान्यस्याः पृ॰ णस्य नः । कटुक्याम्

शनि पु॰ शो-अनि किच्च । सूर्य्यपुत्रे छायागर्भजाते ग्रहभेदे, तत्स्वामिकदिने च ।

शनिवार पु॰शनिस्वामिकोवारः । सूर्य्यादिवारमध्ये सप्तमे वारे

शनैश्चर पु॰ शनैश्चरति चर-अच् । शनिग्रहे तस्य ग्रहाणां मध्ये सर्व्वोपरिकक्षस्थितत्वात् बहुकालेनैकैकराशिभोगात् मन्दगतित्वम् ।

शनैस् अव्य॰ शण डैसि पृ॰ तुक् च । मन्दे, अनौद्धत्ये च ।

शन्स हिंसायां स्तुतौ कथने च भ्वा॰पर॰सक॰सेट् इदित् । शंसति अशंसीत् । [शप्यति ते अशाप्सीत् ।

शप आक्रोशे वा भ्वा॰पक्षे दिवा॰उभ॰सक॰अनिट् । शपति ते

शपथ पु॰ शप कथन् । सत्यताकरणाय दिव्यभेदकरणे, यथा

शयालु त्रि० शी-आलुच् । निद्राशीले । अजगरे,कुक्कुरे च पु०

शयित त्रि शी-कर्त्तरि क्त । निद्रिते । भावे-क्त । निद्रायां न०

शयु पु० शी उ । अजगरे सर्पे । उनन् । शयुनोऽप्यत्र ।

शय्या स्त्री० शी क्यप् । खट्वायाम् । [तृणभेदे च पु० ।

शर न० शॄ-अच् । जले । वाणे दधिदुग्धाद्युपसारे, इषुसाधने

शरकाण्ड पु० ६त० । शरस्तम्बे, तन्निमित्तकवाणे च ।

शरज न० शरात् दधिदुग्धसारात् जायते जन-ड । हैयङ्ग-वीने । शरवणे-जाते कार्त्तिकेये पु० ।

शरजन्मन् पु० शरवणे जन्म यस्य । कार्त्तिकेये ।

शरट पु शॄ-अटन् । कृकलासे, कुसुम्भशाके च ।

शरण न० शॄ-ल्युट् । गृहे, रक्षके, रक्षणे, वधे, घातके च . प्रसारण्यां स्त्री० टाप् ।

शरणागत त्रि० शरणमागतः आ+गम-क्त । शरणापन्ने ।

शरणापन्न त्रि० शरणमापन्नः आ+पद क्त । शरणमागते ।

शरणार्थिन् त्रि० शरणमर्थयते अर्थ-णिनि । शरणकामे ।

श(स)रणि(णी) स्त्री०शॄ(सृ)-अनि वा ङीप् । पथि, कोषन्तस्तु जयन्त्याञ्च । [योग्ये ।

शरण्य त्रि० शरणाय साधुः यत् । शरणागतत्राणकरण-

शरत्कामिन् पु०शरदि कामयते कम-णिनि । कुक्कुरे ।

शरत्पद्म न० शरदिव शुभ्रं पद्मम् । श्वेतपद्मे ।

शरत्पर्व्वन् न० ७त० । कोजागरपूर्णिमानिमित्तोत्सवे ।

शरद् स्त्री० शॄ-अदि । वत्सरे, आश्विनकार्त्तिकमासात्मके ऋतौ च

शरधि पु० शरा धीयन्तेऽत्र धा-कि । तूणे । [पुङ्खादौ ।

शरपुङ्खा स्त्री० शरस्येव पुङ्खा यस्य । नीलीवृक्षाकृतौ काण्ड-

शरभ पु० शॄ-अभच् । 'अष्टपादूर्द्ध्वनयन ऊर्द्ध्वपादचतुष्टय' इत्यु-क्तलक्षणे मृगभेदे, करभे, वानरभेदे, उष्ट्रे च ।

शरभू पु० शरे शरवणे भवति भू-क्विप् । कार्त्तिकेये ।

शरमय त्रि० शरस्य विकारः मयट् । शरजाते पदार्थे ।

श(स)रयु(यू) स्त्री०शॄ(सृ)-अयु वा ऊङ् । अयोध्यानिम्नगामिन्यां नद्याम् । [वृक्षभेदे च ।

श(स)रल त्रि० शॄ(सृ)-अलच् । सुगमे, अकुटिलचित्ते (सरल)

शरवणोद्भव पु०शरवणे उद्भवः उत्पत्तिस्थानमस्य । कार्तिकेये

शरव्य न० शरो सायकस्तमर्हं हितं शर+यत् । लक्ष्ये, शरेण वेधनार्थोद्देश्ये । [इत्य ड न वा । (शराल) पक्षिभेदे ।

शराटि(ड़ि)(टी) स्त्री० शरमनुक्षणं अटति अट-इन् पु०

शराभ्यास पु० ६त० । शरक्षेपणनिपुणाभ्यास ।

शरारु त्रि शॄ-आरु । हिंस्रे । [धनुषि ।

शराक्षेप पु०शरा आरोप्यन्तेऽत्र आ+रुह णिच्-पुक् च घञ् ।

शराव पु शरं दध्यादिसारमवति अव-अण् । मृण्मये पात्रभेदे, (शरा) कुडवद्वयपरिमाणे च । [नदीभेदे

शरावती स्त्री० शराः सन्त्यस्याम् मतुप् मस्य वः पूर्व्वदीर्घश्च ।

शराश्रय पु ६त० । तूणे । [णामासनम् । तूणे ।

शरासन पु० शराः अस्यन्तेऽनेन अस-ल्युट् । धनुषि शरा-

शरी स्त्री० शीर्य्यते शॄ-ई । एरकातृणे ।

शरीर न० शॄ-ईरन् । प्रतिक्षणं शीर्य्यमाणे देहे ।

शरीरक पु० शरीरं कायति आत्मत्वेनाभिमन्यते कै-क । जीवे । स्वार्थे वुन् । शरीरकोऽप्यत्र । [त्रि०

शरीरज पु०शरीरात् जायते जन-ड । रोगे । देहजातमात्रे

शरीरावरण न० शरीरमावृणोति आ+वृ-युच् । देहव्यापिनि चर्म्मणि । देहावरके त्रि० ल्युट् । देहाच्छादने न०

शरीरिन् पु० शरीरमात्माभिमानाश्रयत्वेनास्त्यस्य इनि । जीवे

शरु पु० शॄ-उन् । क्रोधे, वज्रे, वाणे, आयुधे च । [आम्रे ।

शरेष्ट पु०शृणाति कामिनं शॄ अच् शरः कामःतस्य इष्टः इष-क्त ।

शर्करक पु० शर्करायाः रसः अण् वृद्ध्यभावः शार्करः रस इव कायति मधुरत्वात् कै-क । मधुरजम्बीरे ।

शर्करजा स्त्री० शर्करात् जायते जन-ड । सितासखण्डे ।

शर्करा स्त्री० शॄ करन् कस्य नेत्त्वम् । खण्डविकारे (चिनि) उपलखण्डे, कर्परखण्डे च । शर्करा अस्त्यस्य मतुप् तस्य लुक् । शर्करावति देशे, रोगभेदे, शकले च ।

शर्कराचल पु० दानार्थं कल्पिते शर्करामये पर्व्वते ।

शर्कराधेनु स्त्री० दानार्थं कल्पिते शर्करामये धेन्वाकारे द्रव्ये

शर्करावत त्रि०शर्कराः सन्त्यस्मिन् मतुप् मस्य वः । शर्करायुक्तदेशे

शर्करिक त्रि०शर्कराः सन्त्यस्य ठक् । शर्करायुक्तदेशे इलच् । तत्रैव

शर्द्ध पु० शृध-घञ् । अपानवायूत्सर्गे । ल्युट् । तत्रैव न० ।

शर्द्धञ्जहा पु०शर्द्धमपानवायूत्सर्गं जहाति हा-खश् मुम् च । माषे

शर्ब्ब हिंसायां गतौ च भ्वा०प०स०सेट् । शर्बति अशर्बीत् ।

शर्म्मद त्रि० शर्म्म ददाति दा-क । सुखदायके । विष्णौ पु० ।

शर्म्मन् शॄ-मनिन् । सुखे, गृहे त्रि० ब्राह्मणोपाधौ पु० । [त्रि०

शर्म्मदा स्त्री० शर्म्म राति रा-क । दारुहरिद्रायाम् । सुखदायके

शर्य्याति पु० वैवस्वतमनोः पुत्रभेदे ।

शर्व्व हिंसे भ्वा०पर०सक०सेट् । शर्वति अशर्वीत् ।

शर्व्व पु० शर्व-अच् । महादेवे ।

शर्व्वर पु० शर्व-अरन् । कामदेवे तमसि न० । [सन्ध्यायाञ्च ।

शर्व्वरी स्त्री० शॄ-वनिप् ङीप् नो र च । रात्रौ हरिद्रायां,

शर्व्वला स्त्री० शर्व्व-अच् तं शर्व्वं लाति ला-क । तोमरास्त्रे

शर्व्वाणी स्त्री० शर्व्वस्य पत्नी ङीप् आनुक् च । भवान्याम्

शल चालने भ्वा०आ०सक०सेट्। शलते अशलिष्ट।
शल गतौ भ्वा०पर०सक०सेट् ज्वलादि०। शलति अशालीत्
शल श्लाघायां चु०आ०सक०सेट्। शालयते अशीशलत।
शल वेगे भ्वा०पर०सक०सेट्। शलति अशालीत्।
शल न० शल-अच्। शल्लकीलोम्नि (सजारुकाँटा)।
शलभ पु० शल-अभच्। कीटभेदे पतङ्गे।
शलल न० स्त्री० शल-कलच्। शल्लकीलोम्नि (साजारुकाँटा) स्त्रीत्वे गौ०ङीष्।
शलाका स्त्री०शल-आकन्। शल्ये, मदनवृक्षे (मयना) शारिकायां, शल्लक्याम्, शरे, आलेख्यतूलिकायां, अस्थि च।
शलाकापरि अव्य०अव्ययी० शलाकासाधनक्रीड़ायां पराजये
शलाटु त्रि० शल-आटु। अपक्वफले मूलभेदे। बिल्वे च पु०।
शलालु पु० शल-आलुच्। सुगन्धिद्रव्यभेदे। [पदार्थे
शलालुक त्रि० शलालुना क्रीतं कन्। शलालुद्रव्येण क्रीते
शल्क न०शल-क कस्य नेत्वम्। खण्डे, इक्षुवल्कले, मत्स्यत्वचि च(आंश)। [त्वचि च
शल्कल न० शल-कलन् कस्य नेत्वम्। मत्स्यवल्कले, इक्ष
शल्कलिन् पु० शल्कलमस्त्यस्य इनि। मत्स्ये।
शल्किन् पु० शल्कमस्त्यस्य इनि। मत्स्ये।
शल्भ प्रशंसायां भ्वा०आ०सक०सेट्। शल्भते अशल्भिष्ट।
शा(सा)ल्मलि पु०शल-मलच् स्वार्थे इन् ङ्ग् वा। शाल्मलिवृक्षे (शिमुल)। [वृक्षे
शाल्मलि स्त्री० शल-मलिन् स्वार्थे ङ्ग् वा ङीप्। (शिमुल)
शल्य न०शल-यत्। बाणे,तोमरे, श्वाविधे, वंशकविकायां, कीलके च
शल्यक पु० शल्यमिव कायति कै क। मदनवृक्षे (मयना)
शल्यलोमन् न० शल्यमिव लोम। शल्लकीलोम्नि।
शल्ल गतौ भ्वा०पर०सक०सेट्। शल्लति अशल्लीत्।
शल्ल न० शल्ल-अच्। त्वचि, भेके पु०। स्वार्थे कन्। त्वचि न० शणवृक्षे पु०। (धनाइ) पक्षिभेदे स्त्री० गौ०ङीष्।
शल्लकद्रुम पु० शल्लकोद्रुम इव शाकः°। शिह्लके।
शल्व पु० शल-व। शाल्वदेशे। [अशवीत्
शव विकारे गतौ च भ्वा०पर०सक०सेट्। शवति-अशावीत्-
शव पु०न०। शव-अच्। मृतदेहे गतप्राणे देहे। जले न०।
शवकाम्य पु० शवं काम्यति शव+काम्य अण्। कुकुरे।
शवयान न० शवस्य यानम्। मृतदेहवाहनार्थे तल्पे।
शवर न० शव-अरन्। म्लेच्छजातिभेदे। पानीये, शिवे च पु० तत्पत्न्यां स्त्री० ङीप्।
शवरथ पु० शवस्य रथ इव। शववहनार्थे याने।

शवरलोध्र पु० शवरप्रियः लोध्रः। श्वेतलोध्रे।
शवरालय पु० ६त०। शवरावासस्थाने।
शवल पु० शव-कलन्। कर्बूरवर्णे तद्वति त्रि०। तद्वर्णवत्यां धेनौ स्त्री०।
शश प्लुतगतौ भ्वा०पर०सक०सेट्। शशति। अशाशीत्-अशशीत्
शश पु०शश-अच्। मृगभेदे (खरगोस) स्वार्थे कन्। तत्रैव।
शशधर पु० शशं मृगभेदं धरति धृ अच्। चन्द्रे, कर्पूरे च शशभृदादयोऽप्यत्र। [योऽप्यत्र
शशलाञ्छन पु०शशः मृगभेदो लाञ्छनं यस्य चन्द्रे, शशाङ्कादि-
शशविन्दु पु० राजभेदे, विष्णौ च।
शशशिम्बिका स्त्री०शश शिम्बीतया कायति कै-क। जीवन्त्याम्
शशस्थली स्त्री० शशवासयोग्या स्थली। अन्तर्वेद्याम् देशभेदे
शशाण्डुलि पु० अडि-उलि ६त०। कर्कटीभेदे।
शशाद पु० शशमत्ति अद-अण्। श्येनविहगे, ल्यु। तत्रैव।
शशिकला स्त्री०६त०। चन्द्रस्य षोडशभागे।
शशिकान्त न०शशी कान्तो यस्य। कुमुदे। चन्द्रकान्तमणौ पु०।
शशिन् पु० शशोऽस्त्यस्य इनि। चन्द्रे।
शशिप्रभ न० शशिना प्रभा यस्य। कुमुदे ६त०। ज्योत्स्नायाम्
शशिभूषण पु०शशी भूषणं यस्य। महादेवे, शशिमौल्यादयोऽप्यत्र
शशिलेखा स्त्री० शशिनो रेखा इव लेखा यस्याः। चन्द्रकलायाम्। शशिनो लेखेव श्वेततास्ददत्वात्। गुडूच्याम्।
शशिवाटिका स्त्री० शशिनो वाटीव इवार्थे। पुनर्नवायाम्।
शशिशेखर पु०शशी शेखरं यस्य। महादेवे शशिमुद्रादयोऽप्यत्र
शशोर्ण न० ६त०। शशस्य लोम्नि।
शश्वत् अव्य० शश-वति। नैरन्तर्ये पुनःपुनरित्यर्थे च।
शष वधे भ्वा०प०सक०सेट्। शषति अशाषीत् अशषीत्।
शष्कुल पु० शष-कुलच् कस्य नेत्वम्। (कइरकरमछा) अपूपभेदे, कर्णरन्ध्रे, 'अलङ्कृतकर्णशष्कुली'ति नैषधम् मत्स्यभेदे च दन्त्यमध्योऽप्ययमत्रार्थे।
शष्प न० शष-पक्। बालतृणे घासे। प्रतिभाक्षये पु०।
शस वधे भ्वा०प०सक०सेट्। शसति। अशासीत् अशसीत्
शंस आशंसायां भ्वा०आ०सक० इदित् सेट्। प्रायेणाङ्पूर्वः। आशंसते आशंसिष्ट।
शंस स्तवे अद०भ्वा०प०सक०सेट् इदित्। शंसति अशंसीत्
शसन न० शस वधे ल्युट्। यज्ञार्थं पशुहनने।
शस्त न० शंस क्त। मङ्गले, प्रशस्ते, स्तुते, प्रशस्ते च त्रि०।
शस्त्र न० शस-ष्ट्रन्। लौहे, खड्गादौ अस्त्रे च ष्ट्रन्। तत्रैव
शस्त्रकोपतन पु० शस्त्रकोपस्य निपातः। महाविराड्देवे

**शस्त्रजीविन्** पु० शस्त्रेण जीवति णिनि । शस्त्राजीविनि ।
**शस्त्रपाणि** पु० शस्त्रं पाणौ यस्य । शस्त्रधारके आततायिभेदे 'शस्त्रपाणिर्धनापहः' इति स्मृतिः । [निकरे शिल्पिभेदे
**शस्त्रमार्ज्ज** पु० शस्त्रं मार्ष्टि मृज अण् । (शिकलकर) शस्त्रमार्ज्ज
**शस्त्राभ्यास** पु० ६त० । शस्त्रप्रयोगशिक्षायाम् ।
**शस्त्रायस** शस्त्रयोग्यमयः अच् समा० । लौहभेदे (इस्पात) ।
**शस्त्रिन्** त्रि० शस्त्रमस्त्यस्य इनि । शस्त्रविशिष्टे ।
**शस्त्री** स्त्री० स्वल्पं शस्त्रं ङीप् । छुरिकायाम् ।
**शस्प** न० शस-प । बालतृणे घासे ।
**शस्य** न० शस यत् । वृक्षादीनां फले । 'शस्यं क्षेत्रगतं प्रोक्त'-मित्युक्ते क्षेत्रस्थे धान्यादौ च । [शस्यनाशके त्रि० ।
**शस्यध्वंसिन्** पु० शस्यं ध्वंसयति ध्वंस णिच् णिनि । तुन्नवृक्षे
**शस्यमञ्जरी** स्त्री० ६त० । अभिनवधान्यादिशीर्षे ।
**शस्यशूक** न० । धान्यादेः शीर्षे ।
**शस्यसम्बर** पु० शस्यं संवृणोति सम्+वृ अच् । शालवृक्षे ।
**शस्यारु** पु० शस्यमृच्छति ऋ उण् । क्षुद्रशमीवृक्षे (सेगुन) वृक्षे च
**शाक** पु० न० शक-घञ् । पत्रपुष्पादौ वृक्षभेदे पु० शक्तौ शिरीष वृक्षे, स्वराज्यावधि वत्सरप्रवर्त्तके राजभेदे, तदीये वत्सरे, च पु० हरितकायां न० । शक्ति सामर्थ्यं शोकं तस्य नेत्यम् । 'मूलपत्रकरीराग्रे फलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकश्चैव शाकं दशविधं स्मृत'मित्युक्तेषु वृक्षादीनां पत्रादिषु न० 'अशाकभुक् सोऽरुगित्युक्तम्' ।
**शाकचुक्रिका** स्त्री० शाकेषु मध्ये चुक्रिका । चिञ्चायाम् ।
**शाकट** न० शकटाय हितम् अण् । शकटसम्बन्धियुगादौ । श्लेष्मातके-वृक्षे, धववृक्षे च पु० ।
**शाकटायन** पु० व्याकरणकारके मुनिभेदे ।
**शाकटिक** पु० शकटेन चरति ठञ् । शकटेन गन्तरि ।
**शाकटीन** पु० शकटं परिमाणमस्य खञ् । विंशतितुलापरिमाणे
**शाकतरु** पु० शाकाख्यः तरुः । (सेगुण) वृक्षे । शाकवृक्षादयोऽप्यत्र
**शाकपत्र** पु० शाकं पत्रमस्य । शिग्रुवृक्षे ।
**शाकबालेय** पु० बलये हितम् ढक् शाकप्रधानो बालेयः । ब्रह्मयष्टिकायाम् ।
**शाकम्भरी** स्त्री० शाकैर्बिभर्त्ति भृ खच् मुम् च । 'भरिष्यामि सुराः ! शाकैरावृष्टेः प्राणधारकैः । शाकम्भरीति विख्यातिमि'ति चण्डी निरुक्तायाम् दुर्गायाम् ।
**शाकयोग्य** पु० शाके तद्भक्षणे योग्यः । धन्याके । [वास्तूकशाके
**शाकराज** पु० शाकेषु राजते अच्, शाकानां वा राजा टच् ।
**शाकबिल्व** पु० शाकेऽपि बिल्व इव । वार्त्ताकौ स्वार्थे कन् तत्रैव
**शाकवीर** पु० शाकेषु वीरः वीर्याधायकत्वात् । वास्तूकशाके
**शाकशाकट** न० शाकस्य क्षेत्रं शाकटच् । शाकक्षेत्रे । शाक-टिनच् । अत्रार्थे ।
**शाकश्रेष्ठ** पु० शाकेषु श्रेष्ठः । वास्तूकशाके जीवन्त्यां वार्त्ताकौ स्त्री०
**शाकाङ्ग** न० शाकस्य तद्व्यञ्जनस्याङ्गमुपयोगि । मरिचे ।
**शाकाम्ल** न० शाकमेवाम्लम् । वृक्षाम्ले ।
**शाकाम्लभेदन** न० शाकरूपम् अम्लं भिनत्ति भिद-ल्यु । चुक्रे (चुकापालङ्ग) ।
**शाकालाबु** स्त्री० शाकप्रधानालाबुः । अलाबुभेदे ।
**शाकिनी** स्त्री० शाकोऽस्त्यस्याः इनि । शाकभवनयोग्यायां भूमौ, देवीसहचरीभेदे च ।
**शाकुन** पु० शकुनं शुभाशुभसूचकं निमित्तमधिकृत्य कृतो ग्रन्थः अण् । शकुनज्ञानसाधने ग्रन्थे (काकचरित्र) । [घातके ।
**शाकुनिक** पु० शकुनेन पक्षिवधादिना जीवति ठञ् । पक्षि-
**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक् । दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे ।
**शाक्त** त्रि० शक्तिर्देवताऽस्य अण् । तन्त्रोक्ते शक्तिदेवतोपासके
**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक् । शक्त्या योद्धरि ।
**शाक्य** पु० शक शक्तौ तत्र साधु यत् । बुद्धे ।
**शाक्यमुनि** पु० शाक्यो मुनिः । बुद्धभेदे ।
**शाक्यसिंह** पु० शाक्यवंशे सिंह इव । बुद्धभेदे । [अशाखीत्
**शाख** व्याप्तौ भ्वा० पर० सक० सेट् इदित् न०लुप् । शाखति
**शाख** पु० शाख अच् । कृत्तिकापुत्रे स्कन्दानुजे गणभेदे, ग्रन्थ परिच्छेदे, सर्गस्थानीये ग्रन्थांशभेदे, वृक्षस्यावयवभेदे च (डाल) पक्षान्तरे, बाहौ, लतायाम्, अन्तिके, वेदैकदेशे च स्त्री०
**शाखाकण्ठ** पु० शाखाव्यापी कण्टः कण्टको यस्य । स्नुहीवृक्षे
**शाखानगर** न० शाखेव नगरम् । मूलनगरसमीपस्थे क्षुद्र पुरे शाखापुरादयोऽप्यत्र ।
**शाखामृग** पु० शाखास्थो मृगः पशुः । वानरे ।
**शाखाम्ला** स्त्री० शाखाप्यम्ला । वृक्षाम्ले ।
**शाखारण्ड** पु० शाखाया वेदशाखायाः रण्डः तद्विहित कर्म्मानाचरणात् । स्वशाखात्यागेन कर्मकर्त्तरि ।
**शाखाल** पु० शाखा बाहुल्येन सन्त्यस्य लच् । वानीरवृक्षे ।
**शाखाशिफा** स्त्री० शाखारूढा शिफा मूलम् शाक० । वटा-दीनां शाखाजाते मूले । शिफामारभ्य शाखा । गुडूच्यादि लतायाम् । [क्षिक्कभेदे च ।
**शाखिन्** पु० शाखाऽस्त्यस्य इनि । वृक्षे । वेदैकदेशवति, नृपभेदे.
**शाखोट** पु० शाखा-व्याप्तौ ओटन् (श्याओडा) वृक्षे स्वार्थे कन् ।

तत्रैव । [जातिभेदे (शांखारी)।

शाङ्खिक पु॰ शङ्खस्तद्विकारवलयनिर्म्माणं शिल्पमस्य ठञ् ।

शाङ्गुष्ठा स्त्री॰ श्यति शो-क शः अङ्गुष्ठ इव यस्याः । गुञ्जायाम्

शाट पु॰ शट-घञ् । वस्त्रे । स्त्रीत्वमपि गौ॰ ङीप् ।

शाटक पु॰न॰ शट-ण्वुल् । वस्त्रे स्त्रीत्वमपि टाप् ।

शाट्यायन पु॰ मुनिभेदे, तेन प्रोक्तम् अण् । प्रकृतहोमकर्मणि वैगुण्यसमाधानार्थं विहिते होमभेदे न॰ ।

शाठ्य न॰ शठस्य भावः ष्यञ् । शठतायाम् ।

शाड श्लाघायां भ्वा॰आत्म॰ सक॰ सेट् । शाडते अशाडिष्ट

शाण न॰ शणेन निर्वृत्तम् अण् । शणसूत्रनिर्मिते वस्त्रादौ । शण-घञ् । (कष्टिपाथर) कषपाषाणे शस्त्रादीनां निकर्षणेन तीक्ष्णीकरणयन्त्रभेदे ।

शाणाजीव पु॰ शाणमाजीवति आ+जीव-अण् । अस्त्रतीक्ष्णताकारके शिल्पिनि ।

शाणि पु॰ शण-इण् । पट्टवस्त्रे शणेन निर्वृत्ता इञ् वा ङीप् । शणनिर्म्मिते पट्टिकावस्त्रे छिद्रवस्त्रे च ।

शाणित त्रि॰ शण-णिच्-क्त । तीक्ष्णीकृते ।

शाण्डिल्य पु॰ शण्डिलस्यापत्यम् यञ् । गोत्रप्रवर्त्तके भक्तिशास्त्रकारके मुनिभेदे, तत्प्रियत्वात्, विल्वे वह्निभेदे च ।

शात न॰ शो-क्त । सुखे, तद्वति, छिन्ने, कृशे, दुर्बले, निशिते च त्रि॰ धुस्तूरे पु॰ ।

शातकुम्भ न॰ शतकुम्भे भवः अण् । हिरण्ये । धुस्तूरे करवीरे च पु॰ । [धुस्तूरे पु॰ ।

शातकौम्भ न॰ शतकुम्भे भवम् अण् द्विपदवृद्धिः । हिरण्ये

शातन न॰ शो-णिच्-तुक् ल्युट् । तनूकरणे, विनाशने च 'जायते पक्षशातनमि'ति मीमांसा ।

शातभीरु पु॰ शाताः दुर्बलाः पान्था भीरवो यस्याः । मल्लिकाभेदे

शातला स्त्री॰ शातं कार्श्यं लाति ला क । (चामकषा) वृक्षे ।

शात्रव पु॰ शत्रुरेव स्वार्थेऽण् । रिपौ । तस्य भावः कर्म्म वा अण् । वैरे, रिपुसमूहे च न॰ ।

शाद पु॰ शद-घञ् । कर्द्दमे, शष्पे च ।

शादहरित पु॰ शादेन हरितवर्णयुक्तः । शाद्वले देशे ।

शाद्वल पु॰ शादाः सन्त्यत्र ड्वलच् । नवतृणयुक्ते देशे ।

शान तेजने भ्वा॰ उभ॰ सक॰ सेट् स्वार्थे सन् । शीशांसति ते अशीशांसीत् अशीशांसिष्ट ।

शान पु॰ शान-अच् । अस्त्रादीनां तीक्ष्णताकारके यन्त्रभेदे ।

शानी स्त्री॰ शान-इन् ङीप् । इन्द्रवारुण्याम् ।

शान्त त्रि॰ शम-क्त । शमयुक्ते, अभियुक्ते च शम-णिच्-क्त त्रि॰ शान्तिं गमिते त्रि॰ । निर्वेदस्थायिभावके रसभेदे पु॰ । लोमपादराजकन्यायाम्, ऋष्यशृङ्गपत्न्यां, शमीभेदे च स्त्री॰ ।

शान्तनव पु॰ शान्तनोरपत्यम् अण् । भीष्मे, 'भीष्मः शान्तनव इति तत्पर्य्यायमन्त्रः ।

शान्तनु पु॰ द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे ।

शान्ति स्त्री॰ शम-क्तिन् । कामक्रोधादिजये, विषयेभ्यो मनसो निवारणे, उपद्रवनिवारणे, निवारणे च ।

शान्तिक त्रि॰ शान्तये हितम् ठञ् । शान्तिकारके होमादौ ।

शाप पु॰ शप-घञ् । 'अनिष्टं भूयादित्येवम् आक्रोशे, शपथे च

शापास्त्र पु॰ शाप एवास्त्रं यस्य । मुनौ ।

शाब्दबोध पु॰ शब्देन निर्वृत्तः अण् । अन्वयबोधे शब्दज्ञानजन्ये पदार्थस्मृतिद्वारके ज्ञानभेदे ।

शाब्दिक पु॰ शब्दं शब्दसाधुताज्ञापकं शास्त्रं वेत्त्यधीते वा ठक् । व्याकरणशास्त्राभिज्ञे । [जालादौ ।

शामित्र न॰ शम-णिच् इत्रच् । पशुबन्धस्थाने । [इन्द्र-

शाम्बरी स्त्री॰ शम्बरेण निर्वृत्ता अण् ङीप् । मायायाम्

शाम्बविक त्रि॰ शम्बुः पण्यमस्य ठक् । शाङ्खिके । (शाखारी)

शा(म्बु)म्बूक पु॰ श(म्बु)म्बूक+स्वार्थे अण् । शम्बुके (शामुक) ।

शाम्भव पु॰ शम्भोरयम् अण् । गुग्गुलौ, कर्पूरे, विषभेदे, शम्भुपुत्रे, मल्लिकाभेदे, देवदारुणि च । शिवसम्बन्धिनि, तदुपासके च त्रि॰ । दुर्गायां स्त्री॰ 'शाम्भवी कुपिता तस्मे'ति तन्त्रम् ।

शा(सा)यक पु॰ शो(षो)-ण्वुल् । वाणे, खड्गे च ।

शार दौर्बल्ये अद॰ चु॰ उभ॰ सक॰ सेट् । शारयति-ते अशशारत्

शार न॰ शार-अच्, शॄ-घञ् वा । कर्बुरवर्णे । तद्वति त्रि॰ ।

शारङ्ग पु॰ शारं कर्बुरमङ्गं यस्य शक॰ । चातकपक्षिणि, हरिणे गजे, भृङ्गे, मयूरे च ।

शारद न॰ शरदि भवम्-अण् । श्वेतपद्मे । काशे, वत्सरे, हरिन्मुद्गे च पु॰ शरद्भवमात्रे त्रि॰ शारं श्वेतपद्ममस्त्यस्याः अच् । सरस्वत्याम् स्त्री॰ । [श्राद्धे तत्कालजे रोगे पु॰ ।

शारदिक न॰ शरदि भवं श्राद्धं रोगो वा ठञ् । शरत्काले भवे

शारदीया स्त्री॰ शरदि भवा छण् । शरत्काले कर्त्तव्यायां दुर्गापूजायाम् ।

शारि(री) स्त्री॰ शॄ-इञ् वा ङीप् । पाशकादिगुटिकायाम्, पक्षिभेदे च शारीं चरन्तीं पश्य । शारमे'ति नैषधम् । दुरधिगजपर्य्याणे, व्यवहारभेदे, कपटे च । स्वार्थे कन् पक्षिभेदे ।

शारिफल पु॰न॰ शारेः फलमाधारः । शारिपट्टे फ-तरक्रीडाधारे द्रव्ये (छक) स्वार्थे कन् । तत्रैव ।

**शारिवा** स्त्री॰ शारिरिव वनति वन-ड । श्यामालतायाम् ।
**शारीर** त्रि॰ शरीरस्येदं अण् । देहसम्बन्धे सुखदुःखादौ तस्येदमस्य पुन अण् । वृषे पु॰ । शरीरमात्मत्वेनाभिमन्यते अण् । जीवे । स्वार्थे क । जीवे । शारीरं दुःखं जीवं वा अधिकृत्य कृतो ग्रन्थः अण् । व्यासकृते वेदान्तसूत्रे चिकित्साङ्गे सुश्रुतग्रन्थाद्येकदेशे च ।
**शारीरिक** त्रि॰ शरीरे भवः ठञ् । देहजाते दुःखादौ ।
**शारुक** त्रि॰ शॄ-उकञ् । हिंसके ।
**शार्कर** त्रि॰ शर्करा अस्त्यस्य अण् । शर्करायुक्ते देशे शर्करायाः विकारः अण् । फाणिते, दुग्धफेणे च पु॰ ।
**शार्ङ्ग** त्रि॰ शृङ्गस्य विकारः अण् । शृङ्गजाते पदार्थे । विष्णुधनुषि, धनुर्मात्रे च पु॰ आर्द्रके न॰ ।
**शार्ङ्गिन्** पु॰ शार्ङ्गं अस्त्यस्य इनि । विष्णौ धन्विमात्रे त्रि॰ ।
**शार्दूल** पु॰ शॄ-ऊलच् दुक् च । व्याघ्रभेदे, पक्षिभेदे, राक्षसभेदे, च उत्तरपदस्थः । श्रेष्ठार्थे ।
**शार्दूलललित** न॰ अष्टादशाक्षरपादके छन्दोभेदे ।
**शार्दूलविक्रीडित** न॰ ऊनविंशत्यक्षरपादके छन्दोभेदे ।
**शार्वर** न॰ शर्वर्यां इदम् अण् । अत्यन्ततमसि । रात्रिसम्बन्धिनि, घातके च त्रि॰ । [श्वमालिङ्ग ।
**शाल** कथने भ्वा॰ आ॰ सक॰ सेट् चङि न ह्रस्वः । शालते
**शाल** पु॰ शल-घञ् । मत्स्यभेदे, प्राकारे, स्वनामख्याते, वृक्षभेदे, वृक्षमात्रे, दन्त्यादिस्तु वृक्षमात्रे 'रसाल॰ सालः समुदश्रुतासुने'ति नैषधम् ।
**शालग्राम** पु॰ शालानां रक्षाणां ग्रामः समूहो यत्र । पर्वतभेदे तत्र जातः अण् । तत्र जाते विष्णोर्मूर्त्तिभेदे ।
**शा(सा)लज** पु॰ शा(सा)लात् जायते जन ड । सर्जरसे (धुना)
**शालनिर्य्यास** पु॰ ६त॰ । सर्ज्जरसे (धुना) । [वृक्षभेदे ।
**शालपर्णी** स्त्री॰ शालस्येव पर्णा यस्याः ङीप् । (शालपानी)
**शालभञ्जिका** स्त्री॰ शालेन भज्यते निर्मीयते भन्ज-ण्वुल् । काष्ठनिर्म्मितपुत्तलिकाया, वेश्यायाञ्च । [लोभे ।
**शालाव** पु॰ शाल तन्नियाश इव वलति वहिर्गच्छति वल-ड ।
**शालवेष्ट** पु॰ शालस्य वेष्ट इव । सर्ज्जरसे (धुना) ।
**शालसार** पु॰ शालस्य सारः । हिङ्गुनि शालेषु सारः । वृक्षश्रेष्ठे
**शाला** स्त्री॰ शाल अच् । गृहे, वृक्षस्य स्कन्धस्थशाखायाञ्च ।
**शालाञ्जि** पु॰ शाल इवाञ्चति अञ्च-इन् । शाकभेदे (शाञ्चा)
**शालातुरीय** पु॰ शालातुरे भवः । तद्ग्रामवासिनि मुनौ ।
**शालानी** स्त्री॰ शालमानयति आ+नी-ड गौ॰ ङीप् । विदार्य्याम्
**शालामृग** पु॰ शाखाया गृहे मृग इव । शृगाले ।
**शालावृक** पु॰ शालाया गृहे, शाखायां वृक इव वा । कुक्कुरे, शृगाले, बिडाले, मृगे, वानरे च ।
**शालि** पु॰ शल+इञ् । कलमादिधान्ये, पविकादिधान्ये, गन्धमार्ज्जारे च ।
**शालिका** स्त्री॰ शालिरिव कायति कै क । विदार्य्याम् ।
**शालिञ्च** पु॰ शालि चमति चम-ड पृ॰ मुम् । शाकभेदे ।
**शालिपर्णी** स्त्री॰ शालेरिव पर्णान्यस्याः ङीप् । माषपर्ण्याम्
**शालिवाहन** पु॰ । विक्रमादित्यं हत्वा शकाब्दप्रवर्त्तके नृपभेदे
**शालिहोत्र** पु॰ शालयो हूयन्तेऽत्र हु त्रन् । घोटके ।
**शाली** स्त्री॰ शाल-अच् गौ॰ ङीप् । कृष्णजीरके ।
**शालीन** त्रि॰ शालामर्हति ख । धृष्टे सलज्जे, निस्त्रेयाञ्च ।
**शालु** न॰ शाल-उण् । शालूके, कषायद्रव्ये, चौरनामगन्धद्रव्ये च भेके पु॰ । [जातीफले ।
**शालूक** न॰ शाल-ऊकञ् । कुमुदादिमूले उकञ् । तत्र
**शालूर** पु॰ शाल-ऊरच् । भेके ।
**शालेय** पु॰ शालायां भवं ढक् । मधुरिकायाम् ।
**शालोत्तर** पु॰ ग्रामभेदे ।
**शालोत्तरीय** पु॰ शालोत्तरे भवः । पाणिनिमुनौ ।
**शाल्मल** पु॰ शाल-मलच् । (शिमुल) वृक्षे तच्चिह्नितद्वीपभेदे च
**शाल्मलि(ली)** पु॰ स्त्री॰ शाल मलिच् वा ङीप् (शिमुल) वृक्षे
**शाल्मलिक** पु॰ शाल्मलिरिव कायति कै-क । रोहितकवृक्षे
**शाल्मलीफल** पु॰ शाल्मल्या इव फलमस्य । तेजफलवृक्षे ।
**शाल्मलीवेष्ट** पु॰ शाल्मलीं वेष्टयति वेष्ट अच् । शाल्मलीनिर्यासे स्वुल् । तत्रैव ।
**शाल्व** पु॰ शाल-व । देशभेदे ।
**शाव** पु॰ शव-घञ् । शिशौ स्वार्थे कन् । तत्रैव शवस्येदम् अण् । शवसम्बन्धे 'त्रिरात्रं शावमाशौच'मिति स्मृतिः ।
**शावर** पु॰ शावयति विकारयति शव-णिच् अरन् । पापे, अपराधे, लोध्रद्रुमे च शबरस्य भोक्तमण् । शबरकृते मीमांसाभाष्ये । शबरस्येदम् अण् । शबर सम्बन्धिनि त्रि॰ ।
**शावरी** स्त्री॰ शबरस्य प्रिया अण् । शूकशिम्बायाम्, विद्याभेदे च
**शाश्वत** त्रि॰ शश्वद् भवः अण् । सतते नित्ये ।
**शाष्कुलिक** न॰ शष्कुलीनां समूह ठञ् । शष्कुलीसमूहे ।
**शास** आशिषि आ॰ अदा॰ आ॰ सक॰ सेट् क्त्वा वेट् । प्रायेणाङ् पूर्व्वक आशास्ते आशंसिष्ट । [पूर्व्वः । आशास्त आशासिष्ट
**शास** आशीर्व्वादे अदा॰ आ॰ सक॰ सेट् क्त्वा वेट् । प्रायेणाङ्
**शास** शासने अदा॰ प॰ द्विक॰ सेट् क्त्वा वेट् । शास्ति अशासत् ।
**शासन** न॰ शास-ल्युट् । निदेशस्य हितसाधनादौ प्रवर्त्तने ।

शासनहर पु॰ शासनं हरति हृ-अच् । आज्ञाहारके दूते ।
शासितृ त्रि॰ शास-तृच् इट् । शासनकर्त्तरि ।
शास्तृ त्रि॰ शास-तृच् इडभावः । शासनकर्त्तरि ।
शास्त्र न॰ शिष्यतेऽनेन शास-ष्ट्रन् । हितानुशासने ग्रन्थे ।
शास्त्रदर्शिन् त्रि दृश-णिनि ६त॰ । शास्त्रज्ञे शास्त्रविदादयोऽप्यत्र
शास्त्रिन् त्रि॰ शास्त्रं वेत्त्यधीते वा इनि । शास्त्रज्ञे ।
शास्त्रीय त्रि॰ शास्त्रेण विहितः छ । शास्त्रोक्ते धर्मादौ ।
शास्य त्रि॰ शास-यत् । अनुशासनीये शिष्यादौ । [अशैषीत् ।
शि छेदने स्वा॰उभ॰सक॰अनिट् । शिनोति शिनुते अशैषीत्
शिंशपा स्त्री॰ शिंश पाति पा-क पृ॰ (शिशु) वृक्षे ।
शि(शि)कुथ न॰ शिच-वक् कुक् च पृ॰ यस्य षोवा । (मोम) मधूच्छिष्टे । स्वार्थे कन् । तत्रैव । [क्ते पदार्थे
शिक्य न॰ स्त्री॰ शिक्-यत्, शि-यत् कुक् च । (शिका) रज्जु
शिक्यित त्रि॰ शिक्यं शिक्यस्थं करोति शिक्य+णिच्-कर्मणि क्त । शिक्याधारे स्थापिते पदार्थे ।
शिक्ष स्त्री॰ अभ्यासे भ्वा॰आ॰सक॰ सेट् । शिक्षते अशिक्षिष्ट
शिक्षा स्त्री॰ शिक्ष-अ । अभ्यासे वर्णानामुच्चारणप्रदर्शके वेदाङ्गे ग्रन्थभेदे 'शिक्षा कल्पो व्याकरणमि'ति पु॰ ।
शिक्षागुरु पु॰ ७त॰ । विद्यादातरि ।
शिक्षित त्रि॰शिक्षा जाताऽस्य तार॰ इतच् शिक्ष-क्त वा। कृताभ्यासे, निपुणे, शिक्षे च ।
शिखु गतौ भ्वा॰पर॰सक॰सेट् इदित् । शिङ्खति अशिङ्खीत्
शिख(खा)ण्ड पु॰शिखामऽमति अम-ड तस्य नेत्वम् ६त॰वा शक॰ । मयूरपिच्छे, चूडायाञ्च ।
शिखण्डक पु॰ शिखण्ड इव कन् । काकपक्षे (कापजुल्पी) स्त्रीत्वमपि तत्र, सा च चूडायाञ्च ।
शिखण्डिक पु॰ शिखण्डोऽस्त्यस्य ठन् । कुक्कुटे ।
शिखण्डिन् पु॰ शिखण्डोऽस्त्यस्य इनि । मयूरे द्रुपदराजस्य पुत्रभेदे, विष्णौ च । यूथिकायां, गुञ्जाया च स्त्री
शिखर न॰ शिखा अस्त्यस्य अरच् अलोप । पर्वताग्रे वनमाले च। वृक्षाग्रे पु॰न॰। पुलके, शुक्लवर्णादौ, रत्नभेदे, च मर्यादां स्त्री॰ ।
शिखरिन् पु॰ शिखरोऽस्त्यस्य इनि । पर्वते, कोयष्टी, कन्दाके, वृक्षे, अपामार्गे, कुन्दरुके,यावनाले च । रसालायां खाद्यभेदे, नवदयावर्णपादकेछन्दोभेदे, मल्लिकायां रोमावल्यां च ङीष्। (छागलदहा) तृणभेदे ।
शिखलोहित पु॰ शिखास्त्यस्य अच् तथाभूतः सन् लोहित'
शिखा स्त्री॰ शी-खक् तस्य नेत्वम् ह॰। अग्निज्वालायां,मस्तकमध्यस्थकेशगुच्छे च 'कक्षोपस्थशिखां वर्हि'रिति स्मृतिः
शिखाकन्द न॰ शिखेव कन्दोऽस्य। गृञ्जने। (सिलकी)
शिखातरु पु॰ शिखायादिप्रशिखायास्तरुरिव । दीपवृक्षे ।
शिखाधर पु॰ शिखां चूडां धरति धृ-अच्। मयूरे, शिखाधारके त्रि॰ ।
शिखामूल न॰ शिखेव मूलमस्य । गृञ्जने, (गाजर) ।
शिखालु पु॰ शिखास्त्यस्य आलुच् । मयूरशिखावृक्षे ।
शिखावत् पु॰ शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः । वह्नौ, केतुपक्षे,चित्रकवृक्षे च। शिखावति त्रि॰मूर्वायां स्त्री॰ङीप्
शिखावर पु॰ शिखा वृणोति वृ-अच् । पनसवृक्षे ।
शिखावल पु॰ शिखास्त्यस्य वलच् । मयूरे मयूरशिख वृक्षे च
शिखिकण्ठ न॰ शिखिनो मयूरस्य कण्ठस्तद्वर्णोऽस्त्यस्य अर्श आद्यच् । तुत्थे (तुते) शिखिग्रीवादयोऽप्यत्र ।
शिखिध्वज शिखिनो वह्नेर्ध्वज इव । धूमे ।
शिखिन् पु॰ शिखा अस्त्यस्य इनि । मयूरे, वह्नौ, चित्रक वृक्षे, केतुपक्षे, कुक्कुटे, वृक्षे, अश्वे, अजलोम्नि, पर्वते, ब्राह्मणे, मेथिकायां,मयूरशिखावृक्षे च । शिखायुक्ते त्रि॰
शिखिप्रिय पु॰ शिखिनं प्रीणयति प्री-क । लघुबदरे ।
शिखिमण्डल पु॰ शिखिनां मण्डलमिव यत्र । वरणवृक्षे ।
शिखिमोदा स्त्री॰ शिखिनं मोदयति मुद-णिच्-अच् । अजमोदायाम् । [कुष्माण्डे ।
शिखिवर्द्धक पु॰ शिखिनं वर्द्धयति वृध-णिच्-ण्वुल् ।
शिखिवाहन पु॰ शिखी मयूरो वाहनं यस्य। कार्त्तिकेये ।
शिग्रु पु॰ शि-रक् गुक् च । (सजिना) वृक्षे शाकमात्रे च ।
शिघि आघ्राणे भ्वा पर॰सक॰सेट् इदित् । शिङ्घयति अशिङ्घीत्
शिङ्घाण न॰ शिघि-आनच् पृ॰ णत्वम्। काचपात्रे लोहमले, नासिकामले, श्लेष्मणि च । स्वार्थे कन्। नासिकामले न॰।
शिज अव्यक्तध्वनौ इदित् वा चु॰उभ॰पक्षे अदा॰आ॰सक॰ सेट् । शिञ्जयति ते शिङ्क्ते अशिशिञ्जत् त अशिञ्जिष्ट आदिरप्ययं पर॰ इत्येके तेन शिञ्जति अशिञ्जीत् ।
शिञ्जा स्त्री॰शिजि-अ । भूषणशब्दे । शिजि-अच् । धनुर्गुणे
शिञ्जिनी स्त्री॰ शिञ्जति शिजि-णिनि । धनुर्गुणे ।
शिट अनादरे भ्वा॰पर सक॰सेट् । शेटति अशेटीत् ।
शित त्रि॰ शो क्त । दुर्बले, शाणिते च।
शितद्रु पु॰ शत द्रवति द्रु-कु-नि॰ । (शतद्रुज) नदीभेदे ।
शितशूक पु॰ शितमग्रः शूको यस्य । यवे । [हृदयेऽरि त्रि॰
शिति पु॰ शि-क्तिच् । भूर्जपत्रवृक्षे, शुक्लवर्णे, कृष्णवर्णे च ।
शितिकण्ठ पु॰ । शितिः कण्ठो यस्य । शिवे,दात्यूहपक्षे च

शितिवार पु० शिति श्वन् चरति चर अच् । (सुसनि) शाके
शितिसारक पु०शिति श्यम सारो यस्य कप् । तिन्दु कवृक्षे
शिथिल त्रि०श्लथ-किलच् पृ० ह्रस्वे,बन्धे संयोगभेदे,मन्दे च
शिनि पु० शि निक् । यदुवंश्ये, क्षत्रियभेदे यस्य सात्यकिर्नप्ता
शिप्र पु०शि रक् पुक् च । सरोवरभेदे, नदीभेदे स्त्री० ।
शिफ पु०स्त्री० शि फक् । वृक्षाणां जटाकारे मूले ।
शिफाक पु० शिफेव स्वार्थे कन् । पद्ममूले ।
शिफाकन्द पु० शिफेव कन्द । पद्ममूले ।
शिफाधर पु० शिफा धरति धृ अच् । शाखायाम् ।
शिफारुह पु० शिफायां रोहति रुह-क । वटवृक्षे ।
शि(सि)म्बा स्त्री० शाम्यति शमति वा शम (सम) डम्बच् पृ०
(छिमी) ख्याते पदार्थे चक्रमर्दे च ।
शिम्बि(म्बी) स्त्री०शम-वि नि० वा ङीप् । शिम्बायाम् (शिम्)
लतायां, वरकायाञ्च, स्वार्थे कन् तत्रैव । [किन् । तत्रैव ।
शिम्बिपर्णी स्त्री० शिम्बिरिव पर्णमस्या । मुद्गपर्ण्यां स्वार्थे
शिर न०शॄ क । मस्तके,पिप्पलीमूले, शय्यायाम्, अजगरे च ।
शिर:फल पु० शिर इव फलमस्य । नारिकेले ।
शिर:शूल न० शिरस शूलमिव तापकत्वात् । रोगभेदे ।
शिरज पु० शिरे जायते जन-ड । केशे ।
शिरस् न० शॄ असुन् नि० । मस्तके, अग्रे च ।
शिरसिरुह पु० शिरसि रोहति रुहक-अलुक् स० । केशे ।
शिरस्क न० शिरसि कायति प्रकाशते कै क । शिरस्त्राणे ।
शिरस्त्र न०शिरस्त्रायते त्रै क । शिरोरक्षके उष्णीषे । [त्रि०
शिरस्य पु० शिरसि भव यत् । निर्मलकेशे शिरोजातमात्रे
शिरा स्त्री० शॄ-क । नाड्याम् (शिर) ।
शिरापत्त्र पु० शिरेव पत्त्र यस्य । हिन्तालवृक्षे ।
शिराल न० शिराऽस्त्यस्य लच् । कर्मरङ्गे शिरायुक्ते त्रि० ।
शिरावृत्त न० शिरेव वर्त्तते वृत-क । सीसके ।
शिरीष पु० शॄ ईषन् । स्वनामख्याते वृक्षे । [श्यामायाम्
शिरोगृह न० शिर इव उपरिस्थ गृहम् । (चिलेघर) चन्द्र
शिरोधरा स्त्री० शिरोधरतक धरति धृ अच् । ग्रीवायाम् ।
शिरोधि स्त्री० शिरो धीयतेऽत्र धा कि । ग्रीवायाम् ।
शिरोमणि पु० स्त्री०शिरसि धार्योमणि । शिरोधार्ये रत्ने
चूडामणौ । स्त्रीत्वे वा ङीप् । शिरोरत्नादयोऽप्यत्र ।
शिरोरुजा स्त्री० शिरो रुजति व्यथयति रुज क । सप्तच्छद-
वृक्षे । हृत० । मस्तकरोगे ।
शिरोरुह पु० शिरसि रोहति रुह क । केशे ।
शिरोवल्ली स्त्री० शिरस वल्लीव । मयूरचूडायाम् ।
शिरोवृत्त न० शिर इव वृत्त वर्तुलम् । मरिचे । [पाषाणे
शिरोवृत्तफल पु० शिरो वृत्त मरिचमिव फलमस्य । रक्त
शिरोवेष्ट पु० वेष्ट-घञ् शिरसो वेष्ट । उष्णीषे ल्युट् ।
तत्रैव न० ।
शिल उञ्छे कणश आदाने तु०पर०सक०सेट् । शिलति अशेलीत्
शिल न० शिल-क । क्षेत्रस्थितशस्यात् कणाशयश्यादानरूपायां
वृत्तौ, पाषाणे द्वाराध स्थितकाष्ठ स्तम्भे च स्त्री० ।
शिलाकर्णी स्त्री० शिलेव कर्णमस्य ङीप् । मल्लकीवृक्षे ।
शिलाकुट्टक पु० शिला कुट्टयति कुट्ट-ण्वुल् । पाषाणभेदके
अस्त्रभेदे । शिलया कुट्टति विदारीकरोति । टाङ्कभेदे ।
शिलाज न० शिलातो जायते जन-ड । शैलेये गन्धद्रव्ये ।
शिलाजतु न० शिलाजात जतु । पर्वतजाते उपधातुभेदे ।
शिलाञ्जनी स्त्री० शिला अञ्ज्यतेऽनया अनुज ल्युट् । काला
ञ्जनीवृक्षे ।
शिलालज न० शिलाया आत्मज इव । लौहे ।
शिलादद्रु पु० शिलाया दद्रुरिव । शैलेये गन्धद्रव्ये ।
शिलाधातु पु० शिलाया धातुश्चरमधातुरिव शुभ्रत्वात् ।
श्वेतोपले, (खड़ी) पीतवर्णे-गौरिकभेदे च ।
शिलापुत्र पु० शिलाया पुत्र इव । (लोड़ा) । प्रस्तरखण्डे ।
शिलापुष्प न० शिलाया पुष्पम् । शैलेये गन्धद्रव्ये ।
शिलाभेद पु० शिलामपि भिनत्ति भिद्-अण् । पाषाणभेदि
वृक्षे, पाषाणभेदकास्त्रे च ।
शिलाव्याधि पु० शिलाया व्याधिरिव । शैलेये गन्धद्रव्ये ।
शिलासन न० शिलाया आसनम् । शैलेये गन्धद्रव्ये ।
शिलासार न० शिलाया सार इव । लौहे ।
शिलि पु० शिल कि । भूर्जपत्त्रवृक्षे द्वारस्थे काष्ठे (गोबराट)
भेक्याञ्च शलाकपुष्पे च स्त्री०ङीप् ।
शिलीन्ध्र न० शिलीं धरति धृ-क पृ०मुम् । कदलीपुष्पे ।
शिलीन्ध्रक न० शिलीन्ध्र इव कै-कन् । गोमयच्छत्राके ।
शिलीपद पु० शिलीव पदमस्य । रोगभेदे (गोद) ।
शिलीमुख पु०शिली शल्य इ मुखमस्य । भ्रमरे, वाणे, युद्धे,
जडीभूते च ।
शिलोच्चय पु० शिलानामुच्चयो यत्र । पर्वते ।
शिलोञ्छ पु०शिलेनोञ्छ उछि घञ् । उपात्तशस्यात् क्षेत्रात्
शेषाश्चयने । [शिलोद्भवादयोऽप्यत्र ।
शिलोत्थ शिलाया उत्तिष्ठति उद्+स्था क । शैलेये गन्धद्रव्ये
शिल्प न०शिल-पक् । चित्रकलादिकर्मणि । [चित्रादिकर्तरि ।
शिल्पकारिन् त्रि०शिल्प चित्रादिकला करोति कृ णिनि ।

शिल्पशाला स्त्री० ६त०। चित्रकरादीनां शिल्पकरणगृहे।
शिल्पशास्त्र न० शिल्पज्ञापनं शास्त्रम्। वास्तुविद्यादिप्रपके शास्त्रे।
शिल्पिन् त्रि० शिल्पं वेत्त्यधीते वा इनि। चित्रादिकर्मकरे।
शिव न० शो-वन् पृ०। मङ्गले, सुखे, जले। सैन्धवे सामुद्रे च लवणे, श्वेतटङ्कणे च। मङ्गलवति त्रि०। महादेवे, मोक्षे, मालयवृक्षे, बालुके गुग्गुलौ, वेदे, पुण्डरीकवृक्षे, कृष्णधत्तूरे, पारदे, इवे, लिङ्गे, विष्कुम्भादिषु मध्ये विंशतितमे योगे च पु०। [यनार्थे गोष्ठे निखाते काष्ठे।
शिवक पु० शिव इव इवार्थे कन्। कीलके गवां गात्रकण्डू-
शिवकाञ्ची स्त्री० ६त०। पुरीभेदे।
शिवधर्मज शिवधर्माज्जायते जन ड। मङ्गलग्रहे।
शिवचतुर्दशी स्त्री० शिवप्रिया चतुर्दशी। फाल्गुनकृष्णचतुर्दश्याम्।
शिवदारु न० शिवो देवस्तदादिकं दारु। देवदारुवृक्षे।
शिवदूती स्त्री० शिवो दूतो यस्याः। दुर्गामूर्तिभेदे।
शिवद्रुम पु० शिवप्रियः द्रुमः। बिल्ववृक्षे।
शिवद्विष्टा स्त्री० ६त०। केतक्याम्।
शिवधातु पु० ६त०। पारदे।
शिवपुरी स्त्री० ६त०। काश्याम्।
शिवप्रिय न०६त०। रुद्राक्षे, महादेववल्लभे त्रि०। बकवृक्षे, धत्तूरे, स्फटिके च पु०। दुर्गायां स्त्री०।
शिवमल्लक पु० शिवं कल्याणकरं मल्लइव कायति कै क। अर्जुनवृक्षे।
शिवमल्ली स्त्री० शिवस्य मल्लीव प्रिया। बकवृक्षे।
शिवरात्रि स्त्री० शिवप्रिया तदुपासनार्था रात्रिः। शिवचतुर्दश्याम् माघीय परस्याः कृष्णचतुर्दश्याम्। तद्रात्रौ हि शिवपूजनव्रतादिकं क्रियते इति तस्याः रात्रेस्तत्प्रियत्वम् तद्विषयकर्त्तव्ये व्रते च।
शिवलिङ्ग न०६त०। शिवस्य लिङ्गाकारे प्रस्तरादिमये पदार्थे।
शिवलोक पु० ६त०। कैलासनामके स्थाने।
शिववल्लभ त्रि० ६त०। महादेवप्रिये। शतपत्र्यां स्त्री०।
शिववल्ली स्त्री० शिवप्रिया वल्ली। शिङ्गिलतायां, श्रीवल्ल्याञ्च।
शिववाहन न० शिवं वाहयति वह णिच् ल्यु। वृषभे।
शिववीज न० ६त०। पारदे शिववीर्यादुत्पन्न।
शिवशेखर पु० शिवस्य शेखर इव। धत्तूरे, बकपुष्पे च।
शिवसुन्दरी स्त्री० ६त०। दुर्गायाम्।
शिवा स्त्री० शी-वन् नि०। मङ्गलरूपायां मुक्तौ, दुर्गायां, शक्तौ, शृगाले, हरीतक्याम्, शमीवृक्षे, आमलक्याम्, दूर्वायां, गोरोचनायाञ्च।
शिवानी स्त्री० शिवं कल्याणमानयति आ+नी ड गौ० ङीष्। जयन्तीवृक्षे। शिवस्य पत्नी ङीष् आनुक् च। दुर्गायाम्।
शिवापीड पु० ६त०। बकवृक्षे।
शिवाफला स्त्री० शिवाया इव फलं यस्याः। शमीवृक्षे।
शिवालय न० शिव आलीयतेऽत्र ली-अच्। श्मशाने ६त०। रक्ततुलस्यां महादेवगृहे च पु०।
शिवास्मृति स्त्री० शिवायाः स्मृतिर्यस्याः। जयन्तीवृक्षे तन्नामोच्चारणे हि जयन्तीनामकदुर्गायाः स्मरणम्। [बकवृक्षे
शिवाह्लाद पु० शिवमाह्लादयति आ+ह्लद णिच् अण्।
शिवाह्वा स्त्री० शिवस्येवाह्वा यस्याः। रुद्रजटायाम्।
शिवि पु० शि वि नि० न गुणः। हिंस्रपशौ, भूर्जवृक्षे उशीनरराजसुते नृपभेदे च। [(दुको)।
शिविका स्त्री० शिवं करोति शिव+णिच् ण्वुल्। यानभेदे।
शिविर न० शी+किरच् बुक् च। कटके सैन्यनिवासस्थाने।
शिवेष्ट पु० ६त०। बकवृक्षे दूर्वायां स्त्री०। महादेवप्रिये त्रि०
शिशिर न० शश किरच् नि०। हिमे, माघफाल्गुनमासद्वयात्मके ऋतुभेदे शीतले स्पर्शे च तद्वति त्रि०।
शिशु पु० शो कु सन्वद्भाव द्वित्वम्। बालके सत्त्वे च।
शिशुक पु० शिशुरिव इवार्थे कन्। जलजन्तुभेदे (शुशुक)।
शिशुगन्धा स्त्री० शिशुः सत्त्वो गन्धो यस्याः। मल्लिकाभेदे
शिशुचान्द्रायण न० चतुरः प्रातरश्नीयात् पिण्डान् विप्र समाहितः चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतमित्युक्ते व्रते। [स्त्री०।
शिशुत्व न०६त०। शिशोर्भावः त्व। तास्ये तस्य शिशुतापन्न
शिशुपाल पु० चेदिदेशीयराजभेदे दमघोषात्मजे। [श्रीकृष्णे
शिशुपालघ्न पु० शिशुपालं हतवान् हन-भूते क्विप्।
शिशुमार पु० शिशुं मारयति मृ णिच्। जलजन्तुभेदे गगनस्थे तारापञ्चभेदे च।
शिश्न पु० शस नक् नि०। मेढ्रे पुंश्चिह्नभेदे।
शिश्विदान त्रि० श्विद-कानच् द्वित्वम्। पापकारके।
शिष वधे भ्वा०पर०सक०सेट्। शेषति अशेषीत्।
शिष परिशेषीकरणे वा चु०उ०पक्षे भ्वा०प०सक० सेट्। शेषयति ते शेषति अशीशिषत् त अशेषीत्। [च।
शिष विशेषे रुधा०प० सक०अनिट्। शिनष्टि अशिषत्। [र्थे ९
शिष्ट त्रि० शास क्त। शान्ते, सदशास्त्रे विधायकरे, उक्तेषु
शिष्टाचार पु० शिष्टानामाचारः। सदाचारे।

शिष्टि स्त्री० शास-क्तिन् । आज्ञायां, शासने, ताडने च 'शिष्यशिष्टिरवधेने'ति स्मृतिः ।
शिष्य त्रि० शास-क्यप् । शिक्षणीये, छात्रे, उपदेश्ये च ।
शि(सि)ह्ल पु० शिह्-लच् नि० सस्य शो वा । गन्धद्रव्यभेदे स्वार्थे कन् । तत्रैव । [अशीकिष्ट ।
शी शयने अदा० आ० अक० सेट् । शेते अशयिष्ट । [शीकति
शीक सेके सर्पणे च भ्वा० आ० सक० सेट् ऋदि न ह्रस्वः ।
शीक आमर्षे सेके च चु० उभ० पक्षे भ्वा० प० सक० सेट् । शीकयति ते शीकति अशीशिकत्-त अशीकीत् ।
शीकर न० शीक-अरन् । सरलद्रवे, जलकणे, वायौ च ।
शीघ्र न० शिघि रक् पृ० । विलम्बाभावे त्वरिते च तद्वति त्रि०
शीघ्रजन्मन् पु० शीघ्रं जन्म यस्य । करञ्जवृक्षे ।
शीघ्रपुष्प पु० शीघ्रं पुष्पं यस्य । वकवृक्षे । [कर्त्तरि ।
शीघ्रवेधिन् पु० शीघ्रं विध्यति विध-णिनि । शीघ्रलक्ष्यवेधन-
शीत न० श्यै-क्त । शीतले, जले, हिमे च । बहुवारवृक्षे असनवृक्षे वेतसवृक्षे च पु० । शीतस्पर्शवति त्रि० ।
शीतक पु० शीतमिव करोति । दीर्घसूत्रिणि आलस्येन कार्य्याकरणाय शीतबाधामभिनीय सुखिते शीत+स्वार्थे कन् । शीतपदार्थे, शीतकाले, वृश्चिके च ।
शीतकर पु० शीतं शीतलं करो यस्य । चन्द्रे । कर्पूरे च । शीतकिरणादयोऽप्यत्र त्रि० शीतकारके ।
शीतकाल पु० ६त० । हिमर्त्तौ मार्गपौषमाघद्वयात्मके काले ।
शीतकुम्भ पु० शीतं स्कुम्नाति स्कुम्भ-अच् नि० । करवीरे ।
शीतकृच्छ्र पु० 'त्र्यहं शीतं पिबेत् तोयं त्र्यहं शीतं पयः पिबेत् । त्र्यहं शीतं घृतं पीत्वा वायुभक्षः परत्र्यहमि'-त्युक्ते व्रते ।
शीतक्षार न० कर्म० । श्वेतटङ्कणे ।
शीतगन्ध न० शीतः शीतलः गन्धो यस्य । श्वेतचन्दने ।
शीतगु पु० शीता गावः किरणा यस्य । चन्द्रे, कर्पूरे च ।
शीतपर्णी स्त्री० शीतं पर्णं यस्याः ङीप् । अर्कपुष्पिकायाम् ।
शीतपल्लवा स्त्री० शीतः पल्लवो यस्याः । भूमिजम्ब्वाम् ।
शीतपाकिनी स्त्री० शीते पाकोऽस्त्यस्याः इनि । काकोल्याम्
शीतपाकी स्त्री० शीतेन पाको यस्याः ङीप् । नागबलायां, काकोल्याञ्च । [स्वार्थे कन् । शैलेये । अर्कवृक्षे च ।
शीतपुष्प पु० शीतं शीतवीर्य्यकरं पुष्पं यस्याः । शिरीषवृक्षे
शीतप्रभ पु० शीतस्य हिमस्येव प्रभा यस्य । कर्पूरे ।
शीतप्रिय पु० ६त० । पर्पटे ।
शीतफल पु० शीतं शीतवीर्य्यकरं फलमस्य । उडुम्बरे, पीलौ च

शीतबला स्त्री० शीतं बलं च यस्याः । महासमङ्गायाम् ।
शीतभानु पु० शीताः शीतलाभानवोऽस्य । चन्द्रे, कर्पूरे च ।
शीतभीरु स्त्री० ६त० । मल्लिकायाम् शीतभीते त्रि० ।
शीतमञ्जरी स्त्री० शीतकाले मञ्जरी यस्याः न कप् । शेफालिकायाम् ।
शीतमूलक न० शीतं शीतवीर्य्यकरं मूलमस्य कप् । उशीरे ।
शीतरश्मि पु० शीतारश्मयोऽस्य । चन्द्रे, कर्पूरे च ।
शीतल पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा । शीतस्पर्शे तद्वति त्रि० । मलयोद्भवे-चन्दने, शैलेये, पद्मके, मौक्तिके वीरणमूले, शैलेये च न० । अशनपर्ण्यां बहुवारवृक्षे, चम्पके, चन्द्रे, कर्पूरे, राले च पु० ।
शीतलक न० शीतलमिव कं यस्य वा । श्वेतोत्पले मरुवके पु०
शीतलच्छद पु० शीतलः शीतलस्पर्शवान् छदोऽस्य । चम्पके कर्म० । शीतलपत्रे पु० । [वारि च न०
शीतलजल न० शीतलं जलं यस्मात् । उत्पले कर्म० । शीतल
शीतलवातक पु० शीतलो वातो धातुभेदो यस्मात् । अशनपर्ण्याम् । तच्छेदने हि वायोः शीतलता ।
शीतला स्त्री० देवीभेदे जलशूकभेदे च । तत्र ङीप् च ।
शीतवल्क पु० शीतः शीतकरः वल्कोऽस्य । उडुम्बरे ।
शीतवीर्य्यक पु० शीतं शीतलकरं वीर्य्यं यस्मात् । प्लक्षवृक्षे ।
शीतशिव न० शीतं शीतलमपि शिवम् । सैन्धवलवणे । मिश्रेयायां, शमीवृक्षे च स्त्री० । मधुरिकायाम् पु० ।
शीतसह पु० शीतं सहते सह-अच् । पीलुवृक्षे, नीलसिन्धुवारे च वासन्त्याम् स्त्री० । [उदुम्बिका, दूर्वायाञ्च ।
शीता स्त्री० श्यै क्त । लाङ्गलपद्धतौ, रामपत्न्याम्, अतिबलायां
शीतांशु पु० शीताः अंशवो यस्य । चन्द्रे, कर्पूरे च । [त्रि०
शीताङ्गी स्त्री० शीतमङ्गमस्याः ङीप् । हंसपदीवृक्षे । शीतलदेहे
शीतार्त्त त्रि० शीतेन ऋतः । शीतार्त्तौ ।
शीतालु त्रि शीत+अस्त्यर्थे आलुच् । शीतबाधायुक्ते ।
शीतावला स्त्री० शीतमावलयति आ+वल-णिच्-अण् । महासमङ्गायाम् । [काले ध्वनिभेदे ।
शीत्कार पु० शीदित्यस्य कारः शीत्+कृ-घञ् । स्त्रीणां रति
शी(सी)त्य त्रि० शी(सी)ताम् अर्हति यत् । हलकृष्टे क्षेत्रादौ ।
शीधु पु० न० । शी-धुक् । इक्षुरसजाते मद्यभेदे ।
शीधुगन्ध पु० शीधोरिव गन्धोऽस्य । वकुलवृक्षे ।
शीन त्रि० श्यै-क्त । घनं भूते घृतादौ । मूर्खे, अजगरे च पु० ।
शीभ कथने भ्वा० आ० स० सेट् ऋदि न ह्रस्वः । शीभते अशीभिष्ट
शीर पु० शी-रक् । अजगरसर्पे ।

शीर्ण त्रि॰ शॄ-क्त । कृशे, शुष्कतामाप्ते च ।

शीर्णपत्त्र पु॰ शीर्णं पत्त्रमस्य । कर्णिकारवृक्षे, निम्बे, पट्टिका लोध्रे च । विशीर्णपत्त्रयुक्ते त्रि॰ । कर्म॰ विशीर्णे पर्णे न॰

शीर्णपर्ण पु॰ शीर्णं पर्णमस्य । निम्बे, विशीर्णपत्त्रयुते त्रि॰ कर्म॰ । विशीर्णे पर्णे न॰ । [स्वार्थे कन् । तत्रैव

शीर्णपुष्पी स्त्री॰ शीर्णं पुष्पमस्या ङीप् । शताकुष्माम् ।

शीर्णमाला स्त्री॰ शीर्णानां मालेव । पृश्निपर्ण्याम् । कर्म॰ । विशीर्णे माल्ये ।

शीर्णवृन्त न॰ शीर्णं वृन्तमस्य । (तरमुज) फलवृक्षे । [इत्यादि

शीर्ष न॰ शिरस् वा शीर्षादेश । मस्तके । यथादौ शीर्ष्णः

शीर्षक न॰ शीर्षं कायति कै क । शिरस्त्राणे (टोपर) शिरोस्थि जयपराजयपत्त्रप्राप्यदण्डभेदे 'शीर्षकम्येऽभियोक्तारी'ति श्रुतिः । स्वार्थे कन् । मस्तके न॰ । तेन कायति कै-क । राहुग्रहे । [तोऽङ्ग्रया'मिति भट्टिः ।

शीर्षच्छेद्य त्रि॰ शीर्षच्छेदमर्हति यत् । वध्ये 'शीर्षच्छेद्यम-

शीर्षण्य पु॰ शीर्षे बध्यते शीर्ष-यत् शीर्षन्नादेश । शिर-स्त्राणे । शीर्षभवः यत् । विशदकेशे पु॰ केशजाते त्रि॰ ।

शीर्षरक्ष न॰ शीर्षं रक्षति रक्ष-अण् । शिरस्त्राणे ।

शील समाधौ भ्वा॰ पर॰ सक॰ सेट् । शीलति अशीलीत् । 'सरसो' परिशीलितुमिति नैषधम् ।

शील अभ्यासे व्यतिशायने च अद॰चु॰उभ॰सक॰सेट् । शील-यति ते अशिशीलत् त । [पु॰

शील न॰ शील-अच् । स्वभावे, सद्वृत्ते, चरित्रे च । अजगरसर्पे

शीलन न॰ शील-ल्युट् । अभ्यासे, अतिशायने, मर्दने च ।

शीलित त्रि॰ शील-क्त । अभ्यस्ते, सेविते च ।

शुक गतौ भ्वा॰ पर॰ सक॰ सेट् । शोकति अशोकीत् ।

शुक न॰ शुक-क । ग्रन्थिपर्णे, वस्त्रे, वस्त्राञ्चले च । व्यासपुत्रे, पक्षिभेदे शिरीषवृक्षे च पु॰ ।

शुकच्छद न॰ शुकस्य छदस्य छदो इवमस्य । ग्रन्थिपर्णे ।

शुकजिह्वा स्त्री॰ शुकस्येव जिह्वा पर्णमस्याः ।(शुयाठोंगा)वृक्षे

शुकतरु पु॰ शुकप्रियस्तरुः । शिरीषवृक्षे शुकद्रुमादयोऽप्यत्र ।

शुकदेव पु॰ व्यासपुत्रे ।

शुकनाशन पु॰ शुकं नाशयति नश णिच् ल्यु । वकवृक्षे ।

शुकनास पु॰ शुकस्य नासेव नासा यस्य । श्योनाकवृक्षे शुक-तुल्यनासायुक्ते त्रि॰ । कादम्बरीप्रसिद्धे तारापीडस्य-मन्त्रिभेदे पु॰ ।

शुकपिण्डी पु॰ शुकानां प्रिया पिण्डीव । शुकशिम्बीनाम् ।

शुकपुच्छ पु॰ शुकस्य पुच्छमिव । गन्धके इत॰ । शुकस्य पुच्छे च

शुकपुष्प पु॰ शुकइव हरित् पुष्पमस्य । शिरीषवृक्षे ।

शुकप्रिय पु॰ ६त॰ । शिरीषवृक्षे, जम्ब्वां स्त्री॰ ।

शुकफल पु॰ शुकइव फलमस्य । अर्कवृक्षे ।

शुकवल्लभ पु॰ ६त॰ । दाडिमवृक्षे ६त॰ । तस्य प्रिये त्रि॰ ।

शुकशि(षि)म्बा स्त्री॰ शुकइव शि(षि)म्बा । कपिकच्छ्वाम् ।

शुकादन पु॰ शुकैरद्यते अद-ल्युट् । दाडिमे ।

शुकानना स्त्री॰ शुकस्याननमिव पत्त्रमस्याः । (शुयाठोंटी,वृक्षे

शुकोदर न॰ शुकस्योदरमिव । तालीशपत्त्रे ६त॰ । शुकस्योदरे

शुक्त न॰ शुच-क्त । नाम्ले काञ्जिके, द्रवद्रव्यभेदे, 'शुक्तं पक्वपुरं कालवशादम्लत्वमागत'मित्युक्ते पदार्थे च 'दधि शुक्तेषु भोक्तव्य'मिति मनुः । निष्ठुरे, पूते, श्लिष्टे, दुर्जने, अम्ले, च त्रि॰ शुक्तिकायां स्त्री॰ ।

शुक्ति स्त्री॰ शुच-क्तिन् । जलजन्तुभेदे (झिनुक) कपालखण्डे, शङ्खे, शङ्खनखे, नख्याम्, चर्मरोगे, अश्वावर्त्तके, चक्षुरोगभेदे च । [कायाम् ।

शुक्तिका स्त्री॰ शुक्तिरेव कन् । (झिनुक) शुक्तास्फोटे, शुक्ति-

शुक्तिज न॰ शुक्तौ जायते जन-ड । मुक्तायाम् । [ङीप् ।

शुक्तिमत् पु॰ शुक्तिरस्त्यस्य मतुप् । पर्वतभेदे । नदीभेदे स्त्री॰

शुक्र न॰ शुच रन् नि॰ कुत्वम् । मज्जजाते चरमधातौ, नेत्र-रोगभेदे च । ग्रहभेदे, दैत्यगुरौ, अग्नौ, चित्रकवृक्षे, ज्यैष्ठ मासे, विष्कम्भादिषु योगेषु मध्ये चतुर्विंशे योगे च पु॰ ।

शुक्रकर पु॰ शुक्रं वीर्यं करोति कृ-अच् । मज्जधातौ । वीर्य-कारके त्रि॰ ।

शुक्रभुज् स्त्री॰ शुक्रं भुङ्क्ते भुज-क्विप् । मयूरजातिस्त्रियाम्

शुक्रला स्त्री॰ शुक्रं लाति ला-क । उच्चटावृक्षे ।

शुक्रशिष्य पु॰ ६त॰ । दैत्ये असुरे ।

शुक्रिय त्रि॰ शुक्रो देवतास्य तस्येदम् वा घ । शुक्रसम्बन्धिनि तद्देवते, यजुर्वेदीये 'शुक्र वाचमि'त्यादिके षट्त्रिंशत्तमे यान्त्यध्याये न॰ ।

शुक्ल न॰ शुच-लक् कुत्वम् । रजते, नवनीते, अक्षिरोगभेदे च । श्वेतवर्णे पु॰ । श्वेतवर्णवति शुद्धे च त्रि॰ ।

शुक्लकन्द पु॰ शुक्लः कन्दो यस्य । मण्डिपकन्दे । अतिविषायां स्त्री॰ । कर्म॰ । श्वेते कन्दे ।

शुक्लकर्म्मन् त्रि॰ शुक्लं शुद्धं कर्म यस्य । दक्षिणे शुभचरिते ।

शुक्लकुष्ठ न॰ कर्म॰ । श्वेतकुष्ठे (धवल) । [त्रि॰

शुक्लदुग्ध पु॰ शुक्लं दुग्धमस्य । शृङ्गाटके । श्वेतदुग्धवति

शुक्लधातु पु॰ कर्म॰ । खटिकायाम् (खडि)

शुक्लपक्ष पु॰ कर्म॰ । प्रतिपदादिचन्द्रकलावर्द्धकपञ्चदशतिथ्यात्मके

चान्द्रमासार्द्धे काले, श्वेतच्छदे, काके, बके च ।
शुक्लपुष्प पु० शुक्लं पुष्पमस्य । कलाकवृक्षे, कुन्दवृक्षे, मरुवके च ।
श्वेतपुष्पवति त्रि० नागदन्त्यां स्त्री० ङीप् । कर्म० शुभ्रपुष्पे न०
शुक्लपृष्ठक पु० शुक्लं पृष्ठमस्य कप् । शिम्बुकवृक्षे । [त्रि०
शुक्लरोहित पु० वर्णोवर्णेनेति कर्म० । श्वेतरक्ते वर्णे, तद्वति
शुक्लला स्त्री० शुक्लं लाति ला-क । उष्ट्रटायाम् ।
शुक्लवायस पु० कर्म० । बके, श्वेतकाके च ।
शुक्लशाल पु० कर्म० । गिरिनिम्बे श्वेतवर्णवृक्षे च ।
शुक्ला स्त्री० शुक्ल+अर्श आद्यच् टाप् । सरस्वत्यां, शर्करायां, काकोल्यां, विदार्य्यां, स्नुह्यां, श्वेतवर्णवत्यां, स्त्रियाञ्च ।
शुक्लाङ्गी स्त्री शुक्लमङ्गमस्याः ङीष् । शेफालिकायाम्, श्वेताङ्गयुक्ते त्रि० ।
शुक्लापाङ्ग पु० शुक्लः अपाङ्गो यस्य । मयूरे ।
शुक्लाम्ल न० कर्म० । अम्लशाके ।
शुक्लिमन् पु० शुक्लस्य भावः इमनिच् । श्वेतवर्णे ।
शुक्लोपला स्त्री० कर्म० स अस्त्यस्याः अच् । शर्करायाम् ।
शुङ्ग पु० शम-ग तस्य नेत्त्वं नि० अत उत्त्वञ्च । वटवृक्षे, आम्रातके, प्लक्षे च । मर्कटीवृक्षे धान्यादिशूके च स्त्री० ।
शुङ्गाकर्म्मन् न० शुङ्गैः वटपल्लवैः या सम्यक् कर्म० यत्र । पुंसवनसंस्कारभेदे ।
शुङ्गिन् पु० शुङ्गोऽस्त्यस्य इनि । वटवृक्षे । शुङ्गवति त्रि० ।
शुच् स्त्री० शुच-क्विप् । शोके । वा टाप् । तत्रैव ।
शुच शौचे क्लेदे च दिवा० उभ० अक० सेट् । शुच्यति ते अशुचत्-अशोचीत् अशोचिष्ट ।
शुच शोके भ्वा० पर० सक० सेट् । शोचति अशोचीत् ।
शुचि पु० शुच-किन् । वह्नौ, चित्रकवृक्षे, ज्यैष्ठमासे, आषाढमासे शृङ्गारसे, ग्रीष्मे, रवौ, शुद्धमन्त्रिणि, अग्निभेदे श्वेतवर्णे च । तद्वति त्रि० ।
शुचिद्रुम पु० कर्म० । अश्वत्थवृक्षे ।
शुचिमल्लिका स्त्री० कर्म० । नवमल्लिकायाम् । [अशुच्यीत् ।
शुच्य अभिषवे भ्वा० पर० सक० सेट् निष्ठा अनिट् । शुच्यति
शुठ गतिविघाते भ्वा० पर० सक० सेट् । शोठति अशोठीत् ।
शुठ आलस्ये चु० उभ० सक० सेट् । शोठयति ते अशूशुठत् ।
शुठ शोषणे वा० चु० उभ० पक्षे भ्वा० पर० सक० सेट् इदित् । शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत् ।
शुण्ठि(ण्ठी) स्त्री० शुठि-इन् वा ङीष् । (शुंठ) । द्रव्ये ।
शुण गतौ तु० पर० सक० सेट् । शुणति अशोणीत् । [स्त्री० ।
शुण्ड पु० शुन-ड तस्य नेत्त्वम् । मदनिर्भरे, गजहस्ते पु० स्त्रीपक्षे टाप् मद्यपानगृहे वेश्यायाम् सुरायां नलिन्यां कुट्टियाम् जलहस्तिन्याञ्च स्त्री० ।
शुण्डार पु० शुण्डा अस्त्यर्थे र । शौण्डिके, हस्तिनि च । अपकर्षे र । अपकृष्टशुण्डायाम् । अच् । हस्तिनि ।
शुण्डी स्त्री० शुण्डाकारोऽस्त्यस्याः अच् गौ० ङीष् । (हातिशुडा) द्रव्ये । [पवित्रे, शुभ्रे च त्रि०
शुद्ध न० शुध-क्त । सैन्धवलवणे, मरिचे च । केवले, निर्दोषे,
शुद्धवल्ली स्त्री० कर्म० । गुडूच्याम्, पवित्रायां लतायाञ्च ।
शुद्धान्त पु० शुद्ध अन्तः पर्यन्तो यस्य । अन्तःपुरे, उपचारात् तत्र स्थितायां राजयोषिति पु० स्त्री० । 'शुद्धान्तसंभोगनितान्ततुष्टे इति नैषधम् ।
शुद्धापह्नुति स्त्री० कर्म० । अर्थालङ्कारभेदे ।
शुद्धि स्त्री० शुध-क्तिन् । मार्ज्जने नैर्मल्यसम्पादने वैदिककर्मयोग्यतासम्पादकसंस्कारभेदे च ।
शुद्धोदनि पु० बौद्धभेदे ।
शुध शौचे शोधने, निःशेषभवने च दि० पर० सक० अनिट् । शुध्यति अशुधत् । 'भक्तोहरः शुध्यति यद्गुणः स्यादिति सौ०
शुन गतौ तु० पर० सक० सेट् । शुनति अशोनीत् ।
शुन पु० शुन-क । कुक्कुरे । इक् । तत्रैव । [मुनिभेदे ।
शुनःशेफ पु० शुन इव शेफोऽस्य अलुक्स० । विश्वामित्रशिष्ये
शुनक पु० शुन इव कन् । मुनिभेदे स्वार्थे कन् । कुक्कुरे ।
शुनी स्त्री० श्वन्+स्त्रियां ङीप् । कुक्कुरयोषिति, कुष्माण्ड्यां च
शुन्ध शुद्धौ चु० उ० सक० सेट् । शुन्धयति ते अशुशुन्धत् त ।
शुन्ध शुद्धौ अक० शुद्धीकरणे सक० भ्वा० उभ० सेट् । शुन्धति ते 'आपः शुन्दन्तमैनसः' इति वेदमन्त्र' । अशुन्धीत् । अशुन्धिष्ट ।
शुन्भ दीप्तौ अक० मर्दने च सक० तु० पर० सेट् । शुभति अशुम्भीत् 'प्रागप्राप्तनिशुम्भशाम्भवधनु रिति वीरचरितम्
शुभ दीप्तौ अक० हिंसने स तु सुचा० प० सेट् । शुम्भति अशोभीत्
शुभ दीप्तौ भ्वा० आ० अक० सेट् । शोभते अशुभत् ।
शुभ न० शुभ-क । मङ्गले, पद्मकाष्ठे च । शुभयुक्ते त्रि० । विष्कम्भादिषु मध्ये त्रयोविंशयोगे पु० । [रिति भट्टिः
शुभंयु त्रि० शुभम्+अस्त्यर्थे युस् । शुभान्विते 'चितिपः शुभंयु'
शुभगन्धक न० शुभोगन्धोऽस्य । बोले ।
शुभग्रह पु० शुभः शुभदायकः ग्रहः । सौम्यग्रहे गुरौ शुक्रेऽर्द्धाधिकचन्द्रे, पापग्रहायुते बुधे च । [दुर्गायां स्त्री० ।
शुभङ्कर त्रि० शुभं करोति कृ-अच् मुम् च । मङ्गलकारके ।
शुभद पु० शुभं ददाति दा-क । अश्वत्थवृक्षे मङ्गलदातरि त्रि०

शुभपत्नी स्त्री० शुभानि पत्राण्यस्याः ङीप्। (शालपान) क्षुपे

शुभा स्त्री० शुभ क । शोभायां, कान्तौ रोचनायां, गोरोचनायां, शम्यां, प्रियङ्गौ, श्वेतदूर्व्वायां, देवसभायाञ्च ।

शुभाञ्जन पु० शुभ-क शुभम् अञ्जनं यस्मात्। शोभाञ्जनवृक्षे ।

शुभ्र न० शुभ रक्। अभ्रके रौप्ये, कासीसे च । चन्दने, श्वेतवर्णे च पु० । तद्वति त्रि० ।

शुभ्रकर पु० शुभ्रं करोति कृ-ट । चन्द्रे, कर्पूरे च । शुभ्रकिरणशुभ्रांशुप्रभृतयोऽप्यत्र । [योषिति

शुभ्रदन्ती स्त्री० शुभ्रो दन्तो यस्याः ङीप् । पुष्पदन्तदिग्गज

शुभ्रालु पु० कर्म० । महिषकन्दे ।

शुम्भ पु० शुम्भ अच् । दानवभेदे ।

शुम्भमर्दिनी स्त्री० शुम्भं मर्दयति मृद-णिनि । दुर्गायाम् ।

शुर मारणे स्तम्भने च दि० आ० सक० सेट् । शूर्य्यते अशोरिष्ट ।

शुल्क कथने, सर्जने, वर्जने च चु० उभ० सक० सेट् । शुल्कयति ते अशुशुल्कत् त ।

शुल्क पु० न० शुल्क्यते अतिसृज्यते कर्म्मणि घञ् । घट्टादिदेये राजग्राह्यकरभेदे, वरपक्षात् कन्यापक्षीयैः ग्राह्ये धने स्त्रीधनभेदे, 'भगिनीशुल्कं सोदर्य्याणामिति स्मृतिः' स्त्रीभ्यः सम्भोगार्थं देये धने, 'स्वशुल्कोपकृतायान्तु पिण्डदाः वोढुरेव ते' इति स्मृति धर्मे च ।

शुल्कस्थान न० ६ त० । (घाटि) घट्टे, भूपानां क्रयविक्रययोग्यद्रव्यकरादानस्थाने ।

शुल्ल न० शुल्व-अच् पृ० । ताम्रे, रज्जौ च ।

शुल्व माने दाने च चु० उभ० सक० सेट् । शुल्वयति ते अशुशुल्वत् त

शुल्व न० शुल्व अच् । ताम्रे, रज्जौ च । जलसमीपे, आचारे, यज्ञकार्य्ये च ।

शुल्वारि पु० ६ त० । गन्धके तस्य ताम्रादिजारकत्वात् तथात्वम्

शुश्रूषण न० श्रु-सन् ल्युट् । सेवायाम् । युच् । तत्रैव स्त्री० ।

शुश्रूषा स्त्री० श्रु-सन् अ । श्रवणेच्छायाम्, उपासनायाञ्च ।

शुष शोषे दि० प० अक० अनिट् । शुष्यति अशुषत् ।

शुष पु० शुष-क । गर्त्ते, छिद्रे च ।

शुषि स्त्री० शुष-इक् । शोषणे, छिद्रे च ।

शुषिर न० शुष किरच् । छिद्रे, वंशादिवाद्ये च । सच्छिद्रे त्रि० मूषिके, वह्नौ च पु० । नद्यां, नलीनामगन्धद्रव्ये च स्त्री० ।

शुष्क त्रि० शुष क्त । आतपादिना जलशोषणे ।

शुष्कपत्र न० शुष्कं पत्रमस्य । (नालता) शाकभेदे । कर्म० । शुष्के पत्रे न० ।

शुष्कल न० शुष्कं मांसं लाति ला क । शुष्कमांसे ।

शुष्कवृक्ष पु० कर्म० । धववृक्षे ।

शुष्कवैर न० शुष्कं फलशून्यं वैरम् । उद्देश्यशून्ये कलहे ।

शुष्कव्रण पु० कर्म० । (घेटा) किणरूपे व्रणे ।

शुष्काङ्ग पु० शुष्कमङ्गमस्य । धववृक्षे (बगाल) शुष्कावयवे त्रि० स्त्रियां ङीप् । सा च गैरिकायाञ्च ।

शुष्कार्द्रक न० शुष्कमार्द्रकम् । शुण्ठ्याम् (शुंठ) ।

शुष्म न० शुष-मन् किच्च । तेजसि, पराक्रमे च । सूर्य्ये, अग्नौ, चित्रकवृक्षे, वायौ, पक्षिणि, वह्निपि च पु० ।

शुष्मन् न० शुष मनिन् । तेजसि, शौर्य्ये च । अग्नौ, चित्रकवृक्षे, च पु० ।

शूक पु० न० शो-ऊकक् । (शुङा) तीक्ष्णाग्रे, शिखायाञ्च । [भेदे ।

शूककीट पु० शूकाकाररोमयुक्त कीटे । (शुयापोका) कीट

शूकधान्य न० शूकयुक्तं धान्यम् शाक० । यवादौ धान्ये ।

शूकपिण्डि(ण्डी) स्त्री० शूकस्य पिण्डीव । शूकशिम्ब्याम्

शूकर पु० शू इत्यव्यक्तं शब्दं करोति कृ अच् शूक+अस्त्यर्थे र वा । स्वनामख्याते पशौ ।

शूकरकन्द पु० शूकर इव रोमश कन्दोऽस्य । वाराहीकन्दे

शूकरपादिका स्त्री० शूकरस्येव पादाः मूलान्यस्याः ङीप् संज्ञायां कन् । कोलशिम्ब्याम् । [वराहक्रान्तायाम् ।

शूकराक्रान्ता स्त्री० शूकरेणाक्रम्यते स्म आ+क्रम क्त ३ त० ।

शूकरी स्त्री० शूकर आक्रामकत्वेनास्त्यस्याः अच् गौ० ङीष् । वराहक्रान्तायाम् । शूकर+पुंयोगे ङीप् तज्जातिस्त्रियाम्

शूकरेष्ट पु० ६ त० । कशेरुनामकन्दे । वराहप्रियद्रव्ये त्रि० ।

शूकवती स्त्री० शूकाः सन्त्यस्याः मतुप् मस्य व । कपिकच्छ्वाम् ।

शूकशिम्बा स्त्री० शूकयुक्ता शिम्बा । कपिकच्छ्वाम् ।

शूकशिम्बि(म्बी) स्त्री० शूकयुक्ता शिम्बि वा ङीप् । कपिकच्छ्वाम्

शूका स्त्री० शूकोऽस्त्यस्याः अच् । कपिकच्छ्वाम् ।

शूद्र पु० शुच-रक् पृ० चस्य द दीर्घश्च । चतुर्थे वर्णे । शुचा द्रवति द्रु० । शोकेऽङ्कगतियुक्ते 'अथ हारं ना शूद्रे'ति श्रुतिः शुचा द्रवणात् क्षत्रियस्यापि शूद्रत्वमिति शारीरकभाष्यम् । टाप् शूद्रा शूद्रजातिस्त्रियाम् । पुंयोगे ङीष् । शूद्रभार्य्यायाम् । [द्विजसेवादौ शूद्रकार्य्यादावपत्र ।

शूद्रकर्म्मन् न० शूद्रस्य शास्त्रविहित कर्म । शूद्रकर्मणे

शूद्रप्रिय पु० ६ त० । पलाण्डौ ।

शूद्रात्रा स्त्री० शूद्रेषाक्षी पीठिका । प्रियङ्गौ ।

शूद्रावेदिन् स्त्री० शूद्रां विन्दति विद णिनि उप० । शूद्रजातिस्त्रिया विवाहकर्त्तरि । 'शूद्रावेदी पतत्येते'ति

शूद्रासुत पु॰ शूद्रायाः द्विजातिभिः जातायाः सुतः। द्विजाति जाते शूद्रजातिस्त्रिया सुते पुत्रभेदे।

शूना स्त्री॰ श्वि-अधिकरणे-क्त। प्राणिवधस्थाने 'पञ्च सूना गृहस्थस्ये'ति स्मृतिः (चानजिभ) अर्थे जिह्वायाञ्च।

शून्य त्रि॰ शूनायै प्राणिवधाय हितम् रहस्यस्थानत्वात् यत्। निर्जनस्थाने, आकाशे, बिन्दुमात्रे, अभावे च। असम्पूर्णे, अने तुच्छे च त्रि॰। [त्रि॰

शून्यमध्य पु॰ शून्यमाकाशो मध्ये यस्य। नले। शून्यमध्यमे

शून्यवादिन् पु॰ शून्यमभावमात्रं सर्वकारणतया वदति वद णिनि। बौद्धभेदे। [(फणिमनसा)

शून्या स्त्री॰शून्यमस्त्यस्याः अच्। नल्यान् मद्याकण्ठकचायाञ्च।

शूर हिंसे साम्भे च दि॰आत्म॰ सक॰सेट्। शूर्यते अशूरिष्ट

शूर विक्रमे अ॰चु॰उभ॰सक॰सेट्। शूरयति ते अशुशूरत् त।

शूर पु॰शूर-अच्। वीरे, विक्रमवति, वसुदेवनामके, यादवे, सूर्ये, सिंहे, शूकरे, चित्रकवृक्षे, शाले, लिकुचे, मल्लभेदे च।

शूरण पु॰ शूर-ल्यु (ओल) मूलभेदे, श्योनाकवृक्षे च।

शूरसेन पु॰ शूरा सेना यत्र, यस्य वा। देशभेदे, नृपभेदे च

शूर्प माने चु॰उ सक॰सेट्। शूर्पयति ते अशुशूर्पत् त।

शूर्प पु॰ शूर्प्यते धान्यादिकमनेन शूर्प-घञ्। (कुला) धान्यस्फोटके, वंशमयपात्रे, द्रोणद्वयपरिमाणे च।

शूर्पकर्ण पु॰शूर्प इव कर्णोयस्य। गजे। [रावणभगिन्याम्।

शूर्पणखा(खी) स्त्री॰शूर्प इव नखा यस्याः णत्वम् वा ङीप्।

शूर्पपर्णी स्त्री॰ शूर्प इव पर्णान्यस्याः ङीप्। मिम्मीभेदे।

शूर्म्म पु॰ सुष्ठु ऊर्मिरस्त्यस्याः पृ॰। लौहप्रतिमायाम्।

शू(सू)र्म्मि(र्मी) स्त्री॰ सुष्ठु ऊर्मिः यस्याः वा णत्वम् वा ङीप्। लौहादिप्रतिमायाम्।

शूल रुजायां भ्वा॰प॰अक॰सेट्। शूलति अशूलीत्।

शूल पु॰न॰शूल-क। रोगभेदे, व्यथायां, सुतीक्ष्णे अय फाले, त्रिशूले च। चिह्ने, मुनिभेदे, विष्कम्भादिषु नवमयोगे च पु॰।

शूलग्रन्थि पु शूलाकारः ग्रन्थिरस्य। मालादूर्वायाम्।

शूलघातन न॰शूलं रोगभेदं घातयति हन णिच्-ल्यु। मण्डूरे

शूलघ्न पु॰ शूलं हन्ति हन-क। तम्बुरवृक्षे।

शूलद्विष् पु॰ ६त॰। हिङ्गौ।

शूलधन्वन् पु॰ शूलं धनुरायुधमस्य अनङ् समा॰। शिवे।

शूलधर पु॰ शूलं धारयति धारि-अच्। शिवे। शूलभृदादयोऽप्यत्र।

शूलधारिन् पु॰ शूलं धरति धृ-णिनि। शिवे दुर्गायां स्त्री॰

शूलधृष् पु॰ शूलेन धर्षति धृष-क्विप्। शिवे। दुर्गायां स्त्री॰।

शूलनाशन न॰ शूलं नाशयति नश-णिच्-ल्यु। सौवर्च्चलवणे

शूलपाणि पु॰शूलं पाणौ यस्य। शिवे। शूलहस्तादयोऽप्यत्र।

शूलशत्रु पु॰ शूलस्य शत्रुः। एरण्डवृक्षे।

शूलहन्त्री स्त्री॰ शूलं हन्ति हन-तृच् ङीप्। यवान्याम्।

शूलहृत् पु॰ शूलं-हरति हृ-क्विप्। हिङ्गौ।

शूलाकृत त्रि॰ शूलेन विद्धा कृतं पक्वम् शूल+डाच्+कृ-क्त। लौहादिकीलकेन विद्धा पक्वे मांसे। (काबाब)।

शूलिक त्रि॰ शूलं पाकसाधनत्वेनास्त्यस्य ठन्। शूलाकृते।

शूलिन् पु॰ शूलमस्त्यस्य इनि। शूलरोगयुक्ते,शूलास्त्रधारके त्रि॰

शूलिन पु॰ शूलाकारं फलमस्त्यस्य इनन्। भाण्डीरवृक्षे।

शूलोत्खा स्त्री॰शूलेन उत्खन्यते उद्+खन-ड। सोमराज्याम्

शूल्य त्रि॰ शूले संस्कृतं यत्। शूलाकृते मांसे।

शूष प्रसवे भ्वा॰ प॰सक॰सेट्। शूषति अशूषीत्।

शृ(सृ)गाल पु॰ असृजं लाति ला-क पृ॰ (शेयाल) पशौ दैत्यभेदे, वासुदेवे, निष्ठुरे, खले च। [काटा) क्षुपभेदे।

शृगालकण्टक पु॰ शृगालस्येव इव कण्टको यस्य। (शेयाल

शृगालकोलि पु॰ शृगाल इव कण्टकितः कोलिः। (शेयाकुल) क्षुपभेदे। [लाये क्षुपभेदे।

शृगालघण्टी स्त्री॰ शृगाल इव कण्टकिनो घण्टी। कोकि-

शृगालजम्बु स्त्री॰ शृगालप्रिया जम्बुः। गोडुम्बे (गोमुक)।

शृगालविन्ना स्त्री॰ शृगालैर्विद्यते विद-क्त। पृश्निपर्ण्याम्।

शृगालिका स्त्री॰शृगालस्य भार्या ङीप् स्वार्थे कन्। शृगाल योषिति, शृगालीव इवार्थे कन्। भयात् पलायने।

शृगाली स्त्री॰ शृगालकर्त्तृपलायनं सादृश्येनास्त्यस्य अच् ङीप्। पलायने। [लोहमये पादबन्धने च।

शृङ्खल पु॰ शृङ्गात् प्राधान्यात् खल्यतेऽनेन पृ॰। निगडे,

शृङ्खली स्त्री॰ शृङ्खः तदाकारोऽस्त्यस्याः॰अच् गौ॰ ङीष्। कोकिलाक्षे वृक्षे पुरुषकटीवस्त्रबन्धने च। रोगो स्त्री॰टाप्।

शृङ्ग न॰शृ-गन् पृ॰ह्रस्वः। पर्वतोपरिभागे, प्राधान्ये, कामोद्रेके, पश्वादेर्विषाणे, वाद्यभेदे च। (सिङ्गा) मकुरस्त्रियां स्त्री॰ङीप्

शृङ्गक पु॰ शृङ्गमिव इवार्थे कन्। चोरकवृक्षे।

शृङ्गकन्द पु॰ शृङ्गमिव कन्दोऽस्य। शृङ्गाटके (पानीफल)

शृङ्गज न॰ शृङ्गे पर्वताग्रे जायते जन-ड। अगुरुचन्दने सरलवृक्षे पु॰। शृङ्गजातमात्रे त्रि॰।

शृङ्गमूल पु॰ शृङ्गमिव मूलमस्य। शृङ्गाटके।

शृङ्गमोहिन् पु॰ शृङ्गाय कामोद्रेकाय मोहयति मुह-णिच्-णिनि। चम्पके। [(गाडरसिङ्गा)

शृङ्गला स्त्री॰शृङ्गं तदाकारफलं लाति ला-क। अजशृङ्ग्याम्

शृङ्गवत् पु० शृङ्गं प्राधान्येनास्त्यस्य मतुप् मस्य वः । भारतवर्षस्य 'नील श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः' इत्युक्ते सीमापर्वतभेदे । शृङ्गयुक्ते त्रि० ।

शृङ्गवेर न० शृङ्गमिव वेरमवयवो यस्य । आर्द्रके, शुण्ठ्याम्, राममित्रगुहचण्डालस्य पुरे च । स्वार्थे कन् । आर्द्रके

शृङ्गवेराभमूलक पु० शृङ्गवेरेण तुल्यं मूलमस्य कप् । एरकाहचे ।

शृङ्गाट पु० शृङ्गं प्राधान्यमटति अट-अण् । उत्तरस्थपर्वतभेदे- चतुष्पथे, जलकण्टकवृक्षे च तत्फले न० । (पानीफल) स्वार्थे कन् । तत्र, चतुष्पथे, अलङ्कारोक्तबन्धभेदरूपे शब्दालङ्कारे च ।

शृङ्गार पु० शृङ्गं कामोद्रेकमृच्छत्यनेन ऋ-अण् । नाट्योक्ते रसभेदे लवङ्गे सिन्दूरे । चूर्णे च शृङ्गं कारणत्वेन ऋच्छति अण् । कालागुरुणि आर्द्रके च । शृङ्गं प्राधान्यमृच्छत्यनेन अण् । भूषणे, गजभूषणे च स्वार्थे कन् । सिन्दूरे ।

शृङ्गारिन् पु० शृङ्गारः जन्यत्वेनास्त्यस्य इनि । पूगे । तत्फलभक्षणे हि कामोद्रेकः इति तथात्वम् । गजे च । सुवेषे त्रि०

शृङ्गिक न० शृङ्गाकारोऽस्त्यस्य ठन् । विषभेदे । प्रतिविषायां स्त्री०

शृङ्गिण पु० शृङ्गं प्राधान्येनास्त्यस्य इनन् । मेषे ।

शृङ्गिन् पु० शृङ्गमस्त्यस्य इनि । मेष, भारतवर्षस्य सीमापर्वतभेदे, पर्वतमात्रे, ऋषिभेदे, वृषे च । शृङ्गयुक्ते त्रि० भेद्यां स्त्री० ङीप् ।

शृत त्रि० श्रृ-क्त । पक्वे ।

शृध अपानशब्दे भ्वा० आ० लुङि लुटि लृङि च प०अक०सेट् क्त्वावेट् इदित् । शर्धते अशृधत् शर्त्स्यति शर्धिष्यते ।

शृध छेदने भ्वा उ०स०सेट् क्त्वावेट् । शर्धति ते अशर्धीत् अशर्धिष्ट

शॄ हिंसने क्र्या०प०सक०सेट् । शृणाति अशारीत् । शीर्णः

शेखर पु० शिखि गतौ अरन् पु० । शिखायाम्, मूर्द्धस्थितमाल्ये, च । वन्दायां स्त्री० ।

शेप पु० शी पन् । शेफे शिश्ने । शयनकर्त्तरि त्रि० ।

शेफ पु०न० । शी-फन् । शिश्ने शो-असि फुक् च शेफोऽप्यत्र न०

शेफालिका स्त्री० शेरते इति शेफाः अलयो यत्र कप् । (शिउलि) वृक्षभेदे । [शेफालिकायाम् ।

शेफाली स्त्री० शेफाः शयनशालिनः अलयो यत्र ङीप् ।

शेमुषी स्त्री० शी-विच् शे मोहस्तं मुष्णाति मुष-क । बुद्धौ ।

शेल गतौ चालने च भ्वा०पर०सक०सेट् । शेलति अशेलीत् ऋदित् न ह्रस्वः ।

शेलु पु० शेल-उण् । बहुवारवृक्षे ।

शेव पु० शी वन् । पुंचिह्ने शिश्ने ।

शेवधि पु० शेः धनादिमोहस्यावधिः । 'पद्मोऽस्त्रियां महापद्मः पद्मोमकरकच्छपौ । मुकुन्दकुन्दनीलश्च खर्वश्च निधयोनव' इत्युक्ते नवविधे निधौ । [(शेओला)

शेवल न० शी-विच् तथाभूतः सन् वलते अच् । शैवाले ।

शेवाल न० शे विच् शे-सन् वलते अच् । शैवाले ।

शेष पु० शिष अच् । अनन्ते सर्पराजे सर्पभेदे, अवशेषे च ।

शेषा स्त्री० शिष-घञ् । निर्माल्यमाल्यादौ 'शेषामिव भर्तुराज्ञामिति, कुमार ।

शैक्ष पु० शिक्षा तदागमपन्थमधीते वेत्ति वा अण् । शिक्षायाध्यायिनि, तद्वेत्तरि च । कन् । शैक्षकोऽप्यत्र ।

शैखरिक पु० शिखरे प्राचीरादौ भवः ठक् । अपामार्गे ।

शैखरेय पु० शिखरे भवः ढक् । अपामार्गे ।

शैत्य न० शीतस्य भावः ष्यञ् । शीतलत्वे ।

शैथिल्य न० शिथिलस्य भावः ष्यञ् । अदृढसंयोगभेदे ।

शैनेय पु० शिनेर्गोत्रापत्यम् ढक् । सात्यकिनाम्नि यादवे ।

शैल न० शिलायाः भवः अण् । शैलेये गन्धद्रव्यभेदे । स्वार्थे कन् । तत्र, शिलाजतुनि च । शिलाः सन्त्यस्य प्रज्ञा० अण् । पर्वते पु० ।

शैलगन्ध न० शैलस्य शैलजस्येव गन्धोऽस्य । शाकरचन्दने ।

शैलज न० शैले पर्वते जायते जन-ड । स्वनामख्याते गन्धद्रव्यभेदे । गजपिप्पल्याम् दुर्गायाञ्च स्त्री० ।

शैलधर पु० शैलं गोवर्द्धनपर्वतं धरति धृ-अच् । श्रीकृष्णे ।

शैलपत्त्र पु० शैलमिव सुगन्धि पत्त्रमस्य । बिल्ववृक्षे ।

शैलभित्ति पु० शैलं भिनत्ति भिद क्विप् । टङ्के पाषाणदारणास्त्रे

शैलराज पु० शैलानां नगानां राजा टच् समा० । हिमालये

शैलवीज पु० शैलं तत्पर्य्यन्तं दूरं धावति अण् शैलं बीजं यस्य । भल्लातके ।

शैलशिविर न० शैलानां नगानां शिविरमिव । समुद्रे ।

शैलसार पु०न० शैलस्य सारइव । शिलाजतुनि ।

शैलसुता स्त्री०६त० । पार्वत्याम् ।

शैलाग्र न० शैलस्याग्रम् । पर्वतशृङ्गे ।

शैलाज न० शिलाया जायते जन ड स्वार्थे अण् । शैलजे ।

शैलाट पु० शैलं पर्वतमटति अट-अण् । सिंहे, किराते, शुक्लवर्णकाचे, देवले च ।

शैलादि पु० शिलादस्यापत्यम् इञ् । शिवपार्षदे नन्दिनि

शैलालिन् पु० शिलालिना ऋषिणा प्रोक्तं नटसूत्रमधीयत णिनि । नटे शैलूषे ।

शोभाञ्जन पु० शोभायै अज्यते अन्ज-ल्युट् । (सजना) इति वृक्षे
शोष पु० शुष-घञ् । वातादिना जलाद्यपहारेण कठिनकरणे
शोषयति शुष० णिच्-अच् । यक्ष्मरोगे ।
शोषण न० शुष-ल्युट् । शोषणेन, रसस्य हरणे, शोषे च शोषयति
शुष-णिच्-ल्यु । उन्मादन० शोषणहेतुके स्मरशरभेदे,
श्योनाकवृक्षे च पु० ।
शोषसम्भव न० सम्भवत्यस्मात् संभू-अप् इत० । पिप्पलीमूले
शौक न० शुकानां समूहः अण् । शुकसमुदाये ।
शौकर न० शूकरस्य वराहस्येदम् अण् । तीर्थभेदे ।
शौक्तिकेय न० शुक्तिकाया भवम् । ढक् । मुक्तायाम् ।
शौक्तेय न० शुक्तौ भवम् ढक् । मुक्तायाम् ।
शौक्ल्य पु० शुक्लस्य भावः ष्यञ् । श्वेततायाम् श्वेतवर्णे ।
शौच न० शुचेर्भावः अण् । शुद्धौ, पवित्रतायाम् 'अभक्ष्यपरि-
हारश्च संसर्गश्चाप्यनिन्दितैः स्वधर्मे च व्यवस्थानं शौच-
मित्यभिधीयते' इति स्मृत्युक्ते धर्मविशेषे च । [तुस्वः
शौट गर्वे भ्वा०पर०अक०सेट् । शौटति अशौटीत् । चङि न
शौटीर पु० शौट-ईरन् । त्यागिनि-वीरे च । गर्वान्विते त्रि०
शौटीर्य न० शौटीरस्य वीरस्य भावः ष्यञ् । शौर्ये, पराक्रमे,
गर्वे च । [शौडीत्
शौड गर्वे भ्वा०पर०अक०सेट् चङि न ह्रस्वः । शौडति अ-
शौण्ड त्रि० शुण्डायां सुरायामभिरतः अण् । मत्ते, दक्षे च ।
शौण्डिक पु० शुण्डा सुरा पण्यमस्य ठक् । मद्यविक्रेतरि
जातिभेदे । [स्त्री० ङीप् । चव्ये, गजपिप्पल्याश्च ।
शौण्डी स्त्री० शुण्डा करिकरस्तदाकारः अस्त्यस्य अच्
शौण्डीर पु० शुण्डा गर्वोऽस्त्यस्य ईरन् स्वार्थेऽण् ।
गर्वान्विते त्रि० ।
शौद्र पु० शूद्रायां द्विजातिभिरूढायां भवः अण् । द्वादशपुत्र-
मध्ये शूद्राजाते द्विजातिपुत्रभेदे ।
शौद्धोदनि पु० शुद्धोदनस्यापत्यम् इञ् । बौद्धमुनिभेदे ।
शौधिका स्त्री० शोधः शोधनं मलविरेकस्तस्मै हितः ठक् ।
रक्तवल्लौ ।
शौनक पु० शुनकस्यापत्यमण् । मुनिभेदे 'नैमिषे निमिषक्षेत्रे
ऋषयः शौनकादय इति भागवतम् ।
शौनिक पु० शूना प्राणिवधस्थानं पण्यमस्य ठक् । मांस-
विक्रेतरि (कसाइ) मृगयायां, मृगयाशीले च ।
शौभ न० शोभायै हितम् अण् । व्योमगामिनि पुरभेदे । देवे पु०
शौभाञ्जन पु० शोभाञ्जन एव स्वार्थेऽण् । (सजना) वृक्षभेदे
शौभिक त्रि० शोभा शिल्पमस्य ठक् । इन्द्रजालिके ।
शौरि पु० शूरस्य यादवभेदस्य वसुदेवस्य सूर्यस्य वा गोत्रा-
पत्यम् इञ् । विष्णौ, शनैश्चरे च ।
शौर्य न० शूरस्य भावः ष्यञ् । वीर्ये शक्तौ च ।
शौल्किक पु० शुल्के राजादिदेये करे तदादाने अधिकृतः
ठक् । शुल्कादानाधिकृते ।
शौल्किकेय पु० शुल्किकः देशभेदः तत्र भवः ढक् । विषभेदे ।
शौल्विक पु० शुल्वः कांस्यताम्रमयपात्रादि पण्यमस्य ठक् ।
कांस्यकारे (कासारी) जातिभेदे ।
शौवस्तिक त्रि० श्वःपरदिने भवः श्वस्+ठक् तुट् च । भावि-
दिनस्थायिनि पदार्थे ।
शौष्कल पु० शुष्कलं शुष्कमांसं पण्यमस्य अण् । शुष्कमांस-
विक्रेतरि । तद्भक्ष्यमस्य अण् । शुष्कमांसभक्षके त्रि० ।
श्चुत क्षरणे भ्वा०पर०अक०सेट् । श्चोतति अश्चुतत् अश्चोतीत्
श्च्युत क्षरणे भ्वा पर अक० सेचने सक०सेट् । श्च्योतति अश्चु-
तत् अश्च्योतीत् ।
श्च्योत पु० श्च्युत-घञ् । समन्तात् सेचने ।
श्मन् न० शेते शी-मनिन् डिच्च । मुखे, शवे, षड्नोऽपत्र ।
श्मशान न० श्मानः शवाः शेरतेऽत्र शी-आनच् डिच्च ।
'श्मन् शब्देन शवः प्रोक्तः शानं तत्स्थानमुच्यते' इति
निरुक्ते । शवदाहस्थाने ।
श्मशानकाली स्त्री० श्मशानस्था काली । कालिकाभेदे ।
श्मशानवासिन् पु० श्मशाने वसति वस-णिनि । महादेवे
वटुकभैरवे च । श्मशानवासकर्त्तरि चण्डालादौ त्रि० ।
श्मश्रु न० श्म मुखं श्रूयते आश्रयतेऽनेन श्रु-डु । पुरुषमुखस्थे
लोमसङ्घे । [त्रायां षोडशाब्दायां स्त्रियाम् ।
श्मश्रुमुखी स्त्री० श्मश्रु मुखे यस्याः ङीप् । पुरुषलक्षणयु-
श्मश्रुल पु० श्मश्रु विद्यतेऽस्य लच् । श्मश्रुयुक्ते 'श्मश्रुलैर्मुखै-
रिति' रघुः । [क्षुरकर्मकारके ।
श्मश्रुवर्द्धक पु० श्मश्रु वर्द्धयति छिनत्ति वृध-ण्वुल् । नापिते
श्मील निमेषे भ्वा०पर०अक० सेट् । श्मीलति अश्मीलीत् ।
श्यान त्रि० श्यै-क्त । घनीभूतविषयप्राप्ते घनीभूते घनश्यान-
कर्दमा'मिति रघुः ।
श्याम पु० श्यै-मक् । वृद्धदारकवृक्षे, प्रयागतीर्थस्थे वटे, कोकिले,
धुस्तूरे, मेघे, श्यामाके, मरुवके, कृष्णवर्णे, हरिद्वर्णे
च । तद्वति त्रि० । मरिचे, सिन्धुलवणे च न० ।
श्यामक न० श्याम+संज्ञायां कन् । रोहिषतृणे, श्यामाके
(श्यामा) धान्यभेदे पु० । [त्रिदृते च
श्यामकण्ठ पु० श्यामः कण्ठोऽस्य । मयूरे, शिवे, नीलकण्ठ

**श्यामकन्दा** स्त्री० श्यामः कन्दोऽस्याः । अतिविषायाम् ।
**श्यामकाण्डा** स्त्री० श्यामः काण्डोऽस्याः । गण्डदूर्वायाम् ।
**श्यामग्रन्थि** स्त्री० श्यामो ग्रन्थिरस्याः । गण्डदूर्वायाम् ।
**श्यामपत्र** पु० श्यामानि पत्राणि यस्य । तमालवृक्षे ।
**श्यामल** पु० श्यामवर्णं लाति ला-क । पिप्पले कृष्णवर्णयुक्ते त्रि० । चर्म्मकषायां, कटभ्यां, जम्ब्वां, कस्तूर्य्यां च स्त्री० ।
**श्यामलचूडा** स्त्री० श्यामला चूडाऽस्याः । गुञ्जायाम् ।
**श्यामलता** स्त्री० कर्म० । स्वनामख्याते लताभेदे । श्यामलस्य भावः तल् । कृष्णवर्णे, हरिद्वर्णे च ।
**श्यामलिका** स्त्री० श्यामलोवर्णोऽस्त्यस्याः ठन् । नील्यामोषधौ
**श्यामलेक्षु** पु० कर्म० (काजला) इक्षुभेदे ।
**श्यामसुन्दर** पु० श्यामोऽपि सुन्दरः । श्रीकृष्णे 'श्यामसुन्दर ! ते दास' इति भागवतम् ।
**श्यामा** स्त्री० श्यै-मक् । शारिवौषधौ, प्रियङ्गौ, यमुनायां, रात्रौ, कृष्णत्रिवृति, नील्याम्, गुग्गुलौ, सोमलतायां, गुन्द्रायाम्, कृष्णायाम्, अम्बिकायां, गुडूच्यां, कस्तूर्य्याम्, वटपत्र्यां, वन्दायां, नीलपुनर्णवायां, पिप्पल्यां, हरिद्रायां, नीलदूर्वायां, तुलस्यां, पद्मबीजे, गवि, छायायां, शिंशपायां, पक्षिभेदे (श्यामा) स्त्रीनाले 'शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कीर्त्तितेत्युक्तलक्षणे स्त्रीविशेषे च ।
**श्यामाक** पु० श्याम इव इवार्थे कन् । (श्यामा) धान्यभेदे ।
**श्यामाङ्ग** पु० श्यामं हरिद्वर्णमङ्गमस्य । बुधग्रहे, कृष्णदेहे त्रि० स्त्रियां ङीप् 'श्यामाङ्गी विगताम्बरा'मिति तन्त्रम् ।
**श्यामाम्ली** स्त्री० कर्म० । नीलाम्लीक्षुपे ।
**श्याल** पु० श्यै कालन् । पत्नीभ्रातरि स्वार्थे ठक् । श्यालिकोऽप्यत्र
**श्यालिका** स्त्री० श्यै-कालन् सञ्ज्ञायां कन् । अत इत्वम् । पत्नीभगिन्याम् ।
**श्याव** पु० श्यै-वन् । कृष्णपीतमिश्रवर्णे । तद्वति त्रि० ।
**श्यावदत्** त्रि० श्यावा दन्तो यस्य दतादेशः । श्यामवर्णदन्तयुक्ते
**श्यावदन्त** पु० कर्म० । स्वभावतः कृष्णवर्णयुक्ते दन्ते, द्व० कप् । तद्युक्ते त्रि० 'सुरापः श्यावदन्तक' इति स्मृतिः ।
**श्येत** पु० श्यै-इतन् । शुक्लवर्णे तद्वति त्रि० स्त्रियां ङीप् तस्य नश्च । श्येनी ।
**श्येन** पु० श्यै-इनन् । पक्षिभेदे (बाज) पाण्डुरवर्णे च तद्वति त्रि०
**श्येनघण्टा** स्त्री० श्येना घण्टेव । दन्तीवृक्षे ।
**श्यै** गतौ भ्वा० आ० सक० अनिट् । श्यायते अश्यास्त ।
**श्येनम्पाता** स्त्री० श्येनस्य पातो यत्र अलुक्समा० । मृगयायाम्
**श्यो(शो)नाक** पु० श्यै-ना(ओ)क । (शोणा) क्षुपभेदे ।
**श्रक** सर्पणे भ्वा० आ० सक० सेट् इदित् । श्रङ्कते अश्रङ्किष्ट ।
**श्रग** गतौ भ्वा० पर० सक० सेट् इदित् । श्रङ्गति अश्रङ्गीत् ।
**श्रण** दाने भ्वा० पर० सक० सेट् । श्रणति अश्राणीत् अश्रणीत् घटादि० श्रणयति ।
**श्रण** दाने चु० उ० सक० सेट् । श्राणयति ते अशिश्रणत् त ।
**श्रत्** अव्य० श्री-क्विप् । श्रद्धायाम् । [अशिश्रथत् त ।
**श्रथ** यत्ने अक० प्रतिहर्षे सक० चु० उभ० सेट् । श्राथयति ते
**श्रथ** दौर्बल्ये अ० चु० उभ० अक० सेट् । श्रथयति ते अशश्रथत् त
**श्रथ** बधे भ्वा० पर० सक० सेट् । श्रथति अश्रथीत् अश्राथीत् ।
**श्रथ** बन्धे मोक्षे बधे च वा चु० उभ० पक्षे भ्वा० पर० सक० सेट् । श्राथयति ते श्रथति अशिश्रथत् त अश्रथीत्-अश्राथीत् ।
**श्रथ** शैथिल्ये अक० तत्करणे सक० भ्वा० आ० सेट् इदित् । श्रन्थते अश्रन्थिष्ट ।
**श्रथन** न० श्रथ-ल्युट् । बधे यत्ने प्रतिहर्षे च ।
**श्रद्धा** स्त्री श्रत्-धा अङ् । आदरे गुरुवेदान्तवाक्यादिषु विश्वासे, स्पृहायां, शुद्धौ, चित्तप्रसादे प्रत्ययो 'धर्म्मकार्य्येषु सा श्रद्धेत्यभिधीयते' इति स्मृत्युक्ते धर्म्मकार्य्येषु प्रत्यये च । [त्रि०
**श्रद्धालु** स्त्री० श्रद्धा+आलुच् । स्पृहावत्यां स्त्रियाम् श्रद्धायुक्ते
**श्रन्थ** ग्रन्थने बधे च वा चु० उ० पक्षे भ्वा० प० सक० सेट् । श्रन्थयति-ते श्रन्थति अशश्रन्थत् त अश्रन्थीत् ।
**श्रन्थ** मोचने प्रतिहर्षे च क्र्या० प० सक० सेट् । श्रथ्नाति अश्रन्थीत्
**श्रन्थन** न० श्रन्थ-ल्युट् । ग्रन्थने ।
**श्रपित** त्रि० पु० श्रा क्त-णिच्-पुक् ह्रस्वश्च । पक्वे ।
**श्रम** तपसि, आयासे खेदे च अक० भ्वा० शम० दि० प० सेट् क्त्वावेट् । श्राम्यति अश्रमत् अश्रमीत् । श्रान्त्वा श्रमित्वा । [अभ्यासे च
**श्रम** पु० श्रम-घञ् न वृद्धिः । तपसि, खेदे, आयासे, शस्त्रा-
**श्रमण** पु० श्रम-युच् । यतिभेदे । भिक्षाजीविनि त्रि० । जटामांस्यां, मुण्डीर्य्यां, शरीरभेदे, सुदर्शनायां स्त्रियां च स्त्री०
**श्रमिन्** त्रि० श्रम-इनि । श्रमयुक्ते ।
**श्रम्भ** प्रमादे भ्वा० आ० अक० सेट् । श्रम्भते अश्रम्भिष्ट ।
**श्रय** पु० श्रि-अच् । आश्रये । ल्युट् । तत्रैव न० ।
**श्रव** पु० शृणोत्यनेन श्रु-अप् । कर्णे, श्रुतौ च ।
**श्रवण** न० शृणोत्यनेन श्रु-ल्युट् । कर्णे शब्दग्राहकेन्द्रियभेदे भावे ल्युट् । श्रुतौ । अश्विन्यादिषु द्वाविंशे नक्षत्रे पुंस्त्री० क्लीवत्वमपि 'श्रवणर्क्षपाते श्रवणं यदि स्यादिति' श्रुतिः । मुण्डीरिकावृक्षे स्त्री० ।
**श्रवणद्वादशी** स्त्री० श्रवणेन युक्ता द्वादशी शाक० । 'भाद्रे

भाद्रपदे शुक्ले द्वादशी श्रवणान्विते'त्युक्तायां भाद्रशुक्लद्वादश्याम् । [रूपम् । श्रवणोद्भवे ।

श्रवणाशीर्षिका स्त्री० श्रवणमिव शीर्षमस्याः कन् अत

श्रविष्ठा स्त्री० श्रूयते श्रु अप् श्रवः प्रशस्तिरस्त्यस्याः मतुप् अतिशयेन श्रववती इष्ठन् मतुपो लुक् । धनिष्ठानक्षत्रे ।

श्रविष्ठाज पु० श्रविष्ठानक्षत्रे जायते जन ड । बुधग्रहे ।

श्रवस् न० श्रूयतेऽनेन श्रु-असि । कर्णे । कर्म्मणि असि । कीर्त्तौ ।

श्रा विक्लृत्तौ अदा० प० अनिट् । श्राति अश्रासीत् । [श्रपयति

श्रा पाके अदा० प० सक० अनिट् घटा० । श्राति अश्रासीत्

श्राण त्रि० श्रा-क्त । पक्वे । यवाग्वां स्त्री० ।

श्राद्ध न० श्रद्धा-इदमस्त्वेनास्त्यस्य अण् । 'श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते' इत्युक्ते पित्रादिभ्यः श्रद्धया देये द्रव्ये स्वार्थे अण् । श्रद्धायुक्ते त्रि० । [भेदे च ।

श्राद्धदेव पु० श्राद्धादिदेवो वा पितृणां देव शाक० । यमे, मनु

श्राद्धदेवता स्त्री० श्राद्धं देवता अस्य द्रव्यस्योद्देश्या । 'पितरः श्राद्धदेवताः' इत्युक्तेषु पितृषु ।

श्राद्धशाक न० श्राद्धयोग्यं शाकम् । कालशाके ।

श्राद्धिक त्रि० श्राद्धे देयं श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य वा ठन् । श्राद्धदेये भक्ष्ये, श्राद्धदेयद्रव्यभोक्तरि च ।

श्राद्धिन् त्रि० श्राद्धं तद्द्रव्यं भक्ष्यत्वेनास्त्यस्य इनि । श्राद्धदेयान्नभोक्तरि ।

श्रान्त त्रि० श्रम क्त । श्रमयुक्ते, शान्ते, जितेन्द्रिये च ।

श्रान्तसंवाह न० श्रान्तस्य श्रमस्य संवाहः दूरीकरणम् । पादाङ्गमर्दनादिना श्रमनिवारणे ।

श्राम मन्त्रणे अद० चु० उभ० सक० सेट् । श्रामयति ते अशश्रामत् त

श्रावण पु० श्रवणेन युक्ता पौर्णमासी श्रावणी साऽस्मिन् मासे अण् । वैशाखादिषु चतुर्थे चान्द्रे मासे उपचारात् कर्कटस्थरविके सौरमासे, पाषण्डे च श्रवणेन कर्णेन निर्वृत्तः अण् । कर्णग्राह्ये शब्दभेदे । श्रवणनक्षत्रेण युक्ता पौर्णमासी अण् । चान्द्रश्रावणमासीयपौर्णमास्यां स्त्री० ङीप् । (मुण्डरि) तृणभेदे च ।

श्रावणिक पु० श्रावणी श्रवणनक्षत्रयुक्ता पूर्णिमाऽस्त्यस्मिन् मासे ठन् । चान्द्रश्रावणमासे ।

श्रावस्ती स्त्री० श्रु बाहु० ह० ङीप् । धर्म्मपत्तनाख्ये नगरीभेदे

श्रि सेवने भ्वा० उ० सक० सेट् । श्रयति ते अशिश्रियत् त ।

श्रित त्रि० श्रि क्त । सेविते, आश्रिते च ।

श्रिष दाहे भ्वा० पर० सक० सेट् इदित् । श्रेषति अश्रेषीत् ।

श्री पाके क्र्या० उ० सक० अनिट् । श्रीणाति श्रीणीते अश्रैषीत्

श्री स्त्री० श्रि क्विप् नि० । लक्ष्म्यां, लवङ्गे, शोभायां, रचनायां, वेशरचनायां, सरलद्रवे, धर्म्मार्थकामेषु सम्पत्तौ, प्रकारे, उपकरणे, बुद्धौ, विभूतौ, अधिकारे, प्रभायां कीर्त्तौ, वृद्धौ सिद्धौ, कमले, बिल्ववृक्षे वृद्धिनामौषधौ, 'देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधिदेवताम् । सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेदि'त्युक्तेषु देवादीनां नामोच्चारणीयोपाधिभेदे च । रागभेदे पु० ।

श्रीकण्ठ पु० श्रीः शोभा कण्ठेऽस्य शिवे, शैवस्य कण्ठस्थितविषेण शोभाधिक्यात्तस्य । हस्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च । [कर्कन्धाम् ।

श्रीकन्दा स्त्री० श्रीः शोभा तया युक्तः कन्दोऽस्याः । वन्ध्या-

श्रीकर न० श्रियं शोभां करोति कृ-अच् । रक्तोत्पले, विष्णौ, दायनिबन्धकारके पण्डितभेदे च । शोभाकारके त्रि० ।

श्रीकान्त पु० ६त० विष्णौ । श्रीनाथश्रीपत्यादयोऽप्यत्र ।

श्रीखण्ड न० श्रियः शोभायाः खण्ड इव यत्र । चन्दने ।

श्रीगर्भ पु० श्रीः गर्भेऽस्य । विष्णौ, खड्गे च 'श्रीगर्भो विजयश्चैवे'ति खड्गनामाष्टकम् ।

श्रीग्रह पु० श्रियः ग्रह इव यत्र । पक्षिणां पानीयशालायाम्

श्रीघन पु० श्रिया युक्तः घनः । बुद्धभेदे । दध्नि न० ।

श्रीचक्र न० श्रिया चक्रं यन्त्रभेदः । 'बिन्दुत्रिकोणवसुकोणदशारयुग्ममन्वस्रनागदलसङ्गतषोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः' इति तन्त्रोक्ते त्रिपुरसुन्दरीपूजाङ्गे यन्त्रभेदे ।

श्रीज पु० श्रियो जायते जन-ड । कामदेवे । श्रीनन्दनादयोऽप्यत्र

श्रीताल पु० श्रीयुक्तस्तालः । तालसदृशे वृक्षभेदे ।

श्रीद पु० श्रियं धनं ददाति दा-क । कुबेरे । धनदातरि त्रि० ।

श्रीधर पु० श्रियं धरति धृ अच् । विष्णौ, 'अतिधूम्रं द्विचक्रञ्च वनमालाविभूषितम् । श्रीधरं विदुः' इत्युक्ते शालग्राममूर्त्तिभेदे न० ।

श्रीनिकेतन पु० श्रियं निकेतयति निवासं वासयति नि+कित-णिच् ल्यु । विष्णौ । ६त० । श्रीवासे न० ।

श्रीनिवास पु० निवसत्यस्मिन् नि+वस घञ् ६त० । विष्णौ

श्रीपथ पु० श्रीयुक्तः पन्थाः । राजपथे ।

श्रीपर्ण न० श्रीर्लक्ष्मीः पर्णे दलेऽस्य । पद्मे । श्रीयुक्तं पर्णमस्य अग्निमन्थवृक्षे पु० । [इत्वम् । कट्फलवृक्षे ।

श्रीपर्णिका स्त्री० श्रीयुक्तं पर्णमस्याः सत्यायां कन् अत

श्रीपर्णी स्त्री० श्रीयुक्तानि पर्णान्यस्याः ङीप् । गाम्भारीवृक्षे, कट्फलवृक्षे, शाल्मलीवृक्षे अग्निमन्थवृक्षे च ।

श्रीपिष्ट पु० श्रियै शोभायै पिष्यते पिष-क्त । सरलद्रवरसे ।
श्रीपुत्र पु० ६त० कामदेवे श्रियः पुत्रो भ्राता सहजत्वात् । अश्वे, उच्चैःश्रवसि च ।
श्रीपुष्प न० श्रीयुक्तं पुष्पम् । लवङ्गे । पद्मकाष्ठे च ।
श्रीफल पु० श्रीयुक्तं फलमस्य । बिल्ववृक्षे राजादन्यां स्त्री ।
श्रीभद्रा स्त्री० श्रीयुक्तं भद्रमस्याः । भद्रमुस्तके ।
श्रीभागवत न० श्रीयुक्तं भागवतम् । अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे ।
श्रीभ्रातृ पु० श्रियः लक्ष्म्या भ्राता अनुजत्वात् । अश्वे, चन्द्रे च
श्रीमत् पु० श्रीरस्त्यस्य मतुप् । तिलकवृक्षे, अश्वत्थवृक्षे, विष्णौ, शिवे, कुक्कुटे च । शोभायुक्ते त्रि० स्त्रियां ङीप् सा च राधिकायाम् । [ड । धूम्रपत्रायां लतायाम् ।
श्रीमलापहा स्त्री० श्रिया शोभया मलमपहन्ति अप+हन-
श्रीमूर्त्ति स्त्री० श्रीपूर्व्वकथनयोग्या मूर्त्तिः । देवताप्रतिमायाम् ।
श्रीरङ्गपत्तन न० श्रिया रङ्गस्य पत्तनमिव । दक्षिणस्थदेशभेदे
श्रीरस पु० श्रियै रसोऽस्य । श्रीवेष्टे गन्धद्रव्ये ।
श्रीराम पु० श्रीशब्दयुक्तो रामः । दशरथात्मजे नृपभेदे ।
श्रील त्रि० श्री+अस्त्यर्थे लच् । शोभायुक्ते सम्पदादियुक्ते च ।
श्रीलता स्त्री० श्रीयुक्ता लता । महाज्योतिष्मत्यां लतायाम् ।
श्रीवत्स पु० वदति महत्त्वं वद-स श्रीयुक्तो वत्सः । महत्त्वलक्षणश्वेतरोमावर्त्तविशेषे । स अस्त्यस्य अच् । विष्णौ ।
श्रीवत्सक पु० श्रीवत्सः चिह्नभेदः तेन कायति कै-क । हृदयस्थश्वेतरक्ताकारलोमयुक्ते अश्वभेदे ।
श्रीवत्सभृत् पु० श्रीवत्सं बिभर्त्ति भृ-क्विप् । विष्णौ ।
श्रीवत्सलाञ्छन पु० श्रीवत्सो लाञ्छनं यस्य । विष्णौ । श्रीवत्साङ्कादयोऽप्यत्र । [वराहावतारे ।
श्रीवराह पु० श्रिया युक्तो वराहः विष्णोर्दशस्ववतारेषु
श्रीवाटी स्त्री० श्रिया वाटीव । नागवल्लीभेदे ।
श्रीवारक पु० श्रियं वारयति कामयते ण्वुल् । सितावरके ।
श्रीवास पु० श्रियै वासः सौरभमस्य । सरलद्रवरसे (टारपिन्)
श्रीवासस् न० श्रियै वासयति वस-णिच् असि । सरलद्रवरसे
श्रीविद्या स्त्री० श्रियै त्रिवर्गाय विद्या । त्रिपुरासुन्दर्याम् ।
श्रीवृक्ष पु० श्रियः शोभायाः वृक्ष इव । अश्वस्य हृदयस्थे श्वेतरोमावर्त्तभेदे । [(तारपिन) ।
श्रीवेष्ट पु० श्रियै वेष्ट्यतेऽसौ वेष्ट-घञ् । सरलद्रवनिर्यासे
श्रीश पु० ६त० । विष्णौ ।
श्रीसहोदर पु० ६त० । चन्द्रे, उच्चैःश्रवसि अश्वे च ।
श्रीहस्तिनी स्त्री० श्रीयुक्ता हस्तिनी । (हातिशुंडा) वृक्षभेदे

श्रु गतौ भ्वा० पर० सक० अनिट् । श्रवति अश्रौषीत् ।
श्रु श्रवणे स्वा० पर० सक० अनिट् । शृणोति अश्रौषीत् ।
श्रु(स्रु)घ्निका स्त्री० श्रु(स्रु)घ्नः देशभेदः कारणत्वेनास्त्यस्य ठन् । सर्ज्जिकाक्षारे ।
श्रुत न० श्रूयते श्रु-क्त । शास्त्रे, वस्तुज्ञाने च 'श्रुतान्वित' इति भट्टिः । श्रवणेन गृहीते, अवधृते च त्रि० ।
श्रुतकीर्त्ति स्त्री० । कुशध्वजकन्यायां शत्रुघ्नपत्न्याम् । श्रुता विख्याता कीर्त्तिरस्य । विख्यातयशसि त्रि० ।
श्रुतदेवी स्त्री० श्रुतस्य शास्त्रस्य देवी । सरस्वत्याम् ।
श्रुतबोध पु० श्रुत-मात्रं बोधयति बुध-णिच्-अच् । कालिदासकृते छन्दोग्रन्थभेदे ।
श्रुतश्रवस् पु० श्रुतं श्रवो यशोऽस्य । शिशुपालपितरि 'निर्व्वर्त्तितारिः क्रियया स श्रुतश्रवसः सुतः' इति माघः ।
श्रुति स्त्री० श्रु-क्तिन् । कर्णे, श्रवणेन्द्रियजन्ये ज्ञाने, वेदे च । अङ्कशास्त्रोक्ते त्रिभुजक्षेत्रादौ भुजकोट्योः संयुज्यमानरेखाभेदे च । [कठोरशब्दविशेषरूपे काव्यदोषभेदे ।
श्रुतिकटु पु० श्रुतौ श्रवणे कटुः कठोरः । अलङ्कारोक्ते
श्रुतिजीविका स्त्री० श्रुतिं जीवयति मूलतयानुसरति जीव-ल्युट् । स्मृतिशास्त्रे । [श्रवणमात्रेण धारणायुक्ते ।
श्रुतिधर त्रि० श्रुत्या श्रवणमात्रेण धरति धारयति धृ-अच् ।
श्रुतिमूल न० श्रुतिरेव मूलं धर्मप्रामाण्ये कारणम् । वेदरूपे धर्मबोधनप्रमाणे ६ब० । यज्ञादौ, वेदशास्त्रबोधिते धर्मादौ च ६त० । कर्णमूले ।
श्रुतिवर्ज्जित त्रि० श्रुत्या वेदाध्ययनेन कर्णेन वा वर्ज्जितः वृज-क्त । वेदपाठहीने बधिरे च । [भेदे ।
श्रुतिवेध पु० श्रुतेः कर्णस्य वेधो यत्र । कर्णवेधाख्ये संस्कार
श्रुतिस्फोटा स्त्री० श्रुताविव पत्रे स्फोटो यस्याः । कर्णस्फोटालतायाम् । [द्वारोक्ते शब्दालङ्कारभेदे ।
श्रुत्यनुप्रास पु० श्रूयते इति श्रुतिः शब्दस्तस्यानुप्रासः । अल-
श्रुत्युक्त त्रि० श्रुतौ वेदे उक्त विहित० । वेदविहित धर्मादौ ।
श्रु(स्रु)वा स्त्री० श्रु(स्रु) क । स्रुचायां यज्ञपात्रभेदे । [वृक्षे ।
श्रु(स्रु)वावृक्ष पु० श्रु(स्रु)-वार्थो वृक्षः । (बइचि) विकङ्कत
श्रेढी स्त्री० श्रेण्यै राशीकरणाय ढौकते ढौक ड पृ० गौ० ङीष् । भिन्नजातीयद्रव्याणां मिश्रकरणाय अङ्कशास्त्रोक्ते गणनाप्रकारभेदे ।
श्रेढीव्यवहार पु० श्रेढ्या व्यवहारः । श्रेढीगणनार्थे लीलावत्युक्ते उपायभेदे ।
श्रेणि(णी) स्त्री० श्रि-नि वा ङीप् । छिद्ररहितायां पङ्क्तौ ।

श्रेयस् न० अतिशयेन प्रशस्तम् ईयसुन् श्रादेशः । धर्मे, मोक्षे, शुभे च । अतिप्रशस्ते त्रि० स्त्रियां ङीप् । सा च हरीतक्यां, पाठायां, गजपिप्पल्यां, बालायाञ्च ।

श्रेष्ठ पु० अतिशयेन प्रशस्यः इष्ठन् श्रादेशः । कुवेरे, नृपे, विप्रे, विष्णौ च । गोदुग्धे न० अत्यन्तप्रशस्ते त्रि० । स्थलपद्मिन्यां, मेदायाञ्च स्त्री० ।

श्रेष्ठकाष्ठ पु० श्रेष्ठं काष्ठमस्य । शाकवृक्षे (सेगुन) ।

श्रेष्ठाम्ल न० श्रेष्ठमम्लमस्य । वृक्षाम्ले ।

श्रेष्ठिन् पु० श्रेष्ठं धनादिकमस्य इनि । शिल्पिवणिजां श्रेष्ठे 'अस्ति श्रेष्ठिचत्वरे प्रतिवसतीति मृच्छकटिकटीका ।

श्रै स्वेदे भ्वा० प०अक०अनिट् । श्रायति अश्रासीत् । णिजन्तो घटादि० श्रपयति ।

श्रोण पु० श्रोण-अच् । पङ्गौ । काञ्जिके स्त्री० । [अश्रोणीत् ।

श्रोण संघाते भ्वा०प०अक०सेट् चङि न ह्रस्वः । श्रोणति

श्रोणि(णी) स्त्री० श्रोण-इन् वा ङीप् । कट्याम् पथि च ।

श्रोणिफलक न० श्रोणि फलकमिव । प्रशस्तकटौ इत० । कटिपार्श्वे । [नितम्बस्थले ।

श्रोणिसूत्र न० श्रोणौ स्थितं सूत्रम् । श्रोणिस्थे खड्गादि

श्रोतस् न० श्रु-असुन् तुट् च । कर्णे, नदीवेगे, इन्द्रिये च ।

श्रोत्र न० श्रूयतेऽनेन श्रु ष्ट्रन् । शब्दग्रहणसाधने कर्णरूपे इन्द्रिये

श्रोत्रिय पु० छन्दो वेदमधीते वेत्ति वा छन्दस्+घञ् । वेदाध्ययनानुरते, 'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवि दि'त्युक्ते विप्रे च ।

श्रौत त्रि० श्रुतौ विहितमण् । वेदविहिते धर्मादौ 'श्रौतं कर्म स्वयं कुर्यादि'ति स्मृतिः । गार्हपत्याहवनीयदक्षिणाग्निषु पु०

श्रौत न० श्रोत्र-स्वार्थे अण् । कर्णे । श्रोत्रियस्य भावः कर्म वा अण् । वैदिकस्य भावे 'श्रौत्राङ्गलोपश्चेति' सिद्धान्तकौ०

श्रौषट् अव्य० श्रु डौषटि । यज्ञादौ हविर्दाने ।

श्लक सर्पणे भ्वा०आ०सक०सेट् इदित् । श्लङ्कते अश्लङ्किष्ट

श्लक्ष्ण त्रि० श्लिष-क्स्न नि० । अल्पे, चिक्कणे, सौक्ष्म्ये च ।

श्लक्ष्णत्वच् पु० श्लक्ष्णा त्वगस्य । पाषाणकवृक्षे ।

श्लग गतौ भ्वा०प०सक०सेट् इदित् । श्लङ्गति अश्लङ्गीत् ।

श्लथ दौर्बल्ये चुरा०उभ०अक०सेट् । श्लथयति ते अशश्लथत् त

श्लथ पु० श्लथ-अच् । शिथिलदोषे, शिथिले, दुर्बले च ।

श्लाखृ व्याप्तौ भ्वा०प०सक०सेट् चङि न ह्रस्वः । श्लाखति अश्लाखीत् । [श्लाघते अश्लाघिष्ट ।

श्लाघ आत्मगुणाविष्करणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

श्लाघा स्त्री० श्लाघ-अ । प्रशंसायां, निजगुणाविष्करणे परिचर्यायाम्, अभिलाषे च । [चाटौ

श्लाघ्य त्रि० श्लाघ् ण्यत् । प्रशस्ते 'श्लाघ्यस्तनुमल्लुरावयोरिति

श्लिष दाहे भ्वा०प०सक०सेट् इरा वेट् । श्लेषति अश्लेषीत् ।

श्लिष आलिङ्गने संसर्गे च सक०दि०अनिट् । श्लिष्यति अश्लिषत् आलिङ्गने तु अश्लिक्षत् ।

श्लिष श्लेषे चु० उ० सक०सेट् । श्लेषयति ते अशिश्लेषत् त । भिन्नार्थकेऽभिन्नशब्दे 'श्लेषोऽपि न श्लेषकवेरिति' नैषधम् ।

श्लिष्ट त्रि० श्लिष क्त । आलिङ्गिते, संसृष्टे, श्लेषरूपशब्दालङ्कारयुक्ते शब्दे च । [भिन्ने तद्रोगयुक्ते त्रि० ।

श्लीपद न० श्रीयुक्तं वृद्धियुक्तं पदमस्मात् पृ० । (गोद) रोग-

श्लीपदप्रभव पु० श्लीपदाय रोगाय प्रभवति प्र+भू-अच् । आम्रवृक्षे । [जीवद्रक्षे ।

श्लीपदापह पु० श्लीपदं रोगमपहन्ति अप+हन-ड । पुत्र

श्लील त्रि० श्रीरस्त्यस्य लच् पृ० रस्य लः । शोभायुक्ते तद्विपरीतोऽपि अश्लीलः ।

श्लेष पु० श्लिष-घञ् । संसर्गे, दाहे, आलिङ्गने, शब्दालङ्कारभेदे च

श्लेष्मघ्ना स्त्री० श्लेष्माणं हन्ति हन-क टाप् । मल्लिकायां, केतक्याञ्च । ज्योतिष्मत्यां ङीप् ।

श्लेष्मण पु० श्लेष्माऽस्त्यस्य न । कफविशिष्टे ।

श्लेष्मन् पु० श्लिष-मनिन् । कफे ।

श्लेष्मल त्रि० श्लेष्म+अस्त्यर्थे लच् । कफयुक्ते (बहुयार)वृक्षे पु०

श्लेष्मघ्न पु० श्लेष्माणं हन्ति । कट्फलवृक्षे ।

श्लेष्मात पु० श्लेष्मणे अतति अत-अच् । श्लेष्मातकवृक्षे ।

श्लेष्मातक पु० श्लेष्मणा सेवनजनितकफेन अतति अत-ण्वुल् (बहुयार) वृक्षभेदे ।

श्लेष्मान्तक पु० श्लेष्मणा सेवनजकफेन अन्तक इव नाशकत्वात् (बहुयार) वृक्षभेदे । [श्लोकते अश्लोकिष्ट ।

श्लोक वर्णने संघाते च भ्वा०आ०सक०सेट् चङि न ह्रस्वः ।

श्लोक पु० श्लोक-घञ् । पद्यात्मके अनुष्टुभे छन्दोभेदे, यशसि च । [अश्लोणीत् ।

श्लोण संघाते भ्वा०प०अक० सेट् चङि न ह्रस्वः । श्लोणति

श्वःश्रेयस न० श्वः परदिने भाविकाले श्रेयो यस्मात् अच् समा० । मङ्गले, शुभे परमात्मनि च । तद्वति त्रि० ।

श्वक्क वर्णने भ्वा० आ०सक०सेट् इदित् । श्वङ्कते अश्वङ्किष्ट ।

श्वच गतौ भ्वा०आ०सक०सेट् । श्वचते अश्वचिष्ट इदित्पक्षे श्वञ्चते ।

श्वठ गतौ संस्कारे च चु० उ० सक० सेट् । श्वाठयति ते अशिश्वठत् त । इदित्पक्षे श्वण्ठयति ।

श्वठ दुर्वचने अद०चु०उभ०सक०सेट् । श्वठयति ते अशश्वठत् त
श्वदंष्ट्रक पु० शुनो दंष्ट्रेव कण्टकोऽस्य कन् । गोक्षुरे क्षुपे ।
श्वदंष्ट्रा स्त्री० शुनोदंष्ट्रेव कण्टकाढ्यत्वात् । गोक्षुरे क्षुपे ।
श्वधूर्त्त पु० श्वेव शुनां वञ्चनार्थं वा धूर्त्तः । शृगाले ।
श्वन् पु० श्वि-कनिन् नि० । कुक्कुरे तज्जातिस्त्रियां ङीप् शुनी ।
श्वनिश न० स्त्री० शुनां कुक्कुराणां निशा वा ह्रस्वः । कुक्कुरमादकरात्रौ ।
श्वपच पु० श्वानः पच्यन्ते यैः भोजनाय पच-घञर्थे क । [चण्डाले ।
श्वपाक पु० श्वानं पचति कर्त्तरि घञ् । चण्डाले ।
श्वफल पु० शुनः प्रियं फलमस्य । वीजपूरवृक्षे ।
श्वफल्क पु० । वृष्णिवंश्ये अक्रूरपितरि नृपभेदे ।
श्वभीरु पु० श्वभ्यो भीरुः । शृगाले । [ते अशश्वभ्रत् त ।
श्वभ्र गतौ छिद्रकरणे सक०दो स्यो अक० चु०उ०सेट् । श्वभ्रयति
श्वभ्र न० श्वभ्र-अच् । छिद्रे ।
श्वयथु पु० श्वि-अथुच् । शोथे ।
श्वल वेगे भ्वा०पर०अक० सेट् । श्वलति अश्वालीत् ।
श्वल्क भाषणे चु०उ०सक०सेट् । श्वल्कयति ते अशश्वल्कत् त ।
श्वल्ल वेगे भ्वा०प०अक०सेट् । श्वल्लति अश्वल्लीत् ।
श्ववृत्ति पु० शुन इव पराधीना वृत्तिः । दास्ये 'न श्ववृत्त्या कदाचने'ति स्मृतिः ।
श्वशुर पु० शु आशु अश्नुते आशु+अश-उरच् पृ० । पत्युः पितरि, भार्य्यायाः पितरि च ।
श्वशुर्य्य पु० श्वशुरस्यापत्यम् यत् । देवरे, श्याले च ।
श्वश्रू स्त्री० श्वशुरस्य पत्नी ऊङ् उकाराकारलोपश्च । श्वशुरभार्य्यायाम् ।
श्वस् अव्य० आगामि अह्न पृ० नि० । आगामिनि दिवसे ।
श्वस जीवने अदा०जक्षा०प०अक०सेट् । श्वसिति अश्वसीत् ।
श्वस अव्य० अदा०प०अक० वैदिकयोयम् । श्वसिति अश्वसीत् ।
श्वसन पु० श्वसित्यनेन श्वस-ल्युट् । वायौ, मदनवृक्षे च । भावे ल्युट् । निश्वासे न० ।
श्वसनेश्वर पु० श्वसनो वायुरीश्वरोऽस्य । अर्ज्जुनवृक्षे ।
श्वसित न० श्वस-क्त । निश्वासे, मुखनासिकाभ्यां वहिर्गमनयोग्ये हृद्वस्थवायौ ।
श्वसुन पु० श्वस-उनन् । (कुकुरमोक्षा) वृक्षे । [वस्तनि ।
श्वस्तन त्रि० श्वोभवः श्वस्+ट्युल् तुट् च । भाविदिनस्थायि-
श्वस्त्य त्रि० श्वोभवः श्वस्+त्यप् । भाविदिनस्थायिवस्तुनि ।
श्वागणिक पु० श्वगणेन चरति ठञ् नि० दो० । कुक्कुरादिना मृगयाकर्त्तरि व्याधे ।

श्वादन्त त्रि० शुन इव दन्तोऽस्य दी० । कुक्कुरतुल्यदशने ।
श्वान पु० श्वैव अण् । कुक्कुरे तज्जातिस्त्रियां ङीप् ।
श्वापद पु० शुन इवापदस्मात् अच् । हिंस्रपशौ, व्याघ्रे च ।
श्वाविध् पु० शुना आविध्यते आ-व्यध् क्विप् ३त० । शल्यके । (सजारु) क । श्वाविधोऽप्यत्र पु० ।
श्वास पु० श्वस-घञ् । वायौ, कासरोगभेदे, शिक्षोक्ते वर्णोच्चारणार्थे वाह्यप्रयत्नभेदे च । [प्राणव्यापारे ।
श्वासधारण न० श्वासः प्राणवायुः ध्रियतेऽनेन । प्राणा-
श्वासारि पु० श्वासस्य रोगभेदस्यारिः नाशकत्वात् । पुष्करमूले
श्वि गतौ सक०वृद्धौ अक०भ्वा०प०यजा०सेट् । श्वयति अशिश्वत्-अश्वयीत्-अश्वत् । [अश्वितत् अश्वेतिष्ट ।
श्वित शुक्लतापादने भ्वा०आ०लुङि उ० सक० सेट् । श्वेतते
श्वित्र न० श्वित-रक् । श्वेतकुष्ठभेदे (धवल) । [(विकृती) ।
श्वित्रघ्नी स्त्री० श्वित्रं हन्ति हन-ट ङीप् । पीतपर्ण्याम्
श्वित्रिन् त्रि० श्वित्रमस्त्यस्य इनि । श्वेतकुष्ठयुक्ते ।
श्विद शुक्लतापादने भ्वा० आ० सक०सेट् इदित् । श्विन्दति अश्विन्दीत् ।
श्वेत पु० श्वित-अच् घञ् वा । द्वीपभेदे, पर्व्वतभेदे, कपर्दके, शुक्लपक्षे, शङ्खे, शुभ्राभ्रे, जीरके, शुक्लवर्णे च । तद्वति त्रि० । रौप्ये न० । स्वार्थे कन् । रौप्ये न० । वराटके पु० ।
श्वेतकण्टकारी स्त्री० कर्म० । शुभ्रवर्णकण्टकारिकायाम् ।
श्वेतकन्दा स्त्री०श्वेत० कन्दोऽस्याः । अतिविषायाम् (आतइच)
श्वेतकुञ्जर पु० कर्म० । ऐरावतगजे, श्वेतगजमात्रे च श्वेतगजादयोऽप्यत्र ।
श्वेतकुश पु० कर्म० । शुक्लवर्णे कुशभेदे ।
श्वेतकेतु पु० कर्म० । केतुग्रहभेदे, सामवेदप्रसिद्धे ऋषिभेदे च ।
श्वेतकेश पु० श्वेतः केश इव यस्य । रक्तशिग्रौ । शुक्लवर्णकेशवति वृद्धे त्रि० । कर्म० । शुक्ले केशे पु० ।
श्वेतखदिर पु० कर्म० । शुक्ले खदिरभेदे ।
श्वेतगरुत् पु० श्वेतो गरुदस्य । हंसे । शुक्लपक्षयुक्ते त्रि० ।
श्वेतगुञ्जा स्त्री० कर्म० । शुभ्रगुञ्जायां पु० श्वदन्तोऽप्यत्र ।
श्वेतचिल्ली स्त्री० कर्म० । शाकभेदे, (गाढाचिवद) ।
श्वेतच्छद पु० श्वेत छदः पत्रोऽस्य । हंसे । शुक्लपत्रयुक्ते त्रि० ।
श्वेतजीरक पु० कर्म० । शुक्लजीरके । [शाकभेदे ।
श्वेतटङ्कण न० कर्म० । शुक्लटङ्कणे मातमीनदोतोरमध्ये
श्वेतदूर्व्वा स्त्री० कर्म० । शुक्लदूर्व्वायाम् ।
श्वेतद्वीप पु० कर्म० । वेदव्यासविष्णुधाम्नि, द्वीपभेदे च ।
श्वेतधातु पु० कर्म० । खटिकायाम्, शुक्लवर्णधातुद्रव्ये च ।

श्वेतधामन् पु० श्वेतं धाम यस्य । चन्द्रे, कर्पूरे, समुद्रफेने च श्वेतकरादयोऽप्यत्र ।
श्वेतपत्त्र पु० श्वेतं पत्त्रं पत्त्रोऽस्य । हंसे । शुक्लपत्त्रयुक्ते त्रि०
श्वेतपद्म न० कर्म० । सितकमले ।
श्वेतपर्णास पु० कर्म० । शुभ्रतुलस्याम् ।
श्वेतपाटला स्त्री० कर्म० । शुक्लपाटलावृक्षे (पादापाढल) [त्रिष्टि
श्वेतपिङ्गल पु० देहेन श्वेतः जटया पिङ्गलः वर्णोवर्णनेति ष०
श्वेतपिण्डीतक पु० कर्म० । महापिण्डीतकवृक्षे ।
श्वेतपुष्प पु० श्वेतं पुष्पमस्य । सिन्दुवारवृक्षे । शुक्लवर्णपुष्पयुक्ते त्रि० । कर्म० । शुभ्रे पुष्पे न० । संज्ञायां कन् । शुक्लकरवीरे पु० । नागदन्त्या, घोषातक्यां श्वेतापराजितायां च स्त्री० ।
श्वेतपुष्पिका स्त्री० श्वेतं पुष्पमस्याः कप् अत इत्वम् । महाशणवृक्षे ।
श्वेतभण्डा स्त्री० कर्म० । श्वेतापराजितायाम् ।
श्वेतमन्दार पु० कर्म० । शुक्लमन्दारे । [त्रि०
श्वेतमरिच कर्म० । शोभाञ्जनबीजे शुक्लमरिचे च । [तद्वति
श्वेतरक्त पु० श्वेतो रक्तः वर्णो वर्णेनेति ष० । पाटलवर्णे ।
श्वेतरञ्जन न० श्वेतं रौप्यं रज्यतेऽनेन रञ्ज-ल्युट् । सीसके
श्वेतरथ पु० श्वेतो रथो यस्य । शुक्रग्रहे कर्म० । शुभ्रे रथे ।
श्वेतलोध्र पु० कर्म० । पट्टिकालोध्रे ।
श्वेतवचा स्त्री० श्वेता वचेव । अतिविषायाम् (आतइच) ।
श्वेतवल्कल पु० श्वेतं वल्कलमस्य । उडुम्बरवृक्षे ।
श्वेतवाजिन् पु० श्वेतो वाजी यस्य । चन्द्रे, अर्जुने च । श्वेताश्वादयोऽप्यत्र । [त्रि० ।
श्वेतवासस् पु० श्वेतं वासोऽस्य । संन्यासिभेदे । शुक्लवस्त्रयुक्ते
श्वेतवाह पु० श्वेतेन श्वेताश्वेन उह्यते वह-णिच् । इन्द्रे, अर्जुने, चन्द्रे च ।
श्वेतवाहन पु० श्वेतं वाहनमस्य । चन्द्रे, इन्द्रे, अर्जुने च ।
श्वेतवुह्ना स्त्री० कर्म० । वसुविष्ठायाम् ।
श्वेतवृक्ष पु० कर्म० । वरुणवृक्षे ।
श्वेतवृहती स्त्री० कर्म० । शुक्लवर्णक्षुद्रवृहत्याम् ।
श्वेतशिम्बिका स्त्री० कर्म० । शुक्लशिम्बायाम् ।
श्वेतशिग्रु पु० कर्म० । सितशोभाञ्जने ।
श्वेतशुङ्ग पु० श्वेता शूकाऽस्य । यवे । शुक्लवर्णशूकयुक्ते त्रि०
श्वेतशूरण पु० कर्म० । वन्यशूरणे । [शुक्लभुजगे ।
श्वेतसर्प पु० श्वेत सन् सर्पति सृ-अच् । वरुणवृक्षे । कर्म० ।
श्वेतसर्षप पु० कर्म० । गौरसर्षपे ।
श्वेतसार पु० श्वेत सारोऽस्य । शुक्लखदिरे ।

श्वेतसुरसा स्त्री० कर्म० । शुक्लशेफालिकायाम्
श्वेतस्यन्दा स्त्री० श्वेता सती स्यन्दते स्यन्द-अच् । सितापराजितायाम् ।
श्वेतहय पु० कर्म० उच्चैःश्रवसि, सितवर्णयुक्ते हये च ।
श्वेता स्त्री० श्वित-अच् । वराटिकायाम्, काष्ठपाटलायां, यष्टिन्याम्, अतिविषायाम्, सितापराजितायाम्, शुक्लकण्टकार्य्यां, पाषाणभेदाम्, शुक्लदूर्वायां, वंशरोचनायां, शर्करायां, गिरिमल्लिकायाञ्च ।
श्वेतार्क पु० कर्म० । शुक्लवर्णपुष्पके अर्कवृक्षे । [वरवाके
श्वेतावर पु० श्वेतं श्वेतवर्णमावृणोति आ+वृ-अच् । सिता-
श्वेतेक्षु पु० कर्म० । शुक्ले इक्षौ ।
श्वेतौही स्त्री० श्वेतौहः पत्नी ङीप् । इन्द्राण्याम् शच्याम् ।
श्वैत्य श्वेतस्य भावः ष्यञ् । शुक्लवर्णे ।
श्वोवसीयस न० अतिशयेन वसुः प्रशस्तम् वसीयस् नि परदिने भाविकाले प्रशस्ते मङ्गले । तद्वति त्रि० ।

## ष

ष पु० षो-क ड० पतम् । केशे । गर्भविमोचने, मानवे च सर्वे, श्रेष्ठे, विधे च त्रि० । [अषषीत् । षषति ।
षघ संवरणे भ्वा०पर०सक० सेट् घटा० षिघिन इदित् । षघति
षघ हिंसायां स्वा०पर०सक० सेट् षिघि न इदित् । षघ्नोति अषघीत् ।
षच सेचने भ्वा०आ०सक०सेट् । षचते असचिष्ट ।
षच संबन्धे भ्वा०पर०सक०सेट् । षचति । असचीत्-असाचीत्
षट विभाजने भ्वा०पर०सक०सेट् । षटति अषटीत् अषाटीत्
षट्कर्मन् न० षट्प्रकारं कर्म । तन्त्रोक्तेषु शान्तिवशीकरणस्तम्भनविद्वेषोच्चाटनमारणरूपेषु षट्सु प्रयोगभेदेषु यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपेषु षट्सु विप्रकर्मसु च । षट् कर्माणि यस्य । यागादियुक्ते विप्रे पु० ।
षट्कोण न० षट् कोणा यस्य । वज्रे, तन्त्रोक्ते यन्त्रभेदे, ज्योतिषोक्ते लग्नतः षष्ठस्थाने च ।
षट्चक्र न० चक्रां चक्राणां समाहारः पात्रादि० । तन्त्रोक्तेषु देहस्थेषु मूलाधारस्वाधिष्ठानमणिपूरानाहतविशुद्धाज्ञाख्येषु षट्सु पद्मेषु । तदधिकृत्य कृतग्रन्थः अण् तस्य लुक् । षट्चक्रप्रतिपादकग्रन्थभेदे । [षड्भिरधिके तत्सङ्ख्यान्विते च ।
षट्चत्वारिंशत् स्त्री० षड्धिका चत्वारिंशत् । (छेचल्लिश)
षट्चरण पु० षट् चरणा यस्य । भ्रमरे, षट्पदादयोऽप्यत्र ।
षट्ट निशाने बले च चुरा० हिंसायां दाने च सक० चुरा० उभ०

सेट्। षट्यति ते असषट्त् त।

**षट्तिलिन्** पु॰ षट् तिला तिलोद्वर्त्तनादय कर्मा यस्य। 'तिलो द्वर्त्ती तिलस्नायी तिलहोमी तिलप्रद। तिलभुक् तिलवापी च षट्तिली नावसीदती'त्युक्ते तिलोद्वर्त्तनादिकारिणि

**षट्त्रिंशत्** स्त्री॰ षडधिका त्रिंशत् शाक॰। (छत्रिश) सङ्ख्याभेदे तत्सङ्ख्यान्विते च।

**षट्पञ्चाशत्** स्त्री॰ षडधिका पञ्चाशत् शाक॰। (छाप्पान्न) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। [भ्रमरप्रियत्वम्

**षट्पदप्रिय** पु॰ ६त॰। नागकेशरे तस्य हि प्रचुरमधुत्वात्

**षट्पदातिथि** पु॰ षट्पद अतिथिरिव यस्य। आम्रवृक्षे।

**षट्पदानन्दवर्द्धन** पु॰षट्पदस्यानन्दं वर्द्धयति वृध-णिच्-ल्यु उप॰। अशोकवृक्षे।

**षट्पदी** स्त्री॰षट् पादा अस्याः पादस्य पाद्भाव ङीपि पद्भाव। १यूकायां, भ्रमरयोषिति च॰ द्विगु॰। षट्चरणयुक्ते छन्दोभेदे च। षट् श्लोकात्मकपद्यसंघाते।

**षट्प्रज्ञ** पु॰ षट्सु प्रज्ञा यस्य। 'धर्मार्थकाममोक्षेषु लोकतत्त्वार्थयोरपि। षट्सु प्रज्ञा तु यस्यासौ षट्प्रज्ञ परिकीर्त्तित' इत्युक्ते धर्मार्थादाभिज्ञे बौद्धे।

**षडङ्ग** न॰ षण्णामङ्गानां समाहार पात्रा॰। 'अङ्गे बाहू शिरो मध्यं षडङ्गमिदमुच्यते' इत्युक्ते देहावयवभेदे तन्त्रोक्ते हृदयाद्यवयवभेदे यत्र हृदयादिषु षट्सु अङ्गेषु मन्त्रविशेषो न्यस्यते तेषु। षट् अङ्गानीव यस्य। 'शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसां चिति'। 'ज्योतिषामयनञ्चैव षडङ्गो वेद उच्यत' इत्युक्ते वेदे, क्षुद्रगोक्षुरसुपे च पु॰।

**षडभिज्ञ** पु॰ षट् अभिज्ञा 'दिव्यं चक्षु॰ श्रोत्रं, परचित्तज्ञानं पूर्व्वनिवासानुस्मृति, आत्मज्ञानम्, वियद्गतिः कायव्यूहसिद्धिश्चेत्येतानि अभिज्ञा अभिज्ञायमानानि यस्य। बौद्धभेदे।

**षडशीति** स्त्री॰ षडधिका अशीति॰ शाक॰। (छियाशि) सङ्ख्याभेदे, तत्सङ्ख्यान्विते च। षडशीतिमुखवत्सु मिथुनकन्याधनुर्मीनेषु रवेः संक्रान्तौ च 'अयनविष्णुपदी षडशीतयो विषुवविष्णुपदीषडशीतय इति ज्योतिषम्।

**षडशीतिमुख** न॰ षडशीते॰ तन्नामसंक्रान्ते मुखम्। 'तुलादिषडशीत्यह्नां षडशीतिमुखम् क्रमात्। तच्चतुष्टयमेव स्यात् द्विस्वभावेषु राशिषु' इति षड्विंशे धनुषो भागे, द्वाविंशेऽनिमिषस्य च मिथुनाष्टादशे भागे कन्यायास्तु चतुर्दशे, इति सूर्य्यसिद्धान्तोक्ते तत्कालिक॰ षडशीतिदिनात्मककाले।

षडानन पु॰षट् आननानि यस्य। कार्त्तिकेये षड्वदनादयोऽप्यत्र

**षडूर्म्मि** पु॰षट् ऊर्म्मय ऐश्वर्य्याणि यस्य। षड्विधैश्वर्य्ये परमेश्वरे

**षड्गव** त्रि॰ षड्भिर्गोभिरायुक्तः शकटः हलो वा शाक॰ अच् समा॰। षड्भिर्गोभिराकृष्टे हलादौ 'अष्टागवं धर्म्यहलं षड्गवं जीविकार्थिना'मिति स्मृति'। षण्णां गवां समाहार॰ द्विगु। षट्सु गोषु न॰।

**षड्गुण** पु॰षड्भिः गुणिता गुणा शाक॰। राज्ञां सन्ध्यादिषु षट्सु गुणेषु। [शयाम्, महाकरञ्जे च।

**षड्ग्रन्था** स्त्री॰ ग्रन्थ॰ ग्रन्थि॰ षट् ग्रन्था अस्याः। वचायां

**षड्ग्रन्थि** न॰ षट् ग्रन्थयोऽस्य। पिप्पलीमूले, षट्पर्वयुक्ते त्रि॰ संज्ञायां कन्। शठ्यां स्त्री॰ टाप्। अत इत्त्वम् वा ङीप् वाचायां स्त्री॰।

**षड्ज** पु॰ षड्भ्यो नासादिस्थानेभ्यो जायते जन-ड। 'नासाकण्ठमुरस्तालु जिह्वां दन्तांश्च संश्रितः। षड्भ्यः संजायते यस्मात् तस्मात् षड्ज इति स्मृत' इत्युक्ते स्वरभेदे 'षड्जसंवादिनीः केका' इति रघु॰।

**षड्दीर्घ** पु॰ षड्भिर्गुणिता दीर्घा॰। तन्त्रोक्तेषु आ, ई, ऊ, ऐ, औ, अः इत्येवं रूपेषु षट्सु दीर्घेषु।

**षड्धा** अव्य॰ षष्+प्रकारे धाच्। षट्प्रकारे।

**षड्भुजा** स्त्री॰ षट् भुजा इव यस्याः (खरमुज) फललताभेदे षड्हस्तयुक्ते त्रि॰।

**षड्रस** न॰षण्णां रसानां समाहारः षा॰। 'मधुरो लवणस्तिक्तः कषायोऽम्ल॰ कटुस्तथे'त्युक्तेषु 'मधुरं लौल्यमित्याहुरिक्ष्वादौ स च लक्ष्यते। लवणस्तु पटु प्रोक्तः सैन्धवादौ स दृश्यते। तिक्तस्तु पिचुमर्दादौ व्यक्तमास्वाद्यते रसः। कषायस्तुवरस्तूक्त॰ स च पूगीफलादिषु। कटुस्तु तीक्ष्ण संज्ञ॰ स्यात् मरीचादौ स चेष्यते' इत्युक्तस्थानेषु लक्ष्येषु षट्सु रसेषु।

**षड्वर्ग** पु॰ ६त॰। 'कामक्रोधलोभमोहमद मात्सर्य्येषु 'त्याजेत् षड्वर्गमिति भट्टिः। 'क्षेत्रं होरा च द्रेक्काणं नवांशद्वादशांशके। त्रिंशांशकश्चेति विज्ञैः षड्वर्गः समुदाहृत॰' इति ज्योतिषोक्तेषु क्षेत्रादिषु षट्सु त्रिराशौ तदभिधाने।

**षण** संभक्तौ भ्वा॰ पर॰ सक॰ सेट्। दन्त्य सत्वे षस्य नत्वम्। सनति असनीत् असानीत्।

**षण** दाने तना॰ उभ॰ सक॰ सेट्, दन्त्य सत्वे षस्य नत्वम्। सनोति असनीत्-असानीत् असनिष्ट-असत।

**षण्डाड** पु॰ षण-ड डस्य नेत्वम् पृ॰षात्' षत्वं वा। वृषे, नपुंसके, पद्मादिसमूहे पु॰न॰।

**षण्ड** पु॰ षण-ड तस्य नेत्वम् पृ॰ ष॰। नपुंसके।

षु प्रसवे ऐश्वर्य्ये च भ्वा०पर०सक०अनिट् सवति असौषीत् ।

षु ऐश्वर्य्ये प्रसवे च अदा० पर० सक० सेट् लिटि सेट् । सौति असावीत्-असौषीत् । सुषुविव ।

षुट्ट अनादरे भ्वा०चु०उ०सक०सेट् । सुट्टयति ते असुषुट्टत् त

षुन्भ दीपने अ०हिंसने स०भ्वा०प०सेट् , सुम्भति असुम्भीत्

षुर दीप्तौ अक०ऐश्वर्य्ये सक०तु०प० सेट् । सुरति असोरीत् ।

षुह तृप्तौ क्षमायाञ्च सक०दि०प०सेट् । सुह्यति असुहत् ।

षू प्रसवे अदा०आ०सक०सेट् । सूते असविष्ट ।

षू प्रसवे दि०आ०सक०सेट् । सूयते असविष्ट-असोष्ट ।

षू क्षेपे तु०प०सक०वेट् । सुवति असावीत् ।

षूद निवारणे भ्वा०आ०सक०सेट् । सूदते असूदिष्ट ।

षूद क्षारणे भ्वा०प०सक०सेट् । सूदति असूदीत् ।

षूद क्षरणे अक०प्रतिज्ञायां निरासे च सक०चु०उ०सक०सेट् । सूदयति ते असूषुदत् । [रिष्ट

षूर स्तम्भे अक०हिंसने सक०दि०आ सक सेट् । सूर्य्यते असू०

षूर्क्ष अनादरे भ्वा०प०सक०सेट् । सूर्क्षति असूर्क्षीत् ।

षूर्क्ष्य ईर्षायां भ्वा०प०सक०सेट् । सूर्क्ष्यति असूर्क्षीत् ।

षूष प्रसवे भ्वा०प०सक०सेट् । सूषति असूषीत् ।

षृन्भ हिंसने भ्वा०प०सक०सेट् । सृम्भति असृम्भीत् ।

षृभ हिंसने भ्वा०प०सक०सेट् । सर्भति असर्भीत् ।

षेक सर्पणे भ्वा०आ०सक०सेट् चङि न ह्रस्वः । सेकति असेकीत्

षेल चालने गतौ च भ्वा०पर०सक०सेट् चङि न ह्रस्वः । सेलति असेलीत् ।

षेव आराधने उपभोगे आश्रये च भ्वा०उ०सक०सेट् चङि न ह्रस्वः । सेवति सेवते असेवीत् असेविष्ट ।

षै क्षये भ्वा०प०अक०अनिट् । सायति असासीत् ।

षो नाशने सक०दि०प०अनिट् । स्यति असात्-असासीत् ।

षोडत् पु० षट् दन्ता यस्य दन्तस्य दत् नि० । षड्दन्तयोग्य-वयस्के वृषादौ । [तत्सङ्ख्यान्विते च

षोडशन् त्रि० ब०व० षडधिका दश नि० । (षोल) संख्याभेदे

षोडश पु० षोडशानां पूरणः डट् । येन षोडशसंख्या पूर्य्यते तस्मिन् । चन्द्रमण्डलस्य कलात्मके षोडशभागरूपकलायाम्, त्रिपुरासुन्दर्य्याञ्च स्त्री० ङीप् ।

षोडशक न०षोडश परिमाणमस्य कन् । षोडशसंख्याते वस्तु-नि 'भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम् । ताम्बूलं छत्रगन्धाश्च माल्यं फलमतः परम् । शय्या च पादुका गावः काञ्चनं रजतं तथा । दानमेतत् षोडशकं प्रेत-पदमिति दीयते' इति स्मृत्युक्तेषु भूम्यादिषु मेलोद्देशेन देय-मानेषु षोडशसु । 'स्वर्णं रौप्यं तथा ताम्रं कांस्यं गावो गजा हयाः । रथं भूमिर्वृषो वस्त्रं शय्या चोत्सुपानहौ । दासश्च पितृयज्ञेषु दानं षोडशकं मतमिति वायुपुरा-णोक्तेषु पितृकृत्येषु देयेषु स्वर्णादिषु षोडशसु च ।

षोडशमातृका स्त्री० ब०व० षोडशसंख्या मातरः । 'गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । शान्तिः पुष्टिर्धृतिस्तुष्टिः कुल देवात्मदेवता' इत्युक्तासु गौर्य्यादिषु षोडशसु मातृकासु

षोडशाङ्ग पु० षोडश द्रव्याणि अङ्गान्यस्य । 'गुग्गुलु सरलं दारु पत्रं मलयसम्भवम् । ह्रीवेरमगुरुं कुष्ठं गुडं सर्ज्ज-रसं घनम् । हरीतकी नखीं लाक्षां जटामांसीश्च शैल-जम् षोडशाङ्गं विदुर्धूपं दैवे पैत्ते च कर्म्मणि'उक्ते गुग्गु-ल्वादिषोडशद्रव्यरचिते धूपे ।

षोडशाङ्घ्रि पु० षोडश अङ्घ्रयश्चरणा यस्य । कर्कटे ।

षोडशार न० षोडश आराणि कोणा अस्य । षोडशदल-युक्ते कमले, तन्त्रोक्ते यन्त्रभेदे च ।

षोडशिन् पु० षोडशकला विद्यन्तेऽस्य इनि । सोमे । यज्ञाङ्गे तन्नामसोमरसस्थापनपात्रे च 'अतिरात्रे षोडशिनं गृ-ह्णातीति श्रुतिः ।

षोडशोपचार पु०ब०व० षोडशसंख्याता उपचाराः । 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् । मधुपर्काचमस्नानं वसनाभरणानि च गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथे'त्युक्तेषु षोडशसु पूजाङ्गद्रव्येषु ।

षोढा अव्य० षट् प्रकारम् धाच् नि० । । षट्सु प्रकारेषु ।

षोढान्यास पु० षोढा षट्प्रकारो न्यासः । तन्त्रोक्ते षट्-प्रकारन्यासभेदे विस्तरो वृहदभिधाने ।

ष्टक प्रतीघाते भ्वा०प०सक०सेट् घटा० । स्तकति अस्ताकीत् ।

ष्टग संवरणे भ्वा०प०सक०सेट् सिचि न वृद्धिः घटा० । स्तगति अस्तगीत् । [अस्तानीत् ।

ष्टन शब्दे भ्वा०पर०अक०सेट् वा घटा० । स्तनति अस्तनीत्-

ष्टभ स्तम्भे स०हने च०भ्वा०आ०सेट् इदित् । स्तम्भते अस्तम्भिष्ट

ष्टम वैकल्ये अद०चु०उभ०सक०सेट् । स्तमयति ते अतस्तमत् त

ष्टम वैकल्ये अक०भ्वा०प०सेट् । स्तमति अस्तमीत् ।

ष्टिघ अभियोगे स्वा०आ०सक०सेट् । स्तिघ्नुते अस्तेघिष्ट ।

ष्टिप क्षरणे भ्वा०आ०अक०सेट् चङि न ह्रस्वः । स्तेपते अस्तेपिष्ट

ष्टिम खेदे दि०प०अक०सेट् । स्तिम्यति अस्तेमीत् ।

ष्टीम खेदे दि०प०अक०सेट् । स्तीम्यति । अस्तीमीत् ।

ष्टु स्तुतौ अदा०उ०सक०अनिट् सिचि सेट् सुङि प० सेट

संयुक्त त्रि० सम्+युज-क्त। संयोगवति पदार्थे।
संयुग न० संयुज्यतेऽत्र सम्+युज-क पु० जश्च ग.। युद्धे।
संयुत त्रि० सम्+यु-क्त। संयुक्ते।
संयोग पु० सम्+युज-घञ्। मेलने क्रियाजन्ये द्रव्याश्रिते गुणभेदे, सम्बन्धमात्रे च।
संयोगपृथक्त्व न० संयोगेन फलसम्बन्धभेदेन पृथक्त्व नाना-रूपत्व यत्र। एकस्यैव कर्म्मणो नित्यानित्यत्वप्रतिपादके मीमांसकोक्ते न्यायभेदे।
संयोजित त्रि० सम्+युज-णिच्-क्त। कृतमेलने पदार्थो न्तरेण कृतयोजने पदार्थे।
संरम्भ पु० सम्+रभ-घञ् मुम् च। कोपे, आक्रोशे, उत्साहे. वेगे च "अहमिसंरम्भमिवाम्बुवाहमि"ति कुमारः।
संराधन न० सम्+राध्-ल्युट्। सम्यक् सेवने, सम्यक् चिन्तने च
संराव पु० सम्+रु-घञ्। शब्दे।
संरूढ त्रि० सम्+रुह-क्त। प्रौढे, जाताङ्कुरे च।
संरोध पु० सम्+रुध-घञ्। रोधने, क्षेपे च।
संलग्न त्रि० सम्+लग-क्त। मिलिते।
संलय पु० संलीयते इन्द्रियव्यापारोऽत्र सम्+ली-अच्। निद्रायाम्, प्रलये च।
संलाप पु० सम्+लप-घञ्। परस्परकथने मोत्या अन्यो-न्योक्तिप्रत्युक्तिभ्यां भाषणे, रहसि कथने च।
संवत्सर पु० संवसन्ति ऋतवोऽत्र सम्+वस+सरन्। वत्सरे, ज्योतिषोक्ते प्रभवादिषष्टिकान्तर्गते वत्सरभेदे च।
संवत् अव्य० सम्+वय-क्विप् यलोपे तुक्। विक्रमादित्यरा-ज्यावधिके तत्कृतवत्सरे।
संवदन न० सम्+वद-ल्युट्। आलोचने, वशीकरणे, च। सम्+वन-ल्युट्। संवननमप्यत्र। [भेदे च।
संवर न० सम्+वृ-अप्। जले, दैत्यभेदे, मत्स्यभेदे, मृग
संवर्त्त पु० सम्यक् वर्त्तते परावर्त्यतेऽत्र सम्+वृत-णिच्-घञ्। प्रलयकाले, स्मृतिकारकर्त्तृनिभेदे, कर्षफलद्रुमे, मेघे, "संवर्त्तक बहदव" इत्युक्ते मेघनायकभेदे च।
संवर्त्तक न० सम्+वृत-णिच्-ण्वुल्। बलदेवस्य हलायुधे। तत. स्वार्थे कन्। बलदेवे, वाड़वानले च पु०।
संवर्त्तिका स्त्री० सम्+वृत-ण्वुल् टापि अत इत्त्वम्। दी-पादे. शिखायाम्, पद्मादे. बीजकोषसमीपस्थे दले, नवपत्रे च
संवर्द्धक त्रि० सम्×वृध-णिच्-ण्वुल्। सम्मानकारिणि वृद्धिकारके च।
संवलित त्रि० सम्×वल-क्त। मिलिते।

संवसथ पु० संवसन्त्यस्मिन् सम्×वस-अथच्। ग्रामे जन-सम्भूइनिवासस्थाने। [वायौ।।
संवह पु० सम्यक् वहति सम्×वह-अच्। सप्तवायुमध्यवर्त्ति-
संवार पु० सम्×वृ-घञ्। शिक्षाग्रन्थोक्ते वर्णोच्चारणार्थे बाह्य प्रयत्नभेदे, सङ्कोचने च।
संवास पु० संवसन्त्यत्र सम्×वस-घञ्। गृहे, पुरवासिना पुराद्बहिर्विलासयोग्ये अनावृते स्थाने च। [तत्रैव।
संवाह पु० संवाहयति सम्×वह-णिच्। अङ्गमर्द्दके। ण्वुल्।
संवाहन न० सम्+वह-णिच्-ल्युट्। भारादेर्वहने, अङ्ग मर्द्दने च।
संविग्न त्रि० सम्+विज-क्त। उद्विग्ने इष्टवस्तुलाभाय तद प्राप्तिहेतुना भयादिना वा जातौत्सुक्ये, [अङ्गीकारे च
संवित्ति स्त्री० सम्+विद्-क्तिन्। ज्ञाने, प्रतिपत्तौ, बुद्धौ,
संविद् स्त्री० सम्+विद-सम्प० क्विप्। ज्ञाने, प्रतिपत्तौ, बुद्धौ अङ्गीकारे, समाधौ, नामनि, आचारे, सङ्केते, युद्धे, तोषे च-
संविदा स्त्री० संविद्यतेऽनया सम्+विद्-क्विप् टाप्। भङ्गायाम् (सिद्धि) "संविदासवयो मध्ये संविदेव गरीयसीति" तन्त्रम्
संविद्व्यतिक्रम पु० संविदोऽङ्गीकारस्य व्यतिक्रमो यत्र। कृता-ङ्गीकारस्योद्ध ङ्घनहेतुके विवादभेदे।
संविदित त्रि० सम्+विद्-क्त। अङ्गीकृते, सम्यग्ज्ञाते च।
संविधान न० सम्×वि+धा-ल्युट्। उपाये, व्यायोजने रचनायाञ्च। [अतिविषायाम् (आतइच)।
संविषा स्त्री० समर्द्दितं विषं यया धातुजस्य उत्तरपदलोपः।
संवीक्षण न० सम्यग्वीक्ष्यते अन्विष्यते वा सम्-वि+ईक्ष-ल्युट्। इष्टवस्तुनोलाभाय अन्वेषणे, सम्यग्दर्शने च।
संवीत त्रि० सम्+व्येञ्-क्त। आवृते, रुद्धे, च-सम्+वि+इण-क्त। सङ्गते। [मन्त्रक्षेति" रघु.।
संवृत त्रि० सम्+वृ-क्त। आवृते, कृतगोपने च "तस्य संवृत-
संवेग पु सम्+विज-घञ्। भयादिना त्वरायाम्, सम्यग् वेगे च
संवेद पु सम्×विद-घञ्। ज्ञाने। युच्। संवेदनाप्यत्र स्त्री०।
संवेश पु० सम्यक् विशत्यत्र सम्×विश-घञ्। निद्रायाम् सं-पूर्वकस्य तस्य निद्रार्थकत्वासम्प्रत्वात्। तथाहि 'संविशः कुश शयने निशां निनाय' इति रघुः प्रयोगे च।
संवेशन न० सम्×विश-णिच्-ल्युट्। रतिक्रियायाम् तद्गुत्तर हि निद्राधिक्येन तस्या निद्राहेतुत्वात् तथात्वम्।
संव्यान न० संवीयते सम+व्येञ्-कर्म्मणि ल्युट्। उत्तरीय वस्त्रे, वस्त्रमात्रे च।
संशप्तक पु० सम्यक् शपथमङ्गीकारो यस्य कप्। प्रतिज्ञाय स आसमादनिवर्त्तिनि सैन्ये "संशप्तकानर्वैरभूदिति" रघु.।

**संशय** पु० सम्+शी–अच्। सन्देहे एकस्मिन् धर्म्मिणि भावाभावयोः, विरुद्धधर्म्मद्वयस्य वा सन्देहे। यथा पर्वतो वह्निमान्न वा, अयं स्थाणुर्वा पुरुषो वेति। "स संशयो भवेद्यत्र धीरेकत्राभावभावयोरिति" भाषापरिच्छेदः।

**संशयस्थ** त्रि० संशये तिष्ठति स्था–क। संशययुक्ते।

**संशयात्मन्** पु० संशय आत्मनि यस्य। सदिग्धान्तःकरणे "संशयात्मा विनश्यतीति" पुराणम्।

**संशयालु** त्रि० संशय+अस्त्यर्थे आलुच्। संशययुक्ते।

**संशयितृ** त्रि० सम्+शी–तृच्। संशयकर्त्तरि।

**संशरण** न० संशीर्य्यते ऽनेन सम्+शॄ–ल्युट्। रणारम्भे

**संशित** त्रि० सम्+शो–क्त। सम्पादितव्रतविषयकयत्ने।

**संशितव्रत** त्रि० संशितं सम्यक् सम्पादितं व्रतमनेन। सम्यक्सम्पादितव्रते। [ज्ञाने च।

**संशुद्धि** स्त्री० सम्+शुध–क्तिन्। सम्यक् शोधने, देहादिमा-

**संश्यान** त्रि० सम्+श्यै–क्त। शीतादिना सङ्कुचिते।

**संश्रय** पु० सम्+श्रि–अच्। आश्रये [पु०।

**संश्रव** पु० सम्+श्रु–अप्। अङ्गीकारे। घञ्। संश्रावोऽप्यत्र।

**संश्रुत** त्रि० सम्+श्रु–क्त। अङ्गीकृते।

**संश्लिष्ट** त्रि० सम्+श्लिष–क्त। आलिङ्गिते, सम्बद्धे च।

**संश्लेष** पु० सम्+श्लिष–घञ्। आलिङ्गने, सम्बन्धमात्रे च।

**संसक्त** त्रि० सम्+सन्ज–क्त। मिलिते, सम्बद्धे, समन्तादुविस्तीर्णे च "प्रान्तेषु संसक्तनमेरुशाखमिति" कुमारः।

**संसद्** स्त्री० संसीदन्त्यस्याम् सम्+सद–सम्प० क्विप्। सभायाम्

**संसरण** न० सम्+सृ–ल्युट्। स्वादृष्टनिबद्धदेहस्वीकाररूपे संसारे, असम्बाधसेनागमने, रणारम्भे, घण्टापथे, सगतौ च।

**संसर्ग** पु० सम्+सृज–घञ्। सम्बन्धे, "विभागानन्तर "यत्तव धनं तन्ममेति कृतसमयेन एकत्रावस्थानरूपे सम्बन्धे च।

**संसर्गाभाव** पु० संसर्गस्य सम्बन्धस्याभावः। ध्वंसप्रागभावात्यन्ताभावरूपे–भेदभिन्ने अभावे सम्बन्धाभावे च।

**संसर्गिन्** त्रि० सम्+सृज–घिणुन्। संसर्गयुक्ते विभागानन्तर "यत् तव धनं तन्ममेति,कृतसमयेन एकत्रावस्थानरूपसंसर्गयुक्ते भ्रात्रादौ,सम्बद्धे च।

**संसार** पु० संसरत्यस्मात् सम्+सृ–घञ्। मिथ्याज्ञानजन्यसंस्काररूपवासनायां, देहारम्भकादृष्टभेदे,'स्वादृष्टोपनिबद्धदेहपरिग्रहे च। आधारे घञ्। विश्वे। भावे घञ्। सङ्गतौ।

**संसारमार्ग** पु० ६त०। योनिद्वारे तत एव हि बहिर्निर्गमने मार्गाद्भवतीति तस्य तथात्वम्।

**संसारिन्** त्रि० संसरति शरीरभेदेन देहेन युज्यते सम्+सृ–णिनि। शरीराभिमानिनि जीवे।

**संसिद्ध** त्रि० सम्यक् स्वभावेन वा सिद्धः सम्+सिध–क्त। स्वभावसिद्धे, सम्यग्निष्पन्ने च। [निष्पत्तौ च।

**संसिद्धि** स्त्री० सम्+सिध–क्तिन्। स्वभावे, प्रकृतौ, सम्यग्

**संसृति** स्त्री० सम्+सृ–क्तिन्। संसारप्रवाहे, सङ्गतौ च

**संसृष्ट** पु० सम्+सृज–क्त। विभागानन्तरं मैत्र्यात् पुनः स्वधनेषु कृतसंसर्गवति भ्रात्रादौ "संसृष्टस्य तु संसृष्टीति" स्मृति वमनादिना संशुद्धे, संयुक्ते च। भावे क्त। सम्बन्धे

**संसृष्टिन्** पु० संसृष्टमनेन इनि। संसृष्टभ्रात्रादौ। "अन्योदर्य्यस्तु संसृष्टीति" स्मृतिः। [यक्ते च।

**संस्कर्त्तृ** त्रि० सम्+कृ–तृच्–सुट् च। संस्कारकारके, पा-

**संस्कार** पु० सम्+कृ–घञ् सुट् च। सतोगुणान्तराधानरूपे प्रतियत्ने,यथा अलङ्कारादेरस्त्रादेर्वस्त्रादेश्च उद्दीपननिधानमार्ज्जनादय, व्रीह्यादेश्च यज्ञाङ्गत्वसम्पादनाय वैदिकमार्गेण प्रोक्षणादि दर्पणादेर्निर्मलीकरणादि। स्मृतिहेतौ अनुभवजन्ये आत्मवृत्तिगुणभेदे, पृथिव्यादिचतुष्टयस्थे वेगाख्ये गुणे,यथावस्थितस्यास्थापनप्रयोजके स्थितिस्थापनाख्ये गुणभेदे,शास्त्राभ्यासजन्यव्युत्पत्तौ,व्याकरणोक्तविधया शब्दानां साधनप्रकारे, विप्रादीनां वैदिककर्म्माऽर्हत्वसाधने गर्भाधानादौ क्रियाकलापे, पाके च।

**संस्कारवर्जित** त्रि० ३त०। गर्भाधानादिसंस्कारहीने, शास्त्रादौ व्युत्पत्तिहीने च संस्कारहीनादयोऽप्यत्र।

**संस्कृत** त्रि० सम्+कृ–क्त सुट् च। कृतसंस्कारे पदार्थे, व्याकरणादिलक्षणाधीनसाधनयुक्ते शब्दे, पक्वे, भूषिते, शोधिते च।

**संस्तर** पु० सम्+स्तॄ–अप्। यज्ञे, शय्यायाम् पल्लवादिरचितशय्यायां च "नवपल्लवसंस्तरे यथेति" कुमारः।

**संस्तव** पु० सम्+स्तु–अप्। परिचये, सम्यक् स्तुतौ च।

**संस्ताव** पु० संस्तूयतेऽत्र सम्+स्तु–घञ्। यज्ञार्थं संस्तावकविप्राणां वासभूमौ।

**संस्तुत** त्रि० सम्+स्तु–क्त। परिचिते, सम्यक्स्तुते च।

**संस्त्याय** पु० सम्+स्त्यै–घञ्। सङ्घाते, निविडसंयोगरूपे सन्निवेशे, विस्तृतौ, गृहे, संस्थाने च।

**संस्थ** त्रि० सम्+स्था–क। व्यवस्थिते, मृते च।

**संस्था** स्त्री० सम्+स्था–अङ्। व्यवस्थायां, स्थितौ, नाशे, यज्ञभेदे, व्यवस्थायां, आकृतौ, साहश्ये, प्राने च।

**संस्थान** न० सम्+स्था–ल्युट्। चतुष्पथे, आकारे, चक्रवन्धारम्भकप्रयोगभेदे, चिह्ने, सन्निवेशे, सम्यक्स्थितौ च।

**सस्थित** त्रि० सम्+स्था-क्त। मृते, सम्यक्स्थिते च। [रुच्ये।

**सस्पर्शा** स्त्री० सम्पृश्यते सम्+स्पृश-घञ् टाप्। रजनीगन्धा-

**सस्फुट** त्रि० सम्+स्फुट-क। विकसिते।

**सस्फेट** न० सम्+स्फिट-घञ्। युद्धे।

**सस्फोट** पु० सम्+स्फुट घञ्। युद्धे।

**सहत** त्रि० सम्+हन-क्त। दृढे, मिलिते, परार्थ मिलिते, 'सहतपरार्थत्वादिति,सांख्यम् दृढसंयोगयुक्ते सम्यग् हते च

**सहतल** पु० सहत सहनन संघात लाति-ला-क। मिलित पाणिद्वये।

**सहतपुष्पिका** स्त्री० सहतानि दृढ संयुक्तानि पुष्पाण्यस्या कप् अत इत्वम्। मिश्रेयायाम्।

**सहति** स्त्री० सम्+हन्-क्तिन्। समूहे, सम्यग्हनने च।

**सहनन** न० संहन्यते परार्थं सहन्यते सम्+हन-ल्युट्। देहे, संघाते, वधे च।

**सहर्ष** पु० सम्यक् हर्ष सम्+हृष-घञ्। आनन्दे, स्पर्द्धायाञ्च सहृष्यत्यनेन घञ्। वायौ।

**सहार** पु० सम्+हृ-घञ्। प्रलये, नाशे, संक्षेपे, नरकभेदे, विसर्ज्जने, भैरवभेदे च।

**सहारमुद्रा** स्त्री० संहाराय स्थानान्तरनयनाय मुद्रा। तन्त्रोक्ते मुद्राभेदे तल्लक्षण दृष्टदभिधाने।

**संहिता** स्त्री० सम्यक् हित प्रतिपाद्य यस्या। मन्वादिप्रणीते, धर्म्मशास्त्रे, पुराणे, इतिहासादौ, कर्मकाण्ड-प्रतिपादके वेदभागे, च।

**सहूति** स्त्री० सम्+ह्वेञ् क्तिन्। बहुभि कृत आह्वाने।

**सह्रुत** त्रि० सम्+हृ-क्त। कृतसंहारे, सङ्कुचित च।

**सहृति** स्त्री० सम्+हृ-क्तिन्। संहार-

**सह्रादि** पु० सम्+ह्रद-घञ्। शब्दभेदे।

**सह्रादिन्** त्रि० सम्+ह्रद-णिनि। शब्दायमाने।

**सह्लाद** पु० सम्+ह्लद-घञ्। आनन्दभेदे।

**सकण्टक** पु० सह कण्टकेन सहस्य स। करञ्जभेद, (नाटाकरञ्जा) शैवाले च। कण्टकयुक्ते त्रि०। [कर्णदुष्टे च।

**सकर्ण** त्रि० सह कर्णेन श्रवणेन तद्व्यापारेण वा। श्रुतियोगे,

**सकर्म्मक** त्रि० सह कर्म्मणा कप्। व्याकरणोक्ते कर्म्मयुक्त क्रियाबोधके धातौ 'फलव्यापारयोरेकनिष्ठतायामकर्म्मक। धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृत' इत्युक्तदिशा धातो सकर्म्मकत्वमवसेयम्।

**सकल** त्रि० सह कलया, कलकलमात्रया, कलया वा कलाभि र्वा सहस स। सम्पूर्णे समस्ते, कलासहिते च।

**सकारण** त्रि० सह कारणेन। कार्य्ये। [अन्तिके समीपे।

**सकाश** पु० काशन दीपन काश काश-घञ् सह काशेन।

**सकुरुण्ड** पु० सह समान कुरुण्डेन। शाकरुण्डवृक्षे।

**सकुल** पु० सह समान कुलमस्य। सकुलमत्स्ये (शल) स्त्रीत्वमपि। समानवंशे त्रि०।

**सकुल्य** त्रि० समाने कुले भव यत्। अशौचविषय स्वाव वध्यूर्द्ध्वतनाष्टमपुरुषावधिदशमपर्य्यन्ते पुरुषवर्गे, दायप्रकरणे स्वावधिपञ्चमोर्द्ध्वतनपुरुषमात्रे "विभक्तदायादान् सकुल्यानाप्नुते" इति स्मृति। [मिति केचित्।

**सकृत्** अव्य० एक+नि०। एकवारे विशेषाच्च तत्र कौत्स-

**सकृत्प्रज** पु० सकृत् एकवार प्रजायते प्र+जन-ड। काक एकवारजातापत्ये त्रि०।

**सकृत्फला** स्त्री० सकृत् फलति फल-अच्। कदलीवृक्षे

**सक्त** त्रि० सन्ज-क्त। आसक्ते, अविरते च।

**सक्तु** पु० सच-तुन्। भ्रष्टयवादिचूर्णे (छातु) 'मैषादौ सक्तवो देया' इति स्मृति। [ङीप्। शमीवृक्षे।

**सक्तुफला(ली)** स्त्री० सक्तवइव क्षुद्राणि फलान्यस्या वा

**सक्थि** न० सन्ज-क्थिन्। ऊरौ, शकटावयवभेदे च।

**सखि** त्रि० सह समं न ख्यायते ख्या इन् नि०। सौहार्द्दयुक्ते

**सखी** स्त्री० सखि+ङीष्। सहचर्य्यां, वयस्यायाञ्च।

**सख्य** न० सख्युर्भाव यत्। मित्रतायाम् सौहार्द्दे।

**सगर** पु० सह गरेण विषेण जात। सूर्य्यवंश्ये नृपभेदे 'सगरात् सागरो जात' इति पुराणम। विषयुक्ते त्रि०।

**सगर्भ** पु० सह समानो गर्भोऽस्य। सहोदरे भ्रातरि। सह गर्भेण। गर्भयुक्ते, मध्यवर्त्तिसूक्ष्मपत्रयुक्ते कुशदूर्वादौ च त्रि०।

**सगर्भ्य** पु० समाने गर्भे भव यत्। सहोदर भ्रातरि।

**सगोत्र** न० सह समान गोत्रम्। कुल। सह समं गोत्रमस्य। ज्ञातौ त्रि०।

**सग्धि** स्त्री० अद-क्तिन् नि० सह ग्धि। सहभोजन।

**सङ्कट** त्रि० सम्+कटच्। अल्पावकाशे स्थाने, सम्बाधे। सम्+कट अच्। द्रु मे "नरोमुच्येत सङ्कटादिति" पण्डी। इशी भेदे, ज्योतिषोक्ते दशाभेद च स्त्री० टाप्।

**सङ्कटाक्ष** पु० सङ्कट सम्बाधमक्षति अक्ष-अच्। धवक्षे।

**सङ्कर** पु० सम्+कॄ-अप्। समार्ज्यमानादिभि क्षिप्ते रजसि। भवने इतरजातिपुरुषेण इतरजातिस्त्रियां जात जातिभेद

"सङ्करस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः" इति गीता न्यायोक्ते जातिबाधके परस्पराभावसमानाधिकरणयोरेकाधिकरणवृत्तित्वरूपे धर्मविशेषे च। तदुदाहरणादि दृष्टव्यमभिधाने।

**सङ्करीकरण** न० असङ्करः सङ्करः क्रियतेऽनेन च्वि+कृ-ल्युट्। "खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च" इत्युक्ते खरादिवधजन्ये पापे।

**सङ्कर्षण** पु० सङ्कृष्यते गर्भात् गर्भान्तरं नीयतेऽसौ सम्+कृष-युच्। बलदेवे। भावे ल्युट्। आकर्षणे, स्थानान्तरनयने च न०।

**सङ्कलन** न० सम्+कल-ल्युट्। एकत्रीकरणे, योजने, (ठिक देया) सम्पर्के च। [सम्प्रहोते च।

**सङ्कलित** त्रि० सम्+कल-क्त। योजिते, रेखादिना मर्दिते,

**सङ्कल्प** पु० सम्+कृप-घञ्। अभीष्टसिद्धये "इदमित्थमेव कार्य्यम्" इत्येवरूपे मनसो व्यापारभेदे, कर्म्मसाधनाय अभिलापवाक्ये, 'सङ्कल्पेन विना राजन्! यत्किञ्चित् कुरुते नरः' इति पुराणम् तत्त्वविशेषोऽन्यदभिधाने। [योऽस्य

**सङ्कल्पजन्मन्** पु० सङ्कल्पात् जन्म यस्य। कामदेवे। सङ्कल्पभवाद-

**सङ्कल्पयोनि** पु० सङ्कल्पो योनिरुत्पत्तिकारणं यस्य। कामदेवे "सङ्कल्पयोनेरभिमानभूतमिति कुमारः।

**सङ्कसुक** त्रि० सम्+कस-उकञ्। अस्थिरे, मन्दे, दुर्जने सङ्कीर्णे, अपवादशील च।

**सङ्काश** त्रि० सम्यक् काशते काश-अच्। सदृशे 'तदर्थादित्यसङ्काशमिति तन्त्रम्। निभादिवदस्य नित्यसमासता।

**सङ्किल** पु० सम्+किल-क। वह्नेरुल्कायाम्।

**सङ्कीर्ण** त्रि० सम्+कॄ क्त। बहुजनसम्पर्केण निरवकाशे स्थाने, मिलितनानाजातौ, व्याप्ते मिश्रिते, सङ्कटे, एकत्र मिलितया परस्परविजातीययोः। इतरवर्णेन इतरवर्णस्त्रियां जाते जातिभेदे पु०। [च।

**सङ्कुचित** त्रि० सम्+कुच-क्त। कृतसङ्कोचे, मलिने, अप्रफुल्ले

**सङ्कुल** न० सम्+कुल क। परस्परपराहते, यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता। माता तु मम वन्ध्यैव पुत्रहीनः पितामहः इत्येव वाक्ये, परस्परहननरूपे युद्धे बहुजनादिभिः सम्बाधेन निरवकाशे स्थाने च सङ्कीर्णे त्रि०।

**सङ्केत** पु० सम्+कित अच्। सम्भोगार्थमागमनाय ज्ञायते स्थानादि अनेन ज्ञापकव्यापारे (इसारा)। अस्माच्छब्दादयमर्थो बोध्य इत्याद्यर्थबोधिका इच्छा शब्दनिष्ठार्थबोधनशक्तिविशेषे, प्रियसङ्गमार्थं गुप्तस्थाने च।

•

**सङ्केतित** त्रि० सङ्केतो जातोऽस्य तार० इतच्। सङ्केतयति वाच्ये अर्थे। साक्षात् सङ्केतितं योऽर्थमभिधत्ते इति, काव्यप्र०

**सङ्कोच** पु० सम्+कुच-घञ्। बहुविषयकवाक्यस्याल्पविषयकतया व्यवस्थापने, सामान्यशब्दस्य विशेषपरतायाम्, जडीभावे, बोधे, बन्धे च। सम्+कुच-अच्। मत्स्यभेदे पु० कुङ्कुमे न०। [याम।

**सङ्कोचनी** स्त्री० सम्+कुच-ल्यु-णिच् ङीप्। लज्जालुलता।

**सङ्क्रन्दन** पु० सङ्क्रन्दयत्यसुरान् सम्+क्रन्द-णिच्-ल्यु। इन्द्रे। भावे ल्युट्। सम्यक्क्रन्दने न०।

**सङ्क्र(क्रा)म** पु० सङ्क्रामत्यनेन सम्+क्रम-घञ् वा वृद्धिः जलबन्धनस्थाने(साकौ) "आत्मानं सङ्क्रमं कृत्वेति" स्मृतिः भावे घञ्। रव्यादे राश्यन्तरसञ्चारे च। [नरगमने च।

**सङ्क्रमण** न० सम्+क्रम-ल्युट्। सङ्क्रान्तौ, रव्यादीनां राश्य

**सङ्क्रान्त** त्रि० सङ्क्रान्तिरस्यास्ति अच्, सम्+क्रम-क्त वा। सङ्क्रान्तियुक्ते सङ्क्रमणकर्त्तरि, प्राप्ते, दायरूपेण पितृमृत्यादितः आगते स्त्रिया प्राप्तधने च।

**सङ्क्रान्ति** स्त्री० सम्+क्रम-क्तिन्। सम्यक्क्रमणे, रव्यादीनां राश्यन्तरसञ्चारे च। तत्र विशेषो वृहदभिधाने द्रष्टव्यः।

**सङ्ख्य** न० सङ्ख्यायते परस्परनामोच्चारणं क्रियतेऽत्र सम्+ख्या घञर्थे क। युद्धे। अङ्। विचारे, बुद्धौ, द्रव्याश्रिते एकत्वद्वित्वादौ गुणभेदे, च स्त्री० टाप्।

**सङ्ख्यात** त्रि० सम्+ख्या-क्त। कृतसङ्ख्ये, गणिते सम्यक्ख्याते च।

**सङ्ख्यावत्** पु० सङ्ख्या विचारणा साऽस्त्यस्य मतुप् मस्य वः। पण्डिते सङ्ख्यायुक्ते त्रि०। [करणयोश्च।

**सङ्ख्येय** त्रि० सङ्ख्यायतेऽसौ सम्+ख्या-यत्। गण्ये सङ्ख्या

**सङ्ग** पु० सञ्ज-घञ्। मिलने, सम्बन्धे, विषयादिरागे च 'ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते' इति गीता।

**सङ्गत** न० सम्+गम भावे क्त। सौहार्दे सङ्गती च कर्त्तरि क्त। मिलिते त्रि०।

**सङ्गति** स्त्री० सम्+गम-क्तिन्। सङ्गमे, मेलने, न्यायोक्ते अनन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषये "सम सङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते" इत्युक्ते प्रसङ्गादौ पदार्थे च।

**सङ्गम** पु० सम्+गम-घञ् न वृद्धिः। सङ्गतौ स्त्रीपुंसयोः संयोगे, नद्यादीनां नद्यादियोगस्थाने च "गङ्गासागरसङ्गम" इति पुराणम्।

**सङ्गर** पु० सङ्गीर्यते सम्+गॄ-अप्। आपदि, प्रतिज्ञायां

क्रियाकारके, विषे, शमोढव्ये च।

सङ्गव पु० सङ्गता गावोदोहनायात्र काले नि०। "प्रातःकालो मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति स्मृत्युक्ते प्रातःकालानन्तर मुहूर्त्तत्रयात्मके कालभेदे।

सङ्गिन् त्रि० सनुज-घिणुन्। सङ्गयुक्ते। स्त्रियां ङीप्।

सङ्गीत न० सम्+गै-क्त। दर्शनार्थे नाट्यगीतवाद्यात्मिके, तत्प्रतिपादकग्रन्थे च। कर्म्मणि क्त। सम्यग्गीते त्रि०।

सङ्गीर्ण त्रि० सम्+गॄ-क्त। स्वीकृते।

सङ्ग्रह पु० सम्+ग्रह-अप्। सञ्चये, सङ्क्षेपे, बह्वर्थकवाक्यानामेकत्र सङ्कलने च [मत् त।

सङ्ग्रहणी स्त्री० सङ्गिता ग्रहणी ग्रहणीरोगभेदे। [सङ्ग्रा-

सङ्ग्राम युद्धे अद० चु० उभ० सक० सेट्। सङ्ग्रामयति ते अस

सङ्ग्राम पु० सङ्ग्राम-घञ्। युद्धे।

सङ्ग्रामपटह पु० ६त०। रणवाद्यभेदे।

सङ्ग्राहिन् पु० सम्यक् गृह्णाति मलम् सम्+ग्रह-णिनि। कुटजवृक्षे। मलावष्टम्भके सङ्ग्रहकारके, च त्रि०।

सङ्घ पु० सघवत् सर्व्वम्। सजातीयसमूहे, समूहे च।

सङ्घचारिन् पु० सङ्घीभूय चरति चर-णिनि। मत्स्ये। सङ्घीभूयचारिणि जन्तुमात्रे त्रि०।

सङ्घजीविन् पु० सङ्घेन जीवति जीव-णिनि। सङ्घीमज्जोविनि वार्त्तीने।

सङ्घट्ट पु० सम्+घट्ट-घञ्। परस्परसङ्घर्षणे गठने च।

सङ्घट्टन न० सम्+घट्ट-ल्युट्। मिलने, गठने, रचनायाञ्च। युच्। तत्रैव स्त्री०। [(योड़हात)।

सङ्घतल पु० सङ्घौ सङ्घते मिलिते तले यत्र। संयोजितप्रतलद्वये

सङ्घपुष्पी स्त्री० सङ्घीभूतानि पुष्पाण्यस्याः ङीप्। धातकीपुष्पायाम्। (धाइ फुल)।

सङ्घर्ष पु० सम्+घृष्-घञ्। परस्परघर्षणे, स्पर्द्धायाञ्च।

सङ्घशस् अव्य० सङ्घ+वीप्सार्थे-शस्। भूरिश इत्यर्थे।

सङ्घाटिका स्त्री० सङ्घटयति-सम्+घट-णिच् ण्वुल्। युग्मे, जलकण्टके, घ्राणे च। [इन्द्रयोगे कर्णे च।

सङ्घात पु० सम्+हन-घञ्। समूहे, नरकभेदे, सम्यग्हनने,

सङ्घातपत्त्रिका स्त्री० सङ्घातयुक्त पत्त्रमस्याः कप् अत इत्त्वम्। शतपुष्पायाम्।

सचि(ची) स्त्री० सच-इन् वा ङीप्। इन्द्राण्याम्।

सचिह्नक पु० सह चिह्नकेन। ह्रिद्वनेत्रे (पिचुड्यिकनेत्रे)।

सचिव पु० सच-इन् तदा इन् वाति वा-क। सहाये, मन्त्रिणि, कृष्णधुस्तूरे च।

सचेतन त्रि० सह चेतनया। विशिष्टज्ञानयुक्ते।

सचेष्ट पु० सचते सच-अच् तथाभूत. सन् इष्ट। आम्रे। सह चेष्टया। चेष्टान्विते त्रि० [हरिद्रायाम्।

सञ्चारा स्त्री० सन् चारो गात्रानुलेपने विम्बगतिरस्याः।

सच्चिदानन्द पु० सन् नित्य चित् चैतन्यमानन्द त्रिपदकर्म्म०। नित्यज्ञानसुखमये ब्रह्मणि।

सच्छूद्र पु० कर्म्म०। सद्गोपनापितादौ शूद्रभेदे। "सच्छूद्रौ गोपनापिताविति" स्मृति।

सजम्बाल त्रि० सह जम्बालेन। पङ्कयुक्ते देशे।

सजाति पु० समाना जातिरस्य। समानवर्णेन समानवर्णायां मूढायाम् उत्पादिते पुत्रे। तुल्यजातौ त्रि०।

सजातीय त्रि० समाना जातिमर्हति छ। समानधर्म्मयुक्ते।

सजु(जू)स् अव्य० सह जुषते क्विप् उ० वा दीर्घ। सहार्थे "सजू रत्य रति वसेदिति"। भट्टि।

सज्ज त्रि० सस्ज-अच्। उद्युक्ते, सनद्धे, सम्भृते, निभृते च। अ। आयोजने, वेशे, च स्त्री०। सतोजायते जन-ड। साधुजाते त्रि०।

सज्जन त्रि० सम्ज-णिच्-ल्युट्। रक्षार्थं सैन्यस्थापने, घट्टे च। सस्ज-ल्युट्। आयोजने। सत् जन। सौजन्यवति जने, "कुरुसज्जनरञ्जनमिति" सत्कुलोद्भवे च पु०। सस्ज-णिच्-ल्युट्। नृपादीनामारोहणार्थं, गजभूषाकरणादौ। [सन्नद्धे च।

सज्जित त्रि० सज्जा जातास्य तार० इतच्। कृतवेषे, भूषिते

सञ्च सञ्चीयते अत्र सम्+चि-ड। लेखनार्थे पत्त्रभेदे (साच)

सञ्चय पु० सम्+चि-अच्। समूहे, सञ्चये च। ल्युट्। सञ्चयनम्। सङ्ग्रहे न०। [सीदतीति" पुराणम्।

सञ्चयिन् पु० सम्+चि-इनि। सङ्ग्रहकारके, "सञ्चयी नाव-

सञ्च(ञ्चा)र पु० सञ्चरत्यनेन सम्+चर घञर्थे कघञ् वा। सेतौ, देशे, यन्त्रादे राश्यन्तरगमने च। भावे क। सम्यग्गतौ

सञ्चाय्य पु० सञ्चीयतेऽग्निरत्र सम् चि-ण्यत्। यज्ञभेदे।

सञ्चारिका स्त्री० सञ्चारयति नायकयो वार्त्ताम् सम्+चर-णिच्-ण्वुल्। दूत्यां कुट्टिन्याम्, युग्मे, घ्राणे च।

सञ्चारिन् पु० सम्+चर-णिनि। धूमे, वायौ, अलङ्कारोक्ते स्तम्भादिर् साधनुगुणे भावभेदे च। "व्यक्त सञ्चारिणा तथेति, साहित्य०। सञ्चारकारके त्रि०। स्त्रियां ङीप्। 'सञ्चारिणी दीपशिखेवेति" रघु। सा च हंसपद्याञ्च।

सञ्चाली स्त्री० सञ्चलति सम्+चल-ण गौ० ङीप्। गुञ्जायाम्

सञ्चित त्रि० सम्+चि-क्त। सम्यक्चिते।

सम्प्लवन न० सम्+प्लु-युच्। परस्पराभिमुखतया स्थिते चतुः-शावेष्टके।

सञ्जीवन न० सम्+जीव-ल्युट्। चतुःशालरूपे सम्यक्प्रा-णधारणे च। संजीवयति णिच्-ल्युट्। औषधिभेदे स्त्री० ङीप्।

सट न० स्त्री० सट-अच्। व्रतिनां केशसङ्घाते, जटायाम्, शि-खायां, सिंहादेः केशरे च "सटाच्छटाभिन्नघनेनेति" माघः

सटि(टी) स्त्री० सट-इन् वा ङीप्। शट्याम्। कन्। गन्धपत्र वृक्षे। सट-इन् ङीप्। सटीत्यपि। [भेदे।

सण्डीन न० सम्+डी-क्त। पक्षिणां सङ्घुय गमनरूपे गति

सत् त्रि० अस-शतृ। सत्ये, साधौ, पूजिते, धीरे, प्रशस्ते, विद्यमाने च। स्त्रियां ङीप् सा च पतिव्रतायां, स्त्रियां, दक्षकन्यायाञ्च। "सती सती योगविसृष्टदेहेति" कुमार ब्रह्मणि न० "ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता। आदरे अव्य० "सदसती आदरानादरयो-रिति" पाणिनिः। [तद्वति त्रि०।

सतत न० सम्×तन-क्त ष० समोऽन्त्यलोपः। निरन्तरे।

सतत्त्व न० सह सदृशं तत्त्वेन। स्वभावे।

सतानन्द पु० गौतमपुत्रे अहल्यागर्भजे मुनिभेदे।

सतीन पु० सतीं नयति नी-ड। वंशभेदे, (चुट्मटर) कलायभेदे च। स्वार्थे कन् तत्रैव।

सतीर्थ्य पु० समाने तीर्थे गुरौ वसति यत् समानस्य स०। परस्परैकगुरुके छात्रे, निर्यकारोऽप्यस्मिन्नर्थे।

सतील पु० सतीं लव्यति ड। (चुट्मटर) कलाये।

सतीलक पु० सतीलदृव कायति कै-क, सह तिलेन तिर्यचि क्षेन कप् ष० दीर्घः। वंशे, (चुट्मटर) कलायभेदे, च।

सतीला स्त्री० सह तिलेन तिर्यचिक्षेन ष० दीर्घः। कलायभेदे

सत्कर्ट पु० सत्+कृ-ण्वुल्। विष्णौ। सत्कारके त्रि०।

सत्कर्म्मन् न० कर्म०। वेदादिविहिते यागादौ कर्मणि।

सत्काण्डनार पु० कर्म०। रक्तकाञ्चने।

सत्कार पु० सत्+कृ-घञ्। सम्मानने, पूजने च।

सत्कृत त्रि० सत्+कृ-क्त। पूजिते, कृतसम्माने च।

सत्क्रिया स्त्री० सत्+कृ-श। सत्कारे, सम्मानने, पूजने च।

सत्तम त्रि० अतिशयेन सन् तमप्। अतिशयसाधौ।

सत्ता स्त्री० सतोभावः तल्। द्रव्यगुणकर्मवृत्तौ जातिभेदे, विद्यमानतायाञ्च।

सत्त्र न० सद-त्रन्। स्थाने, यज्ञे, सदादाने, आच्छादने, प-रद्रव्ये कैतवे, धने, यज्ञे, दाने, अरण्ये च।

सत्त्रम् अव्य० सद-त्रन्। सदार्थे। ल। सत्त्राप्यत्रार्थे अव्य०

सत्त्रशाला स्त्री० ६त०। अन्नजलादेर्दानार्थे कल्पिते गृहे

सत्त्राजित् पु० सत्त्रेणाजयति लोकान् आ+जि-क्विप्। श्रीकृष्णश्वशुरे सत्यभामाजनके राजभेदे। [गृहस्थे च।

सत्त्रिन् पु० सत्त्रं यज्ञं गृहं वाश्रोवा विद्यतेऽस्य इनि। गृहपतौ

सत्त्व न० सतोभावः त्व। साङ्ख्योक्ते प्रकाशादिसाधने प्रकृ-त्यवयवे पदार्थे, "तत्र सत्त्वं निर्मलत्वात् प्रकाशकमना-मयमिति" गीता। अत्र हितकार। ष्यवतकार। स्वभावे द्रव्ये, प्राणेषु, व्यवसाये, रखे, आत्मनि, चित्ते, आयुषि, धने, च। न्यायोक्ते सत्तारूपे जातिभेदे, विद्यमानतायाञ्च हितकार। जन्तुषु पु० न०।

सत्पत्त्र न० सत् शोभनं पत्त्रम्। पद्मस्य नवदले ६त०। शुदले त्रि०

सत्पथ पु० कर्म०। शोभनमार्गे, वेदादिविहिताचारे च।

सत्प्रतिग्रह पु० सद्भ्यः प्रतिग्रहः। साधुदत्तधनस्य प्रति-ग्रहे "सप्त वित्तागमा धर्म्या दायोलाभः क्रयोजयः। विभागः सम्प्रयोगश्च सत्प्रतिग्रहएवचेति" स्मृतिः।

सत्प्रतिपक्ष पु० कर्म०। तुल्यविरोधिनि, न्यायोक्ते हेतु-दोषभेदे च। [तद्वति त्रि०।

सत्फल पु० सन्ति शोभनानि फलान्यस्य। दाड़िमवृक्षे शुभ-

सत्य न० सते हितं यत्। सत्ययुगे, शपथे, सिद्धान्ते, यथा-र्थे च तद्वति त्रि०। अश्वत्थवृक्षे नान्दीमुखश्राद्धदेवे च पु०।

सत्यङ्कार पु० सत्य+कृ-घञ् नि० मुम्। 'मयैतत् अवश्यं क्रेयमित्येव' सत्यकरणे, सत्यापने (बायनादेर्दानेन)।

सत्यपुर न० सत्ययुक्तं पुरम्। विष्णुलोके।

सत्यफल पु० सत्यं फलमस्य। बिल्ववृक्षे। [याम्।

सत्यभामा, स्त्री० सत्राजितोऽपत्यतायां श्रीकृष्णस्य भार्या-

सत्यम् अव्य० सत्+यत्। स्वीकारे।

सत्ययुग न० सत्यप्रधानं युगम् शाक०। सत्यप्रचुरे प्रथमे युगे।

सत्यलोक, पु० सत्यप्रचुरो लोकः। ऊर्द्धस्थसप्तलोकमध्ये सर्वो-परिस्थे लोके। [सत्यवचनादयोऽप्यत्र।

सत्यवचस् पु० सत्यं वचोऽस्य। मुनौ। सत्यवचनयुक्ते त्रि०

सत्यवत् पु० सत्यं विद्यते ऽस्य मतुप् मस्य वः। सावित्रीपतौ नृपभेदे, मुनिभेदे च। सत्ययुक्ते त्रि० स्त्रियां ङीप् सा च व्यासस्य मातरि च।

सत्यवतीसुत पु० ६त०। मत्स्यगन्धापुत्रे व्यासे मुनिभेदे।

सत्यवाच् पु० सत्या वाक् यस्य। मुनौ, काके च तस्य शब्दे न-द्विशुभाशुभनिर्णयेन तस्य तथात्वम्। सत्यवदनयोगिनि०।

**सत्यवादिन्** त्रि० सत्यं वदति वद–णिनि यथार्थवाक्यवक्तरि।

**सत्यव्रत** पु० सत्यं व्रतमस्य। त्रिशङ्कुनामके राजभेदे। सत्यव्रत परे त्रि०।

**सत्यसङ्गर** सत्यः सङ्गरः प्रतिज्ञा यस्य। कुवेरे सत्यप्रतिज्ञे त्रि०

**सत्यसन्ध** त्रि० सत्या सन्धा सन्धान यस्य। सत्याभिसन्धौ।

**सत्याकृति** स्त्री० सत्य+डाच्+कृ–क्तिन्। "अवश्यमेतन्मया क्रेयमित्येवं" प्रतिज्ञारूपे सत्यकरणे (वायनादेर्वा)।

**सत्यानृत** न० सत्यसहितमनृतं यत्र। वणिग्वृत्तौ वाणिज्ये।

**सत्यापन** न० सत्य+णिच्–पुकुच ल्युट्। सत्याकृतौ। युच्। सत्यापनाप्यत्र स्त्री०। [सत्यवाक्ये न०

**सत्योद्य** त्रि० सत्यमुद्यं यस्य वद–क्यप्। सत्यवादिनि। कर्म०।

**सत्र** सम्बन्धे सन्ततौ च अद० चु० आ० सक० सेट्। सत्रयते असससत्रत। सत्रापयते इत्यन्ये।

**सत्र** न० सत्यते सन्तन्यते यज्ञः यज्ञभेदे,श्रीतक्षयसगुदे,वनभेदे च

**सत्राजित्** पु० सत्रेणाजयति लोकं क्विप्। श्रीकृष्णश्वशुरे।

**सत्वर** न० सह त्वरया। शीघ्रे त्वरान्विते त्रि०।

**सदंशक** पु० सह दंशेन कप्। कर्कटके। दंशकयुक्ते त्रि०।

**सदंशवदन** पु० सह दंशेन दशाकारेण तथाभूतं वदनमस्य। कङ्कविहङ्गे।

**सदञ्जन** न० कर्म०। पुष्पाञ्जने रीतिजाते अञ्जनभेदे।

**सदन** न० सीदत्यस्मिन् +सद–ल्युट्। गृहे, जले च।

**सदय** पु० सन् अयः। साधुशुभावहविधौ। सह दयया। दयान्विते त्रि०।

**सदस्** स्त्री० न०। सीदन्त्यस्याम् सद–असि। सभायाम्।

**सदस्य** पु० सदसि साधुर्वसति वा यत्। न्यूनातिरिक्तताविपर्ययपरिहारार्थं विधानदर्शिनि। सभासदि त्रि०।

**सदा** अव्य० सर्वस्मिन् काले दाच् सादेशः। सर्वस्मिन् काले इत्यर्थे।

**सदागति** पु० सदा गतिरस्य। वायौ सदागतियुक्ते त्रि०।

**सदाचार** पु० कर्म० ६त० वा "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते। तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते" इति मनूक्तदेशप्रचलिताचारे "साधवः क्षीणदोषाः स्युः सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते" इत्युक्ते साधूनामाचरणे च।

**सदातन** पु० सदा भवः सदा+ट्युल् तुट् च। विष्णौ। नित्ये त्रि०। स्त्रियां ङीप्। [सदातोयार्थे

**सदातोया** स्त्री० सदा तोयानि यस्याम्। करतोयानद्याम्।

**सदात्मन्** त्रि० सन् साधुरात्मा चित्तं यस्य। साधुचित्ते।

**सदादान** पु० सदा दानं मदजलं त्यागो वा यस्य। ऐरावते गजे+सदात्यागिनि त्रि०। [युक्ते त्रि०।

**सदानन्द** पु० सदा आनन्दोयस्य। सदाशिवे। अनवरतानन्द-

**सदानर्त्त** पु० सदा नृत्यति नृत–अच्। खञ्जनविहगे। सदा नृत्यति त्रि०

**सदानीरा** स्त्री० सदा नीरमस्याम्। करतोयानद्याम्।

**सदापुष्प** पु० सदा पुष्पं यस्य। नारिकेलवृक्षे। रक्तार्के स्त्री० ङीप्। सदापुष्पयुक्ते त्रि० [कुन्दे च।

**सदाप्रसून** पु० सदा प्रसूनमस्य। रोहितकवृक्षे, अर्कवृक्षे,

**सदाफल** पु० सदा फलमस्य। नारिकेलवृक्षे, उडुम्बरवृक्षे च वार्त्ताकुभेदे त्रि० स्त्रियां टाप्।

**सदाभद्रा** स्त्री० सदा भद्रमस्याः। गाम्भारीवृक्षे।

**सदाशिव** पु० सदा शिवमस्मात्। महादेवे।

**सदुत्तर** न० कर्म०। व्यवहारे,प्रतिज्ञापक्षानुसारियुत्तरे दृष्टस सम्यगुत्तरे च ६त०। तद्वति त्रि०।

**सदृक्ष** त्रि० समानं दर्शनमस्य, दृश+क्स समानस्य सादेशः। तुल्यरूपे। [तुल्यरूपे।

**सदृश्** त्रि० समानं दर्शनमस्य समान×दृश–क्विप् सादेशः।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश–टक्। तुल्यरूपे स्त्रियां ङीप्।

**सदेश** पु० सह देशेन। निकटे। देशान्विते त्रि०।

**सद्धेतु** पु० कर्म०। न्यायोक्ते हेत्वाभासदोषरहिते हेतौ।

**सद्भाव** पु० सतोभावः, सन् वा भावः। विद्यमानत्वे साधुभावे च। "सद्भावमागत" इति भट्टिः। [इति त्रि०।

**सद्भूत** न० असत् सत् भूतम्। सत्+च्वि–भू–क्त। यथार्थे। त-

**सद्मन्** न० सीदत्यस्मिन् सद–मनिन्। गृहे, जले च।

**सद्यःक्षत** त्रि० सद्यस्तत्क्षणात् क्षत. क्ष–क्त। तत्क्षणक्षते।

**सद्यःप्राणकर** त्रि० सद्योऽत्वात् प्राणं बलम् आयुर्वृद्धिञ्च करोति कृ–अच्। "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम्। घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षट्" इत्युक्ते द्रव्यसमूहे।

**सद्यःप्राणहर** त्रि० सद्यः प्राणमायुर्बलं वा हरति हृ–अच्। "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षडित्युक्ते" शुष्कमांसादिद्रव्यसमूहे

**सद्यःशोथा** स्त्री० सद्यः शोथोयस्याः। कपिकच्छाम्।

**सद्यःशौच** न० सद्यः शौचमपनेयमशौचम्। पठत्युक्ते शौचनाश्ये अशौचे ६त०। तद्वति मिलनदग्धोलियादौ त्रि०।

**सत्यवादिन्** त्रि० सत्यं वदति वद-णिनि। यथार्थवाक्यवक्तरि।

**सत्यव्रत** पु० सत्यं व्रतमस्य। त्रिशङ्कुनामके राजभेदे। सत्यसत्परे त्रि०।

**सत्यसङ्कर** सत्यः सङ्करः प्रतिज्ञा यस्य। कुवेरे सत्यप्रतिज्ञे त्रि०

**सत्यसन्ध** त्रि० सत्या सन्धा सन्धानं यस्य। सत्याभिसन्धौ।

**सत्याकृति** स्त्री० सत्य+डाच्+कृ-क्तिन्। "अवश्यमेतत्क्रयामेयमित्येवं" प्रतिज्ञारूपे सत्यकरणे (वायनादेओया)।

**सत्यानृत** न० सत्यसहितमनृतं यत्र। वणिग्वृत्तौ वाणिज्ये।

**सत्यापन** न० सत्य+णिच्-पुकच ल्युट्। सत्याकृतौ। युच्। सत्यापनाप्यत्र स्त्री०। [सत्यवाक्ये न०।

**सत्योद्य** त्रि० सत्यमुद्यं यस्य वद-क्यप्। सत्यवादिनि। कर्म०।

**सत्र** सम्बन्धे सन्ततौ च अद० चु० आ० सक० सेट्। सत्रयते असससत्रत। सत्रापयते इत्यन्ये।

**सत्र** न० सत्यते सन्यते यज्ञ। यज्ञभेदे, श्रीकृष्णस्य श्वशुरे, नृपभेदे च

**सत्राजित्** पु० सत्रे णाजयति लोक नृ। श्रीकृष्णश्वशुरे।

**सत्वर** न० सह त्वरया। शीघ्रे त्वरान्विते त्रि०।

**सदंशक** पु० सह दंशेन कप्। कर्कटके। दंशकयुक्ते त्रि०।

**सदंशवदन** पु० सह दंशेन दंशाकारेण तथाभूतं वदनमस्य। काङ्कविहगे।

**सदञ्जन** न० कर्म०। पुष्पाञ्जने रीतिजाते अञ्जनभेदे।

**सदन** न० सीदत्यस्मिन् +सद-ल्युट्। गृहे, जले च।

**सदय** पु० सन् अय। साधुशुभावहविधौ। सह दयया। दयान्विते त्रि०।

**सदस्** स्त्री० न०। सीदन्त्यस्याम् सद-असि। सभायाम्।

**सदस्य** पु० सदसि साधुर्वसति वा यत्। न्यूनातिरिक्तताविपर्ययपरिहारार्थं विधानदर्शिनि। सभासदि त्रि०।

**सदा** अव्य० सर्वस्मिन् काले दाच् सादेशः। सर्वस्मिन् काले इत्यर्थे।

**सदागति** पु० सदा गतिरस्य। वायौ सदागतियुक्ते त्रि०।

**सदाचार** पु० कर्म० ६त० वा "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते। तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते" इति मनूक्तदेशप्रचलिताचारे "साधवः क्षीणदोषाश्च सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारः स उच्यते" इत्युक्ते साधूनामाचरणे च।

**सदातन** पु० सदा भव. सदा×ट्युल् तुट् च। विष्णौ। नित्ये त्रि०। स्त्रियां ङीप्। [एकाग्रपर्याये।

**सदातोया** स्त्री० सदा तोयानि यस्याम्। करतोयानद्याम्,

**सदात्मन्** त्रि० सन् साधुरात्मा चित्तं यस्य। साधुचित्ते।

**सदादान** पु० सदा दानं मदजलं त्यागो वा यस्य। ऐरावते गजे। सदात्यागिनि त्रि०। [युक्ते त्रि०।

**सदानन्द** पु० सदा आनन्दोऽस्य। सदाशिवे। अनवरतानन्द-

**सदानर्त्त** पु० सदा नृत्यति नृत-अच्। खञ्जनविहगे। सदा नृत्यति त्रि०

**सदानीरा** स्त्री० सदा नीरमस्याम्। करतोयानद्याम्।

**सदापुष्प** पु० सदा पुष्पं यस्य। नारिकेलवृक्षे। रक्तार्के स्त्री० ङीप्। सदापुष्पयुक्ते त्रि०। [कुन्दे च।

**सदाप्रसून** पु० सदा प्रसूनमस्य। रोहितकवृक्षे, अर्कवृक्षे,

**सदाफल** पु० सदा फलमस्य। नारिकेलवृक्षे, उडुम्बरवृक्षे च वार्त्ताकुभेदे त्रि० स्त्रियां टाप्।

**सदाभद्रा** स्त्री० सदा भद्रमस्याः। गाम्भारीवृक्षे।

**सदाशिव** पु० सदा शिवमस्मात्। महादेवे।

**सदुत्तर** न० कर्म०। व्यवहारे, प्रतिज्ञापत्रानुसारियुत्तरे प्रश्नस्य सम्युत्तरे च ६त०। तद्वति त्रि०।

**सदृक्ष** त्रि० समानं दर्शनमस्य, दृश+क्स समानस्य सादेशः। तुल्यरूपे। [तुल्यरूपे।

**सदृश्** त्रि० समानं दर्शनमस्य समान×दृश-क्विप् सादेशः।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश-टक्। तुल्यरूपे स्त्रियां ङीप्।

**सदेश** पु० सह देशेन। निकटे। देशान्विते त्रि०।

**सद्धेतु** पु० कर्म०। न्यायोक्ते हेत्वाभासदोषरहिते हेतौ।

**सद्भाव** पु० सतोभावः, सन् वा भावः। विद्यमानत्वे साधुभावे च। "सद्भावमागत" इति भट्टि। [द्वति त्रि०।

**सद्भूत** न० असत् सत् भूतम्। सत्+च्वि-भू-क्त। यथार्थे। त०

**सद्मन्** न० सीदन्त्यस्मिन् सद-मनिन्। गृहे, जले च।

**सद्यःक्षत** त्रि० सद्यस्तत्क्षणात् क्षत. क्षण-क्त। तत्क्षणक्षते।

**सद्यःप्राणकर** त्रि० सद्योहठात् प्राणं बलम् आयुर्वा तद्विद्ध करोति कृ-अच्। "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् घृतमुष्णोदकञ्चैव सद्यःप्राणकराणि षड्" इत्युक्ते" द्रव्यसमूहे।

**सद्यःप्राणहर** त्रि० सद्यः प्राणमायुर्वलं वा हरति हृ-अच्। "शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षड्" इत्युक्ते "शुष्कमांसादिद्रव्यसमूहे

**सद्यःशोथा** स्त्री० सद्यः शोथोऽस्याः। कपिकच्छ्वाम्।

**सद्यःशौच** न० सद्यः शौचमपनेयमशौचम्। एतदुक्ते शौचनाश्ये अशौचे ६त०। तद्वति पितृपक्षोऽन्तियादौ त्रि०।

सद्यस् अव्य० समेऽह्नि नि०। तत्क्षणे, समानदिवसे इत्यर्थेच।

सद्यस्क त्रि० सद्योभवः कन्। सद्योजाते।

सद्योजात पु० सद्योजायते जन-कर्त्तरि क्त। वत्से,शिवमूर्त्तिभेदे च आशुजाते त्रि०।

सद्योभाविन् पु० सद्योभवति भू-णिनि। वत्से।

सद्वृत्त न० वृत-क्त-कर्म्म०। साधुस्वभावे साधुवर्त्तने। द्व० सच्चरित्रवति त्रि०। "सद्वृत्तसन्निकर्षोऽपि चषाईमपि प्रस्तते" इति पुराणम्।

सद्वृत्ति स्त्री० कर्म्म०। उत्तमचरित्रे उत्तमव्याख्यानरूपे ग्रन्थे च सती वृत्तिः यस्य। सद्वृत्तिमति त्रि०"सद्वृत्तिः सन्धिबन्धनेति" माघः। [खियावाडाप्।

सधर्म्मन् त्रि० समानोधर्म्मोऽस्यअनिच् समानस्य सः। सदृशे।

सधर्म्मचारिणी स्त्री० सह धर्म्मं चरति चर-णिनि। सह धर्म्मकारिण्यां भार्य्यायाम्।

सधर्म्मिन् त्रि० समानं धर्मं चरति। तुल्यधर्मचरणकर्त्तरि। स्त्रियां ङीप्। सा च पत्न्याम्।

सधवा स्त्री० सह धवेन। जीवत्पतिकायां स्त्रियाम्।

सध्र्यच् त्रि० सह-अञ्चति अन्च-क्विप् सहस्य सध्रिः। सहचरे स्त्रियां ङीप् सध्रीची सा च भार्य्यायाञ्च।

सन पु० सन-अच्। मकटामालविशेषे। [सनम्।

सनक पु० सन-वुन्। मुनिभेदे "सनकञ्च सनन्दञ्चेति" तर्पणमन्त्रः।

सनत् पु० सन-अति। चतुर्मुखे ब्रह्मणि, सदेत्यर्थे अव्य०।

सनत्कुमार पु० द्वत०। ब्रह्मण पुत्रे मुनिभेदे।

सनन्द पु० सह नन्देन। मुनिभेदे। आनन्दयुक्ते त्रि०।

सनपर्णी स्त्री० सनस्येव पर्णान्यस्या ङीप्। शणपर्ण्याम्।

सनसूत्र न० 'शणस्य सूत्रमस्य अच् ष०। काष्ठधारणार्थं सूत्रतते जाले।

सना अव्य० सदा-नि दस्य न। सदेत्यर्थे।

सनातन त्रि० सदा भवः ट्युल् तुट् च नि०। सदाभवे वस्तुनि नित्ये च स्त्रियां ङीप् सा च लक्ष्म्यां, दुर्गायाञ्च। विष्णौ ब्रह्मणि, दिव्यमनुष्ये च पु०।

सनाभि पु० समाना नाभिर्यस्य। ज्ञातौ तस्य एकदेहोत्पन्नत्वेन तुल्यनाभित्वा इति तथात्वम्। सदृशे,स्नेहयुक्ते च त्रि०

सनामक पु० सना सदा आमयति आम-ण्वुल्। शोभाञ्जनवृक्षे तत्सम्पर्कादिभोजनस्य रोगहेतुत्वात्तथात्वम्। सह नाम्ना कप्। नामयुक्ते त्रि०।

सनि स्त्री० सन-इन्। पूजायां, दाने च। बहुत्वपूर्वकनियोते स्त्री० वा ङीप्।

सनिष्ठी(ष्ठे)व न० सह निष्ठी(ष्ठे)वेन। मुखच्युतशारकिणे (थुतु कारे)। [युक्ते च।

सनीड त्रि० समानां नीडं सह नीडेन वा। निकटस्थे, नीड-

सन्तत न० सम्+तन-क्त। सतते निरन्तरे। नैरन्तर्येऽति विस्तीर्णे च त्रि०।

सन्तति स्त्री० सन्तन्यते सम्+तन-क्तिन्। गोत्रे, पुत्रे, कन्यायाञ्च। भावे-क्तिन्। विस्तारे, पङ्क्तौ, अविच्छिन्नधारायाञ्च।

सन्तप्त त्रि० सम्+तप-क्त। अध्वगत्यादिना परिश्रान्ते, अग्नितप्ते, तेन विशुद्धे च 'सन्तप्तचामीकरवल्गुवक्ष'मिति भट्टिः।

सन्तमस न० सन्ततं तमः अच् समा०। गाढान्धकारे, मोहे च

सन्तान पु० सम्+तन-घञ्। वंशे, अपत्ये, विस्तारे, कल्पवृक्षे च।

सन्तानिका स्त्री० सम्+तन-ण्वुल् टाप् अत इत्वम्। क्षीरसरे, मर्कटजाले, फेने, छुरिकाफले च।

सन्ताप पु० सम्यक् तापः प्रा०। वह्निजाते तापे।

सन्तापन पु० सन्तापयति सम्+तप-णिच्-ल्यु। कामदेवस्य पञ्चशरान्तर्गते शरभेदे। सन्तापकारके त्रि०।

सन्तोष पु० सम्+तुष घञ्। धैर्य्ये, सात्त्वे च 'सन्तोषमूलं हि सुखमिति मनुः। [सन्दंशिकाप्यत्र स्त्री०।

सन्दंश पु० सम्-दन्श-घञ्। (साँडाशी) यन्त्रभेदे। पुंस्।

सन्दंशपतित पु० सन्दंशे तन्मध्ये पतित इव। मीमांसकोक्तन्यायभेदे।

सन्दर्भ पु० सम्+दृभ-घञ्। रचनायां, ग्रन्थने, प्रबन्धे"शृङ्गारैकमकाशय वारोक्तिः श्लेषता तथा। नानार्थत्वं वेदान्तं सन्दर्भः कथ्यते बुधै'रित्युक्ते कथनभेदे, बहुतात्पर्य्यविशिष्टे च।

सन्दान न० सम्+दो-ल्युट्। बन्धने, दाम्नि,सम्यक्प्रयुक्ते च दा ल्युट्। सम्यगुदाने न०। गजस्यागीवतोरधोभागे पु०।

सन्दानिका स्त्री०सन्दानं संवयवनमस्यस्य ठन्। विट्खदिरे

सन्दानित त्रि० सन्दानं जातमस्य तार० इतच्। बद्धे 'रचनामन्दानितषट्पदे'ति मालविकाग्निमित्रम्। [गोठके

सन्दानिनी स्त्री० सन्दानं बन्धनं गवामत्र इनि ङीप्।

सन्द्राव पु० सम्+द्रु-घञ्। पलायने।

सन्दाह पु० सम्+दह-घञ्। मुखादिशोथे, सम्यग्दाहे च।

सन्दिग्ध त्रि० सम्+दिह-कर्त्तरि क्त। सन्देहयुक्ते। कर्म्मणि-क्त। सन्देहविषये।

सन्दित त्रि सम्+दो-क्त। बद्धे। [कर्मणि क्त। उपदिष्टे त्रि०।
सन्दिष्ट न० सम्+दिश भावे-क्त। वाचिकार्थकथने वार्त्ताया म्
सन्दिहान त्रि० सम्+दिह शानच्। सन्देहयुक्ते।
सन्दी स्त्री० सम्+दो ड गौ०ङीष्। खट्वायाम्।
सन्दीप पु० सन्दीप्यतेऽसौ सम्+दीप-कर्त्तरि यत्। मयूरशिखाद्ये।
सन्देश पु० सम्+दिश-घञ्। वाचिकार्थकथने वार्त्तायाम।
सन्देशहर पु० सन्देशं हरति अभीष्टस्थानं कथनाय नयति हृ अच्। दूते 'तवैव सन्देशहरादिति' रघु। ण्वुल्। सन्देशहारकोऽप्यत्र।
सन्देह पु० सम्+दिह-घञ्। संशयशब्दार्थे।
सन्दोह पु० सम्+दुह-घञ्। समूहे। सम्यग्दोहे च
सन्द्राव पु०सम्+द्रु-घञ्। पलायने।
सन्धा स्त्री० सम+धा अङ्। स्थितौ, प्रतिज्ञायाम, सन्धाने, सुरोत्पादनानुगुणे व्यापारभेदे, अनुसन्धाने च।
सन्धान न० सम् धा ल्युट्। सुरादिसम्पादनानुगुणे व्यापारे सौमरसकखण्डनालके अभिषवे, अनुसन्धाने, सङ्घट्टने च सन्धाने स्त्रीत्वमपि तत्र ङीप्। सा च कृष्यशालायाञ्च
सन्धि पु० सम्+धा-कि। नृपाणां षड्गुणान्तर्गते मेलनार्थ मैत्रीकरणरूपे व्यापारे, संयोगे, अस्थिद्वयसंयोगस्थाने, चौरादिकृतसुरङ्गायां 'सन्धिं कृत्वा तु चौर्यमिति स्मृति भगे, सङ्घट्टने,नाटकाङ्गविशेषे, व्याकरणोक्ते वर्णद्वयजाते वर्णविकारभेदे।
सन्धिचौर पु० सन्धिना कृतसुरङ्गया चौरः। सन्धिं कृत्वा चौर्यकारके (सिन्धेल)। [परार्थहारके
सन्धिजीवक पु० सन्धिं जीवति जीव ण्वुल्। प्राप्तेन
सन्धित त्रि० सन्धा जाताऽस्य तार०इतच्। कृतसन्धे,मिलिते च
सन्धिनी स्त्री० सन्धा वृषभसंयोगस्तज्जगर्भोऽस्त्यस्याः इनि ङीप्। वृषभसंयोगेन धृतगर्भायां गवि।
सन्धिपूजा स्त्री० सन्धौ अष्टम्यां शेषे नवम्याश्चाद्ये दण्डे पूजा। आश्विनशुक्लाष्टमीनवमीसन्धिकाले विहितपूजायाम्।
सन्धिबन्ध पु० सन्धिं बध्नाति संयुनक्ति सम्+बन्ध-घञ्। भूमिचम्पके। तद्वेष्टने हि भग्नसन्धियोजनं वैद्यके प्रसिद्धम्
सन्धिला स्त्री० सन्धिं लाति ला क। नद्यां, मदिरायाञ्च। स्वार्थे सन्। सुरङ्गायाम्।
सन्धिविग्रहाधिकारिन् पु० सन्धिविग्रहेषु अधिकरोति अधि+कृ णिनि। नृपाणां सन्धिविग्रहाद्यधिकारिमन्त्रिभेदे
सन्धिवेला स्त्री० सन्धियुक्ता वेला समय। अहोरात्रसन्धिसमये
सन्धिहारक पु० सन्धिना सुरङ्गया हरति परद्रव्यम् हृ ण्वुल् सन्धिचौरे। 'सिन्धेल'
सन्धुक्षित त्रि० सम+धुक्ष क्त। उद्दीपिते।
सन्धेय त्रि० सम+धा यत्। संयोज्ये मेलनीये।
सन्ध्या स्त्री०सम् ध्यै अङ् टाप्। एकरूपकालोत्तरभाविपररूपकालस्यापकाये दिवारात्र्योः मध्यवर्त्तिकाले स च दिवाशेष दण्डसहितरात्रिप्रथमदण्डात्मकः कालः तयोश्चतुर्दण्डात्मककालयं 'त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टये। नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञिते इति स्मृति। अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः। सा च सन्ध्या समाख्यातेति स्मृति। प्रातराह्ने, सन्ध्याकाले-उपास्यदेवताभेदे च। सन्ध्यामुपासते ये तु नियतं संशितव्रता इति स्मृति। 'प्रातः सन्ध्यां ततः कृत्वा सकलं बुध आचरेदिति स्मृति। एतद्विशेषे युगदभिधाने। 'चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्। तस्य तावच्छती सन्ध्या सन्ध्यांशश्च प्रकीर्त्तित'इत्युक्ते युगसन्धिकाले, नदीभेदे, ब्रह्ममतोभेदे च।
सन्ध्यांश पु० सन्ध्याया सत्ययुगादेरंश। सत्ययुगादेरंशभेदे तत्प्रमाणम सन्ध्याशब्दे द्रष्टव्यम्। 'सन्ध्या सन्ध्यांशसहितं विज्ञेयं चतुर्युगमिति मनु।
सन्ध्याचल पु० 'सन्ध्या वसिष्ठ तपवान् तत्र यस्माद्गिरौ सुत। ततः सन्ध्याचलं नाम तस्य गायन्ति देवता' इत्युक्ते पर्वतभेदे।
सन्ध्यानटिन् सन्ध्यायां नटति नट-णिनि। शिवे।
सन्ध्यापुष्पी स्त्री० सन्ध्यायां पुष्पमस्याः। जातिदृक्षे।
सन्ध्याबल पु० सन्ध्याया सन्ध्योपलक्षिते रात्रिकाले बलयस्य। रात्रौ बलयुक्ते राक्षसे। [कालिकमेव च।
सन्ध्याभ्र न० सन्ध्याकालिकमभ्रमिव। सुवर्णगैरिके। सन्ध्या-
सन्ध्याराग न० सन्ध्याया इव रागोऽस्य। सिन्दूरे।
सन्ध्याराम पु० सन्ध्यायां तदाख्यभार्यायां रमते रम घञ्। चतुर्मुखे ब्रह्मणि। [खर्वे।
सन्न पु० सीदति शद क्त। पियालवृक्षे अल्पसन्ने त्रि०स्वार्थे कन्।
सन्नकद्रु पु० सन्न एव सन्नकः कर्म०। पियालवृक्षे, खर्वदृक्षे च
सन्नत त्रि० सम+नम क्त। प्रणते, शब्दायमाने च।
सन्नति स्त्री० सम+नम क्तिन्। प्रणामे, ध्वनौ, नम्रतायाञ्च।
सन्नद्ध त्रि० सम्+नह क्त। कृतसन्नाहे धृतवर्मणि, व्यूहरचनयावस्थिते सैन्यादौ, आततायिनि,सक्तादियुक्ते च।
सन्नय पु० सम+नी अच्। समूहे, पश्चिस्थिते-सैन्य च।

**सन्नहन** न० सम्+नह-ल्युट्। वर्मपरिधाने, उद्योगे, सम्यग् बन्धने च।

**सन्नाह** पु० सन्नह्यते सम्+नह-घञ्। (सांजोया) वर्मणि।

**सन्निकर्ष** पु० सम्+नि-कृष-घञ्। सान्निध्ये "अदूरसन्निकर्षौ हि चणार्द्धमपि ग्रसते" इति पुराणम्। विषयेन्द्रियसम्बन्धे, न्यायमते ज्ञानलक्षणासामान्यलक्षणायोगजधर्मविशेषात्मके अलौकिकप्रत्यक्षसाधने उपायभेदे च।

**सन्निकर्षण** न० सम्+नि+कृष-ल्युट्। सन्निधाने।

**सन्निकृष्ट** त्रि० सम्+नि+कृष क्त। निकटस्थे।

**सन्निध** न० सम्+नि+धा-क। नैकट्ये। समीपस्थिते त्रि०।

**सन्निधान** न० सम्+नि+धा-ल्युट्। नैकट्ये, सामीप्ये।

**सन्निधि** पु० सम्+नि+धा-कि। सामीप्ये। कर्मणि कि। इन्द्रियविषये। कर्म०। साधु निधौ।

**सन्निपतित** त्रि०सम्+नि-पत-क्त। मिलिते,उपस्थिते,मृते च

**सन्निपात** पु० सम्+नि+पत-घञ्। मेलने "सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्येति" व्या० परि०। कफादिधातुत्रयस्य विजातीयवैषम्यरूपत्रिदोषजे विकारे, नाशे, उपस्थितौ च।

**सन्निपातज्वर** पु० सन्निपातस्य तदर्थो ज्वरः। वैद्यकोक्ते त्रिदोषजविकारसाधने ज्वरे।

**सन्निपातनुद्** पु० सन्निपातं त्रिदोषजविकारं तुदति तुद-क्विप्। नेपालनिम्बे।

**सन्निबन्धन** न० सम्यक्‌निबन्धनं प्रा०। नानास्थानस्थवाक्यानामेकत्र सङ्कलने, तदुपयोगिग्रन्थभेदे च। ७त०। सम्यन्निबन्धवति त्रि० "सहृत्तिः सन्निबन्धनेति" माघ। [समाश्रते।

**सन्निभ** त्रि० सम्+नि+भा-क। सदृशे। निभादिवदस्य नित्य

**सन्निवेश** पु० सम्+नि+विश-आधारे घञ्। पुरादेर्वाह्यस्थे देशे। भावे घञ्। सम्यक् स्थितौ।

**सन्निहित** त्रि० सम्+नि+धा-क्त। निकटस्थे "कस्मात्सन्निहितं नैवेति" मीमांसा। सम्यक्स्थापिते च। भावे क्त। नैकट्ये न०। [युक्ते, अर्पिते च।

**सन्न्यस्त** त्रि० सम्+नि+अस-क्त। निक्षिप्ते, त्यक्तसम्यक्‌त्यागे,

**सन्न्यास** पु० सम्+नि+अस-घञ्। "काम्यानां कर्मणां न्यासं सन्न्यासं कवयोविदु"रित्युक्ते विहितकर्मणां विधानेन सम्यक्‌त्यागे, तदुपयोगिचतुर्थाश्रमे, चैत्रे-कर्त्तव्ये पुराणप्रसिद्धशिवव्रतभेदे च।

**सन्न्यासिन्** पु० सम्+नि+अस-णिनि। सन्न्यासवति, चतुर्थाश्रमवति, चैत्रे कर्त्तव्यशिवव्रतकर्त्तरि च।

**सपक्ष** पु० समानः पक्षः। तुल्यरूपे साध्यसाधनाश्रये पक्षे च।

**सपत्त्राकरण** न० सह पत्त्रेण पक्षेण सपत्त्रः तथा क्रियते सपत्त्र+डाच्+कृ-ल्युट्। पक्षेण सह शरवेधनरूपे अत्यन्तव्यथने। कर्मणि-क्त। सपत्त्राकृत। तथा पीडिते त्रि०।

**सपत्न** पु० सह एकार्थे पतति यतते पत-न सहस्य सः। शत्रौ।

**सपत्नारि** पु० सपत्न अरिरिव। (वेडवाश) वंशभेदे।

**सपत्नी** स्त्री० समानः पतिर्यस्याः ङीप् न च। एकभर्तृकायां स्त्रियाम्, समस्वामिकाया भूम्यादौ तु सपतिरित्यपि।

**सपदि** अव्य० सह पद्यते पद-इन् सहस्य सः। तत्क्षणद्रव्ये "सपदि मुकुलिताक्षीमिति" कुमारः। [पर्य्यीत्।

**सपर** पूजायां कण्ड्वादि० पर० सक० सेट्। सपर्य्यति अस-

**सपर्य्या** स्त्री० सपर-यक्-अ टाप्। पूजायाम् "सोऽहं सपर्य्याविधिभाजनेनेति" रघुः। [चतुर्थांशविशिष्टे च।

**सपाद** स्त्री० सह पादेन चरणेन चतुर्थांशेन वा। पादसहिते,

**सपिण्ड** त्रि० समानः पिण्डः स्वदेहारम्भकदेहोयस्य। एकदेहारम्भदेहे ज्ञातिभेदे "असपिण्डा च या मातुरिति" स्मृति। ज्ञातीनाञ्च साक्षात् परम्परया अतिपरम्परया वा एकदेहारम्भत्वात्तथात्वम्। तत्र च दाये अशौचे च सापिण्ड्यविशेषो बृहदभिधाने वक्ष्यते। "दातृत्वभोक्तृत्वेनैकपिण्डवति दायग्रहणोपयोगि सापिण्ड्य" मिति दायभाग.।

**सपिण्डीकरण** न० सह पिण्डेन ततः अभूततद्भावे च्वि+कृ-ल्युट्। प्रेतत्वविमोचनाय प्रेतोद्देशेन कर्त्तव्ये पित्रादिपिण्डसमन्वयकरणरूपे श्राद्धभेदे "सपिण्डीकरणादूर्द्ध्वं न दद्यात् प्रतिमासिक" मिति स्मृतिः।

**सपिण्डीकृत** त्रि० सह पिण्डैः पित्रादिपिण्डैः सपिण्डः ततः च्वि-कृ-कर्मणि क्त। यदुद्देशेन सपिण्डीकरणं श्राद्धं कृतं तस्मिन् मृते जने "ये सपिण्डीकृताः प्रेत." इति स्मृतिः।

**सपीतक** पु० सह समानः पीतकेन। राजघोषातकीवृक्षे।

**सपीति** स्त्री० पा-क्तिन् पीतिः पानम् सह एकत्र पीतिः। भ्रात्रादीनां सह भोजने। [ऊर्द्ध्वे।

सप्ताधिकतत्सङ्ख्यायां, तत्सङ्ख्यान्विते च।

**सप्तच्छद** पु० सप्त सप्त छदाः प्रतिपत्रम् यस्य वृत्तौ सङ्ख्या यव्दस्य वीप्सार्थता भाष्योक्ता। (छातिम) वृक्षे।

**सप्तजिह्व** पु० सप्त जिह्वा इव आस्वादसाधनानि अर्चिषो यस्य। वह्नौ "काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा। उग्रा प्रदीप्ता च समीटयोनेः सप्तैव लोलाः कथिताश्च जिह्वा" इत्युक्तानां सप्तानामग्निज्वालानामेव तज्जिह्वात्वकल्पनात्। [रादयोप्यत्र।

**सप्तज्वाल** पु० सप्त कालीत्यादयः ज्वाला यस्य। वह्नौ सप्तार्चि-

**सप्ततन्तु** सप्तभिः भूरादिभिर्व्याहृतिभिस्तन्यते तन-तन्तु। यज्ञे। [ङ्ख्यान्विते च।

**सप्तति** स्त्री० सप्तगुणिता दशतिः नि०। (सत्तर)सङ्ख्यायां तत्स-

**सप्ततितम** त्रि० सप्ततेः पूरणः तमप्। येन सप्ततिसङ्ख्या पूर्य्यते तस्मिन् अर्थे। [पूर्य्यते तस्मिन्नर्थे।

**सप्तदश** त्रि० सप्तदशानां पूरणः डट्। येन सप्तदशसङ्ख्या

**सप्तद्वीपा** स्त्री० सप्त जम्बूप्रभृतयो द्वीपाः यस्याः। जम्बूप्रभृतिसप्तद्वीपवत्यां पृथिव्याम्।

**सप्तधा** अव्य० सप्तन्+प्रकारे धाच्। सप्तप्रकारे।

**सप्तधातु** पु० ब० व०। सप्तगुणिता धातवः। देहस्थेषु "रसाख्यमांसमेदोऽस्थिमज्जानः शुक्रसंयुताः। शरीरस्था इमे ज्ञेयाः पण्डितैः सप्त धातवः" इत्युक्तेषु रसादिषु धातुषु।

**सप्तन्** पु० त्रि०। सप-तनिन्। (सात) सङ्ख्यान्विते।

**सप्तनामा** स्त्री० सप्त नामानि यस्याः टाप्। आदित्यभक्तायाम्

**सप्तपत्र** पु० सप्त सप्त पत्राणि प्रतिपत्रं यस्य। सूर्यवृक्षे, सप्तच्छदवृक्षे च।

**सप्तपदी** स्त्री० सप्तानां पदानां समाहारः ङीप्। विवाहकाले मङ्गलिकासु गन्तव्येषु सप्तसु पदेषु।

**सप्तपर्ण** पु० सप्त सप्त पर्णान्यस्य प्रतिपर्णम्। (छातिम) वृक्षे। लज्जालुलतायां स्त्री०।

**सप्तपाताल** न० समाहारद्विगुः पातालादि। "अतलं वितलञ्चैव नितलञ्च क्रमादधः। महातलञ्च सुतलं पातालं सप्त कीर्त्तितं" भित्युक्तेषु सप्तसु भूमेरधःस्थलोकेषु।

**सप्तप्रकृति** स्त्री० ब० व० सप्तसंख्याता प्रकृतयः। साङ्ख्यसिद्धे महदहङ्कारपञ्चतन्मात्ररूपसप्तभूतहेतुमन्दादितत्त्वात्मके पदार्थे सप्तके "महदाद्याः प्रकृतिविकृतयः सप्त" इति साङ्ख्यकारिका षोडशपदार्थहेतुत्वात् प्रकृतित्वम् प्रकृतिकार्य्यत्वाच्च विकृतित्वमाचाम्।

**सप्तभद्र** पु० सप्तसु स्थानेषु भद्रमस्य। शिरीषवृक्षे।

**सप्तम** त्रि० सप्तानां पूरणः मट्। येन सप्तसंख्या पूर्य्यते तस्मिन्नर्थे स्त्रियां ङीप्। सा च चन्द्रस्य सप्तमकलाया ह्रासवृद्धिरूपायां तिथौ च।

**सप्तरक्त** पु० सप्त रक्तानि प्रयवान्यस्य। "पाणिपादतले रक्ते नेत्रान्तरनखानि च। तालुकाधरजिह्वाश्च प्रयस्य सप्तरक्त ते" त्युक्तस्थानेषु रक्तत्ववति जने।

**सप्तर्षि** पु० ब० व० सप्त ऋषयः कर्म०। "मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः वशिष्ठश्चे" त्युक्तेषु सप्तसु ऋषिषु।

**सप्तर्षिमण्डल** त्रि० ६त०। आकाशे नित्यं भुवनचक्रपरिभ्रामके नक्षत्रसप्तकात्मके नक्षत्रमण्डलभेदे "सप्तर्षिमण्डलं तस्मादूर्ध्वस्ते सर्व्वकोपरीति" पुराणम्।

**सप्तला** स्त्री० सप्तधा लाति ला-क। नवमालिकायां चर्म्मकषायां, गुञ्जायां, पाटलायाञ्च।

**सप्तशती** स्त्री० सप्तानां शतानां समाहारः। मार्कण्डेय पुराणान्तर्गते सप्तशतमन्त्रसमुदायात्मके देवीमाहात्म्यबोधके ग्रन्थभेदे "मध्ये सप्तशतीं जपेदिति" पुराणं तद्विभागो इहरमिधाने वक्ष्यते।

**सप्तशलाक** पु० सप्त शलकाकारा रेखा यत्र। ज्योतिषोक्ते विवाहे-वर्ज्यदोषज्ञापके सप्तशलाकाकारितचक्रभेदे।

**सप्तशिरा** स्त्री० सप्त शिरा यस्याः। ताम्बूलवल्लयाम्।

**सप्तसप्ति** पु० सप्त सप्तयोऽश्वा यस्य। सूर्य्ये, अर्कवृक्षे च। सप्ताश्वादयोऽप्यत्र।

**सप्तसागर** पु० ब० व० सप्तसंख्याता सागराः। "लवणेक्षुसुरासर्पिर्दधिदुग्धजलान्तकाः" इत्युक्तेषु सप्तसु सागरेषु। सप्त घृतादिकल्पिता सागरादव देयपदार्थास्त्र। पुराणोक्ते स्वनामख्याते महादानभेदे तच्चर्या इहरमिधाने।

**सप्तांशु** पु० सप्त अंशवो ज्वालायस्य। "कालीकरालीत्याद्युक्त" सप्तज्वालावति वह्नौ। [वृक्षे च।

**सप्ताश्ववाहन** पु० सप्त अश्वाः वाहनान्यस्य। सूर्य्ये, अर्क-

**सप्ति** पु० सप-ति। अश्वे। ["चलशफरीविघट्टितोर्म्मि" माघः।

**सफर** पु० सप-अरन् पृ०पस्य फः। (पुटी) मत्स्ये स्त्रीत्वमप्यत्र

**सफल** त्रि० सह फलेन सहस्य सः। अव्यर्थे, फलयुक्ते च।

**सबल** त्रि० सह बलेन सामर्थ्येन सैन्येन वा। सामर्थ्यान्विते सैन्ययुक्ते च।

**सब्रह्मचारिन्** पु० समानं ब्रह्म वेदपाठरूपकालिकं व्रतं चरति चर-णिनि। एकगुरुरूपकायानु वेदाध्ययनकाले तद्विधनियमसमानव्रताचारवति। [याम्।

**सभर्त्तृका** स्त्री० सह भर्त्त्रा यया। विद्यमानपतिकायां स्त्रि-

**सभा** स्त्री० सह भान्ति अभीष्टनिश्चयार्थमेकत्र गृहे यत्र। व-
हूनां समावेशनस्थाने, तदधिष्ठायिजनसमूहे च।

**सभाज** सेवने दर्शने च सक० प्रीतौ अ० अद० चु० उभ० सेट्।
सभाजयति ते असभाजत्-त।

**सभाजन** न० सभाज-ल्युट्। गमनागमनादिकाले सुखानन्द-
प्रीतिसाधने सम्भाषणे, पूजने च।

**सभासद्** पु० सभायां सीदति-क्विप्। सामाजिके सभ्ये।

**सभास्तार** पु० सभां स्तृणाति स्तृ—अण्। सभ्ये।

**सभिक** पु० सभा द्यूतसभाऽस्यस्य ठन्। द्यूतकारके

**सभीक** पु० सभा द्यूतं प्रयोजनमस्य ईकन्। द्यूतकारे।

**सभोचित** पु० सभा उचिता परिचिता यस्य। पण्डिते।
सभायोग्ये त्रि०।

**सभ्य** पु० सभायां साधु. यत्। सामाजिके, द्यूतकारे च विश्व-
स्ते त्रि०। [साधे च।

**सम्** अव्य० सो—क्त। सम्यगर्थे, मकर्षे, सङ्गतौ शोभने, सम-

**सम** त्रि० सम-अच्। समाने, तुल्ये, सर्वे, साधौ च (योड़)
युग्मे, "समेऽर्द्धिते वर्गे" इति लीलावती। समतयाख्यातेषु
द्वितीयचतुर्थषष्ठादिषु राशिषु च। अतुल्येऽस्य सर्वना-
मता। गीतवाद्ययोरेककालभवे गायकहस्तादिचालनरूपे
ताले न०।

**समक्ष** अव्य० अक्ष्णः समीपम् अव्ययी० अच्। चक्षुःसन्निकर्षे
तदस्त्यस्मिन् अच्। प्रत्यक्षविषये त्रि०।

**समगन्धक** पु० समास्तुल्यभागेन निवेशिता गन्धाः गन्धयुक्तद्र-
व्याण्यत्र कप्। कृत्रिमधूपभेदे। [शीरे (वेनारमूल)

**समगन्धिक** पु० सम. सर्वदा तुल्यरूप गन्धोऽस्त्यस्य ठन्। उ-

**समग्र** त्रि० सर्व सकलं यथा स्यात्तथा गृह्यते ग्रह—ड। सकले।

**समज्ञा** स्त्री० समज्यतेऽनया सम्+अज-यञ्। यशसि स्यायाम्

**समचित्त** त्रि० सम सर्वत्र समभाव चित्तं यस्य। सर्वत्र तुल्य-
दर्शके तत्त्वज्ञानिनि।

**समज** न० समजत्यत्र सम्×अज-अप् व्यभाव। वने, समूहे
पशूनां संघे, मूर्खवृन्दे च।

**समज्या** स्त्री० समजन्ति सर्वत्र यायते अनया या-कप्। कीर्त्तौ

**समज्या** स्त्री० सम्+अज-क्यप् न वीभाव। सभायाम्, की-
र्त्तौ च। [मा०। औचित्ये न०।

**समञ्जस** त्रि० सम्यक् अञ्ज औचित्यं यत्र। उचिते, युक्ते च

**समदर्शिन्** त्रि० सर्वत्रिन् सर्वत्र मन्त्रभावेनाऽभिव्यतया पश्यति
दृश-णिनि। सर्वत्र समदर्शके तत्त्वज्ञानिनि। "विद्यावि-
नयसम्पन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च
पण्डिताः समदर्शिन" इति गीता। [नि त्रि०।

**समदृष्टि** स्त्री० कर्म०। सर्वत्र तुल्यदर्शने। ६ ब०। समदर्शि-

**समधिक** त्रि० सम्यक् अधिकःप्रा०। अत्यन्ताधिके।

**समन्त** पु० सम्यक् अन्तः स यत्र वा। सम्यगन्ते, सीमायाम् च।

**समन्ततस्** अव्य० समन्त+तसिल्। सर्वत्र विस्तारे।

**समन्तदुग्धा** स्त्री० समन्ततो दुग्धमस्याः। स्नुहीवृक्षे।

**समन्तपञ्चक** न० समन्तात् पञ्चकं नदपञ्चकं यत्र। तीर्थभेदे।

**समन्तभद्र** पु० समन्तात्भद्रमस्य। बुद्धे।

**समन्तभुज्** पु० समन्तात् भुङ्क्ते भुज-क्विप्। वह्नौ। [च।

**समन्तात्** अव्य० समन्त+आति। समन्ततस्त्यर्थे सर्वत्रविस्तारे

**समन्वित** त्रि० सम्+अनु+इण-क्त। सङ्गते।

**समपद** न० समं पदं यस्मिन्। धन्विनां समपदनिवेशपूर्वके
"स्थानानि धन्विनां षट्" उपक्रम्य "अस्पर्धं स्यात् समपद
मित्युक्ते" अवस्थानभेदे। [क्रिये।

**समभिव्याहार** पु० सम्+अभि+वि×आ+हृ-घञ्। सा-

**समभिव्याहृत** त्रि० सम्+अभि+वि×आ+हृ-क्त। सहिते।

**समभिहार** पु० सम्+अभि+हृ-घञ्। पौनःपुन्ये "क्रियास-
मभिहारेण विराध्यन्त"मिति माघ। [क्रान्त इयमिति"रघुः

**समम्** अव्य० सम-अच्। साहित्ये, एकदेशार्थे, "सममेव समा-

**समय** पु० सम्×इण-अच्। काले, शपथे, आचारे सिद्धान्ते
निर्द्देशे सङ्केते, भाषायां, अङ्गीकारे च।

**समया** अव्य० सम+इण-आ। निकटे, मध्ये, च।

**समयाध्युषित** पु० समय आध्युषितो यत्र। सूर्यतारारहित-
काले "उदितेऽनुदिते चैव समयाध्युषिते तथेति" मनुः।

**समर** पु० न० सम्+ऋ-अप्। युद्धे।

**समरमूर्द्धन्** पु० ६त०। समरस्याग्रे।

**समर्चन** न० सम्यक् अर्चनं प्रा०। सम्यक्पूजने। [पु०।

**समर्ण** त्रि० सम्+अर्द्द-क्त। सम्यक्पीडिते। [समस्थार्थेऽपि

**समर्थ** त्रि० सम्+अर्थ-अच्। शक्ते, हिते च। सम्यगर्थ प्रा०।

**समर्थन** न० सम्+अर्थ-ल्युट्। इदमित्थमेवेति निश्चयहेतु-
कव्यापारभेदे युक्त्या। अक्षमेऽभ्यामार्थे स्त्री०

**समर्द्धक** त्रि० समर्द्धयति सम्-ऋध-णिच्-ण्वुल्। इष्टफल
दातरि, देवादौ।

**समर्य्याद** त्रि० सह मर्य्यादया। सीमायाम्। समीपे पु०।

**समल** न० सम्यक् मलम्। विष्ठायाम्। सह मलेन। मलयुक्ते त्रि०

**समवतार** पु० समवतीर्य्यते ऽनेन सम्+अव+तॄ-घञ्। अ-
वतरणस्थाने।

[illegible]गिन् पु० समं वर्त्तते इत-णिनि। यमे धर्मराजे।
[illegible] पु० सम्+अव+क-घञ्। नाटकभेदे।
[illegible]वाय पु० सम्+अव+इण-अच्। समूहे, मेलने, न्यायोक्ते नित्ये द्रव्यादिषु जात्यादीनां संबन्धभेदे च।
[illegible]त त्रि० सम्+अव+इण-क्त। मिलिते, समूहान्विते न्यायोक्तेन समवायसम्बन्धेन स्थिते च।
[illegible]ष्टि स्त्री० सम्+अश-क्तिन्। सम्यग्व्याप्तौ, समस्ततायाञ्च। कर्त्तरि क्तिच्। संघीभूते समस्ते पदार्थे।
[illegible]ष्ठ(ष्ठी)ल पु० समं तिष्ठति स्था-इलच् ष० वा दीर्घः। (गुड़िया) शाके। [शब्दभेदे च।
समसन न० सम्+अस-ल्युट्। समासे, संक्षेपे। [कृतसमासे
समस्त त्रि० सम्+अस-क्त। अखिले, सकले, व्याकरणोक्ते
समस्थ त्रि० समं तिष्ठति स्था-क। समभावेन तुल्यतया स्थिते
समस्थली स्त्री० कर्म०। गङ्गायमुनयोर्मध्यस्थे अन्तर्वेदिदेशे।
समस्या स्त्री० समस्यते संक्षिप्यतेऽनया सम्+अस-क्यप्। संक्षेपेण उक्तस्य श्लोकपदादेः परकृतेन स्वकृतेन वा अवयवेन भागान्तरेण संघटनार्थं कृते प्रश्ने।
समा स्त्री० समयति विकलयति भावान् सम-अच्-टाप्। वत्सरे अमरकृतास्य नित्यबहुवचनान्तताङ्गीकृता पाणिनिना तु समासमां विजायतेइति सूत्रे एकवचनान्तता निर्दिष्टा।
समांसमीना स्त्री० समांसमां विजायते प्रसूते ख नि० अत्र समासमामित्यत्र कालाधारे द्वितीया। प्रतिवर्षं प्रसूतायां गवि।
समाकर्षिन् पु० सम्+आ+कृष-णिनि। अतिदूरगामिनि गन्धे। सम्यगाकर्षणकर्त्तरि त्रि०। [कीर्त्तौ, संज्ञायाञ्च।
समाख्या स्त्री० समाख्यायतेऽनया सम्+आ+ख्या अङ्।
समाघात पु० समाहन्यतेऽत्र सम्+आ+हन-घञ्। युद्धे।
समाज पु० सम्+अज-घञ् व्यभाव.। पशुभिन्नानां समूहे, सभायाम्, हस्तिनि च।
समाधा स्त्री० सम्+आ+धा-अङ्। निष्पत्तौ, विवादभञ्जने, पूर्व्वपक्षस्य सम्यगुत्तरानुगुणयुक्तिदानानुकूलतर्कादिना सम्यगवधारणे च। ल्युट्। समाधानमप्यत्र न०। तत्र चित्तैकाग्र्ये,ध्येयवस्तुनि निरन्तरस्थापनरूपे समाधौ च।
समाधि पु० सम्+आ+धा-कि। समाधाय, ध्येयवस्तुनि एकाग्रतया मनस स्थापनरूपे ध्यानभेदे, वचनाभावे, नियमे च। [शब्दिते च।
समाध्मात त्रि० सम्+आ+ध्मा-क्त। सम्यग्गर्विते, सम्यक्
समान त्रि० समम् आनयति अन-अण्। तुल्ये, साधौ, एकस्मि-

न्नित्यर्थे यत्तुसमानाधिकरणमितिचिन्तामणिः।
समानोदक पु० समानमेकं तर्पणादौ देयमुदकं यस्य। "समानोदकभावस्तु निवर्त्तेताचतुर्द्दशादित्युक्ते" एकादशावधिचतुर्द्दशपुरुषपर्य्यन्ते ज्ञातिभेदे।
समानोदर्य्य पु० समाने उदरे भव. यत् वा न सादेशः। एकोदरभ्रातरि। भगिन्यां स्त्री०।
समाप पु० सम्यक् आपोयत्र अच् समा० नि०। देवयजनस्थाने।
समापन न० सम्+आप-ल्युट्। समाप्तौ, परिच्छेदे, वधे च
समापन्न त्रि० सम्+आ-पद-क्त। समाप्ते, प्राप्ते, क्लिष्टे,च। भावे क्त। समाप्तौ न०।
समाप्त त्रि० सम्+आप-क्त। अवसानप्राप्ते, सम्यक्प्राप्ते च।
समाप्ति स्त्री० सम्-आप+क्तिन्। अवसाने, समर्थने,प्राप्तौ च।
समायोग पु० सम्+आ+युज-घञ्। संयोगसमवायरूपादिसम्बन्धे,"अपेक्षैर्हिसमायोगादिति"पुराणम्। प्रयोजने च।
समालम्बिन् पु० समालम्बते सम्+आ+लबि-णिनि। भूपम्पके। समालम्बनकर्त्तरि त्रि०।
समालम्भ पु० सम्+आ+लभ-घञ् सम् च। कुङ्कुमादिना गात्रलेपने। ल्युट्। तत्रैवार्थे न०।
समावर्त्तन न० समावर्त्तते गुरुकुलादनेन सम्+आ+वृत-ल्युट्। वेदाध्ययनानन्तरं गार्हस्थ्याय गुरुकुलादागमनहेतुके संस्कारभेदे।
समाविष्ट त्रि० सम्+आ+विश-क्त। युक्ते, मनोभिनिवेशवति, अभीष्टकर्त्तव्यकर्म्मणि चित्तैकाग्रविशेषयुक्ते च।
समावृत्त पु० सम्+आ+वृत-क्त। कृतसमावर्त्तनसंस्कारे।
समावेश पु० सम्+आ+विश-घञ्। बहूनामर्थानामेकत्र वाक्यादौ अवस्थापने, कर्त्तव्येऽभिनिवेशे च।
समावेशित त्रि०सम्+आ+विश-णिच्-क्त। कृतसमावेशने।
समास पु० सम्+अस-घञ्। संक्षेपे, समर्थने, समाहारे, व्याकरणोक्ते द्व्यादिपदानामेकपदतासंपादके पदसाधुतार्थके संस्कारभेदे च।
समासक्त त्रि० सम्+आ+सञ्ज-क्त। संयुक्ते, आसक्तियुक्ते, अभिनिविष्टे च।
समासङ्ग पु० सम् आ+सञ्ज-घञ्। संयोगे,सम्यगभिनिवेशे च
समासवत् पु० समास+अस्त्यर्थे। मतुप् मस्य वः। व्याकरणोक्तसमासयुक्तेशब्दे संक्षेपयुक्ते च समासेन तुल्यं वति। समासतुल्ये।
समासादित त्रि० सम्+आ+सद+णिच्-क्त। कारभाण्डे, निकटस्थिते त्रि०। [ख्यायाम्।
समासार्था स्त्री० समासेन संक्षेपेणार्थोऽभिहितोयस्या.। सम-

**समाहित** त्रि॰ सम्+आ+धा-क्त । कृतसमाधौ, आहिते, प्रतिज्ञाते, निष्पन्ने, युक्ते च ।

**समाहृत** त्रि॰ सम्+आ+हृ क्त । संगृहीते, एकत्रस्थीकृते ।

**समाहृति** स्त्री॰ सम्+आ+हृ-क्तिन् । संक्षेपे, संग्रहे, समुच्चये च

**समाह्वय** पु॰ समाह्वयते सम्+आ+ह्वे-अच् आत्वाभावः । युद्धे आह्वाने प्राणिकरणकद्यूते च, 'प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वय' इति स्मृतिः ।

**समाह्वा** स्त्री॰ समा-आह्वा यस्याः । गोजिह्वावृक्षे ।

**समित्** स्त्री॰ समीयतेऽत्र सम्+इण् क्विप् । युद्धे ।

**समिता** स्त्री॰ सम्+इण्-क्त । गोधूमचूर्णे सङ्गते त्रि॰ ।

**समिति** स्त्री॰ सम्+इण क्तिन् । सभायां, युद्धे च ।

**समिध्** स्त्री॰ समिध्यतेऽनया सम्+इन्ध-क्विप् । काष्ठे, होमीय काष्ठभेदे च विस्तरो दृष्टदभिधाने ।

**समिध** पु॰ समिध्यते सम्+इन्ध-क । काष्ठे वह्नौ च ।

**समिन्धन** न॰ सम+इन्ध-ल्युट् । काष्ठे सम्यग्दीप्तौ च ।

**समीक** न॰ सम-ईकन् । युद्धे ।

**समीकरण** न॰असमः समः क्रियतेऽनेन सम+च्वि+कृ-ल्युट् । वीजगणितप्रसिद्धे अज्ञातसंख्यानां यावत्तावतां सङ्ख्याज्ञानार्थे प्रक्रियाभेदे, तुल्यरूपतापादने च ।

**समीक्ष** न॰सम्यगीक्ष्यतेऽनेन घञ् । सांख्यदर्शने । भावे घञ् । पर्य्यालोचने, सम्यग्ज्ञाने च । अ । समीक्षापत्र संस्थे बुद्धौ, मीमांसाशास्त्रे, यत्ने च स्त्री॰ टाप् ।

**समीक्ष्यकारिन्** त्रि॰ समीक्ष्य पर्य्यालोच्य करोति कृ-णिनि उप॰ । वस्तुस्वरूपपर्य्यालोचनपूर्व्वककार्य्यकारके ।

**समीचीन** त्रि॰ सम्यगञ्चति सम्+अञ्च-क्विप् ततः ख समः समिः अच्चेरकारलोपे पूर्व्वपददीर्घः । यथार्थे, साधौ च सत्ये न॰ सत्यवति त्रि॰ ।

**समीप** त्रि॰ सङ्गता आपोऽत्र अच् समा॰ अत ईत्वम् । निकटे

**समीर** पु॰ सम्यक् ईरयति नोदयति सम्+ईर-अच् । वायौ पु॰ समिरोऽप्यत्र ।

**समीरण** पु॰ सम+ईर-ल्यु । वायौ, मरुवकवृक्षे, पथिके च

**समीरित** त्रि॰ सम्+ईर-क्त । कथिते, उच्चारिते 'चतुर्मुख समीरिते'ति कुमार । [क्षिप्ते च ।

**समीहित** त्रि॰ सम्+ईह-क्त । अभीष्टे । [शब्दार्थे

**समुख** त्रि॰ सह मुखेन मुखव्यापारेण वा सहस्य सादेशः ।

**समुचित** त्रि॰ सम+उच-क्त । सम्यगुपयुक्ते समञ्जसे ।

**समुच्चय** पु॰ सम्+उद्+चि-अच् । हिमादीनां राशौ, परस्परनिरपेक्षाणामनेकेषामेकस्मिन् क्रियादावन्वये च । यथा देवदत्तो यज्ञदत्तश्च गच्छतीत्यत्र देवदत्तयज्ञदत्तयोः परस्परसापेक्षताभावेऽपि एकस्मिन् गमने अन्वयः । तद्वाचकश्च प्रायेण चकारः क्वचित् तथादिशब्दोऽपि ।

**समुच्चित** त्रि॰ सम्+उद्+चि-क्त । कृतसमुच्चये 'समुच्चितफलकामनाना'मिति विधिस्वरूपे गदाधरः ।

**समुच्च(च्चा)र** पु॰ सम्+उद्+चर-अप् घञ् वा । सम्यगुच्चारणे, सम्यक्त्यागे च । [उत्क्षेपे च ।

**समुच्छेद** पु॰ सम्+उद्+छिद-घञ् । विनाशे । [विरोधे,

**समुच्छ्र(च्छ्रा)य** पु॰ सम्+उद्+श्रि-अच् घञ् वा । अत्युन्नतौ,

**समुच्छ्रित** त्रि॰ सम्+उद्+श्रि-क्त । अत्युन्नते ।

**समुच्छलित** त्रि॰ सम्यक्+उच्छलितम् सम्+उद्+शल-क्त । समन्तात् विस्तीर्णे (छयलापि) 'समुच्छलितविभ्रमा गतिरि'ति काव्य प्र॰ । [प्रत्युज्जीविते च ।

**समुच्छ्वसित** त्रि॰ सम्+उद्+श्वस क्त । सम्यगुच्छ्वासयुक्ते,

**समुच्छ्वास** पु॰ सम्+उद्+श्वस-घञ् । मुखनासिकाभ्यां प्राणवायोर्व्यापारे ।

**समुज्झित** त्रि॰ सम्+उज्झ-क्त । त्यक्ते । [सम्यगुद्गमने च ।

**समुत्क्रम** पु॰ सम्+उद्+क्रम-घञ् न वृद्धिः । ऊर्द्ध्वगमने,

**समुत्क्रोश** पु॰ सम्यक् उत्क्रोशति उच्चैः शब्दायते सम्+उद्+क्रुश-अच् । कुररीविहगे । भावे घञ् । अत्युच्चैःशब्दे ।

**समुत्थ** त्रि॰सम्यगुत्तिष्ठति सम्+उद्+स्था-क सस्य थः । सम्यगुत्पन्ने । [रोगे, उत्तोलने च ।

**समुत्थान** न॰ सम्+उद्+स्था-करणे ल्युट् सस्य थ॰ । सम-

**समुत्पत्ति** स्त्री॰ सम्+उद्+पद-क्तिन् । समुद्भवे ।

**समुत्पन्न** त्रि॰ सम्+उद्+पद-क्त । समुद्भूते ।

**समुत्पाट** पु॰ सम्+उद्+पट घञ् । उन्मूलीकरणे ।

**समुत्पाटित** त्रि॰ सम्+उद्-णिच्-पट-क्त । उन्मूलीकृते । [पु॰

**समुत्पिञ्ज** त्रि॰सम्+उद्+पिञ्ज-अच् । अत्याकुले । आकुलसैन्ये

**समुत्सर्ग** पु॰सम्यक्उत्सर्गः । सम्+उद्+सृज-घञ् । सम्यक्त्यागे

**समुत्सुक** त्रि॰ सम्यगुत्सुकः प्रा॰ । अत्यन्तोत्सुके इष्टवस्तुलाभाय त्वरान्विते ।

**समुत्सृष्ट** त्रि॰ सम्+उद्+सृज-क्त । सम्यक्त्यक्ते । [त्यागे च

**समुत्सेध** पु॰ सम्+उद्+सिध-घञ् । अत्युन्नतौ, अतिस्थौल्ये च ।

**समुदक्त** त्रि॰ सम्+उद्+अञ्च-क्त । कूपादेरुद्धृतजलादौ ।

**समुदय** पु॰ सम्+उद्+इण-अच् । समूहे, युद्धे, उदये, दिवसे च ज्योतिषोक्ते लग्ने न॰ । बलाः समूहे पु॰ । [आचारे च

**समुदाचार** पु॰ सम्+उद्+आ+चर-घञ् । अभिप्राये, स

**समुदित** त्रि॰ सम्+उद्+इण् क्त । मिलिते

**सम्बल** न० सम्ब-कलच्। जले। पाथेये पु०न०।

**स(श)म्बाकृत** त्रि० स(श)म्बेन प्रतिलोमेन कृष्टं क्षेत्रं स(श)म्ब-डाच्+कृ-क्त। प्रतिलोमकृष्टे क्षेत्रादौ। भावे घञ्। प्रतिलोमकर्षणे

**सम्बाध** न० सम्यक् बाधा यत्र। नरकवर्त्मनि सम+बाध-भावे घञ्। अन्योन्यसंघर्षे पु०।

**सम्बुद्धि** स्त्री० सम्+बुध-क्तिन्। सम्बोधनार्थे।

**सम्बोध** पु० सम्+बुध-घञ्। बोधे, नाशे, सम्यक्ज्ञाने च।

**सम्बोधन** न० सम्+बुध-ल्युट्। सम्यक्ज्ञाने। बुध-णिच्-ल्युट्। सम्यग्ज्ञापने 'स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यः पुरुषः क्रियासु विनियुज्यते' इति व्याकरणोक्ते अन्यत्रासक्तस्याभिमुखीकरणाय अभीष्टक्रियासु विनियोगाय ज्ञापनादिरूपे व्यापारे च।

**सम्भली** स्त्री० सम्यक् भलते सम्+भल-अच् गौ० ङीष्। कुट्टिन्याम् परपुरुषेण सह अन्यस्त्रिया योजयित्र्याम्।

**सम्भव** पु० सम्+भू-अप्। उत्पत्तौ, आधेयस्याधारे समावेशनयोग्यत्वरूपे व्यापारे, उत्कटसन्देहे च। अपादाने अप्। हेतौ। कर्त्तरि अच्। मेलके त्रि०।

**सम्भव्य** पु० सम्+भू-कर्त्तरि यत्। कपित्थे, सम्यग्भाविनि त्रि०

**सम्भार** पु० सम्+भृ-घञ्। परिपूर्णतायाम्, समूहे, सामग्र्याञ्च

**सम्भावन** न० सम्+भू-णिच्-ल्युट्। अर्थालङ्कारभेदे, व्याकरणोक्ते क्रियासु योग्यताध्यवसाये लिङर्थभेदे, उत्कटकोटिकसंशयरूपे ज्ञानभेदे च। युच्। सम्भावनाप्युक्तार्थे स्त्री०।

**सम्भावित** त्रि० सम्+भू-णिच्-क्त। सम्भवयुक्ते पदार्थे।

**सम्भाषण** न० सम्+भाष-ल्युट्। सम्यक्कथने, परस्परकथने च

**सम्भिन्न** त्रि० सम्+भिद-क्त। विदलिते भेदान्विते सम्यग्विकसिते च 'सम्भिन्नपङ्कज' इति वेणीसंहारः।

**सम्भूति** स्त्री० सम्+भू-क्त। विभवे ईश्वरस्यैश्वर्यभेदे च। 'सम्भूतिं च उपासते' इति श्रुतिः।

**सम्भूयसमुत्थान** न० सम्भूय+मिलित्वा सम्यगुत्तिष्ठन्त्यनेन। मिलित्वा वणिजां वाणिज्यादिकर्मकरणे विवादभेदे

**सम्भृति** स्त्री० सम्-भृ-क्तिन्। सम्यक् पोषणे।

**सम्भेद** पु० संभिद्यते संश्लिष्यतेऽत्र सम्+भिद्-आधारे घञ्। नद्योः सङ्गमस्थाने। भावे घञ् तत्सङ्गमे, सम्यग्भेदने, स्फुटने, मिलने ऐकरूप्ये च 'सम्भेदे नान्तरवैयर्थ्यमिति मीमांसा।

**सम्भोग** पु० सम्+भुज-घञ्। सम्यग्भोगे, सुरते, हर्षे, केलिनागरे, 'दर्शनस्पर्शनादीनि निषेवेते विलासिनौ। यत्रानुरक्तावन्योन्य सम्भोगः स उदाहृत' इत्युक्तलक्षणे शृङ्गाररसभेदे।

**सम्भ्रम** पु० सम्+भ्रम-घञ् न वृद्धिः। भयादिजनिते वेगे त्वरायां उद्वेगे, भये, आदरे, अतिशयभ्रमे, भ्रान्ते च।

**सम्मति** स्त्री० सम्-मन-क्तिन्। अनुमतौ, आत्माभीष्टे अभिलाषे च।

**सम्मद** पु० सम्-मद-घञर्थे क। हर्षे। अच्। हर्षयुक्ते त्रि०।

**सम्मर्द** पु० संमृद्यतेऽत्र सम्+मृद-घञ्। युद्धे। भावे घञ्। अन्योन्यसंघर्षे च।

**सम्मान** पु० सम्+मन-घञ्। आदरे।

**सम्मानित** त्रि० सम्+मन-णिच्-क्त। कृतगौरवे, समादृते च

**सम्मार्जन** न० सम्+मृज-ल्यु। संशोधने।

**सम्मार्जनी** स्त्री० संमृज्यतेऽनया सम्+मृज-करणे ल्युट् ङीप्। धूल्याद्यपसारणार्थे पदार्थे (झाटा)

**सम्मित** त्रि० सम्+मा-क्त। सदृशे, तुल्यपरिमाणे च।

**सम्मुख** त्रि० सङ्गतं मुखम् प्रा०। अभिमुखागते।

**सम्मुखीन** त्रि० सम्मुख पश्यति ख। अभिमुखे पातिनि।

**सम्मूर्च्छज** न० सम्मूर्च्छात् जायते जन-ड। स्वरभेदे।

**सम्मूर्च्छन** न० सम्+मूर्च्छ-ल्युट्। सम्यग्विस्तारे, उन्नतौ, मोहे च। [खेन शोधितेऽन्नादौ च।

**सम्मृष्ट** त्रि० सम्+मृज-क्त। मार्ज्जनयुक्ते। मक्षिकाद्यपसार-

**सम्मोद** पु० सम्+मुद घञ्। हर्षे, प्रीतौ च।

**सम्यच्** अव्य० सम-अञ्च-क्विप् सम्यादेशः। शोभने। सङ्गते, मनोज्ञे च त्रि०। सत्यवाक्ये न०। सङ्गते त्रि०।

**सम्राज्** पु० सम्यक् राजते राज-क्विप् मान्तुस्वारः। कृतराजसूययज्ञे सार्वभौमेश्वरे नृपतौ।

**सर** न० सरति सृ-अच्। सरोवरे, जले च। लवणे, दध्यग्रे, दधिमस्तौ, तज्जाते नवनीते, वाणे च निर्झरे स्त्री० भावे अप्। भेदने, गमने च।

**सरक** पु०न० सृ-वुन्। मद्यपानभाण्डे, मद्यपरिवेषणे, इक्षुजमद्ये, तत्पाने, अविरलपथिकपङ्क्तौ च।

**सरघा** स्त्री० सरं मधुभेदं हन्ति हन-ड नि०। मधुमक्षिकायाम्

**सरज** न० सरात् जायते जन-ड। नवनीते।

**सरजस्** स्त्री० सह रजसा। ऋतुमत्यां स्त्रियाम् अव्ययी० रजोयुक्ते त्रि० अप् समा०। रजः साहित्ये।

**सरट** पु० सृ अटन्। कृकलासे (काकलास)।

**सरण** न० सृ-ल्युट्। गमने, लोहमले च (गन्धभादाल) लतायाम्

**सरणि(णी)** स्त्री० सृ-अनि। पथि पङ्क्तौ प्रसारिण्याम्।

**सरपत्त्रिका** स्त्री० सरे जले पत्त्रमस्याः ठन्। पद्मे।

**सरमा** स्त्री० सह रमते। कुक्कुरयोषिति, विभीषणपत्न्याम्।

**सरयु** पु० सृ-अयु। वायौ। ऊङ्। अयोध्यान्तिकवाहिनदीभेदे स्त्री०

**सरल** पु० सृ-अलच्। पीतदारुणि धूपकाष्ठभेदे। उदारे, ऋजौ च त्रि०। त्रिपुटायां स्त्री०। [त्रिपुटायाञ्च।

**सरलद्रव** पु० ६त०। सरलवृक्षनिर्यासे, (टारपीन) नदीभेदे,

**सरलाङ्ग** पु० सरलो वृक्षोऽङ्गं साधनं यस्य। श्रीवेष्टे गन्धद्रव्ये। [प्थल स्त्री० 'सरसीः परिशीलितुमि'ति नैषधम्।

**सरस्** न० सृ-असि। जले, सरोवरे च। गौरा० ङीष्। सरसीत्य

**सरस** न० सह रसेन जलेन आस्वादेन च। सरोवरे, रसान्विते, सार्द्रे च त्रि०। 'सरसां सरसां परिमुच्येति' भट्टिः। श्वेतत्रिवृतायां स्त्री०। [त्रिकण्टकवृक्षे (तेकाटाषिजु)।

**सरसम्प्रत** न० सरमिव निर्यासं सम्प्रतनोति सम्+प्र+तन-ड।

**सरसिज** न० सरसि जायते जन-ड अलुक् स०। पद्मे 'सरसिजमनुविद्धमि'ति शकुन्तला।

**सरसीरुह** न० सरस्यां सरोवरे रोहति रुह-क। पद्मे।

**सरस्वत्** पु० सरांसि जलानि सन्त्यस्य मतुप् मस्य वः। सरोवरे, सागरे च नद्याम्, नदीभेदे, वाण्यां गवि, ज्योतिष्मत्यां ब्राह्म्याम्, यक्रौ, देवीभेदे, सोमलतायाञ्च स्त्री० ङीप्।

**सरा** स्त्री० सृ-अच्। निर्झरे।

**सराव** पु० सर जलमवति अव-अण्। जलाधारे मृण्मये पात्रभेदे (सरा)। सह रावेण, सशब्दे त्रि०।

**सरि** पु० स्त्री० सृ-इन्। स्त्रीत्वपक्षे वा ङीप्। निर्झरे।

**सरिका** स्त्री० सरोऽस्त्यस्याः सृ-वुन् वा। हिङ्गुपत्रिकायाम्

**सरित्** स्त्री० सृ-इति। नद्याम्, सूत्रे च।

**सरित्पति** पु० ६त०। समुद्रे। [भावात् न तस्य द'। समुद्रे

**सरित्वत्** पु० सरित् स्वामित्वेनास्त्यस्य मतुप् मस्य वः पदत्वा-

**सरित्सुत** पु० ६त०। गङ्गापुत्रे भीष्मे। [द्योत्पत्व।

**सरितांपति** पु० ६त० अलुक् स०। समुद्रे सरितांनाथा-

**सरिद्वरा** स्त्री० सरित्सु वरा श्रेष्ठा। गङ्गायाम्।

**सरिल** न० सृ-इलच्। जले।

**सरीसृप** पु० वक्रं सर्पति सृप-यङ् तस्य लुक्, अच्। सर्पवृश्चिकादौ, ज्योतिषोक्ते वृश्चिकादिराशौ च।

**सरु** पु० सृ-उन्। खड्गादिमुष्टौ।

**सरूप** त्रि० समानं रूपमस्य समानस्य स'। तुल्यरूपे सदृशे

**सरोज** न० सरसि जायते जन-ड। पद्मे सरोजातमात्रे त्रि०

**सरोजन्मन्** न० सरसि जन्म यस्य। पद्मे। तडागजातमात्रे त्रि०

**सरोजिनी** स्त्री० सरोजानां समूहः सन्निकृष्टदेशो वा इनि। पद्मसमूहे तद्युक्तदेशरूपायां पद्मलतायाम्, पद्मधारदीर्घिकायाञ्च।

**सरोरुह्**(ह) सरसि रोहति रुह-क्विप् क वा। पद्मे।

**सरोवर** पु० सरोभिर्जलैर्व्रियतेऽसौ वृ-अप्। तडागे।

**सर्ग** पु० सृज-घञ्। स्वभावे, सृष्टौ, निर्मोक्षे काव्यादेः परिच्छेदे 'सर्गोऽयमादिर्गत' इति नैषधम्। निश्चये, 'यदि सर्ग एष ते इति' रघुः। मोहे, उत्साहे, अनुमतौ च। [दभिधाने

**सर्गबन्ध** पु० सर्गैर्बध्यतेऽसौ बन्ध-घञ्। महाकाव्ये। लक्षणं तच्च

**सर्ज्ज** अर्ज्जने भ्वा० पर० सक० सेट्। सर्ज्जति असर्ज्जीत् षोपदेशत्वाभावान्न षत्वम्।

**सर्ज्ज** पु० सृज-अच्। शालवृक्षे, वृक्षे, (धुना) पीतशाले च।

**सर्ज्जक** पु० सृज-ण्वुल्। पीतशाले, शालवृक्षे च।

**सर्ज्जगन्धा** स्त्री० सर्ज्जस्येव गन्धो यस्याः। रास्नायाम्।

**सर्ज्जन** न० सृज-ल्युट्। सैन्यपश्चाद्भागे, सृष्टौ च।

**सर्ज्जनिर्यासक** पु० सर्ज्जस्य निर्यास इव कायति कै-क। राले

**सर्ज्जमणि** पु० सर्ज्जस्य शालवृक्षस्य मणिरिव। (धुना) सर्ज्जरसे

**सर्ज्जरस** पु० ६त०। शालवृक्षरसे (धुना)।

**सर्ज्जि**(र्ज्जी) स्त्री० सृज-इन् वा ङीप्। नदीभेदे, तत्कूलजे सर्जिका क्षारे (साजिमाटि)। [नदीभेदे च।

**सर्ज्जिका** स्त्री० सृज-ण्वुल् टाप् अत इत्वम्। सर्जिकाक्षारे,

**सर्ज्जिकाक्षार** स्त्री० सर्जिकायाः क्षारः। स्वनामख्याते क्षारभेदे, (साजिमाटि)।

**सर्ज्जिक्षार** पु० ६त०। (साजिमाटि) सर्जिकाक्षारे।

**सर्ज्ज्य** पु० सर्ज्जस्येदं यत्। सर्ज्जरसे। सर्ज्ज-ण्यत्। अर्ज्जनीये त्रि०

**सर्प** पु० सृप अच्। नागकेशरे, भुजङ्गमे च 'सर्पापसर्प भद्रम्' इति भारतम् तज्जातिस्त्रियां ङीष्। भावे घञ्। गमने।

**सर्पकङ्काली** स्त्री० सर्पस्येव कङ्कालमङ्गविशेषो यस्याः गौ० ङीष्। सर्पविषघातिन्यां लतायाम्।

**सर्पगन्धा** स्त्री० सर्पाणां विषस्य गन्धो गन्धनं हिंसनं यस्याः ५ब०। विषहारिण्यां लतायाम्। [हरीलतायाम्।

**सर्पघातिनी** स्त्री० सर्पं सर्पविषं हन्ति हन णिनि। सर्पविष

**सर्पच्छत्र** पु० सर्पस्य छत्रमिवानायासच्छेद्यो यस्य। भङ्गे।

**सर्पदंष्ट्र** पु० सर्पस्य दंष्ट्रेव पुष्पमस्य। तावदन्तीवृक्षे। सर्पस्य दंष्ट्रेव स्पर्शनात् दु:खदत्वात्। वृश्चिकाल्याम् स्त्री०।

**सर्पदंष्ट्रिका** स्त्री० सर्पदंष्ट्राकारोऽस्त्यस्याः ठन्। अजशृङ्ग्याम्

**सर्पदण्डी** स्त्री० सर्पं दण्डयति दण्ड-णिच्। गोरक्षीवृक्षे।

**सर्पदन्ती** स्त्री० सर्पस्य दन्त इव पुष्पाण्यस्याः गौ० ङीष्। नागदन्तीवृक्षे। [कर्कट्याम्।

**सर्पदमना** स्त्री० सर्पान् दमयति दम-णिच् ल्युट्। वन्ध्या-

**सर्पपुष्पी** स्त्री० सर्पस्य सर्पदन्त इव पुष्पाण्यस्याः ङीष्। नागदन्त्याम्

सर्पभुज् पु० सर्पं भुङ्क्ते भुज-क्विप् । मयूरे ।
सर्पराज पु० सर्पाणां राजा टच् समा० । वासुकौ नागभेदे
सर्पलता स्त्री० सर्पाख्या लता । ताम्बूलीलतायाम् ।
सर्पसत्र न० सर्पेण होमद्रव्येण तन्नाशनार्थं वा सत्रम् । जनमेजयानुष्ठिते महाभारतप्रसिद्धे सर्पनाशनार्थे यज्ञभेदे ।
सर्पसहा स्त्री० सर्पं सहते सह-अच् । सर्पकङ्कालीलतायाम् ।
सर्पहन् पु० सर्पं हन्ति हन-क्विप् । नकुले ।
सर्पाक्षी स्त्री०सर्पस्येवाक्षि यस्याः षच् समा० । गन्धनाकुल्याम् ।
सर्पास्य पु० सर्पस्याख्या यस्य । नागकेशरे, महिषकन्दभेदे, च
सर्पाङ्गी स्त्री०सर्पस्येवाङ्गं यस्याः ङीप् । सर्पकङ्कालीलतायाम्
सर्पादनी स्त्री० सर्पं सर्पविषमद्यतेऽनया अद ल्युट् ङीप् । नाकुल्याम् ।
सर्पाराति पु० ६त० । गरुडे, नकुले च सर्पारिप्रभृतयोऽप्यत्र
सर्पावास न० सर्पाणामावासो यत्र । चन्दनवृक्षे । ६त० । सर्पवासे पु० ।
सर्पाशन पु० सर्पमश्नाति अश-ल्युट् । मयूरे, गरुडे च ।
सर्पिस् न० सृप-इसि । घृते । [गमनकारके त्रि० ।
सर्पिणी स्त्री० सृप-णिनि । सर्पयोषिति, क्षुपभेदे च ।
सर्पेष्ट न० सर्पाणां भुजगीनामिष्टम् । चन्दनवृक्षे ।
सर्पेट न० सर्पाणामिष्टम् । चन्दने । [त्वात् षत्वम् ।
सर्व सर्पणे भ्वा०प०सक०सेट् । सर्वति असर्वीत् यथोपदेश-
सर्व पु०सर्व-अच् । शिवे, विष्णौ च । सम्पूर्णे, सकले च त्रि० । असंज्ञायामस्य सर्वनामता । [षोढरि त्रि० ।
सर्वंसहा स्त्री० सर्वं सहते खच् मुम् च । पृथिव्याम् । सर्व-
सर्वकर्त्तृ पु० सर्वं करोति कृ तृच् । चतुर्मुखे ब्रह्मणि, परमेश्वरे च । ['संपाके सर्वकर्मीणावि'ति भट्टिः ।
सर्वकर्मीण त्रि० सर्वकर्मभ्योऽलं ख । सर्वकरणसमर्थे पदार्थे
सर्वक्षार पु० सर्वः क्षारमयः (साबान) । ख्याते पदार्थे ।
सर्वग न०सर्वं गच्छति गम-ड । जले । शिवे,परमेश्वरे, वायौ, आत्मनि च पु० । सर्वगामिनि त्रि० । प्रियङ्गुवृक्षे स्त्री०टाप् ।
सर्वगन्ध न० सर्वे गन्धा अत्र । 'कस्तूरीकर्पूरकङ्कोलागुरुकुङ्कुमम् चन्दनसहितश्चैव सर्वगन्धं प्रकीर्त्तितमि'त्युक्ते गन्धद्रव्यसमूहे ।
सर्वग्रन्थि पु० सर्वत्र ग्रन्थिर्यस्य । पिप्पलीमूले । [त्रि०
सर्वङ्कष पु०सर्वं कषति कष-खच् मुम् च । पापे । सर्व्वातिरेकिणि
सर्वजनीन त्रि० सर्वजनेषु विदितः ख । सर्वत्र विख्याते ।
सर्वज्ञ पु० सर्वं जानाति ज्ञा-क । शिवे, बुद्धे, परमेश्वरे च । सर्वज्ञानकर्त्तरि त्रि० । दुर्गायां स्त्री० ।

सर्वतस् अव्य० सर्व+तसिल् । समन्तत इत्यर्थे ।
सर्वतिक्ता स्त्री०सर्वतः तिक्ता । काकमाच्याम् ।
सर्वतोभद्र पु०न० सर्वतो भद्राणि सुखानि यस्य । चतुर्द्वार-युक्ते गृहभेदे, प्रतिष्ठादौ पूज्यदेवतानां मण्डलभेदे ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे, अलङ्कारोक्ते बन्ध-भेदात्मके चित्रकाव्ये च । सर्वतोभद्र मस्य । निम्बवृक्षे पु० । गाम्भार्य्यां, नटयोषिति च स्त्री० ।
सर्वतोभद्रचक्र न० सर्वतो भद्रं यत्र तादृशं चक्रम् । ज्योतिषोक्ते शुभाशुभज्ञानार्थे चक्रभेदे ।
सर्वतोभद्रबन्ध पु० सर्वतोभद्राकारेण बन्धः । चित्रकाव्यभेदे ।
सर्वतोभद्रमण्डल न० सर्वतो भद्रनामकं मण्डलम् । शार-दातिलकाद्युक्ते प्रतिष्ठादौ—पूज्यदेवतामण्डलभेदे ।
सर्वतोमुख न० सर्वतोमुखमस्य । जले । आकाशे, शिवे,ब्रह्म-णि, परमेश्वरे, आत्मनि, ब्राह्मणे अग्नौ च पु० ।
सर्वत्र अव्य० सर्व-त्रल् । सर्वस्मिन् काले, देशे, दिशि चेत्यर्थे ।
सर्वत्रगा पु०सर्वत्र गच्छति गम-ड । वायौ । सर्वत्रगामिनि त्रि०
सर्वत्रगामिन् पु० सर्वत्र गच्छति गम-णिनि । वायौ सर्वत्र गन्तरि त्रि० । [छाया, हेतौ च ।
सर्वथा अव्य० सर्वप्रकारम् थाल् । सर्वप्रकारे, अर्थे, प्रति-
सर्वदमन पु० सर्वान् दमयति दम-णिच्-ल्यु । दुष्मन्तपुत्रे भरतन्नृपे । सर्वदमनकर्त्तरि त्रि० ।
सर्वदर्शिन् पु० सर्वं समभावेन पश्यति दृश-णिनि । बुद्धे, परमेश्वरे च । सकलद्रष्टरि त्रि० ।
सर्वदा अव्य० सर्वस्मिन् काले देशे दिशि वा दाच् । सर्व-स्मिन् कालादावित्यर्थे । [दृष्टौ ।
सर्वधुरीण त्रि० सर्वां धुरं वहति ख । सकलभारवाहके
सर्वनाम पु० सर्वेषां नाम । व्याकरणोक्ते कार्यविशेषार्थं कृत-संज्ञावति सर्वादिशब्दभेदे ।
सर्वभक्षा स्त्री० भक्ष-अच् उप० । अजायाम् सर्वभक्षके त्रि० ।
सर्वमङ्गला स्त्री० सर्वाणि मङ्गलान्यस्याः ५व० । दुर्गायाम् ।
सर्वमय त्रि० सर्वात्मकः मयट् । सर्वात्मके । परमेश्वरे पु० ।
सर्वमूषक पु० सर्वं मुष्णाति मुष-ण्वुल् पृ० । काले ।
सर्वरस पु० सर्वो रसमयः । (धुना) ख्याते नीर्यासविशेषे, पण्डिते च । कर्म० । लवणे रसे ।
सर्वरसोत्तम पु० सर्वेषु रसेषु उत्तमः । लवणे रसे ।
सर्वरात्र पु० सर्वा रात्रिः अच् समा० । रात्राह्नाहाः पुंसीति पुंस्त्वम् । सकलरात्रौ ।
सर्वरी स्त्री० शृ वनिप् ङीप् र च । रात्रौ ।

**सर्व्वर्त्तुपरिवर्त्त** पु० सर्व्वर्त्तूनां परिवर्त्तो यत्र । वत्सरे ।
**सर्व्वला(ली)** स्त्री०सर्व्वं लाति ला क वा गौरा०ङीष् । तोमरास्त्रे
**सर्व्वलिङ्गिन्** पु० सर्व्वेषां लिङ्गानि सन्त्यस्य इनि । वेदनिरु-द्धाचारिणां बौद्धादीनां लिङ्गवत्सु पाषण्डेषु ।
**सर्व्वलोह** पु० सर्व्वः लोहमयोऽवयवो यस्य । लौहमये वाणे ।
**सर्व्ववर्णिका** स्त्री० सर्व्वं वर्णयति वर्णि-ण्वुल् अत इत्त्वम् । गाम्भारीवृक्षे ।
**सर्व्वविद्** पु०सर्व्वं वेत्ति विद-क्विप् । परमेश्वरे । सर्व्वज्ञातरि त्रि०
**सर्व्ववेद** पु० सर्व्वे वेदा अधीतत्वेन सन्त्यस्य अच् । सर्व्ववेदाध्य-यनकर्त्तरि । विद-अण् उप० । सर्व्वज्ञे त्रि० ।
**सर्व्ववेदस्** पु०सर्व्वाणि धनानि वेदयते लाभयते पात्राय ददाति विद-लाभे णिच्-असि । सर्व्वस्वदक्षिणाकविश्वजिन्नामक-यागकर्त्तरि ।
**सर्व्ववेशिन्** पु० सर्व्वेषां वेशो धार्य्यत्वेनास्त्यस्य इनि । नटे ।
**सर्व्वसङ्गत** पु० सर्व्वं सङ्गतमुचितं यस्य । षष्टिधान्ये । सर्व्वो-चिते त्रि० । [सर्व्वसैन्यसज्जीकरणेन युद्धयात्रायाम् ।
**सर्व्वसन्नहन** न० सर्व्वेषां सन्नहनं युद्धार्थं सज्जीकरणं यत्र ।
**सर्व्वसह** पु० सर्व्वं सहते अच् । गुग्गुलौ । सर्व्वसहिष्णौ त्रि०
**सर्व्वसिद्धि** पु०सर्व्वेषां सिद्धिरस्मात् । श्रीफले । सकलसाधने त्रि०
**सर्व्वस्व** न० कर्म० । सकलधने ।
**सर्व्वस्वदक्षिण** पु०सर्व्वस्वं दक्षिणा यत्र । विश्वजिन्नामकयागभेदे
**सर्व्वहित** न०सर्व्वेषां हितम् । मरिचे ष्र्व० । सकलहितहेतौ त्रि०
**सर्व्वाङ्गीण** त्रि० सर्व्वाङ्गाणि व्याप्नोति ख । सर्व्वावयवव्यापके 'सर्व्वाङ्गीणे तरुत्वचे' इति भट्टिः । [णत्वम् । दुर्गायाम्
**सर्व्वाणी** स्त्री०सर्व्वेभ्य आनयति मोक्षं आ-नी-ड पूर्व्वपदादिति
**सर्व्वानुकारिणी** स्त्री० सर्व्वमनुकरोति अनु+कृ-णिनि । शालपर्ण्याम् । [ञानिनि त्रि०
**सर्व्वानुभूति** स्त्री०सर्व्वेषामनुभूतिर्यत्र । श्वेतनिसृयाताम् तत्त्व-
**सर्व्वान्नभोजिन्** त्रि० सर्व्वेषामन्नं सर्व्वाण्यन्नानि वा भुङ्क्ते भुज-णिनि । सर्व्वान्नभक्षके । [भक्षके ।
**सर्व्वान्नीन** त्रि० सर्व्वेषामन्नं सर्व्वमन्नं वा भुङ्क्ते ख । सर्व्वान्न
**सर्व्वाभिसन्धिन्** पु० सर्व्वत्र व्याघरणे अभिसन्धास्त्यस्य इनि । सर्व्वत्राभिसन्धिमति जने ।
**सर्व्वाभिसार** पु० अभिसृयते अत्र अभि+सृ-घञ् ६त० । चतुरङ्गसैन्यसन्नाहेन युद्धयात्राभेदे । [मति त्रि०
**सर्व्वार्थसिद्ध** पु० सर्व्वेषु अर्थेषु सिद्धः । बुद्धे सकलाभीष्टसिद्धि-
**सर्व्वाह्ण** पु० सर्व्वमहः टच् समा० ह्लादेशः णत्वम् । सकलदिने
**सर्व्वौघ** पु० सर्व्वेषां चतुरङ्गसैन्यानामोघो इन्दमभिसारो यत्र । ओघीभूतसर्व्वसैन्याभिसारे कर्म० । सर्व्वजलवेगे ।
**सर्व्वौषधि** स्त्री०कर्म० । 'कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्द-नैः । मुराचन्दनकर्पूरैर्मुस्तः सर्व्वौषधिः स्मृत' इत्युक्ते कुष्ठा-दिद्रव्यवर्गे ।
**सर्व्वौषधिगण** पु० सर्व्वासामोषधीनां गणः । 'मुरामांसी वचाकुष्ठं शैलेयं रजनीद्वयम् । शठीचम्पकमुस्तञ्च सर्व्वौषधि गणः स्मृत.' इत्युक्ते द्रव्यगणे । [तैलभेदे ।
**सर्षप** पु० सृ-अप सुक् च । (सरिषा) शस्यभेदे । [स्नेहरूपे
**सर्षपतैल** न० सर्षपस्य स्नेहः सर्षप+स्नेहार्थे-तैलच । सर्षप-
**सल** न० सल-अच् । जले ।
**सलिल** न० सल-इलच् । जले ।
**सलिलकुन्तल** पु० सलिलस्य कुन्तल इव । शैवाले ।
**सलिलराशि** पु०६त० । समुद्रे सलिलनिध्यादयोऽप्यत्र ॥
**सलिलेन्धन** पु० सलिलमिन्धनमिव दाह्यं यस्य । वाडवानले ।
**सल्लकी** स्त्री० सल-वुन् लुकच ष०गौरा० ङीष् । शल्लक्याम् ।
**सव** पु०सूयते सू-अप् । यज्ञे, सन्ताने च । अच् । सूर्य्ये,यर्कवृक्षे च
**सवन** न० सु-ल्युट् । यज्ञाङ्गे स्नाने, सोमनिष्पादनव्यापारे, सोमपाने, यज्ञे, सोमनिष्पीडने, प्रसवे च ।
**सवयस्** त्रि० समानं वयो यस्य समानस्य सः । वयस्ये 'सवयो भिरन्वित' इति रघुः ।
**सवर्ण** पु० समानोवर्णो यस्य । तुल्यरूपे, एकजात्याश्रये यथा-विप्रस्य विप्रजातिः क्षत्रियस्य क्षत्रियजातिः । 'तुल्यास्यप्रयत्नं सवर्णमि'ति व्याकरणोक्ते स्थानप्रयत्नाभ्यां तुल्यवर्णे च यथा ककारस्य स्थानेन तुल्यो गकारादि', प्रयत्नसाम्येन चकारस्य ककारादिः अकारस्य अकार: सकारस्य षकार: हकारस्य वर्गीयचतुर्थो वर्णः । सह वर्णेन वर्णसहिते त्रि०
**सवर्णा** स्त्री०सह वर्णेन । त्विष्टतायाम् ।
**सवासस्** त्रि० सह वाससा । वस्त्रत्यागविलम्बस्याक्षमे वेगवति
**सविकल्पक** न० सह–विकल्पेन कप् । वेदान्तोक्ते ज्ञातृज्ञेय-भेदादिकल्पनासहिते ध्यानभेदे, न्यायोक्ते एकस्मिन् धर्म्मिणि धर्मप्रकारसंसर्गावगाहिनि ज्ञानभेदे च ।
**सविकाश** त्रि० सह विकाशेन । प्रफुल्ले, विकसिते,प्रसन्नभावे च
**सवितृ** पु० सू-तृच् । जगत्स्रष्टरि परमेश्वरे 'तत् सवितुर्वरेण्य' मिति श्रुतिः सूर्य्ये च । [न सवितृ साक्षिणो' इति नैषधम्
**सविध** त्रि०सह विधया विध-क सहस्य सः । निकटे 'सविधेऽपि
**सविस्मय** त्रि० सह विस्मयेन । विस्मयापन्ने ।
**सवेश** त्रि०विसम्बल वेशोदेशः सह वेशेन । निकटे,वेशान्विते च
**सव्य** त्रि०सू+प्रेरणे यत् । वामे दक्षिणे, प्रतिकूले च विष्णौ पु०

**सव्यसाचिन्** पु० सव्येन वामेन सचति सच-णिनि । अर्ज्जुने
**सव्येष्ठ** पु० सव्ये तिष्ठति स्था-क अलुक् स०अम्बशादि०पत्वम् ।
सारथौ । [सारथौ ।
**सव्येष्ठृ** पु० सव्ये तिष्ठति स्था तृन् किच्च अलुक्स० षत्वम् ।
**ससखा** स्त्री० सह सखेन । नागदन्त्याम् । सख्युक्ते त्रि० ।
**ससत्वा** स्त्री० सह सत्वेन । गर्भवत्यां स्त्रियाम्, प्राणियुक्ते त्रि०
'न ससत्वेषु गर्त्तेषु'ति मनुः ।
**ससन** न० सस हिंसने ल्युट । यज्ञार्थं पशुहनने ।
**सस्य** न० सस-यत् । वृक्षादीनां फले, क्षेत्रगते धान्ये च ।
**सस्यसंवर** पु० सस्यं संवृणोति सम्+वृ-अच् । शालवृक्षे ।
**सस्यसंवरण** पु० सस्यं संवृणोति सम्+वृ-ल्यु । अश्वकर्णवृक्षे
**सह** अव्य० सह-अच् । साहित्ये, साकल्ये, सादृश्ये, यौगपद्ये,
विद्यमानत्वे, समृद्धौ, सम्बन्धे, सामर्थ्ये च ।
**सह** पु०सहते सह अच् । अग्रहायणमासे भारादिसहिष्णौ त्रि०
**सहकार** पु० सह युगपत् किरति सौरभम् दूरादौ कॄ-अण् ।
अतिदूरगामिसौरभान्विते आम्रे । भावे घञ् सहकरणे पु०
**सहकारिन्** त्रि० सह सम्भूय करोति कार्य्यं कृ-णिनि । हेतु
भेदे स्वमिलितकार्य्यकारके हेतौ ।
**सहगमन** न० सह+गम-ल्युट् । सहमरणे, सह गमने च ।
**सहचर** पु० सह चरति चर-अच् । पीतझिण्टी नीलझि
ण्ट्याश्च । वयस्ये, प्रतिबन्धके, सहाये, अनुचरे च त्रि०
'सहचरमधुहस्तेति' कुमार स्त्रियां ङीप् ।
**सहचरी** स्त्री० सह चरति चर ट । पीतझिण्ट्यां सह-
चरति धर्मम् चर-ट । धर्मपत्न्याम् ।
**सहज** पु०सह जायते जन-ड । सहोदरे, निसर्गे च स्वभावसिद्धे
'भजजप्राकृतादयो'ऽपि भाव सहोत्थिते च त्रि० ज्योतिषोक्ते
जन्मलग्नात् तृतीयस्थाने न० । [नैसर्गे
**सहजमित्र** न० सहजं स्वभावसिद्धम् प्राकृतं मित्रम् । भागि
**सहजारि** पु० सहज स्वभावसिद्ध' अरि । सापत्नभ्रात्र-
पितृव्यपुत्रादौ ।
**सहदेव** पु० सह दीव्यति दिव-अच् । माद्रीसुते पाण्डवभेदे ।
बलायाम् दण्डोत्पले, शारिवौषधौ च स्त्री० गौ० ङीष् ।
सर्पाक्ष्याम् पीतदण्डोत्पलायाञ्च स्त्री टाप् ।
**सहधर्मिणी** स्त्री०सह समानो धर्मोऽस्त्यस्या इनि । पत्न्याम्
**सहन** न० सह-ल्युट् । क्षमायां, तितिक्षायां, शीतोष्णादिद्वन्द
मर्षणे । सह-युच् । सहिष्णौ, क्षमाशीले च त्रि० ।
**सहपान** न० सह पानम् । एकत्र मद्यादिपाने ।
**सहभाविन्** त्रि० सह भवति भू-णिनि । सहाये ।
**सहभोजन** न० सह एकत्र भोजनम् । एकत्रस्थानाशनादौ ।
**सहमरण** न० सह मृतेन पत्या सह एकचितारोहणेन मर-
णम् । मृतपतिचितारोहणेन तत्सहितमरणे ।
**सहरसा** स्त्री० सह रसेन । मुद्गपर्ण्याम् । रसान्विते त्रि० ।
**सहस्** न० सह-असि । बले, ज्योतिषि च मार्गशीर्षे मासे पु०।
'सहसा सहमा कृतवेपथुरिति' माघ ।
**सहसा** अव्य० सह+सो-डा । हठादित्यर्थे, अकस्मादित्यर्थे च।
**सहस्य** पु० सहसे बलाय हित' यत् । पौषमासे ।
**सहस्र** न० समानं हसति हस र । दशशतसंख्यायां, बहु-
संख्यायां, तत्संख्यान्विते च । [पादयोरप्यत्र ।
**सहस्रकर** पु०सहस्रं कराः किरणा अस्य । सूर्य्ये सहस्रकिर-
**सहस्रकाण्डा** स्त्री० सहस्रं काण्डा यस्याः । श्वेतदूर्व्वायाम्
**सहस्रदंष्ट्र** पु० सहस्रं बहुसंख्या दंष्ट्रा अस्य । पाठीनमत्स्ये
(बोयाल) ।
**सहस्रदंष्ट्रिन्** पु० सहस्रं दंष्ट्रा सन्त्यस्य इनि । पाठीनमत्स्ये
**सहस्रधारा** स्त्री० सहस्रगुणिता धारा । देवतास्नानार्थ-
बहुच्छिद्रयन्त्रनिसृतबहुजलादिधारायाम् ।
**सहस्रनयन** पु०सहस्रं नयनान्यस्य । इन्द्रे । सहस्रनेत्रादयोऽप्यत्र
**सहस्रपत्र** न० सहस्रं बहुसंख्यकानि पत्राणि यस्य । पद्मे
सहस्रपर्णादयोऽप्यत्र ।
**सहस्रपाद्** पु० सहस्रं बहवः पादा अस्य पाद्भावः । विष्णौ,
परमेश्वरे च । 'सहस्राक्ष सहस्रपादि'ति पुरुषसूक्तम् ।
**सहस्रपाद** पु० सहस्रं पादा किरणाश्चरणा वा सन्त्यस्य
अच् । विष्णौ, सूर्य्ये अर्कवृक्षे च । [र्य्यार्ज्जुने च
**सहस्रभुज** पु० सहस्र बहवो भुजा अस्य । विष्णौ, कार्त्तवी-
**सहस्रमूर्द्धन्** पु०सहस्रं बहवो मूर्द्धानोऽस्य । विष्णौ, सहस्र-
शीर्षादयोऽप्यत्र । [र्जुने, विष्णौ च
**सहस्रबाहु** पु० सहस्रं बाहवोऽस्य । बाणासुरे, कार्त्तवीर्या-
**सहस्रवीर्य्या** स्त्री०सहस्रं बहूनि वीर्य्याण्यस्याः । दूर्व्वायाम्,
महाशतावर्य्याञ्च ।
**सहस्रवेध** न० सहस्रं बहवो वेधा अस्य । चुक्रे ।
**सहस्रवेधिन्** न० सहस्रं विध्यति विध-णिनि । हिङ्गौ ।
अम्लवेतसे, कस्तूर्य्याञ्च पु० । सहस्रवेधकर्त्तरि त्रि० ।
**सहस्रशिखर** पु० सहस्रं बहूनि शिखराण्यस्य । विन्ध्यपर्वते
**सहस्रा** स्त्री०सहस्रं बहूनि सन्त्यस्याः अच् । अम्बष्ठायाम् ।
**सहस्रांशु** पु०सहस्रमंशवो यस्य । सूर्य्ये,अर्कवृक्षे च । [इन्द्रे च
**सहस्राक्ष** पु०सहस्रमक्षीणि यस्य षच् समा० । इन्द्रे, विष्णौ,
**सहस्रार** न०सहस्रमारा कोणा यस्य । शिर स्थिते सुषुम्ना

नाडीमध्यस्थे सहस्रदलकमले । [त्रिपादी माठीने च ।

**सहस्रिन्** पु० सहस्रं सैन्यानि सन्त्यस्य इनि । सहस्रसैन्ययुक्ते

**सहा** स्त्री०सहते सह अच । सहपर्ण्यां, शतकुमार्य्यां, दण्डोत्पलायां, पृथिव्यां, शुक्लझिण्ट्याम्, रास्नायां, स्वर्णचोर्य्यां, वर्षकद्वाल्यां, नारीपुष्पे च ।

**सहाचर** पु०सह आचरति आ+चर अच् । पीतझिण्ट्याम् ।

**सहाय** पु०सह एति इण-अच् । सहचरे, अनुकूले,'असावनुकोऽपि सहाय एवेति' कुमार । [सहायसमुदाये च ।

**सहायता** स्त्री०सहायानां समूहः तभावो वा तल् । साहाय्ये

**सहार** पु० सह एकदैव गच्छति दूरं गच्छति सौरभेण हृ-अच् । आम्रे । हारोहरण सह हारेण । महाप्रलये ।

**सहारोग्य** त्रि० सह आरोग्येण । रोगशून्ये ।

**सहासन** न० सह आसतेऽत्र आस-ल्युट् । एकासने ।

**सहित** त्रि० सम्यक् हित पृ० समोऽन्त्यलोपः । सम्यग्हिते सह क्त वा इट्, सह-इतच् वा । समभिव्याहृते ।

**सहिष्ट** त्रि०सह-तृच् वा इट् । सहनशीले । इडभावे । सोढा-यत स्त्रियां ङीप् ।

**सहित्र** न० सह्यतेऽनेन सह इत्र । सहनसाधने धर्मभेदे ।

**सहिष्णु** त्रि०सह-इष्णुच् । सहनशीले । [विरुद्धधर्मद्वयसह

**सहिष्णुता** स्त्री० सहिष्णोर्भावः तल् । क्षमायाम् शीतोष्णादिने

**सहृदय** त्रि०सह हृदयेन । प्रसन्नचित्ते, काव्यार्थभावनाधीनपरिपक्वबुद्धौ 'सहृदयधुरीणाः कतिपये'इति रसगङ्गाधर

**सहृल्लेख** पु० हृदयस्य लेखः कालुष्यकरणं हृल्लाव सह हृल्लेखेन ।'विचिकित्सा तु हृदये यस्मिन् प्रजायते। सहृल्लेखस्य वित्तेयमि'त्युक्ते दूषितान्ने ।

**सहोक्ति** स्त्री०सह उक्तिः । सहकथने, एकोक्तौ सह शब्दस्योक्तिर्यत्र । अर्थालङ्कारभेदे। [पर्य्यायालायाम् ।

**सहोटज** पु०न०। सहते आतपादीन् सह अच् कर्म०। मुनीनां

**सहोढ** पु० सह ऊढा येन । 'या गर्भिणी संस्क्रियते ज्ञाता ज्ञातापि वा सती । वोढुः स गर्भो भवति सहोढ इति चोच्यते इति मनूक्ते अज्ञातगर्भाया परिणीतायाः स्त्रियां जाते पुत्रभेदे,सहोढः सन् जायते जन ड । सहोढजोऽप्यत्रार्थे । [भगिन्यां स्त्री०

**सहोदर** न० सह समानमुदरं यस्य । एकगर्भजाते भ्रातरि ।

**सह्य** न०सहायस्य भाव यत् नि० । साहाय्ये, 'तवार्थे सह्यकरोदिति' पुराणम् सह भावे यत् । आरोग्ये, साम्ये माधुर्य्ये च । कर्मणि यत् । सोढव्ये त्रि०पुनाख्यदेशसमीपस्थे पर्वतभेदे पु० ।

**सा** स्त्री०सो-ड । गौर्य्यां, लक्ष्म्यां च ।

**सांख्य** न० सङ्ख्यायतेऽत्र इत्या सम्यग्ज्ञानं सास्यत्वं अण् । सम्यग्दर्शने 'एषा तेऽभिहिता सांख्ये इति गीता सम्या मूलप्रकृत्यादिपदार्थानां गणनमत्र प्रज्ञायाम् ।कपिलप्रणीत दर्शनशास्त्रे, परसवर्णे साङ्ख्यमप्युभयत्र साङ्ख्योक्तयोगे पु०।

**सांघातिक** त्रि० संघाताय हितम् ठण् । सङ्घातकारके । ज्योतिषोक्ते जन्मनक्षत्रावधिषोडशनक्षत्रे च 'देहदृविषभस्तूनां नाश साघातिके तथे'ति ज्योतिषम् परसवर्ण साङ्घातिकमपि उभयत्र ।

**सांदृष्टिक** न० संदृष्टं प्रत्यक्षदृष्टमनुसरति ठण् । दृष्टानुसारि न्यायभेदे, सदृष्टी दृष्टमात्र फलति ठण् । सद्यः फले । परसवर्णे सान्दृष्टिकमप्युभयत्र । [कारके ।

**सांयात्रिक** पु०सम्यक् यात्रायै अलम् ठण् । पोतेन वाणिज्य

**सांयुगीन** त्रि० संयुगे युद्धे साधु ख । रणकुशले ।

**सांराविण** न० सम्+रु-भावे णिनि तत स्वार्थेऽण् । व्याप्ते हट्टादिकोलाहले । [अण् । ज्योतिर्विचारि, गणके ।

**सांवत्सर** पु०संवत्सरं तज्ज्ञानोपयोगिशास्त्रं वेत्ति अधीते वा

**सांवत्सरिक** त्रि० संवत्सरे भव ठञ् । प्रतिवर्षकर्त्तव्ये श्राद्धे

**सांवादिक** पु० सम्यग्वादायालं ठण् । नैयायिके ।

**सांशयिक** त्रि० संशयमापन्न ठण् । सन्दिग्धज्ञाने, संशययुक्ते, संशयविषये च । [भवे,संसारोपयोगिनि वा पदार्थे

**सांसारिक** त्रि०संसाराय हितम् तत्र भवो वा ठण् । संसार-

**सांसिद्धिक** त्रि० संसिद्धिः स्वभावसिद्धिः तया निर्वृत्त ठञ् । स्वभावसिद्धे । 'सांसिद्धिकद्रवत्वमि ति भाषापरिच्छेद ।

**साकम्** अव्य० सह अकति अक अम् साद्देश । साहित्ये ।

**साकल्य** न० सकलस्य भाव ष्यञ् । समुदाय । स्वार्थे ष्यञ् । सकले, होमार्थ मिश्रितेषु तिलादिद्रव्येषु च ।

**साकाङ्क्ष** त्रि०सहाकाङ्क्षया । साभिलाषे, शाब्दबोधोपयोग्या काङ्क्षायुक्ते पदभेदे च ।

**साकार** त्रि सह आकारेण मूर्त्या । मूर्त्तिविशिष्टे सावयव च

**साकुरुण्ड** पु० सकुरुण्ड एव स्वार्थेऽण् । सकुरुण्डवृक्षे ।

**साकेत** न० आकिल्यते आकेत सहाकेतेन । अयोध्यापुरे 'जनस्य साकेतनिवासिन' इति रघु ।

**साक्तुक** पु०सक्तवे हित ठक । यव । सक्तूनां समाहार तस्मै दम् वा ठक् । सक्तुसमूहे न० । तत्सम्बन्धिनि त्रि० ।

**साक्षात्** अव्य सह अक्षति अक्ष आति सादेश, सह अक्ष भवति यत क्विप् वा । प्रत्यक्षे तद्धितर्वे च 'न साक्षात् दयरोवादनक्ष'ति श्रुति ।

**साक्षात्कार** पु॰ साक्षात्+कृ घञ् । प्रत्यक्षे ।

**साक्षिन्** त्रि॰ सह अक्षि अस्य इनि साक्षाद्द्रष्टा इनि वा नि॰ । साक्षाद्द्रष्टरि । स्त्रियां ङीप् । परमेश्वरे पु॰ साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतिः । अयमेव साक्षि-चैतन्यत्वेन वेदान्तपरिभाषादौ स्वीकृतः ।

**साक्ष्य** न॰ साक्षिणो भावः कर्म वा ष्यञ् । साक्षिकर्मणि, व्यवहारविषयवृत्तवृत्तान्तकथनरूपे तद्भावे च । 'य साक्ष्यमनृतं वदेदि'ति स्मृतिः । [च ।

**सागर** पु॰सगरेण निर्वृत्त अण् । समुद्रे, मृगभेदे, संख्याभेदे

**सागरगामिनी** स्त्री॰सागरं गच्छति गम+णिनि न णत्वम् । नद्यां, सूक्ष्मैलायाञ्च । [पृथिव्याम्

**सागरनेमि** स्त्री॰ सागरः नेमिरिव वेष्टनाकारो यस्याः ।

**सागरमेखला** स्त्री॰ सागरो मेखलेव यस्याः । पृथिव्याम्

**सागरालय** पु॰सागरः आलयो यस्य । वरुणे ।

**सागरोत्थ** न॰ सागरात् उत्तिष्ठति उद्+स्था क । सामुद्रलवणे

**साग्निक** पु॰सहाग्निना अग्निहोत्रेण वा कप् । यौतश्रौता-ग्नियुक्ते, अग्निहोत्रिणि द्विजे च ।

**साङ्कर्य** न॰सङ्करस्य भावः ष्यञ् । परस्पराभावसमानाधिकरण वृत्तित्वरूपे न्यायोक्ते जातिबाधके दोषभेदे पूर्वोक्तसङ्करस्य धर्मे च

**साङ्ग** त्रि॰ सहाङ्गेन । अङ्गयुक्ते 'साङ्ग तत् क्रियते पुन'रिति स्मृ॰

**साङ्केतिक** त्रि॰ सङ्केत्या निर्वृत्त ठण् । सङ्केते ।

**साङ्ग्रामिक** त्रि॰ सङ्ग्रामाय प्रभवति ठण् । सेनापतौ, युद्धोप-योगिरथादौ च ।

**साचि** अव्य॰सच-इण् । वक्रे, तिर्यगर्थे च । [नवैलायाम् ।

**साचिवाटिका** स्त्री॰ साचि यथा तथा वटति ण्वुल् । श्वेतपु-

**साचीकृत** त्रि॰ असाचि साचि क्रियते अभूततद्भावे च्वि नि॰ दीर्घः । वक्रीकृते 'साचीकृता चारुतरेण तस्या'विति कुमारः ।

**साट** प्रकाशने अद॰चु॰उ॰स॰सेट् । साटयति ते असमाटत् त

**साटोप** त्रि॰ सहाटोपेन । सगर्वे विकटे च ।

**सात** सुखे अ॰चु॰उभ॰अक॰सेट् । सातयति ते असमातत् त

**सात** न॰ सात-अच् । सुखे । सन क्त । दत्ते, नष्टे च ।

**सातला** स्त्री॰ सातं सुखं लाति ला क । चर्मकषायाम् ।

**साति** स्त्री॰ सन-क्तिन् । अवसाने । दाने, तीव्रपीडायाञ्च ।

**सातीनक** पु॰ सतीनएव स्वार्थे अण् । सतीनकवृक्षे (क्षुद्रमटर

**सात्यकि** पु॰सत्यकस्य वृष्णिवंश्यस्यापत्यम् इञ् । शिनेर्नप्तरि स्वनामख्याते वृष्णिवंश्ये क्षत्रियभेदे । [भिन्नवर्णभेदे

**सात्वत्** पु॰ सत्त्वमेव सात्वमतति अत क्विप् शक॰ । यादवा-

**सात्वत** पु॰ सत्त्वमेव सात्वमस्त्यस्य त सत्त्वगुणोपाधिके विष्णौ । सात्वतो देशस्य राजा अण् । विष्णौ, बाल्हदेशाधिपे नृपे बहुषु तस्य लुक् 'भगवान् सात्वतां पति'रिति पुराणम् । 'सत्त्वं सत्वाश्रयं सत्त्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः समुदाहृत' इत्युक्ते वैष्णवे यदुवंश्ये अश्वपुत्रे नृपभेदे च । यदुवंश्योत्पन्नत्वेन पितृ मातृमातरि स्त्री॰ ङीप् । सा च नाटकस्य वृत्तिभेदे च ।

**सात्विक** पु॰ सत्वात् सत्वगुणप्रधानात् विष्णोर्भवति ठण् । चतुर्मुखे ब्रह्मणि तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्वमेव सात्वमस्त्यस्य ठन् । विष्णौ । सत्वगुणेन तत्कार्येण मनसा वा निर्वृत्त ठण् । सत्वगुणजाते, सत्वप्रधान मनोविशेषजे ते च शृङ्गारादिरसानुगुणे भावभेदे च । सत्वप्रधाने जने त्रि॰ । 'आहुरा सात्विकप्रिया' इति गीता । दुर्गायां स्त्री॰ ङीप् ।

**सादनी** स्त्री॰ साद्यन्ते रोगा अनया सद णिच् ल्युट् । कटुकयाम्

**सादि** पु॰ सद-इण् । सारथौ, योद्धरि च । अवसन्ने त्रि॰

**सादिन्** पु॰ सद-णिनि । अश्वारोहणकर्त्तरि, गजारोहिणि, रथारोहिणि च । अवसन्ने त्रि॰ ।

**सादृश्य** न॰ सदृशस्य भावः ष्यञ् । तद्भिन्नत्वे सति तद्गतभूयो-धर्मरूपे समानधर्मे, येन सह यस्य सादृश्यं प्रसिद्धं तत् इत्वदभिधाने वक्ष्यते ।

**साधक** त्रि॰साध ण्वुल्, सिध-णिच् ण्वुल् साधादेश वा । साधनकर्त्तरि, तन्त्रोक्ते मन्त्रादिसिद्धिकारके शिष्ये च । 'साधकः सिद्धिमाप्नुयादि'ति तन्त्रम् ।

**साधन** न॰साध्यतेऽनेन सिध णिच् ल्युट् साधादेशः । करणे, क्रियोत्पादके हेतुभेदे 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् । विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमि'त्युक्ते क्रियासाधकव्यापारवतिकरणे, सैन्ये युद्धोपकरणे पुचिह्ने, कारकभेदे, प्रमाणे, अनुमापके हेतौ च । भावे ल्युट् । मारणे, मृतसंस्कारे, अग्निदाने, गतौ, निष्पादने, अनुगमने, सिद्धौ च । कर्मणि ल्युट् । द्रव्ये, धने, मेढ्रे च ।

**साधर्म्य** न॰ सधर्मस्य समानधर्मस्य भावः ष्यञ् । सकीयासा-धारणधर्मरूपे लक्षणे 'यद्वक्तं यस्य साधर्म्यमि'ति भाषा-परिच्छेदः । समानो धर्मोऽस्य तस्य भावः ष्यञ् । समान धर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्यम् ।

**साधारण** त्रि॰ सह धारणया स्वार्थेऽण् । बहूनां अनेक स्वत्ववत्यवच्छिन् धने 'साधारणं समाश्रित्य यत्किञ्चिद्वाह-नादिकमिति'स्मृतिः । स्त्रियां गौरा॰ ङीप् । सा च कुञ्चि काय, वेश्यादिनायिकायाञ्च न्यायोक्ते 'यः सपक्षे विपक्षे च

भवेत् साधारणस्तु स' इत्युक्ते हेत्वाभासभेदे पु० । यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्वते,विपक्षे ह्रदादौ च स्थित इति साधारणः ।

**साधारणधर्म्म** पु कर्म० । 'अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दमक्षमार्ज्जवं दानं धर्मं साधारणं विदु- रित्युक्ते' अहिंसादौ सर्ववर्णाश्रमउभ्ये धर्मे । न्याया युक्ते संशयहेतौ समानधर्मे च इदं रजतं नवेति संशये इदं रजतयोः सामान्यधर्मश्चाकचिक्यशुभ्रत्वादिः ।

**साधित** त्रि० सिध-णिच्-क्त । दापिते,प्रमाणादिनाउद्भाविते च 'साधितात् दयकं शतमिति स्मृतिः निष्पादिते' शोधिते च

**साधिदैव** त्रि० सह अधिदैवेन सार्थेऽव्य० द्विपदबहु० । अधि- दैवतासहिते साधिभूतसाधियज्ञावपि परमेश्वरे ।

**साधिष्ठ** त्रि०अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टि लोपो वा । अत्यन्तदृढे, अतिसाधौ, अतिशोभने च ।

**साधिष्ठान** त्रि० सह अधिष्ठानेन । अधिष्ठिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्नामध्यस्थे चक्रभेदे न० ।

**साधीयस्** त्रि० अतिशयेन साधुः बाढो वा साधादेशः टि लोपो वा । अत्यन्तदृढे,न्याय्ये, साधुतरे च । स्त्रियां ङीप् ।

**साधु** त्रि० साध-उन् । उत्तमकुलजाते,सुन्दरे,मनोहरे, उचिते च । स्त्रियां वा ङीप् । मनौ,जिने च 'न प्रहृष्यति सम्माने नावमाने न कुप्यति । न क्रुद्धः परुषं ब्रूयादेतद्धि साधुल- क्षणं'मित्याद्युक्तधर्मवति जने वार्द्धुषिके च पु० ।

**साधुपुष्प** न० साधु पुष्पं यस्य । स्थलपद्मे । कर्म० । उत्तमकुसुमे

**साधुवाह** पु० कर्म० । विनीते सुशिक्षिते घोटके ।

**साधुवाहिन्** पु० साधु यथा तथा वहति णिनि । विनीतेऽश्वे सुन्दरवहनकर्त्तरि त्रि० ।

**साधुवृत्त** पु०कर्म० । कदम्बवृक्षे, वरुणवृक्षे, शोभनवृत्तमात्रे च

**साध्य** पु० सिध-णिच्-यत् । 'मनोमन्ता तथा प्राणो नरोऽ- पानश्च वीर्यवान् । निर्भयोनरकश्चैव दंशो नारायणो वृषः प्रभुश्चेति समाख्याताः साध्या द्वादश देवता'इत्युक्ते द्वाद शसंख्यके गणदेवताभेदे, विष्कम्भादिषु योगेषु एकविंशे योगे च । साधनीये त्रि० । अष्टादशविवादेषु प्रमाणादिना उद्भाव्ये पदार्थे । 'प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वि तम् । निश्चितं लोकसिद्धञ्च पक्षं पक्षविदोविदु'रित्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये पक्षे पु० । अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ सिषाधयिषितः वह्निः साध्यः । साध्यमस्यास्ति अर्श आद्यच् । साध्यवति पक्षे पु० 'साध्यनिर्द्देशः प्रतिज्ञे'ति न्यायसूत्रम् साध्यवत्तया पक्षनि- र्द्देश इति दीधितिकारः । साध्यं सर्वं मन्त्रमात्रे,पा- शुपतमन्त्रस्य स्वानुकूलतायाम् । तस्ये द्वितीयपञ्चमादिके 'सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभि'- रित्युक्ते मन्त्रभेदे च विस्तरो वृहदभिधाने ।

**साध्यता** स्त्री० साध्यस्यानुमितिविधेयस्य भावः तल् । अनु- मितिविधेयतारूपे न्यायोक्ते विषयताभेदे ।

**साध्यतावच्छेदक** पु० साध्यतामवच्छिनत्ति विशेषयति अव+ छिद-ण्वुल् । येन रूपेण यस्य साध्यतारूपा विषयता तस्मिन् धर्मे । यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यता वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यताव- च्छेदकम् ।

**साध्यसिद्धि** स्त्री० साध्यस्य सिद्धिः विनिर्णयः सिध-क्तिन् । साध्यस्य वह्न्यादेः अनुमित्यादिना साधनाधीने निर्णये, निष्पत्तौ, साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र । व्यवहारे प्रतिज्ञातार्थस्य साक्षिलिखितादिभिः विनिर्णयरूपे व्यवहारपादे च ।

**साध्वस** न० साधु+अस्यति अस-अच् । भये ।

**साध्वी** स्त्री० साधु-ङीप् । मेदायां, 'आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियते या पत्यौ साध्वी ज्ञेया पतिव्रते'त्युक्तलक्षणायां स्त्रियाञ्च ।

**सानन्द** त्रि०सह आनन्देन । आनन्दसहिते 'सानन्दं नन्दि हस्ते'ति मालतीमाधवम् ।

**सानु** पु०न० सन-ञुण् । पर्वतस्थे समभूमिदेशे प्रस्थे, वने, सानसमूहे, पथि, अग्रे, कोविदे, अर्के, पल्लवे च ।

**सानुज** न० सानौ जायते जन-ड । प्रपौण्डरीके । तुम्बुरुवृक्षे पु० । सहानुजेन अनुजसहिते त्रि० ।

**सानुमत्** पु० सानुरस्त्यस्य मतुप् । पर्वते ।

**सान्तपन** न० सन्तापयति सम्+तप-णिच् ल्युट् स्वार्थेऽण् । 'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रो पवासश्च कृच्छ्रं सान्तपनं विदु'रित्युक्ते कृच्छ्रसाध्ये व्रतभेदे ।

**सान्तर** न०सह अन्तरेण सहेयः । विरले व्यवधानसहिते च

**सान्तानिक** त्रि० सन्तानः प्रयोजनमस्य ठक् । सन्तान- साधने विधानभेदे । [यस्यसान्तानिक? सान्तापयतीत्यत्वे ।

**सान्त्व** आ०तुकूल्यकरणे अद०चु०उभ०सक०सेट् । सान्त्वयति ते

**सान्त्व** न० सान्त्व-अच् । अत्यर्थमधुरे, आनुकूल्ये, स्नेहमन- प्रीतिदवाक्ये,प्रियवाक्यादिना क्रोधोपशमनरूपे,सान्त्वने च

**सान्त्वन** न० सान्त्व-ल्युट् । आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च । युच् । अत्रैव स्त्री० ।

**सान्दीपनि** पु० सान्द्रात्+दीप्‌ इञ्। रामकृष्णयोराचार्य्ये अवन्तिपुरवासिमुनिभेदे। [मनोज्ञे च वने न०।

**सान्द्र** त्रि० अदि-रक् सह चन्द्रेण। निबिडे, मृदौ, स्निग्धे,

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य। विभीतकवृक्षे।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः। अतिहृद्ये अतिमनोहरे च

**सान्धिक** पु० सन्धा सुराव्यावर्त्तं शिल्पं वेत्ति ठक्। शौण्डिके सन्धिः प्रयोजनमस्य ठञ्। सन्धिकर्त्तरि त्रि०।

**सान्ध्य** त्रि० सन्ध्यायां भवः अण्। सन्ध्याकालिके।

**सान्नाय्य** न० सन्नीयते सम्+नी-ण्यत् नि०। मन्त्रादिना संस्कार्य्ये घृतादौ। [ति' दुर्गावाहनमन्त्रः।

**सान्निध्य** न० सन्निधिरेव ष्यञ्। नैकट्ये, 'सान्निध्यमिह कल्पये

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठक्। सन्निपाताज्जाते रोगे 'विकारे सन्निपातिके' इति कुमारः।

**सान्न्यासिक** पु० सन्न्यासः प्रयोजनमस्य ठक्। सन्न्यासिनि।

**सापत्न** पु० सपत्न एव स्वार्थे ष्यञ्। शत्रौ, सपत्न्यां भवः तस्या अपत्यं वा यञ्। सपत्नीपुत्रे। अण्। सापत्नोऽप्युभयत्र

**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ्। दायाशौचपिण्डदानाद्युपयोगिनि ज्ञातिधर्मे 'सापिण्ड्यं साप्तपौरुषमि'ति स्मृतिः [ह्याद्वै

**साप्तपदीन** न० सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ्। सख्ये सौ-

**साप्तपौरुष** त्रि० सप्त पुरुषान् व्याप्नोति अण्। सप्तपुरुषव्यापके

**साफल्य** न० सफलस्य भावः ष्यञ्। सार्थक्ये, सम्पूर्णतायाञ्च।

**साम** सान्त्वने अद० चु० उ० स० सेट्। सामयति ते अससामत् त

**सामग** पु० साम तद्वेदं गायति। सामवेदाध्यायिनि।

**सामगर्भ** पु० साम गर्भे यस्य। विष्णौ।

**सामग्री** स्त्री० न० समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीप् ङीपि यलोपः। समग्रतायाम् 'प्रावेश सामग्र्यविधा'विति कुमारः स्वार्थे ष्यञ्। कारणसमूहे, द्रव्ये च स्त्री०।

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ्। औचित्ये।

**सामन्** न० सो-मनिन्। 'अग्निं दूतं वृणीमहे, इत्यादिके वेदभेदे, तत्रोक्तासु ऋक्षु गानभेदे 'ऋच्यध्यूढं साम गीयते इति' छान्दोग्यम्। राज्ञां 'साम भेदस्तथा दानं दण्डश्चे'-त्युक्ते शत्रुवशीकरणोपायभेदे, प्रियवाक्यादिना सान्त्वने च। पशुबन्धनरज्जौ स्त्री० ङीप्।

**सामन्त** पु० संश्लिष्टोऽन्तः एकदेशो यस्य समन्तस्तस्येश्वरः अण्। स्वविषयानन्तरवर्त्तिदेशाधिपे नृपे। समन्ताद्भवः अण् टिलोपः। षेत्राजाय (भद्रव) यं परस्परया भोक्तारः सामन्ता'मेति स्मृतिः। [कात्योचिते च।

**सामयिक** त्रि० समये भवः उचितो वा ठञ्। समयभवे,

**सामयोनि** पु० साम योनिरुत्पत्तिस्थानं यस्य। हस्तिनि, तेषाञ्च सामयोनित्वमुक्तं पालकाप्ये 'सूर्य्यस्याण्डकपाले द्वे समानीय प्रजापतिः। हस्ताभ्यां परिगृह्याथ सप्त सामान्यगायत। गायतो ब्रह्मणस्तस्मात् समुत्पेतुर्मतङ्गजा' इति। चतुर्मुखे ब्रह्मणि च।

**सामर्थ्य** न० समर्थस्य भावः ष्यञ्। देहजे बले शक्तौ योग्यतायां, सङ्गतार्थतायाञ्च। [समवायसम्बन्धिनि त्रि०।

**सामवायिक** पु० समवाये प्रसृतः ठञ्। मन्त्रिणि। तस्येदम् ठञ्।

**सामाजिक** पु० समाजः सभावेशनं प्रयोजनमस्य। सभ्ये।

**सामान्य** न० समानस्य भावः ष्यञ्। सादृश्यप्रयोजकधर्मे यथा मुखं पद्ममिव सुन्दरमित्यादौ सौन्दर्य्यादि। समानमेव स्वार्थे ष्यञ्। द्रव्यगुणकर्मसु तुल्यतया स्थितायां जातौ।

**सामान्यलक्षणा** स्त्री० सामान्यं साधारणधर्मः लक्षणं यस्याः। न्यायोक्ते अलौकिकप्रत्यक्षसाधने उपायभेदे। यथा एकघटज्ञाने घटत्वरूपसामान्यधर्मज्ञानात् सकलस्य घटत्ववतो ज्ञानम्। [रणस्त्रियां वेश्यायाम्।

**सामान्या** स्त्री० समानैव स्वार्थे ष्यञ् अजा० टाप्। साधा-

**सामि** अव्य० साम-इन्। अर्द्धे 'सामिघटिते'ति नैषधम्।

**सामिधेनी** स्त्री० सम्-इन्ध करणे ल्युट् नि०। अग्निसमिन्धनसाधने ऋग्भेदे, समित्काष्ठे च।

**सामीप्य** न० समीपस्य भावः स्वार्थे वा ष्यञ्। नैकट्ये निकटे च। 'सामीप्याश्लेषविषयैर्व्याप्याधारस्त्रिधा मतः' इति व्याकरणम्।

**सामुद्र** न० समुद्रे भवः अण्। (करकच) लवणे।

**सामुद्रक** न० समुद्रेण प्रोक्तम् वुञ्। कुलालादिभ्यो वुञ् इत्यादिना स्त्रीपुंशुभाशुभलक्षणज्ञापके ग्रन्थभेदे, 'वामभागे तु नारीणां दक्षिणे पुरुषस्य च निर्दिष्टं लक्षणं तेषां समुद्रेण यथोदितमिति' 'सामुद्रसंसारसमुद्रमे'ति नैषधम्।

**सामुद्रिक** त्रि० समुद्रेण प्रोक्तम् ठञ्। स्त्रीपुंशुभाशुभलक्षणज्ञापके ग्रन्थे। [ठञ्। युद्धे परलोकसाधने त्रि०

**साम्परायिक** न० सम्परायाय आपदे परलोकाय वा हितम्।

**साम्प्रतम्** अव्य० सम्+प्र+तन-अव्ययुक्ते। उचिते।

**साम्बर** न० सम्बरदेशे भवम् अण्। सम्बरदेशोद्भवे लवणे

**साम्भवा** स्त्री० सम्भवः अन्यस्य प्रज्ञादय् गौ० ङीप्। रक्तलोध्रे

**साम्य** न० समस्य भावः ष्यञ्। तुल्यत्वप्रयोजके साधारणधर्मे

**साम्राज्य** न० सम्राजः भावः ष्यञ्। सार्वभौमत्वे 'भेजे साम्राज्यदीक्षितमिति रघुः 'नवाधिपत्यं राज्यं स्यात् साम्राज्यं दशयोजने' इत्युक्ते दशतद्योजनाधिराज्ये च।

**साय** पु० सो-घञ्। दिनान्ते, वाणे च।

**सायसन्ध्या** स्त्री० सायम् दिनान्ते सन्ध्या, तत्र सन्ध्यायते सम्+ध्यै-घञर्थे क वा। दिनान्तसन्ध्यायाम् दिनान्ते-उपास्य देवताभेदे च। भावे अङ्। तत्रोपासनायाम्।

**सायक** पु० सो-ण्वुल्। वाणे-खड्गे च।

**सायन्तन** त्रि० सायम्भव ट्युल् तुट् च। दिनान्तभवे। स्त्रियां ङीप्। "सायन्तनीं तिथिप्रणयः" इति नैष०।

**सायपुङ्खा** स्त्री० सायकस्य पुङ्खोऽस्याः ५ ब०। शरपुङ्खावृक्षे।

**सायम्** अव्य०सो-अम्।दिनान्ते"साय सम्प्रति वर्त्तते"इत्युद्भट

**सायाह्न** पु० सायोऽह्नः एक० त० टच् ह्नादेश। दिनान्ते, "सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र न कारयेदिति" स्मृत्युक्ते पञ्चधाविभक्तदिनस्य त्रिमूहूर्त्तात्मके पञ्चमे भागेऽपि च।

**सायुज्य** न० सह युनक्ति-युज-क्विप् सादेश सयुक् तस्य भाव ष्यञ्। सहयोगे, पञ्चविधमुक्तिमध्ये एकात्मसमवस्थानरूपे मुक्तिभेदे च। [सारत् त।

**सार दौर्बल्ये** अद० चु० उभ० सक० सेट्। सारयति ते अस

**सार** न० सृ-घञ्, सार-अच् वा। जले, धने, न्याय्ये, नवनीते, लोहे, वने च। बले, स्थिरांशे, मज्जनि, सर्जक्षारे, वायौ, रोगे, अतिहृद्ये दध्यग्रे च पु० न०। श्रेष्ठे, वरे च त्रि०

**सारक** पु० सारयति रेचयति सृ-णिच्-ण्वुल्। जयपाले। रेचकद्रव्ये त्रि०।

**सारखदिर** पु० कर्म०। विट्खदिरे।

**सारगन्ध** पु० सारः श्रेष्ठोगन्धोऽस्य। चन्दने।

**सारघ** न० सरघाभिर्निर्वृत्तम् अण्। मधुनि क्षौद्रे।

**सारङ्ग** पु० सृ-अङ्गच्। चातकखगे, हरिणे, गजे, छत्रे, राजहंसे, चित्रमृगे, वाद्यभेदे, वस्त्रे, नानावर्णे, मयूरे कामदेवे, चापे, केशे, आभरणे, पद्मे, शङ्खे, चन्दने, कर्पूरे पुष्पे, कोकिले, मेघे, सिंहे, रात्रौ, भूमौ, दीप्तौ च। सारङ्गमस्य भक्ष०। सारङ्गोऽपि चित्रमृगादौ।

**सारङ्गिक** पु० सारङ्गं मृगं हन्ति ठक्। व्याधे।

**सारज** न० सारात् दध्यग्रात् जायते जन-ड। नवनीते।

**सारण** न० सृ-णिच्-ल्यु। गन्धभेदे, अतीसाररोगे, रावणसचिवे च। भद्रवलायाम्, आम्रातके च पु०।

**सारणि(णी)** स्त्री० सृ-णिच्-अनि वा ङीप्। क्षुद्रनद्याम्, प्रसारिण्याम् सङ्क्षेपेण ग्रहगत्यादिबोधके ज्योतिषग्रन्थभेदे च।

**सारतरु** पु० सारप्रधानः जलप्रधानस्तरुः। कदलीवृक्षे।

**सारथि** पु० सृ-अथिण्, सह रथेन सरथः घोटकः तत्र नियुक्त इञ् वा। रथादिवाहनप्रेरके नियन्तरि।

**सारदा** स्त्री० सारं ददाति दा-क। सरस्वत्याम् "लिखति यदि गृहीत्वा शारदेवि" शिवस्तव। सारदातरि त्रि०।

**सारद्रुम** पु० साराढ्योद्रुम। खदिरवृक्षे।

**सारभाण्ड** न० कर्म०। वणिजम्पात्रे, श्रेष्ठपात्रे च। [वृक्षे।

**सारमूषिका** स्त्री० सारे मूषिकेवापहारकत्वात्। देवदाली

**सारमेय** पु० स्त्री० सरमाया कश्यपपत्न्या अपत्यम् ढक्। कुक्कुरे। तद्योषिति स्त्री०।

**सारलोह** न० लौहेषु सारः राज०। तीक्ष्णसारे (इस्पात)।

**सारव** त्रि० सरय्वा भव अण् नि०। सरयूनदीभवे।

**सारस** न० सरोऽभिजनोनिवसतयस्तिरस्य अण्। पद्मे, कट्याभरणे च। सह रसेन स्वार्थे अण्। चन्द्रे, स्वनामख्याते पक्षिणि च पु०। तद्योषिति स्त्री०। सरसइदम् अण्। सरोवरसम्बन्धिनि त्रि०।

**सारसन** न० सारं सनोति सन-अच्। स्त्रीकट्याभरणे, काञ्च्याम्, कञ्चुकदाढ्यार्थं मध्यकाये निबद्धे, पट्टिकादौ च।

**सारस्वत** पु० सरस्वती देवताऽस्य, सरस्वत्याइदं वा अण्। विल्वदण्डे, देशभेदे, पञ्चगौडमध्ये ब्राह्मणभेदे सरस्वतीप्रतिपालितमुनिभेदे, ब्राह्मदिनरूपे कल्पभेदे च "सारस्वतस्य कल्पस्येति" पुराणम्। सरस्वतीसम्बन्धिनि "वक्षा पूर्वाह्णसमये कुर्यात् सारस्वतोत्सवमिति" पुराणम्। सरस्वतीदेवताके च त्रि० "तत्सावनाय निर्वापश्चरु सारस्वतोद्विजै रिति" स्मृति।

**सारस्वतकल्प** पु० कर्म०। तन्त्रोक्ते सरस्वत्या उपासनार्थके विधानभेदे, तन्नामके ब्राह्मदिने च। [दूर्व्वायाञ्च।

**सारा** स्त्री० सारयति सृ णिच्- अच्। कृष्णत्रिवृतायाम्,

**साराल** पु० सारमालाति आ+ला-क। तिलवृक्षे।

**सारि(री)** पु० स्त्री० सृ इण् स्त्रीत्वपक्षे वा ङीप्। पाशके "शारीं चरन्तीं सखि। मारयेति नैषधम् पक्षिभेदे च।

**सारिका** स्त्री० सरति गच्छति सृ-ण्वुल्। पक्षिभेदे (शालिक)

**सारिणी** स्त्री० सृ-णिनि। सहदेवीलतायाम् कार्पासी दुरालभाया, कपिलशिंशपाया, प्रसारिण्यां, रक्तपुनर्नवायाञ्च।

**सारिवा** स्त्री० सारिरिव वाति वा क। (अनन्तमूल) लताभेदे [भव ठञ्। विषभेदे।

**सारोष्ट्रिक** पु० सारः श्रेष्ठ उष्ट्रोयत्र सारोष्ट्र देशभेदस्तत्र-

**सार्थ** पु० सृ-थन् सार्थेऽण्। समूहे, जन्तुसमूहे "स जयत्यरि-

सार्थसार्थकीति ' नैषधम् सह अर्थेन वाच्येन वा। वणिक्समूहे। धनिनि त्रि० त्रनु। सार्थक। अर्थसहिते जने त्रि० शब्दे पु० "सार्थक स्वार्थबोधकदिति 'शब्दशक्तिप्रकाशिका"

**सार्थवाह** पु० सार्थं वहति वह-अण्। वणिग्जने।

**सार्द्र** त्रि० सह आर्द्रेन। आर्द्रतायुक्ते। [अर्द्धयुक्ते त्रि०।

**सार्द्धम्** अव्य० सह+ऋध-अम्। साहित्ये। सह अर्द्धेन। सार्द्ध।

**सार्प** न० सर्पोदेवतास्य अण्। अश्लेषानक्षत्रे।

**सार्पिष्क** त्रि० सर्पिषा संस्कृतम् ठण्। घृतसंस्कृते व्यञ्जनादौ

**सार्व्वजनीन** त्रि० सर्व्वेषु जनेषु विदित खञ् द्विपदवृद्धि। सर्व्वलोकविदिते।

**सार्व्वत्रिक** त्रि० सर्व्वत्रभवम् ठञ्। सर्व्वस्मिन् कालादौभवे।

**सार्व्वधातुक** न० सर्व्वधातून् व्याप्नोति ठञ्। व्याकरणोक्ते सर्व्वधातुप्रकृतिके तिङादौ प्रत्यये।

**सार्व्वभौतिक** त्रि० सर्व्वाणि-भूतानि व्याप्नोति ठञ् द्विपदवृद्धि। सर्व्वभूतव्यापके।

**सार्व्वभौम** पु० सर्व्वस्या भूमेरीश्वर सर्व्वासु भूमिषु विदितो वा अण्। चक्रवर्त्तिनि नृपे, उत्तरदिक्स्थे गजे च।

**सार्व्वलौकिक** त्रि० सर्व्वेषु लोकेषु विदित ठञ् द्विपदवृद्धि। सर्व्वलोकेषु विदिते "स राम सार्व्वलौकिक" इति भट्टि।

**सार्व्वविभक्तिक** त्रि० सर्व्वासु विभक्तिषु तदर्थे भव -ठञ्। सर्व्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये।

**सार्षप** त्रि० सर्षपस्य विकार अण्। सर्षपविकारतैलादौ "अदुष्ट सार्षपं तैलमिति, स्मृति "।

**साल** पु० सल-घञ्। वृक्षमात्रे, "रसालः साल समङ्गमतेति 'नैषधम् स्वनामख्याते वृक्षभेदे, प्राकारे च।

**सालन** पु० साल कारणत्वेनास्त्यस्य पामादित्वात् न। सालनिर्यासे (धुना)।

**सालनिर्यास** पु० ६त०। धुना) सर्ज्जरसे। [वृक्षे।

**सालपर्णी** स्त्री० सालस्येव पर्णान्यस्या ङीप्। (सालपानि)

**सालपुष्प** न० सालस्येव पुष्प यस्य। स्थलपद्मे।

**सालभञ्जिका** स्त्री० साल भनक्ति भञ्ज-ण्वुल्। काष्ठादिनिर्म्मिते कृत्रिमक्रीडासाधने पुत्तलिकायाम्, वेश्यायाञ्च।

**सालरस** पु० ६त०। (धुना) रात्रे।

**सालवेष्ट** पु० साल वेष्टयति वेष्ट-अण्। राले (धुना)।

**साला** स्त्री० साल प्राकारोऽस्त्यस्या अच्। स्नुहि।

**सालावृक** पु० सालायां वृकइव। कुक्कुरे।

**सालूर** पु० सल-ऊरच् णिच्। भेके मण्डूके

**सालेय** पु० सालाया भव ढक्। मधुरिकायाम्।

**सालोक्य** न० समानोलोकोऽस्य तस्य भाव ष्यञ्। पञ्चविधमुक्तिमध्ये एकलोकसहवासरूपे मुक्तिभेदे। [न्द्रिये।

**साल्व** पु० व०व० सौभदेशे। तेषा राजा अण्। तद्देशाधिपे

**साल्वहन्** पु० साल्व न्रुप हतवान् हन-क्विप्। विष्णौ।

**सावधान** त्रि० सह अवधानेन। सचेतने, सतर्के, मनोभिनिवेशयुक्ते च।

**सावन** न० सवन। सोमयागाङ्ग स्नान तस्येदम् अण्। "अहोरात्रेण चैकेन सावनो दिवस स्मृत ' इति ज्योतिषोक्ते अहोरात्रात्मके दिवसे, सवनत्रयस्य अहोरात्रसाध्यत्वात्-तत्सम्बन्धित्वम्। तत्त्रिंशद्दिवसात्मके मासभेदे च पु० 'विवाहादौ स्मृत सौर' यज्ञेषु सावनोमत इति स्मृति। "सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तित " इति सूर्य्यसिद्धान्त।

**सा(शा)वर** पु० स(श)वरेण निर्वृत्त अण्। पापे, अपवादे च।

**सावर्णि** पु० सवर्णाया सूर्य्यपत्न्या छायाया भव अण्। सवर्णागर्भजे सूर्य्यजे अष्टमे मनौ। इञ्। सावर्णिरप्यत्र "सूर्य्यात्जन्म समासाद्य सावर्णिर्भविता मनुरिति" चण्डी।

**सावित्र** पु० सविता देवताऽस्य अण्। विप्रे। ऋषिविशेषे, स्त्री० ङीप्। "सावित्रीमात्रसारोऽपीति ' स्मृतिः। सा च सत्यवतोभार्य्यायाञ्च। सवितृदेवताके चर्व्वादौ त्रि० यज्ञोपवीते न०। स्वार्थादौ अण्। सूर्य्ये। तस्येदम् अण्। महादेवे, गर्भे वसौ च पु०।

**सावित्रीव्रत** न० सावित्रीपूजनमुद्दिश्य कर्त्तव्य व्रतम्। ज्यैष्ठकृष्णचतुर्द्दश्यां सावित्रीपूजनार्थे व्रते। [पवीते।

**सावित्रीसूत्र** न० सावित्रीदीक्षाकालिक सूत्रम् शाक०। यज्ञो-

**सास्ना** स्त्री० सस-न णिच्। गोगलस्थिते लोमसघाताक्ते कम्बले। [करणे च।

**सास्र** त्रि० सह अस्रेण। चक्षुर्जलान्विते। [सामानाधि

**साहचर्य्य** न० सहचरस्य भाव ष्यञ्। समभिव्याहारे, साहित्ये,

**साहस** न० सहसा बलेन निर्वृत्तम् अण्। बलेन कृते चौर्य्यस्त्रीधर्षणादौ दुष्टकर्म्मणि,' सहसा क्रियते यत्तु तत् साहसमिति स्मृत मिति ' स्मृति तच्च पञ्चविधम् "मनुष्यमारणस्तेय परदाराभिमर्षणम्। पारुष्यमनृतञ्चैव साहस पञ्चधा स्मृतमिति ' स्मृति। सहसा अविवेचनेन कृतम् कर्म्म। अविमृश्यकृतकर्म्मणि, त्रि०। साहसमनुसरति अण्। स्मृत्युक्ते दण्डविशेषे, "शासीतिपणसाहस्रो दण्डउत्तमसाहस।

तदर्द्धं मध्यमं प्रोक्तस्तदर्द्धमधमः स्मृतः" इति स्मृतिः। "पा-कयज्ञे तु साहसः" इत्युक्ते अग्निभेदे च पु०।

**साहसिक** त्रि० साहसे प्रसृत ठञ्। मनुष्यमारणादिनिरते चौरे, पारदारिके, मिथ्यावादिनि, परुषवादिनि च।

**साहस्र** न० सहस्राणां समूहः अण्। सहस्रसमूहे। स्वार्थे अण्। सहस्रसङ्ख्यायाम् न०। सहस्रं परिमाणमस्य अण्। सहस्रसंख्यान्विते त्रि०। सहस्रसंख्यकगजसमूहे पु०।

**साहायक** न० सहायस्य भावः वुञ्। साहाय्ये।

**साहाय्य** न० सहायस्य भावः ष्यञ्। सहायतायाम्।

**साहित्य** न० सहितस्य भावः ष्यञ्। मेलने परस्परसापेक्षाणां तुल्यरूपाणामेकक्रियान्वयित्वे, तुल्यवदेकक्रियान्वयित्वे, एकक्रियान्वयित्वे, बुद्धिविशेषविषयत्वे, काव्यभेदे च।

**साह्न** न० सह्नस्य भावः अण् सह-ण्यत् वा। सह्नत्वे सहनीये त्रि०।

**साह्वय** पु० सह आह्वयेनाभिधानेन। अभिधानसहिते "जगाम गजसाह्वयमिति" भारतम्। मेषादिप्राणिकरणद्यूतरूपे समाह्वये च।

**सिंह** पु० हिनस्ति-अच् पृ० वर्णविपर्ययः। स्वनामख्याते पशुभेदे, रक्तशोभाञ्जने, मेषादितः पञ्चमे राशौ च। म-दान्तस्य। श्रेष्ठार्थे।

**सिंहकेशर** पु० सिंहस्येव केशरोऽस्य। वकुले।

**सिंहतल** पु० सिंहस्येव तलमत्र। करद्वयमेलनरूपे अञ्जलौ।

**सिंहतुण्ड** पु० सिंहस्येव तुण्डं पुष्पमस्य। सेहुण्डवृक्षे।

**सिंहद्वार** न० सिंहचिह्नितं द्वारम्। पुरप्रवेशनयोग्ये द्वारे

**सिंहध्वनि** पु० सिंहस्येव ध्वनिः। सिंहतुल्यनादे सिंहनादादयोऽप्यत्र। ६त० सिंहस्य शब्दे। [वाद्यभेदे।

**सिंहनर्दिका** पु० सिंह इव नर्दति नर्द-ण्वुल्। (सिङ्गा)

**सिंहनादिका** स्त्री० सिंहमपि नादयति नद-णिच्-ण्वुल्। दुरालभायाम्।

**सिंहपर्णी** स्त्री० सिंहस्य पुच्छमिव पर्णमस्याः ङीप्। वासकवृक्षे

**सिंहपुच्छिका** स्त्री० सिंहस्य पुच्छमिव प्रकाण्डमस्याः-कप्, अत इत्वम्। (चुकुरवाकुले) इति ख्याते।

**सिंहपुच्छी** स्त्री० सिंहस्य पुच्छमिव पुष्पाणि पर्णानि वास्याः ङीप्। चित्रपर्ण्यां, पृश्निपर्ण्याम्, माषपर्ण्याञ्च।

**सिंहपुष्पी** स्त्री० सिंहस्य पुच्छमिव पुष्पमस्याः। पृश्निपर्ण्याम्

**सिंहमुखी** स्त्री० सिंहस्य मुखमिव मुखमस्याः इव पुष्पमस्याः ङीप्। वासके। [वाहनादयोऽप्यत्र।

**सिंहयाना** स्त्री० सिंहो यानं वाहनं यस्याः। दुर्गायाम् सिंह

**सिंहल** पु० सिंहोऽस्त्यत्र लच्। देशभेदे। तद्देशप्रभवत्वात् रङ्गे, रीतौ त्वचे च न०।

**सिंहलास्थान** पु० सिंहल आस्थानं यस्य। तालसदृशे वृक्षभेदे।

**सिंहवाहिनी** स्त्री० सिंहरूपो वाहो विद्यतेऽस्याः इनि दुर्गायाम्। [विक्रमे त्रि०।

**सिंहविक्रान्त** पु० सिंह इव विक्रान्तः। अश्वे। सिंहतुल्य

**सिंहविन्ना** स्त्री० सिंह इव विन्ना विद-क्त। माषपर्ण्याम्।

**सिंहसंहनन** त्रि० सिंहस्येव संहननमङ्गमस्य। वराङ्गयुक्ते सिंहतुल्य दृढाङ्गे, च। "सिंहसंहननो युवेति" रघुः।

**सिंहा(शिङ्घा)न** न० शिघि-आनच् पृ०। लौहमले।

**सिंहासन** न० सिंहचिह्नितमासनम्। राजासने चन्द्रराजी-क्रीडायां जयभेदे, योगासनभेदे च लक्षणं हठदीपिकायाम्।

**सिंहास्य** पु० सिंहस्यास्यमिवास्यं वदनमिव पुष्पं यस्य। वासके।

**सिंहिका** स्त्री०। कश्यपपत्न्यां राहुमातरि।

**सिंहिकासुत** पु० ६त०। राहौ सिंहिकापुत्रादयोऽप्यत्र।

**सिंही** स्त्री० हिनस्ति रोगान् हिन्स अच् पृ०। वार्ताक्यां, कण्टकारिकायाम्, वासके, बृहत्यां, मुद्गपर्ण्याम्, राहुमातरि, च। सिंह+जातौ ङीप्। सिंहयोषिति।

**सिक** सेचने सौत्र० पर० सक० सेट्। सेकति असेकीत्।

**सिकता** स्त्री० ब० व०। सिक-अतच् किच्च। वालुकायाम्। सिकताः सन्त्यत्र अण् तस्य लुप्। सिकतायुक्तदेशे स्त्री०।

**सिकतामय** त्रि० सिकता+मयट्। वालुकामये तटादौ [देशे।

**सिकतावत्** त्रि० सिकता सन्त्यत्र मतुप् मस्य वः। वालुकायुक्त-

**सिकतिल** त्रि० सिकता सन्त्यत्र इलच्। वालुकायुक्तदेशे

**सिक्थ** न० षिच-थक्। मधूच्छिष्टे, (मोम) नील्याञ्च। स्वार्थे कन्। तत्र, भक्तपुलाके, ग्रासे च पु०।

**सिक्य** न० सिक-यत्। (सिके) रज्जुनिर्मिते पदार्थे [कुनी)।

**सिङ्घा(घा)न** न० शिघ-आनच् पृ०। नासिकामले। (सि-

**सिच्** त्रि० सिच-क्विप्। सेचनकर्त्तरि, कर्मणि क्विप्। वस्त्रे

**सिचय** पु० सिच-अयच् किच्च। वस्त्रे।

**सिञ्चिता** स्त्री० सिच-इतच् पृ०। पिप्पल्याम्

**सित** न० षो-क्त। रौप्ये, मूलके, चन्दने च। शरे, शुक्लपक्षे, शुक्लवर्णे च पु०। तद्वति, समाप्ते, बद्धे, ज्ञाते च त्रि०।

**सितकण्ठ** पु० सितः कण्ठोऽस्य। दात्यूहे, पक्षिणि।

**सितकर** पु० सिताः कराः किरणा यस्य। चन्द्रे, कर्पूरे च सित-मयूखादयोऽप्यत्र।

**सितकर्णी** स्त्री० सितं कर्ण इव पुष्पमस्याः ङीप्। वासके

सितकुञ्जर पु० सित कुञ्जरोऽस्य। इन्द्रे। कर्म०। ऐरावतगजे
सितगुञ्जा स्त्री० कर्म०। श्वेतगुञ्जायाम्।
सितच्छत्रा स्त्री० सित छत्रमिव पुष्पमस्या। श्वेतपुष्पायाम्।
सितच्छद पु० सितश्छद पक्षोऽस्य। हंसे। श्वेतदूर्वायां,स्त्री०।
सितदर्भ पु० कर्म०। श्वेतकुशे। [जोरके।
सितदीप्य पु० दीपयत्यग्निम् दीप-णिच्-यत् कर्म०। श्वेत
सितदूर्वा स्त्री० कर्म०। श्वेतदूर्वायाम्।
सितद्रु पु० कर्म०। मोरटभेदे, शुक्लवर्णवृक्षे च।
सितधातु पु० कर्म०। कठिन्याम्।
सितपक्ष पु० सित पक्षोऽस्य। हंसे। कर्म०। चन्द्रस्य वृद्धिकारक प्रतिपदादिपूर्णिमान्ते शुक्ले पक्षे। [वृक्षे।
सितपर्णी स्त्री० सितानि पर्णान्यस्या ङीप्। अर्कपुष्पिका
सितपाटलिका स्त्री० कर्म०। (श्वेतपारुल) वृक्षे।
सितपुङ्खा स्त्री० सित पुङ्खोऽस्या। श्वेतशरपुङ्खावृक्षे।
सितपुष्प न० सितानि पुष्पाण्यस्य। श्वेतवर्णीतृणके। तगर-वृक्षे, काशे, श्वेतरोहितकवृक्षे च पु०। श्वेतापराजिताया स्त्री० ङीप्। मल्लिकाया स्त्री० टाप्। कर्म० श्वेतपुष्पे न०।
सितमरिच न० कर्म०। शुभ्रमरिचे।
सितमाष पु० कर्म०। राजमाषे (बरबटी) [बायाम्।
सितवर्षाभू स्त्री० वर्षासु भवति भू-क्विप् कर्म०। श्वेतपुनर्न-
सितसायका स्त्री० सित सायकोऽस्या ब०व०। शुभ्र-शरपुङ्खावृक्षे।
सितशिम्बिक पु० सिता शिम्बिर्यस्य कप्। गोधूमे,
सितशूक पु० सित, शुभ्र शूकोऽस्य। यवे।
सितशूरण पु० कर्म०। वनशूरणे (वनवोल)।
सितसर्षप पु० कर्म०। गौरसर्षपे। [शाके।
सितसार(क) पु० सित सारोनिर्यासोऽस्य वा कप्। शालिञ्च-
सिता स्त्री० षो-क्त। शर्करायाम्।
सिताखण्ड पु० सिताया खण्ड इव। मधुजातशर्करायाम्।
सिताग्र पु० सितमग्र यस्य। कण्टके
सितादि पु० सितायाआदि कारणम्। गुडे।
सितापाङ्ग पु० सितमपाङ्ग यस्य। मयूरे
सिताब्ज न० कर्म०। श्वेतकमले। सिताम्भोजादयोप्यत्र।
सिताभ पु० सिता आभा यस्य। कर्पूरे,चन्द्रे च। तक्रे स्त्री०
सिताभ्र पु० अभ्रइव सित शुभ्र राज०। कर्पूरे।
सिताभ्रक न० अभ्रकमिव सितम् राज०। कर्पूर
सितार्जक पु० कर्म०। श्वेतार्जकाम्।

सितालक पु० आलयति भूषयति अल णिच् ण्वुल् कर्म०। श्वेतमन्दारे। [श्वेतदूर्वायाम्
सितालता स्त्री० सिता सती आलतते आ+लत अच्।
सितावर पु० सित श्वेततामावृणोति आ+वृ-अच् (सुसुनि) शाकभेदे।
सिति पु० षो-क्तिच्। शुक्लवर्णे, कृष्णवर्णे च। तद्वति त्रि०।
सितिमन् पु० सितस्य भाव इमनिच्। शुभ्रतायाम
सितिवार पु० सिति श्वेतता वृणोति वृ-अण्। सुनिषण्णके (सुसुनि)शाके।
सितिवासस् पु० सिति कृष्ण वासोऽस्य। बलदेवे।
सितेतर पु० सितादितर। श्यामशालौ कुलत्थे च श्यामेतर वर्णे पु० तद्वति त्रि०।
सितोपल पु० कर्म०। स्फटिके। कठिन्या न०। शर्करायां स्त्री०
सिद्ध न० सिध-क्त। सैन्धवलवणे अणिमाद्यष्टैश्वर्ययुक्ते निष्पन्ने,पक्वे,, नित्ये च त्रि०। सिद्धिरस्त्यस्य अच्। व्यासादौ मुनौ देवयोनिभेदे च पु०। निश्चिते त्रि० विष्कम्भादिषु मध्ये द्वाविंशयोगे, गुडे, कृष्णधुस्तूरे च पु०। ज्योतिषोक्ते योगिनीदशामध्ये षष्ठ्यां दशायां स्त्री०। तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे पु०।
सिद्धक पु० सिद्धइव इवार्थे कन्। सिन्धुवारे, शालवृक्षे च
सिद्धजल न० सिद्धपक्व जलम्। काञ्जिके। सिद्धतोय,दयोप्यत्र
सिद्धदेव पु० सिद्धाना देव। महादेवे
सिद्धधातु पु० सिद्ध प्रसिद्धोधातु। पारदे
सिद्धपीठ पु० न० कर्म०। 'जातोऽसववलिर्यत्र होमोवा कोटि-सङ्ख्यक। महाविद्यानया कोऽत्र सिद्धपीठ प्रकीर्त्तित' इति तन्त्रोक्ते स्थानभेदे।
सिद्धपुर न० कर्म०। "लङ्काकुमध्ये यमकोटिरस्या प्राक् पश्चिमे रोमकपत्तनञ्च। अधस्ततः सिद्धपुरञ्चेत्युक्ते भूगो-लस्थेषु भूवृत्तपादान्तरितदेशस्थेषु चतुर्षु देवनिर्मितेषु पुरेषु मध्ये लङ्काधोभागस्थे पुरभेदे।
सिद्धपुष्प पु० सिद्ध नित्य पुष्प यस्य। करवीरवृक्षे।
सिद्धप्रयोजन पु० सिद्ध प्रयोजन यस्मात् ब०व०। गौरसर्षपे
सिद्धरस पु० सिद्ध प्रसिद्धोरस। पारदे सिद्धोरसोऽत्र धातुमात्रे त्रि०।
सिद्धविद्या स्त्री० सिद्धा विद्या मन्त्रोऽस्या। काली तारा महाविद्या षोडशी भुवनेश्वरी। भैरवी छिन्नमस्ता च विद्या धूमावती तथा। बगला सिद्धविद्या च मातङ्गी क-

मतङ्गिका। एता दश महाविद्या सिद्धविद्या प्रकीर्त्ति-
ता" इति तन्त्रोक्तासु दशसु काल्यादिषु।

**सिद्धसाधन** न० सिद्धस्य निश्चितस्य साधनमनुमानम्। न्यायोक्ते सिषाधयिषाविरहकाले साध्यवत्त्वेन निश्चितस्य पुनरनुमानरूपे दोषे। सिद्ध साधयति ल्यु। श्वेतसर्षपे पु०।

**सिद्धसाध्य** पु० सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिद्वितीयकोष्ठस्थाद्याक्षरयुक्ते तन्त्रोक्ते मन्त्रभेदे।

**सिद्धसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धसिन्धु** स्त्री० ६ त०। गङ्गायाम् सिद्धनद्यादयोऽप्यत्र।

**सिद्धसुसिद्ध** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधितृतीयकोष्ठस्थिताद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धान्त** पु० सिद्ध निश्चितोऽन्तोयस्मात्। प्रमाणाद्युपन्यासेन पूर्वपक्षनिरासके सिद्धपक्षस्य स्थापनरूपे वाक्यसन्दर्भे, ज्योतिःशास्त्रभेदे च स च सूर्यसिद्धान्त सोमसिद्धान्तादि

**सिद्धारि** पु० तन्त्रोक्ते सिद्धादिचक्रस्थे साधकनामाद्याक्षरयुक्तकोष्ठावधिचतुर्थकोष्ठस्थाद्याक्षरयुक्ते मन्त्रभेदे।

**सिद्धार्थ** (क) पु० सिद्ध अर्थोयस्मात् ५ ब० वा कप्। श्वेतसर्षपे वटीवृक्षे च। ६ ब०। प्रसिद्धार्थे त्रि०। "सिद्धार्थं सिद्धसम्बन्धमिति" भाष्य।

**सिद्धि** स्त्री० सिध-क्तिन्। ऋद्धिनामौषधे, योगभेदे, अन्तर्द्धाने, निष्पत्तौ, पाके, पादुकायाम्, मोक्षे, सम्पत्तौ, अणिमाद्यष्टविधैश्वर्य्ये, बुद्धौ, साध्यवत्तया निश्चये च।

**सिद्धिद** पु० सिद्धि ददाति दा-क। बटुकभैरवे। सिद्धिदातरि त्रि०।

**सिद्धियोग** पु० सिद्धिहेतुर्योग। "शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया। गुरौ पूर्णा च संयुक्ता सिद्धियोग प्रकीर्त्तित" इति ज्योतिषोक्ते शुक्रादिवारयुक्तनन्दादौ

**सिध्म** न० सिध-मन् किच्च। किलासरोगे।

**सिध्मन्** न० सिध-मनिन् किच्च। किलासरोगे तद्रोगवति त्रि०।

**सिध्मल** त्रि० सिध्मन्+अस्त्यर्थे लच्। किलासरोगवति। विकारे स्त्री०। [मत्स्ये।

**सिध्य** पु० कार्य्यं साधयति सिध-णिच्-कर्म्मणि यत् नि०। पुष्य

**सिध्रक** पु० सेधति रोगान् सिध-रक् स्वार्थे कन्। (पुथ) वृक्षभेदे "वनगिरयोः" इत्यादिसूत्रेण सिध्रकशब्दस्य पाणिनिना दीर्घविधानात् पुंस्त्वमेवास्य, क्षीरोत्र स्त्रीत्वमप्यनीयम्।

**सिध्रकावण** न० सिध्रकप्रधानं वनं णत्वम् दीर्घश्च। देवोद्याने।

**सिन** पु० सीयते बध्यतेऽत्र सि-बाहुलकात् न। ग्रासे, काणे च

**सिनी** स्त्री० सि-क्त तस्य नश्च स्त्रियां ङीप्। शुक्लवर्णस्त्रियाम्।

**सिनीवाली** स्त्री० सिनी श्वेता चन्द्रकला वलति धारयति अण् ङीप्। चतुर्द्दशीयुक्तायाममावास्यायाम्।

**सिन्दु(न्धु)क** पु० स्यन्दते स्यन्द-उ सम्प्रसारणञ्च ष० दस्य वा धः स्वार्थे वा कन्। सिन्दुवारवृक्षे।

**सिन्दु(न्धु)वार** पु० सिन्धु गजमद वारयति तिक्तत्वात् वृ-अण्। (निसिन्दा) वृक्षे। "मुक्ताकलापीकृत सिन्दुवारमिति" कुमार तस्य च श्वेतपुष्पत्वात् मुक्तातुल्यत्वम्।

**सिन्दूर** न० स्यन्द-ऊरन् सम्प्रसारणम्। स्वनामख्याते रक्तवर्णे चूर्णभेदे, वृक्षभेदे पु०।

**सिन्दूरकारण** न० ६ त०। सीसके। [सधवायाम् स्त्री०।

**सिन्दूरतिलक** पु० सिन्दूरवर्णं तिलकचिह्नभेदोयस्य। हस्तिनि

**सिन्दूरी** स्त्री० सिन्दूरवर्णानि पुष्पाणि सन्त्यस्या अच् गौ० ङीष्। सिन्दूररोचन्यां, धातक्याञ्च।

**सिन्धु** पु० स्यन्द-उ सम्प्रसारणं दस्य धश्च। समुद्रे, नदभेदे, वृक्षे, श्वेतटङ्कणे, रागभेदे, गजमदे, देशभेदे च। तद्देशवासिनि पु० ब० व। नदीभेदे स्त्री०।

**सिन्धुकफ** पु० सिन्धो कफ इव। समुद्रफेने। [श्वेतटङ्कणे।

**सिन्धुकार** न० सिन्धुदेशे कीर्य्यते क्रियते वा कॄ-कृ-वा अण्।

**सिन्धुखेल** पु० सिन्धुसमीपे खेलति खेल-अच्। सिन्धुदेशे।

**सिन्धुज** न० सिन्धुदेशे समुद्रे वा जायते जन-ड। सैन्धवलवणे। चन्द्रे, कर्पूरे च पु०। लक्ष्म्यां स्त्री०। सिन्धुजातादयोऽप्यत्र।

**सिन्धुनन्दन** पु० ६ त०। चन्द्रे, सिन्धुसुतादयोऽप्यत्र लक्ष्म्यां स्त्री०।

**सिन्धुपुष्प** पु० सिन्धौ पुष्पति विकाशते पुष्प-अच्। शङ्खे।

**सिन्धुसम्भज** न० सिन्धुमध्ये जायते जन-ड। सैन्धवलवणे, अमृते च।

तरङ्गानिलकम्पितास्विति' रघु ।

**सिम** पु० षि-मन् किच्च। सर्व्वस्मिन् इत्यर्थे, तदर्थेऽस्य सर्व्वनामता

**सिम्बा(म्बि)** स्त्री० शाम्यति क्षुद्विरनया शम-बन् इनु वा ष्ट०। (शुटि) शिम्बायाम् इनन्त । नखीनामगन्धद्रव्ये। वा ङीप्। ङीबन्त । निष्पाव्याञ्च।

**सिम्बिजा** स्त्री० सिम्बेर्जायते जन-ड। शमीधान्ये कलायादौ

**सिर** पु० सि-रक्। पिप्पलीमूले। नाड्याम् अम्बुवाहिन्याञ्च स्त्री०। [शब्दकोष्ठचे।

**सिल्हकी** स्त्री० षि-क्विप् लक-अच् गौरा० ङीप् कर्म०।

**सिह्लण्ड** पु० सो-क्वि सि छेदस्य कुण्डते कण्टकाष्टतयात् कुडि-अण्। स्नुहीवृक्षे [तत्रैव।

**सिह्ल** पु० सिह्-लक् ष्ट०। हकाधूपाख्ये गन्धद्रव्ये। स्वार्थे कन्।

**सिह्लकी** स्त्री० सिह्-लकक् ष्ट० गौ० ङीष्। शल्लकीवृक्षे।

**सिह्लभूमि** स्त्री० सिह्लस्य गन्धद्रव्यस्य भूमि । शल्लकीवृक्षे।

**सीक** सेचने भ्वा० आ० सक० सेट्। सीकते असीकिष्ट। चङि न ह्रस्व । अषोपदेशत्वान्न षत्वम्।

**सीक** स्पर्शे वा चु० उभ० पक्षे भ्वा० प० सक० सेट्। सीकयति ते सीकति असीसिकत् त असीकीत्। न षत्वम्।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरण्। जलकणे।

**सीता** स्त्री० सि त ष्ट० दीर्घ । लाङ्गलपद्धतौ, जनकराजदुहितरि, भद्राश्ववर्षस्थितगङ्गायाञ्च।

**सीतापति** पु० ६ त०। श्रीरामे।

**सीतायाःपति** पु० ६त० अलुक्समा०। श्रीरामे "सीताया पतये नम,, इतिपुराणम् असमस्तत्वे पत्येइति स्यात्।

**सीत्कार** पु० सीदित्यव्यक्तस्य कार सीत्+क्ष-घञ्। अनुरागजे शब्दे।

**सीत्कृत** न० सीत्×कृ भावे क्त। सीत्कारे, अनुरागजशब्दे

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्त यत्। धान्ये। सीतामर्हति यत्। हलकर्षणयोग्ये क्षेत्रादौ त्रि०।

**सीधु** पु० सिध-उ ष्ट०। मद्ये "इक्षो पकरसै सिद्ध सीधुरित्यभिधीयते" इत्युक्ते मद्यभेदे च।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य न इत् अनित्यत्वात्। बकुले।

**सीधुपुष्प** पु० सीधुगन्धयुक्त पुष्पमस्य। कदम्बे, वकुले च। धातक्या स्त्री० ङीप्।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य। आम्रवृक्षे।

**सीमन्त** पु० सीम्नोऽन्त शक०। (सिति) केशान्तर्गतपङ्क्त्याकारे पदार्थे "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भविधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये संस्कारभेदे च।

**सीमन्तक** न० सीमन्ते कायति कै-क। सिन्दूरे। नरकावासे पु०

**सीमन्तिनी** स्त्री० सीमन्त+अस्त्यर्थे इनि। योषिति नार्य्याम्।

**सीमन्तोन्नयन** न० सीमन्तस्य तदाख्य गर्भसंस्कारस्य उन्नयनमुद्भावनमत्र। इत्युक्ते गर्भसंस्कारककर्मभेदे

**सीमन्** स्त्री० सि-इमनि ष्ट० न गुणादि। मर्य्यादायाम्, अवधौ, स्थितौ-क्षेत्रे, अमरकोषे "सीम्नि पुष्पलकोऽस्त "इति सिद्धान्तकौमुदी। वेलायाञ्च। [सीमन्शब्दार्थे च।

**सीमा** स्त्री० सीमन्×डाप्। मर्य्यादाया, ग्रामादेरन्तभागे,

**सीमाविवाद** पु० सीमाया विवाद । अष्टादशसु विवादेषु मध्ये स्वनामख्याते विवादभेदे।

**सीर** पु० सि रक् ष्ट०। सूर्य्ये, अर्कवृक्षे, हले च। [जनकन्दपे।

**सीरध्वज** पु० सीरोहल तच्चिह्नितो ध्वजोऽस्य। चन्द्रवंशे

**सीरपाणि** पु० सीर हल पाणौ यस्य। बलदेवे

**सीरिन्** पु० सीरोहलोऽस्त्यस्यायुधत्वेन इनि। बलरामे

**सी(से)वन** न० सिव-ल्युट् नि० वा दीर्घ। सेवने वस्त्रसन्ताने (सेलाइकरन) [स्वार्थे कन्। तत्रार्थे

**सीस** न० सि-क्विप् ष्ट० सी-क कर्म०। (सीसे) धातुभेदे

**सीह्लण्ड** पु० सिह्लण्ड+ष्ट० दीर्घ । स्नुहीवृक्षे,

**सु** अव्य० षु-डु। पूजायाम्, अतिशये, कृच्छ्रे, अनुमतौ, समृद्धौ, अनायासे च।

**सुकण्टका** स्त्री० सुष्ठु कण्टकोऽस्या । घृतकुमार्य्याम्।

**सुकण्डु** स्त्री० सु+कण्डु+यक् डु। कण्डुरोगे (चुलकाना)

**सुकन्द** पु० शोभन कन्दोऽस्य। कशेरौ, शोभनकन्दयुक्ते त्रि० संज्ञाया कन्। पलाण्डौ

**सुकन्दिन्** पु० शोभन हितकर कन्दोऽस्यस्य इनि। वाराहीकन्दे, धरणीकन्दे, शूरणे, च। (ओल)

**सुकरा** स्त्री० सुखेन क्रियते दुह्यते वा सु+कृ-खल्। सुशीलाया गवि। सुखसाध्ये त्रि०। [कर्णयुक्ते त्रि०।

**सुकर्णक** पु० सुष्ठु कर्णइव कन्दोऽस्य कप्। हस्तिकन्दे। शोभन

**सुकर्णिका** स्त्री० सुष्ठु-कर्णाविव पर्णान्यस्या कप् अत इत्वम्। मूषिकपर्ण्याम्। [वारुण्याम् (राखालशसा)।

**सुकर्णी** स्त्री० सुष्ठु कर्णाविव पत्राण्यस्या ङीप्। इन्द्र

**सुकर्म्मन्** पु० सुष्ठु कर्म्म यस्मात् ५व०। विष्कम्भादिषु मध्ये सप्तमे योगे। शोभनकार्य्यवति त्रि०। प्रादि०। शोभने कार्य्ये न०

**सुकल** पु० सुष्ठु कल्यते ख्यायतेऽसौ सु+कल+घञ्। दातृत्वभोक्तृत्वादिना विख्याते जने सुन्दरमधुराव्यक्तशब्दे च।

**सुकाण्ड** पु० सुष्ठु काण्डोऽस्य। कारवेल्ले, सुन्दरकाण्डयुक्ते द्रव्ये च काण्डीरलताया स्त्री०। स्वार्थे कन् अत इत्वम्। तत्रैव

**सुकामा** स्त्री॰ सुष्ठु काम्यतेऽसौ सु×कम-घञ्। त्रायमाणा लतायाम्। शोभनकामवति त्रि॰।

**सुकाष्ठ** न॰ सुष्ठु काष्ठ प्रा॰। देवदारुकाष्ठे, शोभनकाष्ठे च।

**सुकाष्ठा** स्त्री॰ सुष्ठु काष्ठं यस्याम्। काष्ठकदल्याम्, कटुकायाञ्च

**सुकुन्दक** पु॰ सु+कुदि–ण्वुल्। पलाण्डौ।

**सुकुन्दन** न॰ सु+कुदि–ल्यु–। वर्वरे

**सुकुमारा** स्त्री॰ सु+कुमार–अच् यञ् वा। जातीवृत्ते, नवमालिकायाम्, कदल्या, पृक्काया, मालत्याञ्च। अतिकोमले त्रि॰। प्रा॰ सुन्दरकुमारावस्थान्विते त्रि॰ स्त्रियां ङीप्

**सुकृत्** त्रि॰ सु+कृ–क्विप्। पुण्यकारके, धार्म्मिके जने।

**सुकृत** न॰ सु+कृ–क्त। पुण्ये, धर्म्मे, शुभे च। सुकर्म्मणि न॰

**सुकृति** स्त्री॰ सु+कृ–क्तिन्। पुण्ये, भद्रत्वे, सत्कर्मणि च।

**सुकृतिन्** त्रि॰ सुकृतमनेन इनि। पुण्यशीले, शुभयुक्ते, सत्कर्म्माद्ये च।

**सुकेसर** पु॰ सुष्ठु केसरो यस्य। वीजपूरे।

**सुकोली** स्त्री॰ प्रा॰। क्षीरकाकोल्याम्।

**सुकोषक** पु॰ सुष्ठु कोषोऽस्य कप्। कोषाम्रे।

**सुख** सुखसम्पादने अद॰ चु॰ उभ॰ सक॰ सेट्। सुखयति–ते असुसुखत्–त। अग्रोपदेशत्वान्न षत्वम्।

**सुख** न॰ सुख–घञ्। पुण्यजन्ये गुणभेदे आनन्दे अनुकूलवेदनीये यदनुभवाय चित्तमनुकूलं भवति तस्मिन् अर्थे। तच्च आत्मधर्म्म इति नैयायिकादय। चित्तधर्म्म इति साङ्ख्यादय। सुखयतीति अच्, सुखमस्यास्ति अच् वा। सुखकारके, सुखिनि च त्रि॰। [इत्ते सुखकारके त्रि॰।

**सुखङ्करी** स्त्री॰ सुखङ्करोति कृ–खच् मुम् च ङीप्। जीवन्तो

**सुखजात** त्रि॰ जात सुखमस्य परनिपात। जातानन्दे– "सुखजात सुरायीत इति भट्टि।

**सुखदोह्या** स्त्री॰ सुखेन दोह्या दुह् यत्। क्लेश विना दोहनीयायां गवि–सुखसंदोह्याप्यत।

**सुखभाज्** त्रि॰ सुख भजते भज–ण्वि। सुखयुक्ते।

**सुखमोदा** स्त्री॰ सुख सुखकरोमोदो यस्या। सल्लकीवृत्ते।

**सुखरात्रि** स्त्री॰ सुखा सुखकरी रात्रिर्यस्याम्। आश्विना मावास्यायाम् दीपान्वितामावास्यायाम्।

**सुखरात्रिका** स्त्री॰ सुखा रात्रिर्यस्या ५ब॰ कप्। दीपान्वितामास्याया–पूज्याया लक्ष्म्याम् दीपान्विताप्रकरणे "पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिकेति' ज्योतिर्वचनम्। कबभाव सुखरात्रिरप्यत्र "आख्याता भूतले देवि। सुखरात्रि। नमोऽस्तु ते 'इति दीपान्वितामावस्या या लक्ष्मीपूजनमन्त्र। [कादारे साजिमाटि।

**सुखवर्चक** पु॰ सुख वर्चयति उद्दीपयति वर्च–णिच्–ण्वुल्। सर्जि-

**सुखवर्चस्** पु॰ सुख सुखकर वर्चो यस्य। सर्जिकाक्षारे, (साजिमाटि)। [फलवृत्ते।

**सुखवास** पु॰ सुख सुखकरोव सोगन्धो यस्य। (तरमुज)

**सुखवासन** पु॰ सुख सुखकर वासन गन्धो यस्य। सुखवासनगन्धद्रव्ये।

**सुखाधार** पु॰ सुखानामाधार। स्वर्गे। कर्म॰। सुखकरावासे।

**सुखायत** पु॰ सुखेनायम्यते आ+यम–क्त। विनीताश्वे।

**सुखायन** पु॰ सुखेनायतेऽनेन अय–ल्युट्। सुविनीताश्वे। [नके

**सुखावह** त्रि॰ सुखमावहति जनयति आ+वह–अच्। सुखज-

**सुखाश** पु॰ सुखा सुखकरी आशा यस्य। वरुणे। सुखेनाश्यते अश–घञ्। राजतिनिशे वृत्ते। स्वार्थे कन्। सुखाशके, (शशा) राजतिनिशवृत्ते च पु॰। भावे घञ्। सुखभोजने।

**सुखोत्सव** पु॰ सुखकर उत्सवो यस्मात् ५ब॰। पत्यौ। कर्म॰। आनन्दकारके, उत्सवे पु॰। [क्षारे (साजिमाटि)।

**सुखोर्ज्जिक** पु॰ सुखस्य उर्ज्जं वृद्धि रस्त्यस्य ठन्। सर्ज्जिका-

**सुग** न॰ सुष्ठु गच्छति निर्याति गम–ड। विष्ठायाम्। सुगमे त्रि॰

**सुगत** पु॰ सुष्ठु गच्छति जानाति गम–कर्त्तरि–क्त। बुद्धे।

**सुगन्ध** न॰ सुष्ठु गन्धोऽस्य न इत्। गन्धतैले, क्षुद्रजीरके, नीलोत्पले, चन्दने, ग्रन्थिपर्णे च। रक्तशिग्रौ, गन्धके, चणके, भूतृणे च पु॰। सद्गन्धद्रव्ययुक्ते आपणादौ त्रि॰।

**सुगन्धक** पु॰ सुष्ठु गन्धोऽस्य कप्। रक्ततुलस्यां, गन्धके, नागरङ्गे, कर्कोट्याञ्च।

**सुगन्धपत्रा** स्त्री॰ सुगन्ध पत्रमस्या। रुद्रजटायाम्।

**सुगन्धभूतृण** न॰ कर्म॰। गन्धतृणे, [याञ्च।

**सुगन्धमूला** स्त्री॰ सुगन्ध मूल यस्या। स्थलपद्मिन्याम्, रास्ना

**सुगन्धा** स्त्री॰ सुष्ठु गन्धोऽस्या। रास्नायां शया, वन्ध्याकर्कोट्याम्, रुद्रजटाया, नाकुल्या, शतपुष्पाया, नवमालिकाया, स्वर्णयूथिकायां, पृक्काया, सल्लक्या, गन्धपत्त्राम्, अनन्ताया, तुलस्या, मातुलुङ्गके च।

**सुगन्धामलक** न॰ सुगन्धै सर्व्वौषधिगणैर्युक्तमामलकम्। 'सर्व्वौषधिसमायुक्तं शुष्कास्त्वामलकास्तथा। यदा तदाय योग स्यात् सुगन्धामलकाभिध" इत्युक्ते सर्व्वौषधियुक्ते शुष्के आमलकवल्कले।

**सुगन्धि** पु॰ सुष्ठु गन्ध इत्समा॰। इत्गन्धे सुरभौ। सुष्ठु गन्धोऽस्य। सुगन्धयुक्ते त्रि॰ एलवालुके सूक्ष्माया, कशेरौ, गन्धतृणे, धान्यके, पिप्पलीमूले च पु॰। स्वार्थे कन्। कङ्कारे।

उम्बरमूले, उशीरे, सुरपर्णे,मर्च्चे शालौ, गन्धके, तुरस्के च

**सुगन्धिकुसुम** पु० सुगन्धि कुसुम यस्य। पीतकरवीरे। सुग-न्धियुक्तपुष्पवति त्रि०।

**सुगन्धित्रिफला** स्त्री० त्यवयव त्रिभिराक वा फल त्रिफल सुगन्धि त्रिफलमस्त्यस्या साहश्येन अच्। जातीफले, पूगफले, लवङ्गकलिकाफले च

**सुगन्धिमूल** न० सुगन्धि मूलमस्य। उशीरे (वेना)

**सुगृहीतनामन्** पु० सुगृहीत प्रातःकाले स्मरणीय नाम यस्य। प्रातःस्मरणीये पुण्यकीर्त्ती जने। [त्रि०

**सुग्रन्थि** पु० सुष्ठु ग्रन्थिर्यस्य। चोरकवृक्षे। सुन्दरग्रन्थिमति

**सुग्रीव** पु० सुष्ठु ग्रीवाऽस्य। श्रीकृष्णाश्वे, सूर्यपुत्रे वानरेश्वरे च। सुन्दरग्रीवावति त्रि०।

**सुचक्षुस्** पु० सुष्ठु चक्षुरिव फलमस्य। उडुम्बरे, शोभनलो-चनयुक्ते त्रि०। प्रा०। शोभने नेत्रे न०।

**सुचञ्चुका** स्त्री० सुष्ठु चञ्चुरिव शिखा यस्याः कप्। महाचञ्चुशाके

**सुचरित्रा** स्त्री० सुष्ठु चरित्रं यस्याः। पतिव्रतायां स्त्रियाम् सच्चरित्रवति त्रि०। प्रा०। सच्चरित्रे न०।

**सुचर्मन्** पु० सुष्ठु चर्मेव वल्कलमस्य। भूर्जवृक्षे सुन्दरचर्म-वति त्रि०। प्रा०। सुन्दरे चर्मणि न०। [क्षायाम्।

**सुचित्रबीजा** स्त्री० सुचित्रं विचित्रं बीजं यस्याः। विड-

**सुचित्रा** स्त्री० प्रा०। चिर्भटायाम्। विचित्रे त्रि०।

**सुचिर** प्रा०। अत्यन्तचिरकाले, बहुकाले च। बहुकालभवे त्रि०

**सुचिरायुस्** पु० सुचिरं बहुकालिकमायुर्यस्य। देवे। बहुकाल-जीविनि त्रि०

**सुचेलक** पु० प्रा०। सूक्ष्मवस्त्रे। सुष्ठु चेलोऽस्य कप्। सूक्ष्मवस्त्र-धरे त्रि०। [जले न०

**सुजल** न० शोभनं जलं यस्मात् ५ब०। कमले। प्रा०। सुन्दरे

**सुजाता** स्त्री० सु+जन-क्त। तुवर्याम्। मनोज्ञे त्रि०।

**सुजीवन्ती** स्त्री० प्रा० स्वर्णजीवन्त्याम् [अपोमदेश्यत्वाद्‌ घ।

**सुट्ट अनादरे** चु० उ० सक० सेट्। सुट्टयति ते असुसुट्टत् त

**सुत** पु० स्त्री० सु-क्त। पुत्रे तनयायां। स्त्री० सा च दुरालभायाञ्च। उत्पन्ने, सम्बद्धे, निष्पीड़िते च त्रि०।

**सु(सू)तक** न०। सु (सू)-भावे क्त सु(सू)त जननं तस्मादा-गतम् कन्। जननाशौचे, अशौचमात्रे च ‘सुतके सूतके तथैव “मातुश्च सूतकं तत्स्यादिति” च स्मृति।

**सुतजीवक** पु० सुतं जीवयति धारयात् जीव-णिच्-ण्वुल्। पुत्रजीवकवृक्षे।

**सुतनु(नू)** पु० स्त्री० सुष्ठु तनुर्यस्याः वा ऊङ्। नार्य्याम्।‘ सुतनु सत्यमममलङ्करणाय ते” इतिमाघः।

**सुतपस्** पु० सुष्ठु तपति सु+तप-असि। सूर्ये। सुष्ठु तपोऽस्य मुनौ पु०। सुन्दरतपोयुक्ते त्रि० प्रा०। सुन्दरे तपसि न०।

**सुतपादिका** सुता सङ्गता पादाः मूलान्यस्याः कप् न पाद्भाव कपि अत इत्वम्। हंसपदीलतायाम्

**सुतराम्** अव्य० सु+अतिशयेऽर्थे आमु तरप्। अवधारितार्थस्य अतिशयोचितत्वे “धेन्वा तदध्यासितकातराक्ष्या निरीक्ष्य-माणः सुतरां दयालुरिति” रघु- अत्र कातराक्ष्या धेन्वा दृश्यमानत्वेन दयालुत्वस्य अतिशयौचित्यम् [लतायाम्।

**सुतर्कारी** स्त्री० सुतर्कमृच्छति ऋ-अण् ङीप्। देवदाली

**सुतल** पु० न० सुष्ठु तलं यत्र। पातालभेदे अट्टालिकाभेदे पु०।

**सुतहिबुकयोग** पु० सुते हिबुके च योग ग्रहविशेषस्य। “सुतहिबुकवियद्विलग्नधर्म्मेष्वमरगुरुर्यदि दानवार्चितो वा। यदशुभमुपयाति तच्छुभं स्यात्” इत्युक्ते योगभेदे।

**सुतिक्त** पु० प्रा०। (श्वेतपापड़ा) पर्पटे अत्यन्ततिक्ते त्रि० कोषातक्यां स्त्री० सद्रायां कन्। पारिभद्रे निम्बे भूनि-म्बे च पु०।

**सुतीक्ष्ण** पु० प्रा०। शोभाञ्जनवृक्षे, श्वेतशोभाञ्जने, मुनिभेदे च “सुतीक्ष्णमुनिकेतन” मितिभट्टि। अत्युग्रे त्रि०।

**सुतुङ्ग** पु० प्रा०। नारिकेलवृक्षे ज्योतिषोक्ते ग्रहाणाम् उच्च राशिषु अशभेदेषु च विस्तरोहृद्भिधाने। अतिशयोच्चे त्रि०

**सुतेजन** पु० सु+तिज-ल्यु। धन्वनि, वृक्षे।

**सुतेजस्** पु० सुष्ठु तेजोऽस्य। आदित्यभक्तायाम्। शोभन-तेजोयुक्ते त्रि० [लतायाम्

**सुतैला** स्त्री० सुष्ठु तैलं यस्याम् ७ब०। महाज्योतिष्मती

**सु(सू)त्रामन्** पु० सुष्ठु त्रायते सु+त्रै-मनिन् पृ०। इन्द्रे

**सुत्वन्** पु० सुनोतिस्म सु-क्वनिप्। कृताभिषेके कृतयज्ञार्थस्नाने कृतसोमनिष्पीडने च। [अपोमदेश्यत्वान्न घ।

**सुद** शोभायां सौ० प० सक० सेट् इदित्। सुन्दति असुन्दीत्।

**सुदग्धिका** पु० सुष्ठु दग्धमस्त्यस्य ठन्। सुदग्धानामवृक्षे।

**सुदण्ड** पु० सुष्ठु दण्डोयस्मात् ५ब०। वेत्रे

**सुदण्डिका** स्त्री० सुदण्डयति रोगान् ण्वुल्। गोरक्षाम्। (गोरक्षचाकुले) सुदण्डवल्ल्या स्त्रियाञ्च।

**सुदत्** पु० सुष्ठु दन्तोऽस्य वयसि दत्त्वादेश। शोभनदन्तयुक्त-वयस्के गजादौ युवत्या स्त्रियां ङीप्। ‘सुदतीजनमज्ज-नार्पितमिति नैषधम्। वयो भिन्ने तु सुदन्तइत्येव नटादौ।

**सुदर्भा** स्त्री० सु+दृभ-घञ्। इक्षुदर्भावृक्षे। सुष्ठु दर्भोयत्र सुन्दरकुशयुक्ते त्रि०।

**सुदर्शन** पु॰ सुष्ठु दृश्यते खलर्थे युच । विष्णुचक्रे (पद्मगुलञ्च) लताभेदे, इन्द्रपुरे च अमरावत्यां स्त्री॰ ङीप् ।

**सुदल** पु॰ सुष्ठु दलान्यस्य । चौरमोरटावृक्षे । शालपर्ण्यां स्त्री॰

**सुदामन्** पु॰ सुष्ठु ददाति दा मनिन् । मेघे पर्वतभेदे (दरावत् पर्वत) गोपभेदे, समुद्रे, ऐरावते गजे, पुराण-प्रसिद्धे श्रीकृष्णमित्रे विप्रभेदे च शोभनदातरि त्रि॰ । नदीभेदे स्त्री॰ तत्र वा ङीप् । सुदाम्नी ।

**सुदाय** पु॰ सुष्ठु दीयते सु+दा-घञ् । यौतुकप्रसादादिना देये धने । सुष्ठु दायो यस्य । पितृप्रभृतौ दातरि ।

**सुदि** अव्य॰ सुष्ठु दीव्यति सु+दिव डि । शुक्लपक्षे ।

**सुदिन** न॰ प्रादि॰ । प्रशस्तदिवसे । प्रशस्ते त्रि ।

**सुदिनाह** न॰ सुदिनं प्रशस्तमहः टच् समा॰ । प्रशस्तदिवसे ।

**सुदीर्घधर्म्मा** स्त्री॰ सुदीर्घः अतिविस्तीर्णो धर्म्मो गुणविशेषो यस्याः केवलत्वाभावादनिच् डाप् । अश्वगन्धायाम्

**सुदूर** त्रि॰ प्रादि॰ । अतिदूरे । [कर्म्मणि च पु॰

**सुद्युम्न** पु॰ वैवस्वतमनुपुत्रे । [विशेषे, अनन्ते नागे,विष्णु

**सुधन्वन्** त्रि॰ सुष्ठु धनुर्यस्य अनङ् । सुन्दरधनुर्द्धरे । राज-

**सुधर्म्मन्** स्त्री॰ सु+धृ मनिन् । देवसभायाम् । कुटुम्बिनि पु॰

**सुधर्म्मा** स्त्री॰ सुष्ठु धर्म्मो यस्याः अनिच् समा॰ वा डाप् । देव-सभायाम् । गौ॰ ङीप् । सुधर्म्मीत्यप्यत्र ।

**सुधा** स्त्री॰ सुष्ठु धीयते पीयते अर्ध्यते वा धे,धा वाक । अमृते । लेपनद्रव्ये (कलिचुन) मूर्वायाम्, स्नुह्याम्, गङ्गायाम्, इष्टकायां, विद्युति, रसे,जले, धात्र्याम् हरीतक्याम् मधुनि, शालपर्ण्याञ्च ।

**सुधांशु** पु॰सुधेवाह्लादका अंशवोऽस्य । चन्द्रे कर्पूरे च । सुधा-करादयोऽप्यत्र । [वासिते तैले ।

**सुधांशुतैल** न॰ सुधांशुना कर्पूरेण वासितं तैलम् । कर्पूर

**सुधांशुरत्न** न॰ ६त॰ । मौक्तिके तस्य चन्द्रप्रियत्वात्तथात्वम् ।

**सुधाङ्ग** पु॰ सुधेवाप्यायनमङ्गमस्य । चन्द्रे,कर्पूरे च ।

**सुधाजीविन्** पु॰सुधां लेपनद्रव्यमाजीवति आ+जीव णिनि । पलगण्डे (राज) ।

**सुधाधार** पु॰ ६त॰ । चन्द्रे, कर्पूरे, अमृताधारपात्रे च ।

**सुधानिधि** पु॰सुधा निधीयतेऽत्र नि+धा कि । चन्द्रे,कर्पूरे च

**सुधापयस्** पु॰ सुधा लेपनद्रव्यमिव शुभ्रं पयो निर्यासोऽस्य । स्नुहीवृक्षे ।

**सुधाभुज्** पु॰ सुधां भुक्तवान् भुज-भूते क्विप् । देवे ।

**सुधाभृ(सृ)ति** पु॰ सुधा भ्रियते पुष्यते सूयते वाऽनेन भृ सृ॰ वा क्तिच् । यज्ञे, चन्द्रे कर्पूरे च ।

**सुधामय** न॰ सुधात्मकं लेपनद्रव्यात्मकं वा माधुर्य्यं मयट् । राजभवने सौधे । अमृतवदाह्लादकवाक्यादौ त्रि॰ । स्त्रियां ङीप् । [शर्करायाम्, कर्पूरे च ।

**सुधामोदक** पु॰ सुधेव मोदयति मुद णिच्-ण्वुल् । यवास-

**सुधावर्षिन्** पु॰ सुधां वर्षति वृष-णिनि । चन्द्रे,कर्पूरे, ब्रह्म-णि च । [गन्धो यस्याः । नस्याम् ।

**सुधावास** पु॰ ६त॰ । चन्द्रे, कर्पूरे च । सुधाया इव वासो

**सुधासिन्धु** पु॰ सुधामयः सिन्धुः । अमृतसमुद्रे ।

**सुधास्रवा** स्त्री॰ सुधां स्रवति स्रु अच् । दन्तोद्भवे क्षुद्रजिह्वायाञ्च (आलजिभ) । [दयोऽप्यत्र ।

**सुधाहर** पु॰ सुधां हरति हृ अच् । गरुडे सुधाहारका-

**सुधिति** पुंस्त्री॰ सु+धा क्तिच् न ह्यादेश । कुठारे ।

**सुधी** पु॰ सुष्ठु धीर्यस्य । पण्डिते । सुष्ठु धीः । सुन्दरबुद्धौ स्त्री॰ । सुष्ठु ध्यायति सु+ध्यै क्विप् नि॰ । सद्बुद्धियुक्ते त्रि॰

**सुधोद्भव** पु॰ सुधया सह उद्भवति उद+भू-अच् । धन्वन्तरि वैद्यराजे । ५त॰ । हरितक्यां स्त्री॰ ।

**सुनन्द** न॰ सुष्ठु नन्दयति सु+नन्द-अच् । बलरामसुषले श्रीकृष्णपार्श्वचरभेदे, राजभृत्यभेदे च । आनन्दजनके त्रि॰ गोरोचनायाम्, उमायाम् उमासखीभेदे, नार्य्याम्, अर्क-पत्रीवृक्षे च (इषेरमूल) स्त्री॰ । [नेत्रयुक्ते त्रि॰ ।

**सुनयन** पु॰सुष्ठु नयने यस्य । मृगे । नार्य्यां स्त्री॰। शोभन

**सुनालक** पु॰ सुष्ठु नालेन कायति कै क । बकवृक्षे सुन्दर-नालयुक्ते त्रि॰ ।

**सुनासिका** स्त्री॰ सुष्ठु नासाऽस्यस्य ठन् । काकना-सायाम् । प्रा॰ । सुन्दरनासिकायाम् स्त्री॰ ।

**सुनासी(षी)र** पु॰सुष्ठु नासी(षी)र अग्रगसैन्यं यस्य । इन्द्रे

**सुनासी(षी)र्य्य** पु॰ सुना(षी)सीरो देवताऽस्य यत् । यज्ञ भेदे । छ । सुनासी(षी)रीयोऽप्यत्र । [स्वार्थे कन् तत्रैव

**सुनिषण्ण** न॰ सुष्ठु निषण्णं स्वस्थो यस्मात् ५ब॰। (सुसुनि)शाके ।

**सुनिष्टप्त** त्रि॰ सु+निस+तप क्त षत्वम् । अत्यन्तोद्दीप्ते,सन्तप्ते च

**सुनीति** स्त्री॰ सुष्ठु नीति यस्याः । ध्रुवमातरि, सुन्दरनीति युक्ते त्रि॰ । प्रा॰ । सुन्दरनीतौ स्त्री॰ ।

**सुनील** न॰ प्रा॰ । मणिभेदे (नीलम) । दाडिमे, सुन्दरनील-वर्णे च पु॰ । तद्वति त्रि॰ । अतस्याम् अपराजितायाम् जरतीवृक्षे च स्त्री॰ । [घने, नीलरत्ने च ।

**सुनीलक** पु॰ सुनीलमिव स्वार्थे कन् । नीलभृङ्गराजे, भीता

**सुन्द** पु॰ । दैत्यभेदे, वानरभेदे च ।

**सुन्दर** त्रि॰ सु+उन्द अरन् शक॰ । मनोहरे । स्त्रियां

ङीप्। सा च उत्तमस्त्रिया त्रिपुरसुन्दरीदेव्याश्च।
कामदेवे, वृत्तभेदे च (सुदरि) पु०। [परिणते त्रि०।
सुपक्व पु०सुन्दरं पच्यते सम पच क्त तस्य वः। शोभनाम्रे सुन्दर
सुपच त्रि० भुक्तं सत् सुखेन पच्यते पच-घञर्थे क। लघु-
पाके द्रव्यमात्रे।
सुपत्त्र न० सुष्ठु पत्त्रमस्य। तेजपत्रे आदित्यपत्रे पु० सुन्दर
पत्त्रयुक्ते त्रि० रुद्रजटायां, शतावर्य्यां, पालङ्क्यां शाल-
पर्ण्याश्च स्त्री०। [कायां स्त्री० अत इत्त्वम।
सुपत्त्रक पु० सुष्ठु पत्त्रमस्य स्वार्थे कन्। शोभाञ्जनवृक्षे अल्प
सुपथ पु० सुष्ठु पन्थाः प्रा० अच् समा०। सद्वर्त्मनि सदा-
चारे च सुष्ठु पन्था यत्र अच् समा०। सुन्दरपथयुक्ते त्रि०
सुपथिन् पु० प्रा० समासान्ताभाव। सत्पथे।
सुपद्मा स्त्री० सुष्ठु पद्यते पद-म। वचायाम् [पद्मिन्यां स्त्री०
सुपर्ण पु०सुष्ठु पर्णं पत्त्रं पक्षो वा यस्य। गरुडे सुन्दरपर्ण
युक्ते त्रि० नागकेशरे पु०। वक्रीह्यर्थे अण्। आरग्वधे
वृक्षे, सप्तच्छदवृक्षे, गरुडे च। शालपर्ण्यां, रेणुकायां,
पलाश्यां, स्वर्णजीवन्त्याश्च स्त्री०। कापि अत इत्त्वम्।
सुपर्णकेतु पु० सुपर्णो गरुडः केतुर्यस्य। विष्णौ।
सुपर्णी स्त्री० सुष्ठु पर्णं यस्याः गौ० ङीष्। पद्मिन्यां,
गरुडमातरि च।
सुपर्णीतनय पु० ६त०। गरुडे। [सुन्दरे पर्वणि न०।
सुपर्वन् पु सुष्ठु पर्व यस्य। देवे, बाणे, वंशे, धूमे च प्रा।
सुपर्वा स्त्री० सुष्ठु पर्व यस्याः डाप्। श्वेतदूर्वायाम्।
सुपाक्य न० सुपाकमर्हति यत्। विड्लवणे।
सुपार्श्व पु० सुष्ठु पार्श्वोऽस्य। प्लक्षवृक्षे (पाकुड) वृक्षभेदे,
सम्पातिपुत्रे विहगभेदे च सञ्ज्ञायां कन्। गर्दभाण्डवृक्षे पु
सुन्दरपार्श्वान्विते त्रि०।
सुपिङ्गला स्त्री० प्रा०। ज्योतिष्मत्यां, जीवन्त्याश्च। [त्रि०
सुपीत न०प्रा। गर्ज्जरे (गाजर)। सुन्दरपीतवर्णे पु०। तद्वति
सुपुट पु० सुष्ठु पुटमस्य। कोलकन्दे, विष्णुकन्दे च।
सुपुत्रिका स्त्री० सुष्ठु पुत्र इव यस्याः कप् अत इत्त्वम्।
जतुकायाम् (तेलोपोका)।
सुपुष्करा स्त्री० सुष्ठु पुष्करमस्यस्याः [illegible] स्थलपद्मिन्याम्।
सुपुष्प न० प्रा०। लवङ्गकुसुमे, प्रपौण्डरीके तूले, स्त्रीणां
रजसि च। सुपुष्पं दारकोऽपि कुसुमवत्सुखमिन्द्रियमिति स्वामी
सुप्र। सुष्ठु पुष्पमस्य। (पारिभद्रमान्दार) वृक्षे कप्। पाट-
लायां स्त्री० अत इत्त्वम्।
सुपुष्पी स्त्री० सुष्ठु पुष्पमस्याः गौ० ङीष्। श्वेतापराजिता-
यां, शतपुष्पायाम्, मिश्रेयायां, द्रोणपुष्प्याञ्च।
सुपूर पु० सुष्ठु पूर्यते सु+पूर क। बीजपूरे।
सुपूरक पु० सुष्ठु पूरयति पूर ण्वुल्। वकवृक्षे।
सुप् स्त्री० व्याकरणपरिभाषिते सुप्रभृतौ प्रत्यये।
सुप्त न० स्वप भावे क्त सम्प्रसारणम्। निद्रायां, शयने च। क
र्त्तरि क्त। निद्रिते त्रि०।
सुप्तजन पु० सुप्तो जनो यत्र। अर्द्धरात्रे।
सुप्ति स्त्री० स्वप क्तिन्। शयने निद्रायाम्, स्वप्ने च 'करोति
सुप्तिर्जनदर्शनातिथिमिति नैषधम्।
सुप्रतिभा स्त्री० सुष्ठु प्रतिभा यस्याः ६ब०। सुरायाम् प्रा०।
उज्ज्वलबुद्धौ। ६ब०। तद्वति त्रि०। [पादके छन्दोभेदे स्त्री
सुप्रतिष्ठा स्त्री०प्रा०। प्रशंसायाम्। ६ब० तद्वति त्रि०। पञ्चाक्षर
सुप्रतीक पु० सुष्ठु प्रतीकं यस्य। ऐशानकोणस्थिते दिग्गजे
शिवे कामे च सुन्दराङ्गे त्रि०। प्रा०। सुन्दरेऽङ्गे न०।
सुप्रभा स्त्री० सुष्ठु प्रभा यस्याः। अग्निजिह्वाभेदे। सुन्दर-
दीप्तिमति त्रि०। प्रा०। शोभनदीप्तौ स्त्री०। [वाक्ये च
सुप्रभात न०प्रा०। शुभसूचकप्रात काले, तत्र पाठ्यमाङ्गल्य-
सुप्रयुक्तशर पु० सुप्रयुक्तः शरो येन। शीघ्रहस्ते बाणमोच-
नाभ्यासपाटवयुक्ते।
सुप्रयोगविशिख पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो
विशिखो यस्य। शीघ्रहस्ते बाणमोचनशीघ्रताकरणपाटवयुक्ते।
सुप्रलाप पु० सु+प्र+लप घञ्। सुवचने।
सुप्रसन्न पु सु+प्र+सद-क्त। कुवेरे। प्रसादयुक्ते त्रि०। सञ्ज्ञायां
कन्। कृष्णार्जके पु०। [विस्तारयुक्ते त्रि०
सुप्रसरा स्त्री० सु+प्र+सृ-अच्। प्रसारिणी-लतायाम
सुप्रसाद पु० सुखेनानायासेन प्रसादो यस्य। शिवे। प्रा०।
सुन्दरप्रसन्नतायाम्।
सुफल पु० सुष्ठु फलमस्य। दाडिमे, वदरे मुद्गे कर्णिकारे
कपित्थे च। सुन्दरफलवति त्रि०। इन्द्रवारुण्यां कुष्मा
ण्ड्यां, कदल्यां, कपिलद्राक्षायाश्च स्त्री०।
सुबन्ध पु० सुखेन बध्यतेऽसौ बन्ध-घञ्। तिलवृक्षे।
सुभग पु० सुष्ठु भगं माहात्म्यादि यस्य। चम्पके, अशोके,
रक्ताम्लाने, टङ्कणे च। सुन्दरे, प्रिये, शोभनैश्वर्ययुक्ते च
त्रि०। कैवर्त्तीमुस्तायां, शालपर्ण्याम्, हरिद्रायां, नील-
दूर्वायां, तुलस्यां, प्रियङ्गौ, कस्तूर्य्यां, स्वर्णकदल्यां, वन-
मल्लिकायां, पतिप्रियायां स्त्रियां च स्त्री०।
सुभगम्भावुक त्रि० असुभगः सुभगोभवति भू ख्युञ्
मुकम् समुच। प्रियप्रियौ।

**सुभगासुत** पु०सुभगायाः पतिप्रियायाः सुतः। सौभागिनेये
**सुभङ्ग** पु०सुखेनानायासेन भज्यते नि सारत्वात् भन्ज घञ्। नारिकेलवृक्षे।
**सुभट** पु० प्रा०। सुन्दरयोद्धरि।
**सुभद्र** पु०सुष्ठु भद्रं यस्मात्। विष्णौ। ६ब०। शोभनमङ्गलवति त्रि०। श्यामालतायाम् श्रीकृष्णस्य भगिन्याञ्च स्त्री०। कप्। देवरथे,विल्ववृक्षे च पु०।
**सुभद्राणी** स्त्री० सुभद्रं सुमङ्गलमानयति आ+नी-ड गौ० ङीप् णत्वम्। त्रायन्तीलतायाम्।
**सुभद्रेश** पु०६त०। अर्ज्जुने। सुभद्रापत्यादयोप्यत्र।
**सुभाञ्जन** पु० सुष्ठु भाति भा-क कर्म०। शोभाञ्जनवृक्षे।
**सुभिक्ष** त्रि०सुखेन लभ्या भिक्षा यत्र पर्य्याप्तधान्यत्वात्। प्रचुरान्नवति कालादौ। [पुष्पिकायाम्
**सुभिक्षा** स्त्री०सुष्ठु भिक्ष्यते याच्यतेऽसौ सु+भिक्ष अ। धातु
**सुभीरक** पु० सुष्ठु भी सुभी ताम् ईरयति विरहिणाम् ईर-ण्वुल्। पलाशवृक्षे।
**सुभूति** पु० सुष्ठु भवति। सु भू क्तिच्। पक्षिभेदे। प्रा०। सुन्दरविभूतौ स्त्री० ६ब०। तद्वति त्रि०। विल्ववृक्षे पु०।
**सुभ्रश** न०सुष्ठु भ्रशम्। अतिशये दार्ढ्ये। तद्वति त्रि०। [त्रि०
**सुभ्रु(भ्रू)** स्त्री०सुष्ठु भ्रुर्यस्याः वा ऊङ्। नार्य्याम् सुन्दरभ्रुयुक्ते।
**सुम** न० सुष्ठु मीयतेऽदः सु मा वर्जने क। पुष्पे। चन्द्रे, कर्पूरे, नभसि च पु०।
**सुमङ्गला** स्त्री० सुष्ठु मङ्गलं यस्याः ५ब०। (मालकाङ्गाता) वृक्षे सुमङ्गलयुक्ते त्रि०स्त्रियां ङीप्। 'सुमङ्गलीरियं वधूरिति' श्रुतिः
**सुमदन** पु० सुष्ठु मदयति कोकिलान् मद-णिच् ल्यु। आम्रवृक्षे। [मधुररसयुक्ते त्रि०
**सुमधुर** न० प्रा०। अत्यन्तप्रियवाक्ये, सान्त्वनवाक्ये च। अति-
**सुमन** पु० सुष्ठु मन्यते मन-घञ्। गोधूमे धुस्तूरे च।
**सुमनःपत्रिका** स्त्री० सुमनस आधारः पत्रमस्याः कप् अत इत्वम्। जातीपत्रिकायाम्। [६त०। जातीफले
**सुमनःफल** पु०सुष्ठु मनो यस्मात् तादृक् फलमस्य। कपित्थे
**सुमनस्** न०सुष्ठु मनो यस्मात् यस्य वा। पुष्पे। म०प० स्त्रीत्वे 'कि सेव्यते सुमनसां मनसापि गन्ध इति' रसगङ्गाधरः। मालत्यां स्त्री०। प्रसन्नचित्तयुक्ते त्रि०।प्रा०। प्रशस्तमनसि न०।
**सुमना** स्त्री० सुष्ठु मन्यते मन घञ्। मालतीवृक्षे।
**सुमनोरजस्** न०६त०। पुष्परजसि परागे। [त्रि०
**सुमित्रा** स्त्री०लक्ष्मणमातरि दशरथपत्नीभेदे। सुन्दरमित्रयुक्ते
**सुमुख** पु० सुष्ठु मुखमस्मात्, अस्य वा। गणेशे, पण्डिते शाकभेदे, नागभेदे, सितार्जके, वर्वरे, वनवर्व्वरिकायाञ्च। सुन्दरवदने, मनोहरे च त्रि०। स्त्रियां ङीप्।
**सुमूल** पु० सुष्ठु मूलमस्य। श्वेतशोभाञ्जने। शालपर्ण्यां पृश्निपर्ण्यां च स्त्री०। सुन्दरमूलयुक्ते त्रि०। मस्तायां कन्। गर्ज्जरे न०। [सुन्दरमेखलान्विते त्रि०
**सुमेखल** पु० सुष्ठु मेखला यस्मात् ५ब०। मुञ्जवृक्षे, ६ब०।
**सुमेधस्** स्त्री० सुष्ठु मेधा यस्याः ५ब० असिच्। ज्योतिष्मत्यां लतायाम् ६ब०। सुन्दरमेधायुक्ते त्रि०।
**सुमेरु** पु०प्रा०। पर्वतभेदे जपमालामध्यस्थगुटिकायाञ्च।
**सुम्भ(म्भ)** पु०शुम्भ-अच् पृ०। देशभेदे। तद्देशवासिनि पु०ब०व०।
**सुयामुन** पु०यमुनायाः इदम् सुष्ठु यामुनं प्रियतमोऽस्त्यस्य अच्। विष्णौ, वत्सराजे प्रासादविशेषे, पर्वतभेदे, मेघभेदे च।
**सुयोधन** पु० सुखेन युध्यतेऽसौ सु+युध युच्। धृतराष्ट्रराजसुते दुर्योधने।
**सुर** पु०सुष्ठु राति ददात्यभीष्टं सु+रा क। देवे,सूर्य्ये,पण्डिते च
**सुरकृता** स्त्री०३त०। गुडूच्याम्। देवनिर्मिते त्रि०।
**सुरक्तक** पु०सुरक्त इव कायति कै क। कोषाम्रे, स्वर्णगैरिके च
**सुरगुरु** पु०६त०। बृहस्पतौ।
**सुरग्रामणी** पु०सुराणां ग्रामणी नेता। इन्द्रे।
**सुरङ्ग** न० सुष्ठु रङ्गो यस्मात् ५ब०। हिङ्गुले, (वर्णकमादि) भेदे। प्रा०। नागरङ्गे, गर्त्तभेदे च।
**सुरङ्गधातु** पु० सुष्ठु रङ्गो रञ्जनं यस्मात् कर्म०। गैरिके।
**सुरङ्गिका** स्त्री० सुष्ठु रङ्गो रञ्जनं यस्याः ५ब०, कप् अत इत्वम्। मूर्वायाम्। [मापायाम्, रक्तशोभाञ्जने च।
**सुरङ्गी** स्त्री० सुष्ठु रङ्गो यस्याः ५ब० गौ० ङीप्। काक-
**सुरज्येष्ठ** पु०६त०। चतुर्मुखे ब्रह्मणि।
**सुरञ्जन** पु० सुरञ्जयति सु+रन्ज-णिच्-ल्यु। गुवाके।
**सुरत** न० सु+रम भावे क्त। स्त्रीपुंसयो बहुमदये रमणभेदे सु-रम कर्त्तरि क्त। आसक्तरते त्रि०।
**सुरता** स्त्री०सुराणां समूहः भावो वा तल्,तस् वा। देवसमूहे, देवत्वे च। सु+रम-क्त। अत्यन्तरतायां स्त्रियाञ्च।
**सुरथ** पु० सुष्ठु रथोऽस्य। चन्द्रवंश्ये नृपभेदे 'सुरथो नाम राजाभूदि'ति प्रसिद्धे। सुन्दररथयुक्ते त्रि०। [दारुवृक्षे
**सुरदारु** न० सुराणां प्रियं सुरलोकपर्य्यन्तवर्द्धितं वा दारु। देव-
**सुरदीर्घिका** स्त्री० सुराणां दीर्घिकेव। मन्दाकिन्याम्। सुरापगादयोप्यत्र।
**सुरदुन्दुभी** स्त्री० सुराणां दुन्दुभीवाह्लादकत्वात्। तुलस्याम्
**सुरद्रुम** पु० सुराणां द्रुमः। देवदारौ, देवतरौ च।

सुरद्विष् पु० सुरान् द्वेष्टि द्विष-क्विप् । असुरे देवद्वेष्टरि त्रि०

सुरधनुस् न० ६त० । इन्द्रधनुषि ।

सुरधूप पु० सुरप्रियो धूप० । राले (धुना) ।

सुरनिम्नगा स्त्री० ६त०न्गा आपगा । गङ्गायाम् सुरधुन्यादयोऽप्यत्र

सुरनाल पु० सुरप्रियं नालमस्य । देवनलवृक्षे ।

सुरपति पु० ६त० । इन्द्रे सुरेशादयोऽप्यत्र ।

सुरपथ पु० सुराणां पन्था यत्र अच् समा० । आकाशे

सुरपर्ण न० सुरप्रियं पर्णमस्य । सौगन्धिके ओषधिभेदे ।

सुरपर्णिक पु०स्त्री० । सुरप्रियं पर्णं शाक० तदस्त्यस्य ठन् ।
सुरपुन्नागे ।

सुरपर्णी स्त्री० सुरप्रियं पर्णं यस्याः ङीप् । पलाशीवृक्षे ।

सुरपादप पु० ६त० । कल्पवृक्षे सुरवृक्षादयोऽप्यत्र ।

सुरपुन्नाग पु० सुरप्रियः पुन्नागः । पुन्नागभेदे ।

सुरपुरी स्त्री० ६त० । अमरावत्यां सुरनगर्यादयोऽप्यत्र ।

सुरप्रिय पु०६त०। अगस्त्यवृक्षे, वृहस्पतौ, इन्द्रे च । जात्यां,
स्वर्णकदल्याञ्च स्त्री० ।

सुरभि न० सु+रभ-इन् । स्वर्णे, सुन्दरे, गन्धाश्मनि च ।
चम्पके, जातीफलवृक्षे, वसन्ते ऋतौ, 'स सुरभिं सुरभिं
सुमनोभरैरि'ति माघः । सुगन्धे, शमीवृक्षे, कदम्बे, कण-
गुग्गुलौ, गन्धतृणे, वकुलवृक्षे, राले, चैत्रे मासि, पण्डिते,
गन्धफले च पु०। मल्लक्यां,रुद्रजटायां, मातृकाभेदे, सर्व-
सुरायां, नवमालिकायां, तुलस्यां, पृथिव्यां, गवां मातरि
च स्त्री०ना ङीप् । धीरे, सद्गन्धयुक्ते, मनोहरे, विख्याते,
च त्रि० ।

सुरभिका स्त्री० सुरभि+स्वार्थे कन् । (चापाकला) । वृक्षे ।

सुरभित्वच् स्त्री० सुरभिः त्वक् यस्याः । स्थूलैलायाम् ।

सुरभिदारु पु० सुरभि दारु यस्य । सरलवृक्षे ।

सुरभिपत्त्रा स्त्री०सुरभि पत्त्रमस्याः । जम्बूवृक्षे,राजजम्बूवृक्षे च

सुरभिवल्कल न०सुरभि वल्कलमस्य । गुडत्वचि (दारचिनि)

सुरभिस्रवा स्त्री० सुरभिः स्रवो निष्यन्दो यस्याः । शल्लक्याम्

सुरमृत्तिका स्त्री०सुरप्रिया मृत्तिका । तुवर्याम् ।(फटकिरि)

सुरमेदा स्त्री० सुरप्रियो मेदोऽस्याः । महामेदायाम् ।

सुरर्षि पु० सुरप्रियः ऋषिः ।नारदादिषु ऋषिषु ।

सुरलता स्त्री० सुरप्रिया लता । महाज्योतिष्मत्याम् ।

सुरलोक पु० सुराणां लोक० वासस्थानादि' । स्वर्गे । सुरभुव-
नादयोऽप्यत्र ।

सुरवर्त्मन् न० सुराणां वर्त्म इव । आकाशे ।

सुरवल्लभा स्त्री० ६त० । श्वेतदूर्वायाम् ।

सुरवल्ली स्त्री० सुरप्रिया वल्ली । तुलस्याम्

सुरवैरिन् पु० ६त० । असुरे सुरविरोधिनि त्रि० । सुर-
रिपुप्रभृतयोऽप्यत्र ।

सुरस न० सुखेन रस्यते सु+रस-अच् । बोले, रसे,गन्धतृणे,
सिन्धुवारे शोभरसे च । प्रा० स्वादौ रसे । ६व० । सु-
स्वादुरसयुक्ते त्रि० । तुलस्यां पु० स्त्री० । रास्नायां, नाग-
मातरि, मिश्रेयायां, ब्राह्म्यां, महाशतावर्यां च स्त्री० ।

सुरसुन्दरी स्त्री० सुरप्रिया सुन्दरी । मेनकाद्यप्सरःसु, यो-
गिनीभेदे च ।

सुरा स्त्री० सुर-क सु-रक् वा । मद्ये, चषके च ।

सुराकर पु० सुराया आकरः । मद्योत्पत्तिस्थाने ।

सुराचार्य्य पु० ६त० । वृहस्पतौ ।

सुराजक पु० सुष्ठु राजते राज-ण्वुल् । भृङ्गराजे । ६व०
कप् । सुन्दरराजान्विते त्रि० ।

सुराजन् पु०सुष्ठु पूजितो राजा न टच् । सुन्दरे राजनि ।
६व० । सुन्दरराजस्वामिके देशे त्रि० ।

सुराजीविन् पु० सुरां सुरासम्पादनमाजीवति आ+जीव
णिनि । शौण्डिके । [स्वादन्नक' इति स्मृतिः

सुराप त्रि० सुरां पिबति पा-क । मद्यपानकारके 'सुरापः

सुरापगा स्त्री० ६त० । गङ्गायाम् । सुरतरङ्गिण्यादयोऽप्यत्र ।

सुरापान न० सुरा पीयतेऽनेन पा-करणे ल्युट् । चषके
(पाटनी) सुरायाः पानं येषां शरणम् । प्राच्यदेशस्थे जने पु०

सुराभाग पु० सुराया भागः अग्रभागः । सुरामण्डे ।

सुरामण्ड पु० ६त० । सुराया अग्रभागे ।

सुरारिहन्तृ पु० सुराणामरिं हन्ति हन-तृच् । विष्णौ ।

सुरार्ह न० सुरान् देवानर्हति अर्ह-अच् । हरिचन्दने ।

सुराष्ट्र पु० ६व० देशभेदे (सुरट) ।

सुराष्ट्रज न०स्त्री० सुराष्ट्रदेशे जायते जन-ड । तुवरिकायाम्
कृष्णमुद्गे, विषभेदे च पु० । तद्देशजातमात्रे त्रि० ।

सुराह्व पु० सुरस्यार्थिका आह्वा यस्य सुरान् आह्वयति गन्धेन
आ+ह्वे-क वा । देवदारुवृक्षे,मरुवके, हरिद्रावृक्षे च ।

सुरुङ्ग पु० सु+रुज अङ्ग् ट० । शोभाञ्जनवृक्षे ।

सुरूप न० सुन्दरं रूपमस्य । तूले । सुन्दररूपवति त्रि०
पण्डिते पु० । मालपर्ण्यां भार्ग्याम् च स्त्री० । प्रा० ।
सुन्दरे रूपे न० ।

सुरूहक पु० सु+रुह-क्वुन् ट० । गर्दभाण्डे । [तुवर्याम् स्त्री०

सुरेज्य पु० सुरैः पूज्यते यज-क्यप् ६त० । वृहस्पतौ ।

सुरेन्द्र पु० सुराणामिन्द्रः प्रभुः राजा वा । इन्द्रे सुरराजे ।

सुरेभ न० सु+रेभ-अच् । रङ्गे । (रांग) ।
सुरेवट पु० सुष्ठु रेवटः सु+रेव—अटन् वा । रामपूगे ।
सुरेश्वर पु० सुराणामीश्वरः । रुद्रे, इन्द्रे च । स्वर्गगङ्गायां, दुर्गायाञ्च स्त्री० ङीप् । [ब्राह्म्यां स्त्री० ।
सुरेष्ट पु० इत० । शाले, सुरपुन्नागे, शिरमञ्जाम् च
सुरोत्तम पु० सुरेषूत्तमः । सूर्य्ये, देवश्रेष्ठे त्रि० ।
सुरोत्तर पु० सुरेषु तत्पजनेषूत्तरः श्रेष्ठः । चन्दने ।
सुरोद पु० सुरेव उदकमस्य उदादेशः । सुरासमुद्रे ।
सुलभ त्रि० सुखेन लभ्यते सु+लभ-खल् । अनायासलभ्ये । माषपर्ण्यां, धूम्रपत्रायाञ्च स्त्री० ।
सुलोचन पु० सुष्ठु लोचनमस्य । हरिणे । सुन्दरनेत्रयुक्ते त्रि०
सुलोमशा स्त्री० सुलोमानि सन्त्यस्याः श । काकजङ्घावृक्षे सुलोमयुक्ते त्रि० । [मांसच्छदायाञ्च ।
सुलोमा स्त्री० सुष्ठु लोमान्यस्याः ङीप् । ताम्रवल्ल्याम्,
सुलोहक न० प्रा० । पित्तले । [त्रि०स्त्रियां ङीप् तस्य नश्च
सुलोहिता स्त्री०प्रा० । अग्निजिह्वाभेदे । सुरक्तवर्णे पु०भद्रति
सुवक्त्र पु०सुष्ठु वक्त्रं सेवनात् यस्मात् । वनबर्व्वर्य्याम् इव० । सुन्दराननयुक्ते त्रि० । प्रा० । सुन्दरे मुखे न० ।
सुवचस् त्रि० सुष्ठु वचोऽस्य । वाग्मिनि ।
सुवर्चक पु०सुष्ठु वर्चयति सु+वर्च-णिच्-ण्वुल् । सर्जिकाक्षारे
सुवर्चला स्त्री० सुष्ठु वर्चयति वर्च-णिच्-कलच् । सूर्य्यभार्य्यायाम्, अतस्याम्, आदित्यभक्तायां, ब्राह्म्याञ्च । देशभेदे पु०।
सुवर्चिक पु०सुवर्च+अस्त्यर्थे ठन् । सर्जिकाक्षारे । तद्वत्यां स्त्री०
सुवर्चिन् पु० सु+वर्च-णिच् णिनि । सर्जिकाक्षारे ।
सुवर्ण न० सुष्ठु वर्णोऽस्य । स्वनामख्याते धातुभेदे, हरिचन्दने, स्वर्णगैरिके, धने, नागकेशरे । 'कर्षं सुवर्णस्य सुवर्णसंज्ञ' मित्युक्ते कर्षमिते काञ्चने च मानभेदे, धत्तूरे कर्णगुग्गुलौ च पु० । सुष्ठु वर्णो ब्राह्मणादि वर्णोऽस्य । सुरूपे सुन्दरवर्णयुक्ते च त्रि० । 'न सुवर्णमयी तनुः परं ननु वागपि तावकी तथे'ति नैषधम् ।
सुवर्णक न० सुवर्णमिव इवार्थे कन् । पित्तले, सुष्ठु वर्णोऽस्य कप् । सुन्दरवर्णयुक्ते त्रि० । [ख्याम् (बांदाबका) ।
सुवर्णकदली स्त्री० सुष्ठु वर्णो यस्याः कर्म० । स्वर्णवर्णकद-
सुवर्णकार पु० सुवर्णं सुवर्णमयभूषणादि करोति कृ-अण् । (सेकरा) स्वर्णकारे जातिभेदे ।
सुवर्णगैरिक सुवर्णमिव पीतं गैरिकम् । (स्वर्णगैरिक) गैरिकभेदे । [इन्द्राम् ।
सुवर्णनकुली स्त्री० सुवर्णमिव पीता नकुली । महाज्योतिष्-
सुवर्णप्रसव न० सुवर्णस्य प्रसव इव । एकवालुके ।
सुवर्णवणिज् पु० सुवर्णस्य वणिक् क्रयविक्रयादिकर्त्ता । जातिभेदे (सोनारवेने) स्वर्णवणिक्शब्दतयोक्तश्च ।
सुवर्णयूथी स्त्री० सुवर्णमिव पीता यूथी । पीतवर्णयूथिकायाम्
सुवर्णवर्णा स्त्री० सुवर्णस्येव वर्णो यस्याः । हरिद्रायाम् स्वर्णतुल्यवर्णयुक्ते त्रि० ।
सुवर्णा स्त्री० सुष्ठु वर्णो यस्याः । कालागुरुणि, बाह्लीके च स्वर्णक्षीर्य्यां, हरिद्रायाम्, स्वसुक्षण्यां च स्त्री० ङीप् ।
सुवयस् स्त्री० सुष्ठु वयोऽस्याः । प्रौढायां स्त्रियाम् ।
सुवल्लि(ल्ली) स्त्री० प्रा० । सोमराजीलतायाम् ।
सुवहा स्त्री० सुखेन उह्यते वायुनासौ सु+वह-खल् । शेफालिकायां, रास्नायां, गोधापद्याम्, एलापर्ण्याम्, सल्लक्यां, वीणायां, त्रिवृतायाम्, रुद्रजटायां, हंसपद्यां, गन्धनाकुल्यां, मुसल्यां, नीलसिन्धुवारे च । सुधराह्ले त्रि० ।
सुवास पु० सुष्ठु वासः । सद्गन्धे सुखनिवासे च । इव० । सद्गन्धयुक्ते, सद्वासान्विते च त्रि० ।
सुवासिनी स्त्री० सुखेन वसति सु+वस-णिनि । चिरण्ट्यां चिरं पितृकुलवासिन्याम् स्त्रियाम् ।
सुविद् पु०सुष्ठु वेत्ति विद्-क्विप् । पण्डिते । सुष्ठु विद्यते लभ्यते विद्-लाभे क्विप् । गुणाढ्यायां स्त्रियाम् ।
सुविद पु० सु+विद क । कञ्चुकिनि ।
सुविदत् पु० सुविदं गुणाढ्यां स्त्रियमतति अत-क्विप् । नृपे
सुविदल्ल पु० सुविदतं राजानं लाति ला-क । अन्तःपुरेऽधिकृते, कञ्चुकिनि च । सुविदत्रा राज्ञा लीयते ला-क । अन्तःपुरस्थनार्य्याम् स्त्री० । [युक्ते त्रि० ।
सुविनीता स्त्री० सु+वि+नी-क्त । सुशीलायां गवि । सुविनय-
सुवीज पु० सुष्ठु वीज्यतेऽसौ वीज-क । (धनुयाये) इत्यभेदे इव० । सुन्दरवीजवति त्रि० । प्रा० । सुन्दरे वीजे न० ।
सुवीरक न० सु+वीर ण्वुल् । सौवीराञ्जने ।
सुवीराम्ल न० सुवीरयति वीर्याग्निवं करोति सु+वीर-अच् कर्म० । काञ्जिके । [प्रा० । उत्तमे वीर्य्ये न० ।
सुवीर्य्य न० सुष्ठु वीर्यं यस्मात् । बदरीफले । वनकर्पास्यां स्त्री०,
सुवृत्त पु० सुष्ठु वृत्तः वर्तुलः । सूरणे (ओल) सुन्दरस्वभावे त्रि० शतपत्र्यां, काकल्यां, द्राक्षायाञ्च स्त्री० ।
सुवेगा स्त्री० सुष्ठु वेगो वायुनिःसारणं यस्याः इत० । महाज्योतिष्मत्याम् ।
सुवेल पु०सुष्ठु वेला यत्र कूपं देन । त्रिकूटपर्वते । सुष्ठु वेला मर्य्यादा स्थितिः यस्य । शान्ते, प्रणते च त्रि० ।

सुवेग पु० सुखेन विद्यते उपभुज्यते सु+विश-घञ् । श्वेतेक्षौ सुन्दरवेगयुक्ते त्रि० । [सुन्दरव्रतयुक्ते त्रि० ।

सुव्रता स्त्री० सुष्ठु व्रतं नियमो यस्याः । सुशीलाया गवि

सुशर्मन् पु० सु+शृ मनिन् सुष्ठु शर्म्म सुखं यस्य । नृपभेदे सुन्दरसुखवति त्रि० ।

सुशल्य पु० सुष्ठु दृढ शल्य यस्मात् । खदिरे । [रक्ते च

सुशवी स्त्री० सु+शव-अच् गौरा०ङीप् । कारवेल्ले, कृष्णजी-

सुशाक न० सुष्ठु शाको यस्मात् ५व० । आर्द्रके । तद्योगे हि शाकस्य सुस्वादुता । सुष्ठु शाको यस्य । चञ्चु-शाके, तण्डुलीये, (नटेशाक) भिण्डायाञ्च पु० ।

सुशिख पु० सुन्दरी शिखा यस्य । वह्नौ, चित्रकवृक्षे च शोभनशिखायुक्ते त्रि० मयूरशिखायां स्त्री० ।

सुशीत न० प्रा० । पीतचन्दने अतिशीतलस्पर्शे । तद्वति त्रि०

सुशीतल न० प्रा० । गन्धतृणे अतिशीतगुणयुक्ते त्रि० ।

सुशीता स्त्री० प्रा० । शतपत्त्राम्, शीतगुणवत्यां स्त्रियां च ।

सुशीम पु० सु+श्यै मक् सम्प्रसारणञ्च । शीतस्पर्शे । तद्वति त्रि०

सुशील पु० सुन्दर-शीलमस्य । विष्णुपार्षदचरभेदे शोभनचरित्रान्विते त्रि० । [युक्ते त्रि०

सुश्रीक स्त्री० सुन्दरी श्रीरस्य कप् । सल्लकीवृक्षे । सुन्दरश्री-

सुश्रुत पु० सु श्रूयते सु+श्रु-क्त । विश्वामित्रमुनिपुत्रे चिकित्सायास्त्रकर्त्तरि मुनिभेदे, तत्कृतग्रन्थे च । सुन्दरश्रुते त्रि० 'दिवाकर्षय सुश्रुतेन चरकस्योक्तेनेति, नैषधम् ।

सुश्लिष्ट त्रि० सु+श्लिष-क्त । सुसंयुक्ते दृढमिलिते ।

सुषम पु० सुन्दर सम प्रा०षत्वम् । शोभने, समे च परमायां शोभायां स्त्री० । [जीरके, कृष्णजीरके च ।

सुषवी स्त्री० सु+षु-अच् गौ०ङीप् । कारवेल्ले, क्षुद्रकारवेल्ले,

सुषामन् त्रि० सुष्ठु साम यस्य सुषामादि०षत्वम् । सुषामन्ने स्त्रियां वा डाप् ङीप् च ।

सुषि स्त्री० शुष-इन् पृ० षस्य सः । शुषौ छिद्रे।

सुषिर न० शुष किरच् पृ० षस्य सः । छिद्रे । [त्रि०

सुषीम पु० सुष्ठु सीमा यस्य । शीतलस्पर्शे । तद्वति, सर्पभेदे च

सुषुप्त न० सु+स्वप भावे क्त । 'यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत् सुषुप्तमिति' श्रुत्युक्ते ज्ञानशून्यावस्थाभेदे । कर्त्तरि क्त । तदवस्थान्विते त्रि०

सुषुप्ति स्त्री० सु+स्वप-क्तिन् । पुरीतति नाड्यां मनसः संयोगरूपे ज्ञानाभावरूपे वेदान्तोक्ते धर्म्मधर्म्मद्वयानुदये च अवस्थाभेदे 'सुषुप्तिकाले सकले विलीने' इति श्रुतिः ।

सुषुम्णा स्त्री० सुष्ठु सुखं यथा स्यात्तथा सुषु वर्त्तते यथा म्ना-क । तन्त्रोक्ते मेरुदण्डवाह्यस्थे इडापिङ्गलानाड्योर्मध्यस्थे सूक्ष्मे नाडीभेदे ।

सुषेण पु० सुष्ठु सेनयति सेनां करोति णिच् षत्वम् । करमर्द्दके (करमचा) वेतसे, चिकित्सके-वानरभेदे च, विष्णौ त्रिवृति स्त्री० ङीप् । कन् अत इत्त्वम् । कृष्णत्रिवृति स्त्री० ।

सुष्ठु अव्य० सु+स्था-कु । अतिशये, प्रशस्ते, सत्ये च ।

सुसंस्कृत त्रि० सु+सम्+कृ-क्त सुट् च । प्रयत्नेन घृतादिदानाद्रव्येण पक्वे व्यञ्जनादौ ।

सुसम्पद् स्त्री०प्रा० । सौभाग्ये सुष्ठु सम्पद् यस्य । सुसम्पद्युक्ते त्रि०

सुसार पु० सुष्ठु सारोऽस्य । रक्तखदिरे ।

सुसिकता स्त्री० प्रा० । शर्करायाम् । उत्तमवालुकायां ब०व०

सुस्थ त्रि० सुखेन तिष्ठति स्था क । आरोग्येण युक्ते सुखिनि च

सुस्वा स्त्री० सु+स्वै क । (खेसारी) शमीधान्यभेदे ।

सुस्नात त्रि० सुष्ठु स्नातः सु+स्ना क्त । मङ्गलद्रव्येण कृतस्नाने

सुहित त्रि० सु+धा-क्त । तृप्ते, विहिते च । प्रा० । सुन्दरहिते न० । ५व० । अग्निजिह्वाभेदे स्त्री० ।

सुहृद् पु० सुष्ठु हृदयं यस्य मित्रार्थे हृदादेशः । मित्रे ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च ।

सुहृदय त्रि० सुष्ठु हृदयं यस्य । प्रसन्नमनस्के । प्रा० । सुचित्ते न०

सुहृद्बल न० सुहृदेव बलम् । मित्ररूपे सैन्ये ।

सू स्त्री० सू-क्विप् । सूतौ, प्रसवे, क्षेपे प्रेरणे च ।

सूक न० सू-प्रेरणे क्विप् स्वार्थे कन् । उत्पले, वाणे, वाते च

सूकर पु० सू-इत्यव्यक्तं शब्दं करोति कृ-अच् । वराहे, कुम्भकारे, मृगभेदे च । वराहक्रान्तायां, वराहयोषिति च स्त्री० ङीप् ।

सूक्त न० सु+वच क्त । सुन्दरवचने, एकार्थप्रतिपादके एकदैवत्ये वेदमन्त्रसमुदाये च । यथा श्रीसूक्तं पुरुषसूक्तमित्यादि तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कतिचित् सूक्तानि तुलादानादिपद्धतौ अस्माभि० उद्धृतानि । 'जप्यानि सूक्तानि तथैव चैवा'मिति च श्रुतिपुराणम् ।

सूक्ष्म न० सूच—मन् । वेतसे, अध्यात्मपदार्थे, व्यवहारभेदे च । कतकवृक्षे पु० । अणुपरिमाणवति, अल्पे च त्रि० ।

सूक्ष्मकृष्णफला स्त्री० सूक्ष्मं कृष्णं फलं यस्याः । मधुजम्बूवृक्षे ।

सूक्ष्मतण्डुल पु० सूक्ष्मस्तण्डुलोऽस्य । (खसखस) रक्तिमाले, पिप्पल्यां स्त्री० । [कुशाग्रबुद्धौ ।

सूक्ष्मदर्शिन् त्रि० सूक्ष्मं पश्यति दृश-णिनि । [illegible]

सूक्ष्मपत्र पु० सूक्ष्मं पत्रमस्य । धान्यके, वनजीरके, देवसर्षपे,

बघुवदरे, तरपर्णे, वनवर्म्य्यां, वाइवडके, मोद्भिते वोच। मतगुमायां, मताखर्यां, सघुमाक्षां दुरानमायां, यावाय- मांसाद्य स्त्री०। बम् यात दरसम्। तत्रैव।

सूक्ष्मपिप्पली स्त्री० कर्म०। वनपिप्पल्याम्।

सूक्ष्मपुष्पा स्त्री० सूक्ष्माणि पुष्पाण्यस्याः। यवतिक्तायाम्।

सूक्ष्मफला स्त्री० सूक्ष्मं फलमस्याः। भूम्यामलक्याम्।

सूक्ष्मवदरी स्त्री० कर्म०। भूमिबदर्याम्।

सूक्ष्मभूत न० कर्म०। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे।

सूक्ष्ममूला स्त्री० सूक्ष्मं मूलमस्याः। जयन्त्याम्।

सूक्ष्मवल्ली स्त्री० कर्म०। ताम्रवल्ल्यां, जतुकायाञ्च।

सूक्ष्मवीज पु० सूक्ष्मं वीजमस्य। (खसखस) ख्याते वृक्षे।

सूक्ष्मशर्करा स्त्री० कर्म०। वालुकायाम्।

सूक्ष्मशाख पु० सूक्ष्मा शाखास्य। आनवर्बुरे।

सूक्ष्मशालि पु० कर्म०। अणुधान्ये शुक्लाभाकादौ।

सूक्ष्मा स्त्री० सूक्ष-अच् टाप्। यूथिकायां, क्षुद्रैलायां, करुण्यां, वालुकायाञ्च।

सूक्ष्मैला स्त्री० कर्म०। क्षुद्रैलायाम् (गुजराटी एलाच्)।

सूच पैशुन्ये (यन्नदर्शे) अद०चु०उभ०सक०सेट्। सूचयति ते अससूचत् त।

सूचक त्रि० सूचयति अन्तर्दुष्टाति सूच-ण्वुल्। पिशुने अन्त दोषकृति, बोधके च। काके, कुकुरे, विडाले, पिशाचे, सिद्धिगणे, बुद्धे, नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे, कथके, सूक्ष्मशालौ च पु०।

सूचन न० सूच-ल्युट्। हिंसने, ज्ञापने च। युच्। तत्र, हृष्टौ, मोडायाम् अभिनये च स्त्री०।

सूचि(ची) स्त्री० सूच-इन् वा ङीप्। भिदायां, सीवनसाधने सनामख्याते लोहमयपदार्थे च। [जीविनि (दरजि)।

सूचिक त्रि० सूचि० तया सीवनं शिल्पमस्य ठन्। सूच्या-

सूचिका स्त्री० सूचि+स्वार्थे कन्। सूच्याम् सूचिरिव स्वार्थे कन्। हस्तिशुण्डायाम्। [मितत्तया वेध्यत्वात्तथात्वम्।

सूचिकाभरण न० वैद्यकोक्ते औषधभेदे तस्य च सूच्यप-

सूचिकामुख पु० सूचिरेव अग्रसूक्ष्मं मुखमस्य। शङ्खे।

सूचिखेत न० सूच्याकारं क्षेत्रम्। लीलावत्यां प्रसिद्धे सूच्याकारके क्षेत्रभेदे।

सूचित त्रि० सूच-क्त। कथिते, बोधिते, छिद्रिते च।

सूचिपत्रक पु० सूचिरिव पत्रमस्य कप्। शितार्जकशाके सूचीदलादयोऽप्यत्र।

सूचिपुष्प पु० सूच्याकारं पुष्पं पुष्पाग्रं यस्य। केतकवृक्षे सूचीपुष्पादयोऽप्यत्र।

सूचिशालि पु० कर्म०। सूक्ष्मधान्ये शुक्लाभाकादौ।

सूचीपत्रा स्त्री० सूचीव पत्रमस्याः। गण्डदूर्वायाम्।

सूचीमुख सूचीव मुखमस्य। षितकुमे। हीरके न०।

सूच्यग्रस्थूलक पु० सूच्यग्रमिव स्थूलः स्वार्थे कन्। (उलुखड़) तृणभेदे।

सूत पु० सू-प्रसवे प्रेरणे ऐश्वर्ये वा क्त। सूर्ये। क्षत्रियजाते ब्राह्मणीगर्भजे वर्णसङ्करभेदे, तष्टरि, सारथौ वन्दिनि, मागधे, लोमहर्षणाख्ये पुराणवक्तरि च पारदे पु०न०। प्रसूते, प्रेरिते च त्रि०।

सूततनय पु० सूतस्य तनयः। भारतप्रसिद्धे राधेये कर्णे सूतपुत्रादयोऽप्यत्र। तस्य सूतपालितत्वात्तथात्वम्।

सूति स्त्री० सू-क्तिन्। प्रसवे 'प्रवलैः सूतिमारुतैरिति' सूति सूयते कण्डूते सोमोऽत्र सू-आधारे क्तिन्। सोमाभि- षवभूमौ।

सूतिका स्त्री० सू-क्त कन् अत इत्वम्। प्रसवसूतायां स्त्रियाम् 'उदक्यां सूतिका विनेति' स्मृतिः।

सूतिकागार न० सूतिकाया निवासयोग्यमगारम्। सूतिका गृहे। सूतिकागृहादयोऽप्यत्र।

सूतिकारोग पु० ६त०। वैद्यकोक्ते रोगभेदे।

सूतिकाषष्ठी स्त्री० सूतिकागृहपूज्या षष्ठी शाक०। सूति कागारे—प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम्।

सूत्थान त्रि० सुष्टु उत्थानम् उद्योगो यस्य। चतुरे, कर्मकुशले। [रणस्थाने च।

सूत्या स्त्री० सु-क्यप् नि०। यज्ञाङ्गस्नानभेदे, अभिषवे, सोम-

सूत्याशौच न० सूतिनिमित्तकमाशौचम्। जननाशौचे 'शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते' इति स्मृतिः।

सूत्र ग्रन्थने वेष्टने च अद०चु०उभ०स०सेट्। सूत्रयति ते असु सूत्रत् त।

सूत्र न० सूत्र-अच्। वस्त्रसाधने तन्तौ, व्यवस्थायां, नाट्यसाधने, प्रकारे 'स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्र विदोविदुरि'त्युक्ते शास्त्रभेदे च।

सूत्रकण्ठ पु० सूत्रं कण्ठे यस्य। विप्रे, कपोते, खञ्जरीटे च।

सूत्रधार पु० सूत्रं नाट्यसाधनं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके प्रधाननटे, 'सूत्रधारेण सहिताः संलापं यत्र कुर्वते' इति दशरूपकम् इन्द्रे, शिल्पिभेदे (छुतार) च।

सूत्रपुष्प पु० सूत्रगर्भं पुष्पं यस्य। कार्पासे। [(दरजी)।

सूत्रभिद् पु० सूत्र, भिनत्ति सूच्या, भिद क्विप्। सूच्याजीवे

सूत्रयन्त्र न० सूत्रवापनयन्त्रम्। (तांत) सूत्रवापनयन्त्रे।

सूत्रला स्त्री० सूत्र लाति ला-क। तर्कुट्याम् (टेको)।

सूद पु० सूदयति ग्रासान् सूद अच्। सूपकारके, व्यञ्जन-भेदे सूपे, सारथ्ये, अपराधे, लोध्रे, पापे च।

सूदन न० सूद-ल्युट्। हिंसने, निक्षेपे, अङ्गीकारे च।

सूदशाला स्त्री० ६त०। पाकशालायाम्।

सून न० सू क्त तस्य न। पुष्पे, प्रसवे च। कर्त्तरि क्त। विकसिते, जाते च त्रि०।

सूना स्त्री० सू क्त तस्य न। प्राणिवधस्थाने 'पञ्च सूना गृहस्थस्येति, मनु तनयायां, गलशुण्डायाम् मांसविक्रये च।

सूनु पु० सू नु। पुत्रे अनुजे, सूर्ये, अर्कवृक्षे च कन्यायां स्त्री० वा ऊङ्।

सूनृत न० सुन्दयति अनेन सु+नृत-घञर्थे क। सत्ये प्रियेवाक्ये, मङ्गले च तद्वति त्रि०।

सूप पु० सुखेन पीयते सु+पा घञर्थे क पृ०। (दालि) व्यञ्जनभेदे सुवयति सु+वय-क पृ०। सूपकारे पाचके। आधारे क। भाण्डे। करणे क। सायके।

सूपकार पु० सूपं करोति कृ-अण्। पाचके।

सूपधूपन न सूपो धूप्यतेऽनेन। हिङ्गौ, सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम्। [पर्ण्याम्।

सूपपर्णी स्त्री० सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप्। मुद्ग-

सूपश्रेष्ठ पु० सूपेषु तत्साधनेषु श्रेष्ठ। मुद्गे।

सूपाङ्ग न० सूपस्य तत्संस्कारकमङ्गमुपकरणम्। हिङ्गौ।

सूर पु० सुवति प्रेरयति कर्माणि लोकान् सू क्रन्। सूर्ये, अर्कवृक्षे च। सूर-क। पण्डिते।

सूरण पु० सूर-ल्युट्। शूरणे (ओल)।

सूरत त्रि० सु+रम क्त पृ०। दयालौ।

सूरसूत पु० ६त०। अरुणे, गरुडाग्रजे।

सूरि पु० सू क्रिन्। सूर्ये, अर्कवृक्षे, यादवभेदे, पण्डिते च 'सदा पश्यन्ति सूरय' इति श्रुति राजसर्षपे स्त्री०ङीप्।

सूरिन् पु० सूर-णिनि। पण्डिते। [धर्मोपदेशसमाद च।

सूर्क्ष (क्ष्य) अनादरे भ्वा० प०-सक०-सेट्। सूर्क्ष(क्ष्य)ति असूर्क्षीत्(क्ष्यीत्)

सूर्क्ष(क्ष्य)ण न० सूर्क्ष(क्ष्य) ल्युट्। अनादरे।

सूर्प पु०न०। शूर्प पृ० मस्य ष०। शूर्पशब्दार्थे।

सूर्पणखा स्त्री० शूर्पं इव नखा यस्या पृ० पस्य च णत्वम्। रावणभगिन्याम्।

सूर्म्मि स्त्री० ऊर्म्मि+पृ० मस्य च। शूर्म्मिशब्दार्थे वा ङीप्।

सूर्य्य पु० सृ क्यप नि० दीर्घश्च। दिवाकरे, अर्कवृक्षे, दानवभेदे च।

सूर्य्यकान्त पु० सूर्यस्य कान्त प्रिय। स्फटिकमणौ सूर्य्यसम्पर्कात् यत्र अग्न्युद्भवस्तस्मिन् मणौ च (आतसी)।

सूर्य्यग्रहण न० सूर्यस्य राहुणा तदाक्रान्तभूच्छायया ग्रहणमाक्रमणम्। ज्योतिषोक्ते राहुविम्बभूमिच्छायया सूर्य्यमण्डलस्य आक्रमणरूपे ग्रासे

सूर्य्यज पु० सूर्यात् जायते जन-ड। शनिग्रहे, यमे, वैवस्वते मनौ, सुग्रीववानरे च सूर्य्यपुत्रादयोऽप्यत्र। यमुनायां स्त्री०।

सूर्य्यभक्त पु० सूर्यस्य भक्त इव प्रिय। बन्धूकवृक्षे।

सूर्य्यमणि पु० सूर्यप्रिय मणि। सूर्यकान्तमणौ।

सूर्य्यलता स्त्री० सूर्यभक्ता लता। आदित्यभक्तायाम्।

सूर्य्यवल्ली स्त्री० सूर्यतुल्यपुष्पिका वल्ली। अर्कपुष्पिकावृक्षे।

सूर्य्यसारथि पु०६त०। अरुणे गरुडाग्रजे।सूर्यसूतादयोऽप्यत्र

सूर्य्या स्त्री० सूर्यस्य भार्या टाप्। अमानुष्यां, संज्ञानाम्न्यां सूर्यभार्य्यायाम्। मानुष्यां कुन्त्यान्तु ङीप्। सूरीत्येव।

सूर्य्यालोक पु० ६त०। आतपे रौद्रे।

सूर्य्यावर्त्त पु० सूर्यं इवावर्त्तते आ+वृत अच्। (हुड्हुड़िया) क्षुपभेदे (सुलफिया) शाके च आदित्यभक्तायां स्त्री०।

सूर्य्याश्मन् पु० सूर्यप्रिय अश्मा। सूर्यकान्तमणौ।

सूर्य्योढ पु० सूर्येण सूर्यास्तकालेन ऊढ प्रापित वह क्त। सूर्य्यास्तसमये आगतातिथौ।

सृकाल पु० सृ कालन् कस्य नेत्त्वम्। शृगाले।

सृक(न्) न० सृज क्वन् कनिन् वा कस्य नेत्त्वम्। ओष्ठप्रान्तभागे 'सृक्वणी परिलेढि चेति' स्मृति। 'महासृक्वाय शोभितो न्वसिद्धवदिति।' श्चैषात् कमध्यतायस्य।

सृक्वन् न सृज कनिप्। ओष्ठप्रान्तभागे। पृ० सृक्विन्। अमन

सृग पु० सृ गक् गस्य नेत्त्वम्। भिन्दिपालास्त्रे।

सृगाल पु० सृ गालन् गस्य नेत्त्वम्। जम्बुके, दैत्यभेदे च।

सृजकाचार पु० सृजति वर्द्धस्तिष्ठ सृज क तत स्वाय कन् कर्म०। सर्ज्जिकाक्षारे। [सर्पोत्पथि।

सृणि पु० सृ निक्। यतौ। अङ्कुशार्थे स्त्री० तत्र वा ङीप्।

सृणिषीका स्त्री० सृणि+कन् इकन् वा। लालायाम्।

सृति स्त्री० सृ भावे क्तिन्। गमने। करणे क्तिन्। पथि। [च

सृत्वर त्रि० सृ क्वरप्। गमनकर्त्तरि स्त्रियां ङीप् मात्र मातरि

सृप गतौ भ्वा० पर०सक०अनिट्। सर्पति असृपत्। अबोप

देशत्वाच षः । [प्रभृत्येव धातुः अपोपदेशत्वमस्य चिन्त्यम्

स्रम्भ हिंसे भ्वा०पर०सक० सेट् क्त्वा वेट् । स्रम्भति अस्रम्भीत् ।

सृमर पु० सृ-क्मरच् । मृगभेदे, गमनशीले त्रि० । [च ।

सृष्ट त्रि० सृज-क्त । निर्मिते, युक्ते, निश्चिते, बहुले, भूषिते त्यक्ते

सृष्टि स्त्री० सृज-क्तिन् । निर्माणे, विश्वस्य निर्माणे, स्वभावे, च । कर्मणि क्तिन् । सृज्यमाने 'या सृष्टिः स्रष्टुराद्येति' शकुन्तला । [गर्भदात्रीक्षुपे ।

सृष्टिप्रदा स्त्री० सृष्टिं सर्जनं गर्भं प्रददाति प्र+दा क ।

सेक पु० सिच-घञ् । सेचने जलादिना आर्द्रीकरणे । [पात्रभेदे

सेकपात्र न० सिच्यतेऽनेन सिच-करणे घञ् कर्म० । (सेओनी)

सेक्तृ पु० सिञ्चति रेतः सिच तृच् । पत्यौ । सेचके त्रि० ।

सेचक पु० सिञ्चति तोयेन पृथिवीम् सिच-ण्वुल् । मेघे, सेक्तरि त्रि० ।

सेचन न० सिच-भावे ल्युट् । जलादिना आर्द्रीकरणे करणे ल्युट् । सेचन्यां, क्षुद्रसेकपात्रे स्त्री० ङीप् ।

सेटु पु० सिट्-उन् । (तरमुज) वृक्षे ।

सेतु पु० सि-तुन् । क्षेत्रादेर्जलधारणार्थे (आल) (जाङ्गाल) पदार्थे, वरुणवृक्षे, तन्त्रोक्ते प्रणवात्मके मन्त्रे च स्वार्थे कन् । वरुणवृक्षे ।

सेतुबन्ध पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते समुद्रोपरि आलिबन्धे, क्षेत्रादेरालिबन्धे च ।

सेतुभेदिन् पु० सेतुं भिनत्ति भिद-णिनि । दन्तीवृक्षे ।

सेतुवृक्ष पु० सेतुनामको वृक्षः । वरुणवृक्षे सेतुपरिस्थे वृक्षे च

सेल न० सि-इन् । (बेड़ि) निगडे ।

सेना स्त्री० सि-न, सह इनेन प्रभुणा वा । सैन्ये । [रणे च ।

सेनाङ्ग न० ६त० । हस्त्यश्वरथपदातिसंघाते, सेनाया उपक-

सेनाचर पु० सेनायां चरति चर-ट । सेनागामिनि 'सेनाचरीभवदिभाननेति' नैषधम् । [सेनापतौ च ।

सेनानी पु० सेनां देवसेनां वा नयति नी-क्विप् । कार्त्तिकेये,

सेनापति पु० ६त० । कार्त्तिकेये, सैन्याध्यक्षे च ।

सेनामुख न० ६त० । सैन्याग्रे, हस्त्यश्वादिसंख्याविशेषे, '(हस्तिनः त्रयः रथाः त्रयः अश्वा नव पदातयः पञ्चदश एतत् समुदाये' । [यामिके सैन्ये ।

सेनारक्ष पु० सेनां रक्षति रक्ष-अण् । सेनारक्षाकारके

सेफ पु० सि-फ । शेफे पुंसोऽसाधारणचिह्ने ।

सेमन्ती स्त्री० सिम-झि गौ० ङीष् । (सेओती) पुष्पवृक्षे ।

सेलु पु० सि-लु । श्लेष्मातकवृक्षे ।

सेवक पु० सीव्यति सिव-ण्वुल् । सीवनकर्त्तरि (दरजी) सेव-ण्वुल् । भृत्ये, दासे, अनुचरे च त्रि० ।

सेवधि पु० सेवं सेवनं दधाति धा-कि । पद्मप्रभृतौ निधौ ।

सेवन न० सिव-सेव-वा ल्युट् । सूच्यादिना वस्त्रादेर्योजने आश्रयणे, उपभोगे, बन्धने, पूजने, भजने च । सीव्यतेऽनया ल्युट् । सूच्यां स्त्री० ङीप् ।

सेवा स्त्री० सेव-अ । भजने, आराधने, उपभोगे, आश्रयणे च

सेवित त्रि० सेव-क्त । पूजिते, आराधिते, आश्रिते, उपभुक्ते च

सेव्य न० सेव-ण्यत् । वीरणमूले, अश्वत्थे, हिज्जलवृक्षे च पु० सेवार्हे त्रि० । वन्दाकवृक्षे स्त्री० ।

सैंहली स्त्री० सिंहले देशे भवा अण् ङीप् । सिंहपिप्पल्याम्

सैंहिक पु० सिंहिकायां भवः ठक् । राहौ, तस्याः अपत्यम् ठक् । सैंहिकेयोऽप्यत्र । [सिकताप्रचुरदेशे त्रि० ।

सैकत न० सिकताः सन्त्यत्र अण् । बालुकाप्रचुरे नद्यादितटे

सैकतेष्ट न० सैकतं स्थानमिष्टं यस्य । आर्द्रके ।

सैतवाहिनी स्त्री० सितायाः शर्करायाः अयम् अण् सैतो मधुररसस्तं वहति वह-णिनि । बाहुदायां नद्याम् ।

सैद्धान्तिक पु० सिद्धान्तं वेत्ति ठक् । सिद्धान्ताभिज्ञे ।

सैनापत्य न० सेनापतेर्भावः कर्म वा यञ् । सेनापतिधर्मे, तत्कर्मणि च 'सैनापत्यमुपेत्य वः' इति कुमारः ।

सैनिक पु० सेनायां समवैति ठक् । मिलिते हस्त्यश्वादौ ।

सैन्धव न० सिन्धुनदीसमीपे देशे भवम् अण् । लवणभेदे सिन्धोरदूरभवः । अण् । घोटके, तस्य सिन्धुदेशसमुद्रसमीपस्थारण्यदेशोद्भवत्वात् तथात्वम् ।

सैन्धवघन पु० सैन्धवमिव घनः । सैन्धवशिलावत् समन्तादेकरसात्मके चिदानन्दस्वरूपे परमेश्वरे ।

सैन्य पु० सेनायां समवैति ञ्य । मिलिते हस्त्यश्वादौ । सेनाया स्व० ष्यञ् । सेनासमुदाये न० ।

सैरन्ध्री स्त्री० सीरं हलं धरति धृ-मूल० क मुम् च सैरन्ध्रः कृषकस्तस्येदं शिल्पकर्म अण् तदस्त्यस्याः अच् गौ० ङीष् । परगृहस्थे स्ववशे शिल्पकारिणि स्त्रीभेदे ह० सैरिन्ध्रीत्यप्यत्र ।

सैरिभ पु० सीरे हले तद्वहने इभ इव ष्पृष० पक्ष० ततः स्वार्थेऽण् । महिषे, 'सैवे सैरिभमर्दिनीमिह महालक्ष्मीमिति' महालक्ष्म्याध्यानम् । [झिण्ट्याम् । स्वार्थे कन् तत्रैव ।

सैरीय पु० सीरस्येदम् अण् सैरं हलाकारमर्हति छण् ।

सैरेय स्त्री० सैरं सीराकारमर्हति ढक् । झिण्ट्याम् । ढकञ् । सैरेयकोऽप्यत्र ।

सैवाल न० सेवाये मीनादीनामुपभोगाय अलति पर्याप्नोति अच्

सेवाल· ततः स्वार्थे अण् । शैवाले स्वार्थे कन् । तत्रैव ।

**सोढ** त्रि० सह-क्त वा इडभावः । क्षान्ते तितिक्षिते । कर्त्तरि क्त । शीतादिसहनशीले त्रि० ।

**सोढृ** त्रि० सह-तृच् वा इडभावः । सहनकर्त्तरि क्षमाशीले

**सोत्कण्ठ** त्रि० सह उत्कण्ठया । औत्सुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते ।

**सोत्प्रास** न० उद्+प्र-अस-घञ् सह उत्प्रासेन । सोल्लुण्ठने, अन्यार्थकस्य वाक्यस्य अन्यार्थत्वकल्पनया तदुत्तरार्थके, वाक्ये, प्रियवाक्ये च । समन्दहासे पु० ।

**सोदय** न०त्रि० सह उदयेन प्रादुर्भावेण वृद्ध्या, वा । प्रादुर्भूते, वृद्धियुक्ते, लाभयुक्ते (सुदयुक्ते) च । [भगिन्यां स्त्री० ।

**सोदर** पु० सह समानमुदरं यस्य । एकोदरभवे भ्रातरि-

**सोदर्य्य** पु० सह समाने उदरे भविता यत् सादेशः । एकोदरजाते भ्रातरि । भगिन्यां स्त्री० ।

**सोनह** न० सु-विच् सवे नह्यते नह घञर्थे क । लशुने ।

**सोन्माद** पु० सह उन्मादेन । उन्मत्ते, उन्मादिन्यौ ।

**सोपप्लव** पु० सह उपप्लवेन । समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते सूर्ये च । [यथा ब्रतदानादौ ।

**सोपाधि(क)** सह उपाधिना वा कप् । उपाधियुक्ते प्रतिलाभा

**सोपान** न० उप-अन-भावे घञ् सह विद्यमानः उपानः ; उपरि गतिरनेन । आरोहणसाधने काष्ठादिनिर्मिते (पैठा) प्रभृतौ पदार्थे ।

**सोभाञ्जन** पु० शोभाञ्जन+पृ० । (सजना) वृक्षे ।

**सोम** पु० सू-मन् । चन्द्रे, कर्पूरे, कुबेरे, यमे, वायौ, वसुभेदे, जले, सोमलतौषधौ, तद्रसे, अमृते, दीधितौ च । सह उमया । शिवे, वानरेन्द्रे-सुग्रीवे च । [विष्णौ ।

**सोमगर्भ** पु० सोमस्य तदात्मकामृतरूपमोक्षस्य गर्भः स्थानम् ।

**सोमज** न० सोमात् तत्चरितौषधिरसरसपानात् जायते जन-ड । दुग्धे चन्द्रजाते त्रि० । बुधे पु० ।

**सोमतीर्थ** न० सोमेन तपस्तप्त्वा कृतं तीर्थम् । प्रभासतीर्थे ।

**सोमप** पु० सोमं तद्रसं पिबति पा-क । यज्ञे—सोमरसपानकर्त्तरि पितृगणभेदे ब० व० । पा-क्विप् सोमपाप्यत्र ।

**सोमपत्र** पु० सोमस्य ओषधिविशेषस्येव पत्त्रमस्य । (उलुखड़) तृणभेदे ।

**सोमपीति(थि)न्** पु० प्रीतमनेन इनि सोमं पीतो पृ० वा तस्य यः । यज्ञे-सोमरसपायिनि । पा-क्तनिप् । सोमपीवाप्यत्र ।

**सोमबन्धु** पु० सोमस्य बन्धुः, सोमो बन्धुरस्य वा । सूर्ये वृद्धिकरत्वात् तथुत्पत्वात् चन्द्रजे बुधे पु० कुमुदे न० ।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य । बुधग्रहे, चन्द्रवंश्ये क्षत्रिये च । [यागभेदे ।

**सोमयाग** पु० सोमेन यागः । त्रिवर्णसाध्ये सोमरसपानाङ्गके

**सोमयाजिन्** पु० सोमेन यजते यज-णिनि । सोमयागकर्त्तरि

**सोमयोनि** न० सोमः योनिरस्य । चन्दनभेदे ।

**सोमराजी** स्त्री० सोमेन राजते राज-अच् गौ०ङीष् । (सोमराज) ओषधिभेदे । स्वार्थे कन् । सोमराजिकाप्यत्र । राज-णिनि । सोमराजीत्यपि पु० ।

**सोमलता** स्त्री० सू-मन् कर्म० । स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री०सोमलतेव इवार्थे कन् अत इत्वम् । गुडूच्याम्

**सोमवंश** पु० सोमस्य वंशः । चन्द्रवंशे चन्द्रावधिके गोत्रपरम्पराजाते क्षत्रिये च । [श्वेतखदिरे, कट्फले च ।

**सोमवल्क** पु० सोमस्येव वल्कमस्य । करञ्जे, रीठाकरञ्जे,

**सोमवल्लिका** स्त्री० सोमवल्लीव इवार्थे कन् । सोमराज्याम् स्वार्थे कन् । सोमलतायाम् ।

**सोमवल्ली** स्त्री० सोमाख्यामृताय वल्ली । गुडूच्याम् । सोमरूपा वल्ली । सोमलतायाम् सोमराज्यां, ब्राह्म्यां, सुदर्शनायाम् ।

**सोमवार** पु० सोमस्वामिको वारः । चन्द्रस्वामिके दिने ।

**सोमविक्रयिन्** पु० सोमं विक्रीणाति वि+क्री-णिनि । सोमलतायाः तद्रसस्य वा विक्रेतरि ।

**सोमवृक्ष** पु० सोम इव वृक्षः । कट्फलवृक्षे, श्वेतखदिरे च ।

**सोमसार** पु० सोम इव शुभ्रः सारोऽस्य । श्वेतखदिरे ।

**सोमसिद्धान्त** पु० सोमकृतः सिद्धान्तः । चन्द्रप्रोक्ते ज्योतिषग्रन्थभेदे । [सोमलतानिष्पीडने ।

**सोमसुत्** पु० सोमं सुतवान् सु-भूते क्विप् । यज्ञार्थं कृत

**सोमसुत्वन्** पु० सोमं सुतवान् भूते क्वनिप् । कृतसोमरसपाने

**सोमसुता** स्त्री० ६त० । नर्मदानद्याम् । बुधे पु० । सोमोद्भवादयोऽप्यत्र पु० स्त्री० यथायथम् ।

**सोमसूत्र** न० सोमस्य जलस्य सूत्रमिव प्रणाली । जलनिर्गमप्रणाल्याम्, शिवलिङ्गस्यगौरीपट्टस्य जलनिर्गमस्थाने च 'सोमसूत्रं न लङ्घयेदिति' तन्त्रम् ।

**सोल्लुण्ठ** त्रि० सह उल्लुण्ठेन । भूमौ पार्श्वपरिवर्त्तादियुक्ते अश्वादौ अन्यार्थवाक्यस्य अन्यपरत्वयुक्ते वाक्ये च ।

**सोल्लुण्ठन** न० सह उल्लुण्ठनेन । अन्यथास्थितस्य अन्यरूपेण परिवर्त्तनसहिते वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवं रूपे वाक्ये) ।

**सौकर्य्य** न० सुकरस्य भावः ष्यञ् । अनायाससाध्यत्वे ।

**सौखसुप्तिक** त्रि० सुखसुप्तिं सुखेन शयनं पृच्छति ठञ् । प्रातःकाले सुखशयनप्रश्नके वैतालिकादौ ।

**सौख्य** न० सुखमेव स्वार्थे ष्यञ् । सुखे । [तत्सम्बन्धिनि त्रि० ।

**सौगत** पु० सुगत एव अण् । सुगते बुद्धभेदे तस्येदमण् । सुग-

**सौगन्ध** न० सुष्ठु गन्धोऽस्य स्वार्थे ष्यञ् । कत्तृणे, रामकर्पूरे ।

**सौगन्धिक** न० सुष्ठु गन्धः सुगन्धः तस्येदम् ठण् । कह्लारे । [सुगन्धौ ।

**सौगन्ध्य** न० सुगन्धस्य भावः ष्यञ् । सद्गन्धे । स्वार्थे ष्यञ् ।

**सौचिक** पु० सूच्यां तत्कर्मणा जीवनमुपजीवति ठक् । (दरजी) सीवनकारके । [च । 'सौजन्यजन्यं यशः' इत्युद्भटः ।

**सौजन्य** न० सुजनस्य भावः ष्यञ् । सुजनतायां सद्व्यवहारे

**सौण्डी** स्त्री० शुण्डाकारोऽस्त्यस्याः अण् ङीप् पृ० षस्य सः । गजपिप्पल्याम् ।

**सौत्र** पु० पाणिन्यादिभिः सूत्रे एव कर्मविशेषाय पठितः अण् । भ्वादादिदृश्यगणीयभिन्नेषु सूत्रमात्रपठितेषु धातुषु ।

**सौत्रामणी** स्त्री० सुत्रामा इन्द्रो देवताऽस्य अण् पृषो- त्वात् न टिलोपः णत्वम् । इष्टिभेदे तत्र हि सुरापानं विप्राणामपि विहितम् 'सौत्रामण्यां सुरां पिबेदिति' श्रुतिः

**सौदामनी** स्त्री० सुदामा पर्वतभेदस्तेनैका दिक् तत्रात्र भवत्वात् अण् । विद्युति । सा हि स्फटिकमयस्य सुदाम्न पर्वतस्यैकदेशे जाता । अप्सरोभेदे च । सुदाम्ना ऐरावत- गजस्य पत्नी ङीप् । ऐरावतयोषिति । तत्र ङीपि वर्ताऽल्लोपे । सौदाम्न्यपि ।

**सौदायिक** न० सुदायात् बन्धुकुलात् आगतः ठञ् । "ऊढया कन्यया वापि पत्युः पितृगृहेऽथ वा । भर्तुः सकाशात् पित्रो र्वा लब्धं सौदायिकं स्मृतमिति, स्मृत्युक्ते स्त्रीधनभेदे 'सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितमिति" स्मृतिः

**सौदास** पु० चन्द्रवंश्ये कल्माषपादे नृपतौ ।

**सौध** पु०न० सुधया लेपनद्रव्येण रक्तम् अण् । राजसदनभेदे सुधावर्षमर्हति अण् । रूप्ये न० । सुधासम्बन्धिनि त्रि० ।

**सौनिक** पु० सूना वध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठण् । मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ) ।

**सौन्दर्य्य** न० सुन्दरस्य भावः ष्यञ् । चारुतायां, "अङ्ग- प्रत्यङ्गकानां यः सन्निवेशो यथोचितम् । सुश्लिष्टः सन्धिबन्धः स्यात् तत्सौन्दर्य्यमिहोच्यते"त्युक्ते अङ्गादीनां मनोहरत्वे

**सौपर्ण** न० सुष्ठु पर्णानि तद्रूपमर्हति अण् । मरकतमणौ ।

**सौपर्णेय** पु० सुपर्ण्या विनतायाः अपत्यम् ढक् । गरुडे ।

**सौप्तिक** त्रि० सुप्तिकाले रात्रौ भवम् ठञ् । रात्रियुद्धे तदधि- कृत्य कृतो ग्रन्थः ठञ् । महाभारतपर्व्वभेदे ।

**सौभ** न० सुष्ठु सर्व्वत्र लोके भाति भा-क स्वार्थे अण् । कामचारिणि, पुरे, हरिश्चन्द्रनृपपुरे च ।

**सौभद्र** पु० सुभद्राया भवः अण् । सुभद्रासुते अभिमन्यौ ।

**सौभद्रेय** पु० सुभद्राया अपत्यम् ढक् । सुभद्रासुते अभिमन्यौ ।

**सौभरि** पु० ऋषिविशेषे ।

**सौभागिनेय** पु० सुभगाया अपत्यम् ढक् इनङादेशः द्विपद- वृद्धिः । सुभगापुत्रे । तत्कन्यायां स्त्री० ङीप् ।

**सौभाग्य** न० सुभगस्य भावः ष्यञ् द्विपदवृद्धिः । प्रियत्वे स्वार्थे ष्यञ् । सिन्दूरे, टङ्कणे च । विष्कम्भादिषु मध्ये चतुर्थे योगे पु० । [ऐन्द्रजालिके ।

**सौभिक** पु० सौभं कामचारिपुरं तन्निर्माणे शिल्पमस्य ठण् ।

**सौमनस्य** न० सुमनसो भावः ष्यञ् । प्रसन्नचित्तत्वे ।

**सौमनस्यायनी** स्त्री० सौमनस्यमयतेऽनया अय-ल्युट् ङीप् इत्वं । मालत्याम्, तत्कलिकायाञ्च । [विचक्षणे ।

**सौमित्र(त्रि)** पु० सुमित्रायां भवः अण्, बाह्वादि० इञ् वा ।

**सौम्य** त्रि० सोमो देवताऽस्य अण् । सोमदेवताके टित्त्वात् स्त्रियां ङीप् । सोम इव याज्यादित्वात् य स्वार्थे अण् । मनोहरे प्रियदर्शने अनुग्रे च त्रि० बुधे पु० । ततः स्वार्थिक प्रत्ययाभावे सोम्योऽप्युभयत्र । 'सदेव सोम्येदमग्र आसी'दिति श्रुति ज्योतिषोक्ते शुभग्रहे वृषादिसमराशौ, उडुम्बरवृक्षे सोमपायिनि-विप्रे पु० । [पत्त्रयाम् ।

**सौम्यकृच्छ्र** पु० कर्म० सोमदेवताके कृच्छ्राख्ये व्रतभेदे । [शत-

**सौम्यगन्धी** स्त्री० सौम्य अनुग्रः गन्धो यस्याः गौ० ङीष् ।

**सौम्यग्रह** पु० कर्म० । ज्योतिषोक्ते चन्द्रबुधगुरुशुक्ररूपे शुभग्रहे

**सौर** पु० सूरस्य इदम् सूरो देवताऽस्य अण् वा । सूर्यसुते शनैश्चरे यमे च । सूर्यदेवताके त्रि० स्त्रियां ङीप् । सूरेण निर्वृत्तः अण् । एकैकराशौ तद्भोगेषु सूर्यगतिसाध्ये दिन- मासादौ त्रि० । 'विवाहादौ स्मृतः सौरः' इति स्मृतिः उडुम्बरवृक्षे पु० । [तुम्बुरुवृक्षे ।

**सौरज** पु० सूरस्येदं सौरं आलोकस्ततो जायते जन-ड ।

**सौरभ** न० सुरभेर्भावः अण् । सद्गन्धे, सौरभमस्यास्ति अच् । सुरभिरस्यास्ति अण् वा । कुङ्कुमे, बोले च न० ।

**सौरभेय** पु० सुरभेरपत्यम् ढक् । गवि स्त्रियां ङीप् । 'सौरभेयीभ्य एव चेति' गोदानमन्त्रः वत्स इदम् ढक् । सुरभि सम्बन्धिनि त्रि० ।

**सौराष्ट्र** पु० सुष्ठु राष्ट्रमस्यास्ति प्रज्ञा० अण् । (सुरट) देश- भेदे । सुराष्ट्रे भवः अण् । सुराष्ट्रदेशभवे त्रि० । विषभेदे न०

**सौराष्ट्रिक** न॰ सुराष्ट्रदेशे भवः ठक्। विषभेदे।

**सौरि** पु॰ सूरस्यापत्यम् इञ्। शनैश्चरे 'सौरिवारेऽमृता-नीति' ज्योतिषम्।

**सौरिरत्न** न॰ सौरिप्रियं रत्नम् शाक॰। नीलके मणौ।

**सौरेय** पु॰ सुरायै हितम् ढक्। शुक्लभिण्टाम् स्वार्थे कन् तत्रैव। [ताम्रमयपात्रनिर्माणकर्त्तरि (कांसारि)

**सौल्विक** त्रि॰ सुल्वं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक्।

**सौव** त्रि॰ स्वस्येदम् अण् न वृद्धिः वात्पूर्व्वमौत्। आत्म-संबन्धिनि। [स्वपानभवे पदार्थे।

**सौवग्रामिक** त्रि॰ स्वग्रामे भवः ठक् न वृद्धिः वात्पूर्व्वमौत्।

**सौवर्च्चल** न॰ सुवर्च्चलदेशे भवम् अण्। कृष्णलवणे।

**सौवर्णभेदिनी** स्त्री॰ सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्रकाशते भिद्-णिनि। प्रियङ्गौ।

**सौवस्तिक** पु॰ स्वस्तिकरणे प्रभवः ठक् न वृद्धिः वात्पूर्व्व-मौत्। पुरोहिते।

**सौविद** पु॰ सुविदन्ति सु+विद्-क स्वार्थेऽण्। अन्तःपुररक्षके

**सौविदल्ल** पु॰ सुष्ठु विदन्तं विद्वांसमपि लाति ला-क स्वार्थेऽण्। अन्तःपुररक्षके।

**सौवीर** पु॰ सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवः अण्। स्रोतोऽञ्जने। काञ्जिके, वदरे च न॰ स्वार्थे कन्। काञ्जिकभेदे न॰। वदरवृक्षे पु॰।

**सौवीरसार** पु॰न॰कर्म॰। स्रोतोऽञ्जने।

**सौवीराञ्जन** न॰ सौवीराख्यमञ्जनम्। अञ्जनभेदे 'सौवीरन्तु यवैराद्यैः पक्वैर्वा निस्तुषैः कृतम् गोधूमैरपि सौवीरमि'त्या-द्युक्ते अञ्जनभेदे।

**सौष्ठव** न॰ सुष्ठु भद्रं तस्य भावः अण् न टिलोपः। आति-शय्ये 'स सौष्ठवौदार्य्यविशेषशालिनीमि'ति भारविः।

**सौहार्द्द** न॰ सुहृदो भावः अण्। स्नेहे, मित्रत्वे च।

**सौहित्य** न॰ सुहितस्य तृप्तस्य भावः ष्यञ्। तृप्तौ, 'नातिसौहित्यमाचरेदिति' स्मृतिः।

**सौहृद** न॰ सुहृदो भावः अण्। मित्रत्वे बन्धुतायाम्।

**स्कद** उत्प्लुत्य गतौ अक॰ उद्धृतौ, आप्लाने च सक॰ भ्वा॰आ॰ सेट् इदित्। स्कन्दते अस्कन्दिष्ट। [न्दत् त

**स्कन्द** समाहारे चुरा॰उभ॰सक॰सेट्। स्कन्दयति ते अचस्क

**स्कन्द** गतौ शोषणे च भ्वा॰पर॰सक॰अनिट्। स्कन्दति अस्क दत् अस्कान्त्सीत्।

**स्कन्द** पु॰ स्कन्दते उत्प्लुत्य गच्छति अच्। कार्त्तिकेये।

**स्कन्दन** न॰ स्कन्द-ल्युट्। रेचने, क्षरणे, गतौ शोषणे च।

**स्कन्दांशक** पु॰ स्कन्दस्यांश एवांशो यस्य कप्। पारदे। तयोः शिववीर्य्यजत्वादेकांशत्वम्।

**स्कन्ध** पु॰ स्कद्यते आरुह्यते कर्म्मणि घञ् पृ॰। अंसे (कांध) वृक्षस्य काण्डे (गुडि) न्दने, व्यूहे, युद्धे, समूहे, काये, भद्रादौ, छन्दोभेदे, सौगतसिद्धेषु विज्ञानादिषु पञ्चसु 'सर्वाङ्गस्कन्ध पञ्चकमि'ति माघः। पथि, ग्रन्थपरिच्छेदे च। 'स्कन्धे-ह्वांदग्मिर्युक्तमि'ति भागवतविशेषणम्।

**स्कन्धतरु** पु॰ स्कन्धप्रधानस्तरुः। नारिकेलवृक्षे।

**स्कन्धफल** पु॰ स्कन्धे फलमस्य। नारिकेलवृक्षे, उडुम्बरवृक्षे च

**स्कन्धबन्धना** स्त्री॰ स्कन्धे बन्धनमस्याः। मधुरिकायाम्।

**स्कन्धरुह** पु॰ स्कन्धात् रोहति रुह क। वटवृक्षे।

**स्कन्धवाह** पु॰ स्कन्धेन वाहयति वह-णिच्-अच्। शकटादि द्वारा स्कन्धवाहके वृषादौ। ण्वु। तत्रैव। [शाखायाम्।

**स्कन्धशाखा** स्त्री॰ स्कन्धात् प्रभवति शाखा। वृक्षस्य प्रधान

**स्कन्धशृङ्ग** पु॰ स्कन्धपर्य्यन्तं शृङ्गमस्य। महिषे।

**स्कन्धावार** पु॰ स्कन्धार्थमावारः आ+वृ-घञ्। युद्धार्थमुद्युक्त-सैन्यानां स्थापने, तदाधारे-कटके च। [भावे क्त। क्षरणे न॰

**स्कन्न** त्रि॰ स्कन्द्-क्त। च्युते, गलिते, क्षरिते, शुष्के, गते च।

**स्कम्भ** प्रतिघाते क्र्या॰ स्वा॰उ॰सक॰सेट्। स्कभ्नाति स्कभ्नीते स्कभ्नोति स्कभ्नुते। अस्कम्भीत् अस्कम्भिष्ट।

**स्कभ** स्तम्भे भ्वा॰आ॰सक॰सेट् इदित्। स्कम्भते अस्कम्भिष्ट।

**स्कु** उद्धृतौ आप्लवने च क्र्या॰ स्वा॰उ॰सक॰अनिट्। स्कुनाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट।

**स्कुद** आप्लवने उद्धृतौ च भ्वा॰आ॰सक॰सेट् इदित्। स्कुन्दते अस्कुन्दिष्ट। [स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्।

**स्कुम्भ** रोधने सौ॰ क्र्या॰स्वादि॰ कार्य्यभागी प॰सक॰सेट्।

**स्खद** विदारे दि॰आ॰सक॰सेट्। स्खद्यते अस्खदिष्ट घटादि॰ स्खदयति। [स्खलयति स्खालयति।

**स्खल** चले भ्वा॰प॰सक॰सेट् वा घटा॰। स्खलति अस्खालीत्

**स्खलन** न॰ स्खल-भावे ल्युट्। चलने पतने।

**स्खलित** न॰ स्खल—भावे क्त। कूटयुद्धादौ-प्रवृत्त्या वीरमर्य्या-दात॰ पतने स्खलनमात्रे च। कर्त्तरि क्त। चलिते त्रि॰

**स्तन** मेघशब्दे अद॰चु॰उभ॰सक॰सेट्। स्तनयति ते अतस्तनत् त

**स्तन** पु॰ स्तन-अच्। (माइ) स्त्रीणाम् अङ्गभेदे।

**स्तनन** न॰ स्तन-ल्युट्। ध्वनिमात्रे, मेघशब्दे, कुन्थनशब्दे च।

**स्तनन्धय** पु॰ स्त्री॰ स्तनं धयति धे-खश् मुम् च। अतिशिशौ स्त्रियां ङीप्। [टाप्।

**स्तनप** पु॰स्त्री॰स्तनं पिबति पा-क। अतिशिशौ बालके। स्त्रियां

स्तनभर पु० ६त० । स्थूलस्तनभारे वदाभोगे च ।

स्तनयित्नु पु० स्तन-इत्नु । मेघे, मुस्तके, मेघशब्दे, विद्युति, मृत्यौ, रोगे च ।

स्तनवृन्त पु०स्तनस्य वृन्तमग्रम् । स्तनाग्रे स्तनशिखादयोप्यत्र

स्तनान्तर न० स्तनयोरन्तरम् । हृदये, स्तनमध्ये च ।

स्तनाभोग पु० ६त० । स्तनस्य परिपूर्णतायाम् ।

स्तनित न० स्तन—भावे क्त । मेघशब्दे, सुरतादिशब्दे च । कर्त्तरि क्त । शब्दिते त्रि० ।

स्त(न्)भ रोधने क्र्या० स्वा० प० सक० सेट् क्त्वा वेट् । स्तभ्नाति स्तभ्नोति अस्तभत् अस्तम्भीत् ।

स्तन्य न० स्तने भवम् यत् । स्तनजाते दुग्धे ।

स्तब्धरोमन् पु० स्तब्धानि रोमाणि यस्य । शूकरे ।

स्तभ स्तम्भने जडीभावे अक० तत्करणे, क्रियानिरोधे च सक० भ्वा० आ० सेट् इदित् । स्तम्भते अस्तम्भिष्ट ।

स्तम्ब पु० स्था-अम्बच् किच्च पृ० । काण्डरहिते झिण्टिकादौ-वृक्षे, तृणादौ, गुच्छे च ।

स्तम्बकरि पु० स्तम्बं गुच्छं करोति कृ-इन् । व्रीहिधान्ये ।

स्तम्बघन पु० स्तम्बो हन्यतेऽनेन हन क नि० । स्तम्बोन्मूलके खनित्रादौ । [खनित्रादौ ।

स्तम्बघ्न त्रि० स्तम्बो हन्यतेऽनेन हन-घञर्थे क । स्तम्बोन्मूलके

स्तम्बेरम पु० स्तम्बे वृक्षादीनां काण्डे गुच्छे गुल्मे वा रमते रम-अच् अलुक् स० । गजे । [जडीभावे पु० ।

स्तम्भ पु० स्तम्भ-अच् । (थाम) स्थूणायाम् । भावे घञ् ।

स्तम्भन न० स्तम्भ—जडीकरणे भावे ल्युट् । जडीकरणे । करणे ल्युट् । तन्त्रोक्ते जडीकरणसाधने प्रयोगभेदे ।

स्तम्भन पु० स्तम्भयति स्तम्भ—णिच्-ल्यु । कन्दर्पस्य पञ्चसु बाणेषु मध्ये बाणभेदे ।

स्तव पु० स्तु-अप् । प्रशंसायाम्, स्तुतौ च ।

स्तवक पु० स्तु-वुन्, स्था-अवक पृ० वा । गुच्छे ।

स्तावक त्रि० स्तु-ण्वुल् । स्तुतिकारके ।

स्तिमित न० स्तिम-भावे क्त । आर्द्रतायाम्, अचाञ्चल्ये च । कर्त्तरि क्त । अचञ्चले, आर्द्रे च त्रि० ।

स्तुत पु० स्तु-क्त । ततस्रावे ।

स्तुति स्त्री० स्तु-क्तिन् । स्तवे ।

स्तुतिपाठक पु० स्तुतिं पठति पठ-ण्वुल् । राजादेर्वन्दिनि ।

स्तुन्भ रोधने सौ० क्र्या० स्वा० कार्य्यभागी पर० सक० सेट् क्त्वावेट् । स्तुभ्नोति स्तुभ्नाति । अस्तुम्भीत् ।

स्तूप पु० स्तू-पक् स्तूप-अच् वा । राशीकृते मृत्तिकादौ सङ्घाते, वले, निष्प्रयोजने च ।

स्तुभ पु० स्तुन्भ-मूल० क । छागे । [र्षीत् अस्तृत अस्तरिष्ट ।

स्तृ विस्तारे स्वा० उ० सक० अनिट् । स्तृणोति स्तृणुते अस्ता-

स्तृ प्रीतौ अक० रक्षणे सक० स्वा० प० अनिट् । स्तृणोति अस्तार्षीत् । षोपदेशत्वात् ष । [पदेशत्वान्न ष ।

स्तृक्ष गतौ भ्वा० पर० सक० सेट् । स्तृक्षति अस्तृक्षीत् । अषो-

स्तृह वधे तु० प० सक० वेट् । स्तृहति अस्तर्हीत् अस्तृक्षत् । षोपदेशत्वात् ष ।

स्तॄ आच्छादने क्र्या० स्वा० उ० सक० सेट् । स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट । [स्तेनत्-त ।

स्तेन चौर्य्ये अद० चु० उभ० सक० सेट् । स्तेनयति-ते अति-

स्तेन पु० स्तेन-घञ् । चौर्य्ये । अच् । चोरे त्रि० ।

स्तेप क्षेपे चु० उभ० सक० सेट् । स्तेपयति-ते अतिस्तिपत् त । अषोपदेशत्वाच्च ष ।

स्तेम पु० स्तिम-घञ् । आर्द्रीभावे, स्नेहे च ।

स्तेय न० स्तेनस्य भाव यत् नि० । चौर्य्ये "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा । यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तित" मित्युक्ते परद्रव्यापहारे । [ङीप् ।

स्तेयिन् त्रि० स्तेयमस्त्यस्य इनि । परद्रव्यापहारके । स्त्रिया-

स्तैन(न्य) न० स्तेनस्य भाव अण्, ष्यञ् वा । चौर्य्ये परद्रव्यापहरणे । स्तेन एव स्वार्थे ष्यञ् । चौरे त्रि० । [भार्य्ये च ।

स्तैमित्य न० स्तिमितस्य भाव ष्यञ् । जाड्ये, स्नेहे, आर्द्री-

स्तोक पु० स्तुच-घञ् । चातके, जलबिन्दौ च । अल्पे त्रि० ।

स्तोकक पु० स्तोकाय जलाय कायति शब्दायते कै—क । चातके

स्तोत्र न० स्तु-ष्ट्रन् । स्तवे-गुणकर्म्मादिभि प्रशंसने ।

स्तोभ पु० स्तुभ-घञ् । अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे, यथा सामवेदे हुवा, हौइ, प्रभृतय । हेलने, स्तम्भने च

स्तोम श्लाघगुणाविष्करणे अद० चु० उभ० अक० सेट् । स्तोमयति ते अतुस्तोमत्-त ।

स्तोम पु० स्तोम-घञ् स्तु-मन् वा । समूहे, यज्ञे, क्रतौ, च, मस्तके, धने, शस्ये, लौहदण्डे च न० । वक्रे त्रि० ।

स्त्यान न० स्त्यै-भावे क्त तस्य न । स्नेहे, घनत्वे, मसृणे, आलस्ये, प्रतिशब्दे च । कर्त्तरि क्त । सङ्घातकारके, ध्वनिकारके च त्रि० । [अषोपदेशत्वाच्च ष

स्त्यै सङ्घाते ध्वनौ भ्वा० अक० अनिट् । स्त्यायति अस्त्यासीत् ।

स्त्री स्त्री० स्तु-ड्रट् । योषिति भार्य्याम् ।

स्त्रीगवी स्त्री० स्त्री चासौ गौश्च अच् समा०। (गाभि) रोहि-
ण्याम्। [भाञ्जने। स्त्रीमनोहारके त्रि०।

स्त्रीचित्तहारिन् पु० स्त्रियाश्चित्तं हरति हृ-णिनि। यो-

स्त्रीचिह्न न० स्त्रिया असाधारणं चिह्नम्। योनौ

स्त्रीचोर पु० स्त्रियाः चोर इव। कामुके।

स्त्रीजित पु० स्त्रिया जितः जि-क्त। स्त्रीवश्ये।

स्त्रीधन न० ६त०। स्त्रीस्वत्वाश्रये द्रव्यमात्रे इतिमिताक्षरा-
दयः। "अध्यग्न्यध्यावाहनिकं भर्तृदायं तथैव च। भ्रातृ-
दत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम्" मित्येव परि-
गणिते स्त्रीस्वत्वाश्रये धने इति दायभागादयः।

स्त्रीधर्म्म पु० ६त०। ऋतौ नारीकुसुमविकासे रजसि।

स्त्रीधर्म्मिणी स्त्री० स्त्रीधर्मोऽस्त्यस्या इनि। ऋतुमत्यां स्त्रियाम्

स्त्रीपुधर्म्म पु० स्त्रियाः पुंसश्च धर्मः तमधिकृत्य व्यवहारो वा।
स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टा-
दशसु विवादेषु मध्ये विवादभेदे 'स्त्रीपुंधर्मोविभाग-
श्चेति" स्मृतिः। [पुरुषयोः।

स्त्रीपुंस पु० द्वि० स्त्री च पुमांश्च अच् समा०। मिलितयोः स्त्री-

स्त्रीपुंसलक्षणा स्त्री० स्त्रीपुंसयोर्लक्षणमस्याम्। स्तनश्मश्रु-
प्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम्।

स्त्रीप्रिय पु० ६त०। आम्रवृक्षे। नारीप्रियमात्रे त्रि०।

स्त्रीलिङ्ग पु० स्त्रिया इव लिङ्गं तत्कार्यं यस्य। स्त्रीलिङ्ग-
विहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे। ६त० स्त्री-
चिह्ने न०।

स्त्रीवश पु० ६त०। स्त्रीवशीभूते।

स्त्रीविधेय पु० ६त०। स्त्रीवशीभूते। [विवादभेदे।

स्त्रीसंग्रहण न० स्त्रियाः संग्रहणं यत्र। परस्त्रीहरणरूपे

स्त्रीसभ न० स्त्रीणां सभा क्लीवत्वम्। स्त्रीसमाजे।

स्त्रीसेवा स्त्री० ६त०। स्त्रीसम्भोगे, व्यवायधर्मेण नारीसेवने।

स्त्रीस्वभाव पु० स्त्रिया इव स्वभावो यस्य। अन्तःपुरस्थके
मण्डलके ६त०। स्त्रीणां शीले।

स्त्रैण न० स्त्रिया इदम् अण् नञ्। स्त्रीस्वभावे, 'स्त्रैणेन नीता
विकृतिं लघिम्नेति' भट्टिः। स्त्रीविधेये, स्त्रीसम्बन्धिनि
च त्रि०।

स्थ त्रि० स्था-क। स्थितिमत्त्वे प्रायेण उत्तरपदस्थित एवाय
प्रयुज्यते यथा पदस्थः मार्गस्थः निकटस्थ इत्यादि।

स्थग संवरणे भ्वा० पर० सक० सेट् घटा०। मित्त्वेन ह्रस्वः।
स्थगति, अस्थगात्। अमोपदेशत्वाच्च प।

स्थगन न० स्थग-ल्युट्। आच्छादने।

स्थगित त्रि० स्थग-क्त। आवृते तिरोहिते। [करङ्के।

स्थगी स्त्री० स्थग्यते अनया घञर्थे क गौ० ङीष्। ताम्बूलमात्रे

स्थण्डिल न० स्थल इलच् नुक् लस्य ड। चत्वरे, उपद्रवरहित
शून्ये समीकृते प्रदेशे "निषेदुषी स्थण्डिल एव केवले'
इति कुमार। यज्ञार्थं परिष्कृतस्थाने, होमार्थं कुण्ड-
प्रतिनिधित्वेन वालुकादिभिः कर्त्तव्ये मण्डलभेदे च "नित्यं
नैमित्तिकं कर्म स्थण्डिले वा समाचरेत्। हस्तमात्रं तु
तत् कुर्यात् वालुकाभिः समन्ततः' इति तन्त्रम्।

स्थण्डिलशायिन् पु० स्थण्डिले चत्वरे शेते व्रतवशात् शी-
णिनि। व्रतार्थं चत्वरे शयितरि। "स्थण्डिलशायिन-
श्चेति' भट्टिः। [चत्वरे शयितरि।

स्थण्डिलेशय पु० स्थण्डिले शेते अच् अलुक् समा०। व्रतार्थं

स्थपति पु० स्था-क तस्य पतिः। कञ्चुकिनि, शिल्पिभेदे, (छुतार)
कुबेरे, अधीशे, बृहस्पतिसवनामकयागकर्त्तरि च। प्रशस्ते त्रि०

स्थपुट त्रि० तिष्ठति स्था-क स्थं पुटं यत्र। विषमोन्नतप्रदेशे,
"स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति' मालतीमाधवम्।
विषमस्थाने-सञ्चारिणि-जीवे पु०।

स्थल स्थाने भ्वा० पर० अक० सेट् ज्वला०। स्थलति अस्था-
लीत्। स्थलधातुर्नैवाय गतार्थ इत्यन्ये।

स्थल न० स्त्री० स्थल-अच्। जलशून्ये-अकृत्रिमे-भूभागे।
स्त्रीत्वपक्षे ङीष्। "वनस्थलीर्मर्मरपत्रमोक्षाः" इति
कुमार। उन्नतिमात्रविभ्रप्रदेशमात्रे, उन्नतिभूमावपि न०।

स्थलकन्द पु० स्थलज कन्दः। (वनओल) अयाम्यकन्दे।

स्थलकमल न० स्थलजातं कमलम्। स्थलपद्मे।

स्थलकुमुद पु० स्थले कुमुदमस्यस्य साहश्येन अच्। करवीरे।

स्थलपद्म न० स्थलजातं पद्मं शाक०। स्वनामख्याते पुष्पवृक्षे।
स्थलजं पद्ममिव। मानके पु०।

स्थलपद्मिनी स्त्री० स्थलपद्मानां समूहः तेषां सन्निकृष्टदेशो
वा इनि। स्थलपद्मसमूहे तद्युक्तदेशे च। "ददर्श दूनं
स्थलपद्मिनीं नल' इति नैषधम्।

स्थलमञ्जरी स्त्री० स्थलस्य मञ्जरीव। अपामार्गे।

स्थलशृङ्गाट पु० स्थलजातः शृङ्गाटः शाक०। गोक्षुरे तस्य कण्ट-
काकृतत्वात् तथात्वम्। [कुमार्याम्।

स्थलेरुहा स्त्री० स्थले रोहति रुह-क अलुक् स०। घृत

स्थलेशय पु० स्थले शेते शी-अच् अलुक् स०। वराहादौ
प्रभृतौ पशौ-स्थलशायिनि त्रि०।

स्थविर न० स्था-किरच् स्थवादेश। शैलेय गन्धद्रव्ये। वृद्धमात्रे
ब्रह्मणि पु०। अचले, स्थिरे, वृद्धे च त्रि०। वृद्धावस्थया स्त्री०।

**स्थविष्ठ** त्रि० अतिशयेन स्थूलः इष्ठन् स्थूलोपे गुणः। अतिवृद्धे- देयस्य स्थवीयानपि। अतिवृद्धे। स्त्रियां ङीप्।

**स्थाणु** पु० स्था नु पृ० णत्वम्। शिवे,शाखाशून्यवृक्षे च।अस्त्र- भेदे पु० स्थविरे त्रि०। [वर्द्ध।

**स्थाण्डिल** पु० स्थण्डिले शयिता ऽण्। व्रतार्थं स्थण्डिले शयि

**स्थान** न० स्था-ल्युट्। स्थितौ, सादृश्ये, अवकाशे, सन्निवेशे, वसतौ, मन्यसन्धौ, भाजने, निकटे, व्याकरणोक्ते प्रसङ्गे, (आदिश्यमानस्य यणादेः कारणभूते इगादौ)। नीतिवेदि- नामुपचयापचयहीने साम्यावस्थाने च।

**स्थानचञ्चला** स्त्री० स्थाने स्थितावपि चञ्चला। वर्वरीवृक्षे अल्पवातेन चञ्चलत्वात्तस्यास्तथात्वम्।

**स्थानाध्यक्ष** त्रि० स्थाने अध्यक्षः। स्थानरक्षके।

**स्थानिक** त्रि० स्थानेऽधिकृत ठञ्। स्थानाध्यक्षे।

**स्थानिन्** त्रि० स्थानमस्त्यस्य इनि स्थानत्वेन। स्थानरक्षके। स्थानं प्रसङ्गः अस्त्यर्थे इनि। व्याकरणोक्ते आदिश्यमानयणादेः कारणे इगादौ"स्थानिवदादेशोऽनल्विधाविति"पाणिनिः

**स्थानीय** न० स्थीयतेऽस्मिन् स्था-आधारे अनीयर्। नगरे, स्थानं वासमर्हति स्थानस्येदम् वा छ। वासयोग्ये, देशे स्थानसम्बन्धिनि च त्रि०।

**स्थाने** अव्य० स्था-ने।योग्यत्वे,औचित्ये च"स्थानेभवानेकनरा- धिप. मभिति" रघु.। सत्ये, सादृश्ये, करणार्थे च॥

**स्थापत्य** पु० स्थपतिरेव स्वार्थे ष्यञ्। अन्तःपुररक्षके कञ्चुकि- प्रभृतौ। तस्य भाव ष्यञ्। स्थपतिधर्मे न०।

**स्थापन** न० स्था-णिच्-ल्युट्। आरोपणे, समाधौ, पुंसवनाख्ये गर्भसंस्कारे च युच्। स्थापनाप्यत्र स्त्री० सा च निवे- शने च। [पाठायाम्।

**स्थापनी** स्त्री० स्थाप्यतेऽनया स्था-णिच्-करणे ल्युट्।

**स्थापित** त्रि० स्था-णिच्-क्त। निश्चिते,निवेशिते,न्यस्ते च।

**स्थामन्** न० स्था-मनिन्। सामर्थ्ये, बले च।

**स्थायिन्** त्रि० स्था-णिनि। स्थितिशीले,अलङ्कारोक्ते रसानु- कूले रत्यादिभावे पु०। "विभावेनानुभावेन व्यक्तः सञ्चा- रिणा तथा। रत्यादी रसतामेति स्थायी भाव सचेतसा मिति" साहित्य०। [पु०।

**स्थायुक** त्रि० स्था-उकञ्। स्थितिशीले। एकग्रामाधिकृते

**स्थाल** न० स्थलति तिष्ठत्यस्मादन्नमाधारे घञ्। (थाल) पात्र- पात्रे। पाकपात्रे (हाडि) स्त्री० गौ० ङीप्।

**स्थालीपाक** पु० स्थाल्या पाक। गृह्योक्तेन स्थाल्यां कृते पाकभेदे तद्विधानं गृह्यदभिधाने।

**स्थालीपुलाक** पु० स्थालीस्थाः पुलाकास्तण्डुलाः सन्त्यत्र एक धर्मतोऽवायकत्वेन अच्। मीमांसकोक्ते"स्थालीस्थास्तण्डु- लाश्चते सर्वे विक्लित्तिभागिनः। समकालाग्निसंयोगभागि- त्वात् मतिपन्नवत्" इत्यनुमानकल्पके न्यायभेदे यथा एकस्य पाकदर्शनेन अन्येषां पाकज्ञानम् एवं एकरूपाणां सर्वेषा मेकधर्माक्रान्तत्वमित्येवंरूपोद्भावनम्। [साधने वृक्षभेदे।

**स्थालीवृक्ष** पु० स्थाल्या-वृक्षः। अश्वत्थाकारे स्थालीनिर्माण

**स्थावर** त्रि० स्था-वरच्। अचञ्चले स्थिरे, वृक्षादौ, भूम्यादौ च "स्थावरं जङ्गमञ्चैव यदपि स्वयमर्ज्जितमिति" स्मृति.। पर्वते पु०। धनुर्गुणे न०। [प्रगमे भवतीति वृद्धदभिधाने।

**स्थाविर** न० स्थविरस्य भावः ष्यण्। वृद्धत्वे तच्च सप्ततिवर्षा-

**स्थासक** पु० स्था-स-स्वार्थादौ कन्। अलङ्कारे, चार्चिक्ये जलबुद्बुदे च। [भङ्गि।

**स्थास्नु** त्रि० स्था-स्नु। स्थितिशीले, "स्थास्नुरिवाचिरप्रभेति

**स्थित** त्रि० स्था-क्त। स्थिते, ऊर्द्ध्वतया दण्डायमाने, "स्थिताश्च स्थानमाचरेदिति" रघुः निश्चले प्रतिज्ञायुक्ते स्थितियाशिनि च। [स्थाने च।

**स्थिति** स्त्री० स्था-क्तिन्। मर्यादायां, स्थाप्यपदावस्थाने,

**स्थिर** पु० स्था-किरच्। पर्वते, देवे, वृक्षे, कार्त्तिकेये, शनौ, मोक्षे, वृषे, धवृक्षे, ज्योतिषोक्तेषु वृषसिंहवृश्चिककुम्भ- राशिषु च। कठिने,निश्चले च त्रि०। शाल्मलौ, काकोल्यां, पृथिव्यां, शालपर्ण्याञ्च स्त्री०।

**स्थिरगन्ध** पु० स्थिरोगन्धो यस्य। चम्पकवृक्षे। पाटलायां, केतक्याञ्च स्त्री०। स्थिरगन्धयुक्ते द्रव्यमात्रे त्रि०।

**स्थिरच्छद** पु० स्थिरश्छदोऽस्य। भूर्ज्जपत्रवृक्षे। [दौ च।

**स्थिरच्छाय** पु० स्थिरा छाया यस्य। वृक्षमात्रे छायाप्रधाने वटा-

**स्थिरजिह्व** पु० स्थिरा अचञ्चला जिह्वा यस्य। मत्स्ये। [भोजने

**स्थिरजीविता** स्त्री० स्थिरं जीवित मायुर्य्य यस्याः। शाल्म

**स्थिरतर** त्रि० अतिशयेन स्थिरः तरप्। अत्यन्तस्थिरे। ईश्वरे पु०।

**स्थिरमद** पु० स्थिराणि पक्षाण्यस्य। विनाले।

**स्थिरपुष्प** पु० स्थिरं पुष्पमस्य। चम्पकवृक्षे,वकुलवृक्षे च।

**स्थिरपुष्पिन्** पु० स्थिरं पुष्पमस्त्यस्य इनि। तिलकवृक्षे।

**स्थिरफला** स्त्री० स्थिर फलं यस्याः। कुष्माण्डयाम्।

**स्थिरमति** स्त्री० स्थिरा मतिः। स्थिरचित्ते, स्थिरा मति- र्यस्य। स्थिरबुद्धियुक्ते त्रि० "अनिकेतः स्थिरमति रिति" गीता। [भेदे, चिरस्थायियौवनयुक्ते त्रि०।

**स्थिरयौवन** न० पु० स्थिरं यौवनमस्य। विद्याधरादौ देवयोनि

स्थिररङ्गा स्त्री० स्थिरोरङ्गो रागोयस्याः । नील्याम् ।
स्थिररागा स्त्री० स्थिरोरागोरञ्जन यस्या । दारुहरिद्रायाम्
स्थिरसाधनक पु० स्थिर साधयति ल्यु तत कन् । सिन्दुवारवृक्षे ।
स्थिरसार पु० स्थिर सारोयस्य । (सेगुण) शाकवृक्षे ।
स्थिराङ्घ्रिप पु० कर्म० । हिन्तालवृक्षे ।
स्थिरायुस् पु० स्थिरमायुर्यस्य दीर्घकालस्थायित्वात् । शाल्मलिवृक्षे । चिरजीविनि त्रि० ।
स्थुड वरणे तुदा० कुटा० पर० सक० सेट् । स्थुडति अस्थुडीत् तुस्थोड । अयमोपदेशवान्न च ।
स्थूणा स्त्री० स्था-नक् कदन्तादेश ह० । (खुटी) गृहस्तम्भे "स्थूणावशेष गृहमिति" शाङ्गि० लौहप्रतिमायाञ्च ।
स्थूरिन्पु० स्था-उरन् किच्च स्थूरो हयादिर्भारवाहक स्थूरो ऽस्त्यस्य शाहत्येन इनि । हयादिवत्पृष्ठेन भारवाहके ऽश्वे । स्थूरस्य भाव ष्यञ् स्थौर तदस्यास्ति इनि । स्थौरोत्यप्यत्र । [स्थूलत् त ।
स्थूल वृंहणे अद० चु० उभ० अक० सेट् । स्थूलयति-ते अतुस्थूल त्रि० स्थूल-अच् । पीवरे, (मोटा) कूटे, समूहे च न० पनसे पु० । गजपिप्पल्याम्, एर्वारौ, वृहदेलायाञ्च स्त्री० । स्वार्थे कन् । पीवरे त्रि० । संज्ञायां कन्(उलुखड)तृणभेदे पु०
स्थूलकङ्गु पु० कर्म० । वरकधान्ये (वोरधान) ।
स्थूलकणा स्त्री० कर्म० । स्थूलजीरके ईव० । पीनकणवति त्रि० ।
स्थूलकण्टक पु० स्थूल कण्टकोऽस्य । जालवर्बुरे । संज्ञायां कन् अत इत्त्वम् । शाल्मलीवृक्षे स्त्री० ।
स्थूलकण्टा स्त्री० स्थूल कण्ट कण्टकोऽस्या । वृहत्याम् ।
स्थूलकन्द पु० स्थूल कन्दोऽस्य । रक्तलशुने, सूरणे, हस्तिकन्दे, मानके च । [वृहच्चञ्चौ त्रि० ।
स्थूलचञ्चु पु० स्थूला चञ्चुरिव शिखाऽस्य । महाचञ्चुशाके ।
स्थूलजीरक पु० कर्म० । जीरकभेदे (कालजिरा) ।
स्थूलताल पु० कर्म० । हिन्ताले ।
स्थूलदण्ड पु० स्थूलोदण्डोऽस्य । देवनले । स्थूलनालोऽप्यत्र ।
स्थूलदर्भ पु० स्थूल दर्' दृश्यतेऽनेन दृश-घञ् । मुञ्जे (मुज) ।
स्थूलदला स्त्री० स्थूलानि दलानि यस्याः । घृतकुमार्याम् ।
स्थूलनास पु० स्थूला नासाऽस्य । सूकरे, स्थूलनासिकोप्यत्र । वृहन्नासावति त्रि० । [स्थूलतावद्धातम् ।
स्थूलपट्ट पु० स्थूल पट्ट वस्त्रात् । कार्पासे तन्तूलजपट्टस्य
स्थूलपाद पु० स्थूला पीना पादा यस्य न पादाव । गजे श्लीपदरोगे च । [स्त्री० । यवतिकायां स्त्री० ङीप् ।
स्थूलपुष्प पु० स्थूल पुष्पं यस्य । वकवृक्षे । पर्वतजातापराजितायां
स्थूलफल पु० स्थूल फलमस्य । शाल्मलीवृक्षे । वृहत्फलान्विते त्रि० । शणपुष्प्यां स्त्री० ङीप् । [पृथिव्यादौ भूते ।
स्थूलभूत न० कर्म० । वेदान्तोक्ते मत्येकमेकात्मकतामापन्ने
स्थूलमरिच न० कर्म० । कङ्कोले ।
स्थूललक्ष(क्ष्य) त्रि० स्थूल लक्षयति दानाय स्थूलं लक्ष्यते,स्थूल लक्ष्य वाऽस्य । वहुदातरि । [कायाम् ।
स्थूलवर्त्मकृत् पु० स्थूल वर्त्म करोति कृ-क्विप् । माच्छायष्टि
स्थूलवल्कल पु० स्थूल वल्कलमस्य । रक्तलोध्रे । स्थूलत्वचान्विते त्रि०
स्थूलवृक्षफल पु० स्थूलस्य वृक्षस्येव फलमस्य । स्निग्धपिण्डीतकवृक्षभेदे (मयना) ।
स्थूलवैदेही स्त्री० विदेहे भवा अण् कर्म० । गजपिप्पल्याम् ।
स्थूलशाटक पु० कर्म० । स्थूलवस्त्रे स्थूलशाटिकाद्योप्यत्र स्त्री० ।
स्थूलशालि पु० कर्म० । महाशालौ ।
स्थूलशीर्षिका स्त्री० स्थूल शीर्षं यस्याः कप् अत इत्त्वम् । क्षुद्रपिपीलिकायाम् । [लता) ।
स्थूलषट्पद पु० षट्पद इव स्थूल राज० । वरटायाम् (बोस्थूलस्कन्ध पु० स्थूल स्कन्धोऽस्य । लकुचे ।
स्थूलाग्रा स्त्री० स्थूल अग्रोऽवयवोऽस्याः । गन्धपत्रायाम् ।
स्थूलाम्र पु० कर्म० । आम्रभेदे ।
स्थूलैला स्त्री० कर्म० । वृहदेलायाम् ।
स्थूलोच्चय पु० स्थूलानामुपलानामुच्चयोऽत्र । गण्डशैले । स्थूलस्य गजस्योच्चय । गजमध्यगतौ । वरखडे, गजदन्तच्छिद्रे च ।
स्थेय पु० स्थीयते विवादनिश्चायकतयाऽत्र स्था-यत् । विवादेनिश्चयनिर्णायके, (जुरी) पुरोहिते च । स्थिरे त्रि० ।
स्थेयस् त्रि० अतिशयेन स्थिर इयसु स्थादेश । स्थिरतरे त्रि० स्त्रियां ङीप् । इष्ठन् स्थेष्ठोऽप्यत्र त्रि० । सान्त्वने न० ।
स्थैर्य्य न० स्थिरस्य भाव ष्यञ् । स्थिरतायाम् ।
स्थौणेय(क) पु० स्थूणाया तत्समीपे भव ढक् । ग्रन्थिपर्णनामगन्धद्रव्ये ।
स्थौल्य न० स्थूलस्य भाव ष्यञ् । पीवरत्वे ।
स्नपन पु० स्ना-णिच्-पुक् ल्युट् । जलादिनाऽभिषेककरणे
स्नव पु० स्नु-अप् । स्रवणे, क्षरणे च ।
स्नसा स्त्री० स्नस-अच् । स्नायौ ।
स्नातक पु० स्ना-भावेक्त स्नात वेदाध्ययनानन्तर समावर्त्तनाद्

स्नानं तदस्यास्ति कन् । वेदाध्ययनानन्तरं गार्हस्थ्याय कृतसमावर्त्तनाङ्गस्नाने ।

स्नातकव्रत न० ६त० । स्नातककर्त्तव्ये स्मृत्युक्ते व्रतभेदे, "अलाभे चैव कन्याया. स्नातकव्रतमाचरेदिति" स्मृति ।

स्नान न० स्ना-ल्युट् । शोधने, अवगाहने मज्जने, च तच्च मन्त्रादि कारणभेदादष्टविध विस्तरो वृहदभिधाने ।

स्नानतृण न० स्नानार्थं तृणम् । कुशे ।

स्नानीय त्रि० स्नानाय हितम् छ । स्नानसाधने तैलोद्वर्त्तनादौ । [वायुवाहिनाडीभेदे ।

स्नायु स्त्री० स्नाति-शुध्यति दोषोऽनया स्ना उण् । शरीरस्थे

स्निग्ध त्रि० स्निह-क्त । स्नेहयुक्ते, वयस्ये, मसृणे, चिक्कणे च । रक्तैरण्डे, सरलद्रवे च पु० । भक्तमण्डे न० । मेदायां स्त्री० ।

स्निग्धतण्डुल पु० कर्म० । षष्टिधान्ये ।

स्निग्धता स्त्री० स्निग्धस्य भाव । स्नेहे, प्रियत्वे च । [द्रवे च ।

स्निग्धदारु पु० स्निग्धं दारु काष्ठमस्य । सरलद्रवे, देवदारु

स्निग्धपत्त्रक पु० स्निग्धं पत्त्रमस्य कप् । घृतकरञ्जे, गुल्मकरञ्जे, गर्जराख्ये च । बदर्य्यां, पालक्यां, काश्मर्य्यां च स्त्री० ।

स्निग्धपिण्डीतक पु० कर्म० । मदनवृक्षभेदे, पिण्डीतकभेदे

स्निग्धफला स्त्री० स्निग्धं फलमस्या । नाकुल्याम् ।

स्निट स्नेहे चु० उ० सक० सेट् । स्नेटयति- अशिस्निटत्-त । अर्थोपदेशवाद च । [धाम्येऽस्नायौ स्त्री० ।

स्नु पु० धातु+स्नु आदेशः स्ना-कु वा । पर्वतस्य समभू-

स्नुकूच्छद पु० स्नुह्यति किप् स्नुत्सम् स्नुक्,छदोऽस्य । थोरकस्नुहीवृक्षे ।

स्नुत पु० स्नु-क्त । क्षरिते जलादौ ।

स्नुषा स्त्री० स्नु-सक् । पुत्रवध्वाम्, स्नुहीवृक्षे च ।

स्नुह्(हा) स्त्री० स्नुह-किप् वा टाप् । स्नुहीवृक्षे ।

स्नुहि(ही) स्त्री० स्नुह-इन् वा ङीप् । (मनसासिज) वृक्षे । "स्नुहीविटपसन्निता मिति" पुराणम् ।

स्नेह पु० स्निह-घञ् । प्रेमणि, तैलादिरसभेदे, न्यायोक्ते गुणभेदे च यस्मात् दाक्षात्तङ्गलम् ।

स्नेहन न० स्निह-णिच्-ल्युट् । तैलादिमर्द्दने अभ्यङ्गे ।

स्नेहप्रिय पु० स्नेहः तैलादि प्रियोऽस्य । प्रदीपे ।

स्नेहभू स्त्री० ६त० । सेहाख्ये देहस्थे धातुभेदे, श्लेष्मणि च

स्नेहरङ्ग पु० स्नेहेन रज्यते रञ्ज-कर्मणि घञ् । तिले ।

स्नेहवत् त्रि० स्नेहोऽस्त्यस्य मतुप् मस्य व । स्नेहयुक्ते स्त्रियां ङीप् । सा च मेदायां पु० स्त्री० ।

स्नेहविद्ध न० स्नेहेन विद्धम् । देवदारुणि । [स्नेहकारके न० ।

स्नेहबीज पु० स्नेहाढ्यं बीजमस्य । पियालवृक्षे । ६त० ।

स्नेहाश पु० स्नेहमश्नाति अश-अण् । प्रदीपे ।

स्नेहिन् पु० स्निह-णिनि । वयस्ये मित्रे, स्नेहयुक्ते त्रि० । स्त्रियां ङीप् । [स्निग्धे ।

स्पद ईषत्कम्पे भ्वा० आ० अक० सेट् इदित् । स्पन्दते अ-

स्पन्द पु० स्पदि-घञ् । ईषच्चलने, ईषत्कम्पे, क्रियाभेदे च । नेत्रस्पन्दादौ शुभाशुभविवेचन वृहदभिधाने ।

स्पर्द्ध सङ्घर्षे (पराभिभवेच्छायाम्) भ्वा० आत्म० अक० सेट् । स्पर्द्धते अस्पर्द्धिष्ट । [प्रीतौ च ।

स्पर्द्धा स्त्री० स्पर्द्ध-अ । सङ्घर्षे पराभिभवेच्छायां, साम्ये, क्रमो-

स्पर्श स्पर्शे, खेदे च चु० उ० सक० सेट् । स्पर्शयति ते अपस्पर्शत् त ।

स्पर्श पु० स्पर्श-स्पृश-वा अच् घञ् वा । न्यायोक्ते त्वगिन्द्रियग्राह्ये गुणभेदे, स्पर्शने, रोगे, युद्धे, गुप्तचरे, उपतापके च । वायौ पु० स्पर्शके त्रि० । स्पृश-णिच्-अच् । दाने स्पर्शने । वायुना जिह्वादयोऽत्र,स्पृष्टा कादिषु मावसानेषु वर्ण्यवर्णेषु पु०

स्पर्शन न० स्पर्श-स्पृश-वा ल्युट् । स्पर्शे, स्पर्शे च । णिच् ल्युट् । स्पर्शने, दाने च । स्पृश-कर्त्तरि ल्यु । वायौ पु० ।

स्पर्शलज्जा स्त्री० स्पर्शमात्रेण लज्जते लज्ज-अच् । लज्जालुवृक्षे

स्पर्शमुद्रा स्त्री० स्पर्शे मुद्रा । मतमूल्याम् । [दापक ।

स्प्रष्टृ त्रि० स्पृश-तृच् । उपतापयितरि । रोगे पु० । स्पश । स्प-

स्पश ग्रन्थे बाधने च भ्वा० उभ० सक० सेट् । स्पशति-ते अस्पाशीत्-अस्पशीत् । अस्पशिष्ट । [स्पष्टमीति" माघ ।

स्पश पु० स्पश-अच् । चरमाले, युद्धे, गूढचरे, च । "राजनीति-

स्पष्ट त्रि० स्पश-क्त नि० इडभाव । व्यक्ते, स्फुटे च ।

स्पृ प्रीतौ अक० प्रीणने रक्षणे पालने च सक० स्वा० पर० अनिट् । स्पृणोति अस्पार्षीत् ।

स्पृक्का स्त्री० स्पृश-क्वन् पृ० शस्य क । पृक्कायाम् ।

स्पृश स्पर्शे तु० पर० सक० अनिट् । स्पृशति अस्पार्क्षीत् अस्प्राक्षीत् अस्पृक्षत् । [टाप् ।

स्पृशा स्त्री० स्पृश-क । सर्पे, तिनीशवृक्षे । कण्टकार्य्यां स्त्री० ।

स्पृष्ट त्रि० स्पृश-क्त । कृतस्पर्शे । भावे क्त । स्पर्शे न० ।

स्पृष्टास्पृष्ट न० स्पृष्टेन सह स्पृष्टम् । परस्परस्पर्शने ।

स्पृष्टास्पृष्टि न० स्पृश-भावे-क्त नञ्+स्पृश-क्तिन्, स्पृष्टश्च अस्पृष्टिश्च द्वयो समाहारः । स्पर्शास्पर्शयो । "भवते यामदत्ते च स्पृष्टास्पृष्टि भ इमन्नीति" स्मृति । [स्पृष्टन्त

स्पृह इच्छायां अद० चुरा० उभ० सक० सेट् । स्पृहयति-ते अ-

स्पृहणीय त्रि० स्पृह-अनीयर्। वाञ्छनीये, श्लाघ्ये च "अहो बतासि स्पृहणीयवीर्य्य" इति कुमार।
स्पृहयालु त्रि० स्पृह-आलुच्। स्पृहाशीले। [कुमार.।
स्पृहा स्त्री० स्पृह-अङ्। इच्छायाम् "मिथुने स्पृहावतीति"
स्पृह्य पु० स्पृह-यत्। मातुलुङ्गवृक्षे। वाञ्छनीये त्रि०।
स्फट विशीर्णतायाम् अक० भ्वा० पर० सेट्। स्फटति अस्फटीत्-अस्फाटीत्। इदित्यमप्ययमत्रार्थे स्फण्टति अस्फण्टीत्।
स्फट पु० स्त्री० स्फट-अच्। सर्पफणायाम्। [भेदे।
स्फटि(टी) स्त्री० स्फट-इन् वा ङीप्। (फटक।रि) वणिग्द्रव्य
स्फटि(टी)क पु० स्फटिरि(टी)व इवार्थे कन्। स्वनामख्याते मणौ स्वार्थेऽण्। स्फाटिकमप्यत्र न०। [स्फाटिकमयपर्व्वते च।
स्फटिकाचल पु० स्फटिक इव शुभ्रः अचलः। कैलासपर्व्वते,
स्फटिकाद्रिभिद्(द) पु० स्फटिकाद्रिं स्फाटिकपर्व्वतं भिनत्ति सादृश्यात् भिद-क्विप् क वा। कर्पूरे।
स्फटिकाभ्र पु० स्फाटिकवर्ण अभ्र इव। कर्पूरे।
स्फटिकारि पु० ६त०। (फटकिरि) वणिग्द्रव्यभेदे तस्य स्फटिकतुल्यदीप्तिमत्त्वात्तथात्वम्। [यति-ते अपस्फण्डत्-त।
स्फण्ड परिहासे चु० उभ० अक० सेट् इदित्। स्फण्ड-
स्फर चये स्फूर्त्तौ च तुदा० प० अक० सेट्। स्फरति अस्फारीत्।
स्फरण न० स्फर-ल्युट्। स्फुरणे। [लीत्
स्फल चये स्फूर्त्तौ च तुदा० पर० अक० सेट्। स्फलति अस्फा-
स्फाटिकोपल पु० स्फटिकमेव अण् कर्म्म०। स्फटिके।
स्फाति स्त्री० स्फाय-क्तिन्। वृद्धौ।
स्फाय वृद्धौ भ्वा० आ० अक० सेट्। स्फायते अस्फायि-अस्फायिष्ट। निष्ठायामनिट् स्फीतः। [त्रि०।
स्फार पु० स्फाय-रक्। स्वर्णबुद्बुदे। विपुले, विकटे, प्रचुरे च
स्फारण न० स्फुर-णिच्-स्फारादेशः ल्युट्। विकाशने।
स्फाल पु० स्फल-घञ्। स्फूर्त्तौ। [वट् पले।
स्फिग्घातन पु० स्फिचं घातयति हन-स्वार्थे णिच्-ल्यु।
स्फिच् स्त्री० स्फाय-डिच्। कटिप्रोथे, तत्स्थे वातजे रोगभेदे च
स्फिट हतौ हिंसे अनादरे च चु० उभ० सक० सेट्। स्फेटयति ते अपिस्फिटत् त।
स्फिर त्रि० स्फाय-किरच्। प्रचुरे, वृद्धे च।
स्फीत त्रि० स्फाय-क्त स्फीभाव। वृद्धे-प्रवृद्धे च।
स्फुट भेदे चु० उभ० अक० सेट्। स्फोटयति ते अपुस्फुटत् त।
स्फुट विकासे भ्वा० प० अक० सेट्। स्फोटति अस्फुटत् अस्फोटीत्। [पुस्फोट।
स्फुट विदलने भ्वा० आत्म० अक० सेट्। स्फोटते अस्फोटिष्ट
स्फुट हावे चुरा० उभ० अक० सेट्। इदित्। स्फुण्टयति ते अपुस्फुण्टत् त।
स्फुट हिंसे चु० उभ० सक० सेट् प्रायेणाङ् पूर्व्वः। आस्फोटयति ते आपुस्फुटत् त। [अपुस्फुटत् त।
स्फुट विकासे अद० चु० उभ० सक० सेट्। स्फुटयति ते
स्फुट त्रि० स्फुट-क। विकसिते, व्यक्ते, भिन्ने, शुक्ले च। ज्योतिषोक्तेषु मेषादिराशिषु अंशविशेषस्थितेषु सूर्य्यादिग्रहेषु पु०। तेषां तत्तदंशकलादिषु गतौ स्त्री०। तत् प्रेक्षाया द्योतने न०। सर्पफणायां स्त्री०।
स्फुटन न० स्फुट-ल्युट्। विकसने, विदलीभावे च,
स्फुटबन्धनी स्त्री० स्फुटं बन्धनं यस्याः गौ० ङीप्। कपोतपद्याम्
स्फुटित त्रि० स्फुट-क्त। विकसिते, भिन्ने "दग्धे वा स्फुटितेऽप वेति" पुराणम् व्यक्तीकृते, परिहासिते च।
स्फुटि(टी) स्त्री० स्फुट-इन् वा ङीप्। पादस्फोटरोगे (फोड़ा) कर्कटीफले च। (फुटि)। [इट् त।
स्फुट्ट अनादरे चु० उ० सक० सेट्। स्फुट्टयति ते अपुस्फु-
स्फुड़ वरणे तु० कु० पर० सक० सेट्। स्फुडति अस्फुडीत् पुस्फोड़। [अस्फुण्डिष्ट।
स्फुण्ड विकासे भ्वा० आत्म० अक० सेट् इदित्। स्फुण्डते
स्फुण्ड परिहासे चु० उ० सक० सेट् इदित्। स्फुण्डयति ते अपुस्फुण्डत् त।
स्फुर स्फूर्त्तौ तु० कुटा० प० अक० सेट्। स्फुरति अस्फुरीत् पुस्फोर। "बाहु पुस्फोर वाञ्छितिरिति" भट्टिः।
स्फुरण न० स्फुर-ल्युट्। ईषत्स्पन्दने। युच्। तत्रैव स्त्री०।
स्फुर्च्छ विस्मरणे भ्वा० प० सक० सेट्। स्फूर्च्छति अस्फूर्च्छीत्
स्फुर्ज वज्रशब्दे भ्वा० प० अक० सेट्। स्फूर्जति अस्फूर्जीत्।
स्फुल स्फूर्त्तौ-चये च अक० सञ्चये सक० तुदा० कुटा०प० सेट्, स्फुलति अस्फुलीत्। पुस्फोल।
स्फुल न० स्फुट-क। वस्त्रागारे (ताँबु)।
स्फुलन न० स्फुल-ल्युट्। स्फुरणे।
स्फुलिङ्ग पु० स्त्री० स्फुल-इङ्गच्, स्फुरत्‌तव्यक्त-शब्दो लिङ्गति गच्छति पृषो० लिगि-घञ् पृ० वा। अग्निकणे।
स्फुलिङ्गिनी स्त्री० स्फुलिङ्ग+अस्त्यर्थे इनि। अग्निज्वालायाम्। स्फुलिङ्गयुक्ते त्रि०।
स्फूर्ज्जथु पु० स्फुर्ज-अथु। वज्रपातशब्दे। [प्रतिभायाञ्च।
स्फूर्त्ति स्त्री० स्फुर्च्छ-स्फुर-वा क्तिन्। स्फुरणे विकसने
स्फर्त्तिमत पु० स्फूर्त्तिरस्त्यस्य मतुप्। भागवतोक्ते मेरुभेदे

**स्यून** पु० सिव-नक्। सूर्य्ये, किरणे, सूच्यादिस्यूतवस्त्रादि-स्यूननिर्म्मिते पदार्थे (थुकडी) च।

**स्रंसन** न० स्रन्स-णिच् ल्युट्। जठरगतस्याधोनयने पातने। युच्। स्रंसनाप्यत्र स्त्री०।

**स्रंसिन्** त्रि० स्रन्स-णिनि। अध:पतनशीले। पीलुवृक्षे पु०।

**स्रक** गतौ भ्वा० आत्म० सक० सेट् इदित्। स्रङ्कते अस्रङ्किष्ट।

**स्रग्वत्** त्रि० स्रक् माल्यमस्त्यस्य मतुप् मस्य व कुत्वम्। माल्यवति। विनि। स्रग्वीत्यप्यत्र। उभयत्र स्त्रियां ङीप्।

**स्रज्** स्त्री० सृज्यते सृज-क्विन् नि०। माल्ये।

**स्रंस** पतने भ्वा० आत्म० लुङि उ० अक० सेट् ऋदित्। स्रंसते अस्रसत् अस्रंसिष्ट। ["नास्रसत् करिणां ग्रैवम्" इति रघु।

**स्रन्स** प्रमादे भ्वा० आ० अक० सेट् ऋदित्। स्रंसते अस्रंसिष्ट।

**स्रम्भ** अनवधाने भ्वा० आ० अक० सेट् ऋदित्। स्रम्भते अस्रम्भिष्ट। [स्रम्भते अस्रभत् अस्रम्भिष्ट।

**स्रम्भ** विश्वासे भ्वा० आत्म० लुङि उ० सक० सेट् ऋदित्। स-

**स्र(स्रा)व** पु० स्रु-अप् घञ् वा। क्षरणे। कर्त्तरि अच्। निर्झरे

**स्रवण** न० स्रु-ल्युट्। मूत्रणे, घर्म्मे च। भावे ल्युट्। क्षरणे

**स्रवन्ती** स्त्री० स्रु-झिच् ङीप्। नद्याम् ओषधिभेदे, गुल्मस्थाने च। शतृ। स्रवविशिष्टे त्रि०। स्त्रियां ङीप्।

**स्रवा** स्त्री० स्रु-अच्। मूर्वायाम्।

**स्रष्टृ** पु० सृज-तृच्। जगत्कर्त्तरि, चतुर्मुखे, शिवे च। सृष्टिकर्त्तरि त्रि० स्त्रियां ङीप्।

**स्रस्त** त्रि० स्रन्स-क्त। च्युते पतिते।

**स्रस्तर** पु० स्रन्स-तरन् किच्च। शयने।

**स्राक्** अव्य० स्रु-डाक्। त्वरिते शीघ्रार्थे। [त्रि०

**स्रावक** न० स्रावयति स्रु-णिच्-ण्वुल्। मरिचे। निस्रावके-

**स्रिम्भ** हिंसे भ्वा० प० सक० सेट् ऋदित्। स्रिम्भति अस्रिम्भीत्

**स्रिभ** हिंसे भ्वा० प० सक० सेट् इदित्। स्रेभति अस्रेभीत्

**स्रिव** शोषे अक० दिवा० प० गतौ सक० सेट् उदित्। स्रीव्यति अस्रेवीत्। [स्रुवत्।

**स्रु** गतौ सक० क्षरणे अक० भ्वा० प० अनिट्। स्रवति अस्रौषीत्।

**स्रुग्दारु** पु० स्रुचे यज्ञपात्राय दारु यस्य। विकङ्कतवृक्षे।

**स्रुघ्न** पु० देशभेदे। सोऽस्त्यभिजनोऽस्य अण्। स्रौघ्नी स्त्री०। सर्जिकाक्षारे स्त्री०। [वाञ्छभार्य्ये यज्ञपात्रभेदे।

**स्रुच्** स्त्री० स्रु-क्विप् चिट् च। यज्ञियकाष्ठनिर्म्मिते विकङ्कतकाष्ठजे

**स्रुत** त्रि० स्रु-क्त। क्षरिते रक्तादौ, गते च। हिङ्गुपत्र्यां स्त्री०।

**स्रुव** पु० स्त्री० स्रु-क। खदिरकाष्ठादिना कृतहस्तमिते यज्ञपात्रभेदे। स्रुवकाख्याम् मूर्वायाम् स्त्री०।

**स्रू** स्त्री० स्रु-क्विप् नि०। यज्ञपात्रभेदे। निर्झरे च।

**स्रै** विकृतौ-भ्वा० पर० अक० अनिट्। स्रायति अस्रासीत्

**स्रोत** न० स्रु-तन्। स्रोतसि वेगेन स्रुतोजलनि:सरणे।

**स्रोतस्** न० स्रु-तसि। वेगेन स्रुतोजलनि:सरणे रेतसि च।

**स्रोतस्वत्** त्रि० स्रोतोऽस्त्यस्य मतुप् मस्य व। स्रोतोयुक्ते। नद्यां स्त्री० ङीप्। [तोयुक्ते त्रि०।

**स्रोतस्विनी** स्रोतस्+अस्त्यर्थे विनि ङीप्। नद्याम्। स्रो-

**स्रोतोञ्जन** न० स्रोतसि यमुनास्रोतोजलसन्निकृष्टसौवीरदेशे भवम् अञ्जनम्। सौवीरदेशजेऽञ्जने।

**स्रोतोवहा** स्त्री० स्रोतसा वहति हरति वह-अच्। नद्याम्।

**स्व** न० स्वन-ड। धने, आत्मनि ज्ञातौ च पु०। आत्मीये त्रि०। आत्मनि आत्मीये, चार्थेऽस्य सर्व्वनामता।

**स्वकम्पन** पु० स्वेनैव पराप्रयुज्यमान एव कम्पते कपि-युच्। वायौ। [स्वदेति" गीता।

**स्वकर्म्मन्** न० स्वस्य कर्म्म। स्ववर्णोचिते कर्म्मे "स्वकर्म्मनिरत.

**स्वकीय** त्रि० स्वस्येदम् छ कुक् च। आत्मीये। अत्र नित्यमेव कुक्, अकुक्युक्तप्रयोगस्तु अपाणिनीय.।

**स्वग** घर्षणे भ्वा० प० सक० सेट् इदित्। स्वङ्गति अस्वङ्गीत्।

**स्वगत** त्रि० स्वस्मिन् मनसि आत्मनि वा गतम् गम-क्त। मनोगते, आत्मगते च। नाटकाभिनये प्रतिपाद्यपुरुषं वर्ज्जयित्वा रङ्गभूमिस्थसामाजिकजनश्रवणयोग्ये वाक्येन० लक्षणे छद्मदभिधाने।

**स्वगुप्ता** स्त्री० स्वेनैव गुप्ता। शूकशिम्ब्याम्, लज्जालुलतायाञ्च

**स्वच्छ** त्रि० सुष्ठु अच्छ. प्रा०। अतिनिर्म्मले कालुष्यरहिते। छत्रायां, स्फटिके च पु०। श्वेतदूर्व्वायाम् स्त्री०।

**स्वच्छन्द** त्रि० स्वस्य छन्दोऽभिप्राय. स्वस्मै तत् यस्य। स्वाधीने

**स्वच्छपत्र** न० स्वच्छं पत्रं यस्य। अभ्रके।

**स्वच्छमणि** पु० कर्म०। स्फटिके।

**स्वज** न० स्वस्मात् देहात् आत्मनो वा जायते। रुधिरे। पुत्रे पु० कन्यायां स्त्री० आत्मजाते त्रि०। [आत्मसम्बन्धिलोके।

**स्वजन** पु० स्वस्येव जनो जननमेककुले यस्य। ज्ञातौ। द्वन्द्व०।

**स्वठ** गतौ संस्कारेऽलङ्कारे च चु० उभ० सक० सेट्। स्वठयति-ते असिस्वठत्-त।

**स्वतन्त्र** त्रि० स्वस्य तन्त्रं वशीकारो यस्य। स्वाधीने अपराधीने

**स्वतस्** अव्य० स्व+तसिल्। आत्मन इत्यर्थे।

**स्वता** स्त्री० स्वस्य स्वकीयस्य भाव तल्। स्वकीयत्वे। "काय स्वतां गच्छतीति" शकुन्तला।

**स्वत्व** न० स्वस्य भाव त्व। द्रव्यादिषु यथेष्टविनियोगादिक्रि-

याद्य नियोजके धर्मभेदे,स्वामित्वे च तत्र द्रव्यगत मात्मगतञ्च
**स्वदन** न० स्वद-ल्युट्। आस्वादे, लेहने च। सुष्ठु अदनम्। सुभक्षणे। [आचारादिधर्मे।
**स्वधर्म्म** स्वस्य वेदादिविहितोधर्म्मः। स्वातन्त्र्ये वेदाद्युक्ते
**स्वधा** अव्य० स्वद-आ पृ०दस्य धः। पितृदेवोद्देशेन हवि-स्त्यागे। स्वेन धयति धे-क आप्। मातृकाभेदे स्त्री० "नमःस्वधायै स्वाहायै" इति पितृगाथा।
**स्वधाप्रिय** पु० स्वधायिना प्रियः शाक०। कृष्णतिले, स्वधोप लक्षितश्राद्धादिप्रिये पित्रादौ च। [गणे, देवे च।
**स्वधाभुज्** स्वधेत्यनेन त्यक्तद्रव्य भुङ्क्ते भुज-क्विप्। पितृ-
**स्वधि(ती)** स्त्री० स्वेन धीयते धा-क्तिन् वा ङीप्। कुठारे वरस्वधे। पु०। स्वधितिरघत।
**स्वन** शब्दे भ्वा०पर० अक० सेट्-फणा०। स्वनति। अस्वनीत्-अस्वानीत्। अयं भूषणे वा घटा०। [नत्-त
**स्वन** ध्वाने अद० चु० उभ० अक० सेट्। स्वनयति-ते अस्वस्व-
**स्वन** पु० स्वन-अप्। शब्दे। [मेघगर्जिते च न०
**स्वनित** त्रि० स्वन-कर्त्तरि-क्त। शब्दिते। भावे क्त। शब्दे,
**स्वपन** न० स्वप-ल्युट्। शयने,निद्रायाञ्च।
**स्वपिण्डा** स्त्री० स्वेनैव पिण्डः पिण्डाकारोऽस्याः अच्। पिण्डखर्ज्जूर्याम्। [भेदे च।
**स्वप्न** पु० स्वप-नन्। निद्रायां, शयने, सुप्तस्य मानसिकज्ञान-
**स्वप्नकृत्** न० स्वप्नं निद्रां करोति कृ-क्विप्। (सुसुनि) शाके।
**स्वप्नज्** त्रि० स्वप-नजिङ्। शयनशीले।
**स्वभाव** पु० स्वस्य भावः। निसर्गे, नैसर्गिके-स्वकीये-धर्मे च।
**स्वभावोक्ति** स्त्री० स्वभावस्योक्तिरत्र। अलङ्कारोक्ते अर्थालङ्कार भेदे हेम०। स्वभावस्य कथने। [ईश्वरे, कामे च।
**स्वभू** पु० स्वेनैव भवति भू-क्विप्। ब्रह्मणि, विष्णौ, शिवे,
**स्वयम्वर** पु० स्वयमात्मना वरो वरणम्। "अन्ययात्मनैव स्वयते-वैरयै,, सदपि स्वयंवर" इति नैषधम्। स्वयं वृणुते पतिम् वृ-अच्। आत्मनैव पतिवरणकर्त्र्यां कन्यकायां स्त्री०।
**स्वयङ्कृत** पु० स्वयमात्मना कृतः। कृत्रिमे पुत्रे, आत्मकृते त्रि०। "पूर्वजुष्टः स्वयङ्कृत" इति स्मृतिः।
**स्वयङ्गुप्ता** स्त्री० स्वयमात्मनैव गुप्ता। शूकशिम्ब्याम्।
**स्वयन्दत्त** पु० स्वयमात्मनैव मत पितृभावश्चो दत्तः। दत्तात्मके पुत्रभेदे "दत्तात्मा तु स्वयन्दत्त" इति स्मृतिः।
**स्वयम्** अव्य० सु+अय-अम्। आत्मनेत्यर्थे।
**स्वयम्भु** पु० स्वयम्+भू-डु। ब्रह्मणि।
**स्वयम्भुवा** पु० स्वयम्भवति भू-क। धूम्रपत्रायाम्।
**स्वयम्भू** पु० स्वयं भवति भू-क्विप्। चतुर्मुखे ब्रह्मणि,कृष्णे च।
**स्वर** आक्षेपे अद० चुरा० उभ० सक० सेट्। स्वरयति-ते अससरत्-त।
**स्वर्** अव्य० स्वृ-विच्। स्वर्गे,"यन्न दुःखेन संभिन्नं न च ग्रस्त-मनन्तरम् अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पद" मित्युक्ते तु स्वामभिन्ने सुखसन्ताने, परलोके, देवावासे, शोभने च।
**स्वर** पु० स्वर-अच्, स्वृ-अप् वा। उदात्तानुदात्तस्वरितरूपे व-र्णोच्चारणप्रयत्नभेदे,तालुस्वरवत्ता च अकारादिषु व्यञ्जन-भिन्नवर्णेषु शिक्षायामुक्ता। तन्त्रोक्ते श्वासादिवायोर्व्यापार-भेदे, काकादिकृते वर्णाद्युच्चारणध्वनिविशेषे, निषादादिषु गानजध्वनिषु च। विस्तरो शब्ददभिधाने।
**स्वरपत्तन** न० स्वराणां निषादादीनां गानध्वनिविशेषाणां पत्तनमाश्रय। सामवेदे।
**स्वरभङ्ग** पु० स्वरस्य कण्ठध्वनिभेदस्य भङ्गो यस्मात्। रोगभेदे।
**स्वरमण्डलिका** स्वराणां मण्डलमस्त्यस्य ठन्। वीणायाम् हेम०। स्वरसमूहे। [ध-ण्वुल्। वीणायां, वंशाञ्च।
**स्वरलासिका** स्त्री० स्वरैः निषादादिभिः लसति नृत्यतीव ल-
**स्वरस** पु० स्वेन स्वभावेन रसः आस्वादः। शिलापिष्टकस्वभेदे, क्वाथभेदे च। स्वस्य रसः रागः। स्वाभिप्राये'स्वतात्पर्ये, वा स्वादौ-रचनाभङ्ग्यां च।
**स्वराज्** पु० स्वेनैव राजते राज-क्विप्। ईश्वरे "अर्थेष्वभिज्ञः स्वराडिति,, भागवतम्। वैदिकच्छन्दोभेदे च। [मेत्र।
**स्वरापगा** स्त्री० स्वः स्वर्गस्यापगा। गङ्गायाम् स्वर्गापगादयो-
**स्वरित** पु० स्वरोजातोऽस्य इतच्। उदात्तानुदात्तसमाहार-रूपे स्वरभेदे स्वर-क्त। स्वरयुक्ते त्रि०। [वणिकभेदे च।
**स्वरु** पु० स्वृ-उ। वज्रे, यूपखण्डे, बाणे, यज्ञे, सूर्यकिरणे,
**स्वरुचि** त्रि० स्वस्यैव रुचि, प्रवर्त्तिका स्वतन्त्रे यस्य। स्वतन्त्रे, हेम०। स्वस्याभिलाषे स्त्री०।
**स्वरूप** न० स्वस्य रूपम्। स्वभावे। स्वमेव रूपम्। आत्मके पदार्थे स्वं यथास्वं रूपयति रूप-अण्। यथास्वरूपाभिज्ञे-पण्डिते पु०। स्वेन स्वभावेनैवरूपमस्य। मनोज्ञे, त्रि०।
**स्वरूपसम्बन्ध** पु० स्वरूपं सम्बन्धः, स्वरूपयोर्वा सम्बन्धः। न्या-योक्ते,स्वात्मके सम्बन्धे, षट्पदार्थातिरिक्ते पदार्थभेदे, यथा प्रतियोगित्वम् विषयत्वमित्यादि।
**स्वरोदय** स्वरस्योदयोऽत्र। स्वरस्य श्वासविशेषस्य शुभाशुभ ज्ञापनसाधने ग्रन्थपाठभेदे।
**स्वर्ग** पु० स्वरिति गीयते गै-क सु+अर्ज-घञ् वा। दुःखासम्भिन्ने सुखस्थाने, देवानामावासस्थाने च।

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।
स्वर्गवधू स्त्री० ६त०। अप्सरसु।
स्वर्गाचल पु० स्वर्गलोकस्योऽचलः। सुमेरुपर्वते। [लि०।
स्वर्गिन् पु० स्वर्गोऽस्यास्य भोग्यत्वेन इनि। देवे। स्वर्गवासिनि
स्वर्गौकस् पु० स्वर्गओको यस्य। देवे।
स्वर्जिक पु० सु+अर्ज्ज–घञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे।
कर्म०। स्वर्जिकाक्षारादयोऽप्यत्र।
स्वर्ण न० सु+अर्णं वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे,
गौरवर्णशाके च। [सुवर्णस्य तौल्ये पु०।
स्वर्णकणा न० स्वर्णमिव पीतं कणोऽस्य। गुग्गुलौ ६त०।
स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुडे।
स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्।
(सेकरा)जातिभेदे।
स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।
स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्यास्य अच्
गौ०ङीष्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।
स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ
स्वर्णग्रीवा स्त्री० नदीभेदेन।
स्वर्णचूड पु० स्वर्णमिव पीता चूडा यस्य। चासपक्षिणि।
स्वर्णज न०स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे लि०।
स्वर्णजीवन्ती स्त्री० स्वर्णमिव पीता जीवन्ती। पीतपुष्पजीवन्त्याम्
स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तदप्यवर्णनात् दो क
गौ० ङीप्। वृश्चिकाल्याम्। ६त०गङ्गायाम्। [विकङ्कते च।
स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। वह्नौ,चि-
स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रुः। आरग्वधे।
स्वर्णपक्ष पु० स्वर्णमिव पीतं पक्षोऽस्य। गरुडे।
स्वर्णपाटक पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे।
स्वर्णपुष्प पु० स्वर्णमिव पीतं पुष्पमस्य। चम्पके, आरग्वधे,
पु० भी० स्त्रीत्वे ङीप्। सा च स्वर्णकेतक्याम्। सातलायाम्
कलिकारी स्त्री० टाप्। [कदल्याम्।
स्वर्णफला स्त्री० स्वर्णमिव पीतं फलमस्याः। (चाँपाकला) स्वर्ण
स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। पीतभृङ्गराजे
स्वर्णमयकलसे च। [उपधातुभेदे।
स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते
स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।
स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।
स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोऽस्याः। हरिद्रायाम्।
स्वर्णवल्कल पु० स्वर्णमिव पीतं वल्कलमस्य। शोणाकवृक्षे।

स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका।
पीतशेफालिकायाम्। [वर्णदेशे लि०।
स्वर्णाङ्ग पु०,स्वर्णमिवाङ्ग पत्रपुष्पादि यस्य। आरग्वधे। पीत-
स्वर्णारि पु० ६ त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।
स्वर्त्त गतौ सक० दु खेनजीवने अक० चु० उ० सेट्। स्वर्त्तयति ते
असस्वर्त्तत् त। [असहिष्ट।
स्वर्द मीतौ अक० प्रीणने वेदने च सक० भ्वा० आत्म०सेट्। स्वर्दते
स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यास्य अच्। गोमेदमणौ
स्वर्भानु पु० स्व स्वर्गे भानुर्दीप्तिरस्य। राहौ।
स्वर्लोक पु० स्वरेव लोक भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।
स्वर्वापी स्त्री० स्वः स्वर्गस्य वापीव। गङ्गायाम्।
स्वर्वेश्या स्त्री० स्व स्वर्गस्य वेश्या। मेनकाद्यप्सरसु।
स्वल्प त्रि० सुष्ठु अल्पम् प्रा०। अत्यल्पे क्षुद्रे।
स्वल्पकेशरिन्पु०स्वल्प केशरोऽस्त्यस्य इनि। कोविदारवृक्षे।
स्वल्पपत्रक पु० स्वल्प पत्रमस्य कप्। गौरशाके
स्ववासिनी स्त्री० स्वस्मिन् पित्रालये वसति वस–णिनि। चिर
पितृगृहवासिन्याम् ऊढायामनूढाया वा स्त्रियाम्।
स्वसृ स्त्री० सु+अस ऋन्। भगिन्याम्।
स्वस्क गतौ चु० उ० सक० सेट्। स्वस्कति ते असस्वस्कत्।
स्वस्ति अव्य० सु–अस–क्तिच्, असीति विभक्तिप्रतिरूपकम् अव्य
य सादि० वा। क्षेमे, आशिषि,पुण्यादौ, स्वीकारस्तुने च।
स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिक मा-
श्रुप यत् स्यादङ्गिन्यानुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ
तत्पर्यन्तगतोऽपरः"इत्युक्तलक्षणे गृहभेदे, सितावरशाके,
आसनबन्धभेदे, तण्डुलचूर्णनिर्मिते–त्रिकोणाकारे–द्रव्य-
भेदे च "इत स्वस्तिकमिन्दूर" सिद्धधिवासनद्रव्यज्ञापक-
वाक्यम्" चतुष्पथे पु०। [पु०। स्वस्तिवादिनि त्रि०।
स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्रादौ। विप्रे
स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मार-
म्भे विप्रोपयामालये माङ्गल्यद्वारा कर्त्तव्यकर्मणा शुभता
वाचने।
स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हित, तत्र आगतम्,तत्र-
भव वा ठन्। स्वस्तिवाचनसाधने,तद्भिन्नद्रव्ये,तत्रबन्धिनि च
स्वस्त्ययन न० स्वस्ति शुभस्य अयन लाभोऽयमात्। शुभार्थे
क्रियमाणे वेदादिविहिते यज्ञयागादौ।
स्वस्थ त्रि० स्व परब्रह्मणि तिष्ठति स्थेन स्वभावेन स्थेन, वा
तिष्ठति स्था–क विसर्गलोप। स्वभावस्थे, स्वर्गस्थित, विना
आत्म स्वेनात्मस्थिते च। "स्वस्था भवन्ति मयि जीवति

स्वर्गनाथ पु० ६त०। इन्द्रे। स्वर्गपत्यादयोऽप्यत्र।

स्वर्गवधू स्त्री० ६त०। अप्सरसु।

स्वर्गाचल पु० स्वर्गलोकस्याऽचल। सुमेरुपर्वते। [लि०।

स्वर्गिन् पु० स्वर्गोऽस्यास्य भोग्यत्वेन इनि। देवे। स्वर्गवासिनि

स्वर्गौकस् पु० स्वर्गोओको यस्य। देवे।

स्वर्जिक पु० सु+अर्ज्ज–घञ् अस्त्यर्थे ठन्। सर्ज्जिकाक्षारे। कर्म०। स्वर्जिकाक्षारादयोऽप्यत्र।

स्वर्ण न० सु+अर्ण्‌ अर्णो वर्णोऽस्य। काञ्चने, धुस्तूरे, नागकेशरे, गौरवर्णशाके च। [सुवर्णस्य लेखे पु०।

स्वर्णकण न० स्वर्णमिव पीत कणोऽस्य। कणगुग्गुलौ ६त०।

स्वर्णकाय पु० स्वर्णमिव पीतः कायोऽस्य। गरुड़े।

स्वर्णकार पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ–अण्। (सेकरा) जातिभेदे।

स्वर्णकेतकी स्त्री० स्वर्णमिव पीता केतकी। पीतकेतक्याम्।

स्वर्णक्षीरी स्त्री० स्वर्णमिव पीतं क्षीरं निर्यासोऽस्त्यस्य अच् गौ० ङीप्। ओषधिभेदे सा च मालवदेशे जायते। [भेदे।

स्वर्णगैरिक न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थ

स्वर्णग्रीवा स्त्री० नदीभेदेन।

स्वर्णचूड़ पु० स्वर्णमिव पीता चूड़ा यस्य। चाषपक्षिणि।

स्वर्णज न० स्वर्णात् जायते जन–ड। वङ्गे। स्वर्णजातमात्रे लि०।

स्वर्णजीवन्ती स्त्री० स्वर्णमिव पीता जीवन्ती। पीतपुष्पजीवन्त्याम्

स्वर्णदी स्त्री० स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क गौ० ङीप्। वृश्चिकाल्याम्। ६त०। गङ्गायाम्। [विकङ्कते च।

स्वर्णदीधिति पु० स्वर्णमिव भास्वरा दीधितिरस्य। वह्नौ, चि-

स्वर्णद्रु पु० स्वर्णमिव पुष्पादौ पीतो द्रुः। आरग्वधे।

स्वर्णपक्ष पु० स्वर्णमिव पीत. पक्षोऽस्य। गरुड़े।

स्वर्णपाठक पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे।

स्वर्णपुष्प पु० स्वर्णमिव पीत पुष्पमस्य। चम्पके, आरग्वधे, पु० स्त्री० स्त्रीत्वे ङीप्। सा च स्वर्णकेतक्याम्। सातलायाम् कलिकारी स्त्री० टाप्। [कदल्याम्।

स्वर्णफला स्त्री० स्वर्णमिव पीतं फलमस्याः। (चापाकला) स्वर्ण

स्वर्णभृङ्गार पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। पीतभृङ्गराजे स्वर्णमयकलसे च। [उपधातुभेदे।

स्वर्णमाक्षिक न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते

स्वर्णयूथी स्त्री० स्वर्णमिव पीता यूथी। पीतयूथिकायाम्।

स्वर्णलता स्त्री० स्वर्णमिव पीता लता। ज्योतिष्मत्याम्।

स्वर्णवर्णा स्त्री० स्वर्णमिव वर्णोऽस्याः। हरिद्रायाम्।

स्वर्णवल्कल पु० स्वर्णमिव पीतं वल्कलमस्य। शोनाकवृक्षे।

स्वर्णशेफालिका स्त्री० स्वर्णमिव पीता शेफालिका। पीतशेफालिकायाम्। [वर्णदेहे लि०।

स्वर्णाङ्ग पु० स्वर्णमिवाङ्गं पत्रपुष्पादि-यस्य। आरग्वधे। पीत-

स्वर्णारि पु० ६ त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।

स्वर्त्त गतौ सक० चु० पक्षे जीवने अक० चु० उ० सेट्। स्वर्त्तयति ते असस्वर्त्तत् त। [असस्वर्द्दिष्ट।

स्वर्द मोदे अक० प्रीणने वेष्टने च सक० भ्वा० आत्म०सेट्। स्वर्दते

स्वर्भानव पु० स्वरिव भूमौ भानुर्दीप्तिरस्यास्य अच्। गोमेदमणौ

स्वर्भानु पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ।

स्वर्लोक पु० स्वरेव लोकः भुवनम्। स्वर्गे, ६त०। स्वर्गस्थलोके।

स्वर्वापी स्त्री० स्व. स्वर्गस्य वापीव। गङ्गायाम्।

स्वर्वेश्या स्त्री० स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरसु।

स्वल्प त्रि० सु+अल्पम् प्रा०। अत्यल्पे क्षुद्रे।

स्वल्पकेशरिन् पु० स्वल्पः केशरोऽस्त्यस्य इनि। कोविदारवृक्षे।

स्वल्पपत्रक पु० स्वल्पं पत्रमस्य कप्। गौरयावे

स्ववासिनी स्त्री० स्वस्मिन् पित्रालये वसति वस-णिनि। चिरं पित्र्यग्रहादिवासिन्यामूढायामनूढाया वा स्त्रियाम्।

स्वसृ स्त्री० सु+अस–ऋन्। भगिन्याम्।

स्वस्क गतौ चु० उ० सक० सेट्। स्वस्कति ते असस्वस्कत्।

स्वस्ति अव्य० सु–अस–क्तिच्, असीति विभक्तिप्रतिरूपकम् अव्यय प्रादि० वा। क्षेमे, आशिषि, पुण्यादौ, स्वीकारस्तूत्तने च।

स्वस्तिक पु० न०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिक प्राग्रुप यत् स्यादलिन्दात्तुगतं भवेत्। ततुपार्श्वानुगतौ चान्यौ ततुपर्यन्तगतोऽपर,,इत्युक्तलक्षणे गृहभेदे, सितावराशाके, आसनबन्धभेदे, तण्डुलचूर्णनिर्म्मिते-त्रिकोणाकारे-द्रव्यभेदे च "घृतं स्वस्तिकसिन्दूर" मित्यधिवासनद्रव्यज्ञापकवाक्यम्" चतुष्पथे पु०। [पु०। स्वस्तिवादिनि लि०।

स्वस्तिमुख पु० स्वस्ति मुखे आदौ यस्य। लेख्ये पत्रादौ। विप्रे

स्वस्तिवाचन न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मारम्भे विशेषमानवे ब्राह्मणद्वारा कर्त्तव्यकर्म्मणां शुभतावाचने।

स्वस्तिवाचनिक त्रि० स्वस्तिवाचनाय हितं, ततआगतम्,,तत्र-भव वा ठञ्। स्वस्तिवाचनसाधने,तदुक्तिवर्थे,तत्सम्बन्धिनि च

स्वस्त्ययन न० स्वस्ति शुभस्यायनं प्राप्तियस्मात्। शुभार्थं क्रियमाणे वेदादिविहिते जपहोमादौ।

स्वस्थ त्रि० स्वे स्वरूपे तिष्ठति स्वेन स्वभावेन रूपेण, वा तिष्ठति स्था-क विसर्गलोपः। स्वभावस्थे, स्वर्गस्थिते, चिन्ताशून्ये सुखेनावस्थिते च। "स्वस्था भवन्तु मयि जीवति

धार्त्तराष्ट्रा" इतिवेणीसंहारनाटकम् ।

**स्वस्रीय** पु० स्वसुरपत्यम् छ। भागिनेये भागिनेयां स्त्री०।

**स्वागत** न० सुखेनागतम् सु+आ+गम्-क्त। सुखेनागमने "स्वागतं स्वानधीकारानिति, कुमार०. तदस्यास्ति अच्। कुशले।

**स्वाच्छन्द्य** न० स्वच्छन्दस्य भावः ष्यञ्। स्वाधीनत्वे, स्वास्थ्ये च।

**स्वातन्त्र्य** न० स्वतन्त्रस्य भाव. ष्यञ्। स्वाधीनत्वे परानधीनत्वे।

**स्वाति(ती)** पु० स्त्री० स्वेनैव अतति अत इञ् स्त्रीत्वपक्षे वा ङीप्। अश्विन्यादिषु पञ्चदशे नक्षत्रे, सूर्य्यपत्नीभेदे च।

**स्वाद** प्रीतौ अक० प्रीणने लेहने च सक० भ्वा० आ० सेट्। स्वादते आस्वादिष्ट। [ने च।

**स्वाद** पु० स्वद-स्वाद-वा घञ्। रसानुभवे,प्रीतौ,प्रीणने,लेह-

**स्वादु** पु० स्वद-उण्। मधुररसे, गुडे, जीवकौषधौ च। इष्टे, मधुरे, मनोज्ञे च त्रि० स्त्रियां वा ङीप्।

**स्वादुकण्टक** पु० स्वादु कण्टकोऽस्य। विकङ्कतवृक्षे।

**स्वादुकन्दा** स्त्री० स्वादु.कन्दोऽस्याः। विदार्य्याम्। [न्द्याम्।

**स्वादुका** स्त्री० स्वादुना मधुररसेन कायति कै-क। नागद-

**स्वादुखण्ड** पु० स्वादु. मिष्ट खण्डोऽस्य। गुडे कर्म०। मधुरे. भागे। [कुष्माण्डाञ्च।

**स्वादुगन्धा** स्त्री० स्वादुरिष्टः गन्धोऽस्याः। रक्तशोभाञ्जने, भूमि

**स्वादुपर्णी** स्त्री० स्वादूनि पर्णान्यस्याः ङीप्। दुग्धिकायाम्

**स्वादुपाका** स्त्री० स्वादुः पाकोऽस्याः। काकमाच्याम्।

**स्वादुपिण्डी** स्त्री० स्वादु पिण्डः पिण्डाकार फलमस्या। पि- ण्डखर्ज्जूर्य्याम्। [फले न०।

**स्वादुफल** स्त्री० स्वादु फलमस्य। कोविदार्य्याम् कर्म०। मिष्टे-

**स्वादुमज्जन्** पु० स्वादु. मज्जा यस्य। पर्वतजे पीलौ।

**स्वादुमांसी** स्त्री० स्वादु मांसमिव फलमस्या। काकोल्याम्।

**स्वादुमूल** न० स्वादु मूलमस्य। गर्जरे (गाजर)।

**स्वादुरसा** स्त्री० स्वादु रसोयस्या। काकोल्याम्, मदिरायाम्, शतावर्य्यां, द्राक्षायाम्, आम्रातके च।

**स्वादुलता** स्त्री० स्वाद्वी लता। विदार्य्याम्।

**स्वाद्वम्ल** पु० स्वादु अम्ल.। दाडिमे। [अम्लवेतसेऽपि च।

**स्वाधीन** त्रि० स्व आधीन। स्व वशे स्वतन्त्रे। [भिर्दे स्वाधी-

**स्वाधीनपतिका** स्त्री० स्वाधीन पतिर्यस्या कप्। नायिका

**स्वाध्याय** पु० सु सुष्ठु आदितः अधि+इङ्-घञ्। वेदाध्ययने, "स्वाध्यायोऽध्येतव्य" इति श्रुति। भावे घञ्। स्वाध्यायं वेदाध्ययने "स्वाध्यायोबलवान्" इत्यादौ ... इति

**स्वान्त** न० स्वन-क्त। मनसि-गह्वरे च।

**स्वाप** पु० स्वप-घञ्। निद्रायाम् शयने, अज्ञाने च।

**स्वापतेय** न० स्वस्य धनस्य पतिः तस्येदम् ढञ्। धने।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ्। स्वभावसिद्धे, स्त्रियां ङीप् ("स्वाभाविकी" सम्भवतेत्युद्गटः)

**स्वामिन्** त्रि० स्व+अस्त्यर्थे मिनि दीर्घश्च। अधिपतौ, ईश्वरे च। स्त्रियां ङीप्। हरे,विभौ,न्वपे कार्त्तिकेये, भर्त्तरि, वात्स्यायनमुनौ, गरुडे, परमहंसे च पु०।

**स्वायम्भुव** पु० स्वयंभुवोऽपत्यं, तस्येदम् वा अण् ओरोदिति वक्तव्ये ओर्गुण इति अंशायुर्विकविधानादमिलत्वात् गुण उवङ्. "स्वायम्भुवे प्रथमे मनौ, स्वयम्भूसम्बन्धिनि त्रि० "धाम स्वायम्भुवं ययुरिति" कुमारः। स्त्रियां ङीप्। सा च आह्वायाञ्च। [न्नि मध्ये।

**स्वार्थिक** त्रि० स्वार्थे विहितः ठञ्। स्वार्थविहिते व्याकरणो-

**स्वाराज्** पु० स्वः स्वर्गे राजते राज-क्विप्। इन्द्रे। [रे च।

**स्वाराज्य** न० स्वराजः स्वाराजोवाभाव. ष्यञ्। ब्रह्मत्वे, इन्द्र-

**स्वारोचिष** पु० द्वितीये मनौ। "स्वारोचिषमेऽन्तरे मार्गे" इति मार्कण्डे।

**स्वार्थ** पु० स्वस्य अर्थः प्रयोजनम् अभिधेयो वा। स्वप्रयोजने स्वाभिधेये च "स्वार्थिकः स्वार्थबोधकइति" मुग्धबोध०

**स्वास्थ्य** न० स्वस्थस्य भाव. ष्यञ्। आरोग्ये, सन्तोषे, ...

**स्वाहा** अव्य० सु+आ+ह्वे-डा नि०। देवोद्देशेन हवि-स्त्यागे। अग्निभार्य्यायां"स्वाहेव हविर्भुजमिति 'रघु. माय कामेदे च स्त्री० "नमः स्वाहायै स्वाहायै" इति विशप्र०।

**स्वाहाप्रिय** पु० ६त०। वह्नौ। आशापत्यादयोऽप्यत्र। [द्रे।

**स्वाहाभुज्** पु० स्वाहेत्यभिधानेन व्यवहृत्य भुङ्क्ते भुज-क्विप्।

**स्विद्** अव्य० स्विद-क्विप्। प्रश्ने, वितर्के, पादपूरणे च।

**स्विन्न** त्रि० स्विद-क्त। स्वेदयुक्ते,प्रस्वेदान्विते च। [मङ्कारे।

**स्वीकार** पु० अस्वस्य स्वस्य कारः करणं स्व+च्वि+कृ-घञ्।

**स्वीय** त्रि० स्वस्येदम् छ अस्वस्यादिनीर्दश्य न कुगिति भवन्ति। स्वसम्बन्धिनि। नायिकाभेदे स्त्री०।

**स्वृर्छ** विस्मृतौ भ्वा० प० सक० सेट्। स्वूर्च्छति अस्वूर्च्छीत्।

**स्वृ** शब्दे अक० उपतापे सक० भ्वा० प० सेट्। स्वरति अस्वा-रीत् अस्वार्षीत्।

**स्वृ** हिंसने क्र्या० प० सक० सेट्। स्वृणाति अस्वारीत्।

**स्वेद** मधौ आदि० आत्म० सक० ... ... । स्वेदन स्वेदिष्ट।

**स्वेच्छा** स्त्री० स्वस्येच्छा। स्वाभिप्राये।

स्वेच्छामृत्यु पु० स्वेच्छया मृत्युर्यस्य। भीष्मे स्वेच्छाधीन मृत्युयुक्ते त्रि०।

स्वेद पु० स्वेद-स्विद-वा,घञ्। पाकभेदे (सेका) घर्म्मे गात्रादितो जलादे निस्यन्दने। [स्वेदजातमात्रे त्रि०।

स्वेदज पु० स्वेदाज्जायते जन-ड। स्वेदजाते दयादिजन्तौ।

स्वेदन न० स्विद-णिच्-ल्युट्। गात्रादितो घर्म्मादेर्नि-स्सारणव्यापारे। (भापरा)।

स्वेदनी स्त्री० स्विद्यते पच्यतेऽनया स्विद-ल्युट्। लौहपात्र-भेदे (ताओया) संज्ञाया कन् टापित्वस्य। स्वेदनिका। वन्दुरूपे पात्रे भर्ज्जनपात्रे स्त्री०। [च त्रि०।

स्वैर न० स्वस्य ईरम् ईर-अच् इद्धि। स्वेच्छाचार्यामृ तद्वति मन्दे,

स्वैरिन् त्रि० स्वेनैव ईरयितु शीलमस्य ईर-णिनि इद्धि। स्वेच्छाचारिणि स्वतन्त्रे। व्यभिचारिस्त्रियां स्त्री० ङीप्

स्वोपार्ज्जित त्रि० स्वेन उपार्जितम्। स्वयमर्ज्जिते धनादौ।

## ह

ह अव्य० हा-ड। पादपूरणे, सम्बोधने, नियोगे, क्षेपे, निग्रहे, प्रसिद्धौ च,। शिवे, जले, शून्ये, मङ्गले, आकाशे, रक्ते, स्वर्गे, पापहरणे, चन्द्रे, सकोपवारणे, शुष्के च पु०

हंस पु० हस-अच्-पृ०। स्वनामख्याते पक्षिभेदे, निर्लो-भनृपे, विष्णौ, सूर्य्ये, परमात्मनि, "हंस तनौ सन्नि-हितं चरन्तमिति" नैषधम्। मत्सरे, यतिभेदे, मन्त्रभेदे देहस्थवायुचेष्टाभेदे, अश्वभेदे, सुमेरुपर्व्वते, शिवे, अप-त्यिते, श्वेते, विशुद्धे, अजपामन्त्ररूपे वर्णे च "हकारेण बहिर्याति सकारेण विशेत्पुन, हंसेति सतत मन्त्र जीवो जपति सर्व्वदेति" तन्त्रम्। [नूपुरादौ

हंसक पु० हंसइव कायति शब्दायते कै-क। पादकटके

हंसगामिनी स्त्री० हंसइव स्वढ़ गच्छति गम-णिनि। श्रेष्ठ-गामिन्यांस्त्रियाम्। हंसेन गच्छति णिनि ङीप्। ब्रह्माण्याम्

हंसनादिनी स्त्री० "गजेन्द्रगमना तन्वी कोकिलालाप-संयुता। नितम्बे गुर्व्विणी या स्यात् सा स्मृता हंसनादिनी" वृक्षलक्षणायां नाय्याम्।

हंसपदी स्त्री० हंसस्येव पादा मूलान्यस्या पादाग्रे स्त्रियां ङीपि पद्भाव। गोधापदीलतायाम्। छन्दोभेदे तु हंसपदा।

हंसपाद न० हंसस्य पाद, तद्वर्णोऽस्त्यस्य अच्। हिङ्गुले

हंसमाला स्त्री० हंस०पुञ्जाकारेण स्थित हंसमपु०,कादम्बे च

हंसरथ पु० हंस रथ्यंवाहन यस्य। चतुर्मुखे ब्रह्मणि हंसवाहनादयोऽप्यत्र। [धातौ।

हंसलोमश न० हंस इव लोमश लोमयुक्तम्। कासीसे उप-

हंसवती स्त्री० हंसलतादाकार अस्त्यस्या मतुप् मस्य व। हंसपद्याम्।

हंसबीज न० हंसस्य बीजमत। हंसडिम्बे।

हंसाङ्घ्रि पु० हंसस्याङ्घ्रिरिव लोहितत्वात्। हिङ्गुले।

हंसारूढ पु० हंसमारूढ आ+रुह-क्त। ब्रह्मणि तच्छक्त्या ब्रह्माण्या स्त्री०। [पादके छन्दोभेदे च।

हंसी स्त्री० हंसस्य भार्य्या ङीष्। हंसयोषिति द्वाविंशत्यक्षर

हंहो अव्य० हमित्यव्यक्त जहाति हा-डो। सम्बोधने "हंहो स्निग्धविपश्चिन्द्रमणय चन्द्रादति दर्पे, दम्भे, प्रश्ने च।

हञ्जे(ञ्जा) अव्य० हमित्यव्यक्त जप्यतेऽत्र जप-डे डा वा। नाट्यक्रियाया नगाभिनेयस्तते चेटीसम्बोधने।

हट दीप्तौ भा० प० अक० सेट्। हटति अहटीत्-अहाटीत्

हट्ट पु० हट-ट दस्य नेत्त्वम्। क्रयविक्रयस्थाने "प्रतिहट्ट-पथे घरट्टजादिति" नैषधम्। [(हाटचोर) चौरभेदे।

हट्टचौरक पु० हट्टे प्रकाशिते स्थाने यत् चौर स्वार्थे कन्।

हट्टविलासिनी स्त्री० हट्टं विलासयति वि+लस-णिच्-णिनि ङीप्। गन्धद्रव्यभेदे, हरिद्रायाञ्च।

हठ कीलबन्धे बलत्कारे प्लुतौ च भा० पर० सक० सेट्। हठति। अहाठीत्-अहठीत्।

हठ पु० हठ-अच्। बलात्कारे, प्रसह्यार्थे।

हठपर्णी स्त्री० हठते प्लवते हठ-अच् हठ प्लवमान पर्णा यस्या ङीप्। शैवाले, कुम्भिकायाञ्च।

हठयोग पु० हठात्कारेण योग। प्राणायामादिक्रियाभ्यासजे राजयोग विनैव परमात्मसाक्षात्काररूपे चित्तवृत्ति-निरोधात्मके योगे। [(पाना)।

हठालु पु० हठ प्लवमान आलुरिव। कुम्भिकायाम्।

हठी स्त्री० हठ-अच् गौ० ङीष्। वारिपर्ण्याम् (पाना)

हडि पु० हड-इन् पृ०। पशुमारणसाधने काष्ठयन्त्रे(हाड़िकाठ)

हडिक पु० हठ-इकन् पृ०। नीचजातिभेदे (हाड़ि)।

हड्ड न० हड-ड डस्य नेत्त्वम् पृ०। अस्थि (हाड़)। संज्ञाया कन्। नीचजातिभेदे (हाड़ि)।

हण्डा स्त्री० हन-डा डस्य नेत्त्वम्। हन्ति-मृत्पात्रभेदे (हाण्डा) नाट्योक्तौ नीचसम्बोधने अव्य०।

हण्डिका स्त्री० क्षुद्रा हण्डा कन्। क्षुद्रे मृत्पात्रे (हाँड़ि)।

हण्डे अव्य० हन-डे डस्य नेत्त्वम्। नाट्योक्तौ नीचसम्बोधने।

हत त्रि० हन-क्त। नाशिते, प्रतिहते, प्रतिघट्टे, आशा रहिते, गुणिते च। भावे क्त, हनने, गुणने च न०।

हतक त्रि० हतइव नष्टप्रायत्वात् कन्। नष्टप्राये (मड़ा)।

हताश त्रि० हता आशा यस्य। आशाशून्ये, वन्ध्ये, निर्दये, पिशुने च। [शुखने च।

हति स्त्री० हन-क्तिन्। हनने, मारणे, व्याघाते, अपकर्षे,

हत्या स्त्री० हन-क्यप्। मारणे,वधे,प्राणवियोगानुकूल व्यापारे "ब्रह्महत्या सुरापानमिति" स्मृति.।

हद् विशेत्सर्गे भ्वा० आ० अक० सेट्। हदते अहदिष्ट।

हन वधे-गतौ च भ्वा० प० सक० अनिट्। हन्ति अवधीत्। "कुञ्जं हन्ति कृशोदरी' त्यादावालङ्कारिकास्तु गतौ निहताथैताभाहुः।

हनन न० हन-ल्युट्। "स्यात् प्राणविच्छेदफलव्यापारोहननं स्मृत, मिलुक्ते, व्यापारे गुखने च। [हवे।

हनील पु० हन-इनृ ङीप् हन्यां लीयते ली-ड। केतकी

हनु(नू) पु० स्त्री० हन-उन् वा ऊङ्। कपोलद्वयोपरिस्थे मुखभागे, हट्टविलासिन्यां, रोगे, अस्त्रभेदे, मृतौ च स्त्री०।

हनु(नू)मत् पु० हनु(नू)+अस्त्यर्थे मतुप्। रामस्य अनुचरे, अञ्जनागर्भजाते पवनतनये वानरभेदे।

हन्त अव्य० हन-त। हर्षे,अनुकम्पायां, विषादे, आर्त्तौ, वाक्ये, सम्भ्रमे, वाक्यारम्भे, खेदे,परिच्छेदे, वत्सने च।

हन्तकार पु० हन्त हर्षस्य कारः करणं, हन्तेत्यस्य कारः उच्चारणम् वा क्ष-घञ्। अतिथये देये-अन्ने, हन्तशब्दप्रयोगे च।

हन्तृ त्रि० हन-तृच्। हननकर्त्तरि सततहननानुशीलयितरि च स्त्रियां ङीप्।"महिषासुरहन्त्र्यानेति,, पुराणम्।

हन्न त्रि० हद्-क्त। लतपुरीपोत्सर्गे।

हम् अव्य० हा-डम्। रुषोक्तौ, अनुनये च। [पु०। हस्वाचल।

हम्भा(म्बा) स्त्री० हम्+भा-हम्ब-अङ् वा। गवा ध्वनौ

हम्म गतौ भ्वा० प० सक० सेट्। हम्मति। अहम्मीत्।

हय गतौ सक० क्लान्तौ अक० भ्वा०प० सेट्। हयति अहयीत्।

हय पु० हय-हि-वा अच्। घोटके।

हयगन्ध पु० हयस्येव गन्धोऽस्य। काचलवणे। अश्वगन्धायाम्, अजमोदायाञ्च स्त्री०।

हयग्रीव पु० हयस्येव दीर्घा ग्रीवाऽस्य। विष्णोरवतारभेदे, दैत्यभेदे च, "हयग्रीवबधोपेत तद्धि भागवतं विदुरिति,, पुराणम् दुर्गाया स्त्री०। [विष्णौ।

हयग्रीवहन् पु० हयग्रीवाख्यं दैत्यं हतवान् हन-क्विप्।

हयन न० हि-ल्युट्। कर्णीरथे। [माषपर्ण्याम्।

हयपुच्छी स्त्री० हयस्य पुच्छाकारोऽस्त्यस्याः अच् गौ०ङीष्।

हयप्रिय पु० ६त०। यवे, अश्वगन्धायां, खर्जूर्य्यांञ्च स्त्री० अश्वहप्रे त्रि०। हयेष्टादयोप्यत्र। [करवीरे, खुन्। तत्रैव।

हयमार पु० हयं मारयति ‡निमेषमात् मृ-णिच्-अण्।

हयमारण पु० हयं मारयति मृ-णिच्-ल्यु। अश्वत्थवृक्षे।

हयवाहनसङ्कर पु० हयस्य वाहनं चालनं सङ्किरति सम्+कॄ-अच्। रक्तकाञ्चने।

हया स्त्री० हयः हयगन्धोऽस्त्यस्याः अच्। अश्वगन्धायाम्।

हयाध्यक्ष पु० हयेषु तद्रक्षणेषु अध्यक्ष। अश्वरक्षणाधिकृते।

हयानन्द पु० हयमानन्दयति आ+नन्द-णिच्-अण्। मुद्गे

हयारि पु० ६त०। करवीरे।

हयाशना स्त्री० हयैरश्यते अश-ल्युट्। सल्लकीवृक्षे।

हयोत्तम पु० हयेषु उत्तमः। अश्वरत्ने आजानेयेऽश्वे।

हर पु० हृ-अच्। रुद्रे, अग्नौ, गर्द्दभे, विभाजके च,,अन्योन्यहाराभिहतौ हरांशा विति,, लीलावती। हृ-भावे अप्। हरणे, विभाजने च।

हरगौरी स्त्री० हरदेहार्द्धहरा गौरी। अर्द्धनारीश्वरदमे शिवपार्वत्योर्मूर्त्तिभेदे द्वन्द०। शिवपार्वत्योः द्वि० व०।

हरण न० हृ-भावे ल्युट्। स्थानान्तरकरणे, विभाजने च कर्मणि ल्युट्। यौतकादौ देये धने।

हरतेजस् न० ६त०। पारदे शिववीर्य्ये च। हरवीजादयोप्यत्र

हरशेखरा स्त्री० हरस्य शेखरमाश्रयत्वेनास्त्यस्याः अच्। गङ्गायाम्।

हरि पु० हृ-इन्। विष्णौ, सिंहे, सर्पे, वानरे, भेके, चन्द्रे, सूर्य्ये, वायौ, अश्वे यमे, हरे, ब्रह्मणि, किरणे, नृप-वर्षमध्ये वर्षभेदे, मयूरे, कोकिले, हंसे शुकपक्षिणि, भर्त्तृहरिनामके वाक्यप्रदीपग्रन्थकारके पण्डित/इन्द्रे, पीते, पिङ्गलवर्णे, हरिद्वर्णे च। तद्वति त्रि० "हरि विदित्वा हरिभिश्च वाजिभिरिति रघुः।

हरिकेश पु० हरि पिङ्गलः केशोऽस्य। शिवे, शिवभक्तयक्षभेदे च। स एव तत्प्रसादात् काश्यां दण्डपाणिरभवत्. इति काशीखण्डे स्थितम्। [एकचक्रपुरीभेदे च।

हरिगन्ध न० ६त०। हरेर्विष्णुमूर्त्तेर्गन्धम्। हरिमूर्त्तिगन्धे

हरिचन्दन न० हरेरिन्द्रस्य प्रियं चन्दनम्, चन्द्रयति चदि-ल्यु ६त० वा। देवतरुभेदे। हरेर्विष्णोः प्रियं चन्दनम्। श्वेतचन्दने गोपीचन्दनामके कुङ्कुमे-जाते चन्दनभेदे, ज्योत्स्नायां, कुङ्कुमे, सुन्दराङ्गे च न०।

हरिण पु० हृ-इनन्। स्वनामख्याते पशौ, शिवे, विष्णौ, हंसे, शुक्लवर्णे पाण्डुवर्णे च। तद्वति त्रि०।

हरिणहृदय पु० हरिणस्येव भीतं हृदयमस्य। भीरौ।

हरिणाक्षी स्त्री० हरिणस्येवाक्षि यस्याः ब०स० षच् समा० ङीष्। शृङ्गारादिगीनामगन्धद्रव्ये हरिणवत्नेत्रयुक्ते त्रि० स्त्रियां ङीप्। "हरिणाक्षि! कटाक्षेण्'लुहर।

**हरिणाङ्क** पु० हरिणः मृगनामको मृगोऽङ्कश्चिह्नं, यद्वा क्रोडे वा यस्य । चन्द्रे ।

**हरिणी** स्त्री० हरितवर्णा स्त्री ङीप् तस्य न । हरिद्वर्णायां स्त्रियां स्वर्णप्रतिमायां, स्वर्णयूथ्यां, मञ्जिष्ठायां,वरण्ड्यां, वराङ्गस्त्रियां, सप्तदशाक्षरपादके छन्दोभेदे च । हरिणस्य स्त्री०ङीष् । मृग्याम् ।

**हरित्** पु० हृ-इति । नीलपीतमिश्रितवर्णे (पातारङ्ग) मनाग्वर्णे च तद्वति त्रि० । सूर्याश्वे, मुद्गे, सिंहे, सूर्ये, विष्णौ च पु० ।

**हरित** पु०हृ-इतच् । सिंहे,मन्यानवर्णे, हरिद्वर्णे च । तद्वति त्रि० । स्त्रियां ङीप् तस्य नश्च । दूर्वायां, जयन्त्यां, हरिद्रायां, कपिलद्राक्षायां नीलदूर्वायाञ्च स्त्री० टाप् ।

**हरितक** न० हरितेन वर्णेन कायति प्रकाशते कै-क । शाके

**हरितशाक** पु० हरितं शाकमस्य । शोभाञ्जने ।

**हरिताल** न० हरिवर्णस्य पीतवर्णस्य तालं प्रतिष्ठा यत्र । पीतवर्णे उपधातुभेदे 'स हरितालसमाननवांशुकमिति' माघ । पीतवर्णपक्षिभेदे पु० स्वार्थे कन् । हरितालं ।

**हरितालिका** स्त्री० हरेस्तालो हस्ततालो यस्यां कप् अत इत्वम् । भाद्रशुक्लचतुर्थ्याम् । हरितवर्णाय अलति पर्याप्नोति अल ण्वुल् । दूर्वायाम् । अण् ङीप् । हरितालो । दूर्वायाम्, सा च आकाशरेखायां, खड्गलतायाञ्च

**हरिताश्म** न० हरितवर्णमश्म अच् समा० (पेरोजा) मणिभेदे. (तुते) उपधातुभेदे च । [दमोत्पल ।

**हरितपर्णी** न०हरिद्वर्णं पर्णमस्य । मूलके (मूला) हरिपर्णी-

**हरिदर्भ** पु०हरिः हरिद्वर्णो दर्भः । हरिद्वर्णे कुशे ।

**हरिदश्व** पु० हरिदाख्योऽश्वो यस्य। सूर्ये ।

**हरिद्देव** पु० हरिर्देवोऽधिपालो देवता यस्य । श्रवणानक्षत्रे

**हरिद्गर्भ** पु० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे ।

**हरिद्व** पु०हरिवर्णः पिङ्गलवर्णो द्रुवृक्ष । नागकेसरदारुवि

**हरिद्रा** स्त्री० हरिं पीतवर्णं द्रवति द्रु ड । स्वनामख्याते ओषधिभेदे । [भेदे ।

**हरिद्रागणेश** पु० 'हरिद्रावर्णयुक्तो गणेशः' । पीतवर्णे गणेश

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा-क । पीतशाले (पियाशाल) कर्बुरे, पीतवर्णे च । तद्वति त्रि० ।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागोऽस्य। अस्थिरानुरागे बौद्धे । [दारुहरिद्रायाञ्च

**हरिद्रु** पु० हरिः हरिद्वर्णो द्रवादिदारु, द्रु । तरुमाले,

**हरिद्वार** न० हरिलग्नमार्गे द्वारं येनात् । स्वनामख्याते तीर्थभेदे ।

**हरिनामन्** न० हरेर्नाम तदाख्यानं वा । हरिनामनि तदाख्याने च हरेरिव नामास्य । मुद्गे पु० ।

**हरिनेत्र** न० हरेर्नेत्रमिव । श्वेतपद्मे ६त० । विष्णोर्लोचने । हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात् । पेचके पु० ।

**हरिन्मणि** पु० हरिद्वर्णो मणिः । मरकते मणौ ।

**हरिन्मुद्ग** पु० हरिद्वर्णो मुद्गः । शरदि पक्वमुद्गे ।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम् । कालीयके चन्दने, उशीरे च । कदम्बे, पीतभद्रराजे विष्णुकन्दे, करवीरे,शङ्खे,बन्धूके, शिवे, वातुले च पु० लक्ष्म्यां,तुलस्यां, पृथिव्यां, द्वादश्यां तिथौ च स्त्री० । हरिवल्लभे त्रि० ।

**हरिवालुक** न० हरेर्विष्णोः प्रियम् वालुकम् । एलवालुके ।

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः । विष्णुभक्तिमति 'सर्वजीवेषु यो विष्णुं भावयेत् समभावतः । हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः' इति पुराणोक्ते सर्वत्र समदृष्टिपूर्वकहरिसेवके पु० ।

**हरिभद्र** न० हरिं भद्रयति सन्तर्पयति अच् । हरिवालुके ।

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज-क्विप् । सर्पे ।

**हरिमन्थ** पु०मथ्यते मन्थः एकदेशः हरिः पीतो मन्थो यस्य। चणके,तस्य वक्रमन्थनेऽपि पीतत्वानपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण् । गणिकारिकायाम् देशभेदे च ।

**हरिमन्थक** पु०हरिः पीतो मन्थः एकदेशो यस्य कप् । चणके

**हरिमन्थज** पु० हरिमन्थे देशे जायते जन-ड । चणके, कृष्णमुद्गे च ।

**हरिवंश** पु ६त । विष्णुवंशे, हरेर्वंशो व्याख्येयत्वेनास्त्यत्र अच् महाभारतान्तर्गते खिलरूपे ग्रन्थभेदे ।

**हरिवर्ष** न०हरिनामकं वर्षम्। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे

**हरिवासर** न० हरिप्रियं वासरम् । एकादशीदिवसे,द्वादशी प्रथमपादे च । 'ब्रह्मादीन्यपि पापानि तिष्ठन्ति हरिवासरे इति,द्वादश्याः प्रथमः पादो हरिवासरसंज्ञक'इति च पुरा०

**हरिवाहन** पु० हरिं वाहयति स्थानान्तरं नयति वह+णिच् ल्यु । गरुडे ६त० वारिवाहनमप्यत्र न० ।

**हरिबीज** न० हरेर्बीजमुत्पत्तिकारणत्वेनास्त्यस्य अच् । हरिताले 'हरितालं हरेर्बीजं ब्रह्मबीजं मनःशिले'ति वैद्यकम्

**हरिशयन** न०हरेः शयनं निद्रा। विष्णुनिद्रायाम्। हरेः शयनं यत्र । तदुपलक्षिते काले स च 'मैत्राद्यपादे स्वपितीह विष्णु [illegible] 'मध्यते मार्गसर्तु'इत्यनेन दर्शित' आषाढस्य शुक्लद्वादश्यवधिकार्तिकशुक्लद्वादशीपर्यन्तस्तथा माससञ्चयात्मक । विस्तरो वृहदभिधाने ।

हरिणाङ्क पु० हरिणः शशनामको मृगोऽङ्कश्चिह्नं, अङ्के क्रोडे वा यस्य। चन्द्रे।

हरिणी स्त्री० हरितवर्णा स्त्री ङीप् तस्य नः। हरिद्वर्णायां स्त्रियां, स्वर्णप्रतिमायां, स्वर्णयूथ्यां, मञ्जिष्ठायां, वरुण्यां, वराङ्गस्त्रियां, सप्तदशाक्षरपादके छन्दोभेदे च। हरिणस्य स्त्री० ङीप्। मृग्याम्।

हरित् पु० हृ-इति। हरितपीतमिश्रितवर्णे (पातारङ्ग) पलाशवर्णे च तद्वति त्रि०। सूर्याश्वे, मुद्गे, सिंहे, सूर्ये, विष्णौ च पु०।

हरित पु० हृ इतच्। सिंहे, मन्थानतृणे, हरिद्वर्णे च। तद्वति त्रि०। स्त्रियां ङीप् तस्य नश्च। दूर्वायां, जयन्त्यां, हरिद्रायां, कपिलद्राक्षायां नीलदूर्वायाञ्च स्त्री० टाप्।

हरितक न० हरितेन वर्णेन कायति प्रकाशते कै-क। शाके।

हरितशाक पु० हरितं शाकमस्य। शोभाञ्जने।

हरिताल न० हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। पीतवर्णे उपधातुभेदे 'स हरितालसमानवर्णांशुकमिति' माघः। पीतवर्णपक्षिभेदे पु० स्वार्थे कन्। हरितालके।

हरितालिका स्त्री० हरेस्तालो हस्ततालो यस्यां कप् अत इत्त्वम्। भाद्रशुक्लचतुर्थ्याम्। हरितवर्णाय अलति पर्याप्नोति अल-ण्वुल्। दूर्वायाम्। अण् ङीप्। हरितालो। दूर्वायाम्, सा च आकाशरेखायां, खड्गलतायाञ्च।

हरिताश्म न० हरितवर्णमश्म अच् समा० (पेरोजा) मणिभेदे, तुत्थे, (तुते) उपधातुभेदे च। [दयोम्पल।

हरितपर्ण न० हरिद्वर्णं पर्णमस्य। मूलके (मूला) हरिपर्णो-

हरिदर्भ पु० हरिः हरिद्वर्णो दर्भः। हरिद्वर्णे कुशे।

हरिदश्व पु० हरिन्नामकोऽश्वो यस्य। सूर्ये।

हरिदेव पु० हरिर्देवोऽधिष्ठात्री देवता यस्य। श्रवणानक्षत्रे

हरिद्गर्भ पु० हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे।

हरिद्रव पु० हरिवर्णः पिङ्गलवर्णो द्रवगुण। नागकेशररजसि

हरिद्रा स्त्री० हरिं पीतवर्णं द्रवति द्रु-ड। स्वनामख्याते ओषधिभेदे। [भेदे।

हरिद्रागणेश पु० हरिद्रावर्णयुक्तो गणेशः। पीतवर्णे गणेश

हरिद्राभ पु० हरिद्रेव आभाति आ+भा-क। पीतशाले (पियाशाल) कर्चूरके, पीतवर्णे च। तद्वति त्रि०।

हरिद्राराग त्रि० हरिद्राया इव रागः रञ्जनमनुरागोऽस्य। अस्थिरानुरागे सौहृदे। [दारुहरिद्रायाञ्च

हरिद्रु पु० हरिः हरिद्वर्णो दधादिहारा, द्रु०। कदमाले,

हरिद्वार न० हरेर्मन्त्रस्य द्वारं भेदनात्। स्वनामख्याते तीर्थभेदे

हरिनामन् न० हरेर्नाम तदाख्यानं वा। हरिनामनि तदाख्याने च हरेरिव नामास्य। मुद्गे पु०।

हरिनेत्र न० हरेर्नेत्रमिव। श्वेतपद्मे इत०। विष्णोर्लोचने। हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात्। पेचके पु०।

हरिन्मणि पु० हरिद्वर्णो मणिः। मरकते मणौ।

हरिन्मुद्ग पु० हरिद्वर्णो मुद्गः। शरदि पक्वमुद्गे।

हरिप्रिय न० हरेर्विष्णोः प्रियम्। कालीयके चन्दने, उशीरे च। कदम्बे, पीतभृङ्गराजे, विष्णुकन्दे, करवीरे, शङ्खे, बन्धूके, शिवे, बातुले च पु०। लक्ष्म्यां, तुलस्यां, पृथिव्यां, द्वादशीतिथौ च स्त्री०। हरिवल्लभे त्रि०।

हरिवालुक न० हरेर्विष्णोः प्रियम् वालुकम्। एलवालुके।

हरिभक्त त्रि० हरौ विष्णौ भक्तः। विष्णुभक्तिमति 'सर्व-जीवेषु यो विष्णुं भावयेत् समभावतः। हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः' इति पुराणोक्ते सर्वत्र समदृष्टिपूर्व्वकहरिसेवके पु०।

हरिभद्र न० हरिं भद्रयति सन्तर्पयति अच्। हरिवालुके।

हरिभुज् पु० हरिं भेकं भुङ्क्ते भुज-क्विप्। सर्पे।

हरिमन्थ पु० मथ्यते मन्थः एकदेशः हरिः पीतो मन्थो यस्य। चणके, तस्य खण्डनेऽपि पीतत्वानपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण्। गणिकारिकायाम् देशभेदे च।

हरिमन्थक पु० हरिः पीतो मन्थ एकखण्डो यस्य कप्। चणके

हरिमन्थज पु० हरिमन्थे देशे जायते जन-ड। चणके, कृष्णमुद्गे च।

हरिवंश पु० इत०। विष्णुवंशे, हरेर्वंशो आख्येयत्वेनास्त्यत्र अच्। महाभारतान्तर्गते खिलरूपे ग्रन्थभेदे।

हरिवर्ष न० हरिनामकं वर्षम्। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे

हरिवासर न० हरिप्रियं वासरम्। एकादशीदिवसे, द्वादशीप्रथमपादे च। 'ब्रह्माहत्यादिपापानि तिष्ठन्ति हरिवासरे' इति, द्वादश्याः प्रथमः पादो हरिवासरसंज्ञक' इति च पुरा०

हरिवाहन पु० हरिं वाहयति स्थानान्तरं नयति वह+णिच् ल्यु। गरुडे इत०। वारिवाहनमप्यत्र न०।

हरिबीज न० हरेर्बीजमुत्पत्तिकारणत्वेनास्त्यस्य अच्। हरिताले 'हरितालं हरेर्बीजं नष्टशुक्रमनं विद्धि' इति वैद्यकम्।

हरिशयन न० हरेः शयनं निद्रा। विष्णुनिद्रायाम्। हरेः शयनं यत्र। तदुपलक्षिते काले स च 'मैत्राद्यपादे स्वपितीह विष्णु'रित्युपक्रम्य 'प्रबुध्यते भाद्रपदद्वयान्ते'त्यनेन दर्शितः आषाढस्य शुक्लद्वादश्यवधिकार्तिकशुक्लद्वादशीपर्यन्तस्तयोः मासचतुष्टयात्मकः। विस्तरो हरशब्दे।

